(13) ಶ್ರೀರಾಘವೇಂದ್ರತೀರ್ಥಕೃತ - ಗೀತಾತಾತ್ಪರ್ಯನ್ಯಾಯದೀಪಿಕಾಭಾವದೀಪ

(14) ಶ್ರೀರಾಘವೇಂದ್ರತೀರ್ಥಕೃತ - ಗೀತಾವಿವೃತಿ

(15) ಶ್ರೀಸುಮತೀಂದ್ರತೀರ್ಥಕೃತ - ಗೀತಾಕ್ಷರಾರ್ಥ

(16) ಶ್ರೀಸುಮತೀಂದ್ರತೀರ್ಥಕೃತ - ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಭಾವರತ್ನಕೋಶ

(17) ಸಾತಾರಿ ರಾಘವೇಂದ್ರಾಚಾರ್ಯಕೃತ - ಗೀತಾಭಾಷ್ಯವಿವೃತಿ

(18) ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥಕೃತ - ಗೀತಾವ್ಯಾಖ್ಯಾನ

(19) ಶ್ರೀರಘೂತ್ತಮತೀರ್ಥಕೃತ - ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಭಾವಬೋಧ

(20) ಶ್ರೀಸತ್ಯಾಭಿನವತೀರ್ಥಕೃತ - ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಟಿಪ್ಪಣೀ

(21) ವಂಶಪಲ್ಲಿ ಆಚಾರ್ಯಕೃತ - ಗೀತಾಭಾಷ್ಯಭಾವಪ್ರದೀಪಿಕಾ

(22) ಕೇಶವಾಚಾರ್ಯ ಪಾಂಡುರಂಗೀಕೃತ - ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಟಿಪ್ಪಣೀ

(23) ಉಮರ್ಜೀ ಪ್ರಹ್ಲಾದಕೃಷ್ಣಾಚಾರ್ಯಕೃತ ಟಿಪ್ಪಣೀ - ಪ್ರಮೇಯದೀಪಿಕಾಭಾವಪ್ರಕಾಶ

(24) ಶ್ರೀತಾಮ್ರಪರ್ಣೀ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯಕೃತ -
ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಟಿಪ್ಪಣೀ (ಕಿರಣಾವಲೀ)

(25) ಕಟ್ಟೀ ತಿಮ್ಮಣ್ಣಾಚಾರ್ಯಕೃತ - ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಟಿಪ್ಪಣೀ

(26) ವರದಾಚಾರ್ಯಕೃತ - ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಟಿಪ್ಪಣೀ

(27) ವಾಸುದೇವಾಚಾರ್ಯಕೃತ - ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಟಿಪ್ಪಣೀ

(28) ನೃಸಿಂಹಮೂರ್ತಿಕೃತ - ಗೀತಾಭಾಷ್ಯಪ್ರಮೇಯದೀಪಿಕಾಟಿಪ್ಪಣೀ

(29) ಗೂಢಕರ್ತೃಕ - ಗೀತಾಭಾಷ್ಯಬೃಹದ್ಭಾವಬೋಧಿ

(30) ಶ್ರೀಸತ್ಯನಾಥತೀರ್ಥಕೃತ - ಗೀತಾತಾತ್ಪರ್ಯನ್ಯಾಯದೀಪಿಕಾವಾಕ್ಯವಿವೇಕ

(31) ಶ್ರೀಸತ್ಯಪ್ರಜ್ಞತೀರ್ಥಕೃತ - ಗೀತಾತಾತ್ಪರ್ಯನ್ಯಾಯದೀಪಿಕಾಟಿಪ್ಪಣೀ - ಭಾವಪ್ರಕಾಶ

(32) ಯದುಪತ್ಯಾಚಾರ್ಯಕೃತ - ಗೀತಾತಾತ್ಪರ್ಯನ್ಯಾಯದೀಪಿಕಾಟಿಪ್ಪಣೀ

(33) ತಾಮ್ರಪರ್ಣಿ ವಿಠಲಾಚಾರ್ಯಕೃತ - ಗೀತಾತಾತ್ಪರ್ಯನ್ಯಾಯದೀಪಿಕಾ ಟಿಪ್ಪಣೀ

(34) ತಾಮ್ರಪರ್ಣಿ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯಕೃತ -
ಗೀತಾತಾತ್ಪರ್ಯನ್ಯಾಯದೀಪಿಕಾ ಟಿಪ್ಪಣೀ (ಕಿರಣಾವಲೀ)

(35) ವಂಶಪಲ್ಲಿ ಆಚಾರ್ಯಕೃತ - ಗೀತಾತಾತ್ಪರ್ಯನ್ಯಾಯದೀಪಿಕಾ ಟಿಪ್ಪಣೀ

(36) ವೇದಗರ್ಭ ಪುಟ್ಟಾಚಾರ್ಯಕೃತ - ಗೀತಾತಾತ್ಪರ್ಯನ್ಯಾಯದೀಪಿಕಾ ಟಿಪ್ಪಣೀ

(37) ಹುಲಿಗಿ ನರಸಪ್ಪಾಚಾರ್ಯಕೃತ - ಗೀತಾಭಾಷ್ಯಾರ್ಥಾನುವಾದ

(38) ವರಖೇಡಿ ತಿಮ್ಮಣ್ಣಾಚಾರ್ಯಕೃತ - ಗೀತಾಪಂಚಾನನ

(39) ಪಾಂಗರಿ ಆಚಾರ್ಯಕೃತ - ತ್ರಿವಿಧಾರ್ಥವಿವೃತಿ

(40) ಆಯೀ ನರಹರಿ ಆಚಾರ್ಯಕೃತ - ಗೀತಾವ್ಯಾಖ್ಯಾನ

(41) ಕರವೀರ ಅನಂತಾಚಾರ್ಯಕೃತ - ಗೀತಾವ್ಯಾಖ್ಯಾನ

(42) ವನಮಾಲಿಮಿಶ್ರಕೃತ - ಗೀತಾವ್ಯಾಖ್ಯಾನ

(43) ಗೂಢಕರ್ತೃಕ - ಗೀತಾವಿವೃತಿ

(44) ಶತಾವಧಾನಿ ಲಕ್ಷ್ಮಣಾಚಾರ್ಯಕೃತ - ಭಗವದ್ಗೀತೋಪನ್ಯಾಸದರ್ಪಣ

(45) ಸಿ. ಎಂ. ಪದ್ಮನಾಭಾಚಾರ್ಯಕೃತ - ಗೀತಾಭಾವಚಂದ್ರಿಕಾ

(46) ಗೂಢಕರ್ತೃಕ - ಮಧ್ವಮತಾನುಸಾರಿ ಗೀತಾವಿವರಣ

(47) ಗೂಢಕರ್ತೃಕ - ಗೀತಾಭಾಷ್ಯ-ಗೀತಾತಾತ್ಪರ್ಯ-ವಿರೋಧೋದ್ಧಾರಃ

(48) ಗೂಢಕರ್ತೃಕ - ಗೀತಾಭಾಷ್ಯವಿರೋಧೋದ್ಧಾರಃ

(49) ರತ್ನಗರ್ಭವಡೆಯರು - ಗೀತಾವ್ಯಾಖ್ಯಾನ

ಇನ್ನೂ ಅನೇಕ ಅಮುದ್ರಿತ ವ್ಯಾಖ್ಯಾನಗಳು ಉಪಲಬ್ಧವಿವೆ.

## ಕೃತಜ್ಞತಾವಿಷ್ಕಾರ

ಇಂಥಹ ಮಹತ್ತರವಾದ ಗ್ರಂಥವನ್ನು ಸಂಶೋಧನೆ ಮಾಡಿ ಪ್ರಕಾಶಕ್ಕೆ ತರುವ ಗುರುತರ ಜವಾಬ್ದಾರಿಯನ್ನು ನಮ್ಮ ಮೇಲಿಟ್ಟ ಪರಮಾನುಗ್ರಹ ಮಾಡಿದಂತಹ ಪರಮಪೂಜ್ಯ ಸುಯತೀಂದ್ರತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರಿಗೆ ಶಿರಸಾಷ್ಟಾಂಗ ನಮನಗಳನ್ನು ಸಮರ್ಪಿಸುತ್ತೇವೆ.

ನಮ್ಮ ಈ ಸಂಶೋಧನಾ ಕಾರ್ಯದಲ್ಲಿ ಉತ್ತಮ ಮಾರ್ಗದರ್ಶನವನ್ನು ನೀಡಿದ ನಮ್ಮ ವಿದ್ಯಾ-ಗುರುಗಳಾದ ಶ್ರೀ ರಾಜಾ ಎಸ್. ಗಿರಿಯಾಚಾರ್ಯರನ್ನು ನಮಸ್ಕರಿಸುತ್ತಾ ಕೃತಜ್ಞತೆಗಳನ್ನು ಸಮರ್ಪಿ-ಸುತ್ತೇನೆ.

ಪುಸ್ತಕಪ್ರಕಾಶನಕಾರ್ಯದಲ್ಲಿ ವಿಶೇಷ ಆಸಕ್ತರಾದ ಶ್ರೀಗಳವರ ಆಪ್ತಕಾರ್ಯದರ್ಶಿಗಳಾದ ರಾಜಾ ಶ್ರೀ ಎಸ್. ರಾಜಗೋಪಾಲಾಚಾರ್ಯರನ್ನು ಈ ಸಂದರ್ಭದಲ್ಲಿ ಸ್ಮರಿಸುತ್ತೇವೆ. ಶ್ರೀಗುರುಸಾರ್ವಭೌಮ ಸಂಸ್ಕೃತ ವಿದ್ಯಾಪೀಠದ ಕುಲಪತಿಗಳಾದ ಡಾ|| ವಾ. ರಾ. ಪಂಚಮುಖಿಯವರು ಆಂಗ್ಲ ಮುನ್ನುಡಿಯನ್ನು ನೀಡಿ ಹಾಗೂ ಸಂಶೋಧನಾ ಕಾರ್ಯದಲ್ಲಿ ಪ್ರೋತ್ಸಾಹಿಸಿದ್ದಾರೆ. ಅವರಿಗೂ ನಮ್ಮ ಕೃತಜ್ಞತೆಗಳು. ಈ ಬೃಹತ್ ಸಂಪುಟದ ಸಂಶೋಧನಾ ಕಾರ್ಯದಲ್ಲಿ ವಿಶೇಷವಾಗಿ ಕರಡುಪ್ರತಿಯನ್ನು ತಿದ್ದುವುದರಲ್ಲಿ ಸಹಕರಿಸಿದ ವಿದ್ವಾಂಸರಾದ ಸರ್ವಶ್ರೀ ಡಾ|| ಅಕ್ಕಿ ರಾಘವೇಂದ್ರಾಚಾರ್ಯ, ಬಿ. ಕೆ. ವಿಜಯವಿಠಲಾ-ಚಾರ್ಯ. ಎನ್. ರಾಘವೇಂದ್ರಾಚಾರ್ಯ. ಡಾ|| ಪುರೋಹಿತ್ ನರಸಿಂಹಾಚಾರ್ಯ, ಎಲ್. ಕೃಷ್ಣಾ-

ಚಾರ್ಯ, ಡಿ. ಆರ್. ಮಾಧವಾಚಾರ್ಯ, ಪ್ರದೀಪಸಿಂಹಾಚಾರ್ಯ, ಬಿ. ಮಧುಸೂದನಾಚಾರ್ಯ. ಹಾಗೂ ವಿದ್ವಾಂಸರಾದ ಅರ್ಚಕ ವೇದವ್ಯಾಸಾಚಾರ್ಯ, ಗರಗ ಜಯರಾಮಾಚಾರ್ಯ ಭಾಸ್ಕರಾ-ಚಾರ್ಯ, ಶ್ರೀಕಾಂತಾಚಾರ್ಯ ಇವರ ವಿಶಿಷ್ಟವಾದ ಸೇವೆಯನ್ನು ಸ್ಮರಿಸುತ್ತಾ ಅಭಿನಂದಿಸುತ್ತೇವೆ.

ಈ ಸಂಶೋಧನಾಕಾರ್ಯದಲ್ಲಿ ನಾವು ಅನೇಕ ಹಸ್ತಪ್ರತಿಗಳನ್ನೂ, ಮುದ್ರಿತಪುಸ್ತಕಗಳನ್ನೂ ಉಪ-ಯೋಗಿಸಿಕೊಂಡಿರುತ್ತೇವೆ.

ನಮ್ಮ ಮಠದ

(1) ಶ್ರೀಗುರುಸಾರ್ವಭೌಮ ಸಂಸ್ಕೃತ ವಿದ್ಯಾಪೀಠದ ಎಲ್ಲಾ ಗ್ರಂಥದ ಹಸ್ತಪ್ರತಿಗಳು.

(2) ಶ್ರೀಗುರುರಾಜರ ಪೂರ್ವಾಶ್ರಮ ವಂಶೀಕರಾದ ವಿದ್ವಾಂಸರಾದ ರಾಜಾ ಎಸ್. ಗಿರಿ ಆಚಾರ್ಯರ ಆಧ್ಯಾತ್ಮಿಕ ಕೇಂದ್ರದ ಎಲ್ಲಾ ಹಸ್ತಪ್ರತಿಗಳು.

(3) ಡಾ. ವಿ. ಆರ್. ಪಂಚಮುಖಿಯವರ ಭಾವರತ್ನಕೋಶದ ಹಸ್ತಪ್ರತಿ.

(4) ಪಾಂಗರಿ ವ್ಯಾಖ್ಯಾನ ಮುದ್ರಿತ ಪುಸ್ತಕ.

(5) ಅಖಿಲ ಭಾರತ ಮಾಧ್ವ ಮಹಾಮಂಡಲದಿಂದ ವಿದ್ವಾನ್. ಡಿ. ಪ್ರಹ್ಲಾದಾಚಾರ್ಯರು ಸಂಪಾದಿಸಿದ ಮುದ್ರಿತ ಪುಸ್ತಕ

(6) ವಿದ್ವಾನ್ ವ್ಯಾಸರನಕೇರಿ ಪ್ರಭಂಜನಾಚಾರ್ಯರು ಒದಗಿಸಿದ ಭಾವರತ್ನಕೋಶದ ಹಸ್ತಪ್ರತಿ ಹಾಗೂ ಮುದ್ರಿತ ಪುಸ್ತಕಗಳು.

(7) ವಿದ್ವಾನ್ ಭೀಮಸೇನಾಚಾರ್ಯ ವರಖೇಡಿ, ಪಂಢರಪೂರ್ ಇವರು ಒದಗಿಸಿಕೊಟ್ಟ ಗೀತಾ ಅನ್ವಯಪ್ರಕಾಶಿಕೆಯ ಹಸ್ತಪ್ರತಿ.

ಮೇಲ್ಕಂಡ ಎಲ್ಲಾ ಗ್ರಂಥಗಳನ್ನೂ ಒದಗಿಸಿದ ಮಹನೀಯರನ್ನು ಸ್ಮರಿಸುತ್ತಾ ನಮ್ಮ ಧನ್ಯವಾದಗಳನ್ನು ಅರ್ಪಿಸುತ್ತೇವೆ.

ಈ ಗ್ರಂಥದ ಮುದ್ರಣಕಾರ್ಯದಲ್ಲಿ ತುಂಬಾ ಶ್ರಮವಹಿಸಿ ತ್ವರಿತ ಗತಿಯಲ್ಲಿ ಅಂದವಾಗಿ ಮುದ್ರಿಸಿದ "ಶ್ರೀ ಸುಧಾ ಮುದ್ರಣ"ದ ಮಾಲೀಕರಾದ ಶ್ರೀ ಧನಂಜಯ ವರಖೇಡಕರ್ ಅವರನ್ನೂ ಅಭಿನಂದಿಸುತ್ತಾ, ಈ ಪುಸ್ತಕವನ್ನು ಲೋಕಾರ್ಪಣೆ ಮಾಡುತ್ತೇವೆ.

ಇತಿ

ಚೈತ್ರಶುದ್ಧ ನವಮಿ
ಶ್ರೀರಾಮನವಮಿ
ಮಂತ್ರಾಲಯ.

*ವಿದ್ವಾನ್ ರಾಜಾ ಎಸ್. ಪವಮಾನಾಚಾರ್ಯ*
*ವಿದ್ವಾನ್ ಕಡಪ ರಾಘವೇಂದ್ರಾಚಾರ್ಯ*
*ವಿದ್ವಾನ್ ಡಾ|| ಎನ್. ವಾದಿರಾಜಾಚಾರ್ಯ*
*ವಿದ್ವಾನ್ ಪುರಾಣಿಕ ಸುಬ್ರಹ್ಮಣ್ಯಾಚಾರ್ಯ*

॥ श्री वेदव्यास भगवान् ॥



॥ ಶ್ರೀ ವೇದವ್ಯಾಸ ಭಗವಾನ್ ॥

येन प्रादुरभावि भूमिवलये व्यस्तारि गोसन्ततिः
प्राबोधि श्रुतिपङ्कजं करुणया प्राकाशि तत्त्वं परम् ।
ध्वान्तं ध्वंसमनायि साधुनिकरश्चाकारि सन्मार्गग-
स्तेन व्यासदिवाकरेण सततं मा त्याजि मे मानसम् ॥

## ॥ अवतारत्रयोपेत-श्रीमध्वाचार्याः ॥

प्रथमो हनुमन्नाम द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥



## ॥ ಅವತಾರತ್ರಯೋಪೇತ-ಶ್ರೀಮಧ್ವಾಚಾರ್ಯಾಃ ॥

ಪ್ರಥಮೋ ಹನುಮನ್ನಾಮ ದ್ವಿತೀಯೋ ಭೀಮ ಏವ ಚ ।
ಪೂರ್ಣಪ್ರಜ್ಞಸ್ತೃತೀಯಸ್ತು ಭಗವತ್ಕಾರ್ಯಸಾಧಕಃ ॥

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्याः ॥

अभ्रमं भङ्गरहितं अजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥



॥ ಶ್ರೀಮದಾನಂದತೀರ್ಥಭಗವತ್ಪಾದಾಚಾರ್ಯಾಃ ॥

ಅಭ್ರಮಂ ಭಂಗರಹಿತಂ ಅಜಡಂ ವಿಮಲಂ ಸದಾ ।
ಆನಂದತೀರ್ಥಮತುಲಂ ಭಜೇ ತಾಪತ್ರಯಾಪಹಮ್ ॥

## ॥ श्रीमज्जयतीर्थाः ॥



॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ಜಯತೀರ್ಥಾಃ ॥

सत्पद्मबन्धवो यस्य गावो विश्वतमोनुदः ।
स स्यात् तत्त्वप्रकाशाय जयतीर्थरविर्मम ॥

## ॥ श्रीविजयीन्द्रतीर्थाः ॥



**॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ವಿಜಯೀಂದ್ರತೀರ್ಥಾಃ ॥**

धर्मः सत्ये च धीमानहिरिव वचसा भूसुराणां सभायां
जेता भीमैव वादे पवन इव गतौ सम्पदि श्रीरिवाढ्यः ।
धाता ज्ञाता च सर्वानहिपतिशयनं पूजयंस्तोषयंश्च
लोकैः सर्वैश्च पूज्यो भुवि मनुजवरैर्मानितोऽभून्मुनीन्द्रः ॥

## ।। श्रीराघवेन्द्रतीर्थाः ।।



**॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ರಾಘವೇಂದ್ರತೀರ್ಥರ್ಾಃ ॥**

चित्ते चेन्मृदुता शिरीषसदृशो हय्यङ्गवीनं शिला
गाम्भीर्यं यदि यस्य सोऽन्धुरुदधिः शास्त्रेषु चेत्पाण्डिती ।
आचार्यो विबुधेशितुः कलयते विद्यार्थितामादरात्
औदार्यं यदि कल्पपादपमुखाः सम्भावयन्तेऽर्थिताम् ।।

॥ श्री श्री १००८ श्री सुशमीन्द्रतीर्थाः ॥



॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ಸುಶಮೀಂದ್ರತೀರ್ಥಾಃ ॥

॥ श्रीः ॥

# श्रीमद्-भगवद्गीता

**विद्याधिराजतीर्थविरचिता गीताविवृत्याख्या टीका**

रमापतिं पूर्णगुणं मुकुन्दं व्यासं च विज्ञानसहस्रभानुम् ।
पूर्णप्रबोधं च सुतत्त्वदीपं क्रमाद्गुरूंश्च प्रणमामि मूर्ध्ना ॥ १ ॥

श्रीमदानन्दतीर्थार्यमतमाश्रित्य यत्नतः ।
क्रियते विष्णुगीताया विवृतिः साधुसंविदे ॥ २ ॥

इह हि संसारे क्लिश्यमानं वेदार्थज्ञानरहितमधिकारवर्जितं च स्त्रीशूद्रादिकमवेक्ष्य कृपाविष्टैर्ब्रह्मेशानादिभिरर्थितो भगवान् व्यासोऽवततार । ततश्च संसारे क्लिश्यमानानां जनानां धर्मज्ञानद्वारा मोक्षो भवेदिति कृपालुः सर्ववेदार्थोपबृंहितां सर्वप्राणिभिरनवगाह्यां केवलं भगवत्स्वरूपपरां वासुदेवार्जुनसंवादात्मिकां महाभारतपारिजातमधुभूतां गीतामुपनिबबन्ध । तथोक्तम्—

स्वयं नारायणो देवो ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ।
चकार पञ्चमं वेदं महाभारतसंज्ञितम् ॥

शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।
वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ।
न भारतसमं शास्त्रं कुत एवानयोः समम् ॥

**श्रीमद्वादिराजतीर्थश्रीचरणविरचितभगवद्गीतालक्षालङ्कारः**

गीतां कृष्णमुखाज्जातां शीतांशोरिव चन्द्रिकाम् ।
आसेव्य भवदावोत्थधर्मं निर्मूलयाम्यहम् ॥

**श्रीमद्राघवेन्द्रयतिविरचितः गीतासारसंग्रहः**

लक्ष्मीनारायणं नत्वा पूर्णबोधादिकान् गुरून् ।
कुर्मः श्रीकृष्णगीताया भाष्याद्युक्तार्थसङ्ग्रहम् ॥

॥ श्री श्री १००८ श्री सुयतीन्द्रतीर्थाः ॥



॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ಸುಯತೀಂದ್ರತೀರ್ಥಾಃ ॥

॥ श्रीः ॥

# श्रीमद्-भगवद्गीता

## विद्याधिराजतीर्थविरचिता गीताविवृत्याख्या टीका

रमापतिं पूर्णगुणं मुकुन्दं व्यासं च विज्ञानसहस्रभानुम् ।
पूर्णप्रबोधं च सुतत्त्वदीपं क्रमाद्गुरूंश्च प्रणमामि मूर्ध्ना ॥ १ ॥

श्रीमदानन्दतीर्थार्यमतमाश्रित्य यत्नतः ।
क्रियते विष्णुगीताया विवृतिः साधुसंविदे ॥ २ ॥

इह हि संसारे क्लिश्यमानं वेदार्थज्ञानरहितमधिकारवर्जितं च स्त्रीशूद्रादिकमवेक्ष्य कृपाविष्टैर्ब्रह्मेशानादिभिरर्थितो भगवान् व्यासोऽवततार । ततश्च संसारे क्लिश्यमानानां जनानां धर्मज्ञानद्वारा मोक्षो भवेदिति कृपालुः सर्ववेदार्थोपबृंहितां सर्वप्राणिभिरनवगाह्यां केवलं भगवत्स्वरूपपरां वासुदेवार्जुनसंवादात्मिकां महाभारतपारिजातमधुभूतां गीतामुपनिबबन्ध । तथोक्तम्—

स्वयं नारायणो देवो ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ।
चकार पञ्चमं वेदं महाभारतसंज्ञितम् ॥

शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।
वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ।
न भारतसमं शास्त्रं कुत एवानयोः समम् ॥

**श्रीमद्वादिराजतीर्थश्रीचरणविरचितभगवद्गीतालक्षालङ्कारः**

गीतां कृष्णमुखाज्जातां शीतांशोरिव चन्द्रिकाम् ।
आसेव्य भवदावोत्थधर्मं निर्मूलयाम्यहम् ॥

**श्रीमद्राघवेन्द्रयतिविरचितः गीतासारसंग्रहः**

लक्ष्मीनारायणं नत्वा पूर्णबोधादिकान् गुरून् ।
कुर्मः श्रीकृष्णगीताया भाष्याद्युक्तार्थसङ्ग्रहम् ॥

"स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥"

इति भागवतोक्त्या "वेदार्थज्ञानानधिकारिणां स्त्रीशूद्रादीनां धर्मज्ञानद्वारा मोक्षो भवेत्" इति भगवान् वेदव्यासः सम्भवसभाऽरण्यविराटोद्योगभीष्मद्रोणकर्णशल्यगदासौप्तिकशान्त्यानुशासनिकाश्वमेधिकमौसलमहाप्रस्थानस्वर्गारोहणभविष्यत्पर्वभेदेनाष्टादशपर्वात्मकं भारतं कृत्वा, तत्र भीष्मपर्वणि भारतपारिजातमधुरभूतां सर्वभारतार्थसङ्ग्रहभूतां श्रीकृष्णार्जुनसंवादरूपां भगवद्गीतां निबबन्ध ।

तत्र पूर्वषट्के ज्ञानोपायोक्तिः । द्वितीयषट्के तत्साध्यज्ञानस्योक्तिः । तृतीयषट्के प्रागुक्तस्य प्रपञ्चनं क्रियत इति विवेकः ।

**अन्वयप्रकाशिका**

श्रीमन्मध्वमुनिं च तद्गतमहं नारायणं मुक्तिदं
निर्दोषं गुणसंयुतं च रघुपं व्यासं नृहर्यात्मकम् ।
आनम्याब्धिसुतायुतं च यदुपं गीतार्थसारप्रदं
बीभत्सुं जयराजपूर्वकगुरुं संप्रार्थये सुज्ञताम् ॥ १ ॥

गीता भागवती श्रीमन्मध्वसिद्धान्तमादरात् ।
प्रपञ्चीक्रियते व्यक्ता संश्रित्य ज्ञानसिद्धये ॥ २ ॥

इह हि परापरतत्त्वज्ञानाभावान्निवृत्तधर्मज्ञानाच्च संसारे क्लिश्यमानं सज्जनजनं ज्ञानोपपन्नकृत्यैर्ब्रह्मादिभिरर्थितस्तदुभयज्ञानोत्पादनाय भगवान् नारायणो व्यासत्वेन अवततार । ततश्च इष्टानिष्टप्राप्तिपरिहाररूपमोक्षसाधनादर्शनाद्वेदार्थज्ञापकाभावाच्च । संसारे क्लिश्यमानानां वेदानधिकारिणां स्त्री-शूद्रादीनां च स्वतन्त्रास्वतन्त्रतत्त्वज्ञाननिष्कामधर्मापादनद्वारा मोक्षो भवेदिति दयालुर्व्यासः । सर्ववेदव्याख्यानयुक्ताम् अत एव सर्ववेदार्थरूपां वेदानुक्तार्थयुक्तां गूढार्थां भाषात्रययुक्तां सर्वप्राणिनां ग्राह्याग्राह्यद्वययुतां भारतसंहितामचीक्लृपत् । तच्चोक्तम्—

"लोकेशा ब्रह्मरुद्राद्या संसारे क्लेशिनं जनम् ।
वेदार्थाज्ञमधीकारवर्जितं च स्त्रियादिकम् ॥

अवेक्ष्य प्रार्थयामासुर्लोकेशं पुरुषोत्तमम् ।
ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च ॥

अन्यावताररूपैश्च वेदानुक्तार्थभूषितम् ।
केवलेनात्मबोधेन दृष्टं वेदार्थसंयुतम् ॥

वेदादपि परं चक्रे पञ्चमं वेदमुत्तमम ।
भारतं पञ्चरात्रं च मूलरामायणं तथा ।
पुराणं भागवतं चेति सम्भिन्नः शास्त्रपुङ्गवः ॥'' इति ।

अत्र व्यासो भूत्वा प्रसिद्धं भागवतं तथा पुराणं च चक्रे । अभूत्वा मूलरूपेण चतुःश्लोकी-भागवतं नारायणावतारेण पञ्चरात्रं ब्रह्मतर्कं च बृहत् । हयग्रीवरूपेण मूलरामायणं पुराणशब्दोपलक्षित-योगशास्त्रादि कपिलाद्यवतारैरिति प्रमाणवाक्यार्थः । अन्यत्र—

''ब्रह्माद्यैः प्रार्थितो विष्णुर्भारतं स चकार ह ।
यस्मिन् दशार्थाः सर्वत्र न ज्ञेया सर्वजन्तुभिः ॥

यदि विद्यात् चतुर्वेदा साङ्गोपनिषदान् द्विजः ।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ॥

महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥'' इत्यादि ।

तत्र भारते सर्वभारतार्थसङ्ग्रहरूपां वासुदेवार्जुनसंवादरूपिकां भारतपारिजातमधुभूतां गीतामुप-निबबन्ध व्यासः । तच्चोक्तम्—

''स्वयं नारायणो देवो ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ॥

चकार पञ्चमं वेदं महाभारतसंज्ञितम् ।
शास्त्रेषु भारतं सारस्तत्र नामसहस्रकम् ॥

वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ।
न भारतसमं शास्त्रं कुत एवानयोस्समम् ॥

भारतं सर्वशास्त्रेषु भारते गीतिका वरा ।
विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्द्वयम् ॥'' इति महाकौर्मे ।

## गीतात्रिविधार्थविवृतिः

श्रीनारदाभिधगुरोर्हृदयस्थपूर्णप्रज्ञान्तरोऽङ्गरमो गजवैरिवक्त्रः ॥
मत्कामितं प्रवितरन्नमितो यदर्थं प्रत्यूहहा जयति तात्त्विकमुख्ययन्ता ॥ १ ॥

श्रीगीताप्रथमाध्यायमध्यात्मादौ विपश्चितुम् ।
उद्यतस्यापि मे बाल्यं क्षन्तुमर्हन्ति सूरयः ॥ २ ॥

नन्विदमुद्यमनमयुक्तम् । अस्य व्याख्येयग्रन्थस्यैवानारम्भणीयत्वात् ॥ तथाहि— अनारम्भणीयनिमित्तं तु द्वेधा । अप्रामाण्यम्, अनुबन्धवैधुर्यं, चेति । अप्रामाण्यनिमित्तमपि त्रेधा ॥ अनाप्तवचनम्, श्रुतिविरोधो, युक्तिविरोधश्चेति ॥ अनाप्तत्वहेतुरपि त्रिविधः, वक्तुः श्रोतुः प्रसङ्गस्य, च अनानुकूल्यम् ॥ वक्तुरनानुकूल्यमपि त्रिविधम्— विवक्षितार्थतत्त्वाज्ञानम्, करणापटुत्वम्, विवक्षाभावश्चेति ॥ ततश्चायं ग्रन्थः अपौरुषेयः, पौरुषेयो वा । नाद्यः, ऋगादीनामेव अपौरुषेयत्वेन तदितरस्य तदभावात् । न च ऋगादिरेवायम् । तत्रानन्तर्भावात् ॥ द्वितीये तु कोऽस्य ? वक्ता व्यास इति चेत् । तस्य जननादिना अस्मत्सादृश्येन तत्त्वज्ञानपटुकरणत्वाभावादननुकूलत्वम् ॥ न च भगवानेव व्यासः जननादिमत्त्वात्, कृतकृत्यस्य च तस्य प्रयोजनाभावाद्विवक्षाशून्यत्वेनाननुकूलत्वं सुस्थमेव ॥ एवं त्रिविधस्यापि वक्त्रानुकूल्यस्याभावाद्वक्तुर्व्यासस्यानाप्तत्वमेव । श्रोत्रननुकूलत्वेनापि तत् । तथाहि— श्रोत्रानुकूल्यमपि द्विविधम् ॥ तत्त्वज्ञानयोग्यता, वक्तृप्रीतिविषयता चेति । तत्र इह किमस्मदादीनां श्रोतृत्वं, ब्रह्मादीनां वा । नाद्यः, विषयैककामत्वेनोभयोरप्यभावात् । न द्वितीयः । तेषां स्वतः सर्वज्ञत्वेनैव श्रवणायोगात् श्रवणानादरेणैव वक्तृप्रीतिविषयताया अप्ययोगात् सुस्थमनाप्तत्वम् । प्रसङ्गविरहेणापि तत् । प्रसङ्गो नाम श्रोतृप्रयोजनोद्देशः । तत्र विषयापेक्षाणामस्मदादीनां श्रोतॄणां न हि मोक्षादिप्रयोजनम्, नाप्यनेन विषयलाभः । ब्रह्मादीनां तु देवत्वप्राप्त्यैव तदधिकान्यस्य प्रयोजनस्याभावः ॥ एवं त्रिविधस्यापि आप्तवाक्यनिमित्तस्याभावादप्रामाण्यम् । श्रुतिविरोधी च अयम् । तत्र । "हिरण्यगर्भः समवर्तताग्रे" इति ब्रह्मणोऽग्रे विद्यमानत्वकथनेऽपि, अत्र । "अहमादिश्च भूतानाम्" इति भगवदुक्तेः ॥ तथैव युक्तिविरोधी- एतद्ग्रन्थोक्तं नाचरणीयम्, दुःखसाध्यत्वात्, अग्निस्पर्शवदित्याद्युक्त्या तद्विरुद्धाचरणे सुखोपलम्भात् ॥ एवं श्रुतियुक्तिविरोधानाप्तवाक्यत्वसम्भवेन सिद्धादप्रामाण्यादनारम्भणीयत्वम् । अनुबन्धवैधुर्यादपि तत् । विषयप्रयोजनाधिकारिसम्बन्धभेदेन अनुबन्धस्यापि चातुर्विध्यम् । तत्र नात्र विषयः । अस्त्यध्यात्मज्ञानमिति चेत्, ज्ञातृज्ञेययोर्भेदेन ज्ञानं, किं वा अभेदेन । नाद्यः, भेदस्यैवाप्रामाण्यात् । नान्त्यः, ज्ञातृज्ञेययोरेकत्वे ज्ञातुर्ज्ञेयत्वेन ज्ञेयस्य च ज्ञातृत्वेन विद्यमानत्वप्रसक्त्या ज्ञानायोगात् । आत्मनः स्वप्रकाशतया नित्यसिद्धत्वाच्च । सन्दिग्धो हि विषयो भवति । आत्मनस्त्वहमित्यनुभवेनैव वेद्यतया

शास्त्रस्य सिद्धसाधनतापत्तेश्च । नापि प्रयोजनम्, – किमैहिकं प्रयोजनं आमुष्मिकं वा । नाद्यः, अधीतेऽप्यस्मिन्कामोपलम्भाभावात् । न द्वितीयः, आमुष्मिकस्यैवाभावात् । भावे वा गीतापाठेनैव मोक्षगन्तुरश्रवणात् ॥ विषयप्रयोजनाभावादधिकार्यभावः । उभयाभावादेव सम्बन्धाभावोऽपि । एवं चतुर्विधानुबन्धशून्यत्वेन चानारम्भणीयत्वमिति ॥ मैवम् । प्रामाण्यसद्भावात् ॥ यत्तु प्रामाण्यकारण-वक्त्रानुकूल्यनिरासाय जननादिहेतुना व्यासस्य नारायणत्वाभावः साधितः । तदसाधु । "स्वयं नारायणो देवो ब्रह्मरुद्रेन्द्रपूर्वकैः । अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ॥ चकार पञ्चमं वेदं महाभारतसंज्ञकम्" इत्युक्तेः ॥ न च आगमानुकूल्यं विना केवलानुमानमर्थसाधकम् । सर्वत्र कर्तुं सुशकत्वात् । तदुक्तम् "सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा । तस्मान्न सा शक्तिमती विनाऽगममुदीक्षितुम्" इति वाराहे ॥ जन्मादिप्रदर्शनं तु केवलासज्जनमोहनाय । "अजातो जातवद्विष्णुरमृतो मृतवत्तथा । मायया दर्शयेन्नित्यमज्ञानां मोहनाय च" इति ब्राह्मे ॥ यो हि सर्वज्ञकल्पानां ब्रह्मादीनां तत्त्वोपदेष्टा स कथमतत्त्वज्ञः । "ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तम" इति स्कान्दे ॥ यश्च बह्वागमप्रणेता स कथमपटुकरणो भवेत् ॥ "ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च । अन्यावताररूपैश्च वेदानुक्तार्थभूषितम् । भारतं पञ्चरात्रं च मूलरामायणं तथा । पुराणं भागवतं चेति सम्भिन्नः शास्त्रपुङ्गव" इति नारायणाष्टाक्षरकल्पे ॥ "उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयम्" इति स्कान्दे च ॥ यच्च कृतकृत्यतया प्रयोजनाभावेन विवक्षाभावसाधनं तदप्यनुचितम् । मास्तु स्वार्थं प्रयोजनम्, तथापि परप्रयोजनार्थं विवक्षाभावसम्भवात् । दृश्यन्ते हि केवलं कृपापारवश्येन परोपकाराय प्रवृत्ताः ॥ एवं त्रिविधस्यापि वक्त्रानुकूल्यस्य सत्त्वात्, व्यासस्यानाप्तत्वाभावः ॥ यच्च श्रोत्रानुकूल्याभावसाधनं तदप्यनुचितम् । श्रोतारस्तावद्ब्रह्मादयः । न च तेषां सार्वज्ञेन श्रवणायोगः, ईश्वरविषये सार्वज्ञ्याभावात् । तथोक्तं वायुपुराणे "सर्ववेदेषु ये चोक्ता गुणा विष्णोः सुमङ्गलाः । तानेव भगवान् ब्रह्मा वेत्ति लक्ष्मीस्ततोऽधिकान् ॥ अज्ञाताश्च तया लक्ष्म्या कोटिशः सन्ति ते गुणा" इति । अतः श्रवणानादराभावः । ब्रह्मणो ज्ञानिश्रेष्ठत्वं चोक्तम् । "प्रायो ब्रह्मणोनाप्रतिभासितम्" इति तत्त्वप्रकाशिकायाम् । "अहं ज्ञानिप्रियो नित्यम्" इति ह्यत्रैव वक्ष्यति । अतो न श्रोत्रानुकूल्याभावः ॥ यच्च प्रसङ्गाभावसाधनार्थं देवत्वप्राप्तिरूपहेतुना ब्रह्मादीनां देवत्वाधिकान्यप्रयोजनाभाव उक्तः सोऽनुचितः । देवत्वादपि मोक्षस्याधिक्यात् । देवानां भयदुःखादिकं दृष्टम् ॥ "भीषास्माद्वातः पवते", "यस्माद्बिभेम्यहमपि द्विपरार्धार्धधिष्ण्या" इत्यादिश्रुतिस्मृतिभ्यः । मोक्षे तु तदभावात् ॥ "नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित् । कुत एव तु दुःखं स्यात् सुखमेव सदोदितम्" इति नारायणतन्त्रे । तस्माद्देवत्वसकाशान्मोक्षस्याधिक्यसद्भावेन प्रसङ्गानुकूल्यस्याभावाभावात् अप्रामाण्याभावः ॥

ननु वक्त्राद्यानुकूल्येन अप्रामाण्याभावेऽपि विप्रलिप्सया किं न स्यादिति चेन्न । विप्रलिप्सायाः श्रोतृप्रसङ्गाननुकूल्यैकनिबन्धनत्वात्तदभावेनाभावात् ॥ यच्चोक्तं "श्रुतिविरोधि" इति तदप्यसत् । न हि "हिरण्यगर्भः समवर्तताग्रे", "अहमादिश्च भूतानाम्" इति वाक्ययोर्विरोधः । भूताग्रस्थित-ब्रह्मणोऽप्यग्रे हरेर्विद्यमानत्वात् । "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्कर" इति श्रुतिः । "यो ब्रह्माणं विदधाति पूर्वम्" इति च । स्वेतरभूताग्र इति श्रुत्यर्थः । ब्रह्मादिभूतानामिति गीतार्थः ॥ यच्च "युक्तिविरोधि" इत्युक्तं, तदसम्यक् । न हि दुःखसाध्यत्वेनैतद्ग्रन्थोक्तं नाचरणीयम् । परिणामे सुखोपलम्भात् । न च तद्विरुद्धाचरणेन सुखोपलम्भः । तस्याग्रिमत्वेन राजसत्वात् । राजसस्य च सात्त्विकाधमत्वात् । तद्वक्ष्यति च— "यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् । परिणामे विषमिव तत्सुखं राजसं स्मृतम्" इति । "पार्थिवाद्दारुणो धूमः तस्मादग्निस्त्रयीमयः । तमसस्तु रजस्तस्मात्सत्वं यद् ब्रह्मदर्शनम्" इति भागवते ॥ एवं श्रुतियुक्तिविरोधानाप्तवाक्यत्वासम्भवेन अप्रामाण्याभावादनारम्भणीयत्वाभावः ॥ यच्चानुबन्धवैधुर्यसाधनाय विषयाभावसाधने "अध्यात्मज्ञानं किं ज्ञातृज्ञेययोर्भेदेनोताभेदेनेति" विकल्प्य पृष्टम् । तत्र भेदेनेति वदामः । न च तस्य अप्रामाण्यम् । "सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः" इति पैङ्गिश्रुतेः ॥ आत्मा हि परमः स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवर" इति भाल्लवेयश्रुतेश्च । "यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् । तेन सत्येन मां देवास्त्रायन्तु सह केशवा" इति स्मृतेश्च ॥ यदपि प्रयोजनाभावसमर्थनाय आमुष्मिकाभावकथनं तदतिजुगुप्सितम् । श्रुतिविरुद्धत्वात् । ज्ञानादेव स्वर्गो ज्ञानादेवापवर्ग" इति कौण्ठरव्यश्रुतिः । यस्तु श्रुतिं नाभ्युपैति स नास्तिकत्वादुपेक्ष्यः ॥ प्रयोजनाभावेन समयाभावाच्च ॥ लोकोपकाररूपं प्रयोजनमस्तीति चेन्न, तन्मते अदृष्टस्यैवाभावेनोपकारस्याप्रयोजकत्वात् ॥ यच्च गीतापाठेन मोक्षगन्तुरश्रवणमुक्तं तदज्ञाननिमित्तम्, "दामोदरं तथा पूज्यगीतापाठं तदग्रतः । कृत्वा तु स्वायुरानीय देहमन्ते विसृज्य च । जगाम परमं स्थानं योगिनामपि दुर्लभम्" इति स्कान्दोक्त्या, जडमुक्तस्य मोक्षश्रवणात् ॥ एवं विषयप्रयोजनभावेन नाधिकार्यभावः ॥ अधिकारी चात्र नित्यानित्यवस्तुविवेकवैराग्यशमदमादिसम्पत्तिमुमुक्षावान् । तस्यैवाध्यात्मज्ञानेन मोक्षश्रवणात् । अत एव सम्बन्धभावः ॥ अतो नोद्यमनमयुक्तमिति सिद्धम् ॥

नन्वस्यारम्भणीयत्वेऽपि सत्सु चान्येष्वस्यैव व्याख्याने किं प्रयोजनमस्ति इति चेत्, सर्वशास्त्रेभ्यो वरिष्ठत्वात् तर्हि निखिलमेव भारतं व्याख्येयं किं पुनर्गीतैव व्याख्येयत इति चेत् ।

भारतेऽपि गीतिकाया एव श्रेष्ठ्यात् । तदुक्तं कौर्म्ये— "भारतं सर्वशास्त्रेषु भारते गीतिका वरा" इति । तथापि समग्रां गीतां विहाय प्रथमाध्यायस्यैव व्याख्यानप्रतिज्ञानं किमर्थं कृतमिति चेत् । समग्रगीताया आचार्यादिभिर्व्याख्यातत्वात्, प्रथमाध्यायस्य तु सङ्क्षेपेण व्याख्यानात् । तेनैव निर्वाहे पुनर्व्याख्याऽनुपयुक्तेति चेन्न । यद्यपि तैर्व्याख्यातं, तथाप्यध्यात्मार्थे विस्तरेण न व्याख्यातम् । एतद्व्याख्यानस्य सविस्तराध्यात्मविषयत्वात् । तर्हि तथा अव्याख्याने पूर्वेषामज्ञानप्रसक्तिरिति चेन्न । जानद्भिरेव तैः प्रायोविषयित्वेन जनानामरुचिकरमिति मत्वा तादर्थ्येनाव्याख्यानात् । एवमपि भवद्व्याख्यानस्याप्यरुचिकरत्वं प्राप्तमिति चेत् । अस्तु विषयिणामरुचिकरत्वं, तथापि मुमुक्षूणां रुचिकरत्वात् । अध्यात्मज्ञानस्यैव मोक्षकारणत्वात् । तैरपि तदर्थमेव व्याख्यातव्यमिति चेन्न । तेषां ते सङ्क्षेपोक्त्यैवावगच्छेयुरित्याशयात् । तथापि श्रुतपरित्यागाश्रुतकल्पनाप्रसक्तिः । कुरुपाण्डवानां प्रथमाध्याये श्रुतत्वेन अध्यात्मस्याश्रुतत्वेन च प्रसिद्धेः । मैवम् । "एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते" इति तात्पर्यनिर्णयोदाहृतव्यासोक्तेः । "द्रोणाद्या इन्द्रियाण्येव पापान्यन्ये तु सैनिकाः । पाण्डवेयाश्च पुण्यानि तेषां विष्णुर्नियोजक" इति च ।

स्यादेतत् । यद्ययमध्यायो गीतान्तर्भूतः, स एव नास्ति । यतो गीतोपक्रमः "अशोच्यान्नन्वशोचस्त्वम्" इत्येतस्माच्छ्लोकादेव । तत एव भाष्यारम्भाच्च । "कैगैरैशब्द इति धातोः" "गीतं शब्दितगानयोः" इति हैमाच्च । गीतशब्दार्थस्य पूर्वाध्याये अभावः, न ह्यौपदेशिकाऽत्र भगवदुक्तिः । तस्माद्गीताप्रथमाध्यायविपञ्चनमित्युक्तमयुक्तं स्यादिति ॥ अत्रोच्यते— सत्यं, तथापि इयं गीता कुत्र ? कदा ? केन निमित्तेन ? कं प्रति ? केन ? किमर्थम् ? उक्तेति आकाङ्क्षापूरणस्याप्यावश्यकत्वात् । तस्य च अशोच्यानन्वशोचस्त्वमित्याद्युत्तरग्रन्थेऽभावात् । अत्र धर्मक्षेत्रे कुरुक्षेत्र इत्यनेन देशस्य, प्रवृत्ते शस्त्रसम्पाते इत्यादिना कालस्य, 'दृष्ट्वेमं स्वजनं कृष्णे'त्यादिना निमित्तस्य, 'एवमुक्त्वार्जुनः सङ्ख्ये', इत्यादिना श्रोतुः, 'उवाच मधुसूदन' इत्यादिना वक्तुः, 'अनार्यजुष्टमि'त्यादिना दोषनिरासरूपप्रयोजनस्य सत्त्वात् । अस्य ग्रन्थस्यैवाकाङ्क्षापूरकत्वसिद्ध्या नानन्तर्भूतत्वमिति सिद्धम् ॥ अतो न कोऽपि क्षुद्रशङ्कावकाशः ॥

## भाष्यम्

**॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥**

**देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।**
**परिपूर्णं गुरूंश्चाऽऽन् गीतार्थं वक्ष्यामि लेशतः ॥**

**जयतीर्थकृता प्रमेयदीपिका**

गुणगणनिलयं पतिं रमाया जगदघदहनं च वासवीसूनुम् ।
मुनिकुलतिलकं च पूर्णबोधं गुरुमपि परमं गुरुं च मे वन्दे ॥ १ ॥

**पद्मनाभतीर्थकृता गीताभाष्यभावप्रदीपिका**

गुणगणनिलयं प्रणम्य कृष्णं जगदघहननं च वासवीसूनुम् ।
गुरुकुलतिलकं सुपूर्णबोधं गुरुमपि विवृणोमि गीतिकाभाष्यम् ॥

श्रीमद्भगवद्गीतां व्याख्यातुकामो भगवानाचार्यः स्वेष्टदेवतात्वेन गुरुत्वेन च नारायणं नत्वा ग्रन्थारम्भं प्रतिजानीते **देवमिति** । '**आन्** विष्णून्' इति बहुवचनं गुरुत्वाभिप्रायेण । 'मुख्यस्य निर्विशेषेण शब्दः इति वचनात् गीतेति भगवद्गीतोच्यते ।

**नरहरितीर्थविरचिता गीताभाष्यभावप्रकाशिका**

देवोऽपि द्योतनाद्यः सुररिपुविजयादुच्चकान्त्या स्तुतोऽयं
देवैस्तैरात्मभक्तैर्व्यवहितकरणात् सर्वगत्या च रत्या ।
सर्वैर्दोषैर्विहीनस्त्वमितगुणतनुः सर्वसामर्थ्यपूर्णः
श्रीमन्नारायणस्तं श्रुतिनुतिपरमं कृष्णगीतं नमामि ॥ १ ॥

क्षीराब्धेरेत्य तीरं विधिहरमुखराशेषदेवेशनुत्या
प्रीतः प्राप्तः क्षितिं यः स्वखिलगुणतनुः भारतं भारताद्यः ।
चक्रे चक्राब्जलक्ष्मारुणकरचरणस्तं बदर्यां मुनीन्द्रैः
सेव्यं ब्रह्मादिविद्भिर्दशसुमतिगुरुं व्यासमीशं नमामि ॥ २ ॥

तस्माच्छ्रुत्वा शुकान्तर्गतवरवपुषा भारतीड्यो सुविद्या-
माद्यां वायुः प्रधानः प्रधनमुपगतान् हन्ति विष्णुद्विषो यः ।
वाचा यद्वत् स्वदोष्णा स पुनरिह कलौ कृष्णगीतासुभाष्यं
चक्रे भूचक्रगस्तं शरणमहमगां श्रीमदानन्दतीर्थम् ॥ ३ ॥

तत्कारुण्याप्तविद्याः सुभरितहरितः पद्मनाभार्यतीर्था-
दित्या यत्सम्भवन्तो हरिचरणगता मायिदैत्याः क्षिपन्ति ।
तत्पादाब्जे प्रणम्य प्रणतसुसुखदे कृष्णगीतासुभाष्यं
व्याख्यास्ये तत्प्रसादान्मम मतिममलास्ते प्रसन्नाः पुनन्तु ॥ ४ ॥

श्रीमद्भगवद्गीताभाष्यमारभमाणो भगवानाचार्यः तत्प्रतिपाद्यलक्षणं श्रीभगवन्तं नारायणमिष्टदेवतां परां नमस्कृत्य, तत्प्रणेतृत्वात्, साक्षात्स्वोपदेष्टृत्वात्, हृद्गतत्वेन सर्वविद्याप्रवर्तकत्वेन गुरुत्वेनापि तमेव श्रीबादरायणं पृथङ्नमस्कृत्य ग्रन्थारम्भं प्रतिजानीते— **देवमिति** ।

सर्वदाऽपि भगवत्प्रवणान्तःकरणैः कार्यविशेषात् गुणविशेषात् क्रियते । तत्कथनं सदाचारपरिपालनाय । **आन्** इति गुरुविशेषणम् । अकारवाच्यान् विष्णूनित्यर्थः । **गीतेति** कृष्णगीतैव उच्यते । तथा— "मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः" इति । तन्मुख्यत्वं च सर्वलोकसिद्धम् ।१

**श्रीराघवेन्द्रतीर्थविरचितः भावदीपः**

लक्ष्मीनारायणं नत्वा तथा मध्वादिदेशिकान् ।
प्रमेयदीपिकाभावदीपं कुर्याम्यथामति ॥ १ ॥

ग्रन्थादौ मङ्गलमाचरति **गुणगणेति** । गुणपदेन ज्ञानानन्दबलौदार्यद्युतिप्रभृतयो भावधर्मा जरामरणाद्यभावरूपधर्माश्च गृह्यन्ते । प्रतिपाद्यदेवतायाः रमापतेः गीताकर्तुर्व्यासस्य भाष्यकर्तुः पूर्णबोधस्य च वन्द्यत्वोपपादनाय प्रत्येकं गुणेत्यादि त्रीणि विशेषणानि । कृष्णार्जुनसंवादव्याजेन परापरतत्त्वोपदेशेन जगच्छब्दितसाधुलोकपापहारिणमित्यर्थः । **मे गुरुम्** अक्षोभ्यतीर्थम् । **परमगुरुं** माधवतीर्थम् । **च-अपिशब्दाः** वन्द्यानामन्योन्यसमुच्चये ।

**श्रीसुमतीन्द्रतीर्थविरचितः गीताभाष्यप्रमेयदीपिकाभावरत्नकोशः**

श्रीमन्तो जानकीजानेः पदपङ्कजपांसवः ।
जयन्ति सीतावक्षोजकुङ्कुमश्रीविडम्बिनः ॥ १ ॥

येनाखण्डि मुदैव खण्डपरशोरुद्दण्डकाण्डासनं
भूदेवीतनयाऽप्यलाभि सरसैरङ्गैरपाङ्गैरपि ।
सद्धर्मद्युतिहर्म्यनिर्मितलसन्नर्मोत्थशर्मोदयः
श्रीरामो मम मानसे विलसतात् सीतासहायस्सदा ॥ २ ॥

सज्जनाम्भोरुवपुषे वेदव्यासाभिधाजुषे ।
तमस्तोममुषे तस्मै परस्मै ज्योतिषे नमः ॥ ३ ॥

आमोदं यो व्यतानीद् रघुकुलतिलके सेवया श्रीहनूमान्
भीमात्मा कृष्णदेवे प्रबलधरणिपव्याजवैरीन्द्रहत्या ।

मध्वाख्यो ब्रम्हसूत्रप्रभृतिकृतिकृतान्योक्तभाष्यादिकृत्या
श्रीवेदव्यासदेवे स दिशतु सुदृशं श्रीमदानन्दतीर्थः ॥ ४ ॥

यस्मादभ्युदगाद् दशप्रकरणीमन्दारवल्ली मणि-
श्रेणीमेयसुदीपिकादिकृतिरास्वाद्या बुधैरसा सुधा ।
वादावल्यमृतांशुमूर्तिरमला तत्त्वप्रकाशेन्दिरा
भूयाच्छ्रीजयतीर्थदेशिकपयोम्भोधिर्विभूत्यै स मे ॥ ५ ॥

श्रीमध्वशास्त्रदुग्धाब्धिमामथ्योद्धृतमादरात् ।
ग्रन्थत्रयामृतं येन व्यासराजं तमाश्रये ॥ ६ ॥

श्रीराघवेन्द्रतीर्थश्रीचरणामरभूरुहम् ।
कामिताखिलकल्याणकलनोन्मुखमाभजे ॥ ७ ॥

भूरिमनीषागमचितकरणान् श्रीजयतीर्थव्रतिकृतिशरणान् ।
सन्ततमीडे सुचरितवरणान् वेङ्कटनारायणगुरुचरणान् ॥ ८ ॥

अथ तत्कृपया श्रीमज्जयतीर्थार्यनिर्मिताम् ।
श्रीमद्गीताभाष्यटीकामहं सेवे यथामति ॥ ९ ॥

श्रीमान् जयतीर्थार्यवर्यः प्रारिप्सिताविघ्नपरिसमाप्त्यादिप्रयोजनं विशिष्टेष्टदेवतागुरुप्रणामरूपं मङ्गलं ग्रन्थादौ निबध्नाति **गुणगणेति** । देवतावन्दनानन्तरं गुरुतारतम्यसीमानं वेदव्यासं वन्दते **वासवीसूनुमिति** । वसोरपत्यं स्त्री वासवी सत्यवती । तस्यास्सूनुं सुतं वेदव्यासमित्यर्थः । जगदघदहनं तत्त्वोपदेशेन सल्लोकमोक्षदमिति यावत् । चशब्दो गुणगणनिलयत्वस्य रमापतित्वस्य चानुकर्षणार्थः । पूर्णबोधं सर्वज्ञार्यम् । मे मम । गुरुम् अक्षोभ्यतीर्थम् । परमं गुरुं माधवतीर्थम् । इदं च पद्यं भाष्याद्यपद्यत्रिपादीव्याख्यानरूपम् । गुणगणनिलयमिति परिपूर्णपदस्य, रमायाः पतिमिति नारायणपदस्य, जगदघदहनमिति सर्वदोषविवर्जितपदस्य, वासवीसूनुमिति आनितिपदस्य, गुरुमपि परमं गुरुमिति गुरूनित्यस्य, वन्द इति नत्वेत्यस्य च स्पष्टीकरणात् । सकलवाङ्मनसदेवतायाः श्रीदेव्या ग्रन्थारम्भकाले वन्दनीयत्वात् पृथग् वन्दनस्यानुचितत्वात् तद्वन्दनमपि भगवदुपसर्जनत्वेन कर्तव्यमिति दर्शयितुं रमायाः पतिमित्युक्तम् । व्याचिख्यासितभाष्यमूलभूतगीताकर्तृत्वेन मूलगुरुत्वेन च वासवीसूनुर्वन्दितः ।

*प्र०दी०*—

आनन्दतीर्थभगवत्पादाचार्यविनिर्मितम् ।
व्याख्यास्ये भगवद्गीताभाष्यं तत्करुणाबलात् ॥ २ ॥

*भा०दी०*— व्याख्याने बीजं वदन् चिकीर्षितं प्रतिजानीते **आनन्दतीर्थेति** । भगवत्पादेत्युक्त्या तत्कृतस्यात्यु(प्यु)[१]पादेयत्वादिकं व्याख्यानबीजं सूचितम् ।

*भा०र०*— भाष्ये देवतागुरुप्रणामानन्तरं चिकीर्षितप्रतिज्ञादर्शनात् टीकाकारोऽपि स्वव्याख्येयभाष्यप्रामाण्यादिकं सूचयंश्चिकीर्षितं प्रतिजानीते **आनन्दतीर्थेति** । अत्र भगवत्पदेन भाष्यकारस्य विवक्षितार्थतत्त्वज्ञानाद्युक्त्या तत्प्रोक्तत्वेन भाष्यस्य प्रामाण्यं सूचितम् । गीताभाष्यमित्युक्त्या च गीताविषयाद्येवास्यापि विषयादीत्यपि । व्याख्यास्य इत्यत्र चक्षिङः ख्यादेशे तस्य ञित्वाद् व्याख्यानफलस्य पुण्यादेः कर्तृगामित्वाच्च आत्मनेपदम् । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्युक्तेः । अत एव ख्याधातोः परस्मैपदित्वात् सार्वधातुकमात्रविषयत्वस्य वैयाधिकरणैरुक्तत्वाच्च कथं व्याख्यास्य इति प्रयोग इति निरस्तम् । तत्करुणाबलात् आनन्दतीर्थभगवत्पादाचार्यकरुणाबलादिति वदन् सर्वप्रज्ञप्रणीतभाष्यव्याख्याने स्वस्य सामग्रीसम्पत्तिमभिसन्धत्ते ।

*प्र०दी०*— प्रारिप्सितविघ्नविघातादिप्रयोजनं समुचितविशिष्टेष्टदेवतागुरुप्रणामं ग्रन्थारम्भप्रतिज्ञां चादौ निबध्नाति भगवान् भाष्यकारः— **देवमिति** ।

अत्र देवशब्दो देवताशब्दपर्यायः प्रतिपाद्यमाह सन्निधानाच्च भगवद्गीताया इति लभ्यते । तेनेदानीं नारायणस्य प्रणामे समुचिततामाचष्टे । अज्ञानपारतन्त्र्यादिभिः सर्वदोषैर्विशेषेण, सर्वदा, सर्वात्मना, वर्जितम् । परितो देशतः कालतो गुणतश्च पूर्णमिति वैशिष्ट्यमाचष्टे । परमवैष्णवस्य भगवतो भाष्यकारस्य विष्णुरिष्टदेवतेति प्रसिद्धमेव । यद्वा भगवद्गीताप्रतिपाद्यत्वं नारायणस्य न परेषामिव जीवत्वनिर्विशेषत्वादिरूपेण, किन्नाम ? सर्वदोषवर्जिततया पूर्णतया चेति पदद्वयेनाख्याति । आन् व्यासान् । "अ आ अं अः पुराणर्षिः व्यासः शाखासहस्रकृत्" इत्यकारस्य तन्नामसु पाठात् । बहुवचनं च गौरवादेव । गीतेति भगवद्गीतैवाभिप्रेयते । मुख्यामुख्ययोः मुख्ये कार्यसम्प्रत्यय इति न्यायात् । यद्यपि बह्वर्था गीता, शक्तश्चाहं तद्वचने, तथापि श्रोतॄणां मन्दां मतिमपेक्ष्याल्पमेवोच्यत इति भावेनोक्तं— **लेशत इति** । इत्थम्भूतलक्षणार्थतृतीयान्तात् तसिः । अर्थशब्देन सर्वार्थग्रहणप्रसक्तौ सर्वेषां च भाष्येऽदर्शनात् वन्ध्येयं प्रतिज्ञेति मन्दाशङ्कानिरासायेदमुदितम् । नन्वस्तु स नमस्कारग्रथनं शिष्यशिक्षार्थम् । प्रतिज्ञा तु किमर्थं ग्रन्थे निवेशनीया ? उच्यते । बहुभिर्व्याख्यातृभिः भगवद्गीताया

व्याख्यातत्वात् व्यर्थमिदं भाष्यमित्याशङ्कानिरसनं प्रयोजनमस्य । अन्यैः स्वपक्षनिक्षिप्तदृष्टिभिः स्वाभिप्रायो भगवद्गीतार्थत्वेन आरोप्योक्तः । अहं तु गीतार्थमेव वक्ष्यामीति सूचनात् । न चात्र यतिभङ्गो दोषः । तस्य काव्यविषयत्वात् । शास्त्रे तु "य उपाधिर्लगति साध्ये सम्बन्धविशेषणे" इत्याद्यभियुक्तवाक्ये दर्शनादिति ।

*भा०दी०*— **प्रारिप्सितेति** । सम्भावितविघ्नानां शिष्यप्रभृतीनामिति योज्यम् । आदिपदेन प्रचयः बहुव्रीहिः[1] प्रणामो विशेष्यम् । **समुचितेति** । सम्यग्योग्येत्यर्थः । देवताप्रणामस्य समुचितत्वे हेतवौ । **विशिष्टेष्टदेवतेति** । तत्र यमग्रे व्यक्तम् । **आदौ** इत्युक्त्या गुरुदेवताप्रणामस्य ग्रन्थावयवत्वं सूचयति । मूले **नत्वा** इत्युक्तावपि प्रकृष्टनतिरभिप्रेतेति **प्रणाम**मित्युक्तम् ।

**देव**मित्यस्य कृत्याप्रतीतेराह **अत्र देवेति** । स्तुत्यर्थाद्दीव्यतेः कर्मणि घञ्प्रत्ययान्त इति भावः । **सन्निधानाच्चेति** । गीतार्थमिति गीतापदसन्निधानादित्यर्थः । गीतानां वेणुभ्रमरभिक्षुगीतारूपेणानेकत्वात् भगवद्गीतेति विशेषणोक्तिः । **तेनेति** । गीताप्रतिपाद्यत्वविशेषणकथनेन । **समुचिततामाचष्ट** इति प्रतिपाद्यस्य स्वविषयग्रन्थावबोधसम्पादकत्वादिति प्रणतदेवतैव तत्सम्पादने हेतुरिति भावः । वीत्युपसर्गार्थो **विशेषेणेति** । तद्व्यनक्ति **सर्वदा सर्वात्मनेति** । निःशेषत इत्यर्थः । **इति वैशिष्ट्यमिति** विशेषणद्वयेन भावभावरूपेतरासाधारणधर्मवत्त्वमाचष्टे । वक्ति भाष्यकार इत्यर्थः । तेनापि नारायणप्रणामस्य समुचिततामाचष्ट इत्यनुषङ्गः । विशिष्टदेवताया एव विघ्नविघातादौ शक्तत्वादिति भावः ।

ननु भक्त्यादिप्रकर्षयुक्तनतिविशिष्टदेवतायामेव भवतीति प्रणामस्य समुचिततोपपादनायेष्टता । नारायणस्य कुतो नोक्तेत्यत आह **परमवैष्णवस्येति** । परिपूर्णमित्यनेनैव वैशिष्ट्यतालाभात् । सर्वेत्यादेर्नातीव कृत्यमिति मन्वान आह **यद्वेति** । जीवत्वस्यानेकदोषयुतत्वात् सर्वेत्यादिविशेषणेन तन्निरास इति भावः । **तन्नामस्विति** । [1]सहस्रकृत् "महाभारतनिर्माता कवीन्द्रो बादरायणः । कृष्णद्वैपायनः सर्वपुरुषार्थैकबोधक" इति वासुदेवसहस्रनामस्वित्यर्थः । **गौरवादेवेति** । न तु व्यक्तिबाहुल्याभिप्रायेणेति भावः । कुत इत्यत आह **मुख्येति** । वेणुगीतादेरमुख्यत्वेन भगवद्गीताया एव मुख्यत्वादिति भावः । मुख्यत्वं चाग्रे भाष्य एव व्यक्तमिति भावः । **इत्थम्भूतेति** । प्रतियोगे "पञ्चम्यास्तसिः" इति सूत्रे "आद्यादिभ्य उपसङ्ख्यानम्" इति वार्तिके प्रथमादिविभक्त्यन्तादप्याद्यादिशब्दे गणशब्दार्थत्वात् । यद्वा । पञ्चमीत्युक्तेरिह "तृतीयार्थे तसिः" इत्थम्भावलक्षणार्थः । इत्थम्भूतलक्षणे तृतीया (२-३-२१) इति सूत्रासाम्यमात्रेणोपाध्यायकत्वप्रकारकज्ञानमितिवत् लेशेन गीतार्थत्वप्रकारं वक्ष्यामीत्यर्थः । किञ्चित्प्रकारप्राप्तस्येत्थम्भूतत्वात् अच्छावदातनागिराजरायै ब्रह्मण-

स्पतिमित्यत्र ऋग्भाष्यटीकायां जरायै जरयेति व्यत्ययेनेत्थम्भूतलक्षणे तृतीयेत्युक्त्वा जरात्वेन स्तुतिप्रकारं प्राप्तया गिरेत्युपदिशाल्पत्वप्रकारं प्राप्तमर्थमित्यर्थः । **वन्ध्येति** । अर्थहीनेत्यर्थः । **मन्दाशङ्केति** । सर्वार्थमित्यनुक्त्या शङ्कानुदयान्मन्देत्युक्तम् ।

ननु यतिर्विच्छेदसंज्ञकः इति वृत्तरत्नाकरोक्त्या श्लोकेषु नियतस्थाने "पदच्छेदं यतिं विदुः" इति दण्डोक्त्या पदस्यैव पदान्ते विरामप्राप्तेः कथनाद्गीतार्थमित्यत्र पदमध्य एव विरामः । श्लोकेषु नियतस्थानपदच्छेदस्यैव यतित्वेनात्र यतिभङ्गः कथं न स्यादित्याशङ्क्य निषेधति **न चात्रेति** । कुसुमाञ्जलोक्तोदयनश्लोकं संवादयति **य उपाधिरिति** । दर्शनादित्यस्य न चात्र यतिभङ्गदोष इति पूर्वेणान्वयः । **प्राधान्येनेति** । इष्टोपायतया अवश्योपादेयत्वेनेत्यर्थः । **अभिसम्बन्ध इति** । अधिकार्यादित्रयस्य अन्योन्यमभिसम्बन्धे चेत्यर्थः । **साधयितुमाहेति** । भारतस्वरूपाद्युक्तिपूर्वं तदुत्पत्तिप्रकारमाहेत्यर्थः ।

*भा०र०*— भगवद्गीतां व्याचिख्यासुर्भाष्यकारः किमिति **प्रथमश्लोकेन** देवतागुरुप्रणाममाचरतीत्यतस्तत्प्रयोजनं दर्शयन्नाह **प्रारिप्सितेति** । शिष्याणां विघ्नसम्भावनयोक्तम् **विघ्नविघातेति** । ननु नारायणस्य देवत्वाव्यभिचाराद् देवमिति विशेषणं नातीव प्रयोजनमावहतीत्यत आह **अत्र देवशब्द इति** । ऋग्भाष्यटीकारीत्या दीव्यतेः स्तुत्यर्थात् कर्मणि घञि निष्पन्नो देवशब्दः स्तुत्यं प्रतिपाद्यं वक्तुमेव प्रवृत्तः । ननु देवत्वोपस्थापनाय । येन नातिप्रयोजनं विशेषणमिति शङ्केति भावः । ननु "या तेनोच्यते सा देवता" इत्युक्तेः प्रतिपाद्ये देवताशब्दस्यैव दृष्टेः कथमसौ प्रतिपाद्यं ब्रूयादित्यत उक्तम् **देवताशब्दपर्याय इति** । देवताशब्द एव समुदायशक्त्या प्रतिपाद्यार्थस्य वाचकः । देवशब्दश्च तत्पर्यायः । "देवात् तल्" इत्यत्र "देवशब्दात् स्वार्थिकतल्प्रत्यये देव एव देवता" इति वृत्त्यादावुक्तत्वात् "स चेत्ता देवतापदम्" इत्यत्र "देवताशब्दो देवशब्दपर्यायः" इति ऋग्भाष्यटीकातश्च, "छन्दोऽनुष्टुप् तथा देवो भगवान् विश्वरूपधृक्" इत्यादावपि देवशब्द एवमेव व्याख्यातव्यः । तथा च "अग्निमीळे" इत्यत्र यास्कः "यो देवस्सा देवता" इति देवशब्दस्य देवताशब्दपर्यायत्वमाह । प्रयुक्तश्च देवतायां देवशब्दः "यच्चिद्धित्वं गृहे गृहे" इत्यृग्भाष्ये "सोमामात्यो परो देवो वनस्पतिः" इति । एतेन क्रीडादिगुणविशिष्टार्थस्य विबुधत्वजात्या क्रान्तिमुपस्थापयन्नयं शब्दः प्रतिपाद्यं कथं ब्रूयादिति प्रयुक्तम् । कर्मणि घञन्तस्य देवताशब्दबोध्यप्रतिपाद्यार्थकत्वादित्युक्तमेव ।

प्रतिपाद्यत्वस्य सप्रतियोगित्वादाह **सन्निधानाच्चेति** । व्याचिख्यासितत्वेन, गीतार्थमिति गीताशब्देन च बुद्धौ विपरिवर्तनादित्यर्थः । लभ्यते चेति चशब्दसम्बन्धः । यद्यपि गीतार्थं नारायण-

मित्यन्वये अर्थशब्दस्याभिधेयार्थत्वेन नारायणस्य गीतार्थत्वं लभ्यत इति तेन समुचिताख्यानं सम्भवति । सति चैवं देवताशब्दपर्यायत्वं, सन्निधानाच्च गीताया इति लभ्यत इति च नाऽदरणीयम् । तथाऽपि गीतार्थपदस्यातिदूरस्थत्वात्, वक्ष्यामीति क्रियान्वयिसमर्पकत्वादावृत्तिप्रसङ्गाद्, देवशब्ददेवताशब्दयोरतिभेदाभावात्, प्रतिपाद्यस्य सर्वप्राधान्यज्ञापनाय आदौ तद्ग्रहणस्यौचित्यात्, देवशब्दस्य माङ्गलिकत्वाच्च आदावुपादानमिति भावेनैवमुक्तम् ।

**तेन** गीतायाः प्रतिपाद्यमित्यर्थकेन देवशब्देन । **इदानीं** गीताव्याख्यानप्रारम्भकाले । विशब्दार्थो **विशेषेणेति** । तस्यैव विवरणं **सर्वदा सर्वात्मनेति** । परिशब्दार्थ एव परितश्शब्दार्थ इति भावेन तदर्थमाह **परितो देशत इति** । **वैशिष्ट्यम्** उत्तमत्वम् । पूर्णमित्यत्र चशब्दोऽनुवर्तनीयः । 'समुचित-विशिष्टेष्ट' इत्यत्र प्रतिज्ञातमिष्टत्वं कुतो नोक्तमित्यत आह **परमेति** ॥ वैष्णवस्येति क्वचित् पाठः । ननु प्रसिद्धत्वाभिप्रायेण वाचकपदानुपादाने विशिष्टत्वोपस्थापकपदमपि नोपादातव्यमेव । भाष्य-कारस्य नारायणे विशिष्टत्वस्यापि प्रसिद्धत्वात् । एकेनैव पदेन विशिष्टत्वस्य प्रतिपादनसम्भवा-च्चेत्यतः पक्षान्तरमाह **यद्वेति** । **न परेषामिवेति** ॥ "क्षेत्रज्ञं चापि मां विद्धि", "ममैवांशो जीव-लोके", "निर्गुणं गुणभोक्तृ च" इत्यादिवाक्यानां प्रतीतार्थप्रच्यावनस्य व्याख्यास्यमानत्वादिति भावः । देवताप्रणामानन्तरं गुरूनपि नमति भाष्यकारः गुरूंश्चाऽऽनिति । अत्राऽऽशब्दार्थमाह **आन् व्यासानिति** । **तन्नामस्विति** ॥ "महाभारतनिर्माता कवीन्द्रो बादरायणः" इति वासुदेवसहस्रनाममध्ये व्यासनामस्वित्यर्थः ।

ननु कथमेकस्मिन् व्यासे बहुवचनम् । "बहुषु बहुवचनम्" इति व्यक्तिबाहुल्य एव तदनु-शासनादित्यत आह **बहुवचनं गौरवादेवेति** । व्यक्तिबाहुल्यनिबन्धनत्वं व्यावर्तयितुमेवशब्दः । "आत्मनि गुरावेकेषाम्" इति प्राचामाचार्याणां वाचा बहुवचनमेकस्मिन्नपि प्रतिपत्तिपारवश्यात् प्रयोगमर्हति । "एकस्मिन् बहुवचनमन्यतरस्याम्" इत्यनुवृत्तेरिति भावः । तथा च कर्मनिर्णयटीका "धिया वो मेधसातये" इत्यत्र "वो मेधसातये । व इति गुरुत्वाद् बहुवचनम्" इत्यत्र "युष्मदि गुरावेकेषामिति वचनादिति भावः" इति । यद्यपि तत्र युष्मच्छब्दोऽस्ति । अत्र तु न । तथाऽप्युक्त-वचनादत्र तदुपपत्तिरित्याहुः ॥ **भगवद्गीतैवेति** । तस्या एव भ्रमरगोपिकागीताद्यपेक्षया मुख्यत्वादिति भावः ।

ननु लेशत इति कथम् ? गीतार्थमिति सन्निधानेन तसेर्द्वितीयान्तशब्दादुत्पत्तिशङ्कया लेशं गीतार्थमिति प्रतीत्यापत्तेः । न चैतद् युक्तम् । "दशार्थाः सर्वभारते" इति भारतस्यैव बह्वर्थत्वेन तत्सारभूतगीतायास्ततोऽप्यतिबह्वर्थत्वस्य वक्तव्यतया तस्यैव प्रतिज्ञातव्यत्वौचित्यात् । न च

वक्तुरशक्त्याऽल्पवचनं प्रत्यज्ञायीति वाच्यम् । "सर्वज्ञः सर्वशक्तिः", "एतदर्थमतिसूक्ष्ममपि त्वं शक्त एव" इत्यादौ सर्वशक्त्याद्यावेदनादिति चेत् सत्यमेतत् समस्तमित्यभिप्रायेण तत्पदभावमाह **यद्यपीत्यादिना** । वर्णितो भावः कथं तेन लभ्यत इत्यत आह **इत्थम्भूतेति** ॥ कश्चित् प्रकारं प्राप्त इत्थम्भूतः । तस्य लक्षणमित्थम्भूतलक्षणम् । तत्र तृतीयाविभक्तिर्भवतीति 'इत्थम्भूतलक्षणे' इति सूत्रार्थः । अत्र च गीतार्थत्वप्रकारं प्राप्तो गीतार्थ इत्थम्भूतः । तस्य लक्षणे लेशे तृतीयायां तदन्ताच्च "आद्यादिभ्य उपसङ्ख्यानम्" इति तसिप्रत्यये "सुपो धातुप्रातिपदिकयोः" इति तृतीयाया लुकि लेशत इति रूपम् । लेशेनेत्यर्थः । लेशेन लक्षणेन लक्षितं यद् गीतार्थत्वं तद्विशिष्टं गीतार्थं वक्ष्यामीत्युक्ते गीतार्थानां बहुत्वेऽप्यत्र भाष्येऽल्पमेवार्थं वक्ष्यामीति लभ्यत इति भावः ॥

केचित्तु, लेशशब्दस्य द्वौ व्यापारौ । तत्राविनाभावेन गीतार्थे बहुत्वानुमापनमेको व्यापारः । अभिधाशक्त्या तत्राल्पत्वबोधनमपरो व्यापार इति । तत्राविनाभावशक्त्या स्वानुमापितबहुत्वरूप-धर्ममुपस्थापयति । अभिधाशक्त्या च गीतार्थस्याल्पत्वमिति लेशेन गीतार्थं वक्ष्यामीति प्रतिज्ञा-वाक्यस्य लेशज्ञापितबहुत्वविशिष्टे गीतार्थेऽल्प एव वचनकर्मेत्यर्थः सम्पद्यत इति भावेन "इत्थ-म्भूतलक्षणार्थतृतीयान्तात् तसिः" इत्युक्तमिति व्याकुर्वते ।

अपरे तु, सूत्रे लक्षणशब्दो व्यावर्तकरूपचिह्नपरः । एवञ्च लेशव्यावर्तितबहुत्वविशिष्टो गीतार्थोऽत्र वक्ष्यमाण इति सिद्धौ लेशपदेन गीतार्थे बहुत्वे व्यावर्तिते बहुषु गीतार्थेषु सत्स्वपि स्वल्प एवोच्यत इति लभ्यते । कञ्चित् प्रकारं बह्वर्थत्वरूपं प्राप्तो गीतार्थ इत्थम्भूतः । तल्लक्षणे तच्चिह्ने व्यावर्तके लेशे तृतीयेति तदन्तात् तसिरित्यस्यार्थः । तेन बहुत्वस्य गीतार्थे प्रकारत्वे बहुत्व-विशिष्टस्य गीतार्थस्य वचनक्रियान्वयः स्यात् । कमण्डलुना छात्रं, छात्रेणोपाध्यायमद्राक्षीदित्यादौ प्रकारविशिष्टस्य दर्शनक्रियाकर्मत्वान्वयदर्शनात् । अत्र न बहूनामर्थानां वक्ष्यामीत्युक्तक्रियान्वयो युक्तः । अदर्शनात् लेशत इत्युक्तिव्याघाताच्चेति दूषणानवकाशः । लक्षणशब्दस्य व्यावर्तकचिह्नार्थ-त्वस्य प्रसादकारकृष्णपण्डितादिभिरभ्युपगतत्वादिति व्याचक्षते ।

इतरे तु, मन्दमतिमच्छ्रोत्रुद्देश्यकत्वं गीतार्थे प्रकारः । लेशपदेन च तत्प्रकारावच्छिन्नो गीतार्थोऽत्र वक्ष्यमाणत्वेनोक्तः । मन्दमतिमच्छ्रोत्रुद्देश्यको गीतार्थ इति लेशपदेन लभ्यते । न चोक्त-प्रकारस्य शब्दबोध्यत्वाभावात् कथं तस्य लेशेन ज्ञाप्यत्वम् ? कमण्डलुना छात्र इत्यादौ प्रकारस्य शब्दबोध्यत्वदृष्टेरिति वाच्यम् । लेशपदेन ज्ञाप्यस्यापि शाब्दत्वमस्तीत्यभिसन्धानादित्याहुः । लेशपदप्रयोजनमाह **अर्थशब्देनेति** । **इदं** लेशत इति पदम् ॥ **शिष्यशिक्षार्थमिति** ॥ ग्रन्थमन्तरा मनसा वाचा च कृतेन नमनेनैव प्रारिप्सितपरिसमाप्त्यादिसम्भवेऽपि यद्ग्रन्थे तन्निबध्नाति तदाचार्यस्य

मङ्गलाचरणदर्शनादस्माभिरपि तदाचरितव्यमिति शिष्याणां तत्र प्रवृत्तिः स्यादिति शिष्यानुशासनार्थमित्यर्थः । **अस्य** प्रतिज्ञाया ग्रन्थे निवेशनस्य ।

यतिभङ्ग यतिविच्छेदः । "पादः पद्यचतुर्थांशो यतिर्विच्छेदसंज्ञिता" इति केदारवचनात् । "श्लोकेषु नियतस्थाने पदच्छेदं यतिं विदुः" इति दण्डिवचनाच्च । यत्र यतिः पादान्ते पदस्य विच्छेदः कर्तव्यस्तदकरणं यतिभङ्गः । स एव दोषः । "पादान्ते पदमध्यं चेद् यतिभङ्गः प्रकीर्तितः । तस्मात् पादावसाने तु पदमेव समापयेत्" इति शास्त्रेण पादान्ते पदसमापनस्यैवाऽवेदितत्वेन गुरूंश्चाऽन् गीत्यत्र पादान्ते पदमध्यदर्शनाद् यतिभङ्गः छन्दश्शास्त्रवादिभिर्दोषत्वेनोक्त इत्यर्थः ॥ **काव्येति** । कविसमयानुरोधेन निबद्धौ शब्दार्थौ काव्यम् । तत्र "भग्नच्छन्दो यतिभ्रष्टम्" इत्यादौ यतिभङ्गो दोषत्वेनोक्त आलङ्कारिकैरिति तद्विषय एवायं दोषो न शास्त्र इत्यर्थः । **अभियुक्तवाक्यं** कुसुमाञ्जलावुदयनवाक्यम् । इतिशब्दस्य न यतिभङ्गो दोष इति पूर्वेणान्वयः । आद्यपद्यव्याख्यासमाप्तौ वेतिशब्दः ।

**भाष्यम्**

**नष्टधर्मज्ञानलोककृपालुभिः ब्रह्मरुद्रेन्द्रादिभिः अर्थितो ज्ञानप्रदर्शनाय भगवान् व्यासः अवततार ।**

*प्र०दी०*— ननु च प्राधान्येन व्याख्येयता प्रामाण्ये अधिकारिविषयप्रयोजनाभिसम्बन्धे दुर्गमार्थत्वे च सति सम्भवति । तत्कथं भगवद्गीतायाः प्रामाण्यादिकम् । सति वा तस्मिन् तथाविधग्रन्थान्तरपरिहारेणास्या एव व्याख्याने को हेतुरित्याशङ्क्य महाभारतान्तर्गतत्वात् भगवद्गीतायाः, तस्य प्रामाण्यादिसिद्धौ तस्या अपि तत्सेत्स्यतीत्याशयवान् महाभारतस्य प्रामाण्यादिकं साधयितुमाह— **नष्टेति** ।

किमनया कुटिलिकया ? गीताया एव पृथक्प्रामाण्यादिकं साध्यताम् । मैवम् । महावाक्यप्रामाण्याद्यनभिधाने अवान्तरवाक्यप्रामाण्यादेरसम्भावनाग्रस्तत्वेन साधयितुमशक्यत्वात् । यथोक्तम् । "सम्भावितः प्रतिज्ञाया अर्थस्साध्येत हेतुना" इति । नष्टशब्दोऽदर्शनवाची । 'णश अदर्शने' इति स्मरणात् । धर्मो निवृत्तिलक्षणः । ज्ञानशब्देन ज्ञेयं परतत्वं वासुदेवाख्यमपरं च प्रकृत्यादिकं लक्ष्यते । लक्षणायाश्च प्रयोजनं, यथा धर्मो ज्ञात्वा उत्पादनीयः न तथेदम्, किन्तु ज्ञानपरम्परैव तद्विषयाऽनुष्ठेयेति ज्ञापनम् । लोक इति सज्जनो विवक्षितः । नष्टेऽदर्शनं गते धर्मज्ञाने यस्य तस्मिन् लोके विषये कृपालुभिः । यद्यपि 'स्पृहिगृहि' (३-२-१५८) इत्यादिना कृपेरालुच्प्रत्ययो न

विहितः । तथापि व्याकरणान्तरबलादवगन्तव्यः । कलशवाची वाऽऽलुशब्दः । कृपापूर्णकलशै-रित्यर्थः । मोक्षसाधनयोः धर्मज्ञानयोरदर्शनात् संसारे क्लिश्यमानान् सज्जनानवलोक्य उत्पन्नकृपैरिति यावत् । अन्यपदार्थानां देवानां ब्रह्मरुद्रेन्द्रादिभिरिति यद्विशेषणं तत्प्रसिद्धप्रभावानामपि भगवदितरेषा-मशक्यमिदं कार्यमिति ज्ञापनार्थम् । ज्ञानपदेन धर्मोऽप्युपलक्ष्यते । समकक्ष्यत्वनिरासाय स्वशब्देना-ग्रहणम् । एतच्च पूर्वेणोत्तरेण च सम्बध्यते **ज्ञानप्रदर्शनायार्थितो ज्ञानप्रदर्शनायावततारेति** । भगवान् समग्रज्ञानैश्वर्यवैराग्यादिगुणसम्पन्नो नारायणो व्यासरूपेणावततारेत्यर्थः ।

***प०टी०***— श्रीगीतायाः प्रामाण्ये इष्टसाधनावबोधकत्वे सिद्धे स्याद्व्याख्येयत्वम् । तदेव कुतः ? इत्याशङ्क्य, गीताया भारतान्तर्गतत्वात्, भारतस्येष्टसाधनावबोधकत्वं च साधयितुमाह **नष्टेत्यादि** । नष्टे धर्मज्ञाने यस्य लोकस्य तस्मिन् **कृपालुभिः** ब्रह्मादिभिः ज्ञानप्रदर्शनार्थमर्थितो भगवान् नारायणो व्यासोऽवततार ।

***न०टी०***— दशार्थत्वात् सर्वस्यापि भारतस्य, भाष्ये च गीतानां पृथक् दशार्थत्वात्, तासां महाभारतान्तर्गतत्वात् तस्य महाप्रामाण्यं साधयितुं, तत्कर्तुराप्तत्वं तावदाह— **नष्टधर्मेत्यादिना** ।

अयं भावः— पौरुषेयं हि वाक्यमाप्तोक्तत्वात् प्रमाणम् । यो हि वक्ष्यमाणार्थाभिज्ञत्वेन सम्यज्ज्ञानानुकूलः, तदनुकूलं श्रोतारं प्रसङ्गं च प्राप्तः, स आप्तः । उक्तवाक्यमाप्तवाक्यम् । अत्र भगवतः सुरार्तिहरावतारस्य नारायणस्य व्यासरूपेण वक्तृत्वात् । सुराणां ब्रह्मादीनाम्, तत्कृपाभाजां च श्रोतृत्वात्, तैरेव ज्ञानप्रदर्शनाय प्रार्थितत्वात्, तस्याप्तत्वमिति ।

***भा०दी०***— **किमनयेति** । महाभारतान्तर्गतत्वात् युक्तेत्यर्थः । यथोक्तं तार्किकैः । ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधनायोगादिति (पा.सू. ३-२-१५८) ध्वस्तताभ्रान्तिनिरासायाह **नष्टेति इति** । नष्टपदस्याज्ञातार्थतोक्तेस्तदानुगुण्यायार्थमाह **ज्ञानशब्देनेति** । **लक्षत इति** । ज्ञानपदस्य भावार्थे रूढत्वे वाऽभिप्रायः । **स्पृहीति** । ''स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्'' (३-२-१५८) इति सूत्रेण कृपू सामर्थ्ये इति धातोरित्यर्थः । **व्याकरणान्तरादिति** । इन्द्र-चन्द्र-काश-कृत्स्न-पिशली-शाकटायन-पाणिनि-अमर-जैनेन्द्रा एतेऽष्टावादिशाब्दिका इत्युक्तेर्व्याकरणानामनेक-त्वादिति भावः । महाव्याकरणादिति वार्थः ।

यद्वा व्याकरणं व्याख्यानं व्याख्यानविशेषादित्यर्थः । स्पृहीत्यादिसूत्रे आलुच् प्रत्यविधानेनापि स्पृहयालुरित्यादिरूपसिद्धेरालुज्विधानं दयालुरित्यादि रूपसिद्ध्यर्थमित्यभियुक्तव्याख्यानात् कृपेरालुचि कृते ''संज्ञापूर्वको विधिरनित्य'' इति गुणाभावे बहुलग्रहणात् । कृपेरालुरिति लत्वाभावे च कृपालु-

रिति रूपसिद्धेरिति भावः। कलशवाची वेति 'गर्गर्यालुर्गलन्तिके'त्यमरोक्तेरिति भावः। ब्रह्मरुद्रादिभिरिति बहुव्रीहिपदस्य विशेष्यवाचिपदा अप्रतीतेर्देवैरितिपदमन्यपदार्थप्रधानबहुव्रीहेर्विशेष्यपदमिति दर्शयन् देवैरित्येव वाच्ये तद्विशेषणतया विशिष्य ब्रह्मरुद्रादिभिरित्युक्तेः कृत्यमाह **अन्यपदार्थेति**। **ज्ञानपदेनेति**। परापरतत्त्वलक्षकज्ञानपदेनेत्यर्थः। कुतो ज्ञानधर्मेति नोक्तमित्यत आह **समेति**। परापरतत्त्वस्य धर्मस्य चेति योज्यम्। स्वशब्देन वाचकशब्देन धर्मस्येत्यर्थः। **समग्रेति**। "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणे"त्युक्तेरिति भावः। विशेष्यानुक्तेः व्यास एव रूपान्तरेणावततारेति प्रतीतेश्चाह **नारायण इति**।

*भा०र०*— ननु "गीतार्थं वक्ष्यामि" इति प्रतिज्ञाय उत्तरभाष्येण भारतागतिक्रमतत्प्रामाण्यसमर्थनादिकमसङ्गतमुच्यत इति शङ्कां परिहर्तुमुत्तरभाष्यमवतारयति **ननु चेति**॥ "ननु च स्याद् विरोधोक्तौ" इत्यभिधानात् ननु चेति निपातसमुदायो विरोधोक्तौ। **प्राधान्येन** अनन्यार्थतया। **तस्य** भारतस्य। **प्रामाण्यादिसिद्धौ** प्रामाण्यविषयप्रयोजनादिसिद्धौ। **तत्** प्रामाण्यादि। **आह** भारतागतिक्रमम्। **कुटिलिकया** वक्रगत्या। **साध्यताम्**। इति चेदिति शेषः। ध्वंसप्रतियोग्यर्थत्वे तस्य प्रदर्शनायोगः। ज्ञानशब्दोक्तपरतत्त्वादौ नित्यत्वाद् ध्वंसायोगश्चेत्यत आह **नष्टशब्द इति**॥ अदृष्टवाचित्वं व्युत्पादयति **णश अदर्शन इति**॥ धात्वादेर्णो नत्वे सति फलिताभिप्रायेण नश अदर्शन इति च क्वचित् पाठः। ननु स्वर्गाद्युद्देश्यक धर्माज्ञानिनि लोके कृपा कुतः ? कुतश्च तत्प्रदर्शनार्थं भगवतोऽवतारः ? प्रवृत्तधर्मस्य हेयत्वादित्यत उक्तं **धर्मो निवृत्तिलक्षण इति**॥ निवृत्तिः फलाभिसन्धित्यागः लक्षणं यस्य स निवृत्तिलक्षणः। फलकामनादित्यागपूर्वकं भगवत्प्रीत्युद्देशकं कर्म अत्र धर्मशब्दार्थ इत्यर्थः।

यद्वा, निवृत्तिः संसारनिवृत्तिरूपा परमगतिर्लक्ष्यते प्राप्यतेऽनेनेति निवृत्तिलक्षणः। संसारनिवृत्त्यनुकूल इत्यर्थः। तथाच मोक्षधर्मे "निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत्। प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत्" इत्युक्त्वा "प्रवृत्तिः पुनरावृत्तिः निवृत्तिः परमा गतिः" इत्युक्तम्। निवृत्तलक्षण इत्यपि क्वचित् पाठः। स च "निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते। निवृत्तं सेवमानस्तु ब्रह्माप्येति सनातनम्" इति स्मृत्यनुगुणः।

ज्ञानशब्दस्य भावे ल्युडन्तत्वे ज्ञप्त्यर्थकत्वं प्राप्तम्। तदयुक्तम्। ज्ञानप्रदर्शनायेत्यादौ ज्ञप्तेः प्रदर्शनायोगादित्यत आह **ज्ञानशब्देनेति**। तत्त्वं लक्ष्यत इत्येव वक्तव्ये यज्ज्ञेयमित्याह तद् विषयविषयिभावसम्बन्धं लक्षणाबीजं वक्तुम्। इतरत्तु ज्ञेयद्वयस्वरूपनिरूपणाय। भावे करणाधिकरणयोरेव च ल्युडनुशासनेन कर्मव्युत्पत्तेरनाश्रयणम्। "कृत्यल्युटो बहुलम्" इति बाहुलकाश्रयणं

त्वगतिका गतिः । तदाश्रयणे वा तत एव धर्मस्यापि ज्ञानकर्मतया लाभसम्भवाद्धर्मपदवैयर्थ्यं स्यात् । वक्ष्यमाणप्रयोजनालाभश्चेति भावः । **इदं** ज्ञानशब्दोदितं परमपरं च तत्त्वम् । **तथा** उत्पादनीयम् । असज्जनस्य मोक्षायोग्यतया तत्र धर्मज्ञानोत्पादनाय भगवतोऽवतारायोगेन ब्रह्मादि-कृपाविषयत्वाभावादाह **लोक इति सज्जन इति** ॥ धर्मज्ञानलोकेति द्वन्द्वभ्रमं निरसितुमाह **नष्ट इति** ॥ गते इत्यत्र "गत्यर्थाकर्मक" इत्यादिना कर्तरि क्तः । सप्तम्यर्थोक्तिः **विषय इति** । **स्पृहि-गृहीत्यादिनेति** । "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" इति सूत्रेण "आलुचि शीङ्-ग्रहणम्" इति वार्तिकेन वेत्यर्थः । कृपेः, कृपू सामर्थ्य इति धातोः । **व्याकरणान्तरात्** महाव्याक-रणात् । चान्द्रादिव्याकरणात् वा ।

ननु व्याकरणान्तरं नेदानीं व्यवहारोपयोगि । कलौ पाराशरस्मृतेरिव मुनित्रयव्याकरणस्यैव ग्राह्यतया यङ्लुक्प्रकरणे मनोरमादौ स्थापितत्वादित्यतः पक्षान्तरमाह **कलशेति** । "गर्गर्यालु-र्गलन्तिका" इत्यमरोक्तेरिति भावः । यद्यपि "अलिञ्जरः स्यान्मणिकः गर्गर्यालुर्गलन्तिका । पिठरः स्थाल्युखाकुण्डः कलशस्तु त्रिषु द्वयोः । घटः कुटनिपौ" इत्यमरः कलशशब्दमालुशब्दार्थादर्था-न्तरवाचिनमभ्यधत्त । तथा च व्याख्यातारोऽर्थभेदमवदन् । तथाऽप्यालुशब्दो भाण्डविशेषार्थक एव । इह प्रत्यायनाय तु कलशतात्पर्यको व्याख्यातः । उपलक्षणमेतत् । "स्पृहिगृहि" इति सूत्रमहाभाष्ये "लुजेवोच्यते । का रूपसिद्धिः स्पृहयालुः । शपि कृते "अतो दीर्घो यञि" इति दीर्घो भविष्यति । एवं तर्ह्यपि यदालुचं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवति" इति ग्रन्थेन "आलुचि शीङ्ग्रहणं कर्तव्यम्" इति वार्तिकं प्रतिक्षिप्तम् । यदि लुजेवोच्येत तर्हि श्रद्धालुरिति रूपं न स्यात् । द्विर्भावलकारयोः प्राप्त्या श्रद्धध्लुरित्यनिष्टरूपमापद्येतेत्यादि चोद्यं कैयटादौ समाहित-मित्यन्यदेतत् । तत्र सूत्रे आलुजित्यत्राऽकारोच्चारणसामर्थ्यादन्यस्मादपि धातोरालुज्भवतीत्युक्त्या कृपेरालुचि "सञ्ज्ञापूर्वको विधिरनित्यः" इति गुणाभावे बाहुलकात् "कृपो रो लः" इति लत्वाभावे च कृपालुभिरिति रूपं साध्विति द्रष्टव्यम् ।

केचित्तु, व्याकरणान्तरादवगन्तव्य इति वाक्यं "क्रप कृपायां गतौ" इति धातोः क्रपेः "सम्प्रसारणम्" इति सूत्रात् सम्प्रसारणेऽङि च कृपाशब्दनिष्पत्तौ तदुपपदाद् ला आदाने इति धातोः "मितद्र्वादिभ्य उपसङ्ख्यानम्" इति डुप्रत्यये कृपां लाति आदत्त इति कृपालुशब्दो व्याख्याना-न्तरात् साधुरवगन्तव्यः । अत एव "स्युर्दयालुः कारुणिकः कृपालुः सुरतः समाः" इत्यमरोक्तरीत्या व्याख्यातः इत्याचक्षते ।

ननु सज्जनेषु ब्रह्मादीनां कृपैव नोत्पत्तुमर्हति । परक्लेशप्रहाणेच्छारूपायास्तस्या उत्पत्तौ निमित्ताभावात् । न च परेषु क्लेशदर्शनमेव निमित्तम् । तत्र क्लेशे हेत्वभावात् । नच सांसारिकत्वमेव हेतुरिति वाच्यम् । आकस्मिकसंसारस्यैवायोगादित्यतो नष्टधर्मेत्यादिविशेषणतात्पर्यमाह **मोक्षेति** । अवलोक्येत्यनन्तरं स्थितैरत एवोत्पन्नकृपैरिति योज्यम् । तेन ल्यबुपपत्तिः । **अन्यपदार्थानां** ब्रह्म-रुद्रेन्द्रा आदयो येषामित्यत्र यच्छब्दार्थानाम् । ''सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः'' इत्यत्र देवाना-मेव विशेष्यतयोपादानाद् देवानामित्युक्तम् । **प्रसिद्धप्रभावानां** लोकविख्यातसामर्थ्यानाम् । ''कृत्यानां कर्तरि वा'' इति षष्ठी । धर्मज्ञानयोरुभयोरपि प्रस्तुतत्वादाह **धर्मोऽप्युपलक्ष्यत इति** । न केवलं ज्ञानपदेन परापरतत्त्वे उपलक्ष्येते । अपि तु निवृत्तधर्मोऽपि लक्षणया गृह्यत इत्यर्थः । लक्षणायां प्रयोजनमाह **समकक्ष्यत्वेति** । ''कर्मणा ज्ञानमातनोति'', ''ज्ञानेनामृतीभवति'', ''सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'' इत्यादिश्रुतिस्मृतिभिर्धर्मस्य ज्ञानसाधनत्वावगमेन ज्ञानसमानतया स्वर्गे दर्शपूर्णमासयोरिव मोक्षे साधनत्वायोगादिति भावः ।

**स्वशब्देनेति** । निवृत्तधर्मवाचकधर्मशब्देनेत्यर्थः । सम्बद्ध्यत इत्युक्तविवरणम् **ज्ञानप्रद-र्शनायेति** । भगवानिति भाष्यपदं योगरूढम् । योगरूढं च पङ्कजादिपदमवयवशक्त्या पङ्कजनिकर्तृत्वं समुदायशक्त्या पद्मत्वं चोपस्थापयतीति सुप्रसिद्धम् । एवमेव भगवानिति पदमिति तदनूद्य यौगिक-मर्थं वदन्नेव रूढार्थमाह **भगवान् समग्रज्ञानैश्वर्यवैराग्यादिगुणसम्पन्नो नारायण इति** । ''ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा'' इति छान्दोग्यभाष्यो-पात्तप्रमाणानुसारेणैश्वर्यस्याऽदौ वक्तव्यत्वेऽपि ज्ञानस्याऽदौ ग्रहणं ज्ञानोपदेशानुकूलाप्तत्वस्य विव-क्षितार्थतत्त्वज्ञानकरणपाटवाविप्रलिप्सारूपस्य ज्ञानप्रधानत्वात् तत्राऽस्यन्तर्गतज्ञानप्रदर्शनाय । करण-पाटवज्ञापनायैश्वर्यग्रहणम् । अविप्रलिप्साद्योतनार्थं वैराग्यग्रहणमिति ज्ञातव्यम् । ''व्यासोऽवततार'' इत्युक्त्या व्यासस्य रूपान्तरेणावतारः प्रतीयेतापि तद्व्युदासाय व्यासरूपेणेत्युक्तम् । केचित्तु भगवानित्यस्य विशेष्यपदं व्यास इति प्रतीतिं निरसितुमेवमुक्तमित्याहुः । यथोक्तम् ''भगवान् नारायणो व्यासत्वेनावततार'' इति ।

**भाष्यम्**

**ततश्च इष्टानिष्टप्राप्तिपरिहारसाधनादर्शनात् वेदार्थाज्ञानाच्च संसारे क्लिश्य-मानानां वेदानधिकारिणां स्त्रीशूद्रादीनां च धर्मज्ञानद्वारा मोक्षो भवेदिति कृपालुः सर्ववेदाद्यर्थोपबृंहितां तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्तां च सर्वप्राणिनां अवगा-**

**ह्यनवगाह्यरूपां केवलभगवत्स्वरूपपरां परोक्षार्थां महाभारतसंहिताम् अचीक्लृपत् ।**

*प्र०दी०*— ततः किं प्रकृत इत्यत आह— **तत्श्चेति** । यस्मात् धर्मज्ञानप्रदर्शनार्थमवतीर्णः तस्मादेव । अवतारानन्तरमेव वा । विजातीय-व्यापारव्यवधानमन्तरेणेति यावत् । धर्मज्ञानप्रदर्शनाय महाभारतसंहितां महाभारताख्यं शास्त्रमचीक्लृपत् समर्थितवान् । व्यास इति सम्बन्धः । धर्मादिज्ञानमपुरुषार्थं कथं शास्त्रप्रयोजनमभिप्रेतवानित्यत उक्तं धर्मज्ञानलक्षणया द्वारा सज्जनानां मोक्षो भवेदित्यभिप्रायेणेति । अत्र ज्ञानशब्दो मुख्यार्थ एव । एतद्ग्रन्थनिर्माणे भगवतः किं प्रयोजनमित्यत उक्तं— **कृपालुरिति** । संसारे स्वाभाविके मोक्षार्थं प्रयत्नः काकीयकार्ष्ण्यापनयनार्थप्रयत्नतुल्य इत्यत उक्तं— **इष्टानिष्टप्राप्तिपरिहारसाधनादर्शनात् संसारे क्लिश्यमानानामिति** । मोक्षस्य पुरुषार्थतासमर्थनार्थं वादिविप्रतिपत्तेः तत्स्वरूपनिर्धारणार्थं च इष्टेत्याद्युक्तम् । आत्यन्तिकेति चोपस्कर्तव्यम् । साधनं च धर्मज्ञानरूपम् ।

ननु वेदानामुद्धृतत्वात् तत एव धर्मादिप्रतिपत्तिसम्भवात् किं भारतनिर्माणेनेत्यत उक्तं— **सर्ववेदार्थेति** । अनेन वेदाधिकारिणां त्रैवर्णिकानां पुंसां वेदार्थज्ञानोपायो भारतमिति सूचयति । किञ्च वेदानधिकारिणां वेदतुल्यत्वाच्च तन्निर्माणं युक्तमित्याशयवानाह— **वेदेति** । तदनेन परमाप्तिमूलत्वात् महाभारतस्य प्रामाण्यम् । धर्मः परमपरं च तत्त्वं विषयः तज्ज्ञानमवान्तरं प्रयोजनम् । मोक्षः परमम् । सज्जनाश्चाधिकारिण इत्युक्तं भवति । नष्टधर्मेत्यादिना बहुशो विषयप्रयोजनाभिधानेन तयोरनन्यलभ्यत्वं सूचितम् । यदभावात्सतां संसारे क्लेशो यदर्थं देवतानां प्रार्थनं यदर्थश्च भगवतोऽवतारः, तद्भारतनिर्माणेनैव पर्यवसितमिति । एतेनैतदपि प्रत्युक्तम् । यदाह भास्करः "शास्त्रप्रयोजनाभिधाने प्रस्तुते अवतारप्रयोजनाभिधानमसङ्गतम्" इति । सङ्करः कृष्णावतारपुरस्कारेण गीतायाः सङ्गतिमाह । तदतिक्रमेण व्यासावतारपुरस्कारे को हेतुरिति चेत् । कृष्णस्य बलकार्यत्वेन ज्ञानोपदेशस्य प्रासङ्गिकत्वम् । व्यासस्य ज्ञानकार्यत्वेन प्राधान्यमिति ।

वेदादिसंवादेनापि भारतस्य प्रामाण्यनिश्चय इत्याशयेनाह— **सर्वेति** । नैतावता वेदादिसमं भारतम् । किन्तु तदनुक्तार्थस्यापि प्रतिपादनेन ततोऽधिकमिति भावेनाह— **तदिति** । तर्हि निर्मूलत्वेनाप्रामाण्यं प्रसज्यत इत्यत उक्तं— **ईश्वरेति** । ज्ञानदृष्टः ज्ञानविषयीकृतः । सर्वज्ञत्वस्य झडिति स्फुरणार्थं 'स्वेन' इत्यनुक्त्वा ईश्वरेत्युक्तम् । ईश्वरज्ञानस्य कुतः प्रामाण्यमित्यत उक्तं— **केवलेति** । इन्द्रियाद्यनपेक्षम् । अनेन सत्स्वप्यन्येषु ग्रन्थेषु किमेतद्व्याख्यानेनेति परिहृतम् ।

ननु नष्टधर्मेत्यादिना मन्दान् प्रतीदं निर्मितमिति सूचितम् । ते च वेदैकदेशार्थमपि ज्ञातुमशक्ताः । तत्कथं सर्ववेदाद्युक्तानुक्तार्थवतोऽस्य प्रणयनम् । मैवम् । ब्रह्मादीनामप्यत्राधिकारात् । यथोक्तं "वेदोत्तमं तच्च विधातृशङ्करप्रधानकैस्तन्मुखतः सुरैः श्रुतम्" । इति । कथमेतदुभयमित्यत आह— **सर्वेति** । रूपशब्दोऽभिधेयार्थः । स्वं रूपं शब्दस्येत्यत्र रूपशब्देन प्रसक्तस्य बाह्यार्थस्य व्यावृत्तये स्वमित्युक्तत्वात् । स च व्याघातपरिहारार्थः । सामान्येन द्व्यर्थं भारतम् । तत्रैकोऽर्थः सर्वप्राणिनामवगाह्यः । अपरस्सर्वप्राणिनामनवगाह्यः । किन्तु केषाञ्चिदेवेति न कश्चिद्दोष इति । अनवगाह्यरूपतायां हेतुमाह— **परोक्षेति** । परोक्षोऽत्यन्तगूढः । ननु धर्माद्यनेकविषयस्य कथमेकवाक्यतेत्यत आह— **केवलेति** । केवलं एकमेव भगवत्स्वरूपं परं मुख्यप्रतिपाद्यं यस्यास्सा तथोक्ता । धर्मादिकं तु तादर्थ्येनामुख्यप्रतिपाद्यमिति भावः । भगवत्स्वरूपप्रतिपादनं न सङ्कीर्णतया, अपि तु निष्कृष्टतयेति ज्ञापनाय स्वरूपेत्युक्तम् ।

***प०टी०***— **ततश्च भारतसंहितामचीक्लृपत्** इति भारतस्याप्तिमूलत्वमुच्यते । संसारे क्लिश्यमानानां मोक्षो भवेत् इत्यनेनैवोपादेयत्वमुच्यते । संसारे क्लेशे कारणमाह **इष्टेति** । वेदादेवेष्टानिष्टप्राप्तिपरिहारावगतिसम्भवात् किं भारतनिर्माणेन ? इत्यत उक्तम् **वेदार्थेति** । मोक्षार्थत्वे भारतस्य धर्मनिरूपकत्वं कुतः ? इत्यत उक्तम् **धर्मेति** । धर्माज्ज्ञानं ज्ञानद्वारा मोक्ष इत्यर्थः । नित्यमुक्तः किमर्थं भारतं चकार ? इत्यत आह **कृपालुरिति** । एवमाप्तिमूलत्वं भारतस्योक्त्वा श्रुतिमूलत्वमाह **सर्वेति** । नैतावता वेदसमं भारतमित्याह **वेदानुक्तेति** । वेदानुक्तार्थत्वे निर्मूलत्वं स्यादित्यत आह **केवलेश्वरेति** । अर्थदुर्गमत्वादप्रयोजकं भारतमित्यत आह **सर्वेति** । भारतार्थस्य सर्वैः पठ्यमानत्वात् कथमनवगाह्यता ? इत्यत आह **केवलेति** । भगवत्स्वरूपपरताऽनवगाह्यतेत्यर्थः । भगवत्स्वरूपपरत्वे कुतस्तथा न दृश्यते ? इत्यत आह **परोक्षेति** ।

***न०टी०***— ननु तस्याप्तत्वं तद्वाक्यात् ? वेदाद्वा ? नाद्यः । जीवादेरपि तत्तद्वाक्यात् आप्तत्वापत्तेः । न द्वितीयः । वेदादेव श्रेयःसाधनावगतौ भारतवैयर्थ्यात् । न च वेदानुक्तोक्त्या तत् सप्रयोजनम् । निर्मूलत्वेनाप्रामाण्यापत्तेः । नित्यमुक्तश्चासौ सर्वेशः किमर्थं शास्त्रमारभते ? धर्मादिप्रयोजनाभावात् तस्येत्याशङ्क्याह— **ततश्चेत्यादिना** ।

अयं भावः— न तावत् तद्वाक्यात् तस्याप्तत्वेऽतिप्रसङ्गः । न हि जिनादिनोक्तेनापीष्टानिष्टप्राप्तिपरिहारसाधनं दृश्यते इति वाच्यम् । मतभेदाद्येनाप्तत्वमापाद्यते । भगवतस्तु .................. "इतिहासपुराणः पञ्चमो वेदानां वेदः" इति वेदत्वेन श्रूयते । इतिहासपुराणात्मकसर्ववाक्यादाप्तत्वावगमात् । न चैवं वेदाच्छ्रेयसाधनावगतौ भारतवैयर्थ्यम् । नहि इतिहासपुराणाभ्यां विना वेदार्थो

दृश्यते तदधिकारिभिरपि । किमुत तदनधिकारिभिः स्त्रीशूद्रादिभिः ? अतः स्वयं सदाऽऽप्तकामत्वेन प्रत्युपकारधर्मादिप्रयोजनानपेक्षोऽपि भगवानाप्ततमस्तेषां सतां निष्कामधर्मसाध्यज्ञानद्वारा मोक्षो भवेदिति कृपयैव महाभारतसंहितामचीक्लृपत् ।

एवमाप्तोक्तत्वात् प्रमाणतमं भारतम् । श्रुतिमूलत्वेनाऽपि तत्प्रमाणतममिति भावेनाह **सर्ववेदाद्यर्थोपबृंहितामिति** ॥ **आदिशब्देन** पुराणानि । तदुक्तं मात्स्ये—

"अष्टादशपुराणानि स्मृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ।
लक्षेणैकेन तत्प्रोक्तं वेदार्थपरिबृंहितम्" इति ॥

न चैतदन्येन कर्तुं शक्यमिति भावेनाह **तदनुक्तकेवलेश्वरज्ञानदृष्टामिति** ॥ न चैतावताऽस्य निर्मूलत्वेनाप्रामाण्यमापाद्यम् । "यतो वाचो निवर्तन्ते" इति वेदानुक्तार्थस्यापि सूचनात् । तत्कर्तुर्भगवतः सर्वज्ञत्वादिश्रुतेः, स्वकृतग्रन्थस्य वेदत्वश्रुतेश्च । इतरेषां तत्त्वपरिज्ञानमेव दुर्लभं किमु तत्करणम् ? इति भावेनाह **सर्वप्राणिनामिति** ॥ "ब्रह्माऽपि तन्न जानाति" इत्यादेः । ननु भारतकथायाः सर्वैरपि कथ्यमानत्वात् कथमनवगाह्यता ? इत्यत आह **केवलेति** ॥ न हि भारतेऽन्येषां केवलभगवत्स्वरूपपरता प्रतीयते । भगवत्स्वातन्त्र्यादिसकलगुणपूर्णस्वरूपप्रतिपत्तये ह्यन्यदुच्यते । एवमास्तीकाद्यर्थत्वेऽप्यनवगाह्यता भारतस्य, किमुत मन्वाद्यर्थत्वे ? इति भावेनाह **परोक्षेति** ॥ तदुक्तम्—

"भारतार्थस्त्रिधा प्रोक्तः स्वयं भगवतैव हि ।
मन्वादि केचित् ब्रुवते' इत्यारभ्य,
'एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते' इत्यादि ॥

*भा०दी०*— चशब्दोऽवधारण इत्यभिप्रेत्य ततश्चेत्यस्य प्रतिपदं वदन्येवार्थमाह **तस्मादिति** । **धर्मेति** । ज्ञानस्याप्युपलक्षणम् । क्वचिद्धर्मज्ञानेत्यपि पाठः । आनन्तर्यार्थमुपेत्याह **अवतारेति** । न तु गुरुकुलवासादिना विद्यां संपाद्य एवकारार्थेति भावेनाह **विजातीयेति** । एतेन "द्वैपायनः सोऽथ जगाम मेरुं चतुर्मुखाद्यैरनुगम्यमानः । उद्धृत्य वेदानखिलान् सुरेभ्यो ददौ मुनिभ्यश्च यथादिसृष्टौ । सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्णयं ब्रह्मसूत्रं चकार । तच्छुश्रुवुर्ब्रह्मगिरीशमुख्या सुरा मुनीनां प्रवराश्च तस्मात् । समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयम् । वेदोत्तमम्" इति भारततात्पर्यदशमाध्यायविरोधो निरस्तः । वेदोद्धारादेः ज्ञानहेतुतया सजातीयत्वादिति । भारतकृतौ प्रयोजनं

वदन्नेव ततश्चेत्यस्यान्वयमाह **धर्मज्ञानेति** । **समर्थितवानिति** । कृपू सामर्थ्ये इति धातोरिति भावः । अकरोदिति यावत् । इति शब्दः प्रकारार्थ इत्युपेत्य शेषोक्त्या अन्वयमाह **इत्यभिप्रायेण इति** । **मुख्यार्थ इति** । न लक्षणाया परा-परतत्त्वपर इत्यर्थः । बाधनिरासायाह **आत्यन्तिकेति** । **चोपस्कर्तव्यमिति** । प्राधान्येत्यादिना पूर्वं कृतचोद्यस्य नष्टधर्मेत्यादिग्रन्थेन कथं परिहार इत्यत आह **तदनेनेति** । नष्टेत्यादिना अचीक्लृपदित्यन्तेनेत्यर्थः । "वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता" इत्यनु-व्याख्यानोक्तेरत्र च देवैर्ज्ञानार्थं प्रार्थितो हरिः व्यासो भूत्वा भारतमकरोदित्युक्त्या क्रमात्प्रसङ्गात् श्रोतृवक्तृणां आनुकूल्यरूपाप्तिमूलतो लब्ध्वेति भावेनोक्तं **परमाप्तिमूलत्वादिति** । **धर्म इति** । भगवत्प्रीत्युद्देशेन क्रीयमाणनिवृत्तिलक्षणोऽग्निहोत्रादिरित्यर्थः । सूचितमित्येतद्व्यनक्ति **यदभावा-दित्यादिना** । तद्भारतनिर्माणेनैव पर्यवसितं नान्येनेति । हेतोरनन्यलभ्यत्वं विषयप्रयोजनयोरित्यर्थः । **एतेनेति** । अवतारोक्तेः प्रामाण्योपयुक्तत्वकथनेनेत्यर्थः । इत्येतदितीतिपदस्य पूर्वेण अन्वयः । सङ्करस्यैवायं दोषो नास्माकमिति भावः । **ज्ञानोपदेशस्येति** । उद्धवादिकं प्रतीति योज्यम् ।

ननु वेदानामुद्धृतत्वादिशङ्कानिरासाय व्याख्यातमेवान्यथाप्यवतार्य व्याचष्टे **वेदादीति** । **इन्द्रियाद्यनपेक्षमिति** । एतेन नित्यतया निर्दोषत्वात् प्रामाण्यमित्युक्तं भवति । **अनेनेति** । सर्वेत्यादिविशेषणद्वयकथनेन प्रागुक्तशङ्का परिहृतेत्यर्थः । **यथोक्तमिति** । भारततात्पर्ये दशमे । उभयमिति मन्दाधिकारिकत्वं ब्रह्मादिसुराधिकारिकत्वमित्यर्थः । **स्वं रूपमिति** । स्वं रूपं शब्द-स्याशब्दसंज्ञा इति प्रथमाध्यायाद्यपादे रूपं शब्दस्येति वक्तव्ये स्वमिति विशेषणं यत्कृतं पाणिनिसूत्रे तत्तु शब्दस्य वाच्यार्थरूपो यो बाह्योऽर्थः तस्य निरासेन वर्णमालारूपमन्तरङ्गं यद्रूपं शब्दस्य वाच्य-मस्ति तस्यैव ग्रहणायेत्युक्तम् । अन्यथा अग्नेर्ढग् (४-२-३३) इत्यत्र आग्नेय इत्यग्निशब्दग्रहणेन आग्नेयमिति रूपं न सिद्ध्येत् तदर्थस्य वह्न्यादेरेव ग्रहणप्रसङ्गापत्तेः, अतः स्वमिति विशेषणमुक्तं, तेन ज्ञायते रूपशब्दो वाच्यार्थपर इत्यर्थः । तदुक्तं वृत्तौ शब्दस्य स्वमेव रूपं ग्राह्यम् । बोध्यं रूपं प्रत्याय्यं भवति । न तु बाह्यार्थ इति व्याघात इति । अवगाह्यानवगाह्यत्वोक्तेरित्यर्थः । **सङ्कीर्ण-तयेति** । प्रतिपाद्यन्तरसाधारण्येन न भवति किन्तु इतरसाधारण्यतयेत्यर्थः ॥ *इत्युपोद्घातः* ॥

*भा०र०*— ततश्चेत्यस्य तथा सतीत्याद्यर्थप्रतीतौ प्रकृतानुपयोगात् समुच्चयालाभाच्च विव-क्षितमर्थमाह **यस्माद्धर्मज्ञानप्रदर्शनार्थमवतीर्णस्तस्मादेवेति** । चशब्द एवार्थ इत्युक्तं भवति । तस्माद्धर्मज्ञानप्रदर्शनार्थमवतीर्णत्वादेवेति क्वचित् पाठः । 'अथ' इति सूत्रभाष्यानुसारेण पक्षान्तरमाह **अवतारेति** । तत इत्यस्याऽनन्तर्यार्थकत्वेऽपि योग्यतयाऽवतारस्य सम्बन्ध इति भावः ।

ननु अवतारानन्तरमेवेत्ययुक्तम् । भारततात्पर्यनिर्णये "द्वैपायनः सोऽथ जगाम मेरुम्" इत्यादिना मेरुगमनाखिलवेदोद्धारतद्दानसर्वशास्त्रकरणब्रह्मसूत्ररचनतदुपदेशादिकमभिधाय अनन्तरं "समस्तशास्त्रार्थविनिर्णयात्मकं चक्रे महाभारतनामधेयम्" इति भारतनिर्माणाभिधानादित्यतस्तात्पर्यमाह **विजातीयेति** । यद्यप्यस्ति वेदोद्धारादि, तथापि तद्भारतार्थतत्त्वज्ञानोपयुक्तमेव । वेदादेर्भारतव्याख्येयत्वात् । व्याख्येयानुपस्थितौ व्याख्यानस्य प्रवृत्त्ययोगात् । एवमेव "सलोकधर्माभिरिरक्षयाऽपि तुर्द्विजत्वमाप्य" इति पूर्वश्लोकोक्तद्विजत्वादिकमपि "न ह्यस्मिन् विद्यते कर्म किञ्चिदामौञ्जिबन्धनात्" इति वचनात् परम्परया तत्त्वोपदेशप्रयोजकमेव । न चासौ न विधिबद्ध इति वाच्यम् । लोकधर्मरक्षार्थं स्वयमपि भगवान् विधिबद्ध इवाऽचरतीत्यभ्युपगमात् । अतोऽवतारतत्त्वोपदेशयोर्मध्ये विरोधिव्यापाराभावात् सर्वं तत्त्वज्ञानानुकूलमेवेति नावधारणविरोध इति भावः । संहिताशब्दस्य निरन्तरपठितवैदिकवर्णसमुदायविषये प्रसिद्धेरत्रापि तत्प्रतीतौ तन्निरासाय विवक्षितमर्थमाह **शास्त्रमिति** ॥ निर्माणे प्रयोजनाभिधानाय ज्ञानप्रदर्शनायेत्येतत् सतात्पर्यमनुवर्तितम् । "कृपू सामर्थ्ये" इति धातुव्याख्यानादाह **समर्थितवानिति** । "कृपो रो लः" इति लत्वमिति भावः । भाष्ये "पञ्चमं वेदमुत्तमम्", "भारतं स चकार ह" इत्यादिवचनानुसारेणाकरोदिति वक्तव्येऽपि निर्माणव्याख्यानरूपार्थद्वयलाभायाचीक्लृपदित्युक्तमिति । **व्यासः** व्यासरूपेणावतीर्णो भगवान् ॥ **कथमिति** । इष्टानिष्टप्राप्तिपरिहारयोरेव पुरुषैरर्थनीयत्वादिति भावः । परापरतत्त्वलक्षणापक्षस्यानुपयोगादाह **अत्र ज्ञानेति** । भगवत इत्याप्तकामत्वमभिप्रैति । स्वाभाविके अनागन्तुके । **अदर्शनात् संसार इति** । इष्टप्राप्त्यनिष्टपरिहारसाधनादर्शननिबन्धन एव सांसारिकः क्लेशो न तु आगन्तुक इति परिहाराशयः ।

ननु मोक्षसाधनादर्शनादित्येव वक्तव्ये किमितीष्टेत्याद्युक्तमित्यतस्तत्कृत्यमाह **मोक्षस्येति** । **समर्थनार्थमिति** ।"सुखमेव मे स्याद् दुःखं मनागपि मा भूत्" इति हि पुरुषा अर्थयन्त इति भावः ॥ **वादीति** । केचिद् वादिन एकविंशतिदुःखध्वंस एव मोक्ष इत्याहुः । अन्ये तु दुःखप्रागभावपरिपालनमिति । अपरे तु निर्गुणब्रह्मभाव एव मोक्ष इति वर्णयन्ति । एवमन्येऽप्यन्यत् । तथा च एवंरूपेण नानावादिविप्रतिपत्तेः किंरूपो मोक्ष इति जिज्ञासायामिष्टानिष्टप्राप्तिपरिहाररूप इति निर्धारणार्थमित्यर्थः ।

ननु सुखप्राप्तिसाधनं दुःखनिबर्हणसाधनं च पुरुषा बहुलमुपलभन्त एव, किं बहुना सुप्त्यवस्थामेव तथाविधां पश्यन्तीत्यत आह **आत्यन्तिकेतीति** । नन्विष्टानिष्टप्राप्तिपरिहारसाधनादर्शनेन चेत् सांसारिकः क्लेशः, तर्हि तत्साधनमेवोपदेष्टव्यम् । न पुनर्धर्मज्ञाने इत्यत आह **साधनं चेति** ।

**वेदानामुद्धृतत्वादिति** ॥ "उद्धृत्य वेदानखिलान् सुरेभ्यो ददौ मुनिभ्यश्च यथाऽऽदिसृष्टौ" इति वचनाद् भारतनिर्माणात् प्रागेव वेदोद्धार इति भावः । **तत एव** वेदेभ्य एव । **अनेन** वेदार्थाज्ञानात् संसारे क्लेश इत्यनेन । ननु वेदार्थाज्ञानं वेदार्थज्ञानाभावः । अभावश्च प्रतियोगिसत्त्वापेक्षः । तच्च स्त्रीशूद्रादीनामप्रसक्तमेवेति कथं "वेदार्थाज्ञानाच्च संसारे क्लिश्यमानानां वेदानधिकारिणां स्त्रीशूद्रादीनाम्" इत्युक्तमित्यत उक्तं **वेदाधिकारिणां त्रैवर्णिकानामिति** । यदि भारतं त्रैवर्णिकानां वेदार्थज्ञानोपायो न स्यात्, तदा वेदार्थाज्ञानप्रयुक्तक्लेशनिवारणाय भारतनिर्माणमयुक्तं स्यादिति भावः ।

चशब्दार्थः **किञ्चेति** । अनेन "वेदार्थाज्ञानाच्च संसारे क्लिश्यमानानां पुंसाम्" इति त्रैवर्णिकविषयम् । 'वेदानधिकारिणाम्' इत्यादि तु स्त्रीशूद्रादिविषयमिति विभावितं भवति । ननु "ननु च प्राधान्येन व्याख्येयता प्रामाण्ये" इत्यादिना कृतचोद्यस्य कथमनेन परिहार इत्यत आह **तदनेन इति** । नष्टधर्मेत्यादिना मोक्षो भवेदिति कृपालुर्व्यासो महाभारतसंहितामचीक्लृपदित्येतावता भाष्येणेत्यर्थः । 'परमाप्ति' इति वदन् वक्तुर्वेदव्यासस्य 'भगवान्' इति विवक्षितार्थतत्त्वज्ञानकरणपाटवविवक्षालक्षणानुकूल्यस्य श्रोतॄणां देवादीनां 'ब्रह्मरुद्रेन्द्रादिभिः' इति तत्त्वज्ञानयोग्यतावक्तृप्रेमास्पदतारूपानुकूल्यस्य "अर्थितो ज्ञानप्रदर्शनाय" इति श्रोतृप्रयोजनोद्देशरूपप्रसङ्गानुकूल्यस्य चाभिसंहितत्वात्, विमतं प्रमाणम्, आप्तवाक्यत्वात् सम्प्रतिपन्नवत् । न च असिद्धिः । विमतमाप्तवाक्यम् । अनुकूलेन वक्त्राऽनुकूलान् श्रोतॄन् प्रति तदीयहितसाधनबोधनायोपदिष्टत्वात् सम्प्रतिपन्नवदिति तत्साधनादिति भारतप्रामाण्यस्य साधनप्रकारमभिप्रैति । यद्यप्याप्तिमूलतयैव वाक्यप्रामाण्यं वाच्यम् । तथाऽपि यदा आप्तिमात्रेणापि प्रामाण्यं तदा किमु वक्तव्यं परमाप्ताविति कैमुत्यसूचनाय परमेति विशेषणम् । यद्यपि च प्रमाण्यं स्वत एवेति भाष्यकारीयं मतम् । तथाऽप्यप्रामाण्यशङ्कानिरासार्थोऽयं प्रयत्न इत्यविरोधः । धर्मो निवृत्तिलक्षणः ।

ननु विषयप्रयोजनयोरन्यतोऽपि वेदादेर्लाभसम्भवात् किं भारतनिर्माणनियमेनेति शङ्कां परिहर्तुमाह **नष्टधर्मेत्यादिनेति** । आदिपदेन "ज्ञानप्रदर्शनाय धर्मज्ञानद्वारा" इति वाक्यं गृह्यते । तच्च विषयावान्तरप्रयोजनयोरिष्टानिष्टप्राप्तिपरिहारेति मोक्षो भवेदिति च महाप्रयोजनस्य चाभिधानेन विषयप्रयोजनयोर्वेदादिशास्त्रलक्षणान्यलभ्यत्वं निवारयतीत्यर्थः । तद् विशदयति **यदभावादिति** । धर्मज्ञानाभावादित्यर्थः । **तत्** धर्मो ज्ञानं च । **पर्यवसितं** सुपर्याप्तम् । इति हेतोरनन्यलभ्यत्वमिति सम्बन्धः । **एतेन** अवतारोक्तेः प्रामाण्योपयुक्तत्वकथनेन ॥ **सङ्कर इति** ॥ तथाच तदीयभाष्यम् — "स आदिकर्ता नारायणो भगवान् वासुदेवरूपेणावतीर्णो ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्न-

स्त्रिगुणात्मिकां वैष्णवीं मायां प्रकृतिं वशीकृत्य अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्त-स्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते । स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं प्रवृत्तिनिवृत्तिलक्षणं धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश'' इति । **सङ्गतिं** उपदेश्यत्वेनावसरप्राप्तिम् । **इति चेत्** इत्यनन्तरं 'उच्यत' इति शेषः । ''कृष्ण-रामादिरूपेषु बलकार्यो जनार्दनः । दत्तव्यासादिरूपेषु ज्ञानकार्यस्तथा प्रभुः'' इत्यन्यत्रोक्तं हृदि कृत्वाऽह **कृष्णस्येति** ॥ बलकार्यत्वेन बलकार्यवैरिनिबर्हणोद्देश्यकावतारत्वेनेति यावत् ।

**प्रासङ्गिकत्वमिति** ॥ नारायणद्विट्तदनुबन्धिनिग्रहं कारयितुमर्जुनं बोधयंस्तन्नान्तरीयकतया ज्ञानोपदेशमपि कृतवानिति तस्याप्राधान्यं कृष्णावतारातिक्रमे हेतुरित्यर्थः ॥ **प्राधान्यमिति** ॥ व्यासावतारपुरस्कारे हेतुरिति योज्यम् । यद्यपि ''तं धर्मं भगवता यथोपदिष्टं भगवान् वेदव्यासो गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध'' इति तदीयभाष्ये ''तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध'' इति सुबोधिन्यां च व्यासस्य गीतोपदेष्टृत्वमुक्तम् । तथाऽपि तत्रोक्तो वेदव्यासावतारः सम्प्रदायप्रवर्तकतयाऽन्यथासिद्ध एव स्यान्न पुनः कृष्णावतार इव प्रधानम् । ज्ञानोपदेशो चोक्तप्रमाणेन स एव प्राधान्येनावगत इति स एव भाष्ये पुरस्कृत इति न परभाष्या-द्युक्तिरुपपन्नेति । ''सर्ववेदार्थोपबृंहिताम्'' इति यन्महाभारतसंहिताविशेषणं तत्कृत्यमाह **वेदादि-संवादेनापीति** ॥ न केवलमाप्तवाक्यत्वेन । अपि तु वेदपञ्चरात्रादिसंवादेनापीत्यपेरर्थः । **संवादः** समार्थत्वम् । विमतं प्रमाणं, वेदादिसंवादित्वात् सम्मतवदिति प्रयोगः । अनेन वेदाद्यर्थसमानार्थमिति भाष्याक्षरार्थ उक्तो भवति । **एतावता** वेदादिसंवादेन वेदादिसमं वेदाद्यर्थसमानार्थम् । **तर्हि** वेदानुक्तार्थांशे वेदसंवादाभावेन वेदमूलत्वाभावे । ननु निर्मूलत्वेनाप्रामाण्यमिति कथम् ? यावता वेदे मूलाभावेऽपि प्रामाण्यमभ्युपगतम् । मैवम् । पौरुषेयवाक्यस्य आप्तेः संवादस्य वा मूलत्वेन विवक्षितत्वात् । वेदे त्वपौरुषेये तत एव दोषाभावेन प्रामाण्यमिति ।

**दृष्टत्वं** दृष्टिकर्मत्वम् । तत्र च ज्ञानेत्यस्यान्वयो नेत्यत आह **ज्ञानविषयीकृत इति** ॥ दृशिः प्रकृत्यर्थो नात्र विवक्षित इति भावः । यद्यपि ज्ञानशब्दस्य करणसाधनत्वमभ्युपगम्य तदीयेन्द्रिय-परत्वस्वीकारे इन्द्रियजन्यदृष्टिकर्मत्वार्थत्वसम्भवेन न प्रकृत्यर्थाविवक्षा दोषः । न च केवलशब्द-स्येन्द्रियानपेक्षत्वार्थत्वायोग इति वाच्यम् । तदयोगेऽपि दोषामिश्रार्थत्वोपपत्तेः । तथाऽपि ज्ञाधातो-रुत्पन्नो ल्युड् भाव एव प्राचुर्येण प्रयुज्यत इति प्रयोगप्राचुर्यानुसाराज्ज्ञानदृष्टेत्यत्र पदार्थैकदेशभूतया दृष्ट्या जन्यपदसंयोजनेऽन्वयस्याव्युत्पन्नत्वाच्चैवमुक्तम् ।

ननु 'तदनुक्त' इति वेदाद्यनुक्तार्थदर्शनरूपं सार्वज्ञ्यं व्यासस्य न वक्तुमुचितम्, पुरुषेषु सार्वज्ञ्यानुपलम्भादित्याशङ्क्य व्यासः सर्वज्ञः, ईश्वरत्वात्, व्यतिरेकेण देवदत्तवदित्यनुमानेन व्यासस्य सार्वज्ञ्यं स्फोरयितुं प्रस्तुतत्वात्, "केवलेनाऽत्मबोधेन" इति वक्ष्यमाणवाक्यानुसाराच्च तदनुक्तस्वज्ञानदृष्टार्थयुक्तमिति वक्तव्येऽपि प्रयोजनाभिसन्धित्सया ईश्वरेति पदमित्याह **सर्वज्ञत्वस्येति** । कैवल्यस्य प्रामाण्योपपादकत्वं स्फोरयितुमाह **इन्द्रियाद्यनपेक्षमिति** । ज्ञानमिति वक्ष्यमाणं विशेष्यम् । प्रामाण्यापवादकेन्द्रियदोषाणामभावाज्ज्ञानत्वाच्चोत्सर्गतस्तस्य प्रामाण्यमिति भावः । "सति वा तस्मिंस्तथाविधग्रन्थान्तरपरिहारेणास्या एव व्याख्याने को हेतुः" इति पूर्वचोद्यस्योत्तरमुक्तं भवतीत्याह **अनेनेति** । "सर्वविदाद्यर्थोपबृंहितां तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्ताम्" इति विशेषणद्वयेन इत्यर्थः । एवं विशिष्टग्रन्थस्यान्यस्याभावादिति भावः । मन्दांश्च प्रतीदं रचितमिति चशब्दसम्बन्धः । मन्दान् प्रतीदमित्येव क्वचित् पाठः । **सूचितमिति** । मोक्षसाधनयोर्धर्मज्ञानयोरदर्शनात् संसारे क्लिश्यमानान् सज्जनानवलोक्योत्पन्नकृपैरिति दयालुत्वोक्त्या सङ्क्षेपेणोक्तमित्यर्थः । **ते मन्दाः** । **अशक्ताः** मन्दपदोक्तात्यल्पप्रतिभानत्वादेवेति भावः । **अस्य** भारतस्य । **उक्तं** भारततात्पर्यनिर्णये – "समस्तशास्त्रार्थविनिर्णयात्मकं चक्रे महाभारतनामधेयम् । वेदोत्तमं तच्च" इति । विधात्रादीनां 'श्रुतम्' इत्यधिकारित्वमुक्तमित्यर्थः । **एतदुभयं** मन्दाधिकारिकत्वं ब्रह्माद्यधिकारित्वं च । यदि मन्दाधिकारिकं, तदा मन्दज्ञेयार्थस्य ब्रह्मादिभिः सर्वज्ञैर्ज्ञातत्वावश्यम्भावेन तदाधेयज्ञानातिशयलक्षणमधिकारित्वं तेषां न स्यात् । यदि ब्रह्माद्यधिकारिकं, तदा स्वदुरवगाह्यार्थत्वेन न तेषामधिकारित्वम् । अतदर्हत्वादिति भावः ।

ननु रूपशब्दस्य स्वभावाद्यर्थत्वे महाभारतसंहिताया इयत्तया मानान्तरसिद्धायाः स्वरूपं श्रोतृप्राणिमात्रावगाह्यमित्यनवगाह्यरूपत्वं न सम्भवतीत्यतो रूपशब्दस्य विवक्षितमर्थं दर्शयति **रूपशब्द इति** । रूपशब्दस्याभिधेयार्थत्वमुपपादयति **स्वं रूपमिति** ॥ "स्वं रूपं शब्दस्याशब्दसञ्ज्ञा" इति पाणिनीयं सूत्रम् । अत्र स्वरूपस्य पर्यायाणां तद्विशेषाणां ग्रहणे प्राप्ते नियमार्थेयं परिभाषेति केचित् । अन्ये तु "लिङ्गाभावाद् विध्यन्तरशेषभावाभावाच्च नेयं परिभाषा । अपि तु सञ्ज्ञासूत्रमिति प्रतिपन्नाः" इति कैयटः । इह शास्त्रे शब्दस्य स्वमेव रूपं प्रत्याय्यं भवति । न बाह्योऽर्थः । 'दाधाघ्वदाप्', 'तरप्तमपौघः" इत्यादिशब्दसञ्ज्ञां वर्जयित्वेत्यक्षरार्थः । अत्र च स्वमित्यस्य रूपविशेषणत्वात् तेन रूपान्तरं व्यावर्त्यते । यथा नीलमुत्पलमित्यत्र नीलपदमन्यस्मादुत्पलशब्दार्थाद् व्यावर्तयति तथाऽन्यस्मादभिधेयलक्षणाद् रूपाद् रूपं व्यावर्तयति स्वमिति पदमित्यर्थस्य वृत्तिकारेणोक्तत्वादवगाह्यानवगाह्यरूपमित्यत्र रूपशब्दोऽभिधेयार्थो व्याख्यातव्य इत्यर्थः ।

नन्विदं भाष्यविसंवादि। तत्र हि "रूपग्रहणं किमर्थम् ? न स्वंशब्दस्याशब्दसञ्ज्ञा भवतीत्येव रूपंशब्दस्य सञ्ज्ञा भविष्यति। न ह्यन्यत् स्वंशब्दस्यास्ति। अन्यदतो रूपात्। एवं तर्हि सिद्धे सति यद् रूपग्रहणं करोति तज्ज्ञापयत्याचार्योऽस्त्यन्यद्रूपात् स्वंशब्दस्येति। किं पुनस्तत् ? अर्थः" इति रूपग्रहणमाक्षिप्य समाहितम्। तथा च स्वशब्दस्यैव स्वरूपबाह्याभिधेयरूपार्थपरत्वं रूपशब्दस्य चाग्निशब्दत्वादिकं शुकसारिकापुरुषोच्चारितासु भिन्नासु शब्दव्यक्तिषु सामान्यमभिधीयत इति स्फुटमवगम्यत इति नोक्तार्थसंवाद इति।

अत्रोच्यते। वृत्तौ स्वमेवेत्येवकारं विशेषणेन सङ्गमय्य व्याख्यातम्। रूपं च तत्र विशेष्य-मिति स्फुटं प्रतीयते। नीलमेवेत्यादिविशेषणं च विशेष्यमन्यस्मात् तच्छब्दोपस्थाप्यादर्थाद् व्यावर्त्य क्रियान्वयि प्रत्याययतीति व्युत्पत्तिः। एवञ्च स्वमेव रूपं ग्राह्यं, नान्यद् रूपमिति रूपमेवान्यत् स्वमिति विशेषणेन व्यावर्तनीयम्। एवं व्यवच्छेद्यं दर्शयितुं "न बाह्योऽर्थः" इत्यभिहितम्। यद्यत्र रूपशब्देनाभिधेयलक्षणबाह्यार्थो नाभिप्रेतः स्यात्। तदा बाह्याभिधेयप्रसक्तेरेवाभावान्न बाह्योऽर्थ इति तन्निषेधोऽनुपपन्नः स्यात्। तेन ज्ञायते रूपशब्दस्याभिधेयरूपमग्निशब्दत्वादिसामान्यरूपं चार्थ इति।

भाष्ये तु स्वशब्दस्य बाह्यार्थपरत्वमग्निशब्दत्वादिसामान्यपरत्वं च प्रतीयते। तथाऽपि नैतत् प्रकृतार्थविरोधि। रूपग्रहणप्रयोजनप्राधान्येन तस्य प्रवृत्तत्वात्। वृत्तेश्च स्वग्रहणप्रयोजनप्राधान्येन प्रवृत्तेः। वृत्तिमतानुसारेण टीकावाक्यस्यात्र व्याख्येयत्वमित्यतो न कोऽपि दोष इति। अत एव "रूपंशब्दस्य" इति वक्तव्ये यत् स्वमिति विशेषणं तच्छब्दस्य वाच्यार्थलक्षणबाह्यरूपव्यावर्तनेन वर्णमालात्वमन्तरङ्गरूपं ग्राहयितुमिति वृत्तिकाररीत्या टीकां व्याकृतवन्तः स्वामिनः। **व्याघातः**, अवगाह्यानवगाह्यत्वयो रूपशब्दार्थयोरभिधेये विप्रतिषेधः। प्रतिपत्तृभेदेनैकस्यैव विप्रतिषिद्धरूपत्व-मुपपद्यते, घटरूपस्यान्धानन्धज्ञेयाज्ञेयत्वमिवेति परिहरति **सामान्येन द्व्यर्थमिति**॥ "भारतार्थस्त्रिधा प्रोक्तः", "दशार्थाः सर्वभारते", "यस्मिन् दशार्थाः सर्वत्र" इत्यादिवचनाविसंवादायोक्तम् **सामा-न्येनेति**। विवक्षाभेदेन त्र्यर्थत्वं दशार्थत्वं चान्यत्रोक्तम्। इह तु सामान्येनार्थे द्वैविध्यम्। तत्रैकोऽर्थः "ईषत् सर्वोऽपि जानति" इति वचनात् सर्वजनैरवगाह्यः। अपरस्तु "दुर्विज्ञेयमतः सर्वैर्भारतं तु सुरैरपि" इति शास्त्रात् सर्वजनानवगाह्य इति हेतोर्न व्याघातो नान्यविसंवादश्चेति भावः। "कृत्यानां कर्तरि वा" इति प्राणिनामिति षष्ठी।

ननु शब्दस्य परोक्षार्थत्वं स्वभावतः कथमनवगाह्यत्वे तद्धेतूक्रियत इत्यतोऽर्थमाह **अत्यन्त-गूढ इति**। तत्त्वं च "भारतार्थस्त्रिधा प्रोक्तः", "भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिः स्थितिः।

योगः प्राणो बलं चैव वृकोदर इतीरितः'' इत्यादिना अन्यत्रोक्तं द्रष्टव्यम् ॥ **कथमिति** । धर्मः परमपरश्च तत्त्वं विषय इति हि प्राग् धर्मपरापरतत्त्वविषयत्वं भारतस्योक्तम् । महाभारतसंहितामिति तस्यैकवाक्यत्वं च प्रतिपिपादयिषितम् । एकवाक्यत्वं चार्थैकत्वनिबन्धनम् । यदाह जैमिनिः— ''अर्थैकत्वादेकं वाक्यम्'' इति । तथा च धर्माद्यनेकविषयत्वे वाक्यं भेत्तव्यमित्येकवाक्यता कथमङ्गीकार्येति भावः । केवलशब्दस्य मात्रशब्दार्थत्वे धर्माद्यसिद्धिः स्यादित्यतो व्याख्याति **केवलमेकमेवेति** । धर्मादिकमित्यत्र आदिपदेनापरतत्त्वं गृह्यते । **तादर्थ्येन** तत्प्रतिपत्तिशेषत्वेन । ननु न स्वरूपशब्दस्यातीव प्रयोजनम् । मुख्यप्रतिपाद्यत्वस्य केवलभगवत्परामित्यनेन सिद्धेरित्यतः तत्प्रयोजनमाह **भगवदिति** ॥ **सङ्कीर्णतया** धर्मापरतत्त्वसंवलिततया । **निकृष्टतया** अनितरसाधारण्येन ।

**भाष्यम्**

**तच्चोक्तम्—**

**लोकेशा ब्रह्मरुद्राद्याः संसारे क्लेशिनं जनम् ।**
**वेदार्थाज्ञमधीकारवर्जितं च स्त्रियादिकम् ॥**

**अवेक्ष्य प्रार्थयामासुः देवेशं पुरुषोत्तमम् ।**
**ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च ॥**

**अन्यावतार‍रूपैश्च वेदानुक्तार्थभूषितम् ।**
**केवलेनात्मबोधेन दृष्टं वेदार्थसंयुतम् ।**
**वेदादपि परं चक्रे पञ्चमं वेदमुत्तमम् ॥**

**भारतं पञ्चरात्रं च मूलरामायणं तथा ।**
**पुराणं भागवतं चेति सम्भिन्नश्शास्त्रपुङ्गवः ॥**

**—इति नारायणाष्टाक्षरकल्पे ।**

**ब्रह्माऽपि तन्न जानाति ईषत् सर्वोऽपि जानते ।**
**बह्वर्थमृषयस्तत्तु भारतं प्रवदन्ति हि ॥**

**—इति उपनारदीये ।**

ब्रह्माद्यैः प्रार्थितो विष्णुः भारतं स चकार ह ।
यस्मिन् दशार्थाः सर्वत्र न ज्ञेयास्सर्वजन्तुभिः ॥

—इति नारदीये ।

भारतश्चापि कृतवान् पञ्चमं वेदमुत्तमम् ।
दशावरार्थं सर्वत्र केवलं विष्णुबोधकम् ।
परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं तु यत् ॥

—इति स्कान्दे ॥

यदि विद्यात् चतुर्वेदान् साङ्गोपनिषदान् द्विजः ।
न चेत् पुराणं संविद्यान्नैव स स्यात् विचक्षणः ॥

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रचलिष्यति ॥

मन्वादि केचिद् ब्रुवते ह्यास्तीकादि तथाऽपरे ।
तथोपरिचराद्यन्ये भारतं परिचक्षते ॥

भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।
देवैर्ब्रह्मादिभिस्सर्वैः ऋषिभिश्च समन्वितैः ।
व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ॥

महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
'यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ॥'

'विराटोद्योगसारवान्' इत्यादितद्वाक्यपर्यालोचनया, ऋषिसम्प्रदायात्, 'को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद् भवेत्' इत्यादिपुराणग्रन्थान्तरगतवाक्यार्थान्यथानुपपत्त्या नारदाध्ययनादिलिङ्गैश्चावसीयते ।

*प्र०दी०*— कुत एतत्प्रतिपत्तव्यमित्यत आह— **तच्चेति** । यदेतन्नष्टधर्मेत्यादिनोक्तं तत् 'लोकेशा' इत्याद्यागमचतुष्टयेन उक्तं च । न केवल-मस्माभिरुच्यते । ''उपसर्गस्य घञि अमनुष्ये बहुलम्'' (६-३-१२२) इत्यतो अधीकारेति दीर्घः । स्त्रियादिकमिति छान्दस इयङ् । व्यासो भूत्वा च व्यासो भूत्वैव । विलम्बमकृत्वा । अभूत्वा मूलरूपेण चेति वा । तेन व्यासरूपेण अन्यावतार-रूपैश्च । परं अतिशयेनोत्तमम् ।

कोऽसौ पञ्चमो वेद इत्यत आह— **भारतमिति** । पञ्चमवेदाख्यः शास्त्रपुङ्गवः । इति सम्भिन्नः प्रभिन्नः । अथवा, इति शास्त्रपुङ्गवः । स च सम्भिन्न एकार्थतया सङ्गत इत्यनेकेष्वपि ग्रन्थेष्वेक-वचनमिति योज्यम् । अत्र पञ्चरात्रं नारायणावतारेण कृतम् । मूलरामायणं हयग्रीवरूपेण । आदि-भागवतं मूलरूपेण । ब्रह्मा बृहस्पतिरपि । कृत्स्नमिति शेषः । सर्वोऽपि जनो जानति जानाति । बह्वर्थमिति प्रवदन्ति । भारतं चापीति पूर्वोक्तेन समुच्चयः । दश अवरा येषु ते तथा । तेऽर्थाः यस्येति विग्रहः । याजकादेराकृतिगणत्वात् विष्णुबोधकमिति समासः । करणार्थघञन्तेन वा समासः । पश्चादल्पाद्यर्थे कः । उत्तममित्युक्तस्यैव विवरणं **वेदादप्युत्तममिति** । एषु वाक्येषु यथासम्भवं पूर्वोक्तार्थोऽवगन्तव्यः ।

यदि विद्यादित्यादिभारतवाक्यपर्यालोचनया चोक्तं तदवसीयत इति सम्बन्धः । चत्वारश्च ते वेदाश्चेति विशेषणसमास एवायं न द्विगुः । अङ्गानि चोपनिषदश्च अङ्गोपनिषदमिति समाहारद्वन्द्वः । तेन 'द्वन्द्वाचुदषहान्तात्समाहारे' (५-४-१०६) इति समासान्तोऽकारः । ततो बहुव्रीहिः । प्रचलि-ष्यति प्रचालयिष्यतीति । भारवत्त्वादित्यनेन मत्वर्थे क्तप्रत्यय इत्युक्तं भवति । भारतप्रामाण्यमङ्गीकृत्य इतरदनङ्गीकुर्वाणं प्रतीदमुक्तम् । युक्त्यनुसन्धानेन विनाऽभिप्रेतार्थो न प्रतीयते । अतः तात्पर्या-लोचनयेत्युक्तम् । अनुसन्धानप्रकारं च लेशेन दर्शयिष्यति । ऋषीणां वैशम्पायनादीनां सम्प्रदाया-च्छिष्येभ्यः प्रदानाच्चैतदवसीयते । न हि प्रामाण्यादिरहितं ऋषयः शिष्याणां श्रेयसे व्याकुर्युरिति युज्यते । को ह्यन्य इत्यादिपुराणलक्षणग्रन्थान्तरगतवाक्यार्थान्यथानुपपत्त्यैतदवसीयते । ग्रन्थान्तरेति विशेषणस्य प्रयोजनं स्वयमेव वक्ष्यति । वाक्यस्योक्तार्थे सामर्थ्याभावादन्यथानुपपत्त्येत्युक्तम् । तच्च प्रदर्शयिष्यते । नारदस्याध्ययनव्याख्यानादिलिङ्गैश्चोक्तार्थोऽवसीयते । ऋषिसम्प्रदायादित्यनेनैव गतमिति चेन्न । ऋषीणां गृहस्थत्वेन परार्थोऽन्यविषयोऽपि व्यवहारः कथञ्चित् सम्भाव्येतापि । नारदस्य तु परमहंसस्य स्वार्थो व्यापारोऽन्यविषयो न सम्भवतीति ज्ञापनार्थत्वात् । अत एव सम्प्रदाया-दित्यध्ययनेति चोक्तम् ।

***प०टी०***— उक्तमेवार्थं प्रमाणैः स्पष्टयति **तदित्यादिना**। व्यासो भूत्वा च मूलरूपेण च तेन व्यासरूपेणान्यावताररूपैश्चेति चशब्दावन्योन्यसमुच्चयार्थौ। अन्यावताररूपाणि नारायणहयग्रीवादीनि। पञ्चमो वेदः शास्त्रपुङ्गव इति सम्भिन्नः। मूलरूपेणादिभागवतं चक्रे। पञ्चरात्रस्य वक्ता नारायणः। मूलरामायणं हयशीर्षश्चकार।

'निर्दग्धेषु तु लोकेषु वाजिरूपेण वै मया।
श्रुत्वा जगाद च मुनीन् प्रति देवश्चतुर्मुखः ॥' —इति मात्स्योक्तेः।

भारतस्यावगाह्यानवगाह्यत्वे प्रमाणम् **ब्रह्मापीति**। परोक्षार्थत्वे प्रमाणम् **ब्रह्माद्यैरिति**। वेदोत्तमत्वभगवत्परत्वपरोक्षार्थत्वेषु प्रमाणं **भारतं चापीति**। भारतवाक्यपर्यालोचनया ऋषिसम्प्रदायादिलिङ्गैश्चैतद्भारतस्य वेदोत्तमत्वादि ज्ञायत इत्याह **यदीत्यादि**। 'विराटोद्योगसरवान्' इति भारतस्य कल्पवृक्षतया वर्णितत्वं द्रष्टव्यम्।

***न०टी०***— यदेतत् भारतस्य प्रमाणतमत्वप्रतिपादकं नष्टधर्मेत्यादि श्रीमदाचार्यवचनं तत्स्वत एव प्रमाणम्, न तत्र शङ्का भवति तल्लक्षणाभिज्ञानां महात्मनाम्। तथाहि— ब्रह्मतर्कादौ "तदुक्तिमात्रे प्रामाण्यं यदि नास्यागमान्तरम्। अपेक्षितम्" इत्यारभ्य "नाशङ्क्यं तद्वचः क्वचित्", 'तद्वाक्यं देवपूजितम्' इत्यादि तल्लक्षणानभिज्ञानां प्राकृतानां तु भवत्यपि शङ्का। साऽपि मा भूदिति भावेनाह **तच्चोक्तमिति**॥

न केवलं तन्मद्वाक्यादवसीयते किन्तु उक्तं च तत् '**लोकेशाः** इत्यादिना, नारायणाष्टाक्षरकल्पादिस्थानचतुष्टये। तदेव 'यदि विद्यात्' इत्यादि भारतवाक्यपर्यालोचनया, ऋषिसम्प्रदायादिहेतुना चावसीयते' इत्यर्थः। प्रथमत एव भगवता ब्रह्माणं सृष्ट्वा, तस्मै वेदेतिहासादिसर्वविद्याया प्रतिपादितत्वात्। हयास्यनिःसृतश्रुतेश्च वेदव्यासो भूत्वा च पञ्चमवेदं चक्र इति चकारः। तेन चान्यावताररूपैश्चेति चकारो मिथःसमुच्चयार्थः। **अन्यावताररूपैः** इति हयास्यकपिलादिरूपैः। एतदेव ऋग्भाष्ये 'मुनिस्तु सर्वविद्यानाम्' इत्यादिना चावगन्तव्यम्। मूलरामायणं नाम शतकोटिप्रविस्तरं श्रीहयास्याच्छ्रुत्वा ब्रह्मणा नारदायोक्तम्। तदुक्तं मात्स्ये—

'निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया'।
'श्रुत्वा जगाद च मुनीन् प्रति देवश्चतुर्मुखः ॥' इत्यारभ्य,
'वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम्।
ब्रह्मणाऽभिहितं तत्र शतकोटिप्रविस्तरम्।
आहृत्य नारदायैव तेन वाल्मीकये पुनः ॥' इति ॥

स पञ्चमवेदाख्यशास्त्रपुङ्गवो ? भारतादिभेदभिन्न इत्यर्थः ।

अतः प्रमाणतमं भारतम् ।

*भा०दी०*— **आगमचतुष्टय इति** । अष्टाक्षरकल्पे उपनारदीये नारदीये स्कान्दरूपे इत्यर्थः । **उक्तं चेति** । चशब्दार्थो न केवलमित्यादि । **उपसर्गस्येति** । उपसर्गस्य घञन्ते उत्तरपदे अमनुष्येऽभिधेये बहुलं दीर्घो भवतीति षष्ठतृतीयपादगतसूत्रस्यार्थः । इको यणचीति यणादेशे स्व्यादिकमिति भाव्यमित्यत आह **छान्दस इति** । इयङादेश इति । **विलम्बमिति** । विजातीयव्यापारमित्यर्थः । पञ्चमं वेदं चक्र इत्यस्य विवरणपरत्वस्थापनाय शेषोक्तिपूर्वं वाक्यं योजयति **पञ्चमवेदाख्यमित्यादिना** । **इति सम्भिन्न इति** । भारतादिरूपेण पञ्चधा सम्भिन्न इत्यर्थः । मिश्रत इति भ्रमनिरासार्थमाह **प्रभिन्न** इति । **अथवेति शास्त्रपुङ्गव** इत्यत्र पञ्चमवेदाख्य इत्यनुषङ्गः । **एकेति** । **अनेकेषु** भारतादिपञ्चसु । पञ्चमं वेदमिति एकवचनमित्यर्थः । तत्र हेतुतयापीतिपदमावर्त्यमित्युपेत्योक्तं **सङ्गत इतीति** । किं केन कृतमित्यतो विवेकमाह **अत्रेति** । भागवतपुराणे व्यासकृते इत्यनुक्तिः सिद्धमिति नोक्तम् । ब्रह्मापीत्यपिपदेन समुच्चेयमाह । **ब्रह्मा बृहस्पतिरपीत्येके** प्राज्ञास्तु ब्रह्मेत्यनुवादेन बृहस्पतिरपीत्यर्थोक्तिः । उक्तं हि तृतीयस्कन्धतात्पर्ये सप्तविंशेऽध्याये । ब्रह्मा बृहस्पतिरित्याहुः । तन्न जानातीत्यत्रोत्तरवाक्याविरोधाय शेषमाह **कृत्स्नमिति शेष इति** । **पूर्वोक्तेनेति** । स्कन्दपुराण एव पुराणादिग्रन्थानुक्त्वा पश्चाद्भारतं चापीत्युक्तत्वात् तेन समुच्चय इत्यर्थः । "कर्तरि च" इति सूत्रे कर्त्रर्थकतृजकाभ्यां योगे कर्मणि या षष्ठी सा न समस्यत इत्युक्तेः । कथं विष्णुबाधकमिति षष्ठीसमास इत्यत आह **याजकादेरिति** । द्वितीयाध्यायद्वितीयपादे याजकादिभ्यश्चेति सूत्रे याजकादिशब्दैः षष्ठी समस्यत इति प्रतिप्रसवात् तस्याकृतिशब्दितस्वभावसिद्धगणत्वादयमपिशब्दस्तन्मध्ये बोध्य इति भावः । वृत्त्यादावाकृतिगणत्वानुक्तेराह **करणार्थ इति** । बुध्यते अनेनेति व्युत्पत्त्या बुध अवबोधन इत्यतो अकर्तरि च कारके संज्ञायामित्यनेन घञ्प्रत्यये पुगन्तेति गुणेऽवबोध इति सिद्धेः विष्णोर्बोधो विष्णुबोध अल्पो विष्णुबोध इति रूपसिद्धेरिति भावः । पाञ्चमतृतीयपादे अल्पे इति सूत्रे अल्पत्वविशिष्टेऽर्थे कप्रत्ययो भवतीत्युक्तेरल्पं तैलं तैलकमित्यादाविव भगवद्विषयाल्पज्ञानजनकमित्यर्थः । आदिपदात्स्वार्थ इति ग्राह्यं **विवरणमिति** । वेदादित्यवध्युक्तेरतो न पुनरुक्ततेति भावः । **यथासम्भवमिति** । "लोकेशा ब्रह्मरुद्राद्या प्रार्थयामासुर्देवेशं पुरुषोत्तमम्" इत्यनेन ब्रह्माद्यैः प्रार्थितो विष्णुः इत्यनेन च ब्रह्मरुद्रादिभिरर्थित इत्यस्यार्थः । संसारे क्लेशिनमित्यनेन संसारे क्लिश्यमानानामित्यस्य वेदार्थाज्ञमित्यनेन च इष्टानिष्टेत्यादेर्वेदार्थाज्ञानाच्चेत्यन्तस्य । अधिकारवर्जितमित्यनेन वेदानधिकारिणामित्यादेः । अवेक्ष्येत्यनेन अवलोकोत्पन्न कृपालुभिरित्यस्य । ततः

प्रसन्न इत्यादिना ज्ञानप्रदर्शनायेत्यस्य । भगवान् व्यासो भूत्वा इत्यनेन व्यासोऽवततारेत्यस्य । व्यासो भूत्वैव इत्यनेन ततश्चेत्यस्य वेदानुक्तार्थभूषितमित्यादिना तदनुक्तयादेः वेदार्थसंयुतमित्यनेन सर्ववेदार्थेत्यादेः । ब्रह्मापि तन्न जानातीत्यादिना यस्मिन् दशार्था इत्यादिना च सर्वप्राणिनामनवगाह्येत्यादेः । केवलं विष्णुबोधकमित्यनेन केवलभगवदित्यादेः । परोक्षार्थमित्यनेन परोक्षार्थमित्यस्यार्थ उक्त इत्यादिरूपेण ध्येय इत्यर्थः । अवसीयत इत्यस्य कर्मप्रतीतेस्तच्चोक्तमित्यनेन अन्वयमाह **यदि विद्यादित्यादिभारतवाक्येति** ।

ननु चतुर्णां वेदानां समाहार इत्यत्र तद्धितार्थोत्तरपदसमाहारे (१५-२-५१) इति सूत्रे तद्धितार्थे विषये उत्तरपदे च परतः समाहारे वाच्ये दिक्सङ्ख्ये समस्यत इति समासे ''सङ्ख्यापूर्वो द्विगुः'' (२-२-५२) इति द्विगुसंज्ञायां द्विगोः (४-१-२१) इति ङीप्प्रत्यये चतुर्वेदीति स्यादित्यत आह **चत्वारश्च त इति** । विशेषणं विशेष्येण बहुल (२-१-५७) इति सूत्रेण विशेषणसमास इत्यर्थः । द्वन्द्वादिति च चवर्गान्ताट्टकारान्तात् षकारान्ताद्धकारान्तात् द्वन्द्वात् छप्रत्ययो भवतीति पञ्चमान्त्यपादीयसूत्रार्थः । 'चुटू', 'हलन्त्यमि'त्याभ्यां टकारचकारयोरपगमे अङ्गोपनिषदमिति रूपम् । तेन सहितानिति बहुव्रीहिरित्यर्थः । ''यदि विद्याच्चतुर्वेदानि''त्यादिवाक्यानामुक्तेरुपयोगमाह **भारतप्रामाण्यमिति** । **इतरदिति** । धर्मज्ञानद्वारा मोक्षहेतुत्वं सर्ववेदार्थबृंहितत्वं तदनुक्तकेवलेश्वरेत्यादिनोक्तमित्यर्थः । **इदमिति** । यदि विद्यादित्यादिकं लेशेन दर्शयिष्यतीति कथमन्यथेत्यादिनेति भावः । **प्रदानाच्चेति** । न केवलमित्यादिवाक्यपर्यालोचनयेति चार्थः । प्रामाण्यादीत्यादिपदेन तदितरदित्यत्रोक्तस्य सङ्ग्रहः । **वक्ष्यतीति** । ग्रन्थान्तरगतत्वाच्चेत्यादिनेति भावः । **प्रदर्शयिष्यत इति** । कथं चान्यस्येत्यादिनेति भावः । उक्तार्थः प्रामाण्यादिः मन्वादि केचिद् ब्रुवते इति श्लोको भारततात्पर्यनिर्णये द्वितीये ''सकृष्णान् पाण्डवान् गृह्य योऽयमर्थः प्रवर्तते । प्रातिलोम्यादिवैचित्र्यात् तमास्तिक्यं प्रचक्षत'' इत्यादिना व्याख्यानादत्र न व्याख्यातः ।

*भा०र०*— **कुतः** कस्मात् प्रमाणात् । चशब्दस्य स्वस्थले समुच्चेयासमर्पकत्वाद् व्यत्यस्य योजयति **यदेतदिति** । **आगमचतुष्टये** अष्टाक्षरकल्पोपनारदीयनारदीयस्कान्दपुराणवचनरूपागमचतुष्टये । तेन 'लोकेशाः' इत्याद्यागमवचनानां बहुत्वोपलम्भात् कथमागमानां चतुष्ट्वमिति चोद्यं परिहृतम् । समुच्चेयं वक्तुमुक्तं **न केवलमिति** । नन्वध्युपसर्गपूर्वस्य करोतेर्घञि अधिकार इत्येव स्यादित्यत आह **उपसर्गस्येति** । उपसर्गस्य घञन्त उत्तरपदेऽमनुष्येऽभिधेये बहुलं दीर्घो भवति । अपामार्गः वीक्लेदः । अमनुष्य इति किम् ? निषादः, इति सूत्रार्थः ।

ननु "स्त्रियादिकम्" इत्यत्र "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इति सूत्रेण धात्विकारस्यैव इयङादेशविधानात् स्त्रीशब्दगतेकारस्यातथात्वादियङादेशाप्रसक्तौ "इको यणचि" इति यणादेशे स्त्र्यादिकमित्येव स्यादित्यत आह **छान्दस इयङिति** ॥ इयङुवङ्प्रकरणे "तन्वादीनां छन्दसि बहुल-मुपसङ्ख्यानम्" इति त्रियम्बकमितिवदत्रापि छन्दस्तुल्ये पुराणप्रयोग इयङादेशो वक्तव्य इत्यर्थः । केचित्तु 'स्त्रियाः' इति सूत्रेणेयङादेशः । 'प्रत्यय' इति तु छान्दसत्वान्नाश्रितमित्यर्थमाहुः । "व्यासो भूत्वा" इत्यत्र भूत्वेत्यभूत्वेति च शक्यते पदं छेत्तुम् । "हशि च" इति "एङः पदान्तादति" इति च शास्त्रात् । पक्षद्वयेऽप्याद्यश्चशब्द एवार्थः । उत्तरं चशब्दद्वयं परस्परसमुच्चायकम् । तत्राऽऽद्ये व्यासो भूत्वैव तेन व्यासरूपेण चान्यावतारश्च पञ्चमं वेदं चक्र इत्यन्वयः । अभूत्वेति पक्षे अभूत्वैव तेन च अव्यासभावेनैव मूलरूपेणान्यावताररूपैश्च पञ्चमं वेदं चक्र इत्यन्वय इति भावेन व्याचष्टे **व्यासो भूत्वा चेत्यादिना** ॥ ननु व्यासो भूत्वैव पञ्चमं वेदं चक्र इति न युक्तम् । "अन्यावताररूपैश्च चक्रे" इत्यनुपपत्तेरित्यतो नात्रैवकारेणान्यावताररूपव्यावृत्तिरभिप्रेता । किन्तु ज्ञानप्रतिकूलव्यापाराभाव एवेति भावेनोक्तम् **विलम्बमकृत्वेति** ॥ विजातीयव्यापारमकृत्वेत्यर्थः । अभूत्वा मूलरूपेण चेत्यस्याभूत्वैव तेन मूलरूपेण चेत्यर्थः । भूत्वेति पक्षे चशब्दं यथाश्रुतं योजयंस्तेनेत्यस्यार्थं वक्ति **तेन व्यास-रूपेणेति** ॥ परमत्तममिति पदयोरपौनरुक्त्यायार्थमाह **परमतिशयेनेति** ॥ उत्तमम् उत्तममित्यस्येदं तात्पर्यमित्यर्थः । पुल्लिङ्गानुसारेण शेषमाह **पञ्चमवेदाख्य इति** । इति "भारतं पञ्चरात्रञ्च" इत्युक्त-प्रकारेण । ननु सम्पूर्वो भिनत्तिः सङ्गतौ प्रसिद्धः "यन्न दुःखेन सम्भिन्नम्" "सुखस्य दुःखा-सम्भिन्नत्वम्" इत्यादौ । तत् कथं प्रभिन्न इत्युच्यते ? इत्यरुचेराह **अथवेति** ॥ **इति** भारतादिरूपः, **शास्त्रपुङ्गवः** उत्तमं शास्त्रम् । अस्मिन् पक्षे वाक्यं भेत्तव्यमिति भावेनोक्तम् **स चेति** ॥ **सङ्गतः** कं वाक्यमिति यावत् । इतिशब्दमावृत्य हेत्वर्थत्वमभिप्रेत्य तत्र साध्यं पूरयति **इति हेतोरनेके-ष्वप्येकवचनमिति** ॥ अस्ति तावत् "पञ्चमं वेदम्" इत्यत्रैकवचनम् । तच्चैकत्वेऽनुशिष्टम् । एकत्वं च नानाग्रन्थेष्वर्थैकत्वनिबन्धनमिति भावः । ननु सम्भवत्येकवाक्यत्वे वाक्यभेदः किमित्याश्रयणीय इति चेत्, उच्यते । "पुराणं भागवतं चेति पञ्चमो वेद ईरितः" इति वक्तव्ये यच्छास्त्रपुङ्गवस्सम्भिन्न इत्याह तद् भारतादिशास्त्रस्यैकवाक्यतां ज्ञापयितुम् । तज्ज्ञापनं च लोकानां सांसारिकक्लेशनिवर्तनाय शास्त्रनिर्माणे प्रवृत्तस्य भगवतः परस्परविरुद्धार्थकभारतादिनिर्माणे सति न कृतार्थता स्यात् । न चैवं युक्तम् । भगवता महानुभावेन लोकानुजिघृक्षया समीहमानेन नानाधिकारिभेदेन नानाशास्त्रं निर्मितवता विषयप्रयोजनैक्येन भारतादिशास्त्राण्येकं वाक्यमिति ज्ञापनीय एव सज्जन इत्यर्थवत् । अयं चार्थो वाक्यभेदाश्रयण एव सिद्ध्यतीति तद्भेदपक्षाश्रयणमिति ।

नन्वभूत्वा मूलरूपेणेति पक्षे भारतपञ्चरात्रमूलरामायणादिभागवतानां यथासङ्ख्यं मूलरूपव्यास-नारायणावतारहयग्रीवरूपकृतत्वं न युक्तम् । भारतस्य व्यासकृतत्वप्रसिद्धेः । यथायोगमन्वयस्तु दुरवगाह इत्यत आह **अत्र पञ्चरात्रमित्यादिना** ॥ **नारायणावतारेण कृतमिति** ॥ "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" इति वचनं पञ्चरात्रस्य नारायणावतारकृतत्वे मानम् । यद्यप्यत्र वक्तेत्येवोच्यते । तथाऽपि नारायणस्य स्वतः सार्वज्ञ्येन सजातीयोच्चारणानपेक्षोच्चारणसमर्थत्वात् तस्यैव चात्र कर्तृशब्दार्थत्वात् तत्कृतत्वं सिद्ध्यतीति भावेनैवमुक्तम् । तथा च यादवगिरिमाहात्म्ये नवमेऽध्याये—

"वेदेष्वव्यक्तमर्थं हि व्यञ्जयन् परमः पुमान् ।
चक्रे नारायणः श्रीमान् पञ्चरात्रमशेषतः ॥" इति ॥

हयग्रीवरूपेणेत्यत्र कृतमित्यनुवर्तते । तथा च प्राचीनटीका— "मूलरामायणं नाम शतकोटि-प्रविस्तरम् । श्रीहयास्याच्छ्रुत्वा ब्रह्मणा नारदायोक्तम् । तदुक्तं मात्स्ये—

"निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया ।
श्रुत्या जगाद च मुनीन् प्रति देवश्चतुर्मुखः ॥ इत्यारभ्य
वाल्मीकिनाऽपि यत् प्रोक्तं रामोपाख्यानमुत्तमम् ।
ब्रह्मणाऽभिहितं तच्च शतकोटिप्रविस्तरम् ।
आहत्य नारदायैव तेन वाल्मीकये पुनः ॥" इति ।

एवं च मूलरामायणस्य हयग्रीवकृतत्वसिद्धिः । एतेनैव अवतारेषु गणितो हयग्रीवः रूपशब्देन गृह्यत इति निरस्तम् । वाजिरूपेणेति तस्य रूपशब्देन पुराणे व्यवहारात् । अभूत्वा तेन मूलरूपेणे-त्युक्तम् । तत्कृतं ग्रन्थमाह **आदिभागवतं मूलरूपेणेति** ॥ कृतमित्यस्ति । तन्त्रभागवतादिवद् ग्रन्थविशेष एवाऽदिभागवतम् ।

"एतदेवाऽत्मभू राजन्नारदायेति पृच्छते ।
वेदगर्भोऽभ्यधात् सर्वं यदाह हरिरात्मने ॥
इदं भागवतं नाम यन्मे भगवतोदितम् ।
सङ्ग्रहोऽयं विभूतीनां तदेतद् विपुलीकुरु ॥"

इति द्वितीयस्कन्धभागवतश्लोकद्वये, आदिभागवतं ब्रह्मणे सर्गादौ मूलरूपेणोपदिष्टम्; प्रसिद्ध-भागवतं तु ततोऽन्यदिति भागवतटीकाभागवतोपासनयोर्व्यक्तम् । तथा च भागवते तृतीयस्कन्धे

"पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममाऽदिसर्गे । ज्ञानं परं मन्महिमावभासं यत् सूरयो भागवतं वदन्ति" इति । भारतस्य व्यासकृतत्वं सुप्रसिद्धमिति तन्नोक्तम् । अनेन "व्यासो भूत्वा च तेन च । अन्यावताररूपैश्च" इत्यत्र व्यासो भूत्वैव तेन च व्यासरूपेण च व्यासापेक्षयाऽन्यश्चासावयतारो नारायणलक्षणश्च रूपं च रूपं च रूपे, हयग्रीवमूलरूपे तैश्चेत्यर्थे व्यासावतारनारायणावतार-हयग्रीवरूपमूलरूपाणां यथासङ्ख्यं भारतं पञ्चरात्रं मूलरामायणं पुराणं भागवतमादिभागवतं चेति वचनोक्तांश्चतुरो ग्रन्थान् प्रति कर्तृत्वमावेदितं भवति । तथा अभूत्वैव तेन मूलरूपेण चेति पक्षे अन्यानि च तान्यवताररूपाणि व्यासनारायणहयग्रीवरूपाणि चेति विग्रहः । मूलरूपान्तराभावेन अन्यत्वस्यासम्भवपरिहारायावतारेत्युक्तम् । मूलरूपापेक्षया तथाविधरूपान्तराभावेऽप्यवताररूपाणां सम्भवादुक्तं युक्तम् । एवञ्च मूलरूपेण चान्यावताररूपैश्च यथासम्भवं मूलरूपेणाऽदिभागवतं व्यासा-वताररूपेण भारतं नारायणावताररूपेण पञ्चरात्रं हयग्रीवावताररूपेण मूलरामायणं कृतमिति बोद्धव्य-मिति विभावितं भवति ।

ननु,

"तस्माद् वेदाः समुत्पन्ना विद्याख्या मूलिका श्रुतिः ।
सर्वोपनिषदश्चैव पञ्चरात्राख्यसंहिताः ॥
ब्रह्मसूत्राणि वेदानां व्याख्यास्तासां च विस्तरः ।
सर्वमेतज्जगच्चैव निःसृतं तुरगाननात् ॥"

इति बृहद्भाष्ये पञ्चरात्रस्य हयग्रीवकृतत्वाभिधानात् कथं नारायणावतारकृतत्वमुच्यते ? इति चेन्न । नारायणावतारकृतपूर्वकल्पीयपञ्चरात्रस्य हयग्रीवास्योच्चारितार्थकत्वेनोक्तवचनेन तत्कृतत्वा-नभिधानात् । अत एव च तत्र निःसृतमित्युक्तम् । अन्यत्र च "हयग्रीवादिमा विद्याः श्वसितत्वेन निस्सृताः" इत्युक्तम् । ऋग्भाष्यटीकायां च "वेदादिकं सर्वं निःश्वसितमिवानायासेन आदिकाले तेनोच्चारितमित्यर्थः" इति निःश्वसितनिस्सृतशब्दयोरुच्चारणार्थत्वमेवोक्तम् । वक्ष्यते च तृतीयभाष्य-टीकयोः "निःश्वसितशब्दस्त्वक्लेशाभिप्रायः" इत्यादि । अन्यथा वेदादीनामपि तत्कृतत्वप्रसङ्गः । न च वेदानामपौरुषेयत्वान्निःश्वसितत्वं निस्सृतत्वं चोच्चारितत्वमेव । पञ्चरात्रादीनां पौरुषेयाणां तु तत्कृतत्वमस्त्विति वाच्यम् । पौरुषेयत्वेऽपि हयग्रीवकृतत्वे निरवकाशप्रमाणाभावात् । "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।" इति वचनाच्च अन्यकृतस्यैवोच्चारणमित्यस्यैव युक्तत्वात् । एतेन "ब्रह्मसूत्राणि वेदानां व्याख्या" इति ब्रह्मसूत्राणां हयग्रीवास्यनिःसृतत्वमपि व्याख्यातम् । "भगवान् चकार ब्रह्मसूत्राणि", "एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः", "तदर्थनिर्णयाय ब्रह्मसूत्राणि

चकार'', ''विनिर्णयं ब्रह्मसूत्रं चकार'' इत्यादिनिरवकाशबहुप्रमाणावगतव्यासकर्तृकत्वानां ब्रह्मसूत्राणां हयग्रीव आदिकाले पूर्वकल्पीयानामुच्चारयितेत्यस्यैव न्याय्यत्वात् । एवमेव ''इतिहासपुराणः पञ्चमो वेदानां वेदः'' इत्युक्तस्य भारतस्य तदुक्तानां पुराणानां च व्यासकृतानां पूर्वकल्पीयानामुच्चारणमादिकाले हयग्रीवेण कृतमित्येव ज्ञातव्यम् । एवं च सति,

''ब्रह्माद्यैः प्रार्थितो विष्णुर्भारतं स चकार ह ।'',
''भारतं चापि कृतवान् पञ्चमं वेदमुत्तमम् ।'',
''स्वयं नारायणो देवो ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ॥
चकार पञ्चमं वेदं महाभारतसञ्ज्ञितम् ।
कृष्णद्वैपायनं व्यासं विद्धि नारायणं परम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद् भवेत् ॥'',

''समस्तशास्त्रार्थविनिर्णयात्मकं चक्रे महाभारतनामधेयम् । वेदोत्तमम्'', ''महाभारतसंहितामचीक्लृपत्'' इत्यादीनि, ''अष्टादशपुराणानां कर्ता सत्यवतीसुतः'' इत्यादीनां च निरवकाशप्रमाणान्यनुकूलितानि भवन्ति ।

केचित्तु, बृहद्भाष्ये कतिपयसंहितानामेव हयग्रीवकृतत्वमुच्यते । न समस्तपञ्चरात्रस्य । ''पञ्चरात्राख्यसंहिता'' इति संहितापदप्रयोगात् । अत्र पुनः सर्वस्य पञ्चरात्रस्य नारायणावतारकृतत्वमभिप्रेतम् । कृत्स्नस्येति विशेषणात् । एवं सङ्क्षेपविस्तराभ्यामुभयकृतत्वमभ्युपगम्यत इति न तद्विरोध इत्याहुः ।

अन्ये तु हयग्रीवकृतेषु ब्रह्मसूत्राणां पुराणानां च परिगणनात् तत्रापि भागद्वयमङ्गीकृत्योक्तरीत्या द्विकर्तृकत्वाभ्युपगमायोगात् पञ्चरात्रभारतादयः सर्वेऽपि ग्रन्थाः सामस्त्येन हयग्रीवकृता एव । ''एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः'' ''अष्टादशपुराणानां कर्ता सत्यवतीसुतः'', ''पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्'' इत्यादौ सूत्रपुराणपञ्चरात्राणां व्यासनारायणकृतत्वोक्तिस्तु, पुनर्विशेषाकारेण मनुष्यलोकादौ स्थापितत्वाभिप्राया । यथा प्रियव्रतस्य स्वरथनेमिभिः समुद्रनिर्माणवचनं विशदीकरणाभिप्रायम् । यथा वा विष्णुसृष्टायास्त्रिलोक्या विशेषतः पुनः सृष्ट्या ''त्रीन् लोकान् ब्रह्मा ससर्ज'' इति वचनं विशेषाकारेण निर्माणाभिप्रायं तद्वत् । तथा च पञ्चमस्कन्धतात्पर्ये—

''पूर्वसृष्टान् रथाऽवृत्त्या स्थूलांश्चक्रे प्रियव्रतः ।
समुद्रांस्तेन तत्कर्तेत्याहुरेनं प्रियव्रतम् ॥'' इति ।

ऐतरेयभाष्ये च—

"भूतेभ्योऽनन्तरं त्वण्डं सृष्ट्वा विष्णुः पुरा प्रभुः ।
लोकभेदांश्च चक्रेऽत्र पश्चाद् ब्रह्मा विशेषतः ।
सम्यक् चकार लोकांस्त्रींल्लोककर्ता ततश्च सः ॥" इति ।

अतो हयग्रीवरचितानामेव पञ्चरात्रभारतपुराणानां नारायणावतारव्यासकृतत्वं टीकायामभिमतमिति वदन्ति ।

अत्रेदं वेदितव्यम् । "इतिहासपुराणः पञ्चमो वेदः" इत्यत्र इतिहासपदोक्तानां भारतपञ्चरात्रमूलरामायणानां मध्ये भारतपञ्चरात्रयोरिव मूलरामायणस्यापि पूर्वकल्पीयस्यैव हयास्यास्यनिःसृतत्वम् । तस्यैव कालबलेन लीनतायां ब्रह्मरुद्रादिभिरर्थितो भगवान् हयास्यः पुनस्तत्सदृशमेव मूलरामायणं निर्मितवान् । एतच्चोक्तमात्स्यपुराणवचनेन सिद्धमिति ।

केचित्तु, बृहदारण्यके हयग्रीवस्येतिहासकर्तृत्वमुक्तम् । इतिहासश्च भारतं पञ्चरात्रं, मूलरामायणं चेति त्रिकरूपः । तत्र भारतस्य व्यासकृतत्वात् पञ्चरात्रस्य नारायणकृतत्वात् परिशेषेणेतिहासशब्दार्थस्य मूलरामायणस्य हयग्रीवकृतत्वं सिद्ध्यतीति भावेन मूलरामायणं हयग्रीवरूपेण कृतमित्युक्तमित्याहुः । भागवतस्य पुराणान्तर्गत्या पुराणशब्देन गृहीतस्यापि पुनर्ग्रहणं न प्रयोजनवदित्याशङ्क्य नात्र भागवतशब्देन "ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः" इति शास्त्रोक्तं प्रसिद्धं भागवतं गृह्यते । येनाप्रयोजकत्वशङ्का । किन्तु भागवतान्तरमेव । तच्च "पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय" इति वचनादादिभागवतमेवेति भावेनाऽह **आदिभागवतं मूलरूपेणेति** ॥

केचित्तु "पुराणं भागवतम्" इत्यत्र पुराणशब्दः पुरातनार्थको नूतनभागवतव्यावर्तनायोपात्त इति भावेन आदिभागवतमित्युक्तमित्याहुः । भारतं पञ्चरात्रं मूलरामायणमादिभागवतं चेति चत्वारो ग्रन्था व्यासनारायणहयग्रीवमूलरूपैर्यथासङ्ख्यं निर्मिता इत्युक्त्वा "पुराणं भागवतं च" इत्यत्र पुराणशब्देनाष्टादशपुराणानां ग्रहणे भागवतशब्देन वैयर्थ्यपरिहारायाऽदिभागवतग्रहणे च भारतपञ्चरात्रमूलरामायणपुराणादिभागवतानां पञ्चानां ग्रन्थानां मध्ये भारतस्य पुराणानां च व्यासकृतत्वं सुप्रसिद्धम् । इत्तरत्तु यथाटीकं ज्ञातव्यमिति व्याख्यातवन्तः स्वामिनः । नरहरितीर्थश्रीमच्चरणास्तु "अन्यावताररूपैः" इत्येतद् हयास्यकपिलादिरूपैरिति व्याख्यातवन्तः ।

भावप्रदीपिकायां तु व्यासोऽभूत्वा मूलरूपेण च तेन व्यासरूपेण चान्यावताररूपैश्चेत्युक्त्वा अन्यावताररूपाणि नारायणहयग्रीवादीनीति व्याख्याय मूलरूपेणाऽदिभागवतं चक्रे । पञ्चरात्रस्य वक्ता नारायणः । मूलरामायणं हयशीर्षश्चकारेत्युक्तम् ।

"ब्रह्माऽपि तन्न जानाति" इत्ययुक्तम् । "दुर्विज्ञेयमतः सर्वैर्भारतं तु सुरैरपि" इति सर्वविद्यार्थत्वमभिधाय सकर्तृकत्वस्य साधिकारिकत्वस्य च सम्पत्तये "स्वयं व्यासो हि तद्वेद ब्रह्मा वा तत्प्रसादतः" इति भारतार्थस्याऽपादित भगवत्प्रसादेन ब्रह्मणा चतुर्मुखेन ज्ञातव्यत्वाभिधानादित्यत आह **ब्रह्मा बृहस्पतिरिति** । "बृहस्पतिः पुरोधाश्च ब्रह्मा च ब्रह्मणस्पतिः" इति तृतीयतात्पर्योक्तेर्नात्र ब्रह्मशब्देन चतुर्मुखो गृह्यते । येनोक्तानुपपत्तिः स्यात् । किन्तु बृहस्पतिरेवेति भावः । तथा च तैत्तिरीयब्राह्मणे "बृहस्पतिर्देवानां ब्रह्मा । अहं मनुष्याणाम्" इति । अनेनैव अपिपदसमुच्चेयं वक्तुं बृहस्पतिरपीति टीकोक्तिः । अन्यथा ब्रह्मशब्दार्थमात्रवर्णनाभिप्रायेऽपिपदानुवादो व्यर्थ इति व्याचक्षाणाः परास्ता इति स्वामिनः । तेषामयं भावः । ब्रह्मेत्यनुवादेन बृहस्परीतिरिति व्याख्यानम् । समुच्चेयाभिधानाभिप्राये रुद्रादिरपीत्युक्तिप्रसङ्गात् । "ब्रह्मा वा तत्प्रसादतः" इत्युक्तप्रमाणविरोधाच्च । अपिपदानुवादस्तु न तस्य यत्र क्वाप्यन्वयोऽपि तु यथान्यासमिति वक्तुमिति । यद्यपीन्द्रादयोऽपि न भारतार्थं कृत्स्नं जानन्ति । तथाऽपि "बृहस्पतिसमौ मतौ" इत्यादिलोकप्रसिद्ध्यनुसारेण बृहस्पतौ महामतिमत्तामभ्युपगम्योक्ततात्पर्यवचनेन ब्रह्मशब्दस्य तत्र रूढिमङ्गीकृत्य च भाष्ये बृहस्पतिरभिसंहितः । अपिपदं तु इतरे न जानन्तीति किमु वक्तव्यमित्येतत्तात्पर्यकमिति भावेन टीकायामेवमुक्तम् ।

ननु बृहस्पतिर्न जानातीत्यप्ययुक्तम् । "ईषत् सर्वोऽपि जानति" इत्युत्तरवाक्यविरोधादित्यत आह **कृत्स्नमिति शेष इति** । ननु स्वयं व्यासो वेद । तत्प्रसादेन चतुर्मुखोऽपि वेदेति व्यासचतुर्मुखयोः कृत्स्नार्थविदनावेदनेनेषदित्युक्त्यनुपपत्तिरित्यत आह **सर्वोऽपि जन इति** । इतरो जननादिदोषवदधिकारिवर्ग एवेषज्जानाति । न पुनर्व्यासचतुर्मुखावप्यपिपदसमुच्चेयाविति भावः । "ज्ञा अवबोधने" इत्यस्य जाभावे श्नाविकरणे जानातीत्येव रूपम् । विकरणह्रस्वता तु छान्दसीति भावेनाऽह **जानति जानातीति** । केचित्तु जानते इति पठित्वा तत्र वचनव्यत्ययश्छान्दस इति जानातीति व्याख्यानमित्याहुः ।

ननु "बह्वर्थमृषयस्तत्तु भारतम्" इत्यत्र यद् बह्वर्थग्रन्थजातं तद् भारतं प्रवदन्तीति प्रतीयमानमनुपपन्नम् । "अनन्तार्थविशेषिणो वेदाः" इत्यादौ "अनन्तोऽर्थः प्रकटितस्त्वयाऽणौ भाष्यसङ्ग्रहे" इत्यादौ च वेदादेरपि बह्वर्थत्वावेदनेन भारतत्वप्रसङ्गात् । अतो वक्तव्यं भारतं बह्वर्थं प्रवदन्तीति सम्बन्ध इति । तत्र शङ्क्यते । भारतं बह्वर्थयुक्तं प्रवदन्तीत्युक्ते बहवोऽर्था ऋषिभिर्ज्ञातव्याः स्युः । तदज्ञाने तत्प्रवदनस्यायोगात् । विशिष्टगामिनो विधेर्विशेषणेऽपि प्रसरस्य लम्बकर्णमानयेत्यादौ दृष्टेः । तथा च "ईषत् सर्वोऽपि जानति" इति स्ववचनविरोध इत्यत आह

**बह्वर्थमिति प्रवदन्तीति** । एवमितिशब्दमध्याहरता भारतप्रवदने बह्वर्थत्वं प्रकार इत्युक्त्या भारते बहवोऽर्थास्सन्ति, तांश्च सर्वज्ञो भगवान् आपादितवेदव्यासप्रसादो विरिञ्चो वा जानीयादिति प्रवदन्तीत्यतो नोक्तविरोध इत्युक्तं भवति । पुराणान्तरस्थे "भारतं चापि कृतवान्" इति श्लोके समुच्चायकेन चापीत्यनेन भाष्योदाहृतनारायणाष्टाक्षरकल्पप्रकृतपुराणादेः समुच्चयव्याख्यानस्याचतुरस्रत्वात् समुच्चेयमाह **पूर्वोक्तेनेति** । स्कान्दपुराण एव पूर्वोक्तेन व्यासकृतग्रन्थान्तरेणेत्यर्थः । "दशावरार्थम्" इत्यत्र दशभ्योऽवरा दशावरा इति व्याख्याने "यस्मिन् दशार्थाः सर्वत्र" "दशार्थाः सर्वभारते" इत्यादिस्मृतिविरोध इत्यत आह **दशावरा येष्विति** । दशाधिका बहवोऽर्था भारते सन्ति । अवरपक्षे दशार्थत्वम् । न तु दशार्थेभ्यो न्यूनार्थत्वं द्रष्टव्यम् । "यस्मिन् दशार्थाः सर्वत्र" "दशार्थाः सर्वभारते" इत्यादिवचनान्यप्युक्ततात्पर्याणि व्याख्यातव्यानीति भावः ।

यद्यपि "भारतार्थस्त्रिधा प्रोक्तः" इति निर्णये भारतस्यार्थत्रयवत्त्वं प्रतीयते । तथाऽपि तत्रैव "मन्वादि केचिद् ब्रुवते ह्यास्तीकादि तथाऽपरे । तथोपरिचराद्यन्ये भारतं परिचक्षते । धर्मो भक्त्यादिदशकः" इत्यादिना मन्वास्तिकौपरिचररूपसर्वप्राण्यवगाह्यानवगाह्यरूपार्थत्रयविवक्षया "भारतार्थस्त्रिधा प्रोक्तः" इत्युक्तम् । अत्र पुनरौपरिचररूपसर्वप्राण्यनवगाह्यार्थविवक्षयैव भारतस्थानि सर्वाण्यपि पदानि प्रत्येकं भगवत्सामर्थ्यमभिदधति दशार्थानीत्युच्यते । तथा चोक्तम्– "नारायणस्य नामानि सर्वाणि वचनानि तु । तत्सामर्थ्याभिधायीनि" इति । अतो न विरोधः । अत एव "यस्मिन् दशार्थाः सर्वत्र न ज्ञेयाः सर्वजन्तुभिः" इत्युक्तमित्याहुः । यस्येत्यनन्तरं तदिति शेषः । तस्य च "दशावरार्थम्" इति भाष्येण सम्बन्धः । नन्वेवं विग्रहप्रदर्शनं दशार्थापेक्षयाऽधिकार्थत्वे युक्तं स्यात् । तदेव कथमिति चेदुच्यते । भारतान्तर्गतविष्णुसहस्रनाम्नां "विष्णोः सहस्रनामापि निरन्तरशतार्थकम्" इति वचनेन शतार्थत्वावेदनात् "सहस्रनामतस्तुल्यं रामनाम वरानने" इति रामनाम्नः सहस्रनामसमसङ्ख्यार्थत्वावेदनाच्च दशार्थाधिकार्थत्वं युक्तमिति ।

ननु 'विष्णुबोधकम्' इत्यत्र अन्यसमासानुशासनाभावात् षष्ठीतत्पुरुषसमास इति वक्तव्यम् । नैवं युज्यते । बोधकमित्यस्य बुधेः कर्तर्येव निष्पन्नतया "तृजकाभ्यां कर्तरि" कर्त्रर्थकतृजकाभ्यां षष्ठी न समस्यते, अपां स्रष्टा, सतामर्चक इति निषेधादित्यत आह **याजकादेरिति** । यद्यपि याजकादिगणो वृत्तौ पठितः । तथाऽपि "प्रयोगप्राचुर्यदर्शनं तद्विशेषकम्" इति महाभाष्यप्रयोगस्य "जनिकर्तुः प्रकृतिः", "तत्प्रयोजको हेतुश्च" इति निर्देशेन "तृजकाभ्याम्" इति निषेधस्य अनित्यत्वज्ञापनात् समास इति कैयटेन समर्थितत्वात् कैयटवचनं चाऽकृतिगणत्वज्ञापकमिति भावेन 'आकृतिगणत्वात्' इत्युक्तमित्याहुः । उपलक्षणमेतत् । शेषषष्ठ्या समासे न कोऽपि दोषः ।

तृजकाभ्यामित्यनेन कर्मणि या षष्ठी तस्याः समासनिषेधात् । अत एव 'ब्राह्मणकारकम्' इति भाष्ये शेषषष्ठ्या समास इति कैयट इति च समाधानमवधातव्यम् ।

आकृतिगणत्वस्य प्रसाध्यत्वादधुनातनवैयाकरणैरनङ्गीकाराच्च पक्षान्तरमाह **करणार्थेति** ॥ बुध अवगमन इति धातोर्बुद्ध्यतेऽनेनेति करणार्थे "हलश्च" इति घञ्प्रत्यये लघूपधलक्षणे गुणे च लेख इतिवन्निष्पन्नेन बोधशब्देन विष्णुशब्दस्य षष्ठीसमास इत्यर्थः ।

ननु "हलः" इति सूत्रे "पुंसि सञ्ज्ञायाम्" इति सूत्रात् सञ्ज्ञायामित्यनुवर्तते । अत एव लेखो वेद इत्युदाहृतम् । न चायं बोधशब्दः सञ्ज्ञा । तत्कथमत्र तेन घञ् भविष्यतीति चेन्न । "अवे तृस्त्रोर्घञ्" इनि पूर्वसूत्रवृत्तौ कथमवतारो नद्याः ? न हीदं सञ्ज्ञेत्याक्षिप्य "घः प्रायेण" इत्यतः प्रायेण ग्रहणानुवृत्तेरसञ्ज्ञायामपि भवतीति समाधानेनेहाप्यसञ्ज्ञायामपि घञुपपत्तेरिति केचित् । अन्ये तु "कृत्यल्युटो बहुलम्" इति बहुलग्रहणादसञ्ज्ञायामपि घञ् भविष्यतीत्याहुः । "अकर्तरि च कारके सञ्ज्ञायाम्" इति करणे घञ् । यद्यपि सञ्ज्ञायां प्रत्ययः शिष्टः । तथाऽपि चकारस्य सञ्ज्ञा-व्यभिचारार्थत्वान्नानुपपत्तिरिति स्वामिनः । करणार्थकघञन्तेनेत्यपि पाठो दृश्यते । नन्वेवं प्रत्यया-ङ्गीकारे ण्वुलोऽभावात् कथं बोधकमिति श्रवणमित्यत आह **पश्चादिति** । घञ्प्रत्ययान्ततया परिनिष्ठितादिति यावत् । **अल्पाद्यर्थे** अल्पाज्ञाताद्यर्थे । "अल्पे", "अज्ञाते" इति सूत्रद्वयविहित-कप्रत्यय इत्यर्थः । भारतेनापि न विष्णुमहिमानोऽशेषविशेषाकारेण प्रतिपादयितुं शक्याः । "अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कथञ्चन" इत्यादेः सामान्येन बोधनाभिप्रायकत्वात् । बोध्यमानाश्च विशेषाः सर्वप्राणिनामनवगाह्या इति ज्ञापनाय कप्रत्ययाश्रयणादिति भावः । आदिपदेन स्वार्थ इति ग्राह्यम् । अस्मिन् पक्षे क इत्यस्य "न सामिवचने" इति ज्ञापकसिद्धः कप्रत्यय इत्यर्थः इति स्वामिनः । अत्र सर्वत्र पक्षे "स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते" इति बोधशब्दस्य घञन्त-तया बोधकशब्दस्यापि पुंस्त्वेन भाव्यमिति शङ्का "क्वचिदतिवर्तते च । गुडकल्पा यवागूः" इति भाष्यकारवचनादभिधेयलिङ्गतया बोधकमिति नपुंसकत्वमिति परिहरणीया । वृत्तावपि "कुटीशमी-शुण्डाभ्यो रः" इत्यत्र ह्रस्व इत्यनुवर्त्य ह्रस्वा कुटी कुटीरः शुण्डार इत्युदाहृत्य "स्वार्थिकत्वेऽपि प्रत्ययस्य पुलिङ्गता लोकाश्रयत्वाल्लिङ्गस्य" इत्युक्तम् । ततोऽपि नपुंसकत्वं युक्तमिति । क्वचित्तु स्वार्थे क इति पाठः । भगवद्बोधनं च न सङ्कीर्णतया । अपि तु निकृष्टतयेति ज्ञापनाय केवलमित्युक्तं भाष्ये । **परोक्षार्थम्** अत्यन्तगूढार्थम् । **विवरणमिति** । वेदादित्यवध्युक्तेर्विवरणत्वम् । तच्चोत्तमत्व-मुक्तमप्यौपचारिकमिति शङ्काव्युदासार्थमिति न पुनरुक्ततेति भावः । **एतेषु वाक्येषु** "लोकेशा ब्रह्मरुद्राद्याः" इत्यादि "वेदादप्युत्तमं तु यद्" इत्यन्तेषु वचनेषु पर्यालोचितेष्वित्यर्थः । **यथासम्भव-**

**मिति** । ''लोकेशा ब्रह्मरुद्राद्याः प्रार्थयामासुर्देवेशं पुरुषोत्तमम्'' इत्यनेन, ''ब्रह्माद्यैः प्रार्थितो विष्णुः'' इत्यनेन च ''ब्रह्मरुद्रेन्द्रादिभिरर्थितः'' इत्यस्य, ''संसारे क्लेशिनं जनम्'' इत्यनेन ''संसारे क्लिश्यमानानाम्'' इत्यस्य, ''वेदार्थाज्ञम्'' इत्यनेन ''इष्टानिष्टप्राप्तिपरिहारसाधनादर्शनाद् वेदार्थाज्ञानाच्च'' इत्यस्य, ''अधिकारवर्जितं च स्त्रियादिकम्'' इत्यनेन ''वेदानधिकारिणां स्त्रीशूद्रादीनां च'' इत्यस्य, 'अवेक्ष्य' इत्यनेन 'अवलोक्योत्पन्नकृपैः' इत्युक्तप्रकारेण 'नष्टधर्मज्ञानलोककृपालुभिः' इत्यस्य, ''ततः प्रसन्नः'' इत्यनेन 'ज्ञानप्रदर्शनाय' इत्यस्य, ''भगवान् व्यासो भूत्वा'' इत्यनेन ''भगवान् व्यासोऽवततार'' इत्यस्य अवधारणार्थकचशब्दशिरस्केन 'भूत्वा' इत्यनेनावतारानन्तरमेवेत्यर्थकस्य 'ततश्च' इत्यस्य, ''वेदानुक्तार्थभूषितम् । केवलेनाऽत्मबोधेन दृष्टम्'' इत्यनेन ''तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्ताम्'' इत्यस्य, '' वेदार्थसंयुतम्'' इत्यनेन ''सर्ववेदाद्यर्थोपबृंहिताम्'' इत्यग्य, ''वेदादपि परम्'' इत्यनेन ''तदनुक्तेः'' इत्यस्य, ''ब्रह्माऽपि तन्न जानाति'' इत्यादिना ''सर्वप्राणिनामवगाह्यानवगाह्यरूपाम्'' इत्यस्य, ''यस्मिन् दशार्थाः सर्वत्र न ज्ञेयाः सर्वजन्तुभिः । दशावरार्थं सर्वत्र'' इत्यनेन ''अनवगाह्यरूपाम्'' इत्यस्य, ''ईषत् सर्वोऽपि'' इत्यनेन ''अवगाह्य'' इत्यस्य, ''केवलं विष्णुबोधकम्'' इत्यनेन ''केवलभगवत्स्वरूपपराम्'' इत्यस्य, ''परोक्षार्थम्'' इत्यनेन ''परोक्षार्थम्'' इत्यस्य, ''भारतं चक्रे'', ''भारतं स चकार ह'', ''भारतं चापि कृतवान्'' इत्यनेन ''महाभारतसंहितामचीक्लृपत्'' इत्यस्य चावगमाद् यथासम्भवं सर्वोऽपि पूर्वोक्तार्थः प्रमाणसंवादीति भावः । ''अवसीयते'' इति भाष्ये कर्मप्रत्यायनाय ''यदि विद्यात्'' इत्यादेर्भारतान्तर्गतत्वज्ञापनाय चाऽह **यदि विद्यादित्यादि भारतेति** । तेन तद्वाक्येत्यत्र तच्छब्दो भारतार्थ इत्युक्तं भवति ।

ननु चतुर्वेदानिति कथम् ? ''तद्धितार्थोत्तरपदसमाहारे च'' तद्धितार्थे विषये उत्तरपदे च परतः समाहारे वाच्ये दिग्वाचिसङ्ख्यावाचिशब्दावैकार्थ्येन समस्येते, इति सूत्रेण अतद्धितार्थत्वादनुत्तरपदपरत्वाच्च समाहारे वाच्ये चतुर्णां वेदानां समाहार इति विगृह्य समासे ''सङ्ख्यापूर्वो द्विगुः'' इति द्विगुसंज्ञायां ''अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः'' इति स्त्रीत्वे ''द्विगुरेकवचनम्'' इति एकवद्भावे ''द्विगोः'' इति ङीपि च सति चतुर्वेदीमिति भवितव्यत्वादित्यत आह **विशेषणसमास इति** ॥ विशेषणसमासत्वमेव स्फोरयितुमुक्तं **चत्वारश्च ते वेदाश्चेतीति** ॥ एवशब्दव्यावर्त्यं **न द्विगुरिति** ॥ तेनोक्तरीत्या चतुर्वेदीमिति स्यादिति चोद्यानवकाश इति वाक्यशेषः ।

अयं भावः । ''तद्धितार्थ'' इति सूत्रेण समाहारप्राधान्य एव समासो विहितो न तु समाहृतप्राधान्ये । ''समाहारे वाच्ये'' इति व्याकरणात् । पञ्चपूलीति समास एकवचनदर्शनाच्च । प्रकृते च समाहारप्राधान्यस्याविवक्षितत्वात् ''विशेषणं विशेष्येण बहुलम्'' इति सूत्रविहितविशेषणसमास

एवेष्यते । न च विशेषणसमासत्वे सङ्ख्यापूर्वकत्वाद् द्विगुसञ्ज्ञा स्यादेवेति वाच्यम् । ''तद्धितार्थे'' इत्यत्रोक्तस्त्रिविधः सङ्ख्यापूर्वो द्विगुसञ्ज्ञः स्यादित्यर्थस्य वैयाकरणैरभ्युपगतत्वादिति । ननु ''दिक्सङ्ख्ये सञ्ज्ञायाम्'' इति सञ्ज्ञायामेव सङ्ख्यावाचिशब्दस्य विशेषणसमास इति नियमितत्वादत्रासञ्ज्ञात्वात् कथं समास इति चेन्न । ''पूर्वकालैकसर्व'' इत्यत्रैकशब्दग्रहणेन सञ्ज्ञायामिति नियमस्यानित्यत्वज्ञापनादिति केचित् । अन्ये तु ''पूर्वकालैक'' इति सूत्रे वैयाकरणैरेकशब्दो ''दिक्सङ्ख्ये सञ्ज्ञायाम्'' इति नियमात् प्राप्त्यर्थमेवेत्यङ्गीकारेणैकशब्दग्रहणस्य ज्ञापकत्वाभावोऽत एवैकशाटीत्युदाहरणमिति दूषयित्वा, अन्वर्थत्वेऽपि समुदायरूढ्या पञ्चाऽम्रास्सप्तर्षय इतिवच्चतुर्वेदशब्दस्य सञ्ज्ञात्वानपायात् । असञ्ज्ञात्वेऽपि बहुलग्रहणबलेनैव समासोपपत्तेश्च युक्त उक्तसमास इत्याहुः । अपरे तु ''दिक्शब्देभ्य उत्तरस्य तीरशब्दस्य तारादेशो वा वक्तव्यः'' इति वार्तिकोदाहरणे दक्षिणतारं दक्षिणतीरमित्यत्र यदि ''दिक्सङ्ख्ये सञ्ज्ञायाम्'' इति नियमोऽभिमतस्तर्हि दक्षिणतीरशब्दस्य सञ्ज्ञात्वपक्षे दिक्शब्देभ्यः उत्तरस्येति वचनमयुक्तं स्यात् । दक्षिणतीरशब्दस्य सञ्ज्ञात्वापातश्च । तेन ज्ञायते ''दिक्सङ्ख्ये सञ्ज्ञायाम्'' इति न नियम इति । तथा च प्रकृतेऽप्यसञ्ज्ञात्वेऽपि चत्वारश्च वेदाश्चेति विशेषणसमासो नानुपपन्न इति वदन्ति ।

यत्तु ''विशेषणसमास एवायम्'' इत्यनेन ''विशेषणं विशेष्येण बहुलम्'' इत्यस्य विवरणरूपे समानाधिकरणाधिकारे ''शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च'' इति वार्तिके शाकप्रियः पार्थिवः शाकपार्थिवः, एकत्वयुक्तो वीर एकवीरः, त्रित्वविशिष्टा लोकास्त्रिलोका इत्यत्र योऽयमुत्तरपदलोपी समासो विहितस्तस्य ग्रहणम् । तथा च चतुष्ट्वयुक्ता वेदाश्चतुर्वेदा इति समास इति । तत्तु ''चत्वारश्च ते वेदाश्च चतुर्वेदाः'' इति टीकाक्षरास्वारस्यादचतुरस्रम् ।

''अङ्गानि चोपनिषदश्च'' इत्यनन्तरं तासां समाहार इत्युपस्कर्तव्यमिति केचित् । विग्रहस्थचशब्द एव समाहारार्थ इति नोपस्कार इत्यपरे । अत एव चाऽह **अङ्गोपनिषदमिति समाहारद्वन्द्व इति** । एतदङ्गीकारप्रयोजनमाह **तेनेति** । चवर्गान्ताद् दषहान्ताच्च द्वन्द्वात् टच्प्रत्ययो भवति समासान्तः स चेद् द्वन्द्वः समाहारे वर्तते नेतरयोग इति सूत्रार्थः । ''अकारः'' इति मुक्तानुबन्धप्रत्ययग्रहणं टीकाकारीयम् अनुबन्धप्रयोजनस्य प्रकृतेऽविवक्षितत्वात् । **ततो बहुव्रीहिरिति** । ''तेन सहेति तुल्ययोगे'' समाने सम्बन्धे द्योतकत्वेन वर्तमानं सहेत्येतत् तृतीयान्तेन समस्यते । स बहुव्रीहिः । ''वोपसर्जनस्य'' इति सहशब्दस्य सभावे अङ्गोपनिषदेन सह वेदनीयाः साङ्गोपनिषदाः, तानिति बहुव्रीहिः, टच्प्रत्ययोत्पादनानन्तरमित्यर्थः ।

ननु चलतेरकर्मकत्वात् कथमत्र मामिति कर्मान्वय इत्यत आह **प्रचालयिष्यतीति** । यद्यपि चल गताविति धातुर्गत्यर्थः । गत्याद्यर्थाश्च धातवः सकर्मकाः । "गत्यर्थाकर्मक" इति सूत्रात् । तथा च प्रकृते मां प्रचलिष्यति प्राप्स्यतीत्यर्थाभ्युपगमे नानुपपत्तिः । चोरो मां प्राप्स्यतीति बिभेति देवदत्त इति लोके व्यवहारात् । तथाऽपि नासावत्र प्राप्त्यर्थः । व्याकुलीभावस्यात्यन्तमप्राप्तेः । किन्तु कम्पनार्थः । "कम्पने चलिः" इति सूत्रात् । तत्र च कम्पत इत्यत्रेव चलिष्यतीत्यत्रापि कर्मान्वयायोगात् तदन्वयायान्यार्थत्वे वक्तव्येऽत्यन्तविलोलनस्फोरणाय चालयिष्यतीति व्याख्येयम् । तथा च अन्तर्भावितण्यर्थश्चलतिरत्रेति न कर्मान्वयानुपपत्तिरिति भावः । यद्यपि "कम्पने चलिः" इति मित्त्वस्मरणात् "मितां ह्रस्वः" इति ह्रस्वत्वे चलयिष्यतीति वक्तव्यम् । तथाऽपि "वा चित्तविरागे" इत्यतो वाग्रहणानुवृत्तेर्ह्रस्वविकल्पे "चालयन् पृथिवीं सर्वाम्" इति प्रयोगः साधुरिति शरणदेववचनादत्रापि चालयिष्यतीति दीर्घः साधुरिति ज्ञातव्यम् ॥ **तत्प्रत्यय इति** । 'तद्धिताः' इति बहुवचनज्ञापितस्तत्प्रत्ययो भारशब्दान्निष्पादनीय इत्यर्थः । "पर्वमरुद्भ्याम् तप्" इति वक्तव्ये तप् पर्वमरुद्भ्याम्" इति पाठे प्रत्ययस्याऽदावुच्चारणाद् वाऽत्र तप्प्रत्यय इति केचित् ।

ननु "यदि विद्यादित्यादिभारतवाक्यपर्यालोचनया चोक्तं तदवसीयते" इति वाक्ये भारतप्रामाण्यदुर्गमार्थत्वादि तदित्यनेनाभिसंहितम् । नैतद् युक्तम् । भारतप्रामाण्ये विप्रतिपद्यमानं प्रति तद्वाक्येन तत्साधनस्यानुचितत्वादित्यत आह **भारतप्रामाण्यमङ्गीकृत्येति** । **इतरत्** विषयप्रयोजनादि दुर्गमार्थत्वं च । वेदार्थज्ञानोपायत्वादिकं वा । **इदमुक्तं** भारतवाक्यमुदाहृतम् । पर्यालोचनाशब्दार्थविवेचनायोक्तम् **अनुसन्धानेति** । उपपत्त्यनुचिन्तनेत्यर्थः । **दर्शयिष्यति** "कथमन्यथा भारतनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः" इत्यनेन । ऋषिसम्प्रदायशब्दयोरर्थं वदन्नेव हेतौ चशब्दान्वयमाह **ऋषीणामिति** । सम्प्रपूर्वाद् दा दान इति धातोर्भावे घञि "आतो युक्चिण्कृतोः" इति युकि च सम्प्रदायशब्द उपदेशपरम्परार्थ इति भावेनोक्तं **शिष्येभ्य इति** । शिष्याणां श्रेयसे व्याकरणाच्च इत्यर्थः । अत्र साध्यार्पणम् **एतदवसीयत इति** । ऋषिसम्प्रदायाच्च भारतप्रामाण्यविषयप्रयोजनदुर्गमार्थत्वाद्यवसीयत इत्येतदुपपादयति **नहीति** । शिष्याणामिति प्रामाण्यम्, श्रेयस इति विषयप्रयोजनाभिसम्बन्धः, व्याकुर्युरिति दुर्गमार्थत्वं च विभावितम् । नह्यप्रमाणमतिरोहितार्थं च शासनीयविनेयेषु व्याकुर्वत इति युक्तमिति । पुराणं च ग्रन्थान्तरं चेति विग्रहभ्रमं निरसितुमुक्तम् **पुराणलक्षणेति** । वक्ष्यति "ग्रथान्तरगतत्वाच्च" इत्यत्र । **प्रदर्शयिष्यते** "कथं चान्यस्य" इत्यत्र । भाष्यस्थादिशब्दार्थो **व्याख्यानेति** । अत्राऽदिपदाच्छ्रवणसङ्ग्रहः । अक्षरोच्चारणपूर्वकमर्थग्रहणमध्ययनम् । तद्विनाऽर्थग्रहणं श्रवणमिति तयोर्भेद इति केचित् । गुरुच्चरणानूच्चारणमध्ययनम् । औपदेशिकवाक्यार्थावबोधः श्रवणमित्यपरे ।

ननु व्याख्यानं नाम शिष्येषु प्रदानम् । तथा च "ऋषिसम्प्रदायात्" इत्यनेन प्राप्तमेतदिति शङ्कते **ऋषीति** । **गतं** प्राप्तम् । गृहस्थत्वेऽप्यृषीणां तद्व्यवहारस्यान्यविषयत्वमयुक्तम् । मोक्षार्थ-व्यवहारस्य तथात्वानौचित्यादित्यत उक्तम् **परार्थ इति** ॥ शिष्यार्थ इत्यर्थः । माऽभून्मोक्षार्थो व्यवहारः । तथाऽपि परार्थव्यवहारोऽन्यविषयोऽपि सम्भाव्यते गृहस्थत्वादिति सम्भावनायामपि-शब्दः । ऋषयो गृहस्था अपि कथं शिष्याणां श्रेयसे प्रामाण्यादिरहितं व्याकुर्युरित्यतः कथञ्चि-दित्युक्तम् । भगवदाज्ञाकारिदधीच्यादिव्यवहारस्यान्यविषयत्वदर्शनादिति भावः । **स्वार्थः** मोक्षार्थः । ज्ञापनार्थत्वादिति वदन् सार्थकमर्थतः पुनर्वचनमदोषायेत्यभिप्रैति । अत्रोपष्टम्भकमाह **अत एवेति** । यत एवमृष्यादिव्यापारः सम्भावितपरार्थताकः, नारदव्यापारस्तु मोक्षार्थोऽत एवेत्यर्थः । सम्प्रदाय-शब्दस्य प्रदानार्थत्वादध्ययनस्य च स्वार्थत्वेनोक्तार्थसूचनादिति भावः ।

**भाष्यम्**

**कथमन्यथा भारतनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः । प्रसिद्धश्च सः अर्थः ।**

*प्र०दी०*— तद्वाक्यपर्यालोचनयेत्युक्तम् । कीदृशी सा पर्यालोचनेत्यतो लेशेन दर्शयति— **कथमिति** । महत्त्वादिति वाक्ये भारतशब्दं निरुच्य तज्ज्ञानात् सर्वपापक्षयोऽभिधीयते । न तु भारतस्योत्तमत्वं साक्षात् । तथापि पर्यालोचनया गम्यत एव । यथा हि नारायणादिभगवन्नाम-निरुक्तिज्ञानाद्भवन् पापक्षयोऽभिधेयस्य सर्वोत्तमत्व एव तथायमपि । अन्यथा भारतस्य सर्व-शास्त्रोत्तमत्वाभावे । कथं तच्छब्दनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः स्यात् । शब्दान्तरनिरुक्तिज्ञानेन तदभावादिति ।

स्यादेतदनुमानम्, यदि हेतूकृतोऽर्थः प्रमितः स्यात् । न च एवम् । अयथार्थप्रशंसाया अपि दर्शनेन वचनस्यान्यथासिद्धेरित्यत आह— **प्रसिद्धश्चेति** । धियां तावत् प्रामाण्यं स्वतः । बाधकादप्रामाण्यम् । न चेह तदस्ति । अर्थवादानां चाबाधिते स्वार्थे प्रामाण्यमस्त्येव । अतो हेतूकृतो योऽर्थो भारतशब्दनिरुक्तिज्ञानेन सर्वपापक्षयः स प्रसिद्धः प्रमित एवेति । सर्वपापक्षये तदैव मुक्तिः स्यादिति चेत् तर्हि सर्वशब्दार्थ एव सङ्कोच्यताम् । न तु सर्वो वाक्यार्थः । एवमन्यान्यपि भारत-वाक्यानि पर्यालोचनीयानि । तथाहि । यदि विद्यादिति वाक्ये यद्यपि भारतं नोक्तम् । तथापि उत्तरत्रेतिहासशब्देन गृहीतत्वात् पुराणपदं तदुपलक्षणमिति ज्ञायते । न ह्यनुक्तस्योपपादनं युक्तम् । ततश्च भारतस्य वेदार्थज्ञानोपायताऽनेन सिद्ध्यति । अचेतनत्वपर्यालोचनायां बिभेतीत्येतत् बिभेतीव स्वार्थमन्तर्धापयतीति ज्ञेयम् । यद्यपि मन्वादीत्येतदापाततो न प्रकृतं कमप्यर्थं प्रत्याययति । तथापि

भगवत्पादैरन्यत्रोदाहृतस्य एतद्व्याख्यानरूपवाक्यस्यानुसन्धाने भारतस्य भगवत्परत्वादि गमयति। तुलारोपणं भारवत्त्वं च प्रतिनिधिद्वारेणोपपादनीयम्। यदिहेत्यस्य स्तुतित्वोपपत्तये तदेवान्यत्रेति व्याख्याने सर्ववेदाद्यर्थोपबृंहितत्वादिकं सिद्ध्यति। विराटेत्येतत्पूर्वोत्तरवाक्यानुसन्धाने भारतस्य कल्पतरुरूपतां प्रतिपादयत् सर्वपुरुषार्थहेतुतां गमयतीति।

*प०टी०*— न भारतं हरिपरम्। 'यस्मिन्नृणां ग्राम्यकथानुवादैर्मतिर्गृहीता न हरेः कथायाम्' इत्युक्तत्वादित्यत आह **कथमिति**। **अन्यथा** हरिकथां विना ग्राम्यकथानुवादित्व इत्यर्थः। **निरुक्तिमस्येति**। भारतमिति निरुक्तिज्ञानादुच्यमानः पापक्षयादिरुपचरितः किं न स्यात्। इत्यत आह **प्रसिद्धश्चेति**। सोऽर्थः पापक्षयाख्यो जनमेजयादौ प्रसिद्धश्चातो न वचनमुपचरितार्थमित्यर्थः। निरुक्तिज्ञानस्यापि भारतज्ञानमन्तरेणासम्भवान्नासङ्गतिः।

*न०टी०*— एतेनैतत्सुनिरस्तम्। यद्भ्रान्तैरुच्यते। 'भारतेऽधिगम्यमाने ग्राम्यसुखानुवादे एव मातिरवरुध्यते। न हरिकथायाम्' इति। तथा सति तन्नामनिरुक्तिज्ञानात् सर्वपापक्षयो न स्यादित्याह **कथमन्यथेति**। न केवलं तन्नामनिरुक्तिज्ञानात् पापक्षयो भवतीति पावनिकः, किन्त्वानुभाविकोऽपि जनमेजयादीनामिति भावेनाह **प्रसिद्धश्चेति**।

*भा०दी०*— एवं दृष्टान्तं स्वयमुक्त्वा वाक्यार्थमाह **तथायमपीत्यादिना**। अयमपीत्यस्य सर्वपापक्षय इत्यनेनान्वयः। **अन्यथेत्यस्यानुवादः भारतस्येत्यादि** व्याख्या। भारतमितिपदं अत्युत्तमाभिधेयकं सर्वपापक्षयहेतुज्ञानविषयनिरुक्तिकत्वात् नारायणादिनामवत् इत्युक्तं भवति। **अयथार्थेति**। गङ्गास्नानेन वा मुक्तिरित्यादाविति भावः। **न चेहेति**। निरुक्तिमस्य यो वेदेत्यादिवाक्ये तद्बाधकं नास्तीत्यर्थः। वाक्यार्थमाह **अतो हेतूक्त इत्यादिना**। **पुराणपदमिति**। न चेत् पुराणमित्यत्र अनुपदमित्यर्थः। **अन्यत्रेति**। भारततात्पर्ये स्तुतित्वोपपत्तय इति भारतमाहात्म्योक्तिपरत्वसिद्धय इत्यर्थः। **विराटेत्येतदिति**। गमयतीत्यन्वयः। **पूर्वोत्तरेति**। भारत एव तत्पूर्वोत्तरवाक्येत्यर्थः।

*भा०र०*— **तद्वाक्येति**। भारतवाक्येत्यर्थः। **साक्षात्** शब्दार्थतया। 'अन्यथा' इति भाष्यमनूद्यार्थमाह **भारतस्य सर्वशास्त्रोत्तमत्वाभाव इति**। एतदनुमानम्— भारतशब्दः स्वसजातीयोत्तमाभिधायकः। सर्वपापक्षयहेतुज्ञानविषयनिरुक्तिकत्वात्। यथा नारायणशब्द इति। भारतं सजातीयसर्वशास्त्रोत्तमम्। सर्वपापनिवृत्तिहेतुज्ञानगोचरनिरुक्तिमच्छब्दवाच्यत्वात्। यदेवं तदेवम्। यथा सजातीयसर्वचेतनोत्तमो नारायण इति वाऽनुमानम्। तदैवार्थसाधनसमर्थं स्यादिति भावः।

कथं न चैवम् । ''सर्वपापैः प्रमुच्यते'' इति वचनस्यैव प्रमाणत्वादित्यत उक्तं **वचनस्यान्यथा-सिद्धेरिति** ॥ तत्र हेतुः **अयथार्थप्रशंसाया अपि दर्शनेनेति** । ''गङ्गास्नानेन वा मुक्तिः'' इत्यादौ साक्षान्मोक्षपरत्वेन प्रशंसाया इवेति भावः । **स्वतः** ज्ञानग्राहकग्राह्यम् । **इह** ''निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते'' इति वाक्यजन्यधियाम् । तत् बाधकम् । सर्वपापक्षयवाक्यस्यार्थवादत्वेनार्थ-वादानां ''तस्माद् धूम एवाग्नेर्दिवा ददृशेनार्चिः'' इत्यादिरूपाणां न स्वार्थे प्रामाण्यमित्यर्थवादत्वमेव बाधकमित्याशङ्क्याऽह **अर्थवादानां चेति** । नार्थवादत्वमात्रमप्रमापकत्वप्रयोजकमिति भावेनोक्तं **अबाधिते स्वार्थ इति** । प्रत्यक्षादिबाधितार्थानामुदाहृतार्थवादानां तथात्वेऽपि न प्रकृतस्य तथा-त्वम् । प्रमाणबाधाभावादिति भावः । बाधकं शङ्कते **सर्वपापक्षय इति** ॥ **सर्वशब्दार्थः** सर्वपापै-रित्यत्र । ''ऐन्द्र्या गार्हपत्यमुपतिष्ठते'' इति शास्त्रेण मन्त्रगतेन्द्रशब्दो यथा स्वोचितैश्वर्यवद् गार्ह-पत्यार्थतया सङ्कोचितस्तथाऽत्रापीति भावः । **वाक्यार्थः** भारतशब्दनिरुक्तिज्ञानेन बहुतरपापा-न्यप्रारब्धानि निवर्तन्त इति समग्रवाक्यार्थः । बाधकाभावादिति भावः । **उत्तरत्र** ''इतिहास-पुराणाभ्याम्'' इतिवाक्ये । पर्यालोचनशब्दितयुक्त्यनुसन्धानप्रकारं दर्शयति **न ह्यनुक्तस्येति** ॥ अनेनोक्तार्थस्य कस्य सिद्धिरित्यत आह **ततश्चेति** ॥ ''वेदार्थाज्ञानाच्च'' इति भाष्ये यद् भारतस्य वेदार्थज्ञानोपायत्वं सूचितं तत् सिद्ध्यतीत्यर्थः ।

ननु वेदो बिभेतीत्ययुक्तम् । वर्णराशिविशेषरूपस्य वेदस्याचेतनत्वेन तत्र भयशब्दितमनो-दौर्बल्यस्य प्रसक्त्यनौचित्यादित्यत आह **अचेतनत्वेति** ॥ ''भीत्रार्थानां भयहेतुः'' इत्यल्पश्रुत-स्यापादानता । प्रचालयिष्यतीति बिभेति । **आपाततः** शास्त्रान्तरानवमर्शदशायाम् । **कमप्यर्थम्** भारतस्य परोक्षार्थत्वादिरूपम् । **अन्यत्र** भारततात्पर्यनिर्णये । **अनुसन्धाने** पर्यालोचनायाम् । तथा चायमर्थः । मन्वादीत्यत्राऽदिशब्दस्तावदादीयते प्रतिपाद्यत इति व्युत्पत्त्या प्रतिपाद्यार्थवाची । ''भारतार्थस्त्रिधा प्रोक्तः'' इति प्रतिज्ञाय मन्वादि आस्तिकादि उपरिचरादीत्युदाहरणात् । प्रभृत्यर्थत्वे तद्विरोधः । ''धर्मो भक्त्यादिदशकः'' इत्यादिश्लोकत्रयेण मन्वास्तिकोपरिचररूपार्थव्याख्यानवदादि-पदोपात्तार्थव्याख्यानप्रसङ्गाच्च । अतो भारतं मन्वर्थकमास्तिकार्थकमुपरिचरार्थकमित्येव भारतार्थ-स्त्रिविध इति वक्तव्यम् । आङ्पूर्वाद् ददातेः कर्मणि क्विप्प्रत्यय आदिशब्दनिष्पत्तेः । मन ज्ञान इति धातोः ''ताभ्यामन्यत्रोणादयः'' इत्युप्रत्यये मन्यते ज्ञायते एभिः परमात्मेति मनुशब्दवाच्याः धर्मः भक्त्यादिदशकः श्रुतादिः शीलविनयौ ब्रह्मशब्दोदितो वेदश्च । त एते यत्र प्रस्तूयन्ते तत्र भागे धर्माभिमानित्वान्मनुपदवाच्यो धर्मराजः, भक्तिज्ञानवैराग्यप्रज्ञामेधाधृतिस्थितियोगप्राणबलशब्दित-गुणदशकाभिमानित्वान्मनुशब्दाभिधेयः श्रीभीमसेनः, श्रुतमताभिमानित्वान्मनुशब्दवाच्योऽर्जुनः,

शीलविनयाभिमानित्वान्मनुपदबोध्यौ नकुलसहदेवौ, वेदाभिमानित्वान्मनुनामधेया द्रौपदी चेत्येते पञ्च आदयः प्रतिपाद्याः यस्य तं भागं मन्वर्थकं केचिद् ब्रुवते । अभिमन्यमानमुखेन तदभिमानिनां पञ्चपाण्डवानां दौपद्याश्च महिमप्रकटनाय भारतं प्रवृत्तमिति कवयो वदन्तीत्यर्थः । तदुक्तम् "धर्मो भक्त्यादिदशकः श्रुतादिः शीलवैनयौ । सब्रह्मकारस्तु ते यत्र मन्वादिं तं विदुर्बुधाः" इति ।

अपरे भारतमास्तीकार्थं प्रचक्षते । अस्ति परलोकोऽस्ति परदेवतेति जानन्तः पाण्डवाः पाञ्चाली चाऽस्तिका उच्यन्ते । "अस्ति नास्ति दिष्टं मतिः" इति ठगनुशासनात् । त आदयः प्रतिपाद्या यस्य तदास्तिकादि । धर्मादिकमनन्तर्भाव्य केवलमास्तिकान् पाण्डवान् पाञ्चालीं च विषयीकृत्य तदुत्पत्तितच्चरित्रतद्युद्धादिरूपो योऽयमर्थो वर्ण्यते सोऽयमास्तिकः । "अर्थः प्रवर्तते" इत्यत्रार्थशब्दग्रहणादादिशब्द उक्तरीत्या प्रतिपाद्यार्थ इति विज्ञायते । परमास्तिकशिरोमणयः पुण्य-श्लोकाः सकृष्णाः पाण्डवा यत्र भागेऽनन्योपाधिकतया वर्ण्यन्ते स भाग आस्तिकार्थ उच्यत इति । तथा चोक्तम्—

"सकृष्णान् पाण्डवान् गृह्य योऽयमर्थः प्रवर्तते ।
प्रातिलोम्यादिवैचित्र्यात् तमास्तीकं प्रचक्षते ॥" इति ।

"आस्तिक एवाऽस्तीकः । मनुष्यादिभ्य आस्तिक्यातिशयद्योतनाय दीर्घः । पाञ्चाली पाण्डवाश्च यत्राऽहत्य प्रशस्यन्ते तद् भारतमास्तीकादि ब्रुवत" इति ।

सर्वोत्तमत्वादुपरिचरनामा भगवान् विष्णुरेवाऽदिमध्यावसानेषु आदिः प्रतिपाद्यो यस्य तदुपरि-चरादि । परममुख्यवृत्त्या स्वरवर्णपदवाक्यात्मकस्य सकलस्यापि भारतस्य विष्णुप्रतिपादकत्वमिति । तदाहुः—

"नारायणस्य नामानि सर्वाणि वचनानि तु ।
तत्सामर्थ्याभिधायीनि तमौ परिचरं विदुः ॥" इति ।

अत्र वाक्य उत्तरोत्तरं बलीय इति मन्तव्यमिति । **भगवत्परत्वादीति** । औपरिचरमिति सर्वोत्तमभगवत्परत्वम् । आदिशब्देन धर्मदेवतादिपरत्वं सर्वप्राणिनामवगाह्यानवगाह्यरूपत्वं परोक्षार्थत्वं च ग्राह्यम् । "धर्मो भक्त्यादिदशकः" इति धर्मप्रतिपादकत्वं, 'सकृष्णान्' इति पाण्डवानां देव-शिरोमणित्वेन देवताप्रतिपादकत्वं, "नारायणस्य नामानि" इति पदसमन्वयस्यासर्वाधिकारिकत्वात् सर्वप्राणिनामनवगाह्यरूपत्वं तत एव परोक्षार्थत्वं च मन्वादीत्येतदवगमयतीति भावः ।

अत्रेदं वेदितव्यम् । मन्वादित्वं तावत् सर्वस्यापि भारतस्याऽस्तिकादिभागेऽप्यस्त्येव । तत्रत्ययुधिष्ठिरादिशब्दैस्तदभिमतधर्मादिः प्रतिपाद्यत्वाभ्युपगमात् । तदुक्तम् -''भक्तिज्ञानादिदशकं वृकोदरः'' इति । यत्र च भारतभागेऽज्ञानमिथ्याज्ञानाद्युक्तिस्तत्रापि धर्मादिरूपमनुप्रशंसासिद्धये तन्निवर्त्याज्ञानादिकीर्तनेन मनुतात्पर्यकत्वमस्त्येव । दुर्योधनदुःशासनाद्यर्थकभागे च ''अज्ञानादि-स्वरूपस्तु कलिर्दुर्योधनः स्मृतः'' इति तदभिमताज्ञानादिग्रहणेन मन्वर्थकत्वमविकलम् । एवञ्च सर्वस्यापि भारतस्य मन्वादित्वं सिद्ध्यति । तदुक्तम्— ''एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते'' इति । एवमास्तिकादित्वमपि सर्वभारतस्यैव । न तदेकदेशस्य । यत्र धर्मादिकमुच्यते तत्राप्यभि-मान्यधिकरणन्यायेन पाण्डवा गृह्यन्ते । दुर्योधनाद्यर्थकभागेऽपि पाण्डवतात्पर्यमुक्तरीत्याऽस्त्येव । एवंविधानपि दुर्योधनादीन् पाण्डवा हतवन्त इति पाण्डवमहिमप्रख्यापनाय दुर्योधनादिवर्णनात् । अज्ञानाद्यर्थकभागेऽपि तत्तदभिमानिदुर्योधनादिग्रहणात् पाण्डवतात्पर्यकत्वलाभः । एवं सर्वस्यापि भारतस्य मन्वादित्वाऽस्तिकादित्वेऽपि केचिदित्याद्युक्तिरधिकारिभेदादिति ।

महत्त्वं भारवत्त्वं चावगमयितुं ''भारतं सर्ववेदाश्च'' इत्यादिवचनं प्रवृत्तम् । वेदशब्दश्च सर्वसच्छास्त्रवचन इत्यन्यत्रोक्तम् । तत्र शङ्क्यते नित्यसर्वगतद्रव्यात्मकवर्णराशिरूपस्य भारतस्य तुलारोपणगौरवयोरयोग इति । तत्राऽह **तुलारोपणं भारवत्त्वं च प्रतिनिधिद्वारेणेति** । समपल-परिमाणमौक्तिकमणिपद्मरागमाणिक्यादिरूपः प्रतिनिधिः । समपलपरिमाणयोरेकस्य भारवत्त्वं घटयितुं ''व्यासस्यैवाऽज्ञाया तत्र त्वत्यरिच्यत भारतम्'' इति वचनमत्रापि योजनीयम् । तथा च ब्राह्मे चतुस्त्रिंशेऽध्याये ''बद्धा सुपूजिता तत्र तुला तस्यां मणिद्वयम् । देवैः क्षिप्तं द्विजमुखैर्भरतात्मा मणिर्गुरुः । अभूत् तदा ब्राह्मणोऽयं जग्राहेमं मणिं परम् । भाराद् भारतमेतस्य नाम चक्रुस्तदा सुराः'' इति । यदिह भारतेऽस्ति तदेवान्यत्र वेदवैदिकग्रन्थ इति सावधारणव्याख्यान एव भारते गुणाभि-धानलक्षणा स्तुतिरुपपद्यते । अन्यथा यदिहास्ति तदन्यत्रास्ति यन्नेहास्ति न तदन्यत्रेति यथार्थवर्णने भारतं वेदाद्यनतिरिक्तार्थमेव ज्ञायत इति न भारते माहात्म्यातिशयो लभ्यते । अत एव व्याख्याने भारतस्य सर्ववेदवैदिकग्रन्थोपबृंहितार्थत्वं तत् सर्वमन्यत्रेत्यनुक्तेस्तदनुक्तार्थभूषितत्वं च सिद्ध्यतीति भावेनाऽह **यदिहेत्यस्येति** । उपबृंहितत्वादिकमित्यत्राऽदिशब्देन वेदाद्यनुक्तार्थभूषितत्वं गृह्यते । **इत्येतत्** ''विराटोद्योगसारवान्'' इति वाक्यम् । प्रतिपादयदित्यन्वयः । कथं कल्पतरुतां प्रतिपाद-यतीत्यत उक्तं **पूर्वोत्तरवाक्यानुसन्धान इति** ।

''सङ्ग्रहाध्यायबीजोऽसौ पौलोमास्तीकमूलवान् ।
सम्भवस्कन्धविस्तारः सभारण्यविटङ्कवान् ॥

अरण्यपर्वरूपाढ्यो विराटोद्योगसारवान् ।
भीष्मपर्वमहाशाखो द्रोणपर्वपलाशवान् ॥
कर्णपर्वशुभैः पुष्पैः शल्यपर्वसुगन्धिभिः ।
स्त्रीपर्वैषीकविश्रामः शान्तिपर्वमहाफलः ॥
अश्वमेधामृतरस आश्रमस्थानसंश्रयः ।
मौसलश्रुतिसङ्क्षेपः शिष्टद्विजनिषेवितः ॥
सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति ।
पर्जन्य इव भूतानां पक्षिणां भारतद्रुमः ॥''

इति आदिपर्वगतपूर्वोत्तरवाक्यानुसन्धाने इत्यर्थः । यद्यप्यत्र 'भारतद्रुमः' इति तरुरूपतैव प्रतीयते, तथाऽपि महाफलः अमृतरस इति वाक्यावमर्शे कल्पवृक्षत्वमेव गम्यत इति भावेन अनुसन्धान इत्युक्तं **सर्वपुरुषार्थेति** ॥ अत एव ''धर्मज्ञानद्वारा मोक्षो भवेद्'' इत्युक्तं मोक्षोपायत्वं च सिद्ध्यतीति भावः । इतिशब्दस्य तथा हीति पूर्वेणान्वयः ।

**भाष्यम्**

**कथं चान्यस्य कर्तुं न शक्यते ? ग्रन्थान्तरगतत्वाच्च नाविद्यमानस्तुतिः । न च कर्तुः एव । इतरत्रापि साम्यात् ।**

*प्र०दी०*— 'को ह्यन्यः' इति पुराणवाक्यान्यथानुपपत्त्येत्युक्तम् । कीदृशी साऽन्यथानुपपत्तिरित्यत आह— **कथञ्चेति** । अन्यथेति च वर्तते । अन्यस्येति व्यत्ययेन तृतीयार्थे षष्ठी । यद्वा कर्तुमिति कृद्योगे कर्तरि । 'न लोकाव्यय' (२-३-६९) इति प्रतिषेधश्च 'नञा निर्दिष्टमनित्यं' इत्यनित्यः । अत एवातो सुनकुसुनोः योगे षष्ठी दृश्यते, ''सूर्यस्योदेतोः क्रूरस्य विसृप'' इति । को ह्यन्य इति वाक्ये तावद्भारतस्य नारायणादन्येन कर्तुमशक्यत्वमुच्यते । तत्कथमन्यथा केवलेश्वरज्ञानदृष्टार्थयुक्तत्वाभावे युज्यते । तथाविधानामन्यैः कर्तुमशक्यत्वस्यादर्शनादिति ।

नन्वन्यैः कर्तुमशक्यत्वमिति हेतुरसिद्धः । 'को ह्यन्यः' इति वाक्यस्य अविद्यमानार्थस्तुतित्वोपपत्तेरित्यत आह— **ग्रन्थान्तरेति** । 'अविद्यमान' इत्यतः परं अर्थशब्दोऽध्याहार्यः । इदं वाक्यमिति शेषः । यद्वा स्तुतिः गुणोत्कर्षः । अत्रोच्यत इति शेषः । नात्रार्थशब्दाध्याहारः । अनेन प्रागुक्तस्य ग्रन्थान्तरेति विशेषणस्य प्रयोजनमुक्तम् । इयं च सम्भावनायुक्तिः । निश्चययुक्तिस्तु चशब्दसूचिता बाधकरहितत्वादिः ।

ननु भवेदेतद्यद्यत्र भारतस्यान्येन कर्तुमशक्यत्वलक्षणास्तुतिरुच्यते। न चैवम्। ''कृष्णद्वैपायनं व्यासं विद्धि नारायणं परं'' इति भारतस्य कर्तुर्व्यासस्य नारायणत्वलक्षणायाः स्तुतेरुपक्रमात्। उत्तरत्र तस्यैवार्थस्योपपादनादित्यत आह— **न चेति**। कर्तुरेवात्र स्तुतिरुच्यत इति च न वाच्यम्। किन्तु भारतस्यापि। कथमिति चेत्। अत्र ह्यनुमानेन व्यासस्य नारायणत्वं साध्यते। तत्र कृष्णद्वैपायनमिति पूर्वार्धः प्रतिज्ञारूपः। को ह्यन्य इत्युत्तरार्धो व्यतिरेकव्याप्तेः प्रतिपादकः। अनुक्तो हेतुः व्याप्तिवचनसामर्थ्यादूह्यः। तत्र न तावत् ग्रन्थकृत्त्वं हेतुः। कुत इत्यत आह— **इतरत्रापीति**। ग्रन्थकृत्त्वस्य नारायणादितरत्रापि साम्यादनैकान्त्यप्रसङ्गात्। नापि भारतकृत्त्वम्। कुत इत्यत आह— **इतरत्रापीति**। ग्रन्थव्यक्तिविशेषकृत्त्वेन नारायणत्वसाधनस्येतरत्र कालिदासादावपि साम्यादतिप्रसङ्गात्। तस्मात् नारायणादन्येन कर्तुमशक्यस्य कार्यस्य कर्तृत्वमेव हेतुः। न चासावसिद्धः। भारतस्य तथात्वादित्यूह्यम्। व्याप्तिवाक्यं च तदभिप्रायं मन्तव्यम्। तथा च कथमत्र भारतस्य स्तुतिर्नावगम्यते। श्रुत्याऽनवगमेऽप्यर्थादवगमादिति।

***प०टी०***— इतश्च न भारतस्य ग्राम्यकथानुवादितेत्याह **कथं चेति**। अत्राप्यन्यथेति ग्राह्यम्। 'को ह्यन्यः' इत्यपि विद्यमानस्तुतिरेव भारते न स्वस्य क्रियत इत्यत आह **ग्रन्थान्तरेति**। अस्तु विद्यमानस्तुतिः। साऽपि कर्तुर्व्यासस्यैव न भारतस्येत्यत आह **न चेति**।

***प०टी०***— **कर्तुरेव** 'स्तुतिः' इति शेषः। तत्र युक्ति .................... *॥ इति भावप्रदीपिकायाम् उपोद्घातः ॥*

***न०टी०***— इतोऽप्युक्तगुणोपपन्नं भारतमित्याह **कथं चेति**। ननु 'निरुक्तमस्य यो वेद' इत्यादिभारतवाक्येनैव भारतस्तुतौ, अविद्यमानगुणोक्तिशङ्का स्यात् लोकवदित्यत आह **ग्रन्थान्तरगतत्वाच्चेति**। ननु 'को ह्यन्यः' इत्यादिग्रन्थान्तरगतवचनेन कर्तुरेव स्तुतिः, न तत्कृतभारतस्येत्यत आह **न चेति**। लैङ्गादेरपि तत्कृतत्वाविशेषात्, तेनापि तत्स्तुतिः किं न स्यात् ? इति भावः।

***भा०दी०***— कृद्योगे कर्तरि षष्ठीत्यनुषज्यते। कर्तृमिति तु मत्प्रत्ययस्येति प्रत्ययभिन्नतया कृति९ इति कृत्संज्ञायां कर्तृकर्मणोः कृतीति सूत्रेण कृद्योगे कर्तरि कर्मणि षष्ठी भवतीत्युक्तेरिति भावः।

ननु कर्तृमित्यस्याव्ययत्वात्। अव्यययोगे न लोकाव्ययनिष्ठा खल्वर्थतृनामिति द्वितीयाध्यायतृतीयपादीयसूत्रेण षष्ठीनिषेधात् कथमेवमुक्तमित्यत आह **न लोकाव्ययेति**। इदमस्थमुरित्यत्र

थमुप्रत्यये मकारान्ततया वक्तव्ये उकारान्ततयोच्चारणं हलन्त्यमिति मकारस्य लोपनिवृत्त्यर्थो "न विभक्तौ तु तस्मा" इति सूत्रेण मकारस्य लोपाप्रसक्तेः उंकारोऽत्र व्यर्थ एव अथापि क्रियते तेन ज्ञायते न विभक्तौ तु स्मा इति नञा निर्दिष्टमनित्यमिति थमुप्रत्ययोकारेण नञानिर्दिष्टानित्यता-ज्ञापनात् इह न लोकेति न निषेध इति भावः । **अत एव** षष्ठीप्रतिषेधस्य नित्यत्वादेव इत्यर्थः । एवं च सति उक्तप्रतिषेधे कर्मभाषायामप्रतिषेधः दास्याः कामुकः अव्ययप्रतिषेधे तोसुन्प्रत्ययो-रप्रतिषेध इति च वार्तिकद्वयं नारम्भणीयम् । अनित्यत्वादेवोपपत्तेर्वृत्तौ तद्वार्तिकोक्तिः स्पष्टार्थेति भावः । न्यासे च बहुलग्रहणादेवैवमादावप्रतिषेधः सिद्ध इति वार्तिकमेतन्नारभ्यमित्युक्तम् । प्रथमा-ध्यायाद्यपादे अव्ययीभावश्चेति सूत्रवृत्तौ चाव्ययीभावस्य स्वरादौ पाठेन स्वरादिनिपातमव्ययमित्येवा-पूर्तो पुनरेतत्सूत्रं नारभ्यम् । अथापि क्रियते तेन ज्ञायते अव्ययकार्यमनित्यमिति तेन तोसुकु-सुनोरिति प्रतिषेध इति वार्तिकं नारभ्यमित्युक्तम् । **उदेतोरिति** । भगवल्लक्षणस्थेणूकृञ्वदिचरिहुत-मिजनिभ्यस्तोसुनिति तृतीयान्त्यपादीयसूत्रेणोत्पूर्वस्येत्यणुगतावित्यस्य तुमर्थे तौसुन्प्रत्ययः । विसृष्ट इति सृपितुदोः कुसुन्निति सृपेः कुसुन्प्रत्ययः । शब्दानुपपत्तिं निरस्य वाक्यार्थमाह **को ह्यन्य इतीति** । अन्यथेत्यनुवृत्तस्यानुवादो **अन्यथेति** । **केवलेत्यादि** । तथाविधानां केवलेश्वरदृष्टार्थकत्व-हीनानां मन्वादिषु दर्शनादित्यर्थः । **बाधकरहितत्वादिरिति** । स्वतःप्रमाणप्रमितत्वमादिपदार्थः । **अत्र हीति** । श्लोक इत्यर्थः । **प्रतिज्ञारूप इति** । व्यासो नारायणो भवितुमर्हतीत्येवंरूपः । **व्यति-रेकेति** । यत्र पुण्डरीकाक्षपदोक्तं नारायणत्वाभावः तत्र महाभारतकृत्त्वाभावज्ञप्रतीतेरिति भावः । **तदभिप्रायमिति** । यत्र पुण्डरीकाक्षत्वाभावः तत्र पुण्डरीकाक्षादन्येनाशक्यकार्यकर्तृत्वस्य अभावः । यथा चैत्रादावित्येतदभिप्रायार्थमित्यर्थः । **अर्थादिति** । भारतस्य उत्तमत्त्वाभावे तत्कर्तृकत्वेन व्यासस्य पुण्डरीकाक्षत्वेन स्तुत्ययोगात् तदन्यथानुपपत्तिबलादित्यर्थः ।

***भा०र०***— "वर्तते कथमन्यथा" इति पूर्ववाक्यादन्यथेति पदमत्रानुवर्तते । ननु "कर्तृ-करणयोस्तृतीया" इति सूत्रेण तिङ्कृत्तद्धितसमासैरनभिहिते कर्तरि तृतीयाविधानात् प्रकृते च कर्तुस्तिङाऽनभिधानादन्येनेति तृतीयया भाव्यम् । षष्ठी तु कथमित्यत आह **व्यत्ययेनेति** ॥ "व्यत्ययो बहुलम्" इति सूत्रे "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्यय-मिच्छति शास्त्रकृत्" इति वचनादत्र भाष्ये व्यत्यनेन कर्तरि षष्ठीत्यर्थः । ननु छन्दस्येवायं व्यत्ययो व्याख्येयः । न चेदं भाष्यं छन्द इत्यतः पक्षान्तरमाह **यद्वेति** । कर्तरि षष्ठीत्यनुवर्तते । "कृदतिङ्" इति तुमुन्प्रत्ययस्य कृत्सञ्ज्ञकत्वात् तद्योगे कर्तरि षष्ठीत्यनुवर्तते । "कर्तृकर्मणोः कृतिः" इति कर्तरि षष्ठीत्यर्थः ।

ननु "कर्तृकर्मणोः कृति" इति प्राप्तां षष्ठीं प्रतिषेद्धुं "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति सूत्रम् । तत्रोदाहरणम्– सुखं कर्तुमिति । अतः कथमत्र षष्ठी ? तुमुनोऽव्ययत्वादित्यत आह **न लोकाव्ययेति प्रतिषेधश्चेति** ॥ **नञा निर्दिष्टमनित्यमिति** । "इदमस्थमुः" इति सूत्रे इत्थमिति रूपसिद्धये थमुप्रत्ययो विधीयते । प्रत्यये चोकारोच्चारणं व्यर्थम् । "हलन्त्यम्" इति हि मकारलोपः शङ्कार्हः । नैवं शङ्कितुं शक्यम् । "न विभक्तौ तुस्माः" इति सूत्रेण मकारस्येत्सञ्ज्ञानिषेधात् । तथाऽप्युच्चार्यमाणोऽयमुकारो "न विभक्तौ" इति नञा निर्दिष्टं कार्यमनित्यमिति ज्ञापयतीति "न लोक" इति निषेधोऽप्यनित्य इति भावः । उपलक्षणमेतत् । तृजकाभ्यामित्यत्र त्रकाभ्यामिति वक्तव्येऽपि तृनो निवृत्त्यर्थं तृचः सानुबन्धकस्य ग्रहणाज्ज्ञापकात् "न लोक" इति निषेधो न नित्यः । अत एव "भीष्मः कुरूणां भयशोकहन्तेत्युदाहरणम्" इति न्यासोक्तमपि समाधान-मवधातव्यम् । "न लोक" इति निषेधशास्त्रं क्वचिन्न प्रवर्तत इत्यत्रोपष्टम्भकमाह **अत एवेति** ॥ अनित्यत्वादेवेत्यर्थः । तोसुन उदाहरणं "सूर्यस्योदेतोः" इति । कसुन उदाहरणम् "क्रूरस्य विसृपः" इति । अन्यथा तोसुन्कसुनोरव्ययत्वात् तद्योगे "न लोक" इति षष्ठीनिषेध एव स्यादिति भावः । नन्वव्ययप्रतिषेधे "तोसुन्कसुनोरप्रतिषेधः" इति वार्तिकादेव षष्ठीसम्भवात् कथं तद्बलेनानित्यत्वं साधयितुं शक्यत इति चेन्न ॥ निषेधस्य नित्यत्वे उक्तप्रतिप्रसववार्तिकस्यैवानुत्थानापातादि-त्याशयात् ।

प्रथमाध्यायाद्यपादे "अव्ययीभावश्च" इति सूत्रवृत्तौ च अव्ययीभावस्य स्वरादौ पाठेन स्वरादिनिपातमव्ययमित्येव पूर्तौ पुनरेतत् सूत्रं नाऽरभ्यम् । अथापि क्रियते । तेन ज्ञायतेऽव्यय-कार्यमनित्यमिति । तेन "तोसुन्कसुनोरप्रतिषेधः" इति वार्तिकं नाऽरभ्यमित्युक्तम् । एवं शाब्दी-मनुपपत्तिं परिहृत्य वाक्यार्थमाह **को ह्यन्य इतीति** ॥ तत् कथं युज्यत इति वदता भारतं केवले-श्वरज्ञानदृष्टार्थयुक्तम्, नारायणादन्येन कर्तुमशक्यत्वात्, यथा देवदत्तीयं स्वसुखावबोधकं वाक्यं देवदत्तादन्येन कर्तुमशक्यदेवदत्तज्ञानमात्रदृष्टार्थसुखयुक्तमिति प्रयोगप्रकारः सूचितः । अत्राप्रयो-जकत्वशङ्कामुद्धर्तुं, यदि भारतं केवलेश्वरज्ञानदृष्टार्थयुक्तं न स्यात् तर्हीश्वरादन्येन कर्तुमशक्यमपि न स्यात्, यत् केवलेश्वरज्ञानविषयीकृतार्थहीनं मन्वादिवाक्यं तदीश्वरान्येन मन्वादिना कर्तुं शक्यमेवे-त्युक्तानुमानानुग्राहकं तर्कमभिप्रेत्याऽह **तथाविधानामिति** । केवलेश्वरज्ञानदृष्टार्थहीनानामित्यर्थः । पर्यालोचनान्तरसमुच्चयार्थो भाष्ये "कथं च" इति चशब्द इति स्फुटत्वान्नोक्तम् ।

ननु कथमसिद्धः । "को ह्यन्यः" इत्यागमस्य पक्षधर्मताप्रमापकस्य सत्त्वादित्यत एतद्वाक्य-मन्यथासिद्धमित्याह **को ह्यन्य इति वाक्यस्येति** । ननु षष्ठीतत्पुरुषात् कर्मधारयो ज्यायानित्यविद्य-

मानस्तुतिरित्यत्र तदभ्युपगमे, अविद्यमानत्वे सति स्तुतित्वं लभ्यते । तच्च न निषेधमर्हति । वाक्याविद्यमानत्वस्य अनाशङ्कितत्वात् । हेत्वसिद्ध्युपपादनायार्थाविद्यमानत्वस्यैवापेक्षितत्वादित्यत आह **अर्थशब्द इति** ॥

भाष्योक्तहेतुसाध्ययोरन्वययोग्यं धर्मिणमाह **इदं वाक्यमिति** ॥ "को ह्यन्यः" इति वाक्यमित्यर्थः । न च स्तुतिशब्दस्य स्तौतेर्भावे क्तिनि निष्पन्नतया वाक्यस्य स्तवनक्रियारूपत्वाभावात् सामानाधिकरण्यानुपपत्तिरिति वाच्यम् । स्तूयतेऽनयेति करणे क्तिन्प्रत्ययान्तः स्तुतिशब्द इत्याशयात् । गुणोत्कर्ष इति वदन् स्तुतिशब्दं तत्कर्मणि गुणोत्कर्षे लाक्षणिकं स्तूयतेऽसाविति कर्मणि क्तिन्प्रत्ययान्तं वाऽभिप्रैति । अत्र "को ह्यन्यः" इति वाक्ये । व्याख्यानान्तरप्रयोजनं स्वयमेवाऽह **तात्रेति** ॥ पूर्वत्र अर्थेति इदं वाक्यमिति च बह्वध्याहारः । अत्र तु अत्रोच्यत इति पदव्ययमध्याहार्यमिति विशेष इति भावः । अनेन वाक्यमध्ये शब्दाध्याहारो न न्याय्यः । "यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् । वाक्यं वा" इति शास्त्रादिति न शक्यमित्यपि सूचितम् । "स्यवयमेव वक्ष्यति" इति स्वोक्तमवगमयितुमाह **अनेनेति** ॥ "ग्रन्थान्तरगतत्वाच्च नाविद्यमानस्तुतिः" इति भाष्येण । **प्रागुक्तस्य** "पुराणग्रन्थान्तरवाक्यान्यथानुपपत्त्या" इति पूर्वभाष्योक्तस्य ।

ननु नेदं वाक्यमविद्यमानार्थस्य स्तावकम्, भारतान्यपुराणलक्षणग्रन्थगतत्वात् इति भाष्याभिप्रेतमनुमानममञ्जुलम् । शैवादिपुराणान्यहरिवंशाद्युक्तकैलासयात्रादौ "नमत्यर्चयति स्तौति" इति वचनेन भगवत्कृतशिवस्तवनादेरावेदनेन शिवपारम्यादेरपि प्राप्त्याऽप्रयोजकत्वादित्यत आह **इयं चेति** ॥ निर्दोषगुणपूर्णत्वे समतीतक्षराक्षरत्वमिवासम्भावनापराहतिपरिहारायैवोपन्यस्ता "ग्रन्थान्तरगतत्वात्" इति युक्तिरित्यर्थः ।

**निश्चययुक्तिः** साध्यनिर्धारणानुकूला युक्तिः । **चशब्दः** "ग्रन्थान्तरगतत्वाच्च" इति भाष्यस्थचशब्दः । "बाधकरहितत्वादिः" इत्यत्राऽदिपदेन मानान्तरसंवादित्वं, स्वतःप्रमाणागमबोध्यत्वं च ग्राह्यम् । प्राचीनटीकायां तु "निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते" इति भारतवाक्येनैव भारतस्य स्तवनेऽविद्यमानार्थस्तवनत्वशङ्का स्याल्लोकवदित्यत आह **ग्रन्थान्तरगतत्वाच्चेति** ॥" इत्यवतारितम् । तत्र न केवलं स्वतःप्रमाणभारतवाक्यगतत्वाद् भारतमहिमावर्णनं नाविद्यमानस्तुतिः । किन्तु ग्रन्थान्तरगतत्वाच्चेति चशब्दार्थ इत्यभिमतम् । "भारतस्य कर्तुः" इत्यत्र "कर्तृकर्मणोः कृति" इति भारतशब्दात् कर्मणि षष्ठी । **उत्तरत्र** "को ह्यन्यः" इति वाक्ये । तस्यैवार्थस्य नारायणत्वलक्षणस्तुतिरूपस्यैवार्थस्य । **कर्तुरेव** भारतस्य कर्तुर्व्यासस्यैव । भारतस्यापि स्तुतिरुच्यत इति वर्तते । **तत्र** साधने ॥ **व्यतिरेकव्यासेः प्रतिपादक इति** ॥ व्यासो नारायणो भवितुमर्हति,

नारायणान्यकृत्यशक्यभारताख्यकार्यकर्तृत्वादित्यनुमाने "यो नारायणो न भवति स पुण्डरीकाक्षान्यकृत्यशक्यभारताख्यकार्यकर्ता न भवति । यथा कालिदासः" इति व्यतिरेकव्याप्तिः प्रतिपादयितुं पुण्डरीकाक्षादन्यः को हि महाभारतकृद् भवेत् न कोऽपीत्युत्तरार्धः उत्तरभागः, प्रवृत्त इत्यर्थः । ऊहप्रकारं दर्शयति **तत्र न तावदिति** ॥ **तत्र** ऊहे कर्तव्य इत्यर्थः । "साम्यात्" इत्यस्यार्थोऽनैकान्त्यप्रसङ्गादिति केचित् । अन्ये तु, व्यासो नारायणः, ग्रन्थकृत्त्वादिति साधने ग्रन्थकृत्त्वहेतोः कालिदासादावपि साम्यान्निमित्ताद् व्यभिचारापत्तेरित्यर्थ इत्याहुः । भारतकृत्त्वमित्यत्र भारतशब्देन ग्रन्थव्यक्तिविशेषो विवक्षितः, किंवा नारायणान्यकृत्यशक्यकार्यविशेषः ? इति विकल्पं हृदि निधायाऽद्यं दूषयति **ग्रन्थव्यक्तीति** । **अतिप्रसङ्गादिति** । कालिदासो नारायणः रघुवंशकृत्त्वाद्, व्यतिरेकेण चैत्रवदित्याभाससाम्यापातादित्यर्थः । द्वितीयमङ्गीकरोति **तस्मादिति** ॥ **असौ** हेतुः । **तथात्वात्** नारायणान्यकृत्यशक्यकार्यत्वात् ।

नन्वेवमुत्तरार्धो व्यतिरेकव्याप्तिप्रतिपादक इत्ययुक्तम् । नारायणत्वाभावस्य भारतकर्तृत्वाभावेन सह व्याप्तिप्रतिपादनेऽप्युक्तविशिष्टहेत्वभावेन सह तत्प्रतिपादनसामर्थ्याभावादित्यत आह **व्याप्तिवाक्यं चेति** । यो नारायणो न भवति, स नारायणान्यकृत्यशक्यमहाभारताख्यकार्यकर्ता न भवतीति विशिष्टहेत्वभावेन सह व्याप्तिप्रतिपादनतात्पर्यं "को ह्यन्यः" इति वाक्यं व्याख्येयमित्यर्थः ।

केचित्तु, नारायणादन्येन कर्तुमशक्यस्य कर्तृत्वं हेतुरित्ययुक्तम् । "को ह्यन्यः" इति व्याप्तिवाक्ये महाभारतकृत्त्वस्यैव श्रवणादित्यत आह **व्याप्तिवाक्यमिति** । महाभारतशब्द उक्तकार्याभिप्रायक इत्यर्थ इति व्याचक्षते । ननु व्यासो नारायणः, महाभारतकृत्त्वात् । व्यतिरेकेण चैत्रवत्, इति प्रयोगाभिप्राये हि "को ह्यन्यः" इति वाक्ये व्यतिरेकव्याप्तिप्रतिपादनं युक्तं स्यात् । न चैवम् । टीकायां नारायणादन्येन कर्तुमशक्यस्य कार्यस्य कर्तृत्वस्य हेतुत्वाभिधानात् । तत्र च मूलरामायणस्य हयग्रीवरूपकृतत्वेन पञ्चरात्रस्य नारायणावतारकृतत्वेन हयग्रीवनारायणावतारादेः समपक्षत्वसम्भवेनान्वयव्याप्तिप्रतिपादनसौकर्येऽपि किमिति प्रतिपत्तिवक्रा व्यतिरेकव्याप्तिः प्रतिपाद्यत इति चेन्न । हयग्रीवादेर्नारायणाभेदे विप्रतिपद्यमानं प्रति सपक्षाभावेनान्वयव्याप्तेः प्रदर्शयितुमशक्यत्वात् । व्यभिचाराभावप्रदर्शनमुखेनान्वयव्याप्तिं प्रत्युपजीव्याया व्यतिरेकव्याप्तेरन्वयव्याप्तेरपि ज्यायस्त्वाच्च । अप्रयोजकत्वासिद्धिशङ्कापरिहारायावश्यं नारायणादन्येन कर्तुमशक्यस्य महाभारतलक्षणकार्यस्य कर्तृत्वमेव हेतूकर्तव्यम् । तत्र च न हयग्रीवादिः सपक्षः । तत्र भारतकर्तृत्वस्याप्रसिद्धत्वादित्याशयेन भाष्यटीकयोर्व्यतिरेकव्याप्त्यादराच्चेति । **श्रुत्या** वचनवृत्त्या । **अर्थादिति** । "कृष्णद्वैपायनम्" इति श्लोके व्यासस्य नारायणत्वलक्षणस्तुतौ तात्पर्यसिद्धये नारायणान्यकृत्य-

साध्यत्वं महाभारतविशेषणमभिप्रेतम् । ततश्च तदन्यथानुपपत्तिबलाद् भारतस्तुतेरवगमादित्यर्थः । भावबोधे तु भारतस्योत्तमत्वाभावे तत्कर्तृत्वेन व्यासस्य नारायणत्वलक्षणस्तुत्यनुपपत्तिरूपादर्थादित्युक्तम् । इतीत्यनन्तरं न च कर्तुरिवेति न पूर्वोक्तचोद्यमिति योज्यम् ।

**भाष्यम्**

**तत्र च सर्वभारतार्थसङ्ग्रहां वासुदेवार्जुनसंवादरूपां भारतपारिजातमधुभूतां गीताम् उपनिबबन्ध ।**

***प्र०दी०***— अस्त्वेवंविधं भारतम् । व्याचिख्यासितायास्तु गीतायाः किमायातमित्यत आह— **तत्र चेति** । **तत्र** एवंविधप्रामाण्याद्युपेते भारते । गीतामुपनिबबन्ध व्यासः । किमियं गीतायाः प्रामाण्यादेः सम्भावना । उत निश्चययुक्तिः । न द्वितीयः । तथात्वे कलिङ्गोपदेशादेरपि तत्प्रसङ्गात् । अनुवादोऽसाविति चेत् । अयमपि तथैव । आद्ये निश्चायकं वाच्यमित्यत उक्तं— **वासुदेवेति** । संवादं रूपयतीति संवादरूपा । तथापि भारतैकदेशान्तरपरिहारेणास्या गीताया व्याख्याने को हेतुरित्यत आह— **सर्वेति** । सर्वभारतार्थस्य सङ्ग्रहो यस्यामिति गमकत्वात् व्यधिकरणबहुव्रीहिः । एतद्व्याख्याने सर्वमपि भारतं व्याख्यातप्रायं भवतीति भावः । नैतावता भारतसमा गीता । किन्तु ततोऽधिका चेत्याशयेनाह— **भारतेति** ।

***न०टी०***— यदेवं भारतं समग्रं सर्वशास्त्रपरत्वात् प्रमाणतमम्, तदा किमुत प्रमाणतमतत्सारभूता गीता ? इति भावेनैतत् सप्रमाणकमाह **तत्र चेति** । तत्र च भारते **गीतामुपनिबबन्ध** । नन्वेवमपि प्रस्थे प्रसूतिवत् तदेकदेशत्वात् न भारतत्वादुत्तमत्वं गीताया इत्यत आह **सर्वभारतार्थसङ्ग्रहामिति** ॥ प्रस्थे पयस्युद्धृताद्यप्रसूतिवत् तत्सर्वसारत्वात् तदुत्तमत्वोपपत्तेः । एतदेवाह **भारतपारिजातमधुभूतामिति** ॥ भारते च मधूद्धर्तुं न मधुपतेरन्यः समर्थः । सोऽपि तत्स्वभक्तायैव ददातीति भावेनोक्तम् **वासुदेवार्जुनसंवादरूपामिति** ।

***भा०दी०***— भारतस्य प्रामाण्यात् प्रमाणोक्तिः । **किमियमिति** । प्रामाण्याद्युपेते भारतमध्ये परिबद्धत्वोक्तिरित्यर्थः । **अयमपि** गीतोपदेशोऽपि । **रूपयति** प्रकाशयतीत्यर्थः । **गमकत्वादिति** । एवंरूपार्थस्य बोधने शक्तत्वात् तादृशस्थले सर्वैरपि समासोपगमादिति भावः ।

***भा०र०***— एवंविधं प्रमाणं, अधिकारिविषयादिमत्, दुर्गमार्थं च । व्याचिख्यासितायाः व्याख्यातुमिष्टायाः । **किमायातमिति** । तत्र व्याख्येयतोपयुक्तप्रामाण्यादेरेवमप्यसिद्धेरिति भावः ।

आख्यातोपात्तं कर्तारमाह **व्यास इति**। **इयं** भारतोपनिबद्धत्वोक्तिः। **तथात्वे** भारतोपनिबद्धत्वस्य निश्चययुक्तित्वे। **तत्प्रसङ्गात्** प्रामाण्यादिप्रसङ्गात्। **अनुवादः** भारतोक्तोऽपि कलिङ्गोपदेशोऽन्यानुवादरूप इत्यर्थः। **अयमपि** गीतोपदेशोऽपि। **रूपयतीति**। प्रकाशयतीत्यर्थः। संवादशब्दोपपदाद् ''रूप रूपक्रियायाम्'' इत्यस्मान्मूलविभुजादित्वात् कप्रत्यये ''णेरनिटि'' इति णिलोपे अजादिलक्षणे टापि संवादरूपेति रूपमिति भावः। एतेन संवादप्रतिपादिकायास्तदात्मकत्वमनुपपन्नमिति चोद्यं निरस्तम्।

ननु सङ्ग्रहशब्दो भावसाधनः। तस्य च भारतार्थशब्देन सह षष्ठीसमासाभ्युपगमे स्त्रीलिङ्गत्वानुपपत्तिः। ''घञजबन्ताः पुंसि'' इति पुंस्त्वानुशासनात्। गीतायाः सङ्ग्रहक्रियारूपत्वाभावेन सामानाधिकरण्यानुपपत्तिश्चेत्यत आह **सर्वभारतार्थस्येति**। **गमकत्वात्** विग्रहेणोक्तार्थस्य प्रत्यायकत्वात्। ''समानाधिकरणानां बहुव्रीहिरिष्यते'' इति वार्तिकं तु प्रायिकत्वाशयम्। अत एव सप्तमीविशेषणे बहुव्रीहौ'' इति पाणिनिरिति भावः। यद्यपि सर्वो भारतार्थसङ्ग्रहो यस्यामिति विग्रहाभ्युपगमे सामानाधिकरण्यं लभ्यते तथाऽपि सङ्ग्रहे सर्वशब्देन विशेषणं भारतद्वारकमेव वक्तव्यम्। अव्यवहितान्वयश्च स्वरस इति भावेनैवमुक्तम्। अत एव सर्वमपि भारतमित्याह **व्याख्यातप्रायमिति**। ''प्रायः स्यात् ताडने मृत्यौ तुल्यबाहुल्ययोरपि'' इत्यभिधानाद् व्याख्याततुल्यमित्यर्थः। **एतावता** भारतार्थसङ्ग्रहरूपत्वेन। व्याख्यानव्याख्येययोः साम्यस्यौत्सर्गिकत्वादिति भावः।

**भाष्यम्**

**तच्चोक्तम्**—

**भारतं सर्वशास्त्रेषु भारते गीतिका वरा।**
**विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्वयम्॥**

**—इति महाकौर्मे।**

*प्र०दी०*— कुत एतदित्यत आह— **तच्चेति**। सर्वशास्त्रेषु वरम्। तदेवमाप्तमूलत्वादिना प्रामाण्यात्, धर्मादिप्रतिपादनेन सविषयत्वात्, मोक्षार्थत्वेन सप्रयोजनत्वात्, सदधिकारित्वात्, दुर्गमार्थत्वाच्च व्याख्येया गीतेति स्थितम्। तत्र ज्ञानमेव केवलं मोक्षसाधनम्। धर्मस्तु ज्ञानात्प्रागनुष्ठितोऽन्तःकरणशुद्ध्यादिद्वारा ज्ञानं जनयन् मोक्षसाधनम्। ज्ञानोत्तरस्तु मुक्तावानन्दोद्रेकहेतुरित्येवं विषयप्रयोजनयोः सम्बन्धोऽभिहितः।

*भा०दी०*— **आप्तिमूलत्वादिनेति** । वेदसंवादादिरादिपदार्थः । स्वरूपवेदने पर्याप्त इत्यत्र दोषमाह **ज्ञानात्प्रागनुष्ठित इति** ॥

*भा०र०*— **कुत एतदिति** । भारताद् गीताया आधिक्यमिति कस्मात् प्रमाणादवगन्तव्यमित्यर्थः । गीताविशेषणं वरेत्येतत् साकाङ्क्षत्वादत्राप्याकृष्य लिङ्गव्यत्ययेन सम्बद्धव्यमिति भावेन उक्तं **सर्वशास्त्रेषु वरमिति** । सहस्रं नामानि यस्मिन् ग्रन्थे तद् ग्रन्थं सहस्रनामशब्दार्थः । सहस्रनामापि भारते वरमिति योज्यम् । ''ननु च प्राधान्येन व्याख्येयता'' इत्यादि कृतचोद्यं परिहृतमिति दर्शयति **तदेवमिति** । आप्तिमूलत्वादिनेत्यत्र वेदाविसंवादित्वमादिपदार्थः ।

इदमुक्तं भवति । ''वासुदेवार्जुनसंवादरूपाम्'' इत्यनेनाऽऽप्तिमूलत्वं, वेदादिसंवादित्वं च सूचितम् । वासुदेवस्यार्जुनं प्रत्याप्तत्वात् । तेनैव स्वोक्तार्थे ''न जायते'' इत्यादिमन्त्रवर्णोदाहरणाच्च । व्यासोक्ता गीता कथं वासुदेवाप्तिमूलेति चेन्न । व्यासस्यानुवादकत्वात् । तथा चोक्तम्– ''अयमपि तथैव'' इति । एवं वासुदेवस्यार्जुनमोक्षार्थं धर्माद्युपदेशाद् धर्मादिप्रतिपादकत्वं मोक्षार्थत्वं च तेनैव सूचितम् । अर्जुनस्य साधुत्वात् तद्ग्रहणेनैव सदधिकारित्वम् । तमेव सर्वज्ञकल्पमपि प्रत्युपदेशाद् दुर्गमार्थत्वं च । अत एव ''बुद्धिं मोहयसीव मे'' इत्यर्जुनोक्तिः । एवं च यत् प्रागभिसंहितं वासुदेवार्जुनसंवादरूपत्वं गीताप्रामाण्यादौ निश्चययुक्तिरिति तद् युक्तमेवेति ।

''स हि धर्मः'' इति भाष्येण परमतद्वयं दूष्यते । तत्सङ्गतये स्वमतं तावदाह **तत्रेति** । व्याख्यातव्यायां गीतायामित्यर्थः । ''विद्यैव तु निर्धारणात् इत्यधिकरणे ब्रह्मज्ञानस्यैव मोक्षहेतुत्वस्थितेराह **ज्ञानमेवेति** । ज्ञानमपरोक्षम् । ''नान्यः पन्थाः'' इत्युक्तेरेवेति । **ज्ञानात्** ज्ञानोत्पत्तेः । ''शुद्ध्यादि'' इत्यत्र आदिशब्दाच्छ्रवणादिसङ्ग्रहः । कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति'' इत्युक्तेराह **द्वारा ज्ञानमित्यादि** । ज्ञानोत्तरः ज्ञानोत्पत्त्यनन्तरमनुष्ठितस्तु ''अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्'' इति सूत्रे ज्ञानार्जिते फले कर्माधीनातिशयस्य स्थितेराह **आनन्दोद्रेकेति** ॥ विषयप्रयोजनयोरित्यत्र धर्मः परमपरं च तत्त्वं विषयः । तज्ज्ञानमवान्तरं प्रयोजनम् । मोक्षः परमिति विवेकः ।

**भाष्यम्**

**'स हि धर्मस्सुपर्याप्तो ब्रह्मणः पदवेदने ॥' —इत्यादि च ।**

*प्र०दी०*— केचित्तु ज्ञानोत्तरकालं धर्माद्यनुष्ठानमेव नास्तीति ब्रुवते । अन्ये तु ज्ञानकर्मसमुच्चयसाध्यत्वात् मोक्षस्य तत्प्रतिपादनाय गीतारम्भो न धर्मादिप्रतिपादनार्थम् । तदर्थानां मन्वादिधर्मशास्त्राणां सनकादियोगशास्त्राणां च प्रतिकालं विद्यमानत्वादित्याचक्षते ।

तदुभयं निराकर्तुमाह— **स हीति** । स गीतोक्तो धर्मो ब्रह्मणः स्वरूपज्ञाने सुपर्याप्तो ज्ञानात्प्रागनुष्ठितः । ब्रह्मणः पदवेदने जातेऽनुष्ठितस्तु सुपर्याप्तः सुपर्याप्तमुक्तिहेतुरित्यनुगीतोपक्रमे भगवतैवोक्तम् । उदाहरिष्यन्ते चात्र स्पष्टार्थानि वाक्यानि । न च गीतायां तथाविधमेकमपि वाक्यं दृश्यते । तथा च वक्ष्यते । मन्वादिशास्त्राणां विद्यमानत्वेन धर्मादिरप्रतिपाद्यत्वे समुच्चयोऽपि न प्रतिपाद्यः । श्रुत्यादिप्रतिपाद्यत्वाभ्युपगमात् । तत्र न स्फुटं प्रतिपादनमिति चेत् समम् । यथोक्तं वेदार्थाज्ञानाच्चेति । तस्मात् यत्किञ्चिदेतदित्युक्तमेव विषयादिकमिति ॥

***न०टी०***— स हि गीतोक्तो धर्मः परब्रह्मस्वरूपवेदने **सुपर्याप्तः** सुसम्पूर्णः । तस्मात् स न विस्मर्तव्य इति भगवानेवार्जुनायाहानुगीतोपक्रमे ॥ *इति उपोद्घातः ॥*

***भा०दी०***— **धर्म** इति पूर्वेणान्वयः । तस्यैव वाक्यस्य योजनान्तरमाह **ब्रह्मणः पदवेदने जात इति** । पूर्वयोजनायां जनयितव्य इत्यर्थ इति भावः । **उदाहरिष्यन्ते चेति** । तृतीयेऽध्याये 'कर्मणैवे'त्यादि श्लोकव्याख्यावसरे 'कर्मणा ही'त्यादिना 'समुच्चयनियमोऽपि निराकृत' इत्यन्तेन । **तथाविधं परोक्तार्थकं वक्ष्यत इति** । उत्तरस्थल एवेति ज्ञेयम् ॥ परोक्ते स्वयं दोषमाह **मन्वादीति** । कुत इत्यत आह **श्रुत्यादीति** । **समुच्चयस्येति** । परेणेति च योज्यम् । **सममिति** । गीतायामपि न स्पष्टमित्यर्थः । समुच्चयो वेदे नोच्यते । किन्तु स्वोक्तरीत्यैव धर्मस्य उपयोग उच्यत इत्यत्र सम्मतिमाह **यथोक्तमिति** । अस्मदुक्तरीत्या वेदार्थज्ञानादित्यर्थ इति भावः ॥ *उपोद्घातः समाप्तः ॥*

***भा०र०***— तत्र धर्मो गीताप्रतिपाद्यो न भवतीति वदतां मतं दूषयितुं प्रवृत्तमुत्तरभाष्यमवतारयितुं तदनुवदति **केचित्त्विति** ॥ **नास्ति** यत्प्रतिपादनाय गीतारम्भ इति शेषः ॥ **ज्ञानकर्मसमुच्चयेति** ॥ "दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्" इत्यत्र दर्शत्रिकस्य पूर्णमासत्रिकस्य समुच्चितस्यैव स्वर्गसाधनत्वमिव ज्ञानस्य कर्मणश्च परस्परं समुच्चितस्यैव मोक्षसाधनत्वमत्र मतेऽभिमतमित्यर्थः । तत्प्रतिपादनाय समुच्चयप्रतिपादनाय । **तदर्थानां** धर्मज्ञानप्रतिपादनार्थानाम् ।

पदशब्दः स्वरूपं वेदनशब्दस्तु ज्ञानमभिधत्त इत्याह **स्वरूपज्ञान इति** । **सुपर्याप्तः** सुसम्पूर्णः । ज्ञानात् प्रागनुष्ठित इति धर्मविशेषणं पूरितम् । योजनान्तरे जाते अनुष्ठितस्त्विति शेषोक्तिः । **सुपर्याप्त** इत्यस्य तात्पर्यं **सुपर्याप्तमुक्तिहेतुरिति** ॥ ननु तच्छब्दः पूर्वोक्तस्य परामर्शकः । "स हि" इति वाक्यात् पूर्वं च गीतोक्तधर्मस्यानुक्तत्वात् कथं तत्परामर्श इत्यत उक्तम् **अनुगीतोपक्रम इति** । गीताया भीष्मपर्वस्थत्वादनुगीताया अश्वमेधपर्वस्थत्वाद् युक्तस्तेन तत्परा-

मर्शः । न चानुगीतायामेव पूर्वोक्तं तच्छब्देन परामृश्यतामित्यत **उपक्रम** इत्युक्तम् ॥ पुरुषान्तरोक्तस्य पुरुषान्तरेण परामर्शायोगं परिहर्तुं **भगवतैव** इत्युक्तम् । अनुगीताया अपि कृष्णार्जुनसंवादरूपत्वात् सर्वं युक्तमिति भावः ।

ननु ''स हि'' इति वाक्यं कथं मतद्वयनिरासकम् ? ज्ञानात् प्रागनुष्ठितो ज्ञाने, ज्ञानोत्तरकालमनुष्ठितस्तु ज्ञानफलेऽतिशयमाधत्त इति विविक्षितार्थस्यास्माद् वाक्यात् स्पष्टमप्रतीतेः । व्याख्यानस्य च स धर्मो ब्रह्मणः पदवेदने सत्येव ब्रह्मापरोक्षज्ञानसमुचित एवेति यावत्, सुपर्याप्तमुक्तिहेतुरित्येवंप्रकारेण कर्तुं शक्यत्वेन अतिप्रसङ्गित्वादित्यत आह **उदाहरिष्यन्ते चेति** । **अत्र** उक्तप्रमेयद्वये ।

''निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये ।
अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ॥
सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।
न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक् ॥''

इति प्रथमे प्रमेये, ''न हास्य कर्म क्षीयते'' अस्माद्ध्येवाऽत्मनो यद् यत् कामयते तत् तत्सृजते'' इत्यादीनि द्वितीये च वाक्यान्युदाहरिष्यन्त इत्यर्थः । स्वमतस्य प्रामाणिकतामभिधानायानूदितं परमतद्वयं दूषयति **न चेति** ॥ **तथाविधं** ज्ञानोत्तरकालं धर्मानुष्ठानाभावपरं ज्ञानकर्मसमुच्चयपरं चेत्यर्थः ।

ननु कथं न दृश्यते । ''यावानर्थः'' इति वाक्ये कर्ममात्रत्यागतात्पर्यकत्वस्य, ''यस्त्वात्मरतिरेव स्यात्'' इत्यत्र ''तस्य कार्यं न विद्यते'' इति ''नैव तस्य कृतेनार्थः'' इति ज्ञानिनः कर्तव्याभावस्य च स्फुटमवभासादित्यत आह **तथा च वक्ष्यत इति** ॥ ज्ञानफलं महासमुद्रोदकमिव महत् । कर्मफलं तु कूपोदकमिवात्यल्पम् । तथा चाल्पास्थिरफलककर्मनिन्दया महानन्तफलज्ञानसाधने योगे प्रेरणं युक्तियुक्तमेवेत्येतत्तात्पर्यकं ''यावानर्थः'' इति वाक्यम् । असम्प्रज्ञातसमाधिस्थस्यैव ''कार्यं न विद्यते'' इत्येतदर्थकं ''यस्त्वात्मरतिरेव'' इति वाक्यम् । तद्विषयमेव ''नैव तस्य कृतेनार्थः'' इति वाक्यं चेति द्वितीये तृतीये च वक्ष्यत इत्यर्थः ।

यदुक्तं समुच्चयवादिना मन्वादिधर्मशास्त्राणां सनकादियोगशास्त्राणां चेति तद् दूषयति **मन्वादीति** ॥ **समुच्चयः** धर्मज्ञानसमुच्चयः । **तत्र** श्रुत्यादौ । **प्रतिपादनं** समुच्चयस्य ॥ **सममिति** ॥ मन्वादिशास्त्रे धर्मस्य सनकादिशास्त्रे योगस्य स्फुटमप्रतिपादनं तुल्यमित्यर्थः । मन्वादिशास्त्रादौ

धर्मादिः स्फुटमप्रतिपादनमित्यत्र सम्मतिमाह **यथोक्तमिति** । "वेदार्थाज्ञानाच्च" इति भाष्येण वेदाधिकारिणां त्रैवर्णिकानां धर्मादिरूपवेदार्थज्ञानोपायो भारतमिति सूचितं प्राक् । यदि च धर्मादिकं मन्वादिशास्त्रादिना स्फुटं प्रतिपादयितुं शक्यं स्यात् तर्हि सत्यपि तस्मिन् भारतनिर्माणमेव व्यर्थं स्यात् । तन्निर्माणस्य धर्मादिप्रतिपादनैदम्पर्यात् । ततो ज्ञायते न मन्वादिशास्त्रं स्पष्टं धर्मादिप्रतिपादयितुमलमिति । अन्यथा भारतं विना वेदार्थाज्ञानाच्च तत्परिज्ञानोपायं महाभारतसंहितामचीक्लृपदिति नावक्ष्यदिति भावः ।

केचित्तु तत्र श्रुत्यादौ समुच्चयस्य न स्फुटं प्रतिपादनमिति चेत्, तत्र धर्मादिः स्फुटमप्रतिपादनमपि तुल्यमित्यत्र सम्मतिमाह **यथोक्तमिति** । यदि वेदादिनैव धर्मादिप्रतीतिः स्फुटं स्यात् तदा तत्सुबोधोपायभारतनिर्माणमचतुरं स्यादिति भाव इति व्याचक्षते । "तत्र ज्ञानमेव केवलं मोक्षसाधनम्" इत्यादिनोक्तं स्वमतमुपसंहरति **तस्मादिति** । मतद्वयस्योक्तरीत्याऽनुपपन्नत्वादित्यर्थः ।

*उपोद्घातः समाप्तः ॥*

**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः**
**गीतातात्पर्यनिर्णयः**

**समस्तगुणसम्पूर्णं सर्वदोषविवर्जितम् ।**
**नारायणं नमस्कृत्य गीतातात्पर्यमुच्यते ॥**

**श्रीपद्मनाभतीर्थविरचिता टीका प्रकाशिका**

श्रियः पतिं हरिं नत्वा गीतातात्पर्यनिर्णयम् ।
ग्रन्थमानन्दतीर्थार्यकृतं स्पष्टीकरोम्यहम् ॥

अथ अशेषवेदपञ्चरात्रादिसदागमैकवेद्यं विष्णुं नमस्कृत्य ग्रन्थारम्भं प्रतिजानीते **समस्तेति** ।

**श्रीमज्जयतीर्थविरचिता गीतातात्पर्यनिर्णयटीका न्यायदीपिका**

इन्दिरावदनाम्भोजराजहंसाय विष्णवे ।
अमन्दानन्दसन्दोहसुन्दराकृतये नमः ॥ १ ॥

धर्मविज्ञानवैराग्यपरमैश्वर्यशालिनः ।
आनन्दतीर्थभगवत्पादान् वन्दे निरन्तरम् ॥ २ ॥

स पद्मनाभतीर्थार्कगोगणोऽस्तु दृशे मम ।
न तत्त्वमार्गे गमनं विना यदुपजीवनम् ॥ ३ ॥

प्रणम्य चरणद्वन्द्वं गुरूणां तत्कृपाबलात् ।
व्याकरिष्ये यथाबोधं गीतातात्पर्यनिर्णयम् ॥ ४ ॥

**श्रीमद्राघवेन्द्रयतिकृता भावदीपटिप्पणी**

लक्ष्मीनारायणं नत्वा पूर्णबोधादिसद्गुरून् ।
गीतातात्पर्यटीकाया भावदीपं करोम्यहम् ॥

सकलवाङ्मनसदेवतेन्दिरोपसर्जनकभगवन्नतिरूपं मङ्गलं ग्रन्थादावाचरति **इन्दिरेति** । एतच्च न सौख्यातिशयाय, किन्तु तदनुग्रहार्थमेवेति भावेनोक्तम् **अमन्देत्यादि** । 'अशरीरः प्रज्ञात्मा' इत्युक्तेः कथमशरीरस्य वदनाम्भोजराजहंसत्वमिति शङ्कानिरासायोक्तं **सुन्दराकृतय** इति । प्राकृतदेहनिषेधपरा श्रुतिरिति भावः । ग्रन्थकर्तृत्वान्नमति **धर्मेति** । गुरुत्वाद् बहुवचनम् । एवमग्रेऽपि । प्राचीनटीकाकर्तॄन् अर्थयते **स पद्मनाभेति** । सूर्यकिरणसमूहो यथा लोकस्य ज्ञानाय भवति, तथैतेषां वाक्समूहो मम ज्ञानाय अस्तु । उत्तरार्धेऽप्यर्थद्वयं ज्ञेयम् । श्रीपद्मनाभेति पाठे यच्छब्द-श्रवणात् स गोगण इति योज्यम् । अक्षोभ्यतीर्थाख्यस्वगुरून् नत्वा चिकीर्षितं प्रतिजानीते **प्रणम्येति** ।

***न्या०दी०—*** अथ अशेषपुरुषार्थहेतुभूतामन्यैरन्यथाव्याख्यातां गीतां यथावद्व्याख्यातुकामो भगवान् आचार्यवर्यः प्रारिप्सितस्य ग्रन्थस्य अविघ्नेन परिसमाप्त्यादिप्रयोजनां इष्टदेवतानतिं शिष्टाचारपरम्परादिप्राप्तां शिष्यजनशिक्षार्थं ग्रन्थे निबध्नाति, ग्रन्थारम्भं च प्रतिजानीते **समस्तेति** । अन्तरायपरिजिहीर्षादिमन्तो देवतान्तरनतिमाचरन्तो दृष्टाः । तत्किं नारायणप्रणामेनेत्यत उक्तं **समस्तेत्यादि** ॥ नारायणस्यैव समस्तगुणसम्पूर्णत्वेनाशेषदोषदूरत्वेन निखिलप्रार्थितप्रदानसामर्थ्या-दितरेषां तत्प्रसादाऽऽसादितशक्तिमत्त्वात् तत्प्रणाम एव कर्तव्य इति भावः । सम्पूर्णमिति गुणानां प्रत्येकं पूर्णतामाह । विवर्जितमिति च दोषवर्जनस्य निःशेषताम् । समस्तगीतासु भगवद्गीतायाः प्राधान्यज्ञापनाय गीतेत्येवोक्तम् । "मुख्यस्य निर्विशेषेण शब्द" इति स्मृतेः । स्वयमेव गीता-भाष्यस्य कृतत्वात् किं पुनरारम्भेणेत्यतस्तात्पर्यमित्युक्तम् । व्याख्यातत्वेऽपि गीतायास्तदर्थस्य शिष्याणां बुद्ध्यारोहार्थं शब्दानुकरणाद्यन्तरेण पुनस्तात्पर्यमेवोच्यत इति भावः ।

***भा०दी०—*** **अथेति** । प्रतिग्रन्थव्याख्याऽऽरभ्यत इत्यारम्भार्थोऽथशब्दः । व्याख्याने बीजोक्तिः **अशेषेत्यादि** । यथावदित्येतद्घटनायोक्तम् **अन्यैरित्यादि** । परिसमाप्त्यादीत्यादिपदेन

प्रचयसङ्ग्रहः । परम्परादित्यादिपदेन तदनुमितायाः 'प्रारिप्सितसमास्यादिकामः स्वेष्टदेवतानतिं कुर्यात्' इति श्रुतेर्ग्रहः । निबन्धनस्य कृत्योक्तिः **शिष्येति** । शिष्यैरप्येतदवश्यं कार्यमिति ज्ञापनार्थमित्यर्थः । समस्तपदेनापौनरुक्त्यमाह **सम्पूर्णमिति** । **समस्तगीतास्विति** । वेणुगीताभ्रमरगीता-गोपिकागीताभिक्षुगीतेत्यादिरूपास्वित्यर्थः । **स्मृतेरिति** । सूत्रभाष्योक्तस्मृतेरित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**शास्त्रेषु भारतं सारस्तत्र नाम सहस्रकम् ।**
**वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ॥**

***प्रका०*** — गीतातात्पर्योपयुक्तं पुराणवचनं तावदाह **शास्त्रेष्विति** ।

***न्या०दी०***— नन्वनेकेषु ग्रन्थेषु विद्यमानेषु को विशेषो गीताया येन तस्या एव तात्पर्यमुच्यते । अपि च, भारतमध्यगतत्वाद्गीतायाः कुतस्तस्या एव पृथक् तात्पर्यमुच्यत इत्यतो भारतस्य सर्वशास्त्रोत्तमत्त्वाद्युक्तं तदन्तर्गतगीताया एव तात्पर्यकथनम् । भारतेऽपि गीताया उत्तमत्वात्तस्याः पृथक्तात्पर्यकथनं चोपपन्नमिति परिहारमभिप्रेत्य भारतस्य सर्वशास्त्रोत्तमत्वं, भारतेऽपि गीताया एव उत्तमत्त्वेन कुत इत्यतस्तत्पुराणवचनेन साधयति **शास्त्रेष्विति** ॥ भारतेऽपि गीतानामसहस्रयोरुत्तमत्वं कुत इत्यत आह **तदिति** ॥ भारतज्ञानादप्याञ्जस्येन गीतादिज्ञानस्य मोक्षसाधनत्वाद्युक्तं भारतेऽपि गीतादेरुत्तमत्वमिति भावः ।

**भा०दी०**— **तस्या एवेति** । भारतस्य वा तदन्तर्गतग्रन्थान्तरस्य वा त्यागेनेति योज्यम् । नन्वित्यादिना कृतचोद्यस्य शास्त्रेष्विति श्लोकस्थपूर्वोत्तरार्धतात्पर्योक्त्योत्तरमाह **भारतस्येत्यादिना** ।

**गीतातात्पर्यनिर्णयः**

**न भारतसमं शास्त्रं कुत एवानयोः समम् ।**
**भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥**
**देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः ।**
**व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ॥**

***न्या०दी०***— गीतानामसहस्रसमानशास्त्रान्तरज्ञानस्याप्याञ्जस्येन मोक्षहेतुत्वात् को विशेषो गीतादेरित्यत आह **नेति** ॥ भारतस्य सर्वशास्त्रोत्तमत्वमेव कुत इत्यत आह **भारतमिति** ॥ **वेदपदेन** वेदयन्तीति सर्वशास्त्राण्युच्यन्ते । भारतादेस्तुलाऽऽरोपणं नाम तत्प्रतिनिधेरारोपणम् ।

स पद्मनाभतीर्थार्कगोगणोऽस्तु दृशे मम ।
न तत्त्वमार्गे गमनं विना यदुपजीवनम् ॥ ३ ॥

प्रणम्य चरणद्वन्द्वं गुरूणां तत्कृपाबलात् ।
व्याकरिष्ये यथाबोधं गीतातात्पर्यनिर्णयम् ॥ ४ ॥

**श्रीमद्राघवेन्द्रयतिकृता भावदीपटिप्पणी**

लक्ष्मीनारायणं नत्वा पूर्णबोधादिसद्गुरून् ।
गीतातात्पर्यटीकाया भावदीपं करोम्यहम् ॥

सकलवाङ्मनसदेवतेन्दिरोपसर्जनकभगवन्नतिरूपं मङ्गलं ग्रन्थादावाचरति **इन्दिरेति** । एतच्च न सौख्यातिशयाय, किन्तु तदनुग्रहार्थमेवेति भावेनोक्तम् **अमन्देत्यादि** । 'अशरीरः प्रज्ञात्मा' इत्युक्तेः कथमशरीरस्य वदनाम्भोजराजहंसत्वमिति शङ्कानिरासायोक्तं **सुन्दराकृतय** इति । प्राकृतदेहनिषेधपरा श्रुतिरिति भावः । ग्रन्थकर्तृत्वान्नमति **धर्मेति** । गुरुत्वाद् बहुवचनम् । एवमग्रेऽपि । प्राचीनटीकाकर्तॄन् अर्थयते **स पद्मनाभेति** । सूर्यकिरणसमूहो यथा लोकस्य ज्ञानाय भवति, तथैतेषां वाक्समूहो मम ज्ञानाय अस्तु । उत्तरार्धेऽप्यर्थद्वयं ज्ञेयम् । श्रीपद्मनाभेति पाठे यच्छब्द-श्रवणात् स गोगण इति योज्यम् । अक्षोभ्यतीर्थाख्यस्वगुरून् नत्वा चिकीर्षितं प्रतिजानीते **प्रणम्येति** ।

***न्या०दी०***— अथ अशेषपुरुषार्थहेतुभूतामन्यैरन्यथाव्याख्यातां गीतां यथावद्व्याख्यातुकामो भगवान् आचार्यवर्यः प्रारिप्सितस्य ग्रन्थस्य अविघ्नेन परिसमाप्त्यादिप्रयोजनां इष्टदेवतानतिं शिष्टाचारपरम्परादिप्राप्तां शिष्यजनशिक्षार्थं ग्रन्थे निबध्नाति, ग्रन्थारम्भं च प्रतिजानीते **समस्तेति** । अन्तरायपरिजिहीर्षादिमन्तो देवतान्तरनतिमाचरन्तो दृष्टाः । तत्किं नारायणप्रणामेनेत्यत उक्तं **समस्तेत्यादि** ॥ नारायणस्यैव समस्तगुणसम्पूर्णत्वेनाशेषदोषदूरत्वेन निखिलप्रार्थितप्रदानसामर्थ्या-दितरेषां तत्प्रसादाऽऽसादितशक्तिमत्त्वात् तत्प्रणाम एव कर्तव्य इति भावः । सम्पूर्णमिति गुणानां प्रत्येकं पूर्णतामाह । विवर्जितमिति च दोषवर्जनस्य निःशेषताम् । समस्तगीतासु भगवद्गीतायाः प्राधान्यज्ञापनाय गीतेत्येवोक्तम् । "मुख्यस्य निर्विशेषेण शब्द" इति स्मृतेः । स्वयमेव गीता-भाष्यस्य कृतत्वात् किं पुनरारम्भेणेत्यतस्तात्पर्यमित्युक्तम् । व्याख्यातत्वेऽपि गीतायास्तदर्थस्य शिष्याणां बुद्ध्यारोहार्थं शब्दानुकरणाद्यन्तरेण पुनस्तात्पर्यमेवोच्यत इति भावः ।

***भा०दी०***— **अथेति** । प्रतिग्रन्थव्याख्याऽऽरभ्यत इत्यारम्भार्थोऽथशब्दः । व्याख्याने बीजोक्तिः **अशेषेत्यादि** । यथावदित्येतद्घटनायोक्तम् **अन्यैरित्यादि** । परिसमाप्त्यादीत्यादिपदेन

प्रचयसङ्ग्रहः । परम्परादित्यादिपदेन तदनुमितायाः 'प्रारिप्सितसमाप्त्यादिकामः स्वेष्टदेवतानतिं कुर्यात्' इति श्रुतेर्ग्रहः । निबन्धनस्य कृत्योक्तिः **शिष्येति** । शिष्यैरप्येतदवश्यं कार्यमिति ज्ञापनार्थमित्यर्थः । समस्तपदेनापौनरुक्त्यमाह **सम्पूर्णमिति** । **समस्तगीतास्विति** । वेणुगीताभ्रमरगीता-गोपिकागीताभिक्षुगीतेत्यादिरूपास्वित्यर्थः । **स्मृतेरिति** : सूत्रभाष्योक्तस्मृतेरित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**शास्त्रेषु भारतं सारस्तत्र नाम सहस्रकम् ।**
**वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ॥**

*प्रका०* — गीतातात्पर्योपयुक्तं पुराणवचनं तावदाह **शास्त्रेष्विति** ।

***न्या०दी०*—** नन्वनेकेषु ग्रन्थेषु विद्यमानेषु को विशेषो गीताया येन तस्या एव तात्पर्यमुच्यते । अपि च, भारतमध्यगतत्वाद्गीतायाः कुतस्तस्या एव पृथक् तात्पर्यमुच्यत इत्यतो भारतस्य सर्वशास्त्रोत्तमत्त्वाद्युक्तं तदन्तर्गतगीताया एव तात्पर्यकथनम् । भारतेऽपि गीताया उत्तमत्वात्तस्याः पृथक्तात्पर्यकथनं चोपपन्नमिति परिहारमभिप्रेत्य भारतस्य सर्वशास्त्रोत्तमत्वं, भारतेऽपि गीताया एव उत्तमत्त्वेन कुत इत्यतस्तत्पुराणवचनेन साधयति **शास्त्रेष्विति** ॥ भारतेऽपि गीतानामसहस्रयोरुत्तमत्वं कुत इत्यत आह **तदिति** ॥ भारतज्ञानादप्याञ्जस्येन गीतादिज्ञानस्य मोक्षसाधनत्वाद्युक्तं भारतेऽपि गीतादेरुत्तमत्वमिति भावः ।

**भा०दी०—** **तस्या एवेति** । भारतस्य वा तदन्तर्गतग्रन्थान्तरस्य वा त्यागेनेति योज्यम् । नन्वित्यादिना कृतचोद्यस्य शास्त्रेष्विति श्लोकस्थपूर्वोत्तरार्धतात्पर्योक्त्योत्तरमाह **भारतस्येत्यादिना** ।

**गीतातात्पर्यनिर्णयः**

**न भारतसमं शास्त्रं कुत एवानयोः समम् ।**
**भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥**
**देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः ।**
**व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ॥**

***न्या०दी०*—** गीतानामसहस्रसमानशास्त्रान्तरज्ञानस्याप्याञ्जस्येन मोक्षहेतुत्वात् को विशेषो गीतादेरित्यत आह **नेति** ॥ भारतस्य सर्वशास्त्रोत्तमत्वमेव कुत इत्यत आह **भारतमिति** ॥ **वेदपदेन** वेदयन्तीति सर्वशास्त्राण्युच्यन्ते । भारतादेस्तुलाऽऽरोपणं नाम तत्प्रतिनिधेरारोपणम् ।

**गीतातात्पर्यनिर्णयः**

**महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।**
**निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥**

***न्या०दी०—*** एतदेव कुत इत्यतो महाभारतशब्दार्थपर्यालोचनयैव ज्ञायत इत्याह **महत्त्वादिति** ॥ महत्त्वात्तत एव भारेण ततत्वाच्च महाभारतमित्यर्थः । किञ्च महाभारतशब्दनिर्वचनज्ञानादेव यदा सर्वपापक्षयो भवति तदा किं वाच्यं तस्य सर्वशास्त्रोत्तमत्वमिति भावेनाह **निरुक्तमिति** ॥ निरुक्तं निर्वचनम् । अस्य महाभारतशब्दस्य ।

***भा०दी०—*** प्रतिनिधेः = पाषाणादेः । महत्त्वं भारहेतुरित्याह **महत्त्वात्तत एव भारेण ततत्त्वादिति** । महत्वाद्भारो महाभारः । निरुक्तत्वादेव महत आ पञ्चमीसमासश्च ज्ञेयः । तेन महाभारेण ततत्वाद्व्यासत्वात् । महाभारोपपदात् तनोतेर्डप्रत्यय इति भावः । निर्वचनमवयवार्थकथनम् ।

**गीतातात्पर्यनिर्णयः**

**स्वयं नारायणो देवैर्ब्रह्मरुद्रेन्द्रपूर्वकैः ।**
**अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ।**
**चकार पञ्चमं वेदं महाभारतसंज्ञितम् ॥ —इति ब्रह्माण्डे ।**

***न्या०दी०—*** भारतस्यैवं सर्वशास्त्रोत्तमत्वे किं निमित्तमित्यतः परमाप्तकृतत्वं दर्शयति **स्वयमिति** । नन्वाप्तो नाम यथार्थदर्शी यथादृष्टार्थवादी च । तत्र व्यासस्य यथार्थदर्शितत्वं कुतः ? भगवदवतारेष्वपि पृथ्वादिष्वज्ञानादिदर्शनादित्यत उक्तं **स्वयमिति** ॥

अस्तु व्यासस्य यथार्थदर्शितत्वं साक्षान्नारायणावतारत्वेनाज्ञानभ्रमसन्देहशून्यत्वात् । यथादृष्टार्थवादित्वं तु कुतः? तस्य प्रमादेनायथादृष्टवादित्वाभावेऽपि विप्रलिप्सया तत्सम्भवादित्यत आह **ब्रह्मेति** ॥ वक्तुर्विप्रलिप्सा श्रोतॄणामयोग्यतायां सम्भवति । प्रकृते च ब्रह्मादीनां योग्यानामेव श्रोतृत्वेन भगवतो विप्रलम्भाभावाद्युक्तं यथादृष्टार्थवादित्वमिति भावः । अपहासेनायथादृष्टार्थवादित्वं किं न स्यादित्यत आह **तत्त्वेति** ॥ अपहासस्य प्रसङ्गदोषनिबन्धनत्वादत्र च तत्त्वनिर्णयस्य प्रसक्तत्वेन तदसम्भवान्नात्रापहासेनापि व्यासस्यायथादृष्टार्थवादित्वमिति भावः । एवंभूतात्परचितत्वस्य भागवतादिष्वपि साम्यात्को विशेषो भारतस्येत्यत उक्तं **केवलमिति** ॥ नासुरमोहनाद्यर्थ-

मप्यत्रान्यदुच्यते । अन्यथाप्रतीतस्य गुह्यदर्शनभाषाभ्यामुक्तत्वात् । अन्यत्र क्वचिद्व्यामोहनार्थमन्यथा कथनादिति भावः । एवं परमाप्तिमूलत्वेनैव न भारतस्य सर्वशास्त्रोत्तमत्वं किन्तु वेदसंवादितया पञ्चमवेदत्वेनापीति भावेनाह **पञ्चममिति** ।

*भा०दी०*— 'एष विष्णोर्भगवतः कला भुवनपावनी' इत्यादि पृथुं प्रति ऋषिभिरुक्तं हृदि कृत्वा शङ्कते **पृथ्वादिष्विति** । आदिपदेन बलरामकार्तवीर्यार्जुनादिग्रहः । 'आविवेश पृथुं देवः शङ्खी चक्री चतुर्भुजः' इति, 'पृथुहैहयादयो जीवास्तेष्वाविष्टो हरिः स्वयम्' इत्यादिवचनात्तेषां न साक्षादवतारत्व-मस्तीति भावे स्वयंशब्दार्थमाह **साक्षान्नारायणेति** ॥ **गुह्येति** । भाषाद्वयं भारततात्पर्यद्वितीये व्यक्तम् । ३ यत्र पुराणेषु ।

### *अथ उपोद्धातः*

#### गीतातात्पर्यनिर्णयः

**तत्र साक्षादिन्द्रावतारमुत्तमाधिकारिणमात्मनः प्रियतममर्जुनं क्षत्रियाणां विशेषतोऽपि परमधर्मं नारायणद्विट्तदनुबन्धिनिग्रहं बन्धुस्नेहादधर्मत्वेनाशङ्क्य ततो निवृत्तप्रायं स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमो धर्मस्तद्विरुद्धः सर्वोऽप्यधर्मो भगवदधीनत्वात्सर्वस्येति बोधयति भगवान्नारायणः ।**

*प्रका०*— श्रीगीताप्रतिपाद्यमर्थं सङ्क्षिप्य निर्दिशति **तत्रेति** ।

***न्यां०दी०*—** एवं गीतातात्पर्यकथनस्य युक्ततां प्रसाध्य श्रोतृशेमुषीमनुकूलयिष्यन्नादावेव अशेषगीताप्रतिपाद्यमर्थं सङ्क्षेपेण दर्शयति **तत्रेति** ॥ **तत्र** गीतायाम् । इति कथ्यत इति शेषः । कृष्णस्याप्यर्जुनादविशेषात्कथं तद्बोधकत्वमित्यतो **भगवान्नारायण** इत्युक्तम् । आप्तसमस्तकामस्य भगवतः किमर्जुनबोधनेनेत्यत उक्तं **आत्मन इति** ॥ प्रयोजनाभावेऽपि प्रीत्यतिशयवशान्मातु-रपत्यपालनवत्तद्बोधनं युक्तमिति भावः ॥ अर्जुनस्य भगवत्प्रियत्वमेव कुतः ? अपरोक्षज्ञानित्वात् ''ज्ञानी प्रियतमोऽतो मे''इति स्मृतेरिति चेत्तदेव कुत इत्यत आह **उत्तमेति** । एतदपि कुत इत्यत आह **साक्षादिति** ॥ साक्षादिन्द्रः पुरन्दरः । साक्षादवतारो नावेशमात्रमिति वा । अत्र देवत्वमेव वक्तव्यम् । इन्द्रावतारमिति स्वरूपकथनम् । अर्जुनबोधने का प्राप्तिरित्यत आह **नारायणेति** ॥ बान्धवादिनिग्रहस्याधर्मत्वात् किमुच्यतेऽधर्मत्वेनाशङ्क्येत्यत एतन्निग्रहस्य कैमुत्येन धर्मत्वमाह **क्षत्रियाणामिति** ॥ भागवतमात्रस्यैतादृशनिग्रहः परमधर्मः । अत्रैव नियुक्तानां क्षत्रियाणां तु

विशेषतोऽपि परमधर्म इत्यर्थः । बान्धवादिनिग्रहः कथं परमधर्म इत्यतो बान्धवादीति वक्तव्ये **नारायणद्विट्तदनुबन्धीत्युक्तम्** । बान्धवादित्वेऽपि केषाञ्चिन्नारायणद्वेषित्वात् केषाञ्चित्तत्सम्बन्धित्वात् तन्निग्रहो धर्म एवेति भावः ।

***भा०दी०***— **अनुकूलयिष्यन्निति** । सङ्क्षेपेणोक्ते प्रपञ्चं जिज्ञासवो भवन्तीति प्रपञ्चनेऽपि जिज्ञासाजननम् अत्रानुकूलनमिति भावः ॥ **इति शेष इति** । नारायणपदानन्तरं 'इति'पदं कथ्यत इति पदञ्चाध्याहार्यमित्यर्थः ॥ **इति स्मृतेरिति** । 'ज्ञानेनासौ बिभर्ति माम्' इति भागवतस्मृतेरित्यर्थः । अत्र = ज्ञानित्वे । 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः' इति स्मृतेरिति भावः । अत्रैवेति द्विट्तदनुबन्धिनिग्रह एवेत्यर्थः ॥ **केषाञ्चिदिति** । दुर्योधनादीनाम् । भीष्मद्रोणादीनां तदनुबन्धित्वादिति भावः ।

***न्या०दी०***— नन्वयं धर्मश्चेच्छास्त्रोदित एव भवेत् । तथा च न शास्त्रविदुषाऽधर्मत्वेन आशङ्क्येत । शङ्क्यते च । अतो न धर्म इत्यत आह **बन्धुस्नेहादिति** ॥ न शास्त्रमुखेनेयं शङ्का । अपि तु स्नेहमात्रनिबन्धनैवेति भावः । ज्ञानिनः स्नेहमात्रेण सञ्जातया शङ्कया कथं स्वकीयपरमधर्मनिवृत्तिरित्यत उक्तं **निवृत्तप्रायमिति** ॥ एवमाशङ्कया निवृत्तप्रायश्चेदेतद्युद्धकरणमेव बोधनीयं, भगवन्महिमादिकं किमर्थमुच्यत इत्यतो बोध्यार्थमाह **स्वेति** ॥ न केवलं युद्धादिस्वविहितवृत्तिमात्रं परमो धर्मः । येन तदेव बोध्यं स्यात् । अपि तु भक्त्यादिकमपि । तत्रार्जुनस्य धर्मैकदेशेऽधर्मशङ्कायामपि प्राप्तलोकोपकाराय समग्रधर्मो भगवता बोध्यते । तत्र भगवन्महिमाद्युक्तिस्तु भक्त्युत्पादनायेति भावः ।

ननु युद्धादिस्वविहितवृत्तिनिवृत्तोऽप्यर्जुनो न परमधर्मनिवृत्तः । भक्त्यादिमत्त्वात् । अतः किं बोध्यत इत्यत आह **तदिति** ॥ न भक्त्यादिकं प्रत्येकं परमधर्मः । येन तावता तस्य न परमधर्मनिवृत्तिः । किन्तु मिलितमेव । अतोऽन्यतमाभावेऽपि परमधर्मनिवृत्तेर्युक्तं तद्बोधनमिति भावः । तर्हि प्रकृत्यादिवर्णनं क्वोपयुज्यत इत्यतोऽस्तु स्वविहितवृत्तेर्धर्मत्वं, तद्विरुद्धस्याधर्मत्वं च । भगवद्भक्त्या तदाराधनस्य धर्मत्वं तद्विरुद्धस्याधर्मत्वं च कुत इत्याशङ्कानिवारणाय सर्वस्य भगवदधीनत्वहेतुं वक्तुं सर्वनिरूपणमिति भावेनाह **भगवदिति** ॥ सर्वस्य भगवदधीनत्वेन धर्माधर्मतया भगवन्नियतयोरेव तथाभावात्तस्य चैवंविधयोरेव तथा नियमनोपपत्तेरिति भावः ।

***भा०दी०***— शास्त्रविदुषा = अर्जुनेनेत्यर्थः ॥ **धर्मैकदेश इति** । युद्धरूपे । समग्रधर्मः स्वविहितवृत्तिभगवद्भक्त्यादिरूपः ॥ **मिलितमेवेति** । भक्तिवैराग्यादिपूर्वकं स्वविहितवृत्तिः परमधर्म

इत्यर्थः । युद्धनिवृत्तिरपि परमधर्मविरुद्धत्वादधर्म एवेति तद्बोधनमपि कार्यमेवेत्यर्थः । तथाभावात् । धर्माधर्मभावादित्यर्थः । तद्विरुद्धमपि धर्मत्वेन नियमयति चेत् धर्मो भवत्येवेत्यत आह **तस्य चेति** । हरेः स्वभक्त्यादिपूर्वकस्वविहितवृत्तितद्विरुद्धरूपयोरेव धर्माधर्मत्वेन नियमनोपपत्तिरित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**सर्वं चैतदत्रैवावगम्यते —**

***प्रका०***— सङ्क्षिप्योक्तमर्थं विस्तृत्य भगवद्गीतावाक्यैः प्रतिपादयितुमाह **सर्वं चैतदिति** ।

***न्या०दी०***— नन्वर्जुनस्य देवत्वादि कुतः । स्वविहितेत्यादेर्गीतातात्पर्यार्थत्वं च कुत इत्यत आह **सर्वं चेति** ॥ अर्जुनो देव इत्याद्येतच्च सर्वं गीतायामेवावगम्यते । न च प्रमाणान्तरं तत्रान्वेषणीयम् । स्वविहितेत्यादिकं च सर्वं गीतायामवगम्यत एव । न तु तदर्थतया बलादुच्यत इत्यर्थः । तत्र तावन्नारायणद्विट्तदनुबन्धिनिग्रहं बन्धुस्नेहादधर्मत्वेनाऽऽशङ्क्य ततो निवृत्तप्रायमर्जुनं भगवान्नारायणो बोधयतीत्येतावद्गीतायां स्फुटमवगम्यते । "यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे" इति प्रार्थनात्तस्य निवृत्तप्रायतावगमात् । साक्षान्निवृत्तौ तदनुपपत्तेः ।

**गीतातात्पर्यनिर्णयः**

**अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥**

**—इत्यादिना युद्धस्य स्वधर्मत्वम् ।**

***न्या०दी०***— नारायणद्विट्तदनुबन्धिनिग्रहस्य क्षत्रियाणां परमधर्मत्वं गीतायां केनावगम्यत इत्यत आह **अथेति** । **युद्धस्य** उक्तविधस्येति शेषः । अवगम्यत इति सर्वत्रानुषज्यते ।

***भा०दी०***— **उक्तविधस्येति** । भक्तिपूर्वस्वविहितवृत्त्या क्रियमाणस्य भगवदाराधनस्येत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥**
**श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥**

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥**

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥**

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥**

**—इत्यादिना स्वधर्मेणैव भगवदाराधनस्यैव कर्तव्यत्वं तदन्यस्य त्याज्यत्वं च ।**

***न्या०दी०***— स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमधर्मः । तद्विरुद्धः सर्वोऽप्यधर्म इत्येतत् केनावगम्यत इत्यत आह **यत इति** । यत इत्यनेन स्वविहितवृत्त्या भक्त्या भगवदाराधनस्य कर्तव्यत्वमवगम्यते । भक्त्याऽर्चनस्यैवाभ्यर्चनत्वात् । स्वकर्मणेत्यनेन स्वविहितवृत्त्या भगवदाराधनस्यैव मुख्यतः कर्तव्यत्वम् । मोक्षसाधनस्यैव मुख्यकर्तव्यत्वात् । श्रेयानित्यनेन स्वविहितवृत्तेः कर्तव्यत्वमस्वविहितवृत्तेस्त्याज्यत्वं च । श्रेयस एव कर्तव्यत्वादश्रेयसस्त्याज्यत्वात् । सर्वेत्यनेन भक्त्या भगवदाराधनस्य कर्तव्यत्वम् । सर्वगुह्यतमतया, हितसाधनतया, भगवत्प्राप्तिसाधनतया च विहितस्य कर्तव्यत्वात् । सर्वधर्मानित्यनेन स्वविहितवृत्त्या भक्त्या भगवदाराधनस्यैव कर्तव्यत्वं तदन्यस्य त्याज्यत्वं च । स्वविहितवृत्त्या भक्त्या भगवदाराधनस्यैव शरणागतित्वात् । सर्वधर्मपदेनैतद्विरुद्धस्य धर्माभासस्य विवक्षितत्वात् । सर्वपापगमनहेतुतया विहितस्य कर्तव्यत्वात् । तदर्थत्वेन निषिद्धस्य त्याज्यत्वात् । **स्वधर्मेण** । भक्त्या चेति संयोज्यम् । कर्तव्यत्याज्यत्वाभ्यां धर्माधर्मत्व इति भावः ।

***भा०दी०***— कर्तव्यत्वे हेतुश्चतुर्थपादेन लब्ध इति भावेनाह **मोक्षेति** । ते हितमिति मामेवैष्यसीत्याभ्यां लब्धहेतू आह **हितेत्यादिना** ॥ **त्याज्यत्वं चेति** । अवगम्यत इति योज्यम् । तद्व्यनक्ति **भक्त्येत्यादिना** । स्वधर्मेणेत्यनुवादेन शेषमाह **भक्त्या चेति संयोज्यमिति** । भक्त्या भगवदाराधनमेव धर्मस्तद्विरुद्धस्त्वधर्म इत्येषोर्थोऽनेन कथं लब्ध इत्यत आह **कर्तव्येति** ।

**गीतातात्पर्यनिर्णयः**

**"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥"** (गी. ११-५३, ५४)

**—इत्यादिना विष्णुभक्तेरेव सर्वसाधनोत्तमत्वं परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य तदधीनत्वं च ।**

***न्या०दी०***— ननु श्रवणादिरूपस्वविहितवृत्त्यैव परोक्षापरोक्षज्ञानसिद्धेस्तत्साधनस्यैव परमधर्मत्वान्न भक्तिः परमधर्मतया गीताभिमतेत्यत आह **नाहमिति** ॥ अभिमतैव गीतायां भक्तिः परमधर्मत्वेन । परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य गीतायामेव तदधीनत्वावगमात् । न चैवं श्रवणादिवैय्यर्थ्यम् । अन्यथा ज्ञानादेर्भक्त्यधीनत्वानुपपत्तिरिति वाच्यम् । श्रवणादेर्ज्ञानादिसाधनत्वेऽपि भक्तेरेव तेभ्यः श्रवणादिसर्वसाधनेभ्य उत्तमत्वस्यात्र विवक्षितत्वादिति भावः ।

***भा०दी०***— परधर्मत्वेन भक्तिः गीतायामभिमतेति कुत इत्यतो मूलं योजयति **परोक्षेति** । ज्ञातुं द्रष्टुं चेत्युक्तपरोक्षापरोक्षयोः प्रवेष्टुं चेत्युक्तज्ञानिमोक्षस्य च भक्त्या त्वनन्ययेति भक्त्यधीनत्वावगमादित्यर्थः ॥ **अन्यथेति** । ज्ञानस्य श्रवणाद्यधीनत्व इत्यर्थः । शङ्कोत्तरत्वेन मूलार्थमाह **श्रवणादेरिति** ॥ **उत्तमत्वस्येति** । तथा च सूत्रम्—"परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः" (ब्र. सू. ३-३-५४) इति ॥

**गीतातात्पर्यनिर्णयः**

**"मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥"** (गी. ११-५५)

**—इत्यादिना भक्तस्यापि तत्कर्म विकर्मत्यागश्च ।**

***न्या०दी०***— ननु न भक्त्या स्वविहितवृत्त्या भगवदाराधनं कर्तव्यं तद्विरुद्धं त्याज्यमिति गीताभिमतम् । तत्र भक्तिमतः कर्तव्यत्याज्याभावमात्रस्याभिमतत्वादित्यत आह **मत्कर्मेति** ॥

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥**

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥**

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥**

**—इत्यादिना स्वधर्मेणैव भगवदाराधनस्यैव कर्तव्यत्वं तदन्यस्य त्याज्यत्वं च ।**

***न्या०दी०*—** स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमधर्मः । तद्विरुद्धः सर्वोऽप्यधर्म इत्येतत् केनावगम्यत इत्यत आह **यत इति** । यत इत्यनेन स्वविहितवृत्त्या भक्त्या भगवदाराधनस्य कर्तव्यत्वमवगम्यते । भक्त्याऽर्चनस्यैवाभ्यर्चनत्वात् । स्वकर्मणेत्यनेन स्वविहितवृत्त्या भगवदाराधनस्यैव मुख्यतः कर्तव्यत्वम् । मोक्षसाधनस्यैव मुख्यकर्तव्यत्वात् । श्रेयानित्यनेन स्वविहितवृत्तेः कर्तव्यत्वमस्वविहितवृत्तेस्त्याज्यत्वं च । श्रेयस एव कर्तव्यत्वादश्रेयसस्त्याज्यत्वात् । सर्वेत्यनेन भक्त्या भगवदाराधनस्य कर्तव्यत्वम् । सर्वगुह्यतमतया, हितसाधनतया, भगवत्प्राप्तिसाधनतया च विहितस्य कर्तव्यत्वात् । सर्वधर्मानित्यनेन स्वविहितवृत्त्या भक्त्या भगवदाराधनस्यैव कर्तव्यत्वं तदन्यस्य त्याज्यत्वं च । स्वविहितवृत्त्या भक्त्या भगवदाराधनस्यैव शरणागतित्वात् । सर्वधर्मपदेनैतद्विरुद्धस्य धर्माभासस्य विवक्षितत्वात् । सर्वपापगमनहेतुतया विहितस्य कर्तव्यत्वात् । तदर्थत्वेन निषिद्धस्य त्याज्यत्वात् । **स्वधर्मेण** । भक्त्या चेति संयोज्यम् । कर्तव्यत्याज्यत्वाभ्यां धर्माधर्मत्व इति भावः ।

***भा०दी०*—** कर्तव्यत्वे हेतुश्चतुर्थपादेन लब्ध इति भावेनाह **मोक्षेति** । ते हितमिति मामेवैष्यसीत्याभ्यां लब्धहेतू आह **हितेत्यादिना** ॥ **त्याज्यत्वं चेति** । अवगम्यत इति योज्यम् । तद्व्यनक्ति **भक्त्येत्यादिना** । स्वधर्मेणेत्यनुवादेन शेषमाह **भक्त्या** चेति **संयोज्यमिति** । भक्त्या भगवदाराधनमेव धर्मस्तद्विरुद्धस्त्वधर्म इत्येषोर्थोऽनेन कथं लब्ध इत्यत आह **कर्तव्येति** ।

**गीतातात्पर्यनिर्णयः**

**"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥**
**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥"** (गी. ११-५३, ५४)

**—इत्यादिना विष्णुभक्तेरेव सर्वसाधनोत्तमत्वं परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य तदधीनत्वं च ।**

***न्या०दी०—*** ननु श्रवणादिरूपस्वविहितवृत्त्यैव परोक्षापरोक्षज्ञानसिद्धेस्तत्साधनस्यैव परमधर्मत्वान्न भक्तिः परमधर्मतया गीताभिमतेत्यत आह **नाहमिति** ॥ अभिमतैव गीतायां भक्तिः परमधर्मत्वेन । परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य गीतायामेव तदधीनत्वावगमात् । न चैवं श्रवणादिवैय्यर्थ्यम् । अन्यथा ज्ञानादेर्भक्त्यधीनत्वानुपपत्तिरिति वाच्यम् । श्रवणादेर्ज्ञानादिसाधनत्वेऽपि भक्तेरेव तेभ्यः श्रवणादिसर्वसाधनेभ्य उत्तमत्वस्यात्र विवक्षितत्वादिति भावः ।

***भा०दी०—*** परधर्मत्वेन भक्तिः गीतायामभिमतेति कुत इत्यतो मूलं योजयति **परोक्षेति** । ज्ञातुं द्रष्टुं चेत्युक्तपरोक्षापरोक्षयोः प्रवेष्टुं चेत्युक्तज्ञानिमोक्षस्य च भक्त्या त्वनन्ययेति भक्त्यधीनत्वावगमादित्यर्थः ॥ **अन्यथेति** । ज्ञानस्य श्रवणाद्यधीनत्व इत्यर्थः । शङ्कोत्तरत्वेन मूलार्थमाह **श्रवणादेरिति** ॥ **उत्तमत्वस्येति** । तथा च सूत्रम्—"परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः" (ब्र. सू. ३-३-५४) इति ॥

**गीतातात्पर्यनिर्णयः**

**"मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥"** (गी. ११-५५)

**—इत्यादिना भक्तस्यापि तत्कर्म विकर्मत्यागश्च ।**

***न्या०दी०—*** ननु न भक्त्या स्वविहितवृत्त्या भगवदाराधनं कर्तव्यं तद्विरुद्धं त्याज्यमिति गीताभिमतम् । तत्र भक्तिमतः कर्तव्यत्याज्याभावमात्रस्याभिमतत्वादित्यत आह **मत्कर्मेति** ॥

न भक्तस्य कर्तव्यत्याज्याभावो गीताभिमतः । तत्रैव भक्तस्यापि स्वविहितवृत्त्या भगवदाराधनस्य कर्तव्यतया तद्विरुद्धस्य त्याज्यतयाऽवगमादिति भावः । यदुक्तं स्वविहितवृत्तिरूपं मद्विषयं च कर्म मत्कर्म तदेव तत्कर्म । सङ्गवर्जितो स्वविहिताभगवद्विषयकर्मसङ्गवर्जितः । तदेव विकर्मोच्यते । भगवत्प्राप्तिहेतुतयोक्तमेव कर्म कर्तव्यम् । तदर्थत्वेन निषिद्धमेव त्याज्यमिति ।

***भा०दी०***— **तत्रेति** । सर्वधर्मानिति श्लोके कर्तव्यस्य त्याज्यस्य चाभावोऽभिमत इत्यर्थः । हेयोपादेयाभावेन शरणागतिरेव तस्याभिप्राय इति शङ्कितुर्भावः । यद्वा तत्रेत्यस्य गीतायामित्यर्थ इति ज्ञेयम् । एतद्द्वयं मत्कर्मकृन्मत्परम इति श्लोके कथमवगम्यत इत्यतोऽनुवादव्याजेन व्यनक्ति **यदुक्तमित्यादिना** । गीतापदार्थमुक्त्वा तत्कर्मेति मूलपदस्य अर्थमाह **तदेव तत्कर्मेति** । कर्मधारय इत्युक्तं भवति । अस्मच्छब्दात्तद्भगवद्विषयं कर्मैव भक्तस्य कर्मेत्यर्थः । तदर्थत्वेन भगवदर्थत्वेन निषिद्धमेवेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ।"** (गी. ४-१५)

**—इत्यादिना ज्ञानिनोऽपि भगवत्कर्म ।**

***न्या०दी०***— नन्वर्जुनस्य ज्ञानित्वे कथं तं प्रति स्वविहितवृत्त्या भगवदाराधनं विधीयते । ज्ञानिनस्तदभावस्य गीताभिमतत्वादित्यत आह **कुर्विति** ॥

न ज्ञानिनः स्वविहितवृत्त्याद्यभावो गीताऽभिमतः । तत्र 'एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः । कुरु कर्मैव' इति ज्ञानिनोऽपि स्वविहितवृत्त्यादेः कर्तव्यतयाऽवगमादिति भावः । स्वविहितं, भगवदर्थमेव पूर्वैः कृतं तदुभयमेव भगवत्कर्म ।

***भा०दी०***— **तत्रेति** । गीतायामित्यर्थः । तद्व्यञ्जयन् मूलार्थमाह **स्वविहितमिति** । अवगम्यत इति सर्वत्र योज्यमिति प्रागेवोक्तम् । **तदुभयमि**त्यस्य स्वविहितं भगवदर्थं चेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥"** (गी. ११-५२)

**"इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ।"** (गी. १८-६४)

"दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥" (गी. १६-५)
"महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।" (गी. ९-१३)
"दर्शयामास पार्थाय परमं रूपमैश्वरम् ।" (गी. ११-९)

—इत्यादिनाऽर्जुनस्योत्तमधिकारित्वमपरोक्षज्ञानित्वं च ।

*न्या०टी०*— यदुक्तमर्जुनो भगवतोऽतिप्रियोपरोक्षज्ञान्युत्तमाधिकारी देवश्चेति तत्केनावगम्यत इत्यत आह **सुदुर्दर्शमिति** ॥

सुदुर्दर्शमित्यनेनापरोक्षज्ञानित्वमवगम्यते । देवैः सह पठितत्वेन देवत्वं च । इष्टोऽसीति प्रियतमत्वम् । दैवीति देवत्त्वम् । महात्मान इत्यनन्यमनस्कतया भगवन्तं भजतां देवत्वमपरोक्षज्ञानित्वं चावगम्यते । तादृशभजनवतश्चार्जुनस्य तज्ज्ञायते । दर्शयामासेत्यपरोक्षज्ञानित्वम् । भगवदतिप्रियत्वं देवत्वं चेति संयोज्यम् । देवत्वेनैवोत्तमाधिकारित्वं चावगतम् ।

*भा०दी०*— **इत्यनेनेति** । इत्यर्धेनेत्यर्थः ॥

*न्या०दी०*— यदुक्तं सर्वस्य भगवदधीनत्वं तत्केनावगम्यते । तथात्वे च तस्य सर्वस्माद्भेदेन, सर्वस्य च सत्यत्वे, तस्य सर्वोत्तमत्वेन, सर्वगुणपूर्णत्वेन, निर्दोषत्वेनानन्याधीनत्वेन, मोक्षप्रदत्वेन, सर्वशास्त्रप्रतिपाद्यत्वेन च भाव्यम् । सर्वस्य तदधीनतायाः साक्षात्परम्पराया चैतत्सापेक्षत्वात् । तदेतत्सर्वं केनावगम्यत इत्यत आह **नेति** ॥

*भा०दी०*— **साक्षात्परम्परयेति** । निर्दोषत्वेनेत्यन्तस्य साक्षादपेक्षितत्वम् । अन्येषां तु परम्परया । अभिन्ने निस्स्वरूपे स्वस्मादुत्तमे वस्तुनि स्वस्य सार्वज्ञसर्वशक्त्यादिगुणहीनत्वेन, जननमृत्यादिदोषवत्त्वे सार्वकालिके सार्वदेशिके च सर्ववस्तुनि नियमनायोगात्, अन्याधीनत्वे तदनुमतिं विना स्वेच्छाऽदिद्वारा अन्यस्यैव मोक्षहेतुत्वे पुमर्थदानद्वारा शास्त्रप्रतिपाद्यत्वस्यापि विधिनिषेधज्ञापनस्योपास्त्यादिद्वारा नियमनस्याकार्यत्वादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

"न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥

न भक्तस्य कर्तव्यत्याज्याभावो गीताभिमतः । तत्रैव भक्तस्यापि स्वविहितवृत्त्या भगवदाराधनस्य कर्तव्यतया तद्विरुद्धस्य त्याज्यतयाऽवगमादिति भावः । यदुक्तं स्वविहितवृत्तिरूपं मद्विषयं च कर्म मत्कर्म तदेव तत्कर्म । सङ्गवर्जितो स्वविहिताभगवद्विषयकर्मसङ्गवर्जितः । तदेव विकर्मोच्यते । भगवत्प्राप्तिहेतुतयोक्तमेव कर्म कर्तव्यम् । तदर्थत्वेन निषिद्धमेव त्याज्यमिति ।

*भा०दी०*— **तत्रेति** । सर्वधर्मानिति श्लोके कर्तव्यस्य त्याज्यस्य चाभावोऽभिमत इत्यर्थः । हेयोपादेयाभावेन शरणागतिरेव तस्याभिप्राय इति शङ्कितुर्भावः । यद्वा तत्रेत्यस्य गीतायामित्यर्थ इति ज्ञेयम् । एतद्वयं मत्कर्मकृन्मत्परम इति श्लोके कथमवगम्यत इत्यतोऽनुवादव्याजेन व्यनक्ति **यदुक्तमित्यादिना** । गीतापदार्थमुक्त्वा तत्कर्मेति मूलपदस्य अर्थमाह **तदेव तत्कर्मेति** । कर्मधारय इत्युक्तं भवति । अस्मच्छब्दात्तद्भगवद्विषयं कर्मैव भक्तस्य कर्मेत्यर्थः । तदर्थत्वेन भगवदर्थत्वेन निषिद्धमेवेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ।"** (गी. ४-१५)

**—इत्यादिना ज्ञानिनोऽपि भगवत्कर्म ।**

*न्या०दी०*— नन्वर्जुनस्य ज्ञानित्वे कथं तं प्रति स्वविहितवृत्त्या भगवदाराधनं विधीयते । ज्ञानिनस्तदभावस्य गीताभिमतत्वादित्यत आह **कुर्विति** ॥

न ज्ञानिनः स्वविहितवृत्त्याद्यभावो गीताऽभिमतः । तत्र 'एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः । कुरु कर्मैव' इति ज्ञानिनोऽपि स्वविहितवृत्त्यादेः कर्तव्यतयाऽवगमादिति भावः । स्वविहितं, भगवदर्थमेव पूर्वैः कृतं तदुभयमेव भगवत्कर्म ।

*भा०दी०*— **तत्रेति** । गीतायामित्यर्थः । तद्व्यञ्जयन् मूलार्थमाह **स्वविहितमिति** । अवगम्यत इति सर्वत्र योज्यमिति प्रागेवोक्तम् । **तदुभयमि**त्यस्य स्वविहितं भगवदर्थं चेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥"** (गी. ११-५२)

**"इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ।"** (गी. १८-६४)

**"दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ।।"** (गी. १६-५)
**"महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।"** (गी. ९-१३)
**"दर्शयामास पार्थाय परमं रूपमैश्वरम् ।"** (गी. ११-९)

**—इत्यादिनाऽर्जुनस्योत्तमधिकारित्वमपरोक्षज्ञानित्वं च ।**

***न्या०टी०***— यदुक्तमर्जुनो भगवतोऽतिप्रियोपरोक्षज्ञान्युत्तमाधिकारी देवश्चेति तत्केनावगम्यत इत्यत आह **सुदुर्दर्शमिति** ।।

सुदुर्दर्शमित्यनेनापरोक्षज्ञानित्वमवगम्यते । देवैः सह पठितत्वेन देवत्वं च । इष्टोऽसीति प्रियतमत्वम् । दैवीति देवत्त्वम् । महात्मान इत्यनन्यमनस्कतया भगवन्तं भजतां देवत्वमपरोक्षज्ञानित्वं चावगम्यते । तादृशभजनवतश्चार्जुनस्य तज्ज्ञायते । दर्शयामासेत्यपरोक्षज्ञानित्वम् । भगवदतिप्रियत्वं देवत्वं चेति संयोज्यम् । देवत्वेनैवोत्तमाधिकारित्वं चावगतम् ।

***भा०दी०***— **इत्यनेनेति** । इत्यर्धेनेत्यर्थः ।।

***न्या०दी०***— यदुक्तं सर्वस्य भगवदधीनत्वं तत्केनावगम्यते । तथात्वे च तस्य सर्वस्माद्भेदेन, सर्वस्य च सत्यत्वे, तस्य सर्वोत्तमत्वेन, सर्वगुणपूर्णत्वेन, निर्दोषत्वेनानन्याधीनत्वेन, मोक्षप्रदत्वेन, सर्वशास्त्रप्रतिपाद्यत्वेन च भाव्यम् । सर्वस्य तदधीनतायाः साक्षात्परम्पराया चैतत्सापेक्षत्वात् । तदेतत्सर्वं केनावगम्यत इत्यत आह **नेति** ।।

***भा०दी०***— **साक्षात्परम्परयेति** । निर्दोषत्वेनेत्यन्तस्य साक्षादपेक्षितत्वम् । अन्येषां तु परम्परया । अभिन्ने निस्वरूपे स्वस्मादुत्तमे वस्तुनि स्वस्य सार्वज्ञसर्वशक्त्यादिगुणहीनत्वेन, जननमृत्यादिदोषवत्त्वे सार्वकालिके सार्वदैशिके च सर्ववस्तुनि नियमनायोगात्, अन्याधीनत्वे तदनुमतिं विना स्वेच्छाऽदिद्वारा अन्यस्यैव मोक्षहेतुत्वे पुमर्थदानद्वारा शास्त्रप्रतिपाद्यत्वस्यापि विधिनिषेधज्ञापनस्योपास्त्यादिद्वारा नियमनस्याकार्यत्वादिति भावः ।।

**गीतातात्पर्यनिर्णयः**

**"न मे विदुः सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ।।**

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥**
**बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।''** (गी. १०-२-४)

**गीतातात्पर्यनिर्णयः**

***न्या०दी०***— न मे विदुरित्यनेन पूर्णत्वमवगम्यते । अहमादिरिति सर्वोत्तमत्वम् । यो मामिति निर्दोषत्वं, सर्वस्य तदधीनत्वं, तज्ज्ञानान्मोक्षश्च । जन्मादीनां दोषत्वात् । सर्वपापक्षयस्य मोक्षत्वात् । बुद्धिरिति सर्वस्य तदधीनत्वम् ।

*भा०दी०*— **सर्वस्य तदधीनत्वमिति** । 'लोकमहेश्वरम्' इत्यनेनेति भावः ॥ **बुद्धिरितीति** ॥ **सर्वस्य तदधीनत्वमिति** । 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इति वाक्यशेषादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**''महर्षयः सप्त पूर्वे ।''** (गी. १०-६)
**''एतां विभूतिं योगं च ।''** (गी. १०-७)

***न्या०दी०***— एतामिति तज्ज्ञानान्मोक्षः निष्कम्पयोगस्य सायुज्यत्वात् ।

*भा०दी०*— सप्तर्षय इत्युपक्रम्य 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः । सो विकम्पेन योगेन युज्यते नात्र संशयः ।' इति वाक्यशेषे श्रवणादाह **निष्कम्पेति** ।

**गीतातात्पर्यनिर्णयः**

**''अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥''** (गी. १०-८)

***न्या०दी०***— अहमिति सर्वस्य तदधीनत्वं तज्ज्ञानान्मोक्षश्च । अज्ञानजतमसः संसारत्वात् ।

**गीतातात्पर्यनिर्णयः**

**''तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयामि'.................................... ॥''** (गी. १०-११)

***न्या०दी०***— **तेषामिति** । तज्ज्ञानान्मोक्षः ।

**गीतातात्पर्यनिर्णयः**

"तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।" (गी. १२-७)

"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥" (गी. ५-२९)

***न्या०दी०*— भोक्तारमिति** । सर्वस्य तदधीनत्वं तज्ज्ञानान्मोक्षश्च । शान्तेर्मोक्षत्वात् ।

**गीतातात्पर्यनिर्णयः**

"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥" (गी. ७-२)

***न्या०दी०*— ज्ञानमिति** । सर्वशास्त्राणां तत्परत्वम् । भगवज्ज्ञानेनैव सर्वशास्त्राणां ज्ञातत्वोक्तेः ।

**गीतातात्पर्यनिर्णयः**

"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।" (गी. ७-६, ७)

***न्या०दी०*— अहमिति** । सर्वस्य तदधीनत्वम् । **मत्त इति** । सर्वोत्तमत्वम् । **मयीति** । सर्वस्य तदधीनत्वम् ।

**गीतातात्पर्यनिर्णयः**

"इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।
राजविद्या राजगुह्यम्........................ ॥" (गी. ९-१, २)

***न्या०दी०*— इदमिति** । तज्ज्ञानान्मोक्षः । **राजेति** । सर्वशास्त्राणां तत्परत्वम् । भगवद्विद्यायाः प्राधान्योक्तेः । प्रधानानुसारित्वाच्चाप्रधानानाम् ।

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥**
**बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।''** (गी. १०-२-४)

**गीतातात्पर्यनिर्णयः**

***न्या०दी०—*** न मे विदुरित्यनेन पूर्णत्वमवगम्यते । अहमादिरिति सर्वोत्तमत्वम् । यो मामिति निर्दोषत्वं, सर्वस्य तदधीनत्वं, तज्ज्ञानान्मोक्षश्च । जन्मादीनां दोषत्वात् । सर्वपापक्षयस्य मोक्षत्वात् । बुद्धिरिति सर्वस्य तदधीनत्वम् ।

*भा०दी०*— **सर्वस्य तदधीनत्वमिति** । 'लोकमहेश्वरम्' इत्यनेनेति भावः ॥ **बुद्धिरितीति** ॥ **सर्वस्य तदधीनत्वमिति** । 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इति वाक्यशेषादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**''महर्षयः सप्त पूर्वे ।''** (गी. १०-६)

**''एतां विभूतिं योगं च ।''** (गी. १०-७)

***न्या०दी०—*** एतामिति तज्ज्ञानान्मोक्षः निष्कम्पयोगस्य सायुज्यत्वात् ।

*भा०दी०*— सप्तर्षय इत्युपक्रम्य 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः । सो विकम्पेन योगेन युज्यते नात्र संशयः ।' इति वाक्यशेषे श्रवणादाह **निष्कम्पेति** ।

**गीतातात्पर्यनिर्णयः**

**''अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥''** (गी. १०-८)

***न्या०दी०—*** अहमिति सर्वस्य तदधीनत्वं तज्ज्ञानान्मोक्षश्च । अज्ञानजतमसः संसारत्वात् ।

**गीतातात्पर्यनिर्णयः**

**''तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयामि'**.................................. **॥''** (गी. १०-११)

***न्या०दी०—*** **तेषामिति** । तज्ज्ञानान्मोक्षः ।

**गीतातात्पर्यनिर्णयः**

"तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।" (गी. १२-७)

"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥" (गी. ५-२९)

***न्या०दी०*— भोक्तारमिति** । सर्वस्य तदधीनत्वं तज्ज्ञानान्मोक्षश्च । शान्तेर्मोक्षत्वात् ।

**गीतातात्पर्यनिर्णयः**

"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥" (गी. ७-२)

***न्या०दी०*— ज्ञानमिति** । सर्वशास्त्राणां तत्परत्वम् । भगवज्ज्ञानेनैव सर्वशास्त्राणां ज्ञातत्वोक्तेः ।

**गीतातात्पर्यनिर्णयः**

"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।" (गी. ७-६, ७)

***न्या०दी०*— अहमिति** । सर्वस्य तदधीनत्वम् । **मत्त इति** । सर्वोत्तमत्वम् । **मयीति** । सर्वस्य तदधीनत्वम् ।

**गीतातात्पर्यनिर्णयः**

"इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।
राजविद्या राजगुह्यम्........................ ॥" (गी. ९-१, २)

***न्या०दी०*— इदमिति** । तज्ज्ञानान्मोक्षः । **राजेति** । सर्वशास्त्राणां तत्परत्वम् । भगवद्विद्यायाः प्राधान्योक्तेः । प्रधानानुसारित्वाच्चाप्रधानानाम् ।

***भा०दी०***— करणव्युत्पत्तिमुपेत्याह **सर्वशास्त्राणामिति** । ज्ञानविज्ञानपदयोः शास्त्रार्थत्वेऽपि भगवत्परत्वं कथं लब्धमित्यत उक्तं **भगवदिति** । 'यज्ज्ञात्वा' इत्यर्धेनोक्तेरित्यर्थः । यद्वा 'येनाश्रुतं श्रुतं भवति' इत्यादौ भगवज्ज्ञानेनैव सर्वस्य ज्ञातत्वोक्तेरिह च 'यज्ज्ञात्वा नेह भूयोऽन्यत्' इत्यादिना ज्ञातत्वोक्तेः भगवत्परत्वं सर्वशास्त्राणां सिद्धमित्यर्थः ॥ **प्राधान्योक्तिरिति** । राजविद्येत्यस्य प्रधानविद्येति व्याख्यानादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।**
**भूतभृन्न च भूतस्थः** ............................ ॥" (गी. ९-४, ५)

***न्या०दी०*— मयेति** । सर्वस्य तदधीनत्वं निर्दोषत्वं च । ततः प्रेरणार्थत्वात् । अव्यक्तपदेन चाकार्यत्वोक्तेः । न चाहमिति तस्यानन्याधीनत्वम् । भूतभृदिति सर्वस्य तदधीनत्वम् । तस्यानन्याधीनत्वं च ।

**गीतातात्पर्यनिर्णयः**

**"न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः ।"** (गी. ११-४३)

**"परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।"** (गी. १४-१)

***न्या०दी०***— न त्वदिति सर्वोत्तमत्वम् । परमिति सर्वशास्त्राणां तत्परत्वम् । ज्ञायतेऽनेनेति ज्ञानशब्दोदितभगवच्छास्त्रस्य सर्वशास्त्रोत्तमत्वोक्तेः । अप्रधानस्य प्रधानानुयायित्वात् ।

**गीतातात्पर्यनिर्णयः**

**"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ॥"** (गी. १४-३)

***न्या०दी०***— ममेति सर्वस्य तदधीनत्वम् ।

**गीतातात्पर्यनिर्णयः**

**"ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥"** (गी. १४-२७)

***न्या०दी०***— ब्रह्मणो हीति सर्वस्य तदधीनत्वं तज्ज्ञानान्मोक्षश्च ।

*भा०दी०*— **तज्ज्ञानान्मोक्षश्चेति** । सुखस्यैकान्तिकस्य प्रतिष्ठा अहमित्युक्तेरिति भावः ।

**गीतातात्पर्यनिर्णयः**

**''द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥''** (गी. १५-१६)
**''उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥''** (गी. १५-१७)
**''यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥''** (गी. १५-१८)
**''यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥''** (गी. १५-१९)
**''इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥''** (गी. १५-२०)

**—इत्यादिना सर्वस्माद्भगवतो भेदः, सर्वस्य तदधीनत्वम्, तस्यानन्याधीनत्त्वम्, सर्वोत्तमत्वम्, सर्वगुणपूर्णत्वम्, सर्वशास्त्राणां तत्परत्वम्, तथा तज्ज्ञानादेव मोक्ष इत्यादि ।**

***न्या०दी०***— **द्वाविति** । सर्वस्माद्भगवतो भेदः, सर्वोत्तमत्वं, सर्वस्य तदधीनत्वं, सर्वशास्त्राणां तत्परत्वं तज्ज्ञानान्मोक्षश्च ।

*भा०दी०*— अन्य इत्युक्तेराह **भेद इति** । उत्तम इत्युक्तेरुक्तम् **उत्तमत्वमिति** । बिभर्तीत्युक्तेराह **सर्वस्य तदधीनत्वमिति** । लोके वेदे च प्रथितः इत्युक्तेराह **सर्वशास्त्राणामिति** । बुद्धिमान् कृतकृत्यश्चेत्युक्तेराह **तज्ज्ञानान्मोक्षश्चेति** ॥

**गीतातात्पर्यनिर्णयः**

**''न मे पार्थाऽस्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानावाप्तमवाप्तव्यम् ................................ ॥''** (गी. ३-२२)

***न्या०दी०—*** न मे पार्थेति पूर्णत्वम् । प्रथमाऽदिपदेनासत्यमप्रतिष्ठं त इत्यादि, द्वितीयेन जगत्सत्यत्वं गृह्यते ।

***भा०दी०—*** **असत्यमप्रतिष्ठं त इति** । तेनासत्यताऽदिवादिनां निन्दया जगत्सत्यत्वावगमादिति भावः ॥

***प्रका०—*** "न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा । इति मां योऽभिजानाति कर्मभिर्न स बध्यते । एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः" "कुरु कर्मे" त्यादिनापि भगवत्कर्म कार्यत्वेनावगम्यत इति यदुक्तं तत्र श्रुतिमुदाहरति **अधा त इति ।**

***न्या०दी०—*** यदुक्तं ज्ञानिनोऽपि भगवत्कर्मेति तत्र श्रुतिं चोदाहरति **अधेति** ॥

***भा०दी०—*** **यदुक्तमिति** । कुरु कर्मेत्यादिवाक्यमुदाहृत्य ज्ञानिनोऽपि भगवत्कर्मेति यदुक्तमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अधा॑ ते॒ विष्णो॑ वि॒दुषा॑ चि॒दर्ध्य॒ः स्तोमो॑ य॒ज्ञश्च॒ राध्यो॑ ह॒विष्म॑ता ।**

(ऋ. मं. १, सू. १५६-१)

**"पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् ।**
**यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात् ॥"**

***न्या०दी०—*** अथ विष्णो ते स्तुतिर्यज्ञश्च हविष्मता ज्ञानिनाऽप्यर्थ्यः साध्यश्चेत्यर्थः । ज्ञानिनो मोक्षनियमात्किं कर्मणेत्यत आह **पश्यन्नपीति** ॥ **सुनियतं** वर्णाश्रमोचितम् । **आप्नुयात्** । तेनेति शेषः । यद्यस्मात्तेनात्मनः क्लृप्तमानन्दोत्कर्षमाप्नुयात् तस्मादिति वा ।

***भा०दी०—*** ज्ञानिनापि राध्यः = साध्यः ॥ **मोक्षनियमादिति** । "अनियमः सर्वेषाम्" (ब्र. सू. ३-३-३५) इति सूत्रादिति भावः । यच्छब्दश्रवणादाह **तेनेति शेष इति** । वर्णाश्रमोचित-कर्मणेत्यर्थः ॥ **तस्मादिति वेति** । कर्म कुर्यादित्यनेन तस्मादित्यस्यान्वय इति भावः ।

**गीतातात्पर्यनिर्णयः**

**"भक्त्या प्रसन्नः परमो दद्याज्ज्ञानमनाकुलम् ।**
**भक्तिं च भूयसीं ताभ्यां प्रसन्नो दर्शनं व्रजेत् ॥**
**ततोऽपि भूयसीं भक्तिं दद्यात्ताभ्यां विमोचयेत् ।"**

*प्रका०*— हविष्मता ज्ञानिनाऽपि ते विष्णो स्तुतिर्यज्ञश्चार्थ्यः साध्यश्चेत्यर्थः । 'भक्त्या त्वनन्यया' इत्यादिना यदुक्तं तच्छ्रुत्या विवृणोति **भक्त्या प्रसन्न इति** ।

***न्या०दी०***— यदुक्तं विष्णुभक्तेरेव सर्वसाधनोत्तमत्वमित्यादि तत्र श्रुतिं दर्शयति **भक्त्येति** ॥ ज्ञानं विना भक्तेरभावात्कथं भक्त्या ज्ञानमित्यत उक्तं **अनाकुलमिति** ॥ प्रागल्पतयाऽऽकुलस्य सतोऽनाकुलत्वं भक्त्या भवतीति भावः ।

**गीतातात्पर्यनिर्णयः**

**"मुक्तोऽपि तद्वशो नित्यं भूयोभक्तिसमन्वितः ।**
**साध्याऽऽनन्दस्वरूपेव भक्तिर्नैवात्र साधनम् ।**
**ब्रह्मरुद्ररमादिभ्योऽप्युत्तमत्वं स्वतन्त्रताम् ॥**

***न्या०दी०***— मोक्षसाधनत्वाद्भक्तेस्तदनन्तरमभावाऽऽशङ्कां प्रसङ्गाद्वारयति **मुक्तोऽपीति** ॥ भूयसी भक्तिः भूयोभक्तिः । मुक्तौ भेदाभावात्साम्याद्वा न भक्तिर्युक्तेत्यत उक्तम् **तद्वश इति** ॥ मुक्तौ भक्तिसद्भावे सुखादिफलमपि स्यात् । अन्यथा तदनुपपत्तेः । फलाङ्गीकारे च वृद्ध्यादिप्राप्तिरित्यत आह **साध्येति** ॥ न मुक्तभक्तेः फलसद्भावः । तस्याः साधनत्वाभावात् । न चैतावताऽनुपपत्तिः । यः पूर्वतनभक्त्या साध्य आनन्दस्तत्स्वरूपत्वेन भक्तेः फलत्वात् । फलस्य च तदाऽनुभवादिति भावः । कीदृशी सा विष्णुभक्तिरित्यत आह **ब्रह्मेति** ॥

**गीतातात्पर्यनिर्णयः**

**सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् ।**
**निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाधिकः ॥**

**स्नेहो भक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः ।**
**तेनैव मोक्षो नान्येन दृष्ट्यादिस्तस्य साधनम् ॥**

*प्रका०*— 'दृष्ट्यादिस्तस्य साधनम्' इत्यस्य अयमर्थः 'आत्मा वा अरे द्रष्टव्य इत्यादिनोक्तं दर्शनध्यानादिकम् अतिपरिपक्वस्य भक्तियोगस्य साधनमिति ।

***न्या०दी०***— कथं भक्तेरेव ज्ञानादिसाधनत्वमुच्यते । श्रवणादेस्तत्साधनत्वश्रवणादित्यत आह **सर्वेति** ॥ तदेव विवृणोति **तेनैवेति** ॥ मोक्षो मोक्षादिः । अतिपरिपक्वभक्तियोग एव मोक्षसाधनं,

***न्या०दी०***— न मे पार्थेति पूर्णत्वम् । प्रथमाऽदिपदेनासत्यमप्रतिष्ठं त इत्यादि, द्वितीयेन जगत्सत्यत्वं गृह्यते ।

***भा०दी०***— **असत्यमप्रतिष्ठं त इति** । तेनासत्यताऽदिवादिनां निन्दया जगत्सत्यत्वावगमादिति भावः ॥

***प्रका०***— "न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा । इति मां योऽभिजानाति कर्मभिर्न स बध्यते । एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः" "कुरु कर्मे" त्यादिनापि भगवत्कर्म कार्यत्वेनावगम्यत इति यदुक्तं तत्र श्रुतिमुदाहरति **अधा त इति** ।

***न्या०दी०***— यदुक्तं ज्ञानिनोऽपि भगवत्कर्मेति तत्र श्रुतिं चोदाहरति **अधेति** ॥

***भा०दी०***— **यदुक्तमिति** । कुरु कर्मेत्यादिवाक्यमुदाहृत्य ज्ञानिनोऽपि भगवत्कर्मेति यदुक्तमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ।**

(ऋ. मं. १, सू. १५६-१)

**"पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् ।**
**यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात् ॥"**

***न्या०दी०***— अथ विष्णो ते स्तुतिर्यज्ञश्च हविष्मता ज्ञानिनाऽप्यर्थ्यः साध्यश्चेत्यर्थः । ज्ञानिनो मोक्षनियमात्किं कर्मणेत्यत आह **पश्यन्नपीति** ॥ **सुनियतं** वर्णाश्रमोचितम् । **आप्नुयात्** । तेनेति शेषः । यद्यस्मात्तेनात्मनः क्लृप्तमानन्दोत्कर्षमाप्नुयात् तस्मादिति वा ।

***भा०दी०***— ज्ञानिनापि राध्यः = साध्यः ॥ **मोक्षनियमादिति** । "अनियमः सर्वेषाम्" (ब्र. सू. ३-३-३५) इति सूत्रादिति भावः । यच्छब्दश्रवणादाह **तेनेति शेष इति** । वर्णाश्रमोचित-कर्मणेत्यर्थः ॥ **तस्मादिति वेति** । कर्म कुर्यादित्यनेन तस्मादित्यस्यान्वय इति भावः ।

**गीतातात्पर्यनिर्णयः**

**"भक्त्या प्रसन्नः परमो दद्याज्ज्ञानमनाकुलम् ।**
**भक्तिं च भूयसीं ताभ्यां प्रसन्नो दर्शनं व्रजेत् ॥**
**ततोऽपि भूयसीं भक्तिं दद्यात्ताभ्यां विमोचयेत् ।"**

***प्रका०***— हविष्मता ज्ञानिनाऽपि ते विष्णो स्तुतिर्यज्ञश्चार्थ्यः साध्यश्चेत्यर्थः । 'भक्त्या त्वनन्यया' इत्यादिना यदुक्तं तच्छ्रुत्या विवृणोति **भक्त्या प्रसन्न इति** ।

***न्या०दी०***— यदुक्तं विष्णुभक्तेरेव सर्वसाधनोत्तमत्वमित्यादि तत्र श्रुतिं दर्शयति **भक्त्येति** ॥ ज्ञानं विना भक्तेरभावात्कथं भक्त्या ज्ञानमित्यत उक्तं **अनाकुलमिति** ॥ प्रागल्पतयाऽऽकुलस्य सतोऽनाकुलत्वं भक्त्या भवतीति भावः ।

**गीतातात्पर्यनिर्णयः**

**"मुक्तोऽपि तद्वशो नित्यं भूयोभक्तिसमन्वितः ।**
**साध्याऽऽनन्दस्वरूपेव भक्तिर्नैवात्र साधनम् ।**
**ब्रह्मरुद्ररमादिभ्योऽप्युत्तमत्वं स्वतन्त्रताम् ॥**

***न्या०दी०***— मोक्षसाधनत्वाद्भक्तेस्तदनन्तरमभावाऽशङ्कां प्रसङ्गाद्वारयति **मुक्तोऽपीति** ॥ भूयसी भक्तिः भूयोभक्तिः । मुक्तौ भेदाभावात्साम्याद्वा न भक्तिर्युक्तेत्यत उक्तम् **तद्वश इति** ॥ मुक्तौ भक्तिसद्भावे सुखादिफलमपि स्यात् । अन्यथा तदनुपपत्तेः । फलाङ्गीकारे च वृद्ध्यादिप्राप्तिरित्यत आह **साध्येति** ॥ न मुक्तभक्तेः फलसद्भावः । तस्याः साधनत्वाभावात् । न चैतावताऽनुपपत्तिः । यः पूर्वतनभक्त्या साध्य आनन्दस्तत्स्वरूपत्वेन भक्तेः फलत्वात् । फलस्य च तदाऽनुभवादिति भावः । कीदृशी सा विष्णुभक्तिरित्यत आह **ब्रह्मेति** ॥

**गीतातात्पर्यनिर्णयः**

**सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् ।**
**निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाधिकः ॥**

**स्नेहो भक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः ।**
**तेनैव मोक्षो नान्येन दृष्ट्यादिस्तस्य साधनम् ॥**

***प्रका०***— 'दृष्ट्यादिस्तस्य साधनम्' इत्यस्य अयमर्थः 'आत्मा वा अरे द्रष्टव्य इत्यादिनोक्तं दर्शनध्यानादिकम् अतिपरिपक्वस्य भक्तियोगस्य साधनमिति ।

***न्या०दी०***— कथं भक्तेरेव ज्ञानादिसाधनत्वमुच्यते । श्रवणादेस्तत्साधनत्वश्रवणादित्यत आह **सर्वेति** ॥ तदेव विवृणोति **तेनैवेति** ॥ मोक्षो मोक्षादिः । अतिपरिपक्वभक्तियोग एव मोक्षसाधनं,

न भगवद्दृष्टिः । सा तु तत्साधनत्वान्मोक्षसाधनत्वेनोच्यते । परिपक्वभक्तियोग एव दृष्टिसाधनं, न तु ध्यानम् । तत्तु तत्साधनमिति दृष्टिसाधनतयोच्यते । पक्वो भक्तियोग एव ज्ञानसाधनं, न तु श्रवणादि । तत्तु तत्साधनतया ज्ञानसाधनत्वेनोच्यत इति भावः ।

*भा०दी०*— साधनोत्तमत्वमित्यादीत्यादिपदेन परोक्षापरोक्षज्ञानयोः ज्ञानिनोऽपि मोक्षस्य तदधीनत्वं चेति गृह्यते ॥ **उच्यत इति** । 'भक्त्या प्रसन्नः परमो दद्याद् ज्ञानम्' इत्यनेनोच्यत इत्यर्थः ॥ **श्रवणादेरिति** । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादाविति भावः ॥ **मोक्षादिरिति** । ज्ञानमादिपदार्थः । 'दृष्ट्यादिस्तस्य साधनम्' इत्यत्रादिपदेन ध्यानं श्रवणमनने च ग्राह्ये । तस्येत्यनेन च भक्तिशब्दार्थतयोक्तो यः स्नेहः स च अतिपरिपक्वः परिपक्वः अपरिपक्व इति त्रिविधोऽपि गृह्यत इत्युपेत्य दृष्ट्यादिमध्ये किं कस्य भक्तिरूपस्य स्नेहस्य साधनमित्यतस्तद्विवेकेन दर्शयन् कथं भक्तेरित्यादिनोक्तशङ्कां निराह **अतिपरिपक्व इत्यादिना** । **योगः** उपायः ॥ **तत्साधनत्वादिति** । मोक्षसाधनातिपरिपक्वभक्तिसाधनत्वात् इत्यर्थः ॥ **तत्साधनमिति** । दृष्टिसाधनपरिपक्वभक्तिसाधनमित्यर्थः । श्रवणादीत्यादिपदेन मननग्रहः ॥

**गीतातात्पर्यनिर्णयः**

**अधमाधिकारिणो मर्त्या मुक्तावृष्यादिकाः समाः ।**
**अधिकार्युत्तमा देवाः प्राणस्तत्रोत्तमोत्तमः ॥**

*प्रका०*— अर्जुनस्योत्तमाधिकारित्वमपरोक्षज्ञानित्वं च यदुक्तं तत् श्रुत्या विवृणोति **अधमाधिकारिण इति** ।

*न्या०दी०*— यदुक्तम् अर्जुनस्य देवत्वादुत्तमाधिकारित्वं, ततोऽपरोक्षज्ञानित्वमिति तत्रार्जुनस्य देवत्वोत्तमाधिकारित्वयोर्व्याप्तौ, उत्तमाधिकारित्वापरोक्षज्ञानित्वयोर्व्याप्तौ च श्रुतिमुदाहरति **अधमेति** ॥ **मर्त्या** मर्त्योत्तमाः ॥ **समा** मध्यमाः ।

*भा०दी०*— **यदुक्तमिति** । 'सुदुर्दर्शमिदं रूपं' इत्याद्युदाहृत्योक्तम् इत्यर्थः । देवत्वादुत्तमाधिकारित्वमित्यनुवादः स्वकृतव्याख्यानानुरोधेनेति ज्ञेयम् । **व्याप्तौ चेति** । ये देवास्तेऽधिकार्युत्तमा इति मूले व्याप्तिरभिमतेति भावः ॥

**गीतातात्पर्यनिर्णयः**

**नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः ।**
**तिरोहितं तथाऽप्येते श्रुण्वन्ति क्रीडयाऽथवा ॥**

***न्या०दी०*—** देवानामुत्तमाधिकारित्वं कुत इत्यतो ब्रह्मदर्शनाविनाभावादित्याह **नैवेति** । कथं तर्हि तेषां श्रवणाद्युपलभ्यत इत्यत आह **तिरोहितमिति** ॥

**गीतातात्पर्यनिर्णयः**

**बहुवारतदभ्यासात्तिरोभावोऽपि नो भवेत् ।**
**यथा व्यासानुशिष्टानां देवानां क्षत्रजन्मनाम् ।**
**पार्थानामतिरोधानं ज्ञानं सुस्थिरतां गतम् ॥"**

***न्या०दी०*—** एवं चेन्न पुनः श्रोतव्यं पूर्ववत्, भूयस्तिरोभावप्राप्तेरित्यत आह **बहुवारेति** ॥ तदभ्यासात् श्रवणाद्यभ्यासात् । बहुवाराभ्यासेन ज्ञानस्यातिरोभावः क्व दृष्ट इत्यत आह **यथेति** ॥ अभ्यासप्रदर्शनार्थमुक्तं **व्यासेति** ॥ प्रथमश्रवणाद्येवैतत्किं न स्यादित्य उक्तं **देवानामिति** । देवत्वेन प्रागपि श्रवणाद्यस्त्येवेति भावः ।

**गीतातात्पर्यनिर्णयः**

**अस्य देवस्य मीळ्हुषो वया**
**विष्णोरेषस्य प्रभृथे हविर्भिः ।**
**विदे हि रुद्रो रुद्रियं महित्वं**
**यासिष्टं वर्तिरश्विनाविरावत् ॥** (ऋ. ७-४०-५)

***प्रका०*—** ब्रह्मरुद्रादिभ्योऽप्युत्तमत्वमिति यदुक्तं तत् श्रुत्यन्तरैः साधयति **अस्य देवस्येति** ।

***न्या०दी०*—** यद्विष्णोर्ब्रह्मरुद्रादिसर्वोत्तमत्वमुक्तं तत्र श्रुतिरुदाहरति **अस्येति** ॥ अस्याभिलषितसेचकस्य आ समन्तादीशस्य विष्णोर्देवस्य हविर्भिः प्रभरणो कृते बन्धको रुद्रो रौद्रं महिमानं लेभे यथा तथाश्विनौ युवामप्यन्नवद्वर्तनं प्राप्तौ स्थ इत्यर्थः ।

***भा०दी०*—** **यद्विष्णोरिति** । 'न त्वत्समोऽस्ति' इत्याद्युदाहृत्योक्तमित्यर्थः । मीळ्हुषोऽभिलषितसेचकस्य । एषस्य = आ समन्तादीशस्य । वयाः = बन्धकः । प्रभरणे = पूजायाम् । रुद्रियं, रुद्रशब्दाद्धः, रौद्रम् । विदे विविदे, विद्लृ लाभे, लेभ इत्यर्थः । यथा तथेति शेषोक्तिः । यासिष्टमिति श्रवणाद्युवामित्यर्थः । इरावत् = अन्नवत् । वर्तिः = वर्तनम् । वृतेरिकारप्रत्ययो भावार्थ इति भावः । यासिष्टम् = अयासिष्टम् । अडभावश्छान्दसः । प्राप्तौ स्थ इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

"एको नारायण आसीन्न ब्रह्मा न च शङ्करः ।"
स मुनिर्भूत्वा समचिन्तयत्तत एते व्यजायन्त ।
विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः ॥" इति ।

"एको नारायण आसीन्न ब्रह्मा नेशानः ।"

"वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः ।"

"यं यं कामयते विष्णुस्तं ब्रह्माणं च शङ्करम् ।
शक्रं सूर्यं यमं स्कन्दं कुर्यात्कर्ताऽस्य न क्वचित् ॥"

"सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् ।
अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोऽतः ॥"

—इति पैङ्गिश्रुतिः ।

"परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।"

(ऋ. ७-९९-१)

"अनन्तगुणमाहात्म्यो निर्दोषो भगवान् हरिः ।
न समो वाऽधिको वाऽपि विद्यते तस्य कश्चन ।
नासीन्न च भविष्यो वा परतः स्वत एव च ॥"

—इत्यादिश्रुतेश्च ।

***न्या०दी०—*** आसीज्जगदादौ । मुनिर्मौनी । समचिन्तयदेते जायन्तामिति । विश्वो वायुः । इदमग्रेऽस्य जगतोऽग्रे । सर्वोत्कर्ष इति श्रुतिः सर्वशास्त्राणां तत्परत्वे तज्ज्ञानान्मोक्षे च मानं भवति । सत्यं मुख्यम् । ततः विष्णुतः । विष्णो त्वं मितेः परोऽसि । मूर्त्यैव पूर्णोऽसि न तु कीर्त्यादिमात्रेण । अतस्ते महिमानं नान्ये प्राप्नुवन्तीत्यर्थः ।

***भा०दी०—*** कथं समचिन्तयदित्यतः स्वयमाह **एते** वक्ष्यमाणा **जायन्तामितीति** ॥ श्रौतपदार्थमाह **सत्यं मुख्यमिति, ततो विष्णुत इति च** । मात्रया = मात्रायाः मितेः । तन्वा वृधान मूर्त्यैव पूर्णोऽसि । अन्ये इति शेषोक्तिः । अन्वश्नुवन्ति, अशू व्याप्तौ, प्राप्नुवन्ति ।

**गीतातात्पर्यनिर्णयः**

**"यस्त्वात्मरतिरेव स्याद्" इत्यादि तु मुक्तविषयम् ।**

*प्रका०*— ज्ञानिनोऽपि भगवत्कर्मेति यदुक्तं तत्र भगवद्वाक्यविरोधमाशङ्क्य परिहरति **यस्त्वात्मेत्यादिना** ।

***न्या०दी०***— यदुक्तं ज्ञानिनामपि कर्म कार्यम्, तेनानन्दातिशयश्च भवतीति तदयुक्तम् । यस्त्विति ज्ञानिनस्तदुभयाभावस्योक्तत्वादित्यत आह **यस्त्विति** । नानेन ज्ञानिनः कर्माद्यभावः सिद्ध्यति । अस्यात्मरतित्यादि विशेषणानां मुक्त एव मुख्यत्वेन पूर्वोत्तरवाक्यानुसारेण च मुक्तविषयतया ज्ञानिमात्रविषयत्वाभावादित्यर्थः ।

*भा०दी०*— **यदुक्तमिति** । 'पश्यन्नपीममात्मानम्' इत्यादिनोक्तमित्यर्थः ॥ **पूर्वोत्तरेति** । 'स्थितप्रज्ञस्य का भाषा समाधिस्थस्य' इति श्लोकेऽत्र विवक्षितस्य मुक्तस्य प्रकृतत्वात् । 'नैव तस्य कृतेनार्थः' इत्युत्तरवाक्ये मुक्तलिङ्गश्रवणात्तदनुसारेण चेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"यस्त्वेवात्मन्तो मुक्तः कार्यं तस्यैव नास्ति हि ।**
**तस्मात्कुर्वीत कर्माणीत्याह कृष्णोऽर्जुनं स्मयन् ॥"**

**—इति च स्कान्दे ।**

***न्या०दी०***— अत्र सर्वथा देहाद्यभिमानमुक्तत्वेनासंप्रज्ञातसमाधिस्थोऽपि मुक्त उच्यते । स्मृतिसमाख्यानाच्चैतन्मुक्तविषयमित्याह **यस्त्विति** ॥

*भा०दी०*— भाष्यानुसारादत्र मुक्तशब्दः समाधिस्थपर इत्याह **अत्र सर्वथेति** । 'समाधिस्थोऽपि' इत्यपिपदादर्थद्वयपरः श्लोक इत्येके ।

**गीतातात्पर्यनिर्णयः**

**"ज्ञानयोगेन साङ्ख्यानाम्"**

**—इत्यादि तु बाह्यकर्मसङ्कोचापेक्षया ।**

***न्या०दी०*—** तथाऽपि न ज्ञानिनः कर्मकरणं युक्तम् । ज्ञानयोगेनेति ज्ञानिनां कर्माभावोक्तेः । न चास्य मुक्तविषयत्वं वक्तुं शक्यते । ज्ञानेनैव ज्ञानिनां मुक्तिरित्युक्तेरित्यत आह **ज्ञानेति** ॥ न ज्ञानिनां कर्माङ्गीकारेप्येतद्वाक्यविरोधः । अस्य यतिविषयत्वात् । तेषामप्येतद्वाह्यकर्मसङ्कोचापेक्षयैव ज्ञानेन मोक्षमाह । न तु कर्माभावाभिप्रायेणेति भावः ।

*भा०दी०*— 'ज्ञानयोगेन साङ्ख्यनाम्' इत्यस्य तात्पर्यमाह **ज्ञानेनैवेति** ।

**गीतातात्पर्यनिर्णयः**

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥** (गी. ३-५)

**शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥** (गी. ३-७)

***न्या०दी०*—** ज्ञानिनां सर्वकर्माभाव एवास्यार्थः किं न स्यादित्यतो भगवतैव तदसम्भवस्योक्तत्वादित्याह **न हीति** ॥

*भा०दी०*— साङ्ख्यानामित्यस्यार्थो ज्ञानिनामिति ।

**गीतातात्पर्यनिर्णयः**

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।"** (गी. १८-६)

***न्या०दी०*—** नात्र ज्ञानिनः शरीरयात्रार्थकर्मत्यागो विवक्षित इति ब्रूमो येनासम्भवः स्यात् । किन्तु यज्ञादिकर्मत्याग एव । तस्यैव मोक्षविरोधित्वादिति चेन्न । कामादिरहितयज्ञादेरबन्धकत्वाभिप्रायेण भगवताऽभिहितत्वादित्याह **एतानीति** ॥

*भा०दी०*— शङ्कते **नात्रेति** ॥

**गीतातात्पर्यनिर्णयः**

**ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत ।**

***न्या०दी०*—** अज्ञविषयोऽयं विधिः किं न स्यादिति चेन्न । ज्ञानिन एव श्रुत्या तथाविधकर्मणो विहितत्वादित्याह **ज्ञानीति** ॥ उदितानि, श्रुत्यादौ कर्तव्यतयेति शेषः ।

**गीतातात्पर्यनिर्णयः**

**न सर्वकर्मणां त्यागः कस्यचिद्भवति क्वचित् ।**
**त्यागिनो यतयोऽपि स्युः सङ्कोचाद्बाह्यकर्मणाम् ॥ इत्यादि ।**

***न्या०दी०***— तथाप्येतद्वाक्यस्योक्तार्थः कुत इति चेत्समाख्यानादित्याह **नेति** ॥

**गीतातात्पर्यनिर्णयः**

**'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः'**

**—इत्यादि चोत्पन्नज्ञानतिरोभावनिवृत्त्यर्थम् ॥**

***इत्युपोद्घातः ॥***

***न्या०दी०***— यदुक्तमर्जुनो ज्ञानीति तदयुक्तम् । उपदेक्ष्यन्तीत्यस्याज्ञत्वप्रतीतेरित्यत आह **उपदेक्ष्यन्तीति** ॥ नार्जुनस्य ज्ञानित्वेप्येतद्वाक्यस्य विरोधः । यत एतत्प्रागुत्पन्नज्ञानतिरोभाव-निवृत्त्यर्थमेवोपदेशमाह । न तु प्रागप्राप्तज्ञानलाभार्थमित्यर्थः ॥

**॥ इति उपोद्घातः सम्पूर्णः ॥**

***भा०दी०***— **यदुक्तमिति** । 'सुदुर्दर्शमिदं रूपम्' इत्यादिनाऽर्जुनो ज्ञानीति यदुक्तमित्यर्थः ।

***इति सङ्क्षेपेण गीतातात्पर्योक्तिः ॥***



**भावरत्नकोशः**

***अक्षरार्थस्तु***— भगवान्नारायणोऽनवगतनिवृत्तधर्मश्रीवासुदेवप्रकृत्यादिलक्षणपरापरतत्त्वसज्जनेषु दयाशालिभिर्ब्रह्मरुद्रेन्द्रादिदेवैरर्थितो व्यासत्वेनावतीर्य तदज्ञानाद् वेदार्थाज्ञानाच्च संसारे क्लिश्यमानानां त्रैवर्णिकानां वेदानधिकारिणां स्त्रीशूद्रादीनां च निवृत्तधर्मपरापरतत्त्वज्ञानद्वाराऽखिलक्लेशनिवृत्तिपरमा-नन्दावाप्तिलक्षणमोक्षाय सर्ववेदाद्यर्थोपबृंहितां तदनुक्तकेवलेश्वरज्ञानविषयार्थयुक्तां सर्वप्राणिनामवगाह्या-नवगाह्याभिधेयां केवलभगवत्स्वरूपपरां मोक्षार्थां महाभारतशास्त्रशब्दितामष्टादशपर्वात्मिकां संहिता-मारचय्य तत्र भीष्मपर्वणि सर्वभारतार्थसङ्ग्राहिकां वासुदेवार्जुनसंवादप्रकाशिनीं भारतपारिजातमधुभूतां गीतामुपनिबबन्ध । तथा चोक्तम्—

"स्वयं नारायणो देवो ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ॥
चकार पञ्चमं वेदं महाभारतसञ्ज्ञितम् ॥" इति ।

इतरच्च भाष्योक्तप्रमाणे स्फुटम् ॥

तत्र भगवतोऽर्जुनबोधने प्रसक्तिं दर्शयितुं कतिपयश्लोकाधिकाद्याध्यायः प्रवृत्तः ॥

॥ श्रीः ॥

# श्रीमद्-भगवद्गीता

## धृतराष्ट्र उवाच—

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥**

### श्रीविद्याधिराजतीर्थविरचिता गीताविवृत्याख्या टीका

तत्र भगवताऽर्जुनबोधने प्रसक्तिं दर्शयितुं कतिपयश्लोकाधिकाध्यायमारभते । भगवतः सारथ्यादिना पाण्डवानां भगवत्कृपाविषयत्वं सवर्डलोकसाक्षिकमपि सर्वप्रकारेणान्धत्वादजानन् धृतराष्ट्रः स्वपुत्राणां विजयविविदिषया 'मत्पुत्राः पाण्डुपुत्राश्च धर्मभूमौ कुरुक्षेत्रे योद्धुमिच्छन्तो मिलिताः सन्तः किं कृतवन्तः' इति संजयं पप्रच्छ ॥ १ ॥

### श्रीमद्वादिराजतीर्थश्रीचरणविरचितभगवद्गीतालक्षालङ्कारः

'धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः' इत्यत्र बहूनामेकभूमौ युगपत्संयोगं समवायं वदन् श्रीकृष्णः संयोगविशेष इव समवाय इति सूचयति ॥

### श्रीमद्राघवेन्द्रयतिविरचितः गीतासारसंग्रहः

तत्राद्याध्यायो द्वितीये कतिपयश्लोकाश्च कृष्णेन अर्जुनबोधने प्रसक्तिसम्पादनाय प्रवृत्ताः । तत्रायमर्थः— धृतराष्ट्र उवाच । किमित्याह **धर्मेति** । धर्मसाधनभूमौ कुरुक्षेत्रे **युयुत्सवः** युद्धमिच्छन्त एव **समवेताः** मिलिताः सन्तः **मामकाः** मदीयाः दुर्योधनादयः **पाण्डवाश्च** हे संजय ! किमकुर्वत ? 'इति' इतिशब्दो योज्यः । पाण्डवानां भगवत्प्रियत्वं सर्वसाक्षिकमप्यजानन् धृतराष्ट्रः स्वपुत्राणां विजयविविदिषया संजयं पप्रच्छेत्यर्थः ॥ १ ॥

*भा०र०— श्लोकार्थः—* धृतराष्ट्रः स्वपुत्राणां विजयविविदिषया सञ्जयमपृच्छदित्युच्यते **धृतराष्ट्र उवाचेति** ॥ किमिति उच्यते ? **धर्मक्षेत्र इति** ॥ धर्मस्य स्थानभूते यस्यकस्याप्यनुष्ठितस्य धर्मस्य बहुश्रेयःसम्पादके कुरुक्षेत्रे धार्तराष्ट्राणां पाण्डवानां च स्वकूटस्थनामोपलक्षितत्वेन बहुमान-विषये युयुत्सवो योद्धुमिच्छवः समवेताः मिथः प्रत्यनीकभावेन व्यूढाः । समस्तभूमण्डलवर्तिनां राज्ञां तत्र समवायेऽपि वर्गद्वयमेव तदाऽभूदित्येवकारः । अकुर्वतेत्यात्मनेपदेन कर्त्रभिप्रायक्रियाफल-विषयेण स्वार्थता विभाव्यते ॥ १ ॥

**अन्वयप्रकाशिका**

यद्यपि दशश्लोकाधिका गीता प्रथमाध्याये स्वतन्त्रास्वतन्त्रतत्त्वे धर्मश्च न प्रतिपाद्यते । तथापि भगवतोऽर्जुनावबोधेन प्रसक्तिं दर्शयतो अस्य ग्रन्थस्य तादार्थ्यात् गीतायामनुप्रवेश उपपद्यते । व्यासप्रसादेन लब्धसार्वज्ञात्सञ्जयात् सर्वे युद्धोद्योगं श्रुत्वा धृतराष्ट्रः स्वयमन्धत्वात् पाण्डवप्रियत्वादि भगवन्माहात्म्यमजानन् । कुरुपाण्डवजयादि बुभुत्सन्त्या स्वेषां परेषां च सेनानिवेशनान्तरवृत्तान्तं पृच्छति **धर्मक्षेत्रे** इत्येकेन श्लोकेन ।

सञ्जयं प्रति धृतराष्ट्रः पृच्छति **धृतराष्ट्र उवाच धर्मक्षेत्र इति** ।

भो सञ्जय ![१] धर्मक्षेत्रे[२] कुरुक्षेत्रे[३] युयुत्सवः[४] मामकाः[५] पाण्डवाश्चैव[६] समवेतास्सन्तः[७] किम-कुर्वत[८] ? इत्यन्वयः ।

हे सञ्जय ![१] धर्मक्षेत्रे = धर्मसाधनभूमौ[२] । कुरुक्षेत्रे = कुरूणां क्षेत्रमिति संज्ञिके[३] । युयुत्सवः = योद्धुमिच्छन्तः[४] । मामकाः = मत्पुत्राः । पाण्डवाश्चैव[६] समवेतास्सन्तः = मिलिताः सन्तः[७] । किमकुर्वत = किं कृतवन्तः[८] इत्यर्थः ॥ १ ॥

**गीतात्रिविधार्थविवृतिः**

अथ सर्वज्ञो भगवान् वेदव्यासः स्वकृतभारतस्य महत्त्वेन मन्दैर्बोद्धुमशक्यत्वात् तदर्थमपि तत्सारभूतार्थप्रतिपादकां गीतामुपनिबध्नन् अत्राधिकारिणं सूचयितुं प्रष्टारमाह **धृतराष्ट्र इति** ॥ धृतो – अवधृतो राष्ट्रः – सांसारिकोपद्रवो येन स तथा मुमुक्षुरित्यर्थः ॥ "राष्ट्रो स्त्री विषये च स्यादुपद्रव" इत्यमरः । उवाच = गुरुं पप्रच्छ इत्यर्थः ॥ **धर्मक्षेत्र इति** ॥

*अध्यात्मार्थे—* "धारणाद्धर्म इत्यपि" इत्युक्तेः । मक्प्रत्ययान्तात् "धृञ् धारणे" इति धातोश्च । धर्मो – विष्णुः, तस्य क्षेत्रं – निवासस्थानं, तस्मिन्, "क्षिनिवासगत्योः" इत्यतष्टन् ॥

**कुरुक्षेत्रे** । कुरुशब्दः कर्मवाची । "डुकृञ् करणे" इति धातोः, निरुक्तिबलादुभयत्रोकारः । "वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ । धातोस्तदार्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्" इति । "करोस्मिन्नीयत इति कर्म जीव उदाहृत" इत्यत्र कर इति शब्दः कर्मविधि-वाचीति गीताविवृत्युक्तेश्च ॥ तस्य क्षेत्रं उत्पत्तिस्थानं नृशरीरमित्यर्थः । तत्रैव स्वर्गादिसाधन-कर्मोद्भवात् ॥ तत्र – समवेताः, अधिकारित्वेन मिलिताः, संवासेन अवगता इति वा । युयुत्सवः – स्वस्वोत्कर्षसिद्ध्यर्थं मिथो योद्धुमिच्छवः ॥ मामकाः, मया – ज्ञानेन, अमाः – अपक्वाः ज्ञानरहिता इत्यर्थः ॥ यद्वा— मया – रमाभिमन्यमानया प्रकृत्या, न मान्ति – न जानन्ति, ते । अथवा मया – श्रिया युक्तः अः – वासुदेवः माः । "मः शिवे मा रमायां च" इति विश्वः । "अकारो वासुदेवः स्यात्" इत्येकाक्षरश्च । तं न मान्ति – न जानन्ति ॥ "माङ्ज्ञान" इति हि धातुः ॥ उत वा । मा – नास्ति मः – ज्ञानं येषां ते । "अमानोनाः प्रतिषेध" इत्युक्तेः सर्वत्र स्वार्थे कः । "बन्धने मः प्रकीर्तित" इत्यभिधानात् । मा – नास्ति, अमः – अबन्धः, कं – सुखं च येषां त इति वा । अज्ञाः – तत्त्वाभिमानिनोऽसुराः । पाण्डवाः पाति – रक्षतीति, पो – विष्णुः, तस्य अण्डं, तदधीनब्रह्माण्डमिति यावत्, तत् वान्ति – जानन्ति ते, "वागतिगन्धनयोः" इति धातोः । गत्यर्थानां ज्ञानार्थत्वाच्च । यद्वा "पडिगतौ" इत्यतः, पण्डा – ज्ञानम्, तद्विषयो विष्णुः पाण्डः, तस्माद्वं – सुखं येषां ते तत्त्वाभिमानिनो देवाश्च किं कर्म, अकुर्वत ॥ सञ्जय— सम्यग्जयति, संसारमिति सञ्जयः ॥ यद्वा— सम्यक् अप्राकृतशरीरेण, जायते – अवतरतीति, सञ्जो – विष्णुः तं याति – जानाति, शरणं प्राप्नोतीति वा सञ्जयः । तत्सम्बुद्धौ सञ्जयेति सद्गुरुसम्बुद्धिः ॥ इत्यध्यात्मार्थे ॥

***अंशार्थे तु***— हे अत्रे स्वप्नसुषुप्तिमूर्च्छारहित, देवयोनित्वात्, हे सञ्जय – हे तुम्बरो गन्धर्व, "सञ्जयस्तुम्बरुर्नामा गन्धर्वपतिरुच्यते" इत्यंशावतरणे, तं प्रति धृतराष्ट्रनामा गन्धर्वः पृच्छति इत्यर्थः ॥ "धृतराष्ट्रः पुरा प्रोक्तो गन्धर्वस्तु सनामकः" ॥ पाण्डवाः पुण्याभिमानिनो देवाः । "पाण्डवेयानि पुण्यानि" इति तात्पर्यनिर्णयोक्तेः ॥ धर्मक्षेत्रे – धर्मपक्षे (भूमौ) स्थिता इति शेषः ॥ मामकाः धार्तराष्ट्राः पापाभिमानिनोऽसुराः "सर्वदोषात्मकाः परे । धार्तराष्ट्राः" इति चोक्तेः, धृतराष्ट्रस्य कल्याविष्टत्वात्, असुरेषु 'मामका' इत्युक्तिः । तच्च तात्पर्यनिर्णये प्रसिद्धमेव । ते कुरुक्षे – कुत्सिते रुक्षे – स्नेहरहिते च स्थाने (पक्षे) स्थिताः ॥ असमवेताः असमम् – अधिकं न्यूनं, यद्वं – ज्ञानं बलं वा, तेन इताः – युक्ताः ॥ युयुत्सवः – स्वाभाविकद्वेषात् योद्धुमिच्छवः सन्तः । किं – सदसद्वा कर्म । अकुर्वत – चक्रुः । इत्यंशार्थे ॥

***प्रसिद्धार्थे***— मामकाः – मत्पुत्रा दुर्योधनादयः । पाण्डवाः – युधिष्ठिरादयः । कुरुक्षेत्रे – कुरुवंशोत्पन्नत्वात् कुरुसंज्ञयोः विचित्रवीर्यपाण्ड्वोः, क्षेत्रे – अम्बिकाअम्बालिकाख्ये, कुन्ती-माद्र्याख्ये च भार्यारूपे । समवेताः – समं – समानं, वं – गतिरूपं जन्म इताः – प्राप्ता एव । क्षेत्रजौरसयोः कथञ्चित् कलहो भवतु, समजन्मनोस्तु कथं युद्धेच्छेत्याशयवानाह **धर्मक्षेत्र इति** । धर्मेण क्षायाः – भूम्याः इ – विचित्रं तं – त्राणं – रक्षणं यस्मिंस्तस्मिन् राज्यविषये । किं – कथम् । युयुत्सवः – योद्धुमिच्छवः आसन्निति शेषः । तथापि मामकाः किमकुर्वत, पाण्डवाश्च किमकुर्वतेति प्रश्नः । धर्मेण क्रियमाणे भूत्राणे के धर्मं के चाधर्ममकुर्वतेति भावः ।

***पुनरप्यध्यात्मार्थे***— मामकाः "मः शिवे मा रमायां च" इति विश्वात्, मः – शिवः तम् आ – आत्मत्वेन माति – जानातीति मामः – सङ्करः, शिवोऽहमिति वक्तृत्वात्, तस्य शिष्या मामकाः मायावादिन इत्यर्थः । कप्रत्ययः कुत्सने । पाण्डवाः पाण्डुः – शुक्लवर्णत्वाद्वायुः, "उद्यद्रवि-प्रकरसन्निभम्" इत्युक्तेः, ज्ञानशीलत्वाद्वा, "पडिगताविति धातोः" गत्यर्थानां च ज्ञानार्थत्वात्, "ताच्छील्यार्थादुनस्तथा" इत्युक्तत्वाच्च, तदीयाः शिष्याः पाण्डवाः – वैष्णवा इत्यर्थः । धर्मक्षेत्रे "धर्मो धर्मविदुत्तमः" इत्युक्तेः धर्मो विष्णुः क्षेत्रे – क्षीयते – ज्ञायते अनेनेति "क्षि निवासगत्योः" गत्यर्थानां च ज्ञानार्थत्वात्, "ततष्टन्" विष्णुप्रतिपादिकेत्यर्थः । अकुरुक्षेत्रे – अकु – अकुत्सितं – निर्दोषमित्यर्थः, "रुशब्द" इति धातोः, शब्दक्षेत्रं – शब्दस्थानं – वेद इत्यर्थः, "निर्दोषः शब्द आगम" इत्युक्तेः, वेदे भगवदेकप्रतिपादके सतीति भावः । पाण्डवविशेषणपक्षे, असमवेता इति पदं, न समाः – विषमाः यस्मिन्स्तत् । असमं – तारतम्योपेतमित्यर्थः, तादृशं यद्वं – ज्ञानं तेन युता – युक्ता इति ॥ यद्वा— "नास्ति नारायणसमम्" इत्युक्तेः, असमो – विष्णुः, तस्य वं – ज्ञानं, तेन, युता – युक्ताः ॥ अथवा— "समभेदे समीचीन" इत्युक्तेः, सं – अभेदः, तद्विरुद्धः असम्भेदः, तं भेदं, अवेताः – अवगताः – जानन्तः, अवेतं – अवगतं ज्ञानं – येषामस्ती-त्यर्शआद्यच्, भेदमुद्दिश्य ज्ञानवन्त इत्यर्थः । समवेता इति पदेऽपि । समस्य – निर्दोषब्रह्मणः "निर्दोषं हि समं ब्रह्म" इत्युक्तेः, लक्ष्मीयुक्तस्य वा वं – ज्ञानं तेनेता – युक्ता इति वा ॥ मामक-विशेषणपक्षे, समवेता इति, "समं सर्वं समानं इति यद्वं – ज्ञानं तेनेताः – युक्ताः । अथवा सम् – अभेदम् अवेताः – जानन्तः, स – समानः, मः – महादेवः, वः – वासुदेवश्च यस्मिन्, तेन ज्ञानेनेताः – युक्ताः इति वा । समं – यथायोग्यं, वं – ज्ञानं, इतं – गतं, येभ्यस्त इति वा । अत्राप्यकारप्रश्लेषे असमः – सर्वोत्तमो विष्णुरिति यद्वं – ज्ञानं तत् इतं – गतं येभ्य इति वा । एवं सन्तः युयुत्सवः वाग्युद्धं कर्तुमिच्छवः किं – कथं

वादमकुर्वत । अथवा, अकुरुक्षेत्रे – वेदे अधिकरणे । धर्मक्षेत्रे – धर्माः – ज्ञानानन्दजगत्कर्तृत्वादयः तेषां क्षेत्रे – पात्रभूते भगवति विषये । मामकाः – असमवेताः – नञर्थकाकारेण समवेताः ज्ञातारः निर्धर्मकं भगवन्तं जानन्त इत्यर्थः । पाण्डवाः समवेताः सं – अभेदेन अवेतः – जानन्तः, भगवता तद्धर्माणां चाभेदं जानन्त इत्यर्थः । असमवेतशब्दस्योभयविशेषणत्वे विषमज्ञानवन्त इत्यर्थः । अथवा – अकुरुक्षेत्रे अकुः – अकुत्सिता, निर्दोषेति यावत्, या रुक् – प्रभा, तस्याः क्षेत्रे – स्थानभूते, धर्मक्षेत्रे, धर्मविधित्वेन वेदोक्तः "वेदप्रणिहितो धर्म" इत्युक्तेः, क्षा – भूदेवी 'क्षा' शब्दस्य वैदिकनिघण्टौ पृथिवीनामसु पाठात्, ई – लक्ष्मीः "लक्ष्मीरीकार उच्यते" इत्येकाक्षरकोशात्, एतत्त्रितयं त्राति – रक्षतीति, धर्मक्षेत्रः – विष्णुः, तद्विषये युयुत्सवः – द्वेषिणः, मामकाः समवेताः – मिलिताः भक्तिमन्तः पाण्डवा इत्यर्थः ॥ यद्वा— धर्मक्षेत्रे, अकुरुक्षेत्रे, समवे, तायुयुत्, सवः, मामकाः, पाण्डवाः, च, एव, किं, अकुः, वत, सञ्जय, इति पदानि । धर्मक्षेत्रे – धर्मज्ञानसाधने धर्मशास्त्र इत्यर्थः । अकुरुक्षेत्रे – कुत्सितं – दीनमिति यावत्, रुवन्ति – शब्दं कुर्वन्ति ते कुरवः – पशवः, तेषां क्षेत्रं – क्षयः "क्षीक्षय" इति धातोः 'ष्ट्रन्' अकुरुक्षेत्रं न पशुक्षयो यस्मिंस्तस्मिंश्च सति । समवे च सति सम्यगुक्तं अवः – अन्नं यस्मिंस्तस्मिंश्च सति 'अवः' शब्दस्य वैदिकनिघण्टौ अन्ननामसु पाठात्, अत्रासुन्लोपो गयाशिर इतिवत्, उक्तपिष्टपशुके इति यावत् । तायुयुत् "तकारः कीर्तितश्चोरे मोहे युद्धे च कीर्तित" इत्यभिधानात्, तेन मोहेन आ – अद्धा, युयुत् – प्राणवियोगो यस्मिन् स तथा "युयुवियोग" इति धातोः प्रकरणयोग्यतया प्राणेन सम्बन्धः, तादृशः सवो – यज्ञः अकुः – निन्दारहितः किं न ? अपि तु निन्दित एव । बत – खेदे, पाण्डवाः वेदाधिकारिणोऽपि मामकाः अज्ञानिन एव । एवं सति – कौरवाः पाण्डवाश्च विहिताहिंसाया अपि निषेधं किमर्थं मिथो हिंसां चक्रुरिति प्रश्नाभिप्रायः ॥ अथवा— धृतराष्ट्रः सञ्जयं प्रति युद्धार्थकल्पिता कुरुक्षेत्ररूपा भूमिः मत्पुत्राणामश्रेयसीत्याशयेनाह **धर्मेति** ॥ पाण्डवाः "सप्तसु प्रथमा" इति सूत्रात् प्रथमायास्तृतीयार्थत्वेन, पाण्डवैः युयुत्सवः प्रकरणान्मत्पुत्रा इति ग्राह्यम् । कुरुक्षेत्रे धर्मक्षेत्रे सति, धर्मस्य – युधिष्ठिरपितुः क्षेत्रे तदधीनस्थाने इत्यर्थः । तत्र किं समवेताः – कथं मिलिताः, शत्रुपक्षपातिस्थले स्थितानां जयस्य दुर्लभत्वादिति भावः । तत्स्थलगमनं न मत्पुत्रकृतं किन्तु देवकृतमित्याह **मामका इति** । मामका एव, मा – लक्ष्मीः "इन्दिरा लोकमाता मा" इत्यमरः, अः – विष्णुः "अकारः सर्ववागात्मा परब्रह्माभिधायक" इत्युक्तेः, मः – शिवः "मः शिवे मा रमायां च" इति विश्वोक्तेः, को – ब्रह्मा, "हिरण्यगर्भः कः प्रोक्त" इत्युक्तेः एते देवा एव । इदमिति शेषः, धर्मक्षेत्रप्रापण-मित्यर्थः, अकुर्वत – चक्रुः, देवकृतातिक्रमणं दुष्कर-

मित्याशयः। यद्वा, पाण्डवाः, असमवे – सम्यक् अवतिः रक्षतीति समवः, अः – वासुदेवः समवो – रक्षकः यस्मिंस्तस्मिन् धर्मक्षेत्रे, स्वपितृस्थले किम् अताः – कथं सततं गताः "अतसातत्यगमने" इति हि धातुः, मामकाश्च – मत्पुत्रास्तु, अत्रे – रक्षकरहिते, कुरुक्षेत्राख्यस्थले "क्षः क्षत्रे राक्षसे स्थले" इति वररुचिकोशात्। किं अताः, वत – वबयोरभेदात् बत – अयं खेद इत्यर्थः। अकुः न कुत्सितः – योग्य एव। स्वपुत्राणां नाशोन्मुखत्वाच्छत्रूणां च जयोन्मुखत्वादिति भावः॥ यद्वा— मामकाः – दुर्योधनादयः, समवे – स्वभर्तृसमानं, वं – गतिः – प्रवृत्तिर्यस्य तादृशे – बद्धनेतृत्वादिति भावः। धर्मक्षेत्रे – गान्धार्याख्यधर्मपत्न्यां जाता अपीति शेषः। ता एव – चोरा एव "तकारः कीर्तितश्चोरे" इत्येकाक्षरः। पाण्डवास्तु कुरुक्षेत्रे – कुरुवंशोत्पन्नत्वात् कुरुशब्दवाच्यपाण्डोः क्षेत्रे – कुन्त्यां माद्र्यां च जाताः – क्षेत्रप्रसूताः न त्वौरसाः, तथापि अताः – अचोरा एव किम् ? एतच्चकाराल्लभ्यते। अत्र सवः – विष्णुः "एको नैकः सवः कः किम्" इति विष्णुसहस्रनामसूक्तेः। युयुत् – युयोतीति स तथा। "आधिक्येऽधिकम्" इति सूत्रात्, "यु मिश्रण" इति धातोश्च, अस्मत्कुले तेषामाधिक्येन मिश्रयितेत्यर्थः। शेषं पूर्ववत्। अपि वा, स एव – विष्णुरेव। अकुः स्वयं निराश्रयः, धर्मक्षेत्रे – धर्मसाधनभूतदेहे, समवेता – योजकः, युयुत् – वियोजकश्च, "युयुवियोग" इति धातोः। एवं सति मामकाः – मत्पुत्राः, पाण्डवाश्च। उक्षेत्रे – "उकारः शङ्करः प्रोक्त" इत्येकाक्षरात्, उवाच्यशङ्करस्य क्षेत्रे – अभिमन्यमानाहंममतारूपे, इदं द्वितीयाद्विवचनान्तं कर्म। किमकुर्वत – कथं चक्रुः, उत वा, धृतराष्ट्रः स्वपुत्रनाशं निश्चित्य – वैपुत्र्याभावमाकाङ्क्षन् स्वस्माद्वैश्यायामुत्पन्नस्य युयुत्सुनाम्नः पुत्रस्य आयुष्मत्तायै धर्ममुपदिशन् आशिषं विधते **धर्मेति**॥ एतत्पक्षे पदानि— धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सो अः मामकाः पाण्डवाः च एव किं अकुरु अत सञ्जय – इति। हे युयुत्सो त्वं पाण्डवाः मामकाः किमेव एवं संशयं अकुरु – मा कुरु। अत – सततं गच्छ, तानिति शेषः। सं – सुखं च "समभेदे समीचीने सुष्ठु पूजासुखेषु च" इति यादवः, जय – स्वाधीनं कुरु – प्राप्नुहीति यावत्, धर्मं क्षेत्रं चेत्युभयं कुरु। अः – वासुदेवः, क्षेत्रे – अस्मिंस्त्वदीये शरीरे "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" इत्यत्रैव वक्ष्यमाणत्वात्। समवेता – सम्बन्धकर्ता अस्त्विति शेषः। देहसम्बन्धस्यैव जीवनरूपत्वादिति भावः। किं वा। हे सञ्जय, मामकाः – मत्पुत्राः, धर्मक्षेत्रे – धर्मभार्यायां – द्रौपद्यां, किञ्च – किमपि अनिर्वाच्यमित्यर्थः। आग इति शेषः। अकुर्वत – चक्रुः, येन पाण्डवाः कुरुक्षेत्रे समवेताः सन्तः युयुत्सवः आसन्निति शेषः, तस्यैवेदं फलमिति भावः॥ यद्वा— धृतराष्ट्रो निर्विण्णः सन् स्वपुत्रसांसर्गिकदोषात् स्वात्मरक्षणं भगवते प्रार्थयति **धर्मेति**॥ धर्मक्षेत्रे कुरुक्षेत्रे सं

अवे अयुयुत्सवः मा आमकाः पाण्डवाः च एव किम् अकु र्वत सञ्जय – इति पदानि । हे सञ्जय, आमकाः – आमाः – गर्भे अपक्काः, दुर्योधनादयः "स्वार्थे कः" धर्मक्षेत्रे धर्मश्च क्षेत्रं चेति द्वे, धर्मो नाम विष्णुप्रियं कर्म, क्षेत्रं नाम ज्ञानं "क्षि निवासगत्योः" इति धातोः, गत्यर्थानां च ज्ञानार्थत्वात्, अकुर्वत किम् ? किमाक्षेपे, नाकुर्वतेत्यर्थः । पाण्डवा एव कुरुक्षेत्रे – कुरु – कर्म, क्षेत्रं – ज्ञानं चेति द्वे, सं – सम्यक् अकुर्वत् अतस्तानिति शेषः, सञ्जय – "अत्रअन्तर्णिच" सम्यग्जयं प्रापयेत्यर्थः । एतत्पक्षे अयुयुत्सेति पृथक्पदं कृष्णसम्बोधनार्थे । न युयुत्सा – युद्धेच्छा यस्येति विग्रहः । सञ्जयेति सम्बोधनपक्षे अयुयुत्सुश्चासौ वश्चेति व्युत्पत्त्या एकमेव पदं "नामैकदेश-ग्रहणान्नामग्रहणम्" इति न्यायेन वः – वासुदेव इत्यर्थः, ज्ञानरूपत्वाद्वा, मेति माम्, अवेत् – रक्षेत्, अत्रात्मनेपदमार्षम् । यद्वा – हे अयुयुत्सवः – युद्धेच्छारहिताः – व्यासकृष्णसञ्जयाः यूयं मा – माम् – अवेत – रक्षेत् मध्यमपुरुषो लिङ बहुवचनम् । केवलं परोपकारायेत्याकाङ्क्षया परस्मै-पदप्रयोगः, दुष्पुत्रसंसर्गजपातकादिति शेषः ॥

***अध्यात्मार्थे***— यद्वा— मामकाः – मं – शिवं माति – स्वात्मत्वेन जानातीति ममः – सङ्करः – कप्रत्ययः – कुत्सने, तदीयशिष्या मामकाः – मायावादिन इत्यर्थ । पाण्डवाः – ज्ञान-शीलत्वाच्छुक्लवर्णत्वाद्वा वायुः तच्छिष्याः – पाण्डवाः – वैष्णवा इत्यर्थः "पडिगतौ" इति धातोः, "ताच्छील्यार्थादुनस्तथा" इत्युक्तेश्च । उक्षेत्रे – उः – रुद्राभिमन्यमानोऽहङ्कारः, क्षीयते – विनश्यति – अनेनेति तादृशे धर्मक्षेत्रे, धर्मः विधिरूपेण वसत्यस्मिन्निति धर्मक्षेत्रं – वेदः – "वेदप्रणिहितो धर्म" इत्युक्तेः । अथवा धर्मो – विष्णुः "वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तम" इति विष्णु-सहस्रनामसूक्तेः, क्षीयते – ज्ञायते, अनेनेति विष्णुसर्वोत्तमत्वज्ञानसाधनरूपो वेदस्तमिन्, असमवेताः – असमं – विषमं यद् वं – ज्ञानं तेन इताः – युक्ताः, सन्तः, कुः प्रथमायाः सप्तम्यर्थकत्वात् कौ – भुवीत्यर्थः, युयुत्सवः वाग्युद्धं कर्तुमिच्छवः, किं – कथनं वादं जल्पं वितण्डं वा "वादो जल्पवितण्डेति त्रिविधा विदुषां कथा" इत्युक्तेः, अकुर्वत – चक्रुः । एतत्प्रश्नोत्तरं तु शङ्खवादनकाले ज्ञेयम् ॥ एवं पुनरनेकार्थसङ्ग्रहवत्यपि व्यासवाक्ये स्वबुद्धिमान्द्याद् ग्रन्थविस्तरभयाच्चोपरम्यते ॥ १ ॥

**गीता**

## सञ्जय उवाच—

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥**

***वि०वि०***— संजय उवाच— दुर्योधनो राजा व्यूहात्मना रचितं पाण्डवसैन्यं दृष्ट्वा द्रोणाचार्यसमीपमागत्य वचनमुवाच ॥ २ ॥

***सा०सं०***— धृतराष्ट्रप्रश्नस्य संजय उत्तरमुक्तवानित्याह, वैशम्पायनो जनमेजयं प्रति **संजय उवाच** इत्यादि नवभिः श्लोकैः । दुर्योधनकृतव्यापारमाह **दृष्ट्वेत्यादिना** । दुर्योधनस्तु राजा **तदा** युद्धार्थं मिलितसमये **व्यूढं** व्यूहात्मना रचितं पाण्डवसैन्यं **दृष्ट्वा तु** दृष्ट्वैव इति वा 'तोः' अन्वयः द्रोणाचार्यसमीपमागत्य वचनमुवाच ॥ २ ॥

***भा०र०***— ***अक्षरार्थस्तु***— एतत्प्रश्नोत्तरं वक्ष्यताऽऽदौ समस्तवृत्तान्त उच्यत उपोद्घातत्वेन **सञ्जय उवाच इति** ॥ दुर्योधनो राजा पाण्डवानीकं व्यूढं दृष्ट्वा । दर्शननिमित्तधैर्यभ्रंशरूपावस्थाविशेषद्योतकः तुशब्दः । आचार्यं – द्रोणम् उपसङ्गम्य – सविनयमुपसाद्य ॥ २ ॥

***अ०प्र०***— एवं पृष्टः सञ्जय आह **दृष्ट्वेति** ।

अथान्वयः— राजा[१] दुर्योधनः[२] व्यूढं[३] पाण्डवानीकं[४] तुशब्देन स्वसैन्यमपि[५] दृष्ट्वा[६] तदा[७] आचार्यमुपसङ्गम्य[८] इदं वचनं[९] अब्रवीत्[१०] ।

राजा[१] दुर्योधनः[२] व्यूढं = व्यूहरचनयाधिष्ठितं स्थितं वा[३] । पाण्डवानीकं = पाण्डवसैन्यम्[४] । तुकारेण स्वसैन्यमपि[५] । दृष्ट्वा[६] । तदा = तस्मिन् समये[७] आचार्यमुपसङ्गम्य = द्रोणाचार्यसमीपं गत्वा[८] । इदं वचनं वक्ष्यमाणवाक्यम्[९] । अब्रवीत् = उवाच[१०] ॥ २ ॥

***त्रि०वि०***— सञ्जयः सद्गुरुस्तुम्बरुर्वा, गावल्गणिर्वा । असुरादिपक्षीयदोषमाविष्कुर्वन्नाह **दृष्ट्वेति** । ***अध्यात्मार्थे***— **तदा** उभयसम्मेलनानन्तरकाले, **दुर्योधनः** स्वभावदुष्टान् योधान् नयति – प्रवर्तयति स तथा, अत एव राजा – महापाप्मा, पाण्डवानीकं – देवसैन्यं तु – विशेषेण "तु विशेषे" इत्युक्तेः, व्यूढं – वौ विष्णौ ऊढम् आश्रितं "विः पक्षिपरमात्मनोः" इत्यभिधानम् । दृष्ट्वा असहमानः सन्निति शेषः, अवचनं – प्रत्युत्तरमदातारं, आचार्यं – रुद्रं "त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय" इत्युक्त्या तदधिकारकशास्त्रकर्तृत्वात्, उपसंगम्य – समीपं गत्वा अब्रवीत् ॥ यद्वा— राज्ञो वक्तुमयोग्यमभिप्रायमब्रवीत् ॥ ***अंशार्थे***— दुर्योधनः – कलिः "दुर्योधनः कलिर्ब्रह्मवाय्वोरावेशयुक् सदा" इत्युक्तेः । आचार्यं – अन्यथाज्ञानित्वेन शुक्रबुद्ध्या बृहस्पतिम् ॥ ***प्रसिद्धार्थे***— दुर्योधनः – ज्येष्ठधार्तराष्ट्रः, आचार्यं – द्रोणम् ॥ २ ॥

**गीता**

# पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
# व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

***वि०वि०***— भो आचार्य ! तव शिष्येण धृष्टद्युम्नेन व्यूहरचनयाऽधिष्ठितां सेनां पश्य । ॥ ३ ॥

***सा०सं०***— तद्वचनमेवानुवदति संजयः **पश्यैतामित्यादिना** । हे **आचार्य ! तव शिष्येण धीमता** धृष्टद्युम्नेन **व्यूढां** पाण्डुपुत्राणां एतां महतीं **चमूं** सेनां **पश्य** ॥ ३ ॥

***भा०र०***— ***अक्षरार्थस्तु***— तदेव वचनं 'पश्यैताम्' इत्यादि नवश्लोक्यात्मकम् । आचार्येति सम्बुद्धिः । महतीं – वितताम् । द्रुपदपुत्रेण – धृष्टद्युम्नेन । व्यूढां – व्यूहरचनयाऽधिष्ठिताम्, चमूं – सेनाम् ॥ ३ ॥

***अ०प्र०***— किमिति ? **पश्येति** नवभिः ।

भो आचार्य ![1] तव शिष्येण[2] तत्रापि धीमता[3] द्रुपदपुत्रेण[4] व्यूढां[5] महतीं[6] पाण्डुपुत्राणां[7] एतां[8] चमूं[9] पश्य[10] इत्यन्वयः ।

भो आचार्य ![1] विद्योपदेष्ट्रा तव शिष्येण[2] । अत एव धीमता[3] । द्रुपदपुत्रेण = धृष्टद्युम्नेन[4] । व्यूढां = व्यूहरचनयाधिष्ठिताम्[5] । महतीं = विस्तृताम्[6] । पाण्डुपुत्राणां = पाण्डवानाम्[7] । एतां = पुरोवर्तिनीम्[8] । चमूं = सेनाम्[9] । पश्य = अवलोकय[10] । इत्यर्थः ॥ ३ ॥

***त्रि०वि०***— वचनमेवाह **पश्येति** ॥ ***अध्यात्मार्थे***— हे आचार्य – रुद्र ? शुक्र ? द्रोण ? वा एतां अङ्गुलिनिर्देश्यां पाण्डुपुत्राणां "समाने लोप" इति सूत्रेण – पाण्डवानामिति स्थिते – पाण्डुः – विष्णुः "पडि गतौ" "मृगय्वादित्वात्कुः पृषोदरादित्वात्" दीर्घः – तस्य पुत्रो – वायुः तस्मात् त्राणं रक्षणं यस्यास्ताम्, अत एव महतीं – पूज्यां धीमता – बुद्धिमता, तव उत्पादितत्वात् पुत्रेण, शिक्षितत्वात् शिष्येण च स्कन्देन व्यूढां कृतव्यूहरचनां चमूं पश्य । हे द्रुपद – द्रुः – वटवृक्षः पदं – स्थानं यस्य स तथा, रुद्रस्य वटाधःस्थितिः प्रसिद्धैव ॥ यद्वा— द्रु – दारु, पदं – स्थानं यस्य तस्याग्नेः पुत्रेण स्कन्देन "सेनानीरग्निभूर्गुह" इति कोशात् ॥ ***अंशार्थे***— हे आचार्य – शुक्र ? पाण्डुपुत्राणां पुण्याभिमानिना देवानां "पाण्डवेयानि पुण्यानि" इति वचनात्, द्रुपदपुत्रेण – द्रुतं पदानि – सुप्तिङन्तानि तदुपलक्षितवाक्यानि च, यस्मात्

स शीघ्रवक्ता गुरुरित्यर्थः, तत्पुत्रेण – कचेन तव शिष्येण सञ्जीवनीविद्यादानात्, व्यूढां – सर्वेषु प्राणिषु ऊढः – मृत्युः प्रसिद्धः विगतः ऊढो मृत्युर्यस्यास्ताम् ॥ ***प्रसिद्धार्थे***— हे आचार्य – द्रोण, पाण्डुपुत्राणां – युधिष्ठिरादीनां चमूं पश्य । ननु दृष्टैव पुनर्दर्शने को विशेषोऽत आह **महतीमिति** ॥ तव एकादशाक्षौहिण्यपेक्षया तत्समाक्षौहिणीभिर्महत्त्वं कथमित्यतः **द्रुपदपुत्रेण व्यूढामिति** ॥ उभयसाधारणेन भीष्मेण व्यूढाया अधिकाया अपि सकाशात् त्वत्कृतपितृपराभवत्वं, अस्मत्कृत-भगिनीक्लेशादिकं चासहिष्णुना धृष्टद्युम्नेन व्यूढत्वान्महत्त्वमिति भावः । ननु व्यूहरचनायां धृष्टद्युम्नस्य भीष्मसादृश्यं कथं भवेदित्यत उक्तं **तव शिष्येणेति** ॥ त्वच्छिक्षयाऽऽधिक्यं भवेत्किमु सादृश्य-मिति भावः ॥ तवापि मच्छिक्षैव । अतस्तस्यैवाधिक्यं, कुत इत्यत उक्तं **धीमतेति** ॥ शिक्षा-ग्रहणे न – तादृशी मद्बुद्धिरिति भावः । अतो विशेषसद्भावेन पुनः पश्येति विज्ञापयामि इत्याशयः ॥ ३ ॥

**गीता**

## अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
## युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

***सा०सं०***— अत्र सेनायां **महेश्वासाः** महाधानुष्काः **युधि भीमार्जुनसमाः शूराः** सन्ति । ते क इत्यत आह **युयुधान इत्यादिना** । **महारथ** इति प्रत्येकमन्वेति ॥ ४ ॥

***अ०प्र०***— **अत्रेति** ।

अत्र[१] युयुधानः[२] विराटश्च[३] महारथः[४] द्रुपदश्च[५] इत्यादयो युधि[६] भीमार्जुनसमाः[७] तथा महेष्वासाः[८] शूराः सन्ति[९] ॥ ४ ॥

अत्र = अस्यां चम्वाम्[१] । युयुधानः = सात्यकिः[२] । विराटश्च[३] । महारथः[४] । द्रुपदश्चे-त्यादयः[५] । युधि = सङ्ग्रामे[६] । अर्जुनसमाः = भीमार्जुनौ तावदत्रापि प्रसिद्धौ योद्धारौ ताभ्यां समाः[७] । तथा महेष्वासाः = इषवो बाणाः, अस्यां ते क्षिप्यन्ते एभिरिति इष्वासाः, धनूंषि महान्तः इष्वासाः येषां ते तथा[८] । शूराः = योद्धाः सन्ति[९] । इत्यर्थः ॥ ४ ॥

***त्रि०वि०***— तेषां विशेषान्तरमाह **अत्रेति** ॥ ***अध्यात्मार्थे***— अत्र – अस्यां चम्वां, युधि – सम्प्रहारविषये शूराः – विक्रमिणः, भीमार्जुनसमाः भृताः – पूर्णाः, माः – ज्ञानोपलक्षित-

बलादीनि यस्य स भीमः ''भृतमो भीम'' इत्युक्तेः स वायुरित्यर्थः । ''वायुर्भीम'' इत्युक्तेः, अर्ज्यते पारमेष्ठ्यं पदमनेनेति अर्जुनो – ब्रह्मा, 'अर्ज अर्जने'', ''अर्जे अर्जिणि लुकेत्यनन्'', ''अल्पाच्तरं पूर्वम्'' इति सूत्रात्, भीमशब्दस्यादौ निपातः, तावुभौ, समौ – महदभिमानित्वेन समानयोग्यता-वन्तौ येषु ते । महेष्वासाः – इषुः – ज्ञानं ''इषगतिहिंसादर्शनेषु'' गत्यर्थानां च ज्ञानार्थत्वात्, ''इषःकिच्चेत्युः'' तस्मिन् आसा – निष्ठा, इष्वासा, महती – पूर्णा महेष्वासा येषां ते, सन्तीति शेषः । विक्रमिणो देवानेवाह **युयुधान इति** । ''युयुवियोग'' इति धातोः, विविक्तधानाकारचिह्नवान् शेषः, गोधूमाकृतिचिह्नानां नागे प्रसिद्धेः । विराटः – विशिष्टं – सर्वोत्कृष्टं, रमणं सुखं यस्य तं विष्णुं अटयति – गमयति वाहयतीति यावत्, स गरुड इत्यर्थः । द्रुपदोः – रुद्रः, उभयसमुच्चये चशब्दौ, एते त्रयः अहंकारतत्त्वाभिमानिनः । अत एव 'महारथा' इत्युक्तं, महत् – महत्तत्त्वं , रथः – कारणत्वेन गतिर्यस्य सोऽहंकारः ''रथगतौ'' इति धातोः । अभिमान्यभिमन्यमानयोरैक्यव्यप-देशादिति भावः । एकवचनं तु पार्थक्येन योज्यम् ॥ ***अंशार्थे***— भीमार्जुनौ – वाय्विन्द्रौ ''भीमसेनः पुरा वायुः'' इत्युक्तेः ''अर्जुनः पूर्वमेवेन्द्र'' इति चोक्तेः, समत्वकथनं तु अन्यथा-ज्ञानित्वात् । युयुधानः – कृष्णपक्षाभिमानी देवः ''कृष्णपक्षो युयुधानाभिधेय'' इत्युक्तेः, विराटः – हाहानामा ब्रह्मगायको गन्धर्वः, ''विराटस्तु हाहानामा गायको ब्रह्मणः पुरा'' इत्युक्तेः । द्रुपदो – हूहूगन्धर्वः ''द्रुपदस्तु पुरा प्रोक्तः स हूहूर्नाम गायक'' इत्युक्तेः ॥ ***प्रसिद्धार्थे***— युयुधानः – सात्यकिः, तेषामेव महारथत्वकथनं तु स्वपक्षीयवचोब्रुवाणस्य रामस्य कृष्णसमक्षमपि सात्यकिना निराकरणात् । विराटोत्तरगोग्रहणे पराजितत्वात् । गुरुदक्षिणादानकाले द्रुपदेनापि पराजितत्वादिति बोध्यम् ॥ ४ ॥

**गीता**

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।**
**पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः॥ ५ ॥**

***सा०सं०***— वीर्यवानिति विशेषणम् । नरपुङ्गवो नरश्रेष्ठ इत्यपि त्रयाणाम् ॥ ५ ॥

***अ०प्र०***— धृष्टकेतुरिति ।

द्वाभ्यां शेषान् शूरान् वदति— धृष्टकेतुर्नाम एको राजा,[१] चेकितानः,[२] वीर्यवान्,[३] काशीराजश्च,[४] पुरुजित्,[५] कुन्तिभोजश्च,[६] नरपुङ्गवः,[७] शैब्यश्च[८] एते शूरा सन्ति ॥ ५ ॥

**गीता**

## युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
## सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

***वि०वि०***— अस्यां सेनायां महाधनुषो युद्धे भीमार्जुनतुल्याः सात्यकिप्रमुखाः शूराः सन्ति ॥ ६ ॥

***सा०सं०***— महारथत्वं नाम—

"एको दशसहस्राणां योधयेद्यस्तु धन्विनाम् ।
शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥" (उ.प. २६८.२४२)

इत्युक्तरूपम् । **विक्रान्तः** पराक्रमवान् । **सौभद्रः** अभिमन्युः । **द्रौपदेयाः** द्रौपदीपुत्राः ॥ ६ ॥

***भा०र०***— ***अक्षरार्थस्तु***— अत्र – एतस्यां परसेनायाम् । स्वयमभीरवः – शूराः । महेष्वासाः – महाधनुषः । युधि – युद्धे । भीमार्जुनसमाः – तत्समानपराक्रमा इति स्तुतावधिकोक्तिः । के ते ? युयुधानः – सात्यकिः । महारथः – "एको दशसहस्राणां योधयेद् यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते" इत्युक्तलक्षण इति विशेषणम् । विक्रान्तः "गत्यर्थाकर्मक" इत्यादिना कर्तरि क्तः । पराक्रमयुक्तः । उत्तमौजाः – तन्नामा द्रुपदपुत्रो राजा । सौभद्रः – अभिमन्युः । द्रौपदेया – द्रौपदीपुत्राः प्रतिविन्ध्यश्रुतसोमश्रुतकीर्तिशतानीकश्रुतकर्मनामानः पञ्च ॥ ४-६ ॥

***अ०प्र०***— **युधामन्युरिति ।**

विक्रान्तः[१] युधामन्युर्नाम एको राजा,[२] वीर्यवान्,[३] उत्तमौजाश्च[४] । सौभद्रः अभिमन्युः[५] । द्रौपदेयाश्च द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः प्रतिविन्ध्यादयः पञ्च द्रौपदेयाश्च[६] । एते सर्व एव महारथाः[७] ॥ ६ ॥

महारथादीनां लक्षणम्—

एकादशसहस्राणि योधयेद्यस्तु धन्विनाम् ।
शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥ १ ॥
अमितान् योधयेद्यस्तु स वै अतिरथो मतः ।
रथेनेकेन यो योद्धा तं न्यूनार्धरथो मतः ॥ २ ॥

*त्रि०वि०*— शेषानप्याह **धृष्टकेतुरिति** ॥ ***अध्यात्मार्थे***— धृष्टं – यक्षरूपं ब्रह्म, प्रश्नार्थमग्न्यादेरागमनेऽपि तत्प्रश्नात्पूर्वं स्वयमेव प्रश्नकरणे निर्भयत्वात्, तस्य केतुः – ज्ञानं प्रथमं यस्य स धृष्टकेतुः – इन्द्र इत्यर्थः । "केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया" इत्यभिधानमिति गीताभाष्ये "इन्द्रस्तु प्रथमं ब्रह्म व्यजानात् तेन तूत्तम" इति ब्रह्मसारोक्तेः । चेकितानः – चकन्ते ते चेकिनः "चकदीप्तौ" इति धातोः "पृषोदरादित्वात्" गुणः बर्हा इत्यर्थः, तेषां तानो – विस्तारो यस्य स चेकितानो – मयूरः, सोऽस्य वाहनत्वेन अस्तीति "अर्शआद्यच्" – स्कन्द इत्यर्थः, "विशाखः शिखिवाहन" इत्युक्तेः, इमौ द्वौ मनस्तत्त्वाभिमानिनावित्याशयः । काशीराजः – काश्यन्ते सर्वत्रेति काश्यः – दिशः, विभुत्वात् तासां राजः – स्वामिनः – दिग्देवाः, इमे श्रोत्राभिमानिन इत्यर्थः । वीर्यवान् – "अन्तर्णीतण्यर्थात्" "वीगतौ" इति धातोः गत्यर्थानां च ज्ञानार्थत्वात्, वीः – स्पर्शज्ञापकः यवान् – बीजाभिमानी प्राणः अयं त्वगभिमानीत्यर्थः । पुरु – पूर्णं तमः जयतीति पुरुजित् – सूर्यः चक्षुरभिमानीत्यर्थः । कुन्तिभोजः – कुं – भूमिगुणं – गन्धं, तनोति – विस्तारयतीति कुन्ति – अन्नादि, तद्भोजयति – तद्रसं ज्ञापयतीति यावत्, सवरुणः – जिह्वाभिमानीत्यर्थः । शैब्यः – शवन्ति – गच्छन्ति – जानन्ति गन्धमनेनेति शिवि – घ्राणेन्द्रियं, "बाहुलकादित्वं वबयोरभेदश्च" तदभिमानित्वाच्छैब्यः – अश्विनौ, जात्येकवचनम्, घ्राणाभिमानिनावित्यर्थः । नरपुङ्गवः, एतद्युधामन्योर्विशेषणम्, च – परं नरपुङ्गवो यस्येति । युधा – सम्प्रहारेण सहिताः मन्यवः – यागाः यस्मात् आग्नेयास्त्रेण युद्धसाधनत्वात्, हुताशनत्वेन यज्ञसाधनत्वाच्च, युधामन्युः – अग्निः – वागभिमानीत्यर्थः । नरपुङ्गवः – जीवश्रेष्ठः, तस्यैव दक्षत्वात् पाण्यभिमानित्वम् । विक्रान्तः – विक्रमवान्, तस्यैव जयविस्तारकत्वाज्जयन्तः पादाभिमानी । उत्तमौजाः महासामर्थ्यवान्, तस्यैव मानत्राणकर्तृत्वान्मित्रः – पाय्वभिमानी । वीर्यवान्, – वीर्यं – रेतः अधीनत्वेन अस्यास्तीति स तथा मनुः, अत एवोपस्थाभिमानी । सौभद्रः – शोभनानि भद्राणि – मङ्गलानि यस्याः सकाशात् सर्वेषामिति, सर्वमङ्गलत्वात् सुभद्रा – पार्वती, तत्पुत्रः सौभद्रः – गणपतिः – आकाशाभिमानी – तदुपलक्षितमरीचिकादयः, वाय्वाद्यभिमानिन इत्यपि ग्राह्यम् ॥ ननु सर्वेषां पार्थक्येन वचनादस्य वाय्वादिचतुष्टयस्य देवानामेवोपलक्ष्यत्वे किं निमित्तमिति न शङ्क्यम् । त्वग्वाग्जिह्वादैवतत्वेन वायुतेजोब्देवानां प्राणाग्निवरुणानामुक्तत्वात् पृथिव्याश्च तन्नामदेवताकत्वादिति ध्येयम् ॥ द्रौपदेयाः – द्रुपदः – शिव इति पूर्वमुक्तः, तत्पुत्रा द्रौपदेयाः – प्राणापानव्यानोदानसमानाः – पञ्च शब्दादिविषयाभिमानिनः । "शब्दाद्याः पञ्च शिवजाः शब्दनात् स्पर्शनादपि" इत्यादि गीतातात्पर्ये । सर्वे ब्रह्मवाय्वादयो महारथाः – महान्तः अराः – दोषाः यस्मिंस्तस्मिन्महारं

– शरीरं तस्मिन्नधिकृत्य, थः – स्थितिर्येषां ते तथाविधा एव । "तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ" इत्युक्तेः "ब्रह्मा तु पुरुषः स्मृतः । महांश्चाव्यक्तनाम्नी तु ब्रह्माणी सम्प्रकीर्तिता । एवं वायुरपि ज्ञेयो भारती चैव तत्त्रयम् । रुद्रोऽहङ्कार उद्दिष्टः स्कन्देन्द्रौ मन उच्यते । अहङ्कारः शेषवीन्द्रावपि विद्वद्भिरीरितौ । दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि । वह्निदक्षाविन्द्रसूनुर्मित्रश्चैव मनुस्तथा । इन्द्रियाख्याः शब्दनामा बृहस्पतिरुदाहृतः । अन्ये तु सूनवो वायो रुद्रस्यापि प्रकीर्तिताः" इति तन्त्रसारे ॥ *अंशार्थे*— धृष्टकेतुः – संवर्तो मरुत् "धृष्टकेतुः शैशुपालिः संवर्तो मरुदुच्यते" इत्युक्तेः । चेकितानः प्रतिभाख्यो मरुत् "चेकितानः पुरा प्रोक्तः प्रतिभो नाम वै मरुत्" इत्युक्तेः । काशीराजः – कश्चिद्देवः देवांशपक्षसाहाय्यकारित्वात् "ये पाण्डवानामभवन् सहाया देवाश्च देवानुचराः समस्ताः" इत्युक्तेः । पुरुजिदिति विशेषणम् । कुन्तिभोजः – कूर्माख्यः प्राणः "भोजराजः कूर्मकाख्यमरुदंशयुतः सदा" इत्युक्तेः । शैब्यः ऋभ्वाख्यो देवः "शैब्यस्तु ऋभुदेवता" इत्युक्तेः । युधामन्युः – विश्वावसुगन्धर्वः "युधामन्युः पार्षतस्य ब्रह्मावेशयुतो बली । सुतो विश्वावसुर्नामा गन्धर्वः समुदाहृत" इत्युक्तेः । उत्तमौजः – परावसुगन्धर्वः "उत्तमौजा यमावेशयुक्तश्चैव परावसुः" इत्युक्तेः । सौभद्रः – बुधः "अभिमन्युर्बुधः पूर्वम्" इत्युक्तेः । द्रौपदेयाः – विश्वेदेवाः "पञ्च पार्थसुताः प्रोक्ता विश्वेदेवाः पुरातना" इत्युक्तेः । महारथाः – पूज्यरूपाः "महपूजायां", "शरीरं रथमेव च" इति काठकश्रुतेः ॥ *प्रसिद्धार्थे*— धृष्टकेतुः – शिशुपालसुतः, धर्मजशालकत्वादन्तरङ्गः । चेकितानः – यादवः कृष्णसेवकत्वात्, काशीराजः भीमश्वशुरत्वात्, कुन्तिभोजः – कुन्तीपितृत्वात्, शैब्यः – श्रीकृष्णभक्तत्वात्, युधा-मन्युः – पार्षतवंश्यत्वात्, उत्तमौजाः – तद्वंश्यत्वात्, सौभद्रः – अभिमन्युः – अर्जुनपुत्रत्वात्, द्रौपदेयाः – द्रौपदीसुतत्वात्, अन्तरङ्गा एव । न केवलमन्तरङ्गाः किन्तु महारथा अपीति परोत्कर्षासहिष्णुत्वेन वर्णनं बोध्यम् । ॥ ५ ॥ ६ ॥

**गीता**

**अस्माकं तु विशिष्टा ये तान् निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥**

*वि०वि०*— अस्माकं तु सम्बन्धिनो ये बलिष्ठाः मम सैन्यनायकास्तान् विद्धि जानीहि । तव सम्यग्ज्ञानार्थं तान् ब्रवीमि ॥ ७ ॥

***सा०सं०*— अस्माकं त्विति** । पाण्डवव्यावर्तकस्तुशब्दः । **अस्माकं** सम्बन्धिनः **विशिष्टाः** बलिष्ठाः **मम सैन्यस्य नायकाः** नेतारः **ये तान् निबोध** बुद्धिस्थान् जानीहि **ते** तव सम्यग्ज्ञानार्थं **तान् ब्रवीमि** । **द्विजोत्तम** इत्याचार्यसम्बोधनम् ॥ ७ ॥

***भा०र०*— *अक्षरार्थस्तु*—** अस्माकं तु सम्बन्धिनो ये विशिष्टाः बलवन्तो मम सैन्यस्य नायकाः तान् निबोध – निश्चयेन बुध्यस्व । सञ्ज्ञार्थं – सम्यग्ज्ञानार्थम्, तान् नायकान्, ब्रवीमि ॥ ७ ॥

***अ०प्र०*—** हे द्विजोत्तम ![१] अस्माकं तु[२] ये विशिष्टाः[३] नामभिर्बलिष्ठाः[४] तान्[५] निबोध[६] । ये मम सैन्यस्य[७] नायकाः[८] तान्[९] ते[१०] संज्ञार्थं[११] अहं ब्रवीमि[१२] इत्यन्वयः ।

हे द्विजोत्तम ! = हे ब्रह्मन्[१] । अस्माकं तु = सम्बन्धिनः[२] । ये नामभिः[३] विशिष्टाः = बलिष्ठाः[४] । तान् = महारथान्[५] । निबोध = जानीहि[६] । मम सैन्यस्य = अस्मत्सम्बन्धि सेना वा[७] । नायकाः = नेतारः[८] । तान् = नामभिः[९] । ते = तव[१०] । संज्ञार्थं = सम्यग्ज्ञानार्थम्[११] ब्रवीमि = अहं विज्ञापयामि[१२] । इत्यर्थः ॥ ७ ॥

***त्रि०वि०*—** अथ स्वेषामन्तरङ्गत्वाभावं द्योतयितुमाह **अस्माकमिति** ॥ ***अध्यात्मार्थे*—** हे द्विजोत्तम – द्विजानां – सनकादीनां सकाशादुत्तम रुद्र ? अस्माकं मध्ये ये तु – विशिष्टाः – बहुश्रेष्ठाः, तु वि शब्दस्य बहुनामसु पाठात् । तान् निबोध – जानीहि । ये च मम सैन्यस्य नायकाः – प्रणेतारः, तान् संज्ञार्थं – नामार्थमुद्दिश्य ब्रवीमि ॥ ***अंशार्थे*—** हे द्विजोत्तम, द्वे शब्दार्थतत्त्वे जानन्ति ते द्विजाः – कवयः "जाज्ञाने" धातूनामनेकार्थत्वात्, 'औणादिकोऽन्त्यलोपो वा, तेषामुत्तम शुक्र "कवीनामुशना कविः" इत्युक्तेः । तुविशिष्टाः – तुना – असुरावेशरूप-विशेषेण विशिष्टाः "तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे" इत्युक्तेः, संज्ञार्थं सम्यग्-ज्ञानार्थम् ॥ ***प्रसिद्धार्थे*—** हे द्विजोत्तम – ब्राह्मणोत्तम – द्रोण ? विशिष्टशब्दस्य – शिष्टविरो-धित्वार्थं मनसि निधाय बहिः श्रेष्ठत्वरूपार्थं दर्शयन् द्व्यर्थकं तं शब्दं प्रायुङ्क्त । ये सैन्यस्य नायकाः ममेति संज्ञार्थं तु मदीया इति संज्ञारूपार्थमेव प्राप्ता इति शेषः, नान्ततो मद्धितकारिण इति भावः । तान् ब्रवीमीत्यन्वयः ॥ ७ ॥

**गीता**

**भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

***अ०प्र०***— भवान् द्रोणः[१] भीष्मश्च[२] कर्णश्च[३] कृपश्च[४] । समितिञ्जयः समितिं = सङ्गामं जयतीति तथा[५] । अश्वत्थामा[६] विकर्णश्च[७] तथैव च[८] । सौमदत्तिः = सोमदत्तस्य अयं सौमदत्तिः – भूरिश्रवः[९] । एते युद्धविशारदाः सन्तीति उत्तरेणान्वयः ॥ ८ ॥

***सा०सं०***— तानाह द्वाभ्यां **भवानित्यादिना** । **समितिञ्जयः** युद्धे जयशीलः । **सौमदत्तिः** सोमदत्तसुतो भूरिश्रवाः ॥ ८ ॥

***त्रि०वि०***— प्रतिज्ञातानाह **भवानिति** ॥ ***अध्यात्मार्थे***— भवान् "भ उररीकरण" इति धातोः, भं भयाङ्गीकारः "नामैकदेशग्रहणे नामग्रहणम्" इति न्यायाद्वा – भं – भयं, तद्वान् । "भयात् कंस" इत्युक्तेः, कंसस्य कालनेमित्वात्, तस्य कामाभिमानित्वात् भवान् कामाभिमानी कालनेमिः "असुरा अशुभेष्वेव कामादेरभिमानिनः ॥ तत्र कामः कालनेमिः" इति गीतातात्पर्ये ब्रह्मतर्कोक्तेः । भीष्मः – भीषयतीति व्युत्पत्त्या क्रोधाभिमानी खरः । "खरः क्रोधरस्त्वया दृष्टः" इत्युक्तेः । यद्वा— भवान् – कामाभिमानी मधुः भीष्मः – क्रोधाभिमानी कैटभः, तथा हरिवंशोक्तेः । कर्णः – केन – सुखेन ऋण्यते – ऊनीक्रियते स कर्णः – मत्सराभिमानी, वेनांशः पौण्ड्रकः, मत्सरिण एव परोत्कर्षदर्शनेन हि सुखाभावः "एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः" इति भागवतोक्तेः । "पापो वेन पौण्ड्रको वासुदेवः" इति च तात्पर्यनिर्णयोक्तेश्च । कृपः "कृतिछेदने" इति धातोः, कृतं – छिन्नं पाति – रक्षति स तथा । कृतशब्दोपपदात् पातेः कर्तरि डः । उपपदान्त्यलोपश्च, मोहाभिमानी डिम्भकः, मोहित एव हि नष्टरक्षणे यतते । समितिञ्जयः – मित्या – मानेन सहितः, समितिः – मानी, तं जयतीति स तथा महामानी निकुम्भः, अत्रालुक् । अश्वत्थामा – न श्वयन्ति – न जानन्ति ते अश्वाः "टुओश्विगतिवृध्योः", "गत्यर्थानां ज्ञानार्थत्वाच्च" अज्ञानिन इत्यर्थः, तेषु तिष्ठति सोऽश्वत्थः – अहङ्कारः "ष्ठागतिनिवृत्तौ, सुपीति कः, पृषोदरादिः, ततो मतुबर्थे आतो मनिन्" अहङ्काराभिमानी विप्रचित्तिः । विकर्णः – विशेषेण करोति स्वसत्कर्म प्रसिद्धमिति "कृवृपृ इत्यादिना नन्" दम्भाभिमानी वज्रनाभः असुरः । सौमदत्तिः – सुतरां मदः सुमदः स एव सौमदः तं तनोतीति सौमदत्तिः "पृषोदरादित्वादन्ते द्वित्तता" मदाभिमानी कुञ्जरः "कुञ्जरो मद उच्यते" इत्युक्तेः ॥ ***अंशार्थे***— भवानिति द्रोणं प्रति वचनात् बृहस्पतिः "द्रोणो बृहस्पतिः प्रोक्तः" इत्युक्तेः । भीष्मः – द्युनामा वसुः "भीष्मस्तु द्युवसुर्नाम" इत्युक्तेः । कर्णः – सूर्यस्यांशः सहस्रवर्माख्यासुरावेशी "कर्णः सूर्यः समाख्यातः सन्निधानयुतो हरेः । सहस्रवर्मनाम्नाऽपि आविष्टो नरकेण च' इत्युक्तेः । कृपः – विष्कम्भो रुद्रः "कृपाचार्यः पुरा प्रोक्तो विष्कम्भो नाम रुद्रक" इत्युक्तेः । ननु ते देवांशा एव कथं कलिना स्वीयत्वेनोच्यन्ते इत्यत उक्तं

**समितिञ्जय इति** । ''मिनु हिंसायामिति'' धातोः मितिं – मृत्युं जयन्ति ते असुराः, तैः सहितत्वाद्युक्तमुक्तमित्यर्थः । एकवचनोऽपि समितिञ्जयशब्दः पार्थक्येन सर्वत्र योज्य इति सूचयितुं समुच्चयार्थकाश्चशब्दाः । अश्वत्थामा – रुद्रः ''अश्वत्थामा नीलकण्ठ'' इत्युक्तेः । विकर्णः अतिकायासुरः ''विकर्णोऽप्यतिकायक'' इत्युक्तेः । चशब्दस्त्वर्थे विशेषद्योतकः, स्वभावादेव दुष्टः नावेशात इति । सौमदत्तिः भूरिश्रवाः – अहिर्बुध्न्यः तथैव तात्पर्यनिर्णयोक्तेः । तथा द्रोणादिवत् आवेशत एव, चः समुच्चये, भूरिश्रवा अपि मदीय इति भावः ॥ ***प्रसिद्धार्थे***— यमभिमुखीकृत्योच्यते तद्दाक्षिण्यमधिकमित्यतो द्रोणं प्रत्यादौ भवानित्युक्तिः । सैन्यनायककथनप्रसङ्गे मम सेनाधिपतित्वेऽपि द्रोणस्यादौ ग्रहणे व्यर्थो ममायास इति भीष्मो मन्येतेत्याशङ्क्य तदुत्तरमेव भीष्म इत्युक्तम् । चशब्देन ब्राह्मणत्वात् तदग्रोक्तिरिति सूचितम् । कर्णभीष्मयोर्वैमनस्याद्भीष्मनामग्रहणेन विवर्णवदनं कर्णं दृष्ट्वा अव्यवधानेनाग्रे कर्ण इत्युवाच । तथापि तन्मानसीं प्रीतिमदृष्ट्वा अनन्तरं कृपोपन्यासः । अनेन भीष्मस्य ब्राह्मणान्ते ग्रहणात् कर्णस्य तु ब्राह्मणादौ ग्रहणात् भीष्मापेक्षयापि कर्णस्य महाविश्वासपात्रत्वं ध्वनितम् । स्वापेक्षयाऽऽदौ कर्णस्य ग्रहणात् रुष्टं कृपमवेक्ष्य सर्वेषामविशेषितत्वेऽपि तमेव समितिञ्जयपदेन विशेषितवान् । गुरुपुत्रत्वेन ब्राह्मणत्वेन महाशौर्येण मित्रत्वेन चादौ स्वनाम्नोऽग्राह्यत्वेऽपि तदभावमालोक्य सञ्जातोऽपेक्षमश्वत्थामानं स्वभ्रात्रादौ जग्राह । अनेन बन्धोः सकाशादपि तदाधिक्यं निरूपितम् । बाह्यानामेव ग्रहणात् स्वभ्रातरो युद्धविमुखा भवेयुरित्यतोऽश्वत्थामान्ते च भ्रातृग्रहणम् । तत्रापि दुःशासनादीन् विहाय विकर्णस्यैव ग्रहणे निमित्तं तु द्यूतकाले विरुद्धभाषितत्वं ज्ञेयम् । अनेन तद्ग्रहणाभावे तथा भाषितत्वात् तान् प्रति गच्छेदिति भीर्दृश्यते । स्वसाक्षाद्भ्रातृग्रहणेन दूरस्थस्य महावीरस्य भूरिश्रवसः वैमनस्यमाशङ्क्य तथैवेत्युक्तम् । साक्षाद्भ्रातृसमान इत्यर्थः, न तु दूरस्थत्वेन सोदरन्यून इति भावः ॥ ८ ॥

**गीता**

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

***वि०वि०***— ते च भवदादयो मन्निमित्तं प्राणत्यागे कृतनिश्चयाः । अनेकशस्त्रास्त्रधारिणो युद्धकुशलाः ॥ ८, ९ ॥

***सा०सं०***— शूरा एवेति वा **मदर्थे एवेति** वाऽवधारणान्वयः । **त्यक्तजीविताः** प्राणत्यागे कृतनिश्चया इत्यर्थः । प्रह्रियन्ते एभिरिति प्रहरणानि अस्त्राणि । नानाविधानि शस्त्राणि येषां ते **नानाशस्त्रप्रहरणाः । युद्धविशारदाः** युद्धकुशलाः ॥ ९ ॥

*भा०र०*— *अक्षरार्थस्तु*— त उच्यन्ते **भवान्** इत्यादि द्वाभ्याम् । समितिं सङ्ग्रामं जयतीति तथोक्तः । सर्वविशेषणं चैतत् । सौमदत्तिः – भूरिश्रवाः । मदर्थे – मन्निमित्तम् । त्यक्तजीविताः – जीवनमपि त्यक्तुमध्यवसिताः । एष्यतोऽपि जीवितत्यागस्य निश्चितत्वाशयादियमुक्तिः । नानाविधानि शस्त्राणि प्रहरणान्यायुधानि च येषां ते तथोक्ताः । युद्धविशारदाः – युद्धे निपुणाः । ॥ ८-९ ॥

*अ०प्र०*— एते नामभिर्विशिष्टाः अनुक्ताश्चान्येऽपि सन्तीत्याह **अन्ये चेति** ।

अनुक्ताः अन्ये[१] च[२] नानाशस्त्रप्रहरणाः[३] सर्वे युद्धविशारदाः[४] मदर्थे[५] त्यक्तजीविताः सन्तः[६] बहवः[७] शूराः सन्ति[८] । इत्यन्वयः ।

अनुक्ताश्च अन्ये[१] चकारेण भवदादयोऽपि[२] । नानाशस्त्रप्रहरणाः = नानाविधानि शस्त्राणि प्रहरणसाधनानि युद्धसाधनानि येषां ते तथा[३] । सर्वे युद्धविशारदाः = सर्वे युद्धकुशलाः[४] । मदर्थे = मन्निमित्तम्[५] । त्यक्तजीविताः = प्राणत्यागे कृतनिश्चयाः[६] । बहवः[७] । शूराः सन्ति[८] । इत्यर्थः ।

*त्रि०वि०*— अन्येषां स्वनामाग्रहणेन खिन्नत्वं समीक्ष्य तानपि शंसति **अन्ये चेति** ॥ *अध्यात्मार्थे*— अन्ये – नमुचिपाकेल्वलादयः शूराः त्यक्तजीविता आसन् । ये च मदर्थे अत्यक्तजीविताः – धृतदेहाभिमानाः राहुविरोचनमन्देहादयः । ते च नानाशस्त्रप्रहरणाः अनेक-शस्त्रप्रहारशीलाः । न केवलं तथा अपि तु सर्वेऽपि युद्धे विशारदाः – कुशलाः ॥ *अंशार्थे*— शल्यदुःशासनजयद्रथाद्याविष्टसल्हादेन्द्रजित्कालकेयादयो असुराः मदर्थे – मदिष्टार्थे त्यक्तजीविताः, अत्यक्तजीविताः – धृतमनुष्यदेहा वा ॥ *प्रसिद्धार्थे*— अन्ये – जरासन्धैकलव्यपौण्ड्रकादयः, त्यक्तजीविताः ॥ ये चात्यक्तजीविताः शल्यादयः तेऽपि शूरा एव । अत्यक्तेत्यत्राकारप्रश्लेषाभावे क्तप्रत्ययस्यातीतार्थकत्वेन पूर्वं मृतानामिदानीं योद्धृत्वासम्भवात् । यद्वा जीवितशब्देन तदाशा लक्ष्या ॥ ९ ॥

**गीता**

## अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
## पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

*वि०वि०*— तथापि भीष्मादिभिरक्षितमस्मद्बलं न पाण्डवविजये समर्थं प्रतीयते ॥ १० ॥

***वा०ल०***— 'अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्' इत्यत्र पर्याप्तं परिसमाप्तिं प्राप्तं, तन्न भवतीति अपर्याप्तम् ।

***सा०सं०***— बलद्वये बलिष्ठपरिगणने पाण्डवविजये मम सन्देहोऽस्ति । ततो भवदादयः सर्वे बहुसन्नद्धा भवन्त्विति भावेनाह **अपर्याप्तमिति** । सेनापतिभूत**भीष्माभिरक्षितम् अस्माकं** तत्प्रागुक्त-बलिष्ठोपेतं **बलम् अपर्याप्तं** पाण्डवजये न समर्थं प्रतीयते । **भीमाभिरक्षितमिदं** पाण्डवानां **बलं तु पर्याप्तम्** अस्मद्विजये शक्तं प्रतीयते ॥ १० ॥

***भा०र०*— *अक्षरार्थस्तु***— तथाऽपि भीष्माभिरक्षितमस्माकं बलम् अपर्याप्तं – परविजये न समर्थम् । इदमेतेषां पाण्डवानां बलं भीमाभिरक्षितमिति पर्याप्तम् – अस्मद्विजयसमर्थम् ॥ १० ॥

***अ०प्र०***— ततः किमत आह **अपर्याप्तमिति** ।

तत्[१] भीष्माभिरक्षितमपि[२] अस्माकं बलं[३] अपर्याप्तं भवति[४] । इदं[५] एतेषां[६] बलं[७] तु[८] भीमाभिरक्षितं सत्[९] पर्याप्तं प्रतीयते[१०] । इत्यन्वयः ।

तत् = तथाविधैश्शूरैर्युक्तमपि[१], भीष्माभिरक्षितमपि = भीष्मेण अभितो रक्षितमपि[२], अस्माकं बलं[३], अपर्याप्तं = पाण्डवैस्सह योद्धुमसमर्थं भाति[४], इदं[५] एतेषां[६] बलं[७] तु = पुरोवर्तिनं पाण्डवानां सैन्यं तु[८], भीमाभि-रक्षितं सत् = भीमेन अभितो रक्षितं सत्[९] । पर्याप्तं = अस्मद्विजये समर्थं प्रतीयते[१०] ॥ १० ॥

***त्रि०वि०***— प्रशंसारूपसाम्ना सेनापत्यदानेन च भीष्मानुकूल्यं सम्पादितं, इदानीं भेदेनापि सम्पादयन् तद्रोषजननायाह **अपर्याप्तमिति** ॥ ***अध्यात्मार्थे***— अत्र तदित्यव्ययम्, तत्रार्थे – तदुभयपक्षमध्य इत्यर्थः । असन्निकृष्टपरामर्शकस्य तस्य सन्निकृष्टपरामर्शकत्वायोगात् । अस्माकं बलं – सैन्यं भीष्माभिरक्षितमिति हेतुगर्भविशेषणम् । देवासुरेषु साम्याद्वर्तमानेन भीष्मेण क्रोधेन तदभिमानिनेति यावत्, अभिरक्षितत्वादित्यर्थः । अपर्याप्तं – शत्रूणां जये अलं न भवेत् । यद्वा— परितः – सर्वतः आप्तं – हितकारि नास्ति । अथवा परः – परमात्मा अस्त्यस्मिन्निति परि आप्तं च पर्याप्तं, तद्विरुद्धमपर्याप्तं विष्णुरहितम्, अनाप्तं चेत्यर्थः । तेषां – देवानां तु बलं भीमेन – पूर्णज्ञानिना प्राणेन अभिरक्षितत्वात् । अत्राप्यस्माकमित्यावर्त्यम् । दमे – अस्मन्निग्रहे, पर्याप्तं शक्तम् । ज्ञानित्वस्यैकपक्ष एव वर्तमानत्वादिति भावः । अत इति शेषः । इ – आश्चर्यं "इ विचित्रे स्मरे पुमान्" इति यादवः । इदमेतच्छब्दाभ्यां दूरस्थसैन्यतत्पतीनां परामर्शायोगादियमेव योजना युक्ता । परि – विष्णुसहितम् आप्तं चेति वा ॥ ***अंशार्थे***— भीष्मस्य वस्वंशत्वेन तत्पक्षीयत्वादिति

भावः । भीमस्यांशावेशाभ्यामुभाभ्यामपि अस्मत्पक्षानङ्गीकारादिति च ॥ ***प्रसिद्धार्थे***— भीष्मस्योभयपक्षसमानत्वात् भीमस्यास्मन्निरसने सत्यप्रतिज्ञत्वादिति भावः । वाग्बाणभेदेनापि भीष्मः स्वार्थे यतेतेति तात्पर्यम् ॥ १० ॥

**गीता**

## अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
## भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

***वि०***—अतो भवन्तः सर्व एव व्यूहप्रवेशमार्गेषु स्वां स्वां भूमिमपरित्यज्यावस्थिताः सन्तः यथाऽन्यैर्युध्यमानः पृष्ठतः कैश्चिन्न हन्यते तथा भीष्मं रक्षन्त्विति द्रोणाचार्यमुक्त्वा दुर्योधनो विरराम ॥ ११ ॥

***वा०ल०***— 'अयनेषु च' इत्यत्र अयनेषु युद्धमार्गेषु । 'अयनं पदवी मार्गः' इति हलः । ११

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे प्रथमोऽध्यायः ॥*

***सा०सं०***— हि यस्मादेवमतः **भवन्तः** सर्व एव । **सर्वेष्वयनेषु** व्यूहप्रवेशमार्गेषु **यथाभागमवस्थिताः** स्वस्वरणभूमिस्थानेषु दृढमवस्थिताः सन्तः **भीष्ममेवाभिरक्षन्तु** अन्यैर्युध्यमानो भीष्मः पृष्ठतोऽरिभिर्यथा न हन्यते तथा रक्षन्तु इति द्रोणाचार्यमुक्त्वा विषसाद ॥ ११ ॥

***भा०र०— अक्षरार्थस्तु***— एवं प्राबल्येऽपि सन्धिमरोचयमानेन स्वबलविजये प्रयतमानेन च द्रोणादीनां तद्रक्षणेन तदानुगुण्यभजनं प्रार्थ्यते **अयनेषु चेति** ॥ सर्व एव भवन्तः सर्वेष्वयनेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तं स्वं स्वं युद्धप्रदेशमनतिक्रम्यावस्थिताः सन्तो भीष्ममेवाभिरक्षन्त्वित्युक्त्वा राजा विषसाद ॥ ११ ॥

***अ०प्र०***— भीष्मस्य उभयपक्षपातित्वात् अस्माकं बलं पाण्डवसैन्यं सम्प्रति असमर्थम् । भीमस्यैकपक्षपातित्वात् एतद्बलं प्रतिसमर्थम् । तस्माद्भवद्भिरेवं वर्तितव्यमित्यत आह **अयनेष्विति** ।

अतः भवन्तः[१] सर्व एव[२] हीति निश्चयेन[३] सर्वेषु[४] अयनेषु[५] चकारेण पृष्ठतः[६] यथाभागं[७] अवस्थिताः सन्तः[८] भीष्ममेव[९] अभिरक्षन्तु[१०] ।

अतः कारणात् भवन्तः[१] । सर्व एव[२] । निश्चयेन[३] । सर्वेषु[४] । अयनेषु व्यूहप्रवेशमार्गेषु च[५] । चकारेण पृष्ठतश्च[६] । यथाभागं विभक्तां स्वां स्वां रणभूमिमपरित्यज्य[७] । अवस्थिताः सन्तः = सन्नद्धाः सन्तः[८] । भीष्ममेव[९] । अभिरक्षन्तु[१०] ।

यथान्यैः पृष्ठतः युध्यमानः भीष्मः कैश्चिन्न हन्यते तथा भीष्ममेव अभिरक्षन्तु भीष्मबलेनैव अस्माकं सङ्ग्रामे जीवनमिति भावः ॥ ११ ॥

***त्रि०वि०***— इदानीं भीष्मोपरि अन्ततः कुपितः सन् बहिर्वर्धयन् सैनिकानाज्ञापयति **अयनेष्विति** ॥ ***अध्यात्मार्थे***— सर्वेष्वयनेषु – जीवस्थानरूपेषु देहेषु । यथाभागं – यथाधिकारं, हि – यस्मात्, भीष्मस्य – क्रोधस्य रक्षणात् सर्वमस्मदभिप्रेतं भवेदिति भावः ॥ ***अंशार्थे***— सर्वेष्वयनेषु – भीष्मद्रोणादिसर्ववीरेषु, यथाभागं – यथांशं, अवस्थिताः भवन्तः – कालनेम्यादयः । भीष्मं – क्रोधाभिमानिनं, खरं, कैटभं वा, अभिरक्षन्तु । तेनैवास्मत्कार्यसिद्धिरिति भावः ॥ ***प्रसिद्धार्थे***— अयनेषु – वाहनेषु, यथाभागं – व्यूहस्य यथोक्तपूर्वादिभागमनतिक्रम्यावस्थिताः, सर्व एव भवन्तः भीष्ममेवाभिरक्षन्तु, किमस्मद्रक्षयेदित्याक्षेपोक्तिः ॥ ***वर्धनपक्षे***— तस्मिन् रक्षिते सति सर्वे वयं रक्षिताः स्याम इति भावः ॥ ११ ॥

**गीता**

## सञ्जय उवाच—

**तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान्॥ १२ ॥**

***सा०सं०***— एवं विषादिनः **तस्य** दुर्योधनस्य **हर्षं सञ्जनयन्** जनयितुम् । "लक्षणहेत्वोः क्रियायाः" (३-२-१२६) इति हेतौ शत्रन्तम् । **प्रतापवान् कुरुवृद्धः पितामहः** भीष्मः **सिंहनादं उच्चैर्विनद्य शङ्खं दध्मौ** । "ध्मा शब्दे" ॥ १२ ॥

***भा०र०***— ***अक्षरार्थस्तु***— एवं विषीदद्राजवाक्यं श्रुत्वा भीष्मः किं कृतवानित्यत उक्तम् **तस्येति** ॥ पितामहो – भीष्मः हर्षं सञ्जनयन् – जनयितुम्, उच्चैः – महान्तम्, सिंहनादं विनद्येत्येतत् "ओदनपाकं पचति" इतिवद् व्याख्येयम् । दध्मौ – शब्दितवान् ॥ १२ ॥

***अ०प्र०***— तदेव बहुमानयुक्तं राजवाक्यं श्रुत्वा भीष्मः किं कृतवानित्याह **तस्येति** ।

प्रतापवान्[१] कुरुवृद्धः पितामहः[२] तस्य[३] हर्षं[४] सञ्जनयन् सन्[५] उच्चैः[६] सिंहनादं[७] विनद्य[८] शङ्खं[९] दध्मौ[१०] । इत्यन्वयः ।

प्रतापवान्[१] । कुरुवृद्धः पितामहः = भीष्मः[२], तस्य = राज्ञः[३], हर्षम्[४], सञ्जनयन् = कुर्वन् सन्[५] । उच्चैः = महान्तम्[६] । सिंहनादम्[७] । विनद्य = कृत्वा[८] । शङ्खम्[९] । दध्मौ = वाजितवान्[१०] ॥ १२ ॥

*त्रि०वि०*— सैनिकानां निजरक्षणस्याज्ञापनेन तुष्टः क्रोधाभिमानी, स्वस्वामिनो हर्षजननाय कृतां कृतिमाह **तस्येति** ॥ ***अध्यात्मार्थे***— मह इत्यत्र पृषोदरादित्वान्मकारोत्तरोकारलोपः । तथा "सप्तसु प्रथमा" इति सूत्रात् प्रथमा षष्ठ्यर्थे, तथा च – महः – मोहस्य पिता – उत्पादकः "क्रोधाद्भवति संमोह" इत्युक्तेः । कुरुवृद्धः – ककाररेफोत्तरवर्तिनौ यावुकारौ ताभ्यां विभागयोगेन क्रो इति वर्णे स्थिते तेन वृत् – युक्तः धकारो यत्रेति स कुरुवृद्धः – क्रोधः । तदभिमानी असुरः । तस्य – कलेः, हर्षं सञ्जनयन् सन् । सिंहनादं – आट्टहासं विनद्य – कृत्वा "वचनमब्रवीत्" इतिवत् ज्ञेयम् ॥ शङ्खं – शं – सुखं, खनति – उन्मूलयति तत् अन्यथाज्ञानम् । दध्मौ – नादयामास, प्रख्यापितवानिति यावत् । तथा विष्णुतो भीतिमानित्याह **प्रतापवानिति** ॥ प्र – विष्णुः "अ क थ प्र वि सं भूम स ख हा विष्णुवाचकाः" इत्यभिधानात् तस्मात् तापयुक्त इत्यर्थः ॥ ***इत्यध्यात्मार्थे*** ॥ ***अंशार्थे***— कुरुवृद्धः – भीष्मः आवेशपात्रत्वेन यस्यास्तीति, "अर्श आद्यच्" पितामहो – ब्रह्मा, तथैव तात्पर्यनिर्णयोक्तेः । तस्य – कलेः हर्षं सञ्जनयन् सन्निवेति लुप्तोत्प्रेक्षा । सिंह इति नादः – शब्दः, नृसिंहनामेति यावत् । दुरितनिवृत्तये इति शेषः "नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये" इति भाष्योक्तेः । विनद्य – उच्चैरुच्चार्य । शङ्खं – शं – सुखसाधनं, खं ज्ञानं, दध्मौ – व्यधमत्, निःसारयामासेति यावत् । यतः प्रतापवान् – प्रार्थं – विष्ण्वर्थं, तापः – तपः तद्वान् ॥ ***प्रसिद्धार्थे***— तस्य – दुर्योधनस्य, कुरुवृद्धः पितामहः – भीष्मः, शङ्खं – कम्बु ॥ १२ ॥

**गीता**

## ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
## सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्॥ १३ ॥

*वि०वि०*— तस्य विषादमालोक्य भीष्मः तस्य हर्षं जनयितुं सिंहनादं शङ्खध्वानं च कृत्वा शङ्खभेर्यादिनिनादैश्च विजयाभिशंसिनं घोषं चाकारयत् ॥ १२, १३ ॥

*सा०सं०*— **ततः** तच्छङ्खध्वानानन्तरम् । **पणवानकगोमुखाः** वाद्यविशेषाः । **सहसैव** युगपदेव । **तुमुलः** सर्वत्र परिपूर्णः **अभवत्** ॥ १३ ॥

*भा०र०*— ***अक्षरार्थस्तु***— एवं भीष्मोन्नाहमाकलय्य सर्वयोद्धृषु युद्धोत्सवः प्रवृद्ध इत्युच्यते **तत इति** ॥ सहसा – तत्क्षणमेव । अभ्यहन्यन्त – अताड्यन्त । तुमुलः – रणसङ्कुलः । महान् सर्वत्र परिपूर्ण इत्यर्थः ॥ १३ ॥

*अ०प्र०*— तदेव सेनापतेर्भीष्मस्य युद्धोत्सवमालक्ष्य सर्वतो युद्धोत्सवः प्रवृत्त इत्याह **तत इति**।

क्रमेणान्वयस्पष्टः । ततः = भीष्मोत्सवानन्तरम्[१] । शङ्खाश्च[२] । भेर्यश्च[३] । पणवाः[४] । आनकाः[५] । गोमुखाद्याश्च वाद्यविशेषाः[६] । सहसैव = तत्क्षणमेव[७] । अभ्यहन्यन्त = वादिताः[८] । स शब्दः = स च शङ्खादीनां शब्दः[९] । तुमुलो = महान्[१०] । अभवत्[११] । कौरवसैन्ये विजयशंसिशङ्खादीनां शब्दो महानभूत् इत्यर्थः ॥ १३ ॥

*त्रि०वि०*— आनन्तरिकं वृत्तमाह **तत इति** ॥ ***अध्यात्मार्थे***— शङ्खः – शमुपलक्षित-वस्तुजातकारणं खं – शून्यं येषु ते शङ्खाः शून्यवादाः । भेर्यः – भा – भवानी "नामैकदेशग्रहणेन नामग्रहणात्" शक्तिरिति यावत्, ईर्या – प्रतिपाद्या यस्मिन्स भेर्यः – शक्तिवादः । "पणव्यवहार" इति धातोः, पणो – व्यवहारः, वं – बलं यस्मिन् स पणवो – मायावादः । तस्मिन् व्यावहारिकी सत्ताङ्गीकारात्, ओ – विष्णुः, कः – शब्दःरूपत्वाद्वेदः, तौ अकौ यद्वादे न स्तः सोऽनकः – नास्तिकवादः, । गौः – नन्दीश्वरः, यद्वा— शाकपार्थिवत्वाद्गोमान् – पशुपतिः मुखः – मुख्यो यस्मिन् स गोमुखः – पाशुपतवादः । एते सहसैव – बलात्कारादेव अभ्यहन्यन्त "हन हिंसा-गत्योः" इति धातोः, "उपसर्गाणामर्थद्योतकत्वाच्च" अभ्युपगताः अङ्गीकृत्यावर्तिताः इति यावत् । अनेनैव तेषां निषिद्धत्वं द्योतितम् । तुमुलः – सान्द्रः ॥ अंशार्थप्रसिद्धार्थयोः शङ्खादयो वाद्यभेदा एव ॥ १३ ॥

**गीता**

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः॥ १४ ॥**

*वि०वि०*— ततस्तद्घोषमाकर्ण्य । कृष्णार्जुनौ स्वं स्वं शङ्खं प्रदध्मतुः ॥ १४ ॥

*सा०सं०*— **ततः** तेषां घोषानन्तरं **श्वेतहयैः** शुक्लवर्णाश्वैः **युक्ते स्यन्दने** रथे । **पाण्डवः** तु अर्जुनः । **स्थितावेव** इत्यन्वयः ॥ १४ ॥

*भा०र०*— ***अक्षरार्थस्तु***— ततः – अनन्तरम् । महति – अप्रधृष्ये । स्यन्दने – रथे । स्थितावेवे-त्यकम्पनद्योतनायैवशब्दः । दिव्यौ – अलौकिकौ । प्रदध्मतुः – नादितवन्तौ । ॥ १४ ॥

***अ०प्र०***— पाण्डवसैन्ये प्रवृत्तयुद्धोत्सवमाह **तत इति** पञ्चभिः ।

अस्यान्वयः स्पष्टः । ततः = कौरवसैन्यविजयशंसिनं शङ्खादिघोषं श्रुत्वा[१] श्वेतैः[२] हयैः[३] युक्ते = सन्नद्धे[४] । महति = उन्नते[५] । स्यन्दने = रथे[६] । स्थितौ = निषण्णौ[७] । माधवः पाण्डवश्चैव = श्रीकृष्णार्जुनौ[८] । दिव्यौ = दिवि भवौ[९] । शङ्खौ = पाञ्चजन्यदेवदत्तौ[१०] । प्रदध्मतुः = वाजयामासुः[११] । इत्यर्थः ॥ १४ ॥

***त्रि०वि०***— इदानीं देवपक्षीयवृत्तमाह ततः **श्वेतैरिति** ॥ ***अध्यात्मार्थे***— "डुहोश्विगतिवृध्योः" इति धातोः, श्वं ज्ञानं, तत्सहितम् इतं – गमनोपलक्षितसर्वकर्मजातं येषां तैः, ज्ञानकर्मकरणैरित्यर्थः । हयैः – गच्छन्ति – स्वविषयानिति हयैः इन्द्रियैः "हयगतौ" इति धातुः, युक्ते – सहिते । महति – सर्वयोनिषु श्रेष्ठत्वात् पूज्ये, स्यन्दने – रथरूपे – नृदेहे "शरीरं रथमेव तु" इति काठकम् । स्थितौ – आश्रितौ "द्वासुपर्णा" इति श्रुतेः, माधवः – रमापतिः, पाण्डवः – पाण्डं – प्रमेयं, वाति जानातीति स तथा जीव इत्यर्थः । तावुभौ – दिव्यौ – पूर्वोक्तविलक्षणौ । शङ्खौ – सुखसाधनभूतज्ञानसाधनवादौ, प्रदध्मतुः – व्याकुरुताम् ॥ ***अंशार्थे***— माधवो – भगवान्, पाण्डवः – नरः इन्द्रो वा ॥ ***प्रसिद्धार्थे***— माधवो – भगवान्, पाण्डवो – अर्जुनः । ॥ १४ ॥

**गीता**

## पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
## पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥

***सा०सं०***— तद्विवृणोति **पाञ्चजन्यमिति** । **हृषीकेश**शब्दार्थ उक्तो भाष्ये एकादशे— "हृषीकाणामिन्द्रियाणामीशत्वाच्च हृषीकेशः" इत्यादि । **दध्मौ** इत्यन्वयः ॥ १५ ॥

***भा०र०***— ***अक्षरार्थस्तु***— हृषीकेशः हृषीकेशशब्दार्थो भाष्य एकादशाध्याये 'इन्द्रियाणाम्' इत्यादिना वक्ष्यते । पाञ्चजन्यं – तन्नामानम् । देवदत्तं – तन्नामानं शङ्खम् । भीमानि – भयङ्कराणि कर्माणि यस्य स तथा । वृकोदरो – भीमः ॥ १५ ॥

***अ०प्र०***— तदेव विभागेन दर्शयन्नाह **पाञ्चजन्यमिति** ।

अथान्वयः । हृषीकेशः[१] पाञ्चजन्यं[२] दध्मौ[३], धनञ्जयः[४] देवदत्तं[५], भीमकर्मा[६] वृकोदरः[७],महाशङ्खं पौण्ड्रं[८] दध्मौ इति सर्वत्रान्वयः ॥ १५ ॥

*त्रि०वि०*— वाद्यवादकौ विविच्याह **पाञ्चजन्यमिति** ॥ ***अध्यात्मार्थे***— हृषीकेशः – इन्द्रियनियन्ता भगवान् बिम्बरूपः । पाञ्चजन्यं – पञ्च – धर्मार्थकाममोक्षतत्साधनज्ञानानि, जन्यानि – उत्पाद्यानि यस्य तं वादम् । स्वार्थे अण् । धनञ्जयः – धनं मोक्षसाधनं जायते यस्मात् तद्धनञ्जं – ज्ञानं, तद्यातीति स तथा, ज्ञानयोग्यः प्रतिबिम्बो जीव इत्यर्थः । देवदत्तं – स्वयोग्यतानुसारेण, देवेन – भगवता, दत्तं – ज्ञापितं वादम् । प्रदध्माविति पूर्वोक्तवचनविपरिणामेन प्रत्येकमन्वयः । भगवदनन्तरमेव प्राणादीनां वक्तव्यत्वेऽपि अधुना जीवस्य बोध्यत्वेन प्राधान्यात् तदन्त एव वाय्वादिवादानाह **पौण्ड्रमिति** ॥ भीमो – विष्णुः "अतुलः शरभो भीम" इति सहस्रनामसु पाठात् । तदर्थमेव कर्माणि यस्य स प्राणः । यद्वा— "वामदेवो भवो भीम" इति कोशात्, भीमो – रुद्रः, तस्य कर्माणि यस्मात् सः "आभासकोऽस्य पवनः पवनस्य रुद्र" इत्युक्तेः, रुद्रस्य प्राणप्रतिबिम्बत्वेन तत्कर्मणामपि तदधीनत्वात् । अवृकः न वृकः – छेत्ता यस्य सः । वृक इति पदे तु, वृक्णाति शत्रूनिति स तथा । अत एवादरः – निर्भयः । पौण्ड्रं – पुण्ड्राः – तिलकः तदुपलक्षितचक्रादिमुद्राश्च सन्त्येषामिति पुण्ड्राः – वैष्णवाः "नामचिह्नादिना देहे वह्निना वा मृदाङ्कनम् । सा बाह्या प्रोच्यते दीक्षा" इत्युक्तेः तेषामिमं पौण्ड्रम् । महाशङ्खं – महत् शं – सुखं, खं – ज्ञानं च यस्मात् तं वादम् । दध्मौ – व्याकरोत् ॥ ***अंशार्थे***— हृषीकेशो – विष्णुः, पाञ्चजन्यं – पञ्च – पञ्चवारं जनिः – प्रादुर्भावो यस्य स पञ्चजनिर्व्यासः "तृतीये पञ्चमे चैव षोडशे पञ्चविंशके । अष्टाविंशे युगे कृष्णः सत्यवत्यामजायत" इति द्वितीयतात्पर्योक्तेः । तदीयः पाञ्चजन्यः – ब्रह्मसूत्रमहाभारतादि वादः दध्मौ ख्यापयामास । यद्वा— पञ्चमहापातकानि जनयन्ति ते पञ्चजनाः – असुराः, तदीयं पाञ्चजन्यं – मायावादादिवादं, दध्मौ – व्यधमत् – धमतिशब्दस्य वधकर्मसु पाठात्, निरस्तवानिति यावत् । धनञ्जयः – इन्द्रः, देवदत्तं – देवेन – ब्रह्मणा दत्तं – उपदिष्टं "य एषोन्तरक्षिणि पुरुषो दृश्यते स एष आत्मा" इत्याकारकं वादं दध्मौ – ख्यापयामास । यद्वा— अदेवाय – विरोचनाख्याय असुराय, दत्तं – योग्यतानुसारेण ज्ञापितार्थं दध्मौ – व्यधमत् । भीमकर्मा – उग्रकर्मा, वृकोदरः – प्राणः । पौण्ड्रं "मडिभूषायां पुडि च" इति धातोः, भूषितं शङ्खं, दध्मौ – अवादयत् ॥ ***प्रसिद्धार्थे***— हृषीकेशः – कृष्णः, पाञ्चजन्यं – पञ्चजनासुराङ्गजम् । धनञ्जयः – अर्जुनः, देवदत्तं – अग्निदत्तम् ॥ १५ ॥

**गीता**

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥**

*सा०सं०*— **अनन्तविजयम्** अनन्तविजयाख्यं **नकुलः** सुघोषाख्यं शङ्खं **सहदेवो** मणिपुष्पाख्यं दध्मुरिति अन्वयः ॥ १६ ॥

*भा०र०*— *अक्षरार्थस्तु*— अनन्तविजेयं – तन्नामानम् । सुघोषमणिपुष्पकौ – सुघोषनामानं मणिपुष्प-नामानं च शङ्खं दध्मौ ॥ १६ ॥

*अ०प्र०*— किञ्च । **अनन्तविजयमिति** ।

राजा[1] कुन्तीपुत्रः[2] युधिष्ठिरः[3] अनन्तविजयं[4], नकुलः[5] सुघोषं[6], सहदेवः[7] मणिपुष्पकं[8] शङ्खं दध्मौ । इति पूर्वेण सर्वत्रान्वयः ॥ १६ ॥

*त्रि०वि०*— **अनन्तेति** ॥ *अध्यात्मार्थे*— कुन्तीपुत्रः – कुं – पृथिवीं, तनोति प्रजाभि-रिति कुन्ती, ईपुत्रः – मायारूपायाः इयः – लक्ष्म्याः पुत्रः "लक्ष्मीरीकार उच्यते" इत्युक्तेः, युधि – युद्धकर्मणि स्थिरः – प्रवृत्तिरहितः । यद्वा— कामक्रोधादिभिः सह युद्धे स्थिरः – अचलः, राजा देवेशो ब्रह्मा । अनन्तविजयं – अनन्तस्य – देशकालगुणतो अन्तरहितस्य विष्णोः विजयः – सर्वोत्कर्षो यस्मिन्स्तं ब्रह्मसूत्रात्मकं वादं दध्मौ – ख्यापयामास । नकुलः – नकुं – भुवं, लाति – स्वीकरोति, गमने नकुलो – गरुडः । सुघोषं – अपौरुषेयत्वेन शोभनो घोषो – वर्णात्मकः शब्दोपस्मिन्स्तं वेदरूपवादं "सुपर्णोऽखिलवेदानाम्" इति ऋग्भाष्योक्तेः । सहदेवः – देवेन – विष्णुना रामकृष्णाद्यवतारेषु शयने सह वर्तत इति शेषः, इत्यर्थः । मणिपुष्पकम् – मणिभिः मुक्ताफलैः पुष्यते स मणिपुष्पो – हंसः तत्सदृशरूपत्वात् हंसरूपी विष्णुः, को – ब्रह्मा तदुभय-संवादरूपत्वात् पञ्चरात्रात्मकं वादमित्यर्थः । "पञ्चरात्रस्य नागराड्" इति ऋग्भाष्योक्तेः ॥ *अंशार्थे*— कुन्तीपुत्रः – कुं – भूमिं तनोति प्रकाशेनेति कुन्तः – सूर्यः तत्पत्नी कुन्तीसंज्ञाख्या तस्याः पुत्रो – यमः "धर्मराजो यमः पूर्वम्" इत्युक्तेः, अधर्मेण साकं यद्युद्धं तस्मिन् स्थिरः । अनन्तविजयं तन्नामकं शङ्खम् । नकुलसहदेवश्च अश्विनौ "नकुलः सहदेवौ द्वौ नासत्यौ सम्प्रकीर्तितौ" इत्युक्तेः ॥ *प्रसिद्धार्थे*— युधिष्ठिरो – धर्मराजः । सुघोषाख्यं मणिपुष्पकाख्यं च । ॥ १६ ॥

**गीता**

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥**

***सा०सं०***— **परमेष्वासो** महाधानुष्कः **काश्यः । महारथः शिखण्डी च । अपराजितः सात्यकिश्च** ॥ १७ ॥

***भा०र०***— ***अक्षरार्थस्तु***— परम इष्वासो धनुर्यस्य स तथा । महारथशब्दार्थ उक्तः । शिखण्डी च ॥ १७ ॥

***अ०प्र०***— किञ्च । **काश्यश्चेति** ।

परमेष्वासः[१] काश्यः[२], महारथः[३] शिखण्डी च[४], धृष्टद्युम्नः[५] विराटश्च[६], अपराजितः[७] सात्यकिः[८] च[९] । एते सर्वशः पृथक् पृथक् शङ्खान् दध्मुः इत्युत्तरेणान्वयः ।

परमेष्वासः = इषवो बाणाः अस्यन्ते क्षिप्यन्ते येन तत् इष्वासः, परमः श्रेष्ठः इष्वासो धनुर्यस्य सः परमेष्वासः, श्रेष्ठधनुर्धारी एतादृशः[१] । काश्यः = काशीराजा,[२] महारथः[३] शिखण्डी च,[४] धृष्टद्युम्नः,[५] विराटश्च[६] । अपराजितः = परैः शत्रुभिः सङ्ग्रामे अजितः[७], सात्यकिः[८] च[९] । एते शङ्खान् पृथक् पृथक् दध्मुः इति उत्तरेणान्वयः ॥ १७ ॥

***त्रि०वि०***— **काश्य इति** ॥ ***अध्यात्मार्थे***— काश्यः – दिशः, अभिमानिनयन्यायेन तद्देवताः । परमेष्वासः – परमस्य – विष्णोः, इषुत्वेन – बाणत्वेन आस्त इति, प्राणपुत्रः प्राण इत्यर्थः "वायुपुत्रो हरेर्बाण" इत्युक्तेः । शिखण्डी – "शा तनूकरण" इति धातोः, श्यति ऊनी-करोति तमो हिमं वा, सः शी, खं – आकाशं अमति – गच्छति "अमगत्यादौ", "अमन्ताड्डुः", कर्तर्यर्थे णिनिः" सूर्य इत्यर्थः । महारथः – महान् जलचरश्रेष्ठो मकरः, रथो – वाहनं यस्य सः – वरुणः, चशब्दादश्विनावपि धृष्टद्युम्नः – धृष्टं – घर्षणशीलं, द्युम्नं – बलं यस्य सोऽग्निः । विराटः – "ला आदान" इति धातोः रलयोरभेदाच्च, विशेषेण रां – आदानादिक्रियां अटयति – प्रापयतीति विराटः – दक्ष इत्यर्थः । सात्यकिः – सत्यं – सत्यलोकः, कं – शीर्षं यस्य स विष्णुः "सत्यं तु शीर्षाणि सहस्रशीर्ष्णः" इति भागवते, तदीयोऽवतारः सात्यकिः – जयन्त इत्यर्थः "जयन्तो वासुदेवांश" इति भागवते षष्ठे । अपराजितः – अपरस्मिन् – पश्चिमे द्वारे, आ – सर्वतः, जितं – जयः – उत्कर्ष इति यावत् – यस्य स मित्र इत्यर्थः, चशब्दात् मनुरपि । अत्र शिष्टाश्चाः समुच्चयार्थे ॥ ***अंशार्थे***— काश्यः कश्चिद्देवः । शिखण्डी – द्युवसोः पत्नी वराङ्गीनाम्नी, वरात्पुंस्त्वं, "अम्बा सा भीष्मभार्येव पूर्वं नाम्ना वराङ्गिनी" इत्युक्तेः ॥ "अम्बैवाभूच्छिखण्डी" इति स्फुटमुद्योगपर्वणीति । धृष्टद्युम्नः – अग्निः "धृष्टद्युम्नस्तथाऽनल" इत्युक्तेः विराटः हाहागन्धर्वः । सात्यकिः – संवहनामा कृष्णपक्षाभिमानी देवः ॥ ***प्रसिद्धार्थे***— काश्यः – काशीराजः, शिखण्डी

– द्रुपदपुत्रः । धृष्टद्युम्नो – द्रौपदीभ्राता । विराटः – मत्स्यराजः । सात्यकिः – युयुधानो यादवः ॥ १७ ॥

**गीता**

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**
**सौभद्रश्च महाबाहुः शङ्खं दध्मुः पृथक् पृथक्॥ १८ ॥**

***वि०वि०*— ततो वृकोदरादयश्च स्वकीयान् शङ्खान् पृथक् पृथक् दध्मुः ॥ १८ ॥**

***सा०सं०*— **पृथिवीपते** हे धृतराष्ट्र ! महाबाहुः **सौभद्रः** अभिमन्युश्च । **शङ्खमिति** समुदायाभिप्रायः । स्वस्वशङ्खान् दध्मुरिति ॥ १८ ॥

***भा०र०*— *अक्षरार्थस्तु*— सर्वशः – सर्वत्र । पृथिवीपत इति धृतराष्ट्रसम्बुद्धिः ॥ १८ ॥

***अ०प्र०*— किञ्च । **द्रुपद इति** ।

हे पृथिवीपते(धृतराष्ट्र) ![1] द्रुपदः[2], द्रौपदेयाश्च[3], महाबाहुः[4] सौभद्रश्च[5], एते[6] सर्वशः[7] पृथक्[8] पृथक्[9] शङ्खान्[10] दध्मतुः[11] । श्लोकान्वयः ।

द्रौपदेयाः = प्रतिविन्ध्यादयः[3] । सौभद्रः = अभिमन्युः[5] । शेषं स्पष्टम् ॥ १८ ॥

***त्रि०वि०*— **द्रुपद इति** ॥ ***अध्यात्मार्थे*—** द्रुपदः – द्रुतं पदानि तदुपलक्षितवर्णवाक्या-दीनि यस्मात् स बृहस्पतिः । द्रौपदेयाः – शिवजाः पञ्चप्राणाद्याः । सर्वश इत्यनेन प्राणपुत्राः शिवपुत्राश्च शब्दाद्यभिमानिन इति सूचितम् । हे पृथिवीपते ! शरीराद्यभिमानिन् ! सौभद्रो – विनायकः, चशब्दाद्वाय्वग्निवरुणधरादयो गृह्यन्ते । यद्वा चशब्दाद्वायोरेव ग्रहणम् । महाप् इति पदं, महत्यः आपो यस्मात् स महाप् – अग्निः "अग्नेराप" इति श्रुतेः । पुनः महत्यः आपो यस्य स महाप् – वरुणः अधीनार्थे षष्ठी । पुनः महत्यः – भूयस्त्ववत्यः, गुरुत्ववत् द्रव्यमध्ये आपो यस्याः सकाशात् सा पृथिवी "भूयस्त्वं चापाम्" इत्युक्तेः महति महयति वा देवतामनेन पुरुष-स्येति महत् । मह्यते वा देवतात्वात् इति वा ॥ पृथक् – भगवतो जडमपि पृथक्, जीवोऽपि पृथक्, इत्याहुस्तत्त्ववादिन इति शेषः । इति शङ्खान् – सुखज्ञानसाधनान्वादान् दध्मुः ख्यापयामासुः ॥ यद्वा— भगवान् पृथक्तः पृथक् – एकरूप इति ॥ ***अंशार्थे*—** द्रुपदः – हूहूगन्धर्वः, द्रौपदेयाश्च – विश्वेदेवाः, सौभद्रो – बुधः । हे पृथिवीपते – षड्जादिसप्तस्वराणां भ्वादिसप्तलोकस्थानत्वात् पृथिवीशब्देन – षड्जस्वरः

धृतराष्ट्रगन्धर्वस्य तदभिमानित्वात् तं प्रति पृथिवीपते इति सम्बुद्धिः ॥ ***प्रसिद्धार्थे***— द्रुपदः– पार्षतः । द्रौपदेयाः – प्रतिविन्ध्यश्रुतसोमश्रुतकीर्तिशतानीकश्रुतकर्माख्याः । हे पृथिवीपते – धृतराष्ट्र ! सौभद्रो – अभिमन्युः, शङ्खान् – दरान्, पृथक्पृथक् – प्रातिस्विकत्वेनेत्यर्थः, एककाल एव वा ॥ १८ ॥

**गीता**

## स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
## नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

***वि०वि०***— स घोषो नभश्च पृथिवीं च व्याप्तः प्रतिध्वनिभिः पूरयन् धृतराष्ट्रस्य तव पुत्राणां हृदयानि विदारितवान् । अद्यैव नष्टं कुरुकुलमिति त्वत्पुत्रा मेनिरे ॥ १९ ॥

***सा०सं०***— **स घोषस्तुमुलो** व्याप्तो भूत्वा **नभश्च पृथिवीं च व्यनुनादयन्** तत्र तत्र प्रतिध्वनिं जनयन्नेव **धार्तराष्ट्राणां हृदयानि व्यदारयत्** अद्यैव नष्टं कुरुकुलमिति त्वत्पुत्रा मेनिर इत्यर्थः ॥ १९ ॥

***भा०र०***— ***अक्षरार्थस्तु***— सः सर्वत्र प्रसृतः । व्यनुनादयन् प्रतिध्वनिभिरापूरयन् ॥ १९ ॥

***अ०प्र०***— स च शङ्खादीनां नादः त्वदीयानां महाभयं जनयामास इत्याह **सघोषेति** ।

सः[१] तुमुलः[२] घोषः[३] नभश्च पृथिवीं[४] चैव[५] व्यनुनादयन् सन्[६] धार्त-राष्ट्राणां[७] हृदयानि[८] व्यदारयत्[९] । इत्यन्वयः ।

स च = शङ्खादीनां महानादः[३] । नभः पृथिवीं चैव[४] । व्यनुनादयन् सन् = प्रतिध्वनिभिरापूरयन् सन्[६] । धार्तराष्ट्राणां दुर्योधनादीनाम्[७] । हृदयानि[८] । विदारितवान्[९] । अद्यैव कुरुकुलं नष्टमिति ते मेनिरे इति भावः ॥ १९ ॥

***त्रि०वि०***— विपक्षाणां नानावाद्यघोषाणामपि तुमुलत्वमेवाभिधाय स्वपक्षीयाणां केवलशङ्खशब्दानामेव परहृदयविदारकत्वमेवाऽभिधत्ते **सघोष इति** ॥ ***अध्यात्मार्थे***— धार्तराष्ट्राणां – ''धं धने निधने धीरे'' इत्येकाक्षरात्, धेन – नादेन, आर्तानि – राष्ट्राणि – देशाः येषां तेषां असुराणाम् ॥ अन्यत्र – दोषरूपाणाम् ''सर्वदोषात्मकाः परे धार्तराष्ट्राः'' इत्युक्तेः । अपरत्र – धृतराष्ट्रपुत्राणाम्, अनुनादयन् – प्रतिध्वनयन् ॥ १९ ॥

**गीता**

## अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
## प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ २० ॥

***वि०वि०***— हे महीपते ! धृतराष्ट्र ! अथार्जुनो युद्धार्थं व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा ॥२०॥

***सा०सं०***— तत्त्वोपदेशप्रसञ्जकम् अर्जुनविषादं वक्तुम् एतावानुपोद्धातः प्रवृत्तः । एवं दुर्योधनव्यापारं दलद्वयगतव्यापारं चोक्त्वा, अधुना अर्जुनव्यापारमाह **अथेत्यादि चतुर्भिः श्लोकैः** ॥ **अथ** अनन्तरं **कपिध्वजः** अर्जुनः **व्यवस्थितान्** युद्धे कृतनिश्चयान् **दृष्ट्वा शस्त्रसम्पाते** शस्त्रप्रहरणे प्रवृत्ते । "वर्तमानसामीप्ये वर्तमानवद्वा" (३-३-१३१) प्रवर्तितमुद्युक्ते सति । **तदा** शस्त्रसम्पात-प्राक्काले । **इदं** वक्ष्यमाणं **वाक्यमाह** इत्यन्वयः ॥ २० ॥

***अ०प्र०***— एतस्मिन् समये श्रीकृष्णं अर्जुनो विज्ञापयामास इत्याह **अथेति** चतुर्भिः ।

अथ[१], कपिध्वजः[२], पाण्डवः[३], व्यवस्थितान्[४], धार्तराष्ट्रान्[५], दृष्ट्वा[६], शस्त्रसम्पाते[७], प्रवृत्ते सति[८], धनुरुद्यम्य[९], तदा हृषीकेशमिदं वाक्यमाहेति उत्तरेणान्वयः ।

अथ = उभयसेनोत्सवानन्तरम्,[१] कपिध्वजः,[२] पाण्डवः = अर्जुनः,[३] व्यवस्थितान् = युद्धोद्योगेन स्थितान्[४] । शस्त्रसम्पाते = शस्त्राणां सम्पातः शस्त्रसम्पातः तस्मिन्[७] । प्रवृत्ते सति = प्रवृत्तयितव्ये प्रसक्ते सति वा[८] । धनुः उद्यम्य[९] । इदं वाक्यमाहेति उत्तरेणान्वयः ॥ २० ॥

***त्रि०वि०***— **अथेति** ॥ ***अध्यात्मार्थे***— अथ व्यवस्थितानित्येकं पदं, थः – प्राणः, "तथौ प्राणात्मकौ प्रोक्तौ" इत्युक्तेः, वीन् – पक्षिणः अवतीति व्यवो – गरुडः, ताभ्यां सह स्थितो विष्णुः – थव्यवस्थितः, स नास्ति येषु तान् धार्तराष्ट्रान् असुरान् । दृष्ट्वा, कपिध्वजः – कम्पयन्ति – चेष्टयन्ति शरीरमिति कपयः – जीवाः, तेषां मध्ये ध्वजः – श्रेष्ठः "ध्वजः पूर्वदशा गृहे ॥ शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डकेऽपि च" इति हैमः, मोक्षयोग्यत्वादुत्तमो जीव इत्यर्थः । शस्त्रसम्पाते – शस्त्रेणैव सम्पातः – पराजयरूपो यस्मिन् तस्मिन् वादरूपे युद्धे प्रवृत्ते – आरब्धे सति । धनुः – प्रणवं "धनुर्हि तस्य प्रणवं पठन्ति" इति भागवते । उद्यम्य – उच्चार्य, सर्ववर्णानामादित्वात् । भाषणस्य च वर्णमयत्वादिति भावः ॥ पाण्डोः ज्ञानमयस्य विष्णोः

प्रतिबिम्बः – पाण्डवः । हृषीकेशं – सर्वेन्द्रियाणां मुख्यप्रवर्तकं स्वबिम्बरूपं हरिं प्रति इदं वक्ष्यमाणमाह । हे महीपते – शरीराभिमानिन् जिज्ञासो ॥ ***अंशार्थे***— धार्तराष्ट्रान् – पापरूपानसुरान्, कपिध्वजः – कम्पयति पृथिवीमिति कपिः – ऐरावतः, तेन ध्वजति – गच्छतीति इन्द्रः "ध्वजगताविति" धातोः – पाण्डवः – पाण्डं ज्ञानविषयं भगवन्तं, वाति – शरणं गच्छतीति स तथा, हे महीपते ! पूर्ववद्गन्धर्व ॥ ***प्रसिद्धार्थे***— अथ – शङ्खघोषानन्तरं, व्यवस्थितान् – व्यवस्थितया स्थितान्, धार्तराष्ट्रान् – दुर्योधनादीन्, दृष्ट्वा कपिध्वजः – हनुमत्केतुरर्जुनः, शस्त्रसम्पाते – शस्त्रप्रहारे, प्रवृत्ते सति, पाण्डवः पण्डुराजपुत्रः हृषीकेशं – कृष्णम् इदमाह, हे महीपते – धृतराष्ट्र ॥ २० ॥

**गीता**

## हृषीकेशं तदा वाक्यमिदमाह महीपते ।

## अर्जुन उवाच—

## सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥

*अ०प्र०*— तदेव वाक्यमाह **हृषीकेशमिति** ।

हे महीपते ![१] तदा[२], अर्जुनः[३], हृषीकेशं[४], इदं[५], वाक्यं[६], आह[७] । इदं किम् ? हे अच्युत ![८], उभयोः[९], सेनयोः[१०], मध्ये[११], मे रथं[१२] स्थापय[१३] इत्यन्वयः ।

हे महीपते = धृतराष्ट्र ![१] तदा = शास्त्रसम्पातप्रवृतसमयेऽर्जुनः[३] । हृषीकेशं = विषयेन्द्रियादिप्रेरकं सुखमयकेशवं तं वा ब्रह्मरुद्रेन्द्रयोः हर्षदातारं वा हृष्यो हृष्टाः कश्च ईशश्च केशाः ब्रह्मलक्ष्मीकामरुद्रादयः यस्मात्स तथा तं श्रीकृष्णम्[४] । इदं = वक्ष्यमाणं[५] वाक्यं[६] आह = उक्तवान् = विज्ञापयामास[७] इत्यर्थः । इदं किमित्यत आह । हे अच्युत ! देशकालगुणेभ्यश्च्युतिरहितः[८] उभयोः सेनयोः मध्ये = कुरुपाण्डवसेनयोर्मध्ये[११] मे रथं[१२] स्थापय[१३] । अर्जुनः हृषीकेशं इत्याह ॥ २१ ॥

***त्रि०वि०***— **सेनयोरिति** ॥ ***अध्यात्मार्थे***— बिम्बस्य च्युतिरहितत्वे प्रतिबिम्बस्यापि युद्धात् च्युतिर्न भवेत् इत्यतो अच्युतेति सम्बुद्धिः । यावदेतान् – परान्, योद्धुकामान्, अवस्थितान्, न तु कृतयुद्धारम्भान्, निरीक्षे, तावदेवोभयोः सुरासुरपक्षीययोर्मध्ये, अन्तस्थितयोरिति शेषः । सेनयोः – सा लक्ष्मीः इनः – तत्स्वामी, तयोः, "सपरोक्षे च सा लक्ष्मीः" इत्येकाक्षरः, "इनः स्वामिनि सूर्ये

च'' इति विश्वः । लक्ष्मीनारायणयोरित्यर्थः । रथं – ज्ञानं ''रथगतौ'' इति धातोः गत्यर्थानां च ज्ञानार्थत्वात् ॥ स्थापय – स्थिरीकुरु, तेषु युद्ध्यमानेषु ममापि युद्धप्रसक्त्या श्रीशयोर्ज्ञानस्थित्य-योगादिति भावः ॥ ***अंशार्थे***— हे अच्युत – च्युतं – च्यवनं येषामस्तीति ''अर्शआद्यच्'' प्रत्ययेन च्युताः – युद्धप्रद्रुताः तद्विलक्षण भगवन् – उभयोः – सुरासुरपक्ष-सम्बन्धिन्योः सेनयो-र्मध्ये मे रथं – शरीरं ''शरीरं रथमेव च'' इति श्रुतेः, स्थापय – रक्ष स्थितेः रक्षणार्थकत्वात्, त्वया रक्षिते न भयं मम किञ्चिदिति भावः, इतीन्द्रोक्तिः ॥ ***प्रसिद्धार्थे***— हे अच्युत – सारथे-श्च्युतिरहितत्वे रथिनोऽपि युद्धाच्च्युतिर्न भवतीत्यततः अच्युत इति सम्बुद्धिः, हे कृष्ण, उभयोः कुरुपाण्डवपक्षसम्बन्धिन्योः सेनयोर्मध्ये मे रथं – स्यन्दनं स्थापय – निधेहि, यावत् – यावता रथस्थापनेन, एतान् योद्धुकामानवस्थितान् सर्वान्, अहं निरीक्षे तथा रथं स्थापय इत्यर्थः । यद्वा— यावत्, एतान्योद्धुकामानवस्थितान् न तु कृतयुद्धारम्भान्निरीक्षे तावद्रथं स्थापय – आरम्भे जाते यत्र तत्र युद्धप्रसक्त्या मध्ये रथस्थापनायोगादिति भावः ॥ २१ ॥

**गीता**

## यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ।
## कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥

***वि०वि०***— कृष्णं प्रति— कैः सह मया योद्धव्यम् ॥ २१, २२ ॥

***अ०प्र०***— ननु त्वं योद्धा न तु युद्धे प्रेक्षकः यस्मात् तदेवाह **यावदिति** ।

हे अच्युत ! अस्मिन्[१], रणसमुद्यमे[२], कैस्सह[३], मया[४], योद्धव्यं[५], तस्मात् यावत्[६], अहं[७], अवस्थितान्[८], योद्धुकामान्[९], एतान्[१०], निरीक्ष्ये[११] । तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेति पूर्वेणान्वयः ॥ २२ ॥

हे अच्युत ! अस्मिन् रणसमुद्यमे = पुरोवर्तिरणसमूहे[२] कैस्सह मया योद्धव्यं युद्धं कर्तव्यम्[५]? तस्मात् यावत्कालं[६] अहं[७] अवस्थितान् सन्नद्धान्[८] योद्धुकामान् = युद्धकामनायुक्तान्[९] एतान् = शूरान्[१०] निरीक्ष्ये = पश्यामि[११] तावदिति पूर्वोक्तान्वयः ॥ २२ ॥

***त्रि०वि०***— एवं सम्प्रार्थ्य पृच्छति **कैरिति** ॥ अस्मिन्रणसमुद्यमे युद्धारम्भे मया कैः सह योद्धव्यम्, पक्षत्रयेऽप्ययमेवार्थः ॥ २२ ॥

**गीता**

## योत्स्यमानवेक्षेऽहं य एतेऽत्र समागताः ।
## धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

*वि०वि०*— दुर्योधनस्य प्रियं कर्तुमिच्छन्तो य इह समागताः तानेतान् यावदवेक्ष्यामि तावदुभयोः सेनयोर्मध्ये रथं स्थापयेत्युवाच ॥ २३ ॥

*सा०सं०*— सार्धश्लोकद्वयेन तद्वाक्यमाह **सेनयोरिति** । **अस्मिन्** रणोद्योगे **कैः सह मया योद्धव्यम्** । **दुर्बुद्धेर्धार्तराष्ट्रस्य** प्रियं कर्तुमिच्छन्तः **येऽत्र समागताः** तान् **योद्धुकामानवस्थितान्** योत्स्यमानान् **यावत्** द्रक्ष्यामि तावत् **उभयोः सेनयोर्मध्ये रथं स्थापय** इत्याह इत्यर्थः ॥ २१, २२, २३ ॥

*भा०र०*— *अक्षरार्थस्तु*— एवं समरसन्नाहसमये श्रीकृष्णमर्जुनो विज्ञापयामासेति वक्तुमुच्यते **अथ** इत्यादि चतुःश्लोक्या । व्यवस्थितान् – युद्धाय कृतनिश्चयान् । कपिः ध्वजे यस्य स तथा, अर्जुनः । प्रवृत्ते – प्रवर्तयितव्ये । प्रियचिकीर्षव इत्यत्र 'अन्नबुभुक्षुः' इति भाष्यप्रयोग इव गम्यादिभावेन समासः ॥ २०-२३ ॥

*अ०प्र०*— **योत्स्यमानानिति** ।

हे अच्युत ! दुर्बुद्धेः[१], धार्तराष्ट्रस्य[२], युद्धे[३], प्रियचिकीर्षवः[४], एते[५], अत्र[६], ये[७], समागताः तान्[८], योत्स्यमानान्[९], अहं यावत्[१०], अवेक्ष्ये[११] तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेति पूर्वेणान्वयः ॥ २३ ॥

दुर्बुद्धेः दुरात्मनः[१] । धार्तराष्ट्रस्य दुर्योधनस्य[२] । युद्धे[३] । प्रियचिकीर्षवः = प्रियं कर्तुमिच्छन्तः[४] । एते = पुरोवर्तिनः[५] । अत्र = इह रणसमूहे[६] । ये[७] समागताः मिलिताः तान् = आचार्यादीन्[८] । योत्स्यमानान् = युद्धकर्तृकान्[९] अहं[१०] यावत्कालम् अवेक्ष्ये = पश्यामि[११] तावत्कालं उभयोः सेनयोर्मध्ये मे रथं स्थापयेत्यर्थः ॥ २३ ॥

*त्रि०वि०*— योत्स्यमानेन योद्धव्यमित्युत्तरमाशङ्क्य परिहरति **योत्स्यमानानिति** ॥ अत्र – सङ्ग्रामे परपक्षे वा, ये समागताः तान् सर्वान् योत्स्यमानानेव – युद्धकर्तृत्वेन अवेक्ष्ये – पश्यामि । तस्मादादौ कैः सह योद्धव्यमित्यर्थः । महामल्लभङ्गन्यायमाश्रित्य प्रबलैरथवा सूचीकटाह-

न्यायमाश्रित्य दुर्बलैः सहादौ योद्धव्यमिति प्रश्नाशयः । ''प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'' इत्युक्तेः, सर्वराज्ञां त्वया सह युद्धेन किं फलमित्यत आह **धार्तराष्ट्रस्येति** ॥ धार्तराष्ट्रस्य – अधर्मस्य, कलेर्वा, दुर्योधनस्य वा प्रियसम्पादनमेव प्रयोजनमिति भावः ॥ २३ ॥

**गीता**

**सञ्जय उवाच—**

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**

***वि०वि०—*** एवमर्जुनेनोक्तो हृषीकेशो भीष्मादीनां मुखे रथं स्थापयित्वा ॥ २४ ॥

***त्रि०वि०—*** **एवमुक्त इति** ॥ ***अध्यात्मार्थे—*** गुडाकेशेन – गुडाका – निद्रा, तस्याः ईशेन, अधीननिद्रेणेत्यर्थः, त्यक्तनिद्रत्वात् स्वाभीष्टोद्योगिना, जीवेनेति यावत् ॥ एवं सेनयोरुभयो-रित्याद्युक्तप्रकारेणोक्तो हृषीकेशः – इन्द्रियनियन्ता बिम्बरूपो हरिः उभयोः सैन्ययोर्मध्ये स्थितयोः सेनयोः लक्ष्मीनारायणयोः रथोत्तमम् – अन्यविषयज्ञानोत्तमं ज्ञानं स्थापयित्वा – स्थिरीकृत्य उवाचेत्युत्तरेणान्वयः ॥ ***अंशार्थे—*** गुडाकेशेन – देवत्वेन त्यक्तनिद्रत्वादिन्द्रेणेत्यर्थः । उभयोः सेनयोर्मध्ये स्थितस्येति शेषः । तस्य – इन्द्रस्य रथोत्तमं – मनुष्यशरीरोत्तमं शरीरं स्थापयित्वा – पालयित्वा ॥ ***प्रसिद्धार्थे—*** गुडाकेशेन – अर्जुनेन, हृषीकेशः, रथोत्तमं – विजयरथं, स्थापयित्वा – निधाय ॥ २४ ॥

**गीता**

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**
**उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥**

***वि०वि०—*** हे पार्थ ! एतान् कुरून् पश्येत्युवाच ॥ २५ ॥

***सा०सं०—*** एवं **गुडाकेशेन** गुडाकाया निद्रायाः ईशेन जितनिद्रेणार्जुनेन **उक्तो हृषीकेशः** सर्वेन्द्रियप्रेरकः श्रीकृष्णः । बलद्वयमध्ये । **भीष्मद्रोणप्रमुखत** इति बुद्ध्या विविक्तेनान्वयः । **रथं स्थापयित्वा** । हे **पार्थ समवेतान्** युद्धार्थं मिलितान् **एतान् कुरून् पश्य** इत्युवाचेति । ॥ २४- २५ ॥

***अ०प्र०***— ततः किं वृत्तमित्यपेक्षायाम् । सञ्जय उवाच **एवमुक्तेति** द्वाभ्यां हि ।

हे भारत ![1], गुडाकेशेन[2], एवं[3], उक्तः[4], हृषीकेशः[5], भीष्मद्रोण-प्रमुखतः[6], सर्वेषां[7], महीक्षितां च प्रमुखतः[8], उभयोः[9] सेनयोः मध्ये[10], रथोत्तमं[11], स्थापयित्वा[12], हे पार्थ[13], समवेतान्[14], एतान्[15], कुरून्[16], पश्य इति[17] उवाच[18] इत्यन्वयः ।

हे भारत ! = भो धृतराष्ट्र ![1] । गुडाकेशेन – गुडाका = निद्रा, तस्याः ईशो जितनिद्रः, गुडावस्निग्धाः रक्ता वा, आसमन्तात्केशा अस्येति वा, रलयोरभेदः गुडावत्कुञ्चिताग्रा केशा यस्येति वा एवंविधेन अर्जुनेन[2] । एवं = पूर्वोक्तप्रकारेण[3] उक्तो[4] भगवान् हृषीकेशः[5] भीष्मद्रोणप्रमुखतः = भीष्मद्रोणयोः सन्मुखे[6] सर्वेषां[7] महीक्षितां राज्ञां च सन्मुखे[8] उभयोः[9] = कुरुपाण्डवयोः सेनयोर्मध्ये[10] रथोत्तमं[11] स्थापयित्वा[12] हे पार्थ[13] समवेतान्[14] एतान्[15] कुरून्[16] पश्येति[17] उवाच = आज्ञापयामास[18] इत्यर्थः ॥ २४ ॥ ॥ २५ ॥

***त्रि०वि०***— एवं प्रार्थितं कृत्वा प्रश्नोत्तरमाह **भीष्मेति** ॥ ***अध्यात्मार्थे***— "तसेः सार्वविभक्तिकत्वात्" भीष्मद्रोणप्रमुखानां – क्रोधकामाभिमान्याद्यानां सर्वेषामसुराणामित्यर्थः ॥ यद्वा— भीष्मद्रोणप्रमुखतः – क्रोधकामसन्मुखे, चशब्दः प्रमुखशब्दानुकर्षणार्थः । महीक्षितां – महीं महाजनतां क्षिण्वन्ति ये तेषां सर्वेषां च प्रमुखे स्थापयित्वेति पूर्वेणान्वयः । हे पार्थ – पातीति पो – विष्णुः तस्यार्थो यस्येति सम्बुद्धिः, हे जीवेत्यर्थः । एतान् – अग्रस्थान्, समवेतान् – मिलितान् कुरून् – कुत्सितं रुवन्ति – भाषन्ते तान् "रु शब्दे" तानसुरान् पश्य । नात्रेको–ऽप्ययोध्य इति भावः । इत्युवाच ॥ ***अंशार्थे***— भीष्मद्रोणप्रमुखतः द्युवसुगुर्वादीनां सर्वेषां च महीक्षिता – स्वमहिम्नैवेक्षिता – साक्षी, अं ब्रह्मरूपः "अम्भवेत्परमं ब्रह्म" इत्येकाक्षरः, तादृशो हरिः । हे पार्थ इन्द्र, एतान् – दृश्यमानान् समवेतान् कुरून् पापाभिमानिनोऽसुरान् पश्येत्युवाच ॥ ***प्रसिद्धार्थे***— हे कौन्तेय एतान् कुरून् – कुरुवीरान्, समवेतान् – आविष्टानसुरैरिति शेषः, पश्य, अतः सर्वेऽपि योद्धव्या इति भावः ॥ यद्वा— एतान् कुरून् पश्य । तत्रापि अपररूपत्वादेतान् इति एकारप्रश्लेषः ॥ अं – विष्णुम् । इतान् – शरणागतान् समव – सम्यग्रक्षेत्यर्थः । सं – सम्यक्त्वेन एतान् – मया निर्दिष्टान्, अवेति वा । यद्वा । सं – विष्णुं "अ क थ प्र वि सं भूम स ख हा विष्णुवाचकाः" इत्यभिधानम् ॥ इतान् – शरणं प्राप्तान्, अव – रक्ष, हे पार्थप – परस्य – विष्णोः अर्थ – कामितं पातीति तथाविध अर्जुन ! एतान् कुरून् – कुत्सितभाषिणः, श्य – जहि । इदं "कैर्मया सह योद्धव्यम्" इत्यस्योत्तरं ज्ञेयम् ॥ २५ ॥

गीता

**तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।**
**आचार्यान् मातुलान् भ्रातॄन्**
**पुत्रान् पौत्रान् सखींस्तथा ॥ २६ ॥**

***सा०सं०*** — 'तत्र' इत्यस्य विवरणम् **सेनयोरुभयोरपीति** । **तथा** इति समुच्चये ॥ २६ ॥

***अ०प्र०*** — ततोऽर्जुनः किं कृतवानित्याह **तत्रेति** सार्धद्वयेन ।

पार्थः[१], तत्र[२], स्थितान्[३], पितॄन्[४], अथ[५], पितामहान्[६], आचार्यान्[७], मातुलान्[८] भ्रातॄन्[९], पुत्रान्[१०], पौत्रान्[११], तथा[१२], सखीन्[१३], अपश्यत्[१४] ।

अथ पार्थः = अर्जुनः[१] । तत्र = उभयोस्सेनयोर्मध्ये[२] । स्थितान् = युद्धार्थं सन्नद्धान्[३] । पितॄन् = पितृव्यानित्यर्थः[४] । पितामहान् = भीष्मादीन्[५] । आचार्यान् = द्रोणादीन्[६] । मातुलान्[७], भ्रातॄन् = दुर्योधनादीन्[८], पुत्रान्पौत्रान् = दुर्योधनादीनां ये पुत्राः पौत्राश्च तानित्यर्थः[९,१०], तथा सखीन् मित्रादीन् अपश्यत् । तदा अर्जुनो कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् इति तृतीयेनान्वयः ॥ २६ ॥

***त्रि०वि०*** — अथ भगवदाज्ञानुसारिणीं तत्प्रवृत्तिमाह **तत्रेति** ॥ ***अध्यात्मार्थे*** — पार्थः – जीवः, तत्र तदा सेनयोर्वा, स्थितान् पितॄन् – वसून् पितामहान् – रुद्रान्, अथशब्देन प्रपितामहान् आदित्यान्, "वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः । प्रपितामहास्तथाऽऽदित्याः श्रुतिरेषा पुरातनी" इति मन्वादिस्मृतौ । यद्वा— पितॄन् – कर्माभिमानिनः पुष्करादीन्, "कर्मणा जायते जन्तुः" इत्युक्तेः, "शेषेणेमं लोकं व्रजन्ति" इति श्रुतेश्च, "पुष्करः कर्मपोऽपि" इत्युक्तेश्च । पितामहान् – वेदान् "कर्म ब्रह्मोद्भवं विद्धि" इत्युक्तेः । आचार्यान् – सदसच्छास्त्रकर्तॄन्, मातुलान् – अविद्याख्यमातुर्बन्धुरूपान् मोहादीन्, भ्रातॄन् मृत्य्वादीन् "मृत्युर्जन्मवतां वीर देहेन सह जायते" इत्युक्तेः तदभिमानिनो यमादीन् । यद्वा— मनआदीन् "आत्मैव ह्यात्मनो बन्धुः" इत्युक्तेः, पुत्रान् – रोगादीन्, तदभिमानिनो देवानसुरांश्च "स्वदेहजोऽप्यामयवत्सुतो हि सः" इत्युक्तेः । पुत्रान् – व्यथाभिमानिनः, "रोगजन्यां व्यथां जयेत्" इत्युक्तेः । यद्वा— पुत्रान् – विषयबुद्धौ जातान् मनोवृत्तिरूपान्, पौत्रान् – तज्जातान् वृत्त्यन्तररूपान् "तस्यामजनयत्पुत्रान् पुरञ्जन्यां पुरञ्जनः । शतान्येकादश विराट्" इति भागवते । "पुत्राणां च भवन् पुत्रा एकैकस्यां शतं शतम्" इति

च । सखीन् – अविज्ञातादीन्, "योऽविज्ञाताह्वयस्तस्य पुरुषस्य सखेश्वर" इत्यादेः, श्वशुरान् – "बुद्धिं तु प्रमदां विद्यात्" इति भागवतोक्त्या सुबुद्धिदुर्बुद्धिरूपस्त्रीपितरः तत्त्वदर्शिनो मायिनश्च "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन" इत्युक्तेः । "मायिनश्चान्यथाज्ञानं स्वशिष्येभ्योऽदिशन्कलौ" इत्युक्तेश्च सुहृदः – सुमनसः, हितेच्छव इति यावत्, उभयोः सुरासुरयोः, सेनयोरपि । चशब्दाद्यथासम्भवमेवेत्यर्थः ॥ ***अंशार्थे***— पार्थः – पो – विष्णुः तमुपेन्द्रत्वेन अर्थयति – कामयति स तथा इन्द्रः पितॄन्, रुद्रादीन्, पितामहान् – ब्रह्मादीन्, अथशब्देन प्रपितामहान् निरन्नत्वाद्विष्णुः "अनश्नन्नन्य" इति श्रुतेः "यस्मादन्नं तमुच्यते" इति कौर्म्ये च । आचार्यान् – बृहस्पत्यादीन्, मातुलान् – आकूतिसूनुयज्ञादीन् यज्ञस्य च इन्द्रमातृमातुष्वस्रेयत्वात्, तस्यैव उपेन्द्रत्वात्, भ्रातॄन् – सूर्यादीन्, पौत्रान् – जयन्तसुतादीन्, सखीन्, प्रवीरादीन्, श्वशुरान् – पुलोमादीन्, सुहृदः – स्वसम्बन्धिनः जयन्तश्वशुरवज्रनाभादीन् ॥ ***प्रसिद्धार्थे***— पार्थः कौन्तेयोऽर्जुनः, पितॄन् – भूरिश्रवआदीन्, पितामहान् – भीष्मसोमदत्तादीन्, अथशब्देन प्रपितामहान् – बाल्हीकादीन्, आचार्यान् – द्रोणादीन्, मातुलान् – शल्यशकुन्यादीन्, भ्रातॄन् – युधिष्ठिरदुर्योधनादीन्, पुत्रान् – सौभद्रादीन्, पौत्रान् – घटोत्कचपुत्रादीन्, सखीन् – कृष्णाष्वत्थामादीन्, श्वशुरान् – द्रुपदादीन्, सुहृदः – विराटादीन्, उभयोः – कुरुपाण्डवयोः ॥ २६ ॥

**गीता**

**श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।**
**तान् समीक्ष्य स कौन्तेयः**
**सर्वान् बन्धूनवस्थितान् ॥ २७ ॥**
**कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।**

***सा०सं०***— **तानवस्थितान् सर्वान्** बन्धून् **समीक्ष्यैव** इत्येवकारेणान्वयः । **विषीदन्** विषादं कुर्वन् । विषादो नाम मोहनिमित्तकाच्छोकाद्यन्मनोदौर्बल्यम् । यस्मिन् सति सर्वव्यापारोपरमो भवति स इति ज्ञेयम् ॥ २७ ॥

***भा०र०***— ***अक्षरार्थस्तु***— गुडाकेशेन – अर्जुनेन । जितनिद्रेणेत्यवयवार्थ इत्याहुः । महीक्षितां – राज्ञाम् । प्रमुखतः – सम्मुखे । सखीन् – मित्राणि । सुहृदः – अनिमित्तोपकारिणः । अवस्थितान् – प्रतिस्थितान् ॥ २४-२७ ॥

*अ०प्र०*— किञ्च पुनः कान् दृष्ट्वा किमब्रवीदित्याह **श्वशुरानिति** सार्धेन ।

कौन्तेयः[१], सः[२], तान्[३], तथा श्वशुरान्[४], सुहृदश्चैव[५], सर्वान् अवस्थितान्[६], बन्धून्[७], उभयोः[८], सेनयोः[९], अपि[१०], समीक्ष्य[११], परया[१२], कृपया[१३], आविष्टो भूत्वा[१४], विषीदन् सन्[१५], इदं[१६], वचनम्[१७], अब्रवीत्[१८] । इत्यन्वयः ।

कौन्तेयः सः = अर्जुनः[१,२] तान् = पूर्वोक्तपितृव्यादीन्[३] । तथा श्वशुरान् = द्रुपदादीन्[४], सुहृदश्चैव = कृतोपकारानपि[५], अवस्थितान् = प्राणधनत्यागमङ्गीकृत्य सन्नद्धान्[६], सर्वान्[७], बन्धून्[८], उभयोः सेनयोरपि[९,१०], समीक्ष्य = सम्यगवेक्ष्य[११], परया = उत्कृष्टया[१२] कृपया = दयया[१३], आविष्टो = व्याप्तो भूत्वा[१४] । विषीदन् = विषादो नाम शोकजन्यमनोदौर्बल्यम् । यस्मिन्सति सर्वव्यापारस्य उपरमो भवति, तद्युक्तः (सन्) = विषीदन् = विषादयुक्तः सन्[१५] । इदं वचनं अब्रवीत्[१६] ॥ २७॥

*त्रि०वि०*— अथ ममताभिमान्यसुराविष्टो जीवः आत्मात्मीयद्विड्वधं भगवत इष्टमपि अधर्मत्वेन मन्यमान आहेत्याह— **तानिति** ॥ कौन्तेयः – कुं – भूमिं देहं वा तनोति – विस्तारयतीति कुन्तिः – विष्णुः तस्यायं प्रतिबिम्बत्वात् कौन्तेयः – जीवः, इन्द्रः, अर्जुनो वा । अवस्थितान् – युद्धभूमिस्थितान्, तान् – पित्रादीन्, सर्वान् बन्धून् – स्वाप्तान् समीक्ष्य, अपरया – न परः – परकीयः यस्यां तया ममतारूपयेत्यर्थः, कृपया – तदभिमान्यसुरेणेति यावत् । आविष्टः, विषीदन् – खेदं प्राप्नुवन् सन् इदं वक्ष्यमाणमब्रवीत् ॥ २७ ॥

**गीता**

## अर्जुन उवाच—

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥**

**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।**

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥**

*वि०वि०*— तत्र पार्थो मान्यानाचार्यान् दृष्ट्वा कृपया व्याप्तो विषीदन् कृष्णमिदमुवाच । हे कृष्ण ! योद्धुमिच्छन्तं पुरतः सम्यग्व्यवस्थितमिमं बन्धुजनं दृष्ट्वा मे हस्ताद्यवयवाः व्यशीर्यन्ते ॥ २८ ॥

देहे कम्पो रोमाञ्चश्च जायते ॥ २९ ॥

*सा०सं०*— **इदमब्रवीत्** इत्युक्तमर्जुनवाक्यमाह **दृष्ट्वेत्यादिनाऽऽध्यायसमाप्ति** । हे कृष्ण ! सकललोककर्षक । तदुक्तं गीताभाष्ये पञ्चमाध्याये— 'नियमनादिना सकललोककर्षणात् कृष्णः ।' तच्चोक्तम्—

"यतः कर्षसि देवेश नियम्य सकलं जगत् ।
अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः ॥"

इति महाकौर्मे इत्युक्तेः । **युयुत्सुं** योद्धुमिच्छन्तं सम्यगवस्थितमिमं बन्धुजनं **दृष्ट्वा मम गात्राणि** हस्ताद्यवयवाः **सीदन्ति** विशीर्यन्ते । "षद्लृ विशरणगत्यवसादनेषु" इति धातोः । मुखे म्लानता च जायते ॥ २८ ॥ **शरीरे** कम्पो रोमाञ्चाश्च जायते । धनुर्हस्तात्पतति । **त्वक् च** परितस्तप्यत एव ॥ २९ ॥

*अ०प्र०*— अर्जुन उवाच । किमब्रवीदित्यत आह **दृष्ट्वेत्यादि** । अष्टाविंशतेः अर्धश्लोकमारभ्य यावदध्यायपरिसमाप्तिरर्जुनो वदति **दृष्ट्वेममारभ्य सीदन्ति ममेत्यन्तम्** ।

हे कृष्ण ![१], युयुत्सुं[२], समुपस्थितं[३], इमं[४], स्वजनं[५], दृष्ट्वा[६], मम[७], गात्राणि[८], सीदन्ति[९], मुखं[१०], च[११], परिशुष्यति[१२], किञ्च मे शरीरे[१३], वेपथुः[१४], किञ्च रोमहर्षश्च[१५], जायते[१६] । न च श्रेयोनुपश्यामि हत्वा स्वजनमाहवेति तृतीयेनान्वयः ।

हे कृष्ण ! युयुत्सुं समुपस्थितं = योद्धुमिच्छन्तं सम्यगुपस्थितम्[३] इमं पुरोवर्ती[४] स्वजनं बन्धुजनं[५] दृष्ट्वा[६] मम गात्राणि = करचरणादीनि कर्मेन्द्रियाणि[७] सीदन्ति = विशीर्यन्ते[९] मुखं[१०] चकारेण ज्ञानेन्द्रियाण्यपि[११] परिशुष्यति आर्द्रभावं त्यजति तत्तदिन्द्रियव्यापारोपरमो भवतीत्यर्थः[१२] । किञ्च मे शरीरे वेपथुः = कम्पः[१४] किञ्च रोमहर्षश्च = रोमाणां हर्षपटुत्वं तथा रोमाञ्चः[१५] जायते = भवति[१६] तस्मादाहवे = स्वजनं हत्वा श्रेयः न च अनुपश्यामीति तृतीयेनान्वयः ॥ २९ ॥

*त्रि०वि०*— **दृष्ट्वेति** । इमं पित्रादिरूपं स्वजनं, युयुत्सुं – योद्धुकामम् । यद्वा— युयुत्सुं – धार्तराष्ट्रं वेश्यासुतम्, समुपस्थितं – परपक्षादस्मान्प्राप्तं च दृष्ट्वा – अयं केवलं स्वीयममताहीनः इति चित्रं दृष्ट्वा इत्यर्थः । मम गात्राणि – अङ्गानि, सीदन्ति – स्वस्वव्यापारासमर्थानि भवन्ति, मुखं च शुष्कं भवतीत्यर्थः ॥ २८ ॥

**वेपथुश्चेति** । वेपथुः – कम्पः, रोमहर्षः – रोमाञ्चोद्भवो भवति ॥ ***अध्यात्मार्थे***— गाण्डीवं – गाण्डी – अ उ मे ति त्रयाणां ग्रन्थिः सोऽस्यास्तीति गाण्डी वं प्रणवः "कृवृकादितिवाङीप्"

मतुबर्थे वः, हस्तात् – हस्तः – शुण्डादण्डः सोऽस्यास्तीति हस्तः – गणपतिः "अर्शआद्यच्" अभिमान्यभिमन्यमानयोरैक्यव्यपदेशात्, आकाशोऽनेन लक्ष्यते, हृदाकाशादित्यर्थः, स्रंसते – गच्छति, चित्ताकाशे प्रणवस्थैर्याभावेन तद्विचारहीनोऽस्मीति भावः ॥ ***अंशार्थे***— गाण्डीवं – धनुः "जिष्णोर्धनुषि कोदण्डे गाण्डीवं गाण्डिवं तथा" इति शाश्वतः "कोदण्डो धनुर्मत्रेऽपीति" भानुजीदीक्षितः ॥ ***प्रसिद्धार्थे***— गाण्डीवं – मद्धनुः त्वक्च परिदह्यते – सन्तप्यत एव ॥ २९ ॥

**गीता**

## गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।
## न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥

***वि०वि०***— धनुर्हस्तात् पतति । त्वक् च परितस्तप्यते । न च स्थातुं शक्नोमि । मनश्च मे भ्रमति ॥ ३० ॥

***सा०सं०***— **अवस्थातुं च न शक्नोमि । मनश्च मे भ्रमतीव च । विपरीतानि निमित्तानि** दुर्निमित्तानि च **पश्यामि । केशव** ब्रह्मरुद्रप्रवर्तक । कश्च ईशश्च केशौ तौ सृष्ट्यादिना वर्तयतीति व्युत्पत्तेः । केशपदोपपदाद् 'वृतु वर्तने' इत्यतोऽन्तर्णीतण्यर्थाड्डप्रत्यये रूपसिद्धेः । उक्तं हि 'स्थितप्रज्ञस्य का भाषा' इत्येतद्भाष्ये—

"हिरण्यगर्भः कः प्रोक्त ईशः शङ्कर एव च ।
सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान् ॥" इति ॥ ३० ॥

***अ०प्र०***— किञ्च गाण्डीवं हस्तात् स्रंसतेति ।

हे कृष्ण ! हस्तात्[१], गाण्डीवं[२], स्रंसते[३], त्वक् चैव[४], परिदह्यते[५], किञ्च अवस्थातुं[६], न च शक्नोमि[७], किञ्च मे मनः[८], भ्रमतीव भाति[९], इत्यन्वयः ।

हे कृष्ण !, हस्तात्,[१] गाण्डीवं = धनुः,[२] स्रंसते = निपतति,[३] त्वक् चैव = त्वगिन्द्रियमपि,[४] परिदह्यते = सर्वतः परितप्यते[५] । शेषं स्पष्टम् ॥ ३० ॥

***त्रि०वि०***— **न चेति** ॥ अवस्थातुं – युद्धे वीरासनेन अवस्थातुं नैव शक्नोमि । मे मनश्च भ्रमतीव – वध्येषु अवध्यत्वेन पश्यति, इमे वध्या अवध्या वेति संशयं इवशब्देन दर्शयति, "किञ्चित्वे चोभयत्वे च संशये सदृशे तथा । इव शब्दः प्रयुज्येत न्यक्कारेऽपि च पण्डितैः" इति

शब्दनिर्णये ॥ ननु हन्तुं शक्याशक्यत्वरूपसंशयस्तु सुशकुनरूपविशेषदर्शनेन परिहार्य इत्यत आह **निमित्तानीति** ॥ स्वस्य सव्यसाचित्वेन वामाङ्गस्फुरणादेः सुशकुनत्वेऽपि ममतासुरावेशवशाद्विपरीतानेवामन्यतेति भावः ॥ ३० ॥

**गीता**

## निमित्तानि च पश्यामि विपरीतानि केशव ।
## न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥

***वि०वि०***— दुर्निमित्तानि पश्यामि । श्रेयश्च न पश्यामि ॥ ३१ ॥

***सा०सं०***— युद्धेन श्रेयो लभ्यत इत्यत आह **न चेति** । **श्रेयश्च न पश्यामि** । **आहवे** युद्धे । विजयादिकं फलं नेच्छामि ॥ ३१ ॥

***भा०र०— अक्षरार्थस्तु***— विषीदन् – विषादं मोहनिमित्तकाच्छोकान्मनोदौर्बल्यं यस्मिन् सति सर्व-व्यापारोपरमो भवति तं कुर्वन् । तदेव वचनमुच्यते **अर्जुन उवाच** इत्यादिना **तन्मे क्षेमतरं भवेत्** इत्यन्तेन ॥ नियमनादिना सकललोककर्षणात् कृष्ण इति कृष्णशब्दार्थं भाष्ये वक्ष्यति । हे सर्वलोककर्षक भगवन् । युयुत्सुं – योद्धुमिच्छुम् । **दृष्ट्वा** स्थितस्येति शेषः । तेन त्त्वाप्रत्ययोपपत्तिः । गात्राणि – शरीरवाचकस्यापि गात्रशब्दस्य तदेकदेशकरचरणाद्यर्थत्वम् । सीदन्ति – व्यथन्ते । वेपथुः – कम्पः । स्रंसते – गलति । परिदह्यते – सर्वतः सन्तप्यते । अपि च । अवस्थातुमपि न शक्नोमि । भ्रमतीव – नावतिष्ठत्येव । विपरीतानि – अनिष्टसूचकानि । केशव – कं ब्रह्माणम् ईशं रुद्रं सृष्ट्यादिना वर्तयतीति केशवः । तत्सम्बुद्धिः । ब्रह्मरुद्रनियामक । किञ्च । आहवे – युद्धे । स्वजनं हत्वा श्रेयो नानुपश्यामि ॥ २८-३१ ॥

***अ०प्र०***— किञ्च **निमित्तानीति** ।

हे केशव ! = केशौ ब्रह्मरुद्रौ प्रवर्तयतीति तथा । कं ब्रह्माणं ईं लक्ष्मी इं कामं ईशं रुद्रं प्रवर्तयति वाहयतीति वा । केशीवधाद्वा । केशे प्रलयवार्धौ क्षीरनिधौ वा वर्तत इति वा प्रशस्ताः केशाः केशनामकावतारा वा यस्येति वा । हे कृष्ण ![१], विपरीतानि = अनिष्टसूचकानि[२], निमित्तानि = शकुनानि कारणानि च[३], पश्यामि[४], आहवे = युध्ये[५], स्वजनं = बन्धुजनं[६] हत्वा[७], श्रेयः = फलं[८], न चैव[९], अनुपश्यामि = सुखं न पश्यामि[१०], इत्यर्थः ॥ ३१ ॥

*त्रि०वि०*— "हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इति वक्ष्यमाणदिशा उभयथाऽपि श्रेयः प्राप्तिं किं नाङ्गीकुरुषे इत्यत आह **न च श्रेय इति** ॥ पारत्रिकं श्रेयोऽदृश्यत्वादनङ्गीकार्यं, महीभोगादिरूपं दृश्यं श्रेयस्तु आहवे – युद्धे स्वजनं हत्वा नैवानुपश्यामि । राज्यस्य स्वजनपोषणैकफलत्वादिति भावः ॥ ३१ ॥

**गीता**

**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।**
**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥**

*वि०वि०*— न च विजयादिफलमिच्छामि । ततः किमस्माकं राज्यादिभिः कार्यम् ॥३२॥

*सा०सं०*— **येषामर्थे** प्रयोजननिमित्तं राज्याद्यपेक्षितम् । **नः** अस्माकम् ॥ ३२ ॥

*अ०प्र०*— विजयादिकफलमस्ति तन्न पश्यसि चेत् तत्राह **न काङ्क्षेति** ।

किं नो राज्येनेतीदमारभ्य उत्तरद्वयश्लोकैः प्रपञ्चयति । हे कृष्ण ![१], अहं[२], विजयं[३], राज्यं[४], सुखानि च[५], न काङ्क्षे[६], हे गोविन्द[७], नः[८], राज्येन[१०], किं[११], भोगैश्च[१२], किम् ?[१३]। जीवितेन[१४], वा[१५], किम्[१६] इत्यन्वयः ।

हे गोविन्द ! = गाः गन्धर्वविद्याः, धेनुर्भूमिः, स्वर्गान् केशरूपावतारान् ज्ञानरश्मीन् विदन्ति लभते भवति इति गोविन्दः गोभिर्वेदैर्वेद्यत इति वा । गवा वाचा विं विष्णुं तत् ज्ञानं ददातीति वा । गोरूपान् विरूपान् यातीति वा[७] ॥ ३२ ॥

*त्रि०वि०*— ननु स्वजनरूपशत्रुवधं विना विजयस्ते कथं स्यादित्यत आह **न काङ्क्ष इति** । तद्विना राज्यानुपलम्भ इत्यत आह **न च राज्यमिति** ॥ तर्हि सुखरूपफलानाकाङ्क्षायां अन्यफलाभावाच्च राज्यफलमाक्षिपति **किं न इति** ॥ भोगाः फलमिति चेत् तमाह **किं भोगैः इति** ॥ अन्यथा जीवनानुपपत्तिरित्यत आह **जीवितेन वेति** ॥ वा शब्दः, किं शब्दानुकर्षणार्थः ॥ ३२ ॥

**गीता**

**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥**

*वि०वि०*— यदर्थमस्माकं राज्याद्यपेक्षा त एते प्राणधनादित्यागमङ्गीकृत्य युद्धार्थमवस्थिताः । ततः किमस्माकं राज्यादिभिः कार्यम् ॥ ३३ ॥

*अ०प्र०*— पुनः किमाह **येषामिति** ।

हे गोविन्द ![१], येषामर्थे = यदर्थे[२], नः = अस्माकं[३], भोगाः[४], सुखानि च[५], राज्यं चैव[६], काङ्क्षितं = अपेक्षितम्[७], ते आचार्यदयः[८], इमे पुरोवर्तिनः[९] । प्राणान्[१०], धनानि च[११], त्यक्त्वा[१२], युद्धे[१३], अवस्थिता एव[१४], अतः किमस्माकं राज्यादिभिः कृत्यमित्यर्थः ॥ ३३ ॥

*त्रि०वि०*— "न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे" इत्युक्तं स्पष्टयति **येषामर्थ** इति । नः अस्माकं, येषामर्थे – यत्कृते राज्यादि काङ्क्षितम् । अत्र काङ्क्षितशब्दस्य लिङ्गवचन-विपरिणामेनोभयत्रान्वयः । यद्वा एषामर्थे – आचार्यादिभ्यः युद्धेन राज्यं नाहर्तव्यं किन्तु तेषामर्थ एव त्याज्यं, स्वयं नाकाङ्क्ष्यमित्यर्थे, राज्यादि नो काङ्क्षितं – न काङ्क्षितम्, त इमे – सर्वे युद्धे – युद्धविषये अवस्थिताः । किं कृत्वेत्यतः, प्राणान् लक्षणया प्राणाद्याशाः त्यक्त्वा । अस्तु प्राणाशापरित्यागः तथापि "यं क्रीणात्यसुभिः प्रेष्टैस्तस्करः सेवको वणिक्" इत्युक्तदिशा धनार्थे युद्धैव स्थानं स्यादित्यत उक्तम् **धनानि चेति** ॥ धनानि च त्यक्त्वा तस्मात् तेषां निष्फलप्रवृत्त्या अज्ञत्वं पश्यता प्रेक्षावता मया तादृशी प्रवृत्तिर्न कार्येति भावः ॥ ३३ ॥

**गीता**

## आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
## मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ॥३४॥

*सा०सं०*— त इमे बान्धवाः **प्राणान् धनानि च त्यक्त्वा युद्धे** व्यवस्थिताः । ते क इत्यत आह **आचार्या इति** । 'नैवेच्छामि' इत्येवकारान्वयः । यदि मां युद्धान्निवृत्तम् एते हन्युस्तर्हि । **घ्नतोऽपि नैव हन्तुमिच्छामि** इत्यर्थः । हे मधुनामकदैत्यमर्दन ॥ ३३-३४ ॥

*अ०प्र०*— ते एव नामभिर्निर्दिशति **आचार्या इति** ।

आचार्याः[१], पितरः[२], तथा पितामहाः[३], मातुलाः[४], श्वशुराश्चेत्यादयो पूज्याः[५], श्यालाः[६], सम्बन्धिनः[७], तथा इत्यनेन मातुलेयाः, भ्रातरः, सखायः, सुहृदश्चादयो औपचारिकास्समाः[८], तथैव[९], पुत्राः[१०], पौत्राः[११], चकारेण भ्रातृपुत्रपौत्राः, शालकानां पुत्रपौत्राश्च गृह्यन्ते । एते संरक्षकाः[१२], एते

सर्वेऽपि प्राणधनादित्यागमङ्गीकृत्य युद्धार्थमवस्थिताः । अतः किमर्थमस्माभिः राज्यादिकमपेक्षितव्यमित्यर्थः ॥ ३४ ॥

***त्रि०वि०***— ते क इत्यत आह **आचार्या इति** । एते प्रोक्तार्था एव । अत्र सखिस्थाने श्यालशब्दोक्तेः, सुभद्राबन्धुत्वात् तदर्थः कृष्ण एवेति ***प्रसिद्धार्थे*** ॥ ***अध्यात्मार्थे*** तु बुद्धिबन्धु-त्वात् प्राणाभिमानिनः "बुद्धिः प्राणस्तु तैजसौ" इत्युक्तेर्भागवते ॥ ***अंशार्थे***— पौलोमाः शचीबन्धुत्वादित्यर्थः ॥ ननु श्यालशब्देन कृष्णग्रहणे तस्यापि निष्फलप्रवृत्त्याऽज्ञत्वप्रसक्तिः स्यादिति चेन्न, योद्धृत्वाभावात् । योद्धृणामेव हि तदिति बोध्यम् ॥ पूर्वोक्तानां मध्येऽत्र भ्रातृणामग्रहणं तु, तत्र भातृणां "तत्रापश्यत् स्थितान् पार्थ" इत्यनेन दृग्विषयत्वोक्तेरत्र च "एतान्न हन्तुमिच्छामि" इत्युक्त्या हननेच्छाऽविषयत्वोक्तेः, युधिष्ठिरादीनां सौहार्देन दुर्योधनादीनां च भीमप्रतिज्ञातवधत्वेन सर्वभ्रातृणां हननेच्छाविषयत्वाभावादिति बोध्यम् ॥ ३४ ॥

**गीता**

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५ ॥**

***वि०वि०***— यदि मयि युद्धादुपरते मामेते हन्युस्तथाऽप्येतान् घ्नतोऽपि त्रैकोल्यराज्यस्यापि हेतोः हन्तुं नेच्छामि । किमुत महीमात्रनिमित्तम् ॥ ३५ ॥

***सा०सं०***— कैमुत्यन्यायेनाह **अपीति** । **त्रैलोक्यराज्यस्यापि हेतोरेतान् हन्तुं नेच्छामि** । किमुत महीमात्रनिमित्तमिति । किञ्च **धार्तराष्ट्रान् निहत्य नोऽस्माकं का प्रीतिः** किमैहिकसुखम् । न किमपि । नापि पारत्रिकम् । प्रत्युत पारत्रिकदुःखहेतु**पापमेवास्मानाश्रयेत्** । न जायत इति जनः, अर्दयति संसारमिति अर्दनः, जनश्चासावर्दनश्चेति **जनार्दनः**, तस्य सम्बुद्धिः । उक्तं ह्येवं गीताभाष्ये दशमे ॥ ३५ ॥

***भा०र०***— ***अक्षरार्थस्तु***— विजयादिफलमेव श्रेयोऽस्तीत्यत उच्यते **न काङ्क्षे विजयमिति** । तदेवोच्यते **किं नो राज्येन** इति सार्धद्वाभ्याम् । गोविन्द – वेदप्रतिपाद्य । त इमे बान्धवाः । त्यागस्य प्रत्यासन्नत्वात् प्राणांस्त्यक्त्वेत्युक्तम् । श्यालाः – भार्यासहोदराः । घ्नतोऽपि हन्तॄनपि । त्रैलोक्यराज्यस्यापि कृते इति बुद्ध्या विविक्तस्य सम्बन्धः । त्रैलोक्यराज्यस्य हेतोरपि त्रैलोक्यराज्यार्थमपीति वा । **महीकृते** कृते इत्यव्ययं तादर्थ्ये । महीमात्रार्थम् ॥ ३२-३५ ॥

***अ०प्र०***— ननु त्वं कृपया एतान् हन्तुं यदि नेच्छसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव । अतस्त्वमेव एतान् हत्वा राज्यं भुङ्क्ष्वेति चेत्तत्राह **एतानिति** ।

हे मधुसूदन = मधुदैत्यं सूदयतीति तथा, मध्वपूपवत् सुखलेशोपेतं संसारं सूदयतीति वा, मधुसूदं स्वादुपाचकं भीमं नयति नियमयति इति वा, हे मधुसूदन हे कृष्ण[१], घ्नतोऽपि = अस्मान् घातयानानपि यद्वा घातयतोऽपि[२], एतान् = आचार्यादीन्[३], त्रैलोक्यराज्यस्यापि हेतोः = तत्प्राप्त्यर्थमपि[४,५], अहं हन्तुं[६], नेच्छामि[७], किन्तु महीकृते = किं पुनर्महीमात्रप्राप्त्यर्थम्[८], इत्यर्थः ॥ ३५ ॥

***त्रि०वि०***— फलितमाह **एतानिति** । ते यदा त्वां हन्युः तदा त्वमपि स्वयमेव हनिष्यसीत्यत उक्तं **घ्नतोऽपीति** । हनने प्रवृत्तानपीत्यर्थः । पृथिवीराज्यलोभादेव हनिष्यसीत्यत आह **अपीति** । त्रैलोक्यराज्यस्यापि हेतोः – प्राप्त्यर्थं नेच्छामीति पूर्वेणान्वयः । किं नु किमु वक्तव्यं महीकृते पृथिवीराज्यमात्रप्राप्त्यर्थं नेच्छामीति ॥ ३५ ॥

**गीता**

## निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्दन ।
## पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥ ३६ ॥

***वि०वि०***— किञ्च एतद्धननात् न काप्यन्याऽस्माकं प्रीतिः, पापं च स्यात् । यद्यप्येतेऽग्निदा गरदाः शस्त्रपाणयो धनापहारिणश्च आततायिनः नैषां वधे दोषोऽस्ति तथापि पितृत्वादिना मान्यत्वादेषां वधे पापमेवाश्रयेत् ॥ ३६ ॥

***सा०सं०***— **आततायिनः**—

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते ह्याततायिनः ॥" (भी.प. १०७-११०)

इत्युक्तलक्षणात् । **तस्मात्** सीदन्ति मम गात्राणीत्यादिनोक्तोपपत्तिबलात् । **सबान्धवान् धार्तराष्ट्रान् हन्तुं वयं नार्हाः** ।

"आततायिनमायान्तं हन्यादेवाविचारयन् ।
नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥" (शां.प. १५-१५)

इत्युक्तस्तेषाम् आततायित्वेन हन्तव्यतया प्राप्तत्वेऽपि तद्धननप्रसक्त्या बन्धूनामपि हननप्राप्तेर्न हन्तुं वयं योग्या इति भावः ॥ ३६ ॥

***भा०र०***— ***अक्षरार्थस्तु***— शत्रूणां निग्रहे प्रीतिर्भवतीत्यत उच्यते **निहत्येति** ॥ निहत्य स्थितानाम् । जनार्दन – न जायत इति जनः, अर्दयति संसारमित्यर्दनः, जनश्चासावर्दनश्च जनार्दनः, तत्सम्बुद्धिः । किञ्च धार्तराष्ट्रान् निहत्य स्थितानामस्माकं का प्रीतिः किं सुखं स्यात् ? प्रत्युत पारत्रिकसुख-विरोधिपापमेवास्मानाश्रयेत् ॥ ३६ ॥

***अ०प्र०***— हे जनार्दन[१], धार्तराष्ट्रान् = दुर्योधनादीन्[२], निहत्य[३], नः = अस्माकं[४], का प्रीतिः स्यात् = किं सुखं स्यात्[५], अत एतान् = पुरोवर्तिनः[६], आततायिनः = द्रोणादीन्[७], हत्वा[८], अस्मान् = अस्माकं[९], पापमेव[१०], आश्रयेत् = भवेत्[११], तद्वधस्य अन्याय्यत्वादधर्मत्वाच्चेत्यर्थः ।

हे जनार्दन = जायतेति जनः, अर्दयतीत्यर्दनः, जनश्चासौ अर्दनश्चेति तथा । जननमर्दयतीति वा । सदसज्जनानर्दयति = गमयति सदसद्गतीति वा । सदसज्जनान् याचते हिनस्तीति वा[१] ॥ ननु च—

"अग्निदा गरदाश्चैव शस्त्रपाणिर्धनापहा ।
क्षेत्रदारापहर्ता च षडैते ह्याततायिनः ॥
आततायिनमायातं हन्यादेवाविचारयन् ।
नाततायिवधो दोषो हन्तुर्भवति कश्चन ॥" इति वचनात् ॥

लाक्षागृहदाहादिभिः, षड्भिरपि प्रकारैरेषाम् आततायित्वात् तद्वधो युक्त एवेति चेत् तत्राह—

"स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।
अर्थशास्त्राद्बलवद्धर्मशास्त्रमिति स्थितिः ॥" इति वचनात् ।

आततायिनमित्यादेः अर्थशास्त्रत्वेन 'अहिंसा परमो धर्म' इत्यादि धर्मशास्त्रतो दुर्बलत्वेन बाधितत्वात् आततायि कुरुसम्बन्धिनां एतेषां आचार्यादीनां वधं कृत्वा तिष्ठतां अस्माकं पापमेव भवेत्[१] ॥ ३६ ॥

***त्रि०वि०***— ननु पूर्वक्लिशदानां हनने प्रीतिरुत्पद्यते । अतो हन्तव्या इत्यत आह **निहत्य इति** । न कापीत्यर्थः, तत्र हेतुः **न इति** । अस्मदीयानित्यर्थः । भवत्सम्प्रदाय एव सर्वार्दिनं कार्यमिति, नास्माकं तथेति सूचनाय **जनार्दन** इति सम्बुद्धिः । प्रत्युत अनर्थप्राप्तिरेवेत्याह **पाप-मिति** । "आततायिनमायान्तं हन्यादेवाविचारयन्" इत्यतः आततायिशब्देन स्वानेव विशिनष्टि ॥ यद्वा— आततायिनोऽपि एतान् हत्वा स्थितानिति शेषः ॥ अन्यथा ल्यबन्ततिङन्तयोरेककर्तृ-

कत्वोपपत्तेः । दोषाङ्गीकारे तु, हतिस्थितिरूपक्रिययोः एककर्तृकत्वोपपत्त्या आश्रयणरूपक्रियायाः पृथगन्वयेन दोषाभाव इति भावः ॥ अस्मान्पापमेवाश्रयेत्, एवशब्देनार्थप्राप्तिर्नास्तीति ध्वनितम् । ॥ ३६ ॥

**गीता**

## तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
## स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥

***वि०वि०***— न चैतान् घ्नतामस्माकं सुखं स्यात् ॥ ३७ ॥

***सा०सं०***— बन्धुत्वेऽपि आततायिसम्बन्धित्वात् तेऽपि बन्धुजना हन्तव्या एवेत्यत आह **स्वजनं हीति** । **स्याम** भवेम । तद्दर्शनस्पर्शनसम्भाषणादेरभावप्राप्तेरिति भावः ॥ ३७ ॥

***भा०र०***— ***अक्षरार्थस्तु***— तस्माद्धार्तराष्ट्रान् हन्तुं न वयमर्हाः । यद्यप्येत आततायिनः । "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्ता च षडेते ह्याततायिनः" इति शास्त्रावगत-तल्लक्षणाक्रान्तत्वात् । "आततायिनमायान्तं हन्यादेवाविचारयन् । नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन" इति वचनेन हन्तव्या एवेति न पापप्रसक्तिः । तथाऽपि तद्बन्धूनां भीष्मादीनां मान्यानामपि तद्वधानुषङ्गिकवधप्रसक्त्या पापमेवाऽऽश्रयेदित्युक्तम् । एतदभिप्रायेण आततायिनो धार्तराष्ट्रान् सबान्धवानित्युत्तरत्र सम्बन्धेन व्याख्यातवन्तः स्वामिनः । केचित्तु निरागसोऽस्मान् हत्वा स्थितान् अत एव आततायिनो धार्तराष्ट्रान् पापमाश्रयेदित्ययोजयन् । राज्यसुखमुद्दिश्य हि युद्धं कर्तव्यम् । न च स्वजनहननेन सुखं भवति । प्रत्युत दुःखमेवेत्युच्यते **स्वजनं हीति** ॥ ३७ ॥

***अ०प्र०***— यस्मात् आततायिनां वधेन सुखं पापमेव भवेत् **तस्मादिति** ।

हे माधव[१], हि = यस्मात्[२], स्वजनं[३], हत्वा[४], कथं[५], सुखिनः स्याम[६], तस्मात्[७], वयं[८], स्वबान्धवान्[९], धार्तराष्ट्रान्[१०], हन्तुं[११], नार्हाः किल[१२] इत्यन्वयः ।

हे माधव = मायायाः लक्ष्म्याः ज्ञानस्य वा धवो माधवः, मधौ = ज्ञानधर्मौ वहते वर्तयतीति वा, मधुषु अवताराद्वा, वध्यघातकत्वरूपसम्बन्धान्मधोसम्बन्धी, मधुदैत्यहन्ता माधवः[१] ॥ ३७ ॥

***त्रि०वि०***— निगमयति **तस्मादिति** ॥ ***अध्यात्मार्थे***— तस्मात् – अर्थानर्थप्राप्तिपरिहारा-भावात्, वयं, धार्तराष्ट्रान् "धन्धने निनदे धीरे" इत्येकाक्षरात्, धं – धनरूपं सम्पाद्यमिति यावत्,

आर्तराष्ट्रं – आर्तोपद्रवो येषां तानसुरान्, स्वबान्धवान् – स्वेषां स्वकीयतत्त्वानां, बन्धं – ममताबन्धं अभिमानमिति यावत्, वान्ति – प्राप्नुवन्ति ते बन्धवाः त एव बान्धवाः तान्, स्वीयसम्बन्धित्वादिति भावः । हन्तुं नार्हाः – न योग्याः धार्तराष्ट्रत्वेन वध्यत्वेऽपि स्वीयत्वादवध्या इत्यर्थः । हि यतः स्वजनं – ममतास्पदजनं हत्वा कथं सुखिनः स्याम न कथमपीत्यर्थः । यद्वा— अहवित्युत्तमपुरुषद्विवचनबलात् आवामिति लभ्यते । तव प्रयोजनाभावान्मम च स्वातन्त्र्याभावादेकैकस्य क्रियाऽयोग्यत्वेऽपि बिम्बत्वेन प्रवर्तकत्वात् त्वं, प्रयोजनार्थित्वादहं चेति मिलित्वा आवाम् । धार्तराष्ट्रान् "षट्सु द्वितीया" इति सूत्रेण धार्तराष्ट्रेषु असुरेषु मध्ये यं कलिं हन्तुं अर्हाव शक्तौ स्वः स कलिः । स्वबान्धवान् – इयं प्रथमाविभक्तिः, सुतरां नास्ति, वं बलं येषां ते स्वबाः अन्धाः ज्ञानहीनाश्च ते स्वबान्धाः ते पाल्यत्वेनोपदेशकत्वेन वा विद्यन्तेऽस्येति स तथाऽस्ति । तस्माद् बलज्ञानहीनपतित्वेन तच्छिष्यत्वेन वा दीनत्वान्न हन्तव्य इति शेषः । हि यस्मात् स्वजनं स्वेनैव कर्मणा जन्यते जन्मविकारोपलक्षितनाशविकारं प्राप्यते यस्तं, हत्वा वयं सुखिनः – शक्तेन्द्रियवन्तः कथं स्याम । मृतस्य मारणमनुचितमिति भावः ॥ ***अंशार्थे***— स्वबान्धवान् कश्यपवंश्यत्वात्, धार्तराष्ट्रान् – पापाभिमानिनोऽसुरान् ॥ ***प्रसिद्धार्थे***— धार्तराष्ट्रान् – दुर्योधनादीन् स्वबान्धवानिति हेतुगर्भविशेषणम् । स्वजनहत्यया शोकप्राप्तिरेव कुतः सुखमिति भावः ॥ स्वशालकत्वात् विनोदेन कृष्णं सम्बोधयति **माधवेति** ॥ भवत्कुल एव स्वजनवधसम्प्रदायः । कंसेन बालहननात्, त्वया च मातुलादिहननात्, रामेण रुक्मिहननाच्च, तन्मधुवंशोत्पन्नत्वात् तवैव तदुचितं नास्माकमिति भावः ॥ ३७ ॥

**गीता**

## यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
## कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥

***सा०सं०***— कुत एवं बुद्ध्या ते न निवृत्ता इत्यत आह **यद्यपीति** । **एते** दुर्योधनादयः । **राज्यलोभेन उपहतचेतसः** नष्टधर्मज्ञानाः **दोषं** पातकं न च पश्यन्ति । यद्यपि ॥ ३८ ॥

***त्रि०वि०***— अज्ञैरविहिताचरणेऽपि सुज्ञैर्न तथाऽऽचरणीयमित्याह **यद्यपीति** द्वाभ्याम् ॥ एते – पाप्पानः; असुराः, धार्तराष्ट्रा, वा लोभेन तदभिमानिना उपहतं – प्रणाशितं, चेतः – ज्ञानं एषां तथा सन्तः । कुलक्षयेण कृतं – सम्पादितं दोषं, मित्रद्रोहे चशब्दः कृतशब्दानुकर्षणार्थः, सम्पादितं पातकमित्यर्थः । यद्यपि न पश्यन्ति – न जानन्ति न जानन्तु ॥ ३८ ॥

कत्वोपपत्तेः । दोषाङ्गीकारे तु, हतिस्थितिरूपक्रिययोः एककर्तृकत्वोपपत्त्या आश्रयणरूपक्रियायाः पृथगन्वयेन दोषाभाव इति भावः ॥ अस्मान्पापमेवाश्रयेत्, एवशब्देनार्थप्राप्तिर्नास्तीति ध्वनितम् । ॥ ३६ ॥

**गीता**

## तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
## स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥

***वि०वि०***— न चैतान् घ्नतामस्माकं सुखं स्यात् ॥ ३७ ॥

***सा०सं०***— बन्धुत्वेऽपि आततायिसम्बन्धित्वात् तेऽपि बन्धुजना हन्तव्या एवेत्यत आह **स्वजनं हीति** । **स्याम** भवेम । तद्दर्शनस्पर्शनसम्भाषणादेरभावप्राप्तेरिति भावः ॥ ३७ ॥

***भा०र०***— ***अक्षरार्थस्तु***— तस्माद्धार्तराष्ट्रान् हन्तुं न वयमर्हाः । यद्यप्येत आततायिनः । "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्ता च षडेते ह्याततायिनः" इति शास्त्रावगत-तल्लक्षणाक्रान्तत्वात् । "आततायिनमायान्तं हन्यादेवाविचारयन् । नाऽततायिवधे दोषो हन्तुर्भवति कश्चन" इति वचनेन हन्तव्या एवेति न पापप्रसक्तिः । तथाऽपि तद्बन्धूनां भीष्मादीनां मान्यानामपि तद्वधानुषङ्गिकवधप्रसक्त्या पापमेवाऽश्रयेदित्युक्तम् । एतदभिप्रायेण आततायिनो धार्तराष्ट्रान् सबान्धवानित्युत्तरत्र सम्बन्धेन व्याख्यातवन्तः स्वामिनः । केचित्तु निरागसोऽस्मान् हत्वा स्थितान् अत एव आततायिनो धार्तराष्ट्रान् पापमाश्रयेदित्ययोजयन् । राज्यसुखमुद्दिश्य हि युद्धं कर्तव्यम् । न च स्वजनहननेन सुखं भवति । प्रत्युत दुःखमेवेत्युच्यते **स्वजनं हीति** ॥ ३७ ॥

***अ०प्र०***— यस्मात् आततायिनां वधेन सुखं पापमेव भवेत् **तस्मादिति** ।

हे माधव[१], हि = यस्मात्[२], स्वजनं[३], हत्वा[४], कथं[५], सुखिनः स्याम[६], तस्मात्[७], वयं[८], स्वबान्धवान्[९], धार्तराष्ट्रान्[१०], हन्तुं[११], नार्हाः किल[१२] इत्यन्वयः ।

हे माधव = मायायाः लक्ष्म्याः ज्ञानस्य वा धवो माधवः, मधौ = ज्ञानधर्मो वहते वर्तयतीति वा, मधुषु अवताराद्वा, वध्यघातकत्वरूपसम्बन्धान्मधोसम्बन्धी, मधुदैत्यहन्ता माधवः[१] ॥ ३७ ॥

***त्रि०वि०***— निगमयति **तस्मादिति** ॥ ***अध्यात्मार्थे***— तस्मात् – अर्थानर्थप्राप्तिपरिहाराभावात्, वयं, धार्तराष्ट्रान् "धन्धने निनदे धीरे" इत्येकाक्षरात्, धं – धनरूपं सम्पाद्यमिति यावत्,

आर्तराष्ट्रं – आर्तोपद्रवो येषां तानसुरान्, स्वबान्धवान् – स्वेषां स्वकीयतत्त्वानां, बन्धं – ममताबन्धं अभिमानमिति यावत्, वान्ति – प्राप्नुवन्ति ते बन्धवाः त एव बान्धवाः तान्, स्वीयसम्बन्धित्वादिति भावः । हन्तुं नार्हाः – न योग्याः धार्तराष्ट्रत्वेन वध्यत्वेऽपि स्वीयत्वादवध्या इत्यर्थः । हि यतः स्वजनं – ममतास्पदजनं हत्वा कथं सुखिनः स्याम न कथमपीत्यर्थः । यद्वा— अर्हावित्युत्तमपुरुषद्विवचनबलात् आवामिति लभ्यते । तव प्रयोजनाभावान्मम च स्वातन्त्र्याभावादेकैकस्य क्रियाऽयोग्यत्वेऽपि बिम्बत्वेन प्रवर्तकत्वात् त्वं, प्रयोजनार्थित्वादहं चेति मिलित्वा आवाम् । धार्तराष्ट्रान् "षट्सु द्वितीया" इति सूत्रेण धार्तराष्ट्रेषु असुरेषु मध्ये यं कलिं हन्तुं अर्हाव शक्तौ स्वः स कलिः । स्वबान्धवान् – इयं प्रथमाविभक्तिः, सुतरां नास्ति, वं बलं येषां ते स्वबाः अन्धाः ज्ञानहीनाश्च ते स्वबान्धाः ते पाल्यत्वेनोपदेशकत्वेन वा विद्यन्तेऽस्येति स तथाऽस्ति । तस्माद् बलज्ञानहीनपतित्वेन तच्छिष्यत्वेन वा दीनत्वान्न हन्तव्य इति शेषः । हि यस्मात् स्वजनं स्वेनैव कर्मणा जन्यते जन्मविकारोपलक्षितनाशविकारं प्राप्यते यस्तं, हत्वा वयं सुखिनः – शक्तेन्द्रियवन्तः कथं स्याम । मृतस्य मारणमनुचितमिति भावः ॥ ***अंशार्थे***— स्वबान्धवान् कश्यपवंश्यत्वात्, धार्तराष्ट्रान् – पापाभिमानिनोऽसुरान् ॥ ***प्रसिद्धार्थे***— धार्तराष्ट्रान् – दुर्योधनादीन् स्वबान्धवानिति हेतुगर्भविशेषणम् । स्वजनहत्यया शोकप्राप्तिरेव कुतः सुखमिति भावः ॥ स्वशालकत्वात् विनोदेन कृष्णं सम्बोधयति **माधवेति** ॥ भवत्कुल एव स्वजनवधसम्प्रदायः । कंसेन बालहननात्, त्वया च मातुलादिहननात्, रामेण रुक्मिहननाच्च, तन्मधुवंशोत्पन्नत्वात् तवैव तदुचितं नास्माकमिति भावः ॥ ३७ ॥

**गीता**

## यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
## कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥

***सा०सं०***— कुत एवं बुद्ध्या ते न निवृत्ता इत्यत आह **यद्यपीति** । **एते** दुर्योधनादयः । **राज्यलोभेन उपहतचेतसः** नष्टधर्मज्ञानाः **दोषं** पातकं न च पश्यन्ति । यद्यपि ॥ ३८ ॥

***त्रि०वि०***— अज्ञैरविहिताचरणेऽपि सुज्ञैर्न तथाऽऽचरणीयमित्याह **यद्यपीति** द्वाभ्याम् ॥ एते – पाप्मानः; असुराः, धार्तराष्ट्रा, वा लोभेन तदभिमानिना उपहतं – प्रणाशितं, चेतः – ज्ञानं एषां तथा सन्तः । कुलक्षयेण कृतं – सम्पादितं दोषं, मित्रद्रोहे चशब्दः कृतशब्दानुकर्षणार्थः, सम्पादितं पातकमित्यर्थः । यद्यपि न पश्यन्ति – न जानन्ति न जानन्तु ॥ ३८ ॥

**गीता**

**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥**

*वि०वि०*— यद्यप्येते दुर्योधनादयो लोभेन भ्रष्टविवेकाः दोषं न पश्यन्ति । तथाप्यस्माभिर्दोषं प्रपश्यद्भिरस्मात् पापान्निवर्तितुं कथं न ज्ञेयम् ॥ ३८, ३९ ॥

*सा०सं०*— तथापि हे जनार्दन ! जननरहितसंसारार्दन ! कुलक्षयकृतं दोषं प्रपश्यद्भिरस्माभिः अस्माद्दोषान्निवर्तितुं कथं न ज्ञेयम् ॥ ३९ ॥

*भा०र०*— ***अक्षरार्थस्तु***— यथा धार्तराष्ट्राः स्वजनवधे प्रवर्तन्ते तथा भवानपि प्रवर्तताम् । किमनेन विषादेनेत्यत उच्यते **यद्यपीति** ॥ **एते** दुर्योधनादयः । कुलक्षयकृतं दोषं मित्रदोहे च पातकं राज्यलोभोपहतचेतस्त्वाद् यद्यपि न पश्यन्ति, तथाऽप्यस्माभिः कुलक्षये मित्रद्रोहे च पातकं प्रपश्यद्भिः धर्मशास्त्रेण पापं निश्चितवद्भिः, अस्माद् उक्तलक्षणात् पापात्, निवर्तितुं कथं न ज्ञेयम् ? तन्निवृत्तावेव बुद्धिः कार्येत्यर्थः ॥ ३८-३९ ॥

*अ०प्र०*— ननु यथा एतेषां स्वजनवधे समानेऽपि ते तमङ्गीकृत्य युद्धे यदि प्रवर्तेरन् तर्हि त्वमपि तथैव प्रवर्तस्व किमनेन विषादेनेति तत्राह **यद्यपीति** द्वाभ्याम् ।

अन्वयो एक एव कर्तव्यः । हे जनार्दन ![१], लोभोपहतचेतसः[२], एते[३], कुलक्षयकृतं दोषं[४], मित्रद्रोहे[५], पातकं च[६], यद्यपि[७], न पश्यन्ति[८], तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः[९], अस्माभिः[१०], अस्मात्[११], पापात्[१२], निवर्तितुं[१३], कथं न ज्ञेयम्[१४] ।

श्लोकद्वयस्यार्थो लिख्यते— हे जनार्दन[१] लोभोपहतचेतसः = राज्य-लोभेन भ्रष्टविवेकाः[२], एते = दुर्योधनादयः[३], कुलक्षयकृतं दोषं[४], मित्रद्रोहे पातकं च[६], यद्यपि न पश्यन्ति[८], तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः[९], अस्माभिः[१०], अस्मात्[११], पापात्[१२], निवर्तितुं[१३], कथं न ज्ञेयम्[१४], अस्माभिस्तु पापान्निवृत्तावेव बुद्धिः कर्तव्येति भावः ॥ ३९ ॥

*त्रि०वि०*— तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः – जानद्भिरस्माभिः अस्माद्वक्ष्यमाणा-त्पापान्निवर्तितुं कथं न ज्ञेयम्, ज्ञात्वा कुर्वाणस्य महान् दोष इति भावः ॥ ३९ ॥

**गीता**

## कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
## धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥

***सा०सं०***— कः कुलक्षयकृतो दोष इत्यत आह **कुलक्षय इति** । सनातनाः परपम्पराप्राप्ताः । कुलधर्मा क्षत्रियादिकुलधर्माः । उत शब्दोऽप्यर्थे । अवशिष्टं कृत्स्नमपि कुलधर्मोऽभिभवति अर्धमाक्रान्तं भवति ॥ ४० ॥

***अ०प्र०***— तमेव दोषं दर्शयति **कुलक्षयेति** ।

किञ्च, हे जनार्दन ! कुलक्षये जाते सति = कुलक्षयकृतदोषे प्राप्ते सति[१], सनातनाः = परम्पराप्राप्ताः[२], कुलधर्माः[३], प्रणश्यन्ति[४], धर्मे नष्टे सति = कुलधर्मे नष्टे सति[५], कृत्स्नं = ततो अवशिष्टं कृत्स्नमपि समग्रमपि[६], कुलं[७], उत[८], अधर्मोऽभिभवति = अधर्मेण व्याप्नोति[९] ॥ ४० ॥

***त्रि०वि०***— उक्तदोषाचरणे परम्परया महानर्थप्राप्तिमाह **कुलक्षय** इति पञ्चभिः ॥ कुलस्य – पुमात्मककुलस्य क्षये कृते सतीति शेषः । कुलधर्माः – पञ्च महायज्ञादयः । धर्मे – धर्मजाते कृत्स्नं कुलं – शेषं स्त्रीबालात्मकं सर्वकुलम् । अधर्मः – विष्णवनिवेदिताविभक्तान्नभोगादिरूपः ॥ ४० ॥

**गीता**

## अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
## स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४१ ॥

***सा०सं०***— **वार्ष्णेय** वृष्णिकुलोद्भव ॥ ४१ ॥

***अ०प्र०***— **अधर्मेति** ।

हे कृष्ण[१], अधर्माभिभवात्[२], कुलस्त्रियः[३], प्रदुष्यन्ति[४], हे वार्ष्णेय[५], दुष्टासु[६], स्त्रीषु[७], वर्णसङ्करः[८], जायते[९] इत्यन्वयः । ४१ ॥

***त्रि०वि०***— अधर्मकृताभिभवात् – अधर्मेण कृतपराजयात्, वर्णसङ्करः – ब्राह्मणादिवर्णमिश्रीभावः ॥ ४१ ॥

**गीता**

**सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥**

*सा०सं०*— **कुलस्य चेति** । पुत्रपौत्रादिसन्तानस्य चेत्यर्थः । एषां कुलघ्नानां पितरः लुप्तपिण्डाः लुप्तोदकक्रियाश्च सन्तः नरके पतन्ति ॥ ४२ ॥

*भा०र०*— ***अक्षरार्थस्तु***— स एव दोष उच्यते **कुलक्षय इति** ॥ सनातनाः – परम्परागताः । उत – प्रत्युत । अभिभवति – व्याप्नोति । ततश्च अधर्मातिशयवशात् कृष्ण । प्रदुष्यन्ति – दूषिता भवन्ति कुलस्त्रियः ॥ ४०-४२ ॥

*अ०प्र०*— **सङ्करेति** ।

हे कृष्ण ! सङ्करः = कुलस्य[1], कुलघ्नानां[2], च[3], नरकायैव भवति[4], हि = यस्मात्[5], पितरः[6], लुप्तपिण्डोदकक्रियाः[7], तस्मादेषां पितरः[8], नरके पतन्ति[9] इत्यन्वयः ।

हे कृष्ण ! सङ्करः = वर्णसङ्करे जाते सति सङ्करः[1], कुलस्य[2], कुलघ्नानां च = कुलहन्तॄणां च[3], नरकायैव = नरकप्राप्त्यैव भवति[4], हि = यस्मात्[5], पितरः[6], लुप्तपिण्डोदकक्रियाः = लुप्तपिण्डोदकक्रियाः येषां ते तथा[7], तस्मादेषां कुलघ्नानां पितरः[8], नरके[9], पतन्तीत्यर्थः ॥ ४२ ॥

*त्रि०वि०*— विप्रस्त्रीषु शूद्रादितो गर्भसम्भवे विप्ररूपपितॄणां पिण्डादिलोपेन पतनं निश्चितमिति भावः ॥ ४२ ॥

**गीता**

**दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥**

*सा०सं०*— उक्तदोषमुपसंहरति **दोषैरिति द्वाभ्याम्** । **जातिधर्माः** क्षत्रियत्वादि जातिप्रयुक्ता धर्माः । **कुलधर्माश्च** शाश्वताः परम्पराप्राप्ताः ॥ ४३ ॥

*त्रि०वि०*— ननु पञ्चमहायज्ञादिलोपे नरकप्राप्तिः हतकुलस्यास्तु, हन्तॄणां तु तल्लोपाभावात् तत्प्राप्तिः कथमुच्यते इत्यत आह **दोषैरिति** । कुलघ्नानां प्राप्तैरिति शेषः । वर्णसङ्करकारकैरेतै-

रुक्तैर्दोषैर्नरकप्राप्तिर्युक्तैव । स्वधर्मादिलोपाभावेऽपि अन्यधर्मप्रणाशनादपि तत्सम्भवादित्यर्थः । चशब्दो हेतौ । यस्माज्जातिधर्मादयः, तैरुत्साद्यन्ते – प्रणाश्यन्ते तस्मादपीति ॥ ४३ ॥

**गीता**

## उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
## नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

*सा०सं०*— **उत्सन्नकुलधर्माणाम्** उत्सन्नजातिधर्माणां चेत्यपि ज्ञेयम् । **अनुशुश्रुम**—

"प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान् निरयान् यान्ति दारुणान् ॥"

इत्यादि वदद्भिः वृद्धैः श्रुतवन्तः स्मः ॥ ४४ ॥

*भा०र०*— *अक्षरार्थस्तु*— उक्त एव दोष उपसंह्रियते **दोषैरेतैः** इत्यादिद्वाभ्याम् ॥ वर्णसङ्करस्य कारकै-रिति शेषषष्ठ्या समासः । उत्साद्यन्ते – लुप्यन्ते । चकारादाश्रमधर्माश्च ग्राह्याः । **अनुशुश्रुम** श्रुतवन्तः ॥ ४३-४४ ॥

*अ०प्र०*— उक्तदोषमुपसंहरति **दोषैरिति** द्वाभ्याम् ।

तत्र **दोषैरिति** । कुलघ्नानां[१], वर्णसङ्करकारकैः[२], एतैः[३] दोषैः[४], जातिधर्माः[५], शाश्वताः कुलधर्माः[७], चकारेण आश्रमधर्मादयोऽपि[८], उत्साद्यन्ते[९] इत्यन्वयः । उत्साद्यन्ते = लुप्यन्ते इत्यर्थः ॥ ४३ ॥

**उत्सन्नेति** । हे जनार्दन ! शेषान्वयो श्लोकक्रमेण । हे जनार्दन ![१], उत्सन्नकुलधर्माणां = उत्सन्नाः लुप्ताः कुलधर्माः येषां ते तथा, तेषां तथा उत्सन्नजाति, जातिधर्मादीनामित्यपि ग्राह्यम्[२], मनुष्याणां = एतादृशां मानवानां[३], नरके[४], नियतं = शाश्वतं[५], वासो[६], भवतीति[७], अनुशुश्रुम = वयं श्रुतवन्त[८], इत्यर्थः । तदुक्तम्—

"प्रायश्चितमकुर्वाणा पापेषु निरता जनाः ।
अपश्चात्तापिनो कष्टान् नरकान् यान्ति दारुणान् ॥"

इत्यादि वचनेभ्योऽनुशुश्रुमः ॥ ४४ ॥

*त्रि०वि०*— **उत्सन्नेति** । उत्सन्नाः – ''अन्तर्णीतण्यर्थत्वेन'' उत्सादिताः कुलधर्माः यैस्तेषां नरके नियतं वासः । हतकुलस्य तु नरकप्राप्तिमात्रमिति विशेषः । एवमर्थानङ्गीकारे 'सङ्करो नरकायैव कुलघ्नानां कुलस्य च'' इत्युक्त्या नरकप्राप्तावुक्तायां पुनर्नरके नियतं वास इत्युक्तेः पुनरुक्तताप्रसङ्गात् एवमर्थाङ्गीकारे तु अभ्यधिकाशङ्कानिवृत्त्यर्थमिति वक्तुमुचितत्वात् । नेदं स्वमतिकल्पितम्, किन्तु शिष्टेभ्यः श्रुतमित्याह **अनुशुश्रुमेति** ॥ ४४ ॥

**गीता**

**अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।**
**यद् राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥**

*वि०वि०*— यद्यहं कुलक्षयं कुर्यां तदा वर्णसङ्करादिकमहमेव कृतवान् स्याम् । अहो कष्टमापतितम् ॥ ४०–४५ ॥

*सा०सं०*— एवं बन्धुवधस्य दोषहेतुत्वाध्यवसायेन सन्तप्यमानोऽर्जुन आह **अहो बतेति** । **राज्यसुखलोभेन स्वजनं हन्तुं वयमुद्यता** इति यत्तदेतन्**महत्पापं कर्तुं व्यवसिता** निश्चयवन्तः **वयम्** । **अहो बत** महाकष्टमिति ॥ ४५ ॥

*भा०र०*— *अक्षरार्थस्तु*— एवं बन्धुवधाध्यवसायेन सन्तप्यमानेनोच्यते **अहो इति** ॥ स्वजनं हन्तुमुद्यता इति यद् एतन्महत् पापं कर्तुं व्यवसिताः । कर्तरि क्तः । अध्यवसायं कृतवन्तो वयम् । अहो बत अतिकष्टमित्यर्थः ॥ ४५ ॥

*अ०प्र०*— बन्धुवधाध्यवसायेन सन्तप्यमानोऽर्जुनो पुनरप्याह **अहो बतेति** ।

राज्यसुखलोभेन[१], स्वजनं[२], हन्तुम्, उद्यताः[४], इति यत्[५], महत्पापं[६], कर्तुं[७], व्यवसिताः = अध्यवसायं कृतवन्तः[८], वयं[९], अहो[१०], एतत्[११], बत[१२], महत्कष्टम्[१३], इत्यर्थः ॥ ४५ ॥

*त्रि०वि०*— आश्चर्यखेदहेतुकर्मकारिणः स्वान्निन्दयति **अहो इति** । यत् – यस्मात् राज्यसुखलोभेन स्वजनं हन्तुमुद्यताः तस्मात् वयं एते तत्त्वदेवताः धर्मराजादयो वा अहं चेति वयं महत् – नरके नियतवाससाधनत्वात् बृहत् पापं कर्तुं व्यवसिताः – कृतनिश्चयाः एतदहो बत । अहो इत्याश्चर्ये, बतेति खेदे च, महच्छब्देनाश्चर्यकथनं, पापशब्देन खेदकथनम् । अत एव महदिति पृथक्पदम् । अन्यथा कर्मधारये महच्छब्दस्य महेत्यादेशनियमभङ्गप्रसङ्गात् ॥ ४५ ॥

**गीता**

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥**

*सा०सं०*— एवं सन्तप्तः सन् मृतिमेवार्थयमान आह **यदीति** । अकृतप्रतीकारम् **अशस्त्रं** तूष्णीम् आसीनं **मां यदि शस्त्रपाणयो धार्तराष्ट्रा रणे हन्युः** तर्हि तद्धननं **मे क्षेमतरम्** अत्यन्तहितमे वित् । बन्धुवधदोषाभावाद्रणे हननेन गतिसम्भवाच्चेति भावः ॥ ४६ ॥

*भा०र०*— *अक्षरार्थस्तु*— एवं युद्धादुपरमे त्वामेव ते किमिति न हन्युरित्यत इदमुच्यते **यदीति** ॥ अप्रतीकारम् – अकृतप्रतीपम् । अशस्त्रं – न्यस्तशस्त्रम् । तूष्णीं स्थितं मां यदि धार्तराष्ट्रा हन्युः तर्हि तद् हननम्, मे – मम, क्षेमतरम् – अत्यन्तं हितं भवेत् । स्वयं पापानिष्पत्तेरिति भावः ॥ ४६ ॥

*अ०प्र०*— एवमर्जुनो सन्तप्तस्सन् मृत्युमेवाशासानाः पुनरपि किमप्याह **यदि मामप्रतीकारमिति** ।

शस्त्रपाणयः[१], धार्तराष्ट्राः[२], अप्रतीकारं[३], अशस्त्रं[४], माम्[५], रणे[६], यदि[७], हन्युः[८], तत्[९], मे[१०], क्षेमतरं[११], भवेत्[१२] ।

हे जनार्दन ! शस्त्रपाणयः = आयुधहस्ताः[१], धार्तराष्ट्राः = दुर्योधनादयः[२], अप्रतीकारं = अकृतप्रतीकारं तूष्णीं उपविष्टम्[३], अशस्त्रं = शस्त्ररहितं[४], मां[५], रणे = रणभूमौ[६], यदि[७], हन्युः = हनिष्यन्ति[८], तर्हि तत् = हननं[९], मे = मम[१०], क्षेमतरं = अत्यन्तं हितं[११], भवेत् = पापानिष्पत्तेः[१२] ॥ ४६ ॥

*त्रि०वि०*— विपक्षे बाधकमाशङ्क्य परिहरति **यदीति** । धार्तराष्ट्राः – पाप्मानः, असुराः, कौरवा वा, शस्त्रपाणयो भूत्वा, अप्रतीकारं – प्रतियुद्धमकुर्वाणं, अशस्त्रं – शस्त्रहीनं मां रणे हन्युः यदि, तर्हि – तद्धननं मे – मम क्षेमतरं भवेत् । अत्र तरतमप्रयोजनमिदम् । मम हनने क्षेमं, कुलहननदोषाभावात् । तैरपि युद्धपरित्यागे क्षेमतमं, उभयोः क्षेमत्वात् अशस्त्रस्य मम सशस्त्रैर्हनने तु क्षेमतरं शत्रूणां पापलाभादिति बोध्यम् ॥ ४६ ॥

**गीता**

## सञ्जय उवाच—

**एवमुक्त्वाऽर्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥*

***वि०वि०***— तस्माद्बन्धुवधान्मरणमेव वरमित्युक्त्वाऽर्जुनः सशरं चापं विसृज्य दुःखकातर-चित्तो रथस्योपर्युपविवेश । एतद्धृतराष्ट्राय संजयोऽकथयत् ॥ ४७ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्यविद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां प्रथमोऽध्यायः ॥ १ ॥*

***सा०सं०***— ततः किं जातमिति धृतराष्ट्रहार्दं परिहरति **संजय इति** । सङ्ख्ये रणे रथोपस्थे रथमध्ये **उपाविशत्** । कथम् ? शोकेन कम्पितचित्तः सन् **सशरं चापं विसृज्येति** ॥ ४७ ॥

*इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे प्रथमोऽध्यायः ॥ १ ॥*

***भा०र०***— ***अक्षरार्थस्तु***— ततः किं जातमित्यत्र सञ्जयवचनं **सञ्जय उवाचेति** ॥ सङ्ख्ये – युद्धे । सशरं चापं – सज्यबाणं गाण्डीवम्, विसृज्य, शोकेन संविग्नं कम्पितं मानसं यस्य स तथा, रथोपस्थे रथमध्ये, उपाविशदिति ॥ ४७ ॥

*॥ इति गीताक्षरार्थे प्रथमोऽध्यायः ॥*

***अ०प्र०***— ततः किं वृत्तमित्यपेक्षायां सञ्जयो धृतराष्ट्रं प्रति वदति **सञ्जय उवाच एवमुक्त्वा-ऽर्जुनेति** ।

हे धृतराष्ट्र ! तदा हृषीकेशं प्रतीति पूर्वश्लोकादनुवर्तनीयम्, अथ श्लोकक्रमेणान्वयः—

शोकसंविग्नमानसः[१], अर्जुनः[२], सङ्ख्ये[३], एवं[४], उक्त्वा[५], सशरं[६], चापं[७], विसृज्य[८], रथोपस्थे[९], उपाविशत्[१०] इत्यन्वयः ।

शोकसंविग्नमानसः = शोकेन संविग्नं मानसं यस्य सः[१], तथा अर्जुनः[२], सङ्ख्ये संग्रामे[३], हृषीकेशं प्रति, एवं = पूर्वोक्तप्रकारेण[४], उक्त्वा = विज्ञाप्य[५], सशरं = शरेण सहितम्[६], चापं = गाण्डीवम्[७], विसृज्य = रथे स्थापयित्वा[८], रथोपस्थे = रथोपरि[९], उपाविशत् = तूष्णीं स्थितवानित्यर्थः[१०] ॥ ४७ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां प्रथमोऽध्यायः ॥*

***त्रि०वि०*** — सञ्जय उपसंहरन्नाह **एवमिति** ॥ अर्जुनः – जीवः, इन्द्रः, भीमानुजो वा सङ्ख्ये – युद्धे, रथोपस्थे – रथोपर्येव, रथिनः उपवेशनस्थाने उपाविशत् – निषसाद । शेषं सुगमम् ॥

*इति श्रीमद्भगवद्गीतासाग्रप्रथमाध्यायाध्यात्माद्यर्थपञ्चिकायां*
*श्रीमन्नारदानुग्रही पांगरी श्रीनिवासविरचितायां प्रथमोऽध्यायः ॥*



॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ द्वितीयोऽध्यायः

**सञ्जय उवाच—**

**तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥**

*वि०वि०*— ततः किं वृत्तमित्यपेक्षायां **संजय उवाच— तमिति** ॥ १ ॥

*सा०सं०*— ततः किं जातमिति धृतराष्ट्रस्यापेक्षायां संजय उवाच **तं तथेति** । उक्तदिशा कृपयाऽऽ**विष्टम्** एवं विषण्णम् अर्जुनं भगवानुवाच '**कुत**' इत्यादि द्वाभ्यां श्लोकाभ्याम् ॥ १ ॥

*भा०र०*— *अक्षरार्थस्तु*— ततः किं वृत्तमिति धृतराष्ट्रस्याऽकाङ्क्षां सञ्जयोऽपूरयदित्युच्यते **सञ्जय उवाच तं तथेति** ॥ तथा कृपया दृष्ट्वेममित्याद्युक्तप्रकारया आविष्टम् अश्रुपूर्णाकुलेक्षणं नेत्रजलपूर्णे अत एव आकुले ईक्षणे यस्य तं विषीदन्तमर्जुनं प्रति मधुसूदन इदं वाक्यमुवाच । ॥ १ ॥

*अ०प्र०*— ततः किं वृत्तमित्यपेक्षायां सञ्जय आह **तं तथेति** ।

मधुसूदनः[१], अश्रुपूर्णाकुलेक्षणं[२], तथा[३], कृपयाऽऽविष्टं[४], विषीदन्तं[५], तम्[६], अर्जुनम्[७], इदं[८], वाक्यम्[९], उवाच[१०] इत्यन्वयः ।

अन्ते मधुकुलहन्ता मधुसूदनः[१], अश्रुपूर्णाकुलेक्षणं = अश्रुभिः पूर्णे आकुले अक्षिणी यस्य सः अश्रुपूर्णाकुलेक्षणः, तं तथा[२], तथा = पूर्वोक्तप्रकारेण[३], कृपयाऽऽविष्टं = दयया व्याप्तम्[४], अत एव विषीदन्तं = विषादं कुर्वन्तं[५], तं[६], अर्जुनं[७], इदं = वक्ष्यमाणवाक्यम्[८], उवाच = आज्ञापयामास ॥ १ ॥

*त्रि०वि०*— **तमिति** ॥ तथा कृपया – ममताऽसुरावेशनिमित्तकृपया, अश्रुपूर्णे अत एवाकुले – विषयग्रहणासमर्थे ईक्षणे यस्य तम् ॥ १ ॥

**गीता**

**श्रीभगवानुवाच—**

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥**

***वि०वि०***— एवंविधमर्जुनं भगवानुवाच **कुतस्त्वेति द्वाभ्याम्**। हे अर्जुन ! कुतो हेतोः त्वामिदं दुःखमस्थाने समुपस्थितम् । एतदविद्वत्सेवितं परलोकविरोधि अयशस्करं च ॥ २ ॥

***सा०सं०***— हे अर्जुन **कुतो** हेतोरस्त्वां **विषमे** सङ्कटे **इदं कश्मलम् उपस्थितम्** अयं मोहः प्राप्तः । यतः आर्यैरसेवितं **अस्वर्ग्यं** स्वर्गविरोधि अयशस्करं च ॥ २ ॥

***अ०प्र०***— तदेव वाक्यमाह **कुत इति** ।

श्रीभगवानाह— हे अर्जुन ![१], त्वा[२], कुतः = हेतोः[३], विषमे[४], अनार्यजुष्टं[५], अस्वर्ग्यं[६], अकीर्तिकरं च[७], इदं[८], कश्मलं[९], समुपस्थितम्[१०] इत्यन्वयः ।

हे अर्जुन ![१] त्वा[२] कुतः हेतोः[३] विषमे = सङ्कटे[४], अनार्यजुष्टं = आर्यैरसेवितम्[५], अस्वर्ग्यं = स्वर्गविरोधिनं अधर्मं[६], अकीर्तिकरं च = अयशस्करं च[७], इदं कश्मलं = इदं दुःखं, अयं मोहो वा[८,९], समुपस्थितं = सम्यक् उपस्थितं प्राप्तं, यद्वा अयं मोहः प्राप्तः ॥ २ ॥

***त्रि०वि०***— भगवद्वचनमाह **कुत इति** । विषमे – युद्धोपक्रमादसाधारणे काले, कश्मलं – मोहजालं त्वा – त्वां कुतः ममतासुरावेशतः, समुपस्थितं प्राप्तम् । इदं आश्चर्यप्रदं "इ विचित्रे स्मरे पुमान्" इति यादवः । कुत इत्यस्य तसिल्प्रत्ययान्तकिंशब्दाङ्गीकारे विपर्यये पर्यवसानाभावेन आक्षेपार्थानुपपत्तेः । अज्ञात्वा प्रश्ने भगवतः सार्वज्ञ्याभावप्रसङ्गेन, ज्ञात्वा प्रश्ने अग्रे उत्तराभावेन प्रश्नार्थानुपपत्तेश्च । आश्चर्यप्रदत्वकथनेन निन्दने हेतुमाह **अनार्येति** । आर्यसेवितत्वाभावादित्यर्थः । तदसेवने चेहामुत्र चासुखकरत्वरूपहेतुमाह **अस्वर्ग्यमित्यादि** । न स्वर्ग्याः स्वर्गगतोपभोगाः यस्मात् तत्, इह तु अकीर्तिकरम् ॥ २ ॥

**गीता**

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥**

*वि०वि०*— तस्मात् कातर्यं मा गाः । हे पार्थ त्वय्येतन्न युज्यते । हे शत्रुतापन तुच्छं हृद्गत-कातर्यं त्यक्त्वा युद्धायोत्तिष्ठेति ॥ ३ ॥

*सा०सं०*— तस्मात् **क्लैब्यं** कातर्यं **मा स्म गमः** नैव प्राप्नुहि । हे पार्थ **एतद् क्लैब्यं त्वयि नोपपद्यते** योग्यं न भवति । **क्षुद्रं** लाघवकरं **हृदयदौर्बल्यं** कातर्यं **त्यक्त्वा उत्तिष्ठ** उत्थाय सन्नद्धो भव । हे **परन्तप**, परं शत्रुं तापयतीति शत्रुतापन । ''द्विषत्परयोस्तापेः'' (३-२-३९) इति खचि, ''खित्यनव्ययस्य'' (६-३-६६) इति मुमागमः ॥ ३ ॥

*भा०र०*— *अक्षरार्थस्तु*— तदेवोच्यते **श्रीभगवान्** इति द्वाभ्याम् ॥ हे अर्जुन कुतो हेतोस्त्वा त्वां कश्मलं मलिनं क्लैब्यं वा विषमे अस्थाने समुपस्थितम् । एतच्चानार्यजुष्टमविद्वत्सेवितम् अस्वर्ग्य-मधर्म्यम् अकीर्तिकरं परलोकविरोध्ययशस्करं च । तस्मात् क्लैब्यं कातर्यं मा स्म गमः मा गाः त्वयि क्षत्रियवरे एतत् क्लैब्यं नोपपद्यते न न्याय्यम् । हे परन्तप ''द्विषत्परयोस्तापेः'' इति खचि ''खित्यनव्ययस्य'' इति मुमागमः । शत्रूणां सन्तापक, अतो मनसो दौर्बल्यकारणमेतदधैर्यं त्यक्त्वा युद्धायोत्तिष्ठेति ॥ २-३ ॥

*अ०प्र०*— तस्मात् **क्लैब्यमिति** ।

हे पार्थ ![१], क्लैब्यं[२], मा स्म गमः[३], यतः त्वयि[४], एतत्[५], न उपद्यते[६], हे परन्तप ![७], क्षुद्रम्[८], हृदयदौर्बल्यम्[९], त्यक्त्वा[१०], उत्तिष्ठ[११] इत्यन्वयः ।

हे पार्थ ![१], क्लैब्यं = क्लीबत्वं कातर्यं वा[२], मास्मगमः = न प्राप्नुहि[३], यतस्त्वयि[४], एतत् = क्लैब्यं[५], नोपपद्यते = योग्यं न भवति[६], हे परन्तप = हे शत्रुतापन[७], क्षुद्रं = तुच्छम्[८], हृदयदौर्बल्यं = मनोजनितविषादं कातर्यं वा[९], त्यक्त्वा = दूरीकृत्य[१०], उत्तिष्ठ = युद्धायोत्तिष्ठ इत्यर्थः ॥ ३ ॥

*त्रि०वि०*— **क्लैब्यमिति** ॥ स्त्रीलिङ्गममताभिमानित्वेन तद्रूपत्वात् स्वतः पुंरूपत्वाच्च ममताऽसुरः क्लीबः अतः क्लैब्यं – तदसुरभावं माऽगमः स्म – मागच्छ, ''माङ्योगे लङ्पि लोडर्थे, स्मशब्देन तदावेशायोग्यत्वं स्मारयति । तदेव स्पष्टयति **नेति** । एतत्कश्मलं त्वयि नोपपद्यते – न युज्यते, मत्प्रतिबिम्बत्वादिति भावः । अतो निन्दितत्वात् । क्षुद्रं – नीचं, हृदयदौर्बल्यं – मनसोऽनुत्साहरूपं खेदं त्यक्त्वोत्तिष्ठ, युद्धायेति शेषः । अर्जुनं सम्बोधयति **परंतपेति** । शत्रु-दमनेत्यर्थः । अनेन शक्तिसद्भावः सूचितः ॥ यद्वा— सर्वधर्मरहस्यमाज्ञापयति ॥ परम् – आत्मान्यं देहं तप – ''अन्तर्णीतण्यर्थात्'' कर्शयेत्यर्थः । इदं ब्राह्मणधर्मरहस्यं ''ब्राह्मणस्य हि

देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय तपसे चेह'' इत्युक्तेः । परं – शत्रुम् । ''परोरिपरमात्मनोः'' इत्युक्तेः, तप – सन्तापय ''अत्राप्यन्तर्णिच्'' इदं क्षत्रियस्य ''शत्रुसन्तापकृद्राजा भवेद्वै मित्रनन्दन'' इत्युक्तेः । परं – इदं मौल्येन परमिदमपरम् इति, तप – आलोचय ''तप आलोचन'' इति धातोः, इदं वैश्यस्य परीक्षयैव हि तेषां व्यवहारोपपत्तेः । परं – आत्मनः श्रेष्ठं त्रैवर्ण्य तप – सेवस्व ''धातूनामनेकार्थत्वात्'' इदं शूद्रस्य ''शूद्रस्य द्विजशुश्रूषा'' इत्युक्तेः । परं प्रमाणश्रेष्ठं वेदशास्त्रं, तप – आलोचय, इदं ब्रह्मचारिणः, अध्ययनधर्मत्वात् । परं – स्वाश्रमादन्यं आश्रमत्रयं तप – पोषय इदं गृहस्थस्य, त्रिभ्योऽपि वृत्तिदातृत्वात् । परं – केवलं तप – तपः कुरु, इदं वानप्रस्थस्य, शरीरशोषणधर्मत्वात् । परं – परमात्मानं, तप – आलोचय, इदं संन्यासिनः ''यत्सर्वत्र तदीक्षण-मित्युक्तेः । एतन्मन्ये तव क्षत्रियत्वात् गृहस्थत्वाच्च, शत्रुमारणं त्रिवर्गपोषणं च स्वधर्म इति भावः ॥ ३ ॥

**गीता**

## अर्जुन उवाच—

**कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥**

***वि०वि०***— पुनरपि स्नेहकारुण्यधर्मभयाकुलो भगवदुक्तं हितमजानन् अर्जुन उवाच **कथमित्यादिपञ्चभिः श्लोकैः** । हे मधुनामकदैत्यहिंसक ! हे शत्रुनिबर्हण कृष्ण ! वाचाऽपि प्रतिभटीकर्तुमनर्हौ सम्भावनीयौ भीष्मद्रोणौ प्रति युद्धे बाणैः कथं योत्स्यामि ॥ ४ ॥

***सा०सं०***— पुनः स्नेहकारुण्यतया व्याकुलो भगवदुक्तं हितमजानन् अर्जुन उवाच **कथम्** इत्यादि पञ्चभिः श्लोकैः । हे मधुदैत्यघातक शत्रुनिबर्हण । **सङ्ख्ये** युद्धे **भीष्मं द्रोणं कथमहम् इषुभिः** बाणैः प्रतियोत्स्यामि । कुतः यतस्तौ पूजार्हौ पूजनीयौ तत इति ॥ ४ ॥

***भा०र०***— ***अक्षरार्थस्तु***— पुनरपि स्नेहकारुण्यधर्मतयाऽऽकुलेन भगवदुक्तं हितमजानतेव अर्जुनेनोच्यते **कथम्** इत्यादिपञ्चश्लोक्या । सङ्ख्ये – युद्धे प्रतियोत्स्यामि आभिमुख्येन योत्स्ये । पूजार्हाविति हेत्वर्थगर्भं भीष्मद्रोणविशेषणम् ॥ ४ ॥

***अ०प्र०***— नाहं कातरत्वेन युद्धादुपरतोऽस्मि किन्तु युद्धस्य अन्याय्यत्वात् इति अर्जुन उवाच **कथमिति** पञ्चभिः ।

अर्जुनो मधुसूदनं प्रति विज्ञापयति— हे मधुसूदन ![१], अहं[२], भीष्मं प्रति[३], द्रोणं च सम्प्रति[४], सङ्ख्ये[५], इषुभिः[६], कथं योत्स्यामि[८], हे अरिसूदन[९], पूजार्हौ किल[१०] इत्यन्वयः ।

हे मधुसूदन = हे मधुनामकदैत्यहन्तः श्रीकृष्ण ![१], अहं[२], भीष्मं प्रति[३], द्रोणं च सम्प्रति[४], सङ्ख्ये = सङ्ग्रामे[५], इषुभिः = बाणैः[६], कथं = इत्युक्ते भीष्मद्रोणौ पूजार्हौ, यत्र वाचापि योत्स्यामीति वक्तुमनुचितं, तत्र बाणैः कथमित्यर्थः[७], योत्स्यामि = युद्धं करिष्यामि, हे अरिसूदन = अरिं शत्रुं अरिणा चक्रेण सूदयतीति तथा[९], पूजार्हौ किल[१०], तस्मात्कथं योत्स्यामीत्यर्थः ॥ ४ ॥

**गुरूनहत्वा हि महानुभावानिति** । तर्हि तव देहयात्रापि न स्यादिति चेत्तत्राह **गुरूनिति**।

***त्रि०वि०***— पार्थः पुनरप्याक्षिपति ॥ ***अध्यात्मार्थे***— भीष्मं – क्रोधाभिमानिनं रुद्रं, द्रोणं – कामाभिमानिनं प्रद्युम्नम् ॥ ***अंशार्थे***— भीष्मं – द्युवसुं द्रोणं बृहस्पतिम् । ***प्रसिद्धार्थे***— भीष्मं पितामहं, द्रोणं – गुरुं पूजार्हयोरिषुभिः प्रतियोधनमयुक्तमिति भावः ॥ ४ ॥

**गीता**

**गुरूनहत्वा हि महानुभावान्**
**श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।**
**हत्वार्थकामांस्तु गुरूनिहैव**
**भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥**

***वि०वि०***— नचैतद्धनने तदप्राप्तेर्देहनिर्वाहो न स्यादिति शङ्क्यम् । यतो गुरूनहत्वा इह लोके भिक्षान्नमपि भोक्तु श्रेष्ठम् । परलोकदुःखाभावात् । अर्थकामान् गुरून् हत्वा तु तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरेणापसिच्य तेष्वासनेषूपविश्य । तदेतत् परलोकदुःखातिशयितदुःखम् ॥ ५ ॥

***वा०ल०***— 'गुरूनहत्वा हि महानुभावान्' इत्यत्र गुरून् अहत्वा भोक्तुं लोके भैक्षमपि श्रेयः ॥ ५ ॥

***सा०सं०***— ननु चैदद्धहनने राज्याप्राप्तेः देहनिर्वाहो न स्यादित्यत आह **गुरूनिति** । **महानुभावान्** भगवद्भक्त्यादिगुणसम्पन्नान् द्रोणादिगुरूनहत्वा इह लोके **भैक्षं** भिक्षोपलब्धमन्नं **भोक्तुं** श्रेयः वरम् । पारत्रिकदुःखाभावादिति भावः । **हि** यतोऽतो न योत्स्यामीत्यन्वयः । न केवलं तेषां हनने पारत्रिकदुःखम्, किन्तु इहापि अतिदुःखमित्याह **हत्वेति** । अर्थं कामयन्त इत्यर्थकामाः, तान्

**गुरून् हत्वा** तैर्भुज्यमानांस्तानेव **भोगान्** तद्रुधिरेण प्रदिग्धान् प्रकर्षेण लिप्तान् तदीयासनेष्वेवोपविश्य **इह भुञ्जीय** अनुभवेयम् । तदेतत् परलोकदुःखादतिशयितं दुःखमिति भावः ॥ ५ ॥

***भा०र०— अक्षरार्थस्तु—*** नन्वेतदहनने राज्याप्राप्तेर्देहनिर्वाहो न स्यादित्यत उच्यते **गुरूनहत्वेति** । यतो गुरूनहत्वा इह लोके भैक्ष्यं – भिक्षान्नमपि भोक्तुं श्रेयः प्रशस्यतरम् । परलोकदुःखाभावात् । अर्थकामान् – अर्थकामुकान् गुरून् हत्वा तु तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरप्रदिग्धानिहैव भुञ्जीय – अनुभवेयम् । नामुत्र पुनर्मोक्षम् ॥ ५ ॥

***अ०प्र०—*** हि[१], यस्मात् गुरून्[२], हत्वा[३], इहैव[४], रुधिरप्रदिग्धान्[५], अर्थकामान्[६], भोगान्[७], भुञ्जीय[८], किन्तु तस्मात्[९], महानुभावान्[१०], गुरून्[११], अहत्वा[१२], इह लोके[१३], भैक्ष्यमपि[१४], भोक्तुं[१५], श्रेयः[१६] इत्यन्वयः ।

हि = न केवलं परत्र दुःखं, इहैव तु नरकदुःखमनुभवेयं यस्मात्[१], गुरून् = द्रोणादीन्[२], हत्वा = गुरुवधं कृत्वा[३], इहैव = इह लोके एव[४], रुधिरप्रदिग्धान् = तेषां गुर्वादीनां रुधिरेण प्रकर्षेण लिप्तान्[५], अर्थकामान् = अर्थश्च कामश्च अर्थकामौ, तदात्मकान्[६], भोगान् = राज्यस्त्रियादिभोगान्[७], भुञ्जीय = तैः भुज्यमानत्वादाश्नीयां[८], तु = तस्मात्[९], महानुभावान्[१०], गुरून् द्रोणादीन्[११], अहत्वा = परलोकविरुद्धो गुरुवधमकृत्वा[१२], इह लोके[१३], भैक्ष्यमपि भिक्षान्नमपि[१४], भोक्तुं[१५], श्रेयः = उचितम्[१६] ॥

यद्वा अर्थकामानिति गुरूणां विशेषणं अर्थतृष्णाकुलत्वादेते द्रोणादयो युद्धान्न निवर्तेरन् तस्मादेतद्वधः प्रसज्यत एवेत्यर्थः ॥

तदेव युधिष्ठिरं प्रति भीष्मवचनम्—

"अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ।" इति ॥ ५ ॥

***त्रि०वि०—*** क्षत्रियस्य निषिद्धयोरपि गुरुहिंसाभिक्षयोः कदाचित्प्राप्तौ किमेकतरं विधेयमिति संशयस्य विशेषबलेन सिद्धान्तमभिधायापि पुनः सन्देहमाह **गुरूनिति** ॥ ***अध्यात्मार्थे—*** हिमहानुभावानिति पदं, हिमं हन्तीति हिमहा – अग्निः "अग्निर्हिमस्य भेषजम्" इति श्रुतेः, तदुपलक्षितज्योतिरहः शुक्लादेरपि ग्रहणम्, तं अनुभावयन्ति – ज्ञापयन्तीति तान् – मोक्षमार्गोपदेशिकानिति यावत् । वक्ष्यति च "अग्निर्ज्योतिः" इत्यादि । तान् गुरून् हत्वा इह लोके – अस्मिन्देहे

अर्जुनो मधुसूदनं प्रति विज्ञापयति— हे मधुसूदन ![१], अहं[२], भीष्मं प्रति[३], द्रोणं च सम्प्रति[४], सङ्ख्ये[५], इषुभिः[६], कथं योत्स्यामि[७], हे अरिसूदन[८], पूजार्हौ किल[१०] इत्यन्वयः ।

हे मधुसूदन = हे मधुनामकदैत्यहन्तः श्रीकृष्ण ![१], अहं[२], भीष्मं प्रति[३], द्रोणं च सम्प्रति[४], सङ्ख्ये = सङ्ग्रामे[५], इषुभिः = बाणैः[६], कथं = इत्युक्ते भीष्मद्रोणौ पूजार्हौ, यत्र वाचापि योत्स्यामीति वक्तुमनुचितं, तत्र बाणैः कथमित्यर्थः[७], योत्स्यामि = युद्धं करिष्यामि, हे अरिसूदन = अरिं शत्रुं अरिणा चक्रेण सूदयतीति तथा[९], पूजार्हौ किल[१०], तस्मात्कथं योत्स्यामीत्यर्थः ॥ ४ ॥

**गुरूनहत्वा हि महानुभावानिति** । तर्हि तव देहयात्रापि न स्यादिति चेत्तत्राह **गुरूनिति**।

***त्रि०वि०***— पार्थः पुनरप्याक्षिपति ॥ ***अध्यात्मार्थे***— भीष्मं – क्रोधाभिमानिनं रुद्रं, द्रोणं – कामाभिमानिनं प्रद्युम्नम् ॥ ***अंशार्थे***— भीष्मं – द्युवसुं द्रोणं बृहस्पतिम् । ***प्रसिद्धार्थे***— भीष्मं पितामहं, द्रोणं – गुरुं पूजार्हयोरिषुभिः प्रतियोधनमयुक्तमिति भावः ॥ ४ ॥

**गीता**

**गुरूनहत्वा हि महानुभावान्**
**श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।**
**हत्वार्थकामांस्तु गुरूनिहैव**
**भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥**

***वि०वि०***— नचैतद्धनने तदप्राप्तेर्देहनिर्वाहो न स्यादिति शङ्क्यम् । यतो गुरूनहत्वा इह लोके भिक्षान्नमपि भोक्तु श्रेष्ठम् । परलोकदुःखाभावात् । अर्थकामान् गुरून् हत्वा तु तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरेणापसिच्य तेष्वासनेषूपविश्य । तदेतत् परलोकदुःखातिशयितदुःखम् ॥ ५ ॥

***वा०ल०***— 'गुरूनहत्वा हि महानुभावान्' इत्यत्र गुरून् अहत्वा भोक्तुं लोके भैक्षमपि श्रेयः ॥ ५ ॥

***सा०सं०***— ननु चैदद्धहनने राज्याप्राप्तेः देहनिर्वाहो न स्यादित्यत आह **गुरूनिति** । **महानुभावान्** भगवद्भक्त्यादिगुणसम्पन्नान् द्रोणादिगुरूनहत्वा इह लोके **भैक्षं** भिक्षोपलब्धमन्नं **भोक्तुं** श्रेयः वरम् । पारत्रिकदुःखाभावादिति भावः । **हि** यतोऽतो न योत्स्यामीत्यन्वयः । न केवलं तेषां हनने पारत्रिकदुःखम्, किन्तु इहापि अतिदुःखमित्याह **हत्वेति** । अर्थं कामयन्त इत्यर्थकामाः, तान्

**गुरून् हत्वा** तैर्भुज्यमानांस्तानेव **भोगान्** तद्रुधिरेण प्रदिग्धान् प्रकर्षेण लिप्तान् तदीयासनेष्वेवोपविश्य **इह भुञ्जीय** अनुभवेयम् । तदेतत् परलोकदुःखादतिशयितं दुःखमिति भावः ॥ ५ ॥

***भा०र०***— ***अक्षरार्थस्तु***— नन्वेतदहनने राज्याप्राप्तेर्देहनिर्वाहो न स्यादित्यत उच्यते **गुरूनहत्वेति** । यतो गुरूनहत्वा इह लोके भैक्ष्यं – भिक्षान्नमपि भोक्तुं श्रेयः प्रशस्यतरम् । परलोकदुःखाभावात् । अर्थकामान् – अर्थकामुकान् गुरून् हत्वा तु तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरप्रदिग्धानिहैव भुञ्जीय – अनुभवेयम् । नामुत्र पुनर्मोक्षम् ॥ ५ ॥

***अ०प्र०***— हि[१], यस्मात् गुरून्[२], हत्वा[३], इहैव[४], रुधिरप्रदिग्धान्[५], अर्थकामान्[६], भोगान्[७], भुञ्जीय[८], किन्तु तस्मात्[९], महानुभावान्[१०], गुरून्[११], अहत्वा[१२], इह लोके[१३], भैक्ष्यमपि[१४], भोक्तुं[१५], श्रेयः[१६] इत्यन्वयः ।

हि = न केवलं परत्र दुःखं, इहैव तु नरकदुःखमनुभवेयं यस्मात्[१], गुरून् = द्रोणादीन्[२], हत्वा = गुरुवधं कृत्वा[३], इहैव = इह लोके एव[४], रुधिरप्रदिग्धान् = तेषां गुर्वादीनां रुधिरेण प्रकर्षेण लिप्तान्[५], अर्थकामान् = अर्थश्च कामश्च अर्थकामौ, तदात्मकान्[६], भोगान् = राज्यस्त्रियादिभोगान्[७], भुञ्जीय = तैः भुज्यमानत्वादाश्नीयां[८], तु = तस्मात्[९], महानुभावान्[१०], गुरून् द्रोणादीन्[११], अहत्वा = परलोकविरुद्धो गुरुवधमकृत्वा[१२], इह लोके[१३], भैक्ष्यमपि भिक्षान्नमपि[१४], भोक्तुं[१५], श्रेयः = उचितम्[१६] ॥

यद्वा अर्थकामानिति गुरूणां विशेषणं अर्थतृष्णाकुलत्वादेते द्रोणादयो युद्धान्न निवर्तेरन् तस्मादेतद्वधः प्रसज्यत एवेत्यर्थः ॥

तदेव युधिष्ठिरं प्रति भीष्मवचनम्—

"अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ।" इति ॥ ५ ॥

***त्रि०वि०***— क्षत्रियस्य निषिद्धयोरपि गुरुहिंसाभिक्षयोः कदाचित्प्राप्तौ किमेकतरं विधेयमिति संशयस्य विशेषबलेन सिद्धान्तमभिधायापि पुनः सन्देहमाह **गुरूनिति** ॥ ***अध्यात्मार्थे***— हिमहानुभावानिति पदं, हिमं हन्तीति हिमहा – अग्निः "अग्निर्हिमस्य भेषजम्". इति श्रुतेः, तदुपलक्षितज्योतिरहः शुक्लादेरपि ग्रहणम्, तं अनुभावयन्ति – ज्ञापयन्तीति तान् – मोक्षमार्गोपदेशिकानिति यावत् । वक्ष्यति च "अग्निर्ज्योतिः" इत्यादि । तान् गुरून् हत्वा इह लोके – अस्मिन्देहे

भैक्ष्यं – याचितसुकृतफलं भोक्तुं श्रेयः – उचितम् । निषिद्धयोर्हिंसाप्रतिग्रहयोर्मध्ये दुष्टहिंसाया औचित्येऽपि सद्धिंसापेक्षया प्रतिग्रहस्यैवौचित्यमिति भावः । अत्र न भैक्ष्यभोजने तात्पर्यं किन्तु गुर्वहिंसायाम् ॥ ***अंशार्थे***— गुरून् – अर्जितान्, अहिमहानुभावान् – अहिः – वृत्रः ''व्यूहवृन्दे प्यहिर्वृत्रे'' इत्यमरः, महानुभावः – महः – यज्ञोत्सवं प्रति अनुगतः भावः – विष्णुर्यस्य सबलिः ''महउद्धवउत्सवः'' इत्यमरः, ''भूतकृद्भूतभृद्भावः'' इत्युक्तेः, आद्यर्थे बहुवचनम्, तान् अहत्वा न शरणं गत्वा ''हनहिंसागत्योः'' इति धातोः । इह लोके – स्वर्गे । भैक्ष्यं – दध्यङ्ङृषये भिक्षितं वज्रं, उपेन्द्राय भिक्षितं बल्यधीनं राज्यं चेत्यर्थः । भोक्तुं श्रेयः । अत्रापि न भैक्ष्यभोजने तात्पर्यं किन्तु शत्रोरशरणागतौ ॥ ***प्रसिद्धार्थे***— महानुभावान् – महासामर्थ्यवन्तः । यद्वा— गुरून् द्रोणादीन्, महानुभावान् – भीष्मादीन्, अहत्वा, इह लोके – भुवि, भैक्ष्यं – भिक्षितान्नं भोक्तुं श्रेयो वेत्येका कोटिः ॥ अपरामाह **हत्वेति** ॥ पूर्वार्धगतोऽपिशब्दः अत्र विकल्पार्थे योज्यः ॥ अपि वेत्यर्थः ॥ ***अध्यात्मार्थे***— अर्थकामान् – अर्थकामरूपपुमर्थान् प्रति गुरून् – गुणान्, रुधिर-प्रदिग्धान् रुधिरेण – शोणितेन प्रकर्षतो दिग्धाः स्त्रीदेहाः ''शोणितातिरेके स्त्री भवति'' इति वचनात्, ते सन्त्येषामिति ''अर्शआद्यच्'' स्त्रीरूपानज्ञानिन इति यावत् ॥ हत्वा – ज्ञात्वा ''गत्यर्थानां ज्ञानार्थत्वात्'' । इह – अस्मिन् शरीर एव, भोगान् – ईशप्रापितानिति शेषः । भुञ्जीय – भोक्ष्ये ॥ ***अंशार्थे***— अर्थकामान् – मातुलासुरार्थकामवतो गुरून् – विश्वरूपादीन् । रुधिर-प्रदिग्धान् कृत्वेति शेषः । हत्वा च इहैव भोगान् स्वयत्नार्जितभोगान् भुञ्जीय ॥ ***प्रसिद्धार्थे***— आर्थकामान् – आ – ईषत्, उदरपूर्तिमितत्वात्, स्वल्पमर्थं कामयानान् गुरून् – द्रोणादीन्, हत्वा इहैव – अत्रैव, रुधिरप्रदिग्धान् गुर्वादिकृतक्षतजमिश्रितान्, भोगान् भुञ्जीय इदं श्रेयो वेत्यपरा कोटिः । प्रतिग्रहापेक्षया राज्यभोगार्थमल्पार्थकामनया वैष्णवद्वेष्टृत्वेन दुष्टहननमेव श्रेयस्करमिति भावः । एवं समानोभयकोटिकत्वात् संशय इत्याशयः ॥ ५ ॥

**गीता**

**न चैतद्विद्मः कतरन्नो गरीयो**
**यद्वा जयेम यदि वा नो जयेयुः ।**
**यानेव हत्वा न जिजीविषाम-**
**स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥**

***वि०वि०***— किञ्च विजयोऽपि सन्दिग्धः । द्वयोः सेनयोर्मध्ये नोऽस्माकं कतरत् किंनाम गरीयः । अधिकतरं भविष्यतीति वयं न विद्मः । किं तत् । यद्वा एतान् वयं जेष्यामः नो अस्मानेते जेष्यन्तीति । किञ्च यानेव हत्वा जीवितुं नेच्छाम एव । एते सम्मुखेऽवस्थिताः । अतो जयपराजयौ तुल्यावेव ॥ ६ ॥

***वा०ल०***— 'न चैतद्विद्मः' इत्यत्र तान् वयं वा जयेम इति यत्, ते नः अस्मान् जयेयुरिति वा यत्, एतत् कतरत् गरीयः इति न विद्मः । अस्माकं गुरुपितामहवधोऽप्यनुचितः, भीष्मद्रोणादीनां पौत्रशिष्यवधोऽप्यनुचित इति भावः ॥ ६ ॥

***सा०सं०***— पापमङ्गीकृत्य युद्धकरणेऽपि जयः सन्दिग्ध एवेत्याह **न चैतदिति** । द्वयोर्मध्ये नोऽस्माकं **कतरत्** किन्नाम **गरीयः** अधिकतरं भविष्यतीति **न विद्मः** । तदेव द्वयमाह **यद्वेति** । एतान् **वयं जयेम** जेष्यामः । यदि वा **नोऽस्मानेते जयेयुः** जेष्यन्तीति । किञ्चास्माकं जयोऽपि पराजय एव फलत (बुद्ध्यते) इत्याह **यानेवेति** । यानेव हत्वा जीवितुं नेच्छामः **त** एव **धार्तराष्ट्राः** सम्मुखे **अवस्थिताः** तस्मात् ॥ ६ ॥

***भा०र०— अक्षरार्थस्तु***— क्षत्रियाणां युद्धे जयेन भोगानुभव एव श्रेयस्कर इत्यत उच्यते **न चैतद् इति** ॥ किं युद्धमेव गुर्वादिवधभूयिष्ठमपि स्ववृत्तिरिति श्रेयः, किं वा हिंसाशून्यतया भैक्ष्यमेवेत्यनयोः कतरद् गरीय इति न विजानीमः । किञ्च किमुभयेषां साम्यमेव स्यात्, किं वा शत्रून् जित्वा वयमतिशयीमहीति, आहोस्विदस्मान् जित्वा त एवातिशयीरन्निति सन्दिग्धा युद्धे जयस्थितिः । यदि वा वयं जयेम यदि वाऽस्मांस्ते जयेयुरिति । कथञ्चिज्जातोऽपि विजयो न फलवानस्माकं, यान् बन्धून् हत्वा वयं जीवितुं नेच्छामस्त एव दुर्योधनादयो युद्धस्य प्रमुखेऽवस्थिताः । कथं तानेतान् हत्वा जीवाम इति हृदयम् ॥ ६ ॥

***अ०प्र०***— यद्यप्यधर्मं अङ्गीकरिष्यामः तथापि किमस्माकं जयः पराजयो वा भवेदिति न ज्ञायत इत्यत आह **न चेति** ।

एतान्[१], नः[२], गरीयः[३], कतरत्[४], न[५], च[६], विद्मः[७], यद्वा[८], वयं[९], एतान्[१०], जयेम[११], यदि[१२], वा[१३], न[१४], एते[१५], जयेयुः[१६], यान्[१७], एव[१८], हत्वा[१९], न[२०], जिजीविषामः[२१], ते[२२], धार्तराष्ट्राः[२३], प्रमुखे[२४], अवस्थिताः[२५] इत्यन्वयः ।

भैक्ष्यं – याचितसुकृतफलं भोक्तुं श्रेयः – उचितम् । निषिद्धयोर्हिंसाप्रतिग्रहयोर्मध्ये दुष्टहिंसाया औचित्येऽपि सद्धिंसापेक्षया प्रतिग्रहस्यैवौचित्यमिति भावः । अत्र न भैक्ष्यभोजने तात्पर्यं किन्तु गुर्वहिंसायाम् ॥ ***अंशार्थे***— गुरून् – अर्जितान्, अहिमहानुभावान् – अहिः – वृत्रः "व्यूहवृन्दे प्यहिर्वृत्रे" इत्यमरः, महानुभावः – महः – यज्ञोत्सवं प्रति अनुगतः भावः – विष्णुर्यस्य सबलिः "महउद्धवउत्सवः" इत्यमरः, "भूतकृद्भूतभृद्भावः" इत्युक्तेः, आद्यर्थे बहुवचनम्, तान् अहत्वा न शरणं गत्वा "हनहिंसागत्योः" इति धातोः । इह लोके – स्वर्गे । भैक्ष्यं – दध्यङ्ऋषये भिक्षितं वज्रं, उपेन्द्राय भिक्षितं बल्यधीनं राज्यं चेत्यर्थः । भोक्तुं श्रेयः । अत्रापि न भैक्ष्यभोजने तात्पर्यं किन्तु शत्रोरशरणागतौ ॥ ***प्रसिद्धार्थे***— महानुभावान् – महासामर्थ्यवन्तः । यद्वा— गुरून् द्रोणादीन्, महानुभावान् – भीष्मादीन्, अहत्वा, इह लोके – भुवि, भैक्ष्यं – भिक्षितान्नं भोक्तुं श्रेयो वेत्येका कोटिः ॥ अपरामाह **हत्वेति** ॥ पूर्वार्धगतोऽपिशब्दः अत्र विकल्पार्थे योज्यः ॥ अपि वेत्यर्थः ॥ ***अध्यात्मार्थे***— अर्थकामान् – अर्थकामरूपपुमर्थान् प्रति गुरून् – गुणान्, रुधिर-प्रदिग्धान् रुधिरेण – शोणितेन प्रकर्षतो दिग्धाः स्त्रीदेहाः "शोणितातिरेके स्त्री भवति" इति वचनात्, ते सन्त्येषामिति "अर्शआद्यच्" स्त्रीरूपानज्ञानिन इति यावत् ॥ हत्वा – ज्ञात्वा "गत्यर्थानां ज्ञानार्थत्वात्" । इह – अस्मिन् शरीर एव, भोगान् – ईशप्रापितानिति शेषः । भुञ्जीय – भोक्ष्ये ॥ ***अंशार्थे***— अर्थकामान् – मातुलासुरार्थकामवतो गुरून् – विश्वरूपादीन् । रुधिर-प्रदिग्धान् कृत्वेति शेषः । हत्वा च इहैव भोगान् स्वयत्नार्जितभोगान् भुञ्जीय ॥ ***प्रसिद्धार्थे***— आर्थकामान् – आ – ईषत्, उदरपूर्तिमितत्वात्, स्वल्पमर्थं कामयानान् गुरून् – द्रोणादीन्, हत्वा इहैव – अत्रैव, रुधिरप्रदिग्धान् गुर्वादिकृतक्षतजमिश्रितान्, भोगान् भुञ्जीय इदं श्रेयो वेत्यपरा कोटिः । प्रतिग्रहापेक्षया राज्यभोगार्थमल्पार्थकामनया वैष्णवद्वेष्टृत्वेन दुष्टहननमेव श्रेयस्करमिति भावः । एवं समानोभयकोटिकत्वात् संशय इत्याशयः ॥ ५ ॥

**गीता**

**न चैतद्विद्मः कतरन्नो गरीयो**
**यद्वा जयेम यदि वा नो जयेयुः ।**
**यानेव हत्वा न जिजीविषाम-**
**स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥**

***वि०वि०***— किञ्च विजयोऽपि सन्दिग्धः । द्वयोः सेनयोर्मध्ये नोऽस्माकं कतरत् किंनाम गरीयः । अधिकतरं भविष्यतीति वयं न विद्मः । किं तत् । यद्वा एतान् वयं जेष्यामः नो अस्मानेते जेष्यन्तीति । किञ्च यानेव हत्वा जीवितुं नेच्छाम एव । एते सम्मुखेऽवस्थिताः । अतो जयपराजयौ तुल्यावेव ॥ ६ ॥

***बा०ल०***— 'न चैतद्विद्मः' इत्यत्र तान् वयं वा जयेम इति यत्, ते नः अस्मान् जयेयुरिति वा यत्, एतत् कतरत् गरीयः इति न विद्मः । अस्माकं गुरुपितामहवधोऽप्यनुचितः, भीष्मद्रोणादीनां पौत्रशिष्यवधोऽप्यनुचित इति भावः ॥ ६ ॥

***सा०सं०***— पापमङ्गीकृत्य युद्धकरणेऽपि जयः सन्दिग्ध एवेत्याह **न चैतदिति ।** द्वयोर्मध्ये नोऽस्माकं **कतरत्** किन्नाम **गरीयः** अधिकतरं भविष्यतीति **न विद्मः** । तदेव द्वयमाह **यद्वेति ।** एतान् **वयं जयेम** जेष्यामः । यदि वा **नोऽस्मानेते जयेयुः** जेष्यन्तीति । किञ्चास्माकं जयोऽपि पराजय एव फलत (बुद्ध्यते) इत्याह **यानेवेति ।** यानेव हत्वा जीवितुं नेच्छामः **त** एव **धार्तराष्ट्राः** सम्मुखे **अवस्थिताः** तस्मात् ॥ ६ ॥

***भा०र०— अक्षरार्थस्तु***— क्षत्रियाणां युद्धे जयेन भोगानुभव एव श्रेयस्कर इत्यत उच्यते **न चैतद् इति** ॥ किं युद्धमेव गुर्वादिवधभूयिष्ठमपि स्ववृत्तिरिति श्रेयः, किं वा हिंसाशून्यतया भैक्ष्यमेवेत्यनयोः कतरद् गरीय इति न विजानीमः । किञ्च किमुभयेषां साम्यमेव स्यात्, किं वा शत्रून् जित्वा वयमतिशयीमहीति, आहोस्विदस्मान् जित्वा त एवातिशयीरन्निति सन्दिग्धा युद्धे जयस्थितिः । यदि वा वयं जयेम यदि वाऽस्मांस्ते जयेयुरिति । कथञ्चिज्जातोऽपि विजयो न फलवानस्माकं, यान् बन्धून् हत्वा वयं जीवितुं नेच्छामस्त एव दुर्योधनादयो युद्धस्य प्रमुखेऽवस्थिताः । कथं तानेतान् हत्वा जीवाम इति हृदयम् ॥ ६ ॥

***अ०प्र०***— यद्यप्यधर्मं अङ्गीकरिष्यामः तथापि किमस्माकं जयः पराजयो वा भवेदिति न ज्ञायत इत्यत आह **न चेति ।**

एतान्[१], नः[२], गरीयः[३], कतरत्[४], न[५], च[६], विद्मः[७], यद्वा[८], वयं[९], एतान्[१०], जयेम[११], यदि[१२], वा[१३], न[१४], एते[१५], जयेयुः[१६], यान्[१७], एव[१८], हत्वा[१९], न[२०], जिजीविषामः[२१], ते[२२], धार्तराष्ट्राः[२३], प्रमुखे[२४], अवस्थिताः[२५] इत्यन्वयः ।

एतान् = युद्धाकरणयोर्द्वयोर्मध्ये[१], नः = अस्माकं[२], गरीयः = अधिकतरवरिष्ठं[३], न विद्मः, कतरत् = श्रेयः[४], भविष्यतीति न[५], च[६], विद्मः[७], यद्वा = अथवा[८], वयं[९], एतान् जयेम = जेष्यामः[११], यदि वा = अथवा[१२,१३], नः = अस्मान्[१४], एते जयेयुः = जेष्यन्ति[१६], इति वा न विद्मः, यानेव हत्वा न जिजीविषामः = जीवितुं नेच्छामः[२१], ते एव = एते[२२], धार्तराष्ट्राः = दुर्योधनादयः[२३], प्रमुखे = संमुखे[२४], अवस्थिताः[२५] इत्यन्वयः ।

तथा च तद्धननेन यो जयः सम्पाद्यः स पराजयतुल्य एव । वीरस्य अबलबन्धुवधो लोकनिन्द्यत्वादन्याय्यत्वाच्च ॥ ६ ॥

***त्रि०वि०***— तत्संशयापनोदार्थं पृच्छति **न चेति** । नः अस्माकं कतरत् – उक्तोभय-कोट्योर्मध्ये कतमं, गरीयः – श्रेयस्करं एतत् वयं न विद्मः – न जानीमः । भुञ्जीयेत्यनेन पूर्वमेकवचनस्य प्रकृतत्वेऽपि अत्र विद्म इत्यादि बहुवचनं न केवलमहं न वेद्मि किन्तु एते गुरवोऽपि न विन्दन्ति किं पुनर्मम ज्ञानाभावः इत्येतदर्थं बोध्यम् । किञ्च यद्वा यदि वयं तान् जयेम तर्हि श्रेयो वा । अथवा । ते – रिपवोऽस्मान् यदि जयेयुः तर्हि श्रेयो वेत्येतदपि न विद्मः इत्यर्थ-ज्ञापकश्च । ननु जीवनसाधनस्य जयस्यैव सर्वाकाङ्क्षितत्वाच्छ्रेयस्करत्वमिति चेन्नेत्याह **यानेव हत्वेति** ॥ ***अध्यात्मार्थे***— वयं न जिजीविषामः – जीवितुमिच्छामः । तर्हि किमित्यत आह त्वेति । त्वा – त्वां प्रति, याने – प्रापणे मामिति शेषः, वह – आवह इदमेवेच्छामीत्यर्थः । ननु त्वया स्वस्य गतिः प्रार्थिता बहुवचनप्राप्तगुर्वादीनां तु का गतिरित्यत आह त इति । ते – तव प्रमुखे – प्रसृतमुखे धार्तराष्ट्राः – पाप्मानः अवस्थिताः । वक्ष्यति च ''वक्त्राणि ते त्वरमाणा-विशन्ति दंष्ट्राकरालानि भयानकानि'' इति भयानकत्वसूचकप्रशब्देनैव तेषां दुर्गतिः सूचितेति भावः ॥ ***अंशार्थे***— धार्तराष्ट्राः – असुराः, ते – तव, प्रमुखे – अग्रे 'अमर्यादये'ति यावत् । व – साम्येन ''व वा यथा तथैवेवं साम्ये'' इत्यमरः । याने – वाहने अवस्थिताः । तानिति शेषः ॥ हत्वा – ज्ञात्वा दृष्ट्वेति यावत् । न जिजीविषामः – तद्वधं विना मुमूर्षाम इति भावः ॥ ***प्रसिद्धार्थे***— यान् – धार्तराष्ट्रान् हत्वा वयमेव न जिजीविषामः, त एव धार्तराष्ट्राः प्रमुखे अवस्थिताः तस्मात् जयोऽपि पराजयतुल्य इति भावः । यद्वा— गुरूनहत्वा धार्तराष्ट्रहननमेव कार्यमित्यत आह **यानिति** । यान् द्रोणादीन् हत्वा न जिजीविषामः ते द्रोणादयः, धार्तराष्ट्राः ''सप्तसु प्रथमा'' इति सूत्रात्, धार्तराष्ट्राणां प्रमुखे – अग्रे अवस्थिताः अतस्तद्वधं विना धार्तराष्ट्र-हननमशक्यमिति भावः ॥ ६ ॥

**गीता**

**कार्पण्यदोषोपहतस्वभावः**
**पृच्छामि त्वां धर्मसम्मूढचेताः ।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे**
**शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥**

*वि०वि०*— तस्माद्बन्धुवात्सल्यकुलक्षयकृतदोषशङ्काभिहतशौर्यलक्षणस्वभावो धर्मे सन्दिग्धमनाः अहं त्वां पृच्छामि । मे निश्चितम् । तन्मां शाधि शिक्षय । मम किमपि न प्रतिभाति ॥ ७ ॥

*वा०ल०*— 'न हि प्रपश्यामि' इत्यत्र सुराणामाधिपत्यं राज्यं च अवाप्यापि, इन्द्रियाणामुच्छोषणं, मम शोकं गुरुवधजनितशोकं यदपनुद्यात् तन्न हि प्रपश्यामीति योजना ॥ ७ ॥

*सा०सं०*— कार्पण्यदोषेण एतान् हत्वा कथं जीविष्यामः इति कृपणतादोषेणाभिभूतशौर्यलक्षणस्वभावः । **धर्मसम्मूढचेताः** धर्मे सम्मूढं सन्दिग्धं चेतो यस्य स तथोक्तः । तादृशः **अहम् त्वा** त्वाम् **पृच्छामि यच्छ्रेयः स्यात्** भिक्षाटनयुद्धयोर्मध्ये यच्छ्रेयः स्यात् **निश्चितं तन्मे ब्रूहि** । किञ्चाहं **ते शिष्यः** शासनार्हः । अतः **त्वां प्रपन्नं** शरणागतं **मां शाधि** शिक्षय ॥ ७ ॥

*भा०र०*— ***अक्षरार्थस्तु***— तस्मात् कार्पण्यम् – एतान् हत्वा कथं जीविष्याम इति दैन्यं, तच्च दोषश्च – कुलक्षयकृतः ताभ्यामुपहतः – अभिभूतः स्वभावः – शौर्यलक्षणः यस्य सः, धर्मे सन्दिग्धमना अहं त्वां पृच्छामि । मे यन्निश्चितं श्रेयः तद् ब्रूहि । अहं ते शिष्यः – शासनार्हः, अतस्त्वां प्रपन्नं – शरणं गतं मां शाधि – शिक्षय ॥ ७ ॥

*अ०प्र०*— तस्मात् **कार्पण्येति** ।

कार्पण्यदोषोपहतस्वभावः[१], अत एव धर्मसम्मूढचेतः सन्[२], अहं[३], त्वां[४], पृच्छामि[५], तस्मात् मे[६], यत्[७], निश्चितं[८], श्रेयः[९], स्यात्[१०], तत्[११], ब्रूहि[१२], किञ्च अहं[१३], ते[१४], शिष्यः[१५], अतः त्वां[१६], प्रपन्नं[१७], मां[१८], शाधि[१९] इत्यन्वयः ।

कार्पण्यदोषोपहतस्वभावः एतान् हत्वा कथं जीविष्यामः, इति कार्पण्यं कुलक्षयकृतदोषश्च ताभ्यां उपहतः अभिभूतः स्वभावः शौर्यादिलक्षणो यस्य स तथा[१], अत एव धर्मसंमूढचेताः =

धर्मे संमूढं चेतो यस्य सः युद्धं त्यक्त्वा भिक्षाटनं वा क्षत्रियस्य धर्मः उत युद्धं कृत्वा राज्यपरिपालनं धर्मो वेति सन्दिग्धचित्तस्सन्[४], अहं, त्वां, पृच्छामि = प्रश्नं करोमि[५], तस्मात् मे = मम[६], यत् निश्चितं = निश्चयात्मकम्[८], श्रेयः स्यात् = युक्तं भवेत्[९,१०], तत् ब्रूहि = बोधय[११], किञ्च अहं ते शिष्यः = शासनार्हः[१३,१४,१५], अतः त्वां प्रपन्नं = शरणागतं[१७], मां[१८], शाधि = शिक्षय[१९], त्वमेव विचार्य यद्युक्तं तत् कुर्विति भावः ॥ ७ ॥

*त्रि०वि०*— नन्वास्तिकानां भक्तिमतां च संशयापनोदनपटुज्ञानं सुलभमेवेत्यत आह **कार्पण्येति** ॥ ***अध्यात्मार्थे***— कृपणो – ममताऽसुरः, तदीयः कार्पण्यः स चासौ दोषश्च तेनोपहतो – नष्टः – यः स्वभावः स्वः – स्वतन्त्रो भगवान् "स्वातन्त्र्यात् स्व इति प्रोक्त" इत्युक्तेः, तस्य भावः स्वभावः – सद्भावो भक्तिर्वा यस्य स तथा । अत एव धर्मसंमूढचेताः । गुरूनहत्वा भैक्ष्यचरणं धर्मो वा, तान्हत्वा राज्यभोगो वा धर्मः, इति धर्मविषये संमूढं – संशयितं चेतो यस्य सोऽहं त्वां पृच्छामि ॥ प्रष्टव्यमाह **यदिति** । उभयोर्मध्ये यदन्यतमं निश्चितं श्रेयः स्यात्तन्मे ब्रूहि । इत्थं निश्चितं ज्ञानं गुरवे प्रष्टव्यं किं मां पृच्छसीत्यत आह **शिष्य इति** ॥ अहं ते – तव शिष्योऽस्मि । अतो मां शाधि – शिक्षय । आवयोर्गुरुशिष्यत्वं न स्मरामि पूर्वमुपदेशाभावादित्यत उक्तं **त्वां प्रपन्नमिति** । इदानीमेव शरणागतत्वात् गुरुशिष्यत्वारम्भोऽस्तु इति भावः ॥ यद्वा— न केवलं मामेव शाधि, त्वां प्रपन्नमपि शाधि – यः यः प्रपन्नः तं शाधीत्यर्थः । मच्छासनेन सर्वशरणागतानामपि संशयापनोदः स्यादिति भावः ॥ ७ ॥

**गीता**

**न हि प्रपश्यामि ममापनुद्यात्**
**यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं**
**राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

*वि०वि०*— इन्द्रियाणामतिशोषकरं मदीयं दुःखं यत्किमपनुद्यादपनयेत्तदहं भूमौ निष्कण्टकं समृद्धं राज्यं तथा सुराधिपत्यं प्राप्यापि न प्रपश्यामि ॥ ८ ॥

*सा०सं०*— त्वमेव विचार्य यद्युक्तं तत्कुर्वित्यत आह अर्जुनः **न हीति** । **इन्द्रियाणाम् उच्छोषणम्** अतिशोषकरं मदीयं **शोकं** यत्कर्म **अपनुद्यात्** अपनयेत् तदहं **न** पश्यामि ।

राज्यलाभहेतुयुद्धकर्मैव तादृशमित्यत आह **अवाप्येति** । यद्यपि भूमौ निष्कण्टकं राज्यं प्राप्स्यामि तथा **सुराणां** देवानाम् **आधिपत्यं** च प्राप्स्यामि । एवमभीष्टं सर्वमवाप्यापि शोकापनोदनोपायं **न प्रपश्यामि** इत्यर्थः । हत्वाऽर्थकामानिति उक्तदिशा सर्वस्यापि दुःखहेतुत्वादिति भावः ॥ ८ ॥

*भा०र०*— *अक्षरार्थस्तु*— त्वमेव विचार्य यद् युक्तं तत् कुर्वित्यत उच्यते **न हि प्रपश्यामीति** ॥ भूमौ शत्रून्निहत्य असपत्नं – निष्कण्टकम् ऋद्धं – समृद्धं राज्यं सुराणामाधिपत्यं – इन्द्रत्वं वा प्राप्याप्यहं ममेन्द्रियाणामुच्छोषणम् – अतिशोषकरं शोकं यदपनुद्याद् – अपनयेत् तत् कर्म न हि प्रपश्यामि । "हिर्हेताववधारणे" । नैव प्रपश्यामि ॥ ८ ॥

*अ०प्र०*— किञ्च, **न हि प्रपश्यामीति** ।

हि = यस्मात्[१], भूमौ[२], असपत्नं[३], ऋद्धं[४], राज्यं[५], अवाप्य[६], अपि[७], सुराणां[८], आधिपत्यं[९], इन्द्रत्वं = ईप्सितम्[९], चकारेण[१०], तस्मात् इन्द्रियाणाम्[११], उच्छोषणं[१२], मम[१३], शोकं[१४], यत्कर्म[१५], = अपनुद्यात् तत्कर्म[१६], अहं न प्रपश्यामि[१७] इत्यन्वयः ।

यस्माद्भूमौ असपत्नं = निष्कण्टकं[३], ऋद्धं = समृद्धम्[४], राज्यं प्राप्स्यामीति = अभीष्टं[५], तत् अवाप्य[६], अपिशब्देन राजाधिराजत्वं ईप्सितं तदा व्याप्य*सप्तद्वीपाधिपत्यं ईप्सितं तदपि अवाप्य[७], सुराणां[८], आधिपत्यं = इन्द्रत्वं ईप्सितम्[९], चकारात् कल्पनीयो ह्यर्थः । इन्द्रत्वं प्राप्य देवसेनापतेः स्कन्दस्याधिपत्यं ईप्सितं तदपि अवाप्य ब्रह्माण्डद्वयस्याधिपत्यं तदपि अवाप्य अनन्तानन्त-ब्रह्माण्डाणां परम्पराधिपत्यं ईप्सितं अभीष्टम्[१०] । एवं सर्वं अभीष्टं प्राप्यापि शोकापनोदनोपायं तृप्ततां अलम्बुद्धिर्न याति । तस्मात्, इन्द्रियाणां[११], उच्छोषणं = अतिशोषकरं[१२], मम मदीयं[१३], शोकं[१४], यत्कर्म[१५], अपनुद्यात् = अपनयेत् हन्यादिति वा तत्कर्म[१६], अहं न प्रपश्यामि[१७], इत्यर्थः ॥ ८ ॥

*त्रि०वि०*— गुरुत्वेनाप्यन्यं वृणु किं मामेव वृणुषे इत्यत आह **न हीति** । यदित्यव्ययं, अतो यो मम इन्द्रियाणामुच्छोषणं स्वस्वव्यापाराक्षमीकरणं शोकमपनुद्यात्, हि यस्मात् तं शोकापनोदकं त्वदन्यमिति शेषः न पश्यामि ॥ यद्वा— येन शोकेन ममेन्द्रियाणामुच्छोषणं भवति यस्तं शोकमपनुद्यात् – परिहरेत् तमहं त्वदृते नैव पश्यामीत्यन्वयः । दरिद्रस्य शोकापनोदकः कथं युज्येत, सम्राजस्तु युज्यत एवेत्याह **अवाप्येति** । निःशत्रुकं समृद्धं पृथिवीराज्यं सुराधिपत्यं च प्राप्यापि त्वां विना अन्यं न पश्यामीत्यर्थः ॥ यद्वा— त्वदन्यादृश्यत्वे हेतुगर्भविशेषणान्याह **अवाप्येति** ॥ भूमौ अवाप्य – अवतीर्य स्थितमिति शेषः । असपत्नं – शत्रुरहितं, ऋद्धं – समृद्धं सुराणां – देवानां राज्यं – नीराज्यं अर्तिक्याद्युपचारैरुपास्यमिति यावत् । उपसर्गाणां धात्वर्थ-

द्योतकत्वात् । आधिपत्यं आ – साकल्येन आधिपत्यं यस्य तं, सवर्णदीर्घत्वात् । अत एतादृशं त्वां विनाऽन्यं न पश्यामीत्यर्थः ॥ ८ ॥

**गीता**

**सञ्जय उवाच—**

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥**

***वि०वि०***— एवमुक्तवताऽर्जुनेन किं कृतमित्यतः संजय उवाच **एवमिति** ॥ ९ ॥

***सा०सं०***— ततः किमकरोदर्जुन इति धृतराष्ट्राकाङ्क्षां निराह संजयः **एवमुक्त्वा** इति । **हृषीकेशं** सर्वेन्द्रियप्रेरकम् । **गुडाकेशो** जितनिन्द्रः **परन्तपः** शत्रुतापनः **गोविन्दं** गाः वेदवाचः प्रतिपादकत्वेन विन्दते लभत इति गोविन्दः, तम् । हेत्याश्चर्ये । महाधैर्यादिगुणवतोऽप्येवं बुद्धिर्जातेति ॥ ९ ॥

***भा०र०***— ***अक्षरार्थस्तु***— एवमर्जुनेन भगवन्तं प्रति प्रकाशितोऽभिप्रायो धृतराष्ट्रं प्रति सञ्जयेन आवेदित इत्युच्यते **सञ्जय उवाच– एवमुक्त्वेति** ॥ हृषीकेशम् – इन्द्रियनियामकम् । परन्तपः – गुडाकेशः – अर्जुनः ॥ ९ ॥

***अ०प्र०***— एवमुक्त्वाऽर्जुनः किं कृतवानित्यपेक्षायां सञ्जय उवाच **एवमिति** ।

परन्तपः[१], गुडाकेशः[२], हृषीकेशं[३], एवं[४], उक्त्वा[५], न योत्स्ये[६], इति[७], गोविन्दं[८], उक्त्वा[९], तूष्णीं[१०], बभूव[११], ह[१२] इत्यन्वयः । स्पष्टार्थः ॥ ९ ॥

***त्रि०वि०***— अर्जुनोक्तिमुपसंहरति **एवमिति** ॥ **अध्यात्मार्थे**— गुडाकेशः – गुडाका – निद्रा, अभिमानिनयन्यायेनात्र तदभिमानिनी दुर्गा लक्ष्यते, सा ईशा – नियन्त्री यस्य स जीवः । हे गोविन्द ! अहं त्वां मुक्त्वा विना स्वातन्त्र्येणेति यावत् । परं – शत्रुं न योत्स्ये । अतरस्त्वमेव तप – तापय युद्धस्वेति यावत् । मम त्वत्प्रतिबिम्बत्वेन मत्क्रियायाश्च त्वदधीनत्वात् युद्धे त्वत्प्रवृत्तौ मत्प्रवृत्तिः सिद्धैव । अन्यथा नेत्यर्थः ॥ एवं हृषीकेशं – हृषीकाणां – लक्षणया इन्द्रियाभिमानिनाम् ईशं भगवन्तं, उक्त्वा तूष्णीं वाग्व्यापाररहितः बभूव ह – स्पष्टम् ॥ ***अंशार्थे***— गुडाकेशः पुरन्दरः हृषीकेशं – उपेन्द्रम् ॥ ***प्रसिद्धार्थे***— हृषीकेशं – कृष्णं गुडाकेशः – अर्जुनः । एवं पूर्वोक्त-

प्रकारेणोक्त्वा न योत्स्य इति गोविन्दमुक्त्वा ॥ यद्वा— हृषीकेशं – सर्वेन्द्रियप्रेरकं मुक्त्वैव – विस्मृत्यैवेति यावत् । गोविन्दं वाग्विषयमेव मत्वेति शेषः हठान्नयोत्स्य इत्युक्त्वा तूर्ष्णीं बभूव ॥ परंतपेति धृतराष्ट्रं प्रति सम्बुद्धिः, पाण्डवानां तापदायकेत्यर्थः ॥ ९ ॥

**गीता**

## तमुवाच हृषीकेशः प्रहसन्निव भारत ।
## सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

***वि०वि०***— ततः किं जातमित्यत आह **तमुवाचेति** । **प्रहसन्निवेति** । परिहासवाक्यं वदन्नित्यर्थः ॥ १० ॥

***सा०सं०***— ततः किं जातमित्यत आह **तमुवाचेति** । हे **भारत** इति धृतराष्ट्रसम्बोधनम् । **प्रहसन्निव** इति परिहासकरवाक्योक्तिद्योतकहासस्य सूचनाय इवशब्दः ॥ १० ॥

***भा०र०***— ***अक्षरार्थस्तु***— प्रहसन्निव – मन्दस्मितेन विश्वासयन्निवेति ॥ १० ॥

***अ०प्र०***— ततः किं वृत्तमित्यत आह **तमुवाचेति** ।

हे भारत ![१], हृषीकेशः[२], प्रहसन्निव[३], उभयोः[४], सेनयोः[५], मध्ये[६], इदं[७], विषीदन्तम्[८], वचः[९], तमर्जुनं प्रति[१०], उवाच[११] इत्यन्वयः ।

हे भारत ! हृषीकेशः प्रहसन्निव = प्रसन्नमुख एवेत्यर्थः । यद्वा अज्ञानिनोऽपि ते कथं दुर्बुद्धिरभूदिति परिहासं कुर्वन्निति[३], उभयोस्सेनयोर्मध्ये इदं विषीदन्तं वचः तमर्जुनं प्रति उवाचेत्यर्थः ॥ १० ॥

*तत्रादौ तावदर्जुनेन दृष्ट्वेमं स्वजनमित्यादिना यन्मोक्षशास्त्रं विरुद्धं वचनमुक्तं तदुभयं च न युक्तमित्याह राघवेन्द्रयतिः ।

***त्रि०वि०***— भगवत्प्रवृत्तिमाह **तमिति** ॥ ***अध्यात्मार्थे***— हे भारत ! भे – भात्मके विष्णौ, रतः – रतिमान्, भरतः – वायुः शिष्यत्वेन तदीय भारत, इति मुमुक्षुं प्रति सम्बुद्धिः ॥ यद्वा— भे – विष्णौ, आ – अतिशयेन रत ॥ ***अंशार्थे***— "समाने लोप" इति सूत्रेण भारततेति स्थिते, भान्ति ते भाः – देवाः तेषां रत्यर्थं ततं – वीणादिकं वाद्यं यस्य स तथा "ततं वीणादिकं वाद्यम्" इत्यमरः इति धृतराष्ट्राख्यगन्धर्वसम्बुद्धिः ॥ ***प्रसिद्धार्थे***— "सर्वं सोढुमहं मन्ये ऋतेऽलीकपरं नरम्"

इति भूम्युक्तेः । भाराः – अनृतत्वेन भूभारभूताः ताः – पाण्डववित्ताप-हारित्वेन चोराः दुर्योधनादयो यस्मादिति धृतराष्ट्रसम्बुद्धिः । "तकारः कीर्तितश्चोर" इत्येकाक्षरः । हृषीकेशः – सर्वेन्द्रियवत् प्रवर्तकः "अर्शआद्यच्" तं – तथावादिनमर्जुनं प्रति प्रहसन्निव किञ्चिद्धास्यं कुर्वन् "किञ्चित्वे चोभयत्वे च संशये सदृशे तथा । इवकारः प्रयुज्येत न्यक्कारेऽपि च पण्डितैः" इति शब्दनिर्णये । मदतिरिक्तस्यान्यस्य यत्किञ्चित्स्वातन्त्र्याभावेऽपि हटादयं "न योत्स्य" इति मन्यते इत्याश्चर्येण किञ्चिद्धास्ययुक्त इति भावः । अत एवान्ते वक्ष्यति । "यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे । मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति" । अत्र प्रकृतिशब्देन प्रकृतिनयन्यायात्, विष्णुर्ज्ञेयः । अत एव चात्र हृषीकेशपदग्रहणम् । उभयोः सेनयोर्मध्ये विषीदन्तमित्यर्जुनविशेषणं खिद्यन्तमित्यर्थः ॥ यद्वा— सेनयोः – भीमसेनोग्रसेनयोरित्युभयोर्मध्ये – अन्तः विषी – विशिष्ट-बलवान् भूत्वा स्थित इति शेषः । इदं कृष्णविशेषणम् "शकारो बलम्" इति श्रुतेः, दन्तं – दं – बुद्धिं तनोतीति तत् "दं कलत्रं च बुद्धिश्च" इत्येकाक्षरः "तनु विस्तारे ततोडः" इदं – वक्ष्यमाणं आश्चर्यप्रदं वा "इ विचित्रे स्मरे पुमान्" इति यादवः । वचः उवाच ॥

इतोऽग्रिमग्रन्थस्य श्रीमदाचार्यटीकाकृत्पादादिभिर्यथावद्व्याख्यातत्वान्न वयं तदर्थे यतामहे । एवं भगवता यथावदवबोधितो जीवः सर्वत्र भगवत्स्वातन्त्र्यं ज्ञात्वा भगवद्विट्तदनुबन्धिवधे प्रयत्नं कृत्वा मोक्षयोग्यो बभूवेत्यध्यात्मार्थः । एवमिन्द्रोऽपीत्यंशोऽर्थः । एवमर्जुनोऽपीति प्रसिद्धोऽर्थः । ॥ १० ॥

श्रीमन्नारदशिष्येण श्रीनिवासेन पञ्चितः ।<br>
श्रीगीताप्रथमांशार्थस्त्रिविधः स्याद्धरेर्मुदे ॥ १ ॥

यद्यप्ययं गुणैर्हीनो ग्रंन्थः सेनाग्रणीरिव ।<br>
भाष्यराजपुरोगत्वान्मान्यः स्यात्सततं सताम् ॥ २ ॥

श्रीनारदस्वान्तपद्मस्थित श्रीप्राणवल्लभ ॥<br>
मामुद्धर दयासिन्धो सजीवेन्द्रार्जुनादिवत् ॥ ३ ॥

*इति श्रीमन्नारदशिष्य पांगरीभीमाचार्यात्मजश्रीनिवासविरचिता*
*श्रीगीतादशश्लोकाधिकप्रथमाध्यायत्रिविधार्थविवृतिः*
*समाप्ता ॥*

**भाष्यम्**

**तत्र सेनयोर्मध्ये बान्धवादिमोहजालसंवृतं विषीदन्तं अर्जुनं भगवान् उवाच ।**

***न०टी०***— तत्र प्रथमाध्यायस्य कतिपयश्लोकाभ्यधिकस्यातिरोहितार्थत्वात् तदर्थं सङ्ग्रहेणानूद्य तत्सङ्गतत्वेन 'तमुवाच हृषीकेशः' इत्यारभ्य व्याख्यातुमुपारभते **तत्र सेनयोरित्यादिना** ।

***प्र०दी०***— इदानीं गीताव्याख्यानावसरे प्राप्ते 'धर्मक्षेत्र' इत्यारभ्य 'अशोच्यानन्वशोचस्त्वम्' इत्यतः प्राक्तनस्य ग्रन्थस्यातिरोहितार्थत्वात् तात्पर्यमाह— **तत्रेति** । **तत्र** गीतायाम् । कैश्चन श्लोकैरिदमुच्यत इति शेषः ।

नन्वत्र न धर्मो नापि तत्त्वं प्रतिपाद्यते । तत्कुतोऽस्य गीतायामनुप्रवेशः । मैवम् । भगवतोऽर्जुनबोधने प्रसक्तिं दर्शयतोऽस्य ग्रन्थस्य तादर्थ्यात्तत्र प्रवेशोपपत्तेः । बान्धवादिविषयो मोहः ममैते, अहमेतेषां, एते च मन्निमित्तं नङ्क्ष्यन्ति, कथमेतैर्विनाऽहं भवेयम्, पापं च मे भविष्यति, जयश्च सन्दिग्ध इत्यादिरूपो मिथ्याप्रत्ययो बान्धवादिमोहः । तेषु स्नेहो वा । स जालमिव; तेन संवृतम् । तत एव विषीदन्तम् । विषादो नाम मोहनिमित्तकात् शोकात् यन्मनोदौर्बल्यं यस्मिन् सति सर्वव्यापारोपरमो भवति ।

नन्विदानीमेव कुतोऽर्जुनस्य मोहस्समुत्पतितः । न ह्येते बान्धवादय इत्यादिकं प्राक् नाज्ञासीत् । येन युद्धाय महान्तमुद्योगमकार्षीदित्यत उक्तं— **सेनयोरिति** । महापकारस्मरणेनानुवर्तमानोऽपि कोपो मृदुमनसां बान्धवादिमृतिकाले निवर्तते । स्नेहश्चोत्पद्यते । ततो मोह इति प्रसिद्धमेवेति भावः । अर्जुनस्य ज्ञानित्वात् मोहजालसंवृतत्वादिकमीषदेवेति मन्तव्यम् ।

***भा०दी०***— भगवानेवेत्यनन्तरं शेषमाह **कैश्चनेत्यादि** । 'दृष्ट्वेमं स्वजनं कृष्णं युयुत्सुं समुपस्थितमि'त्यादिश्लोकतात्पर्यमनुवदति **ममैत इत्यादिना** । **धर्माधर्मविषयत्वमात्रेणेति** । मात्रपदेन वा तव धर्माधर्मविषयत्वं व्यावर्त्यते । **तत एवेति** । बुद्धिमद्वादत्वप्रसङ्गादित्यर्थः । तेनापि चैत्यवन्दनादि धर्मोऽन्योऽधर्म इत्युपदेशाकरणादिति भावः ॥

***भा०र०***— इदानीमित्यस्यैव विवरणं **गीताव्याख्यानावसरे प्राप्त इति** । गीताया व्याख्येयत्वसमर्थनानन्तरमित्यप्याहुः । इत्यारभ्य पठितस्येति शेषः । **ग्रन्थस्य** कतिपयश्लोकाधिकस्याऽद्याध्यायस्य । तथा च प्राचीनटीका "प्रथमाध्यायस्य कतिपयश्लोकाधिकस्यातिरोहितार्थत्वात्"

इति । भाष्ये तत्रेत्यग्र्य प्रस्तावाद् गीताया व्याख्येयत्वे स्थित इत्यर्थकत्वे सेनयोर्मध्ये भगवानुवाचेत्यनन्वितम्, अतिरोहितबहुतरग्रन्थतात्पर्यं च कथमनेनाभिधातव्यं विज्ञायत इत्यत आह **तत्र गीतायामिति** । कैश्चन श्लोकैस्सेनयोर्मध्येऽर्जुनं प्रति भगवानुवाचेति प्रमेयमुच्यत इति शेषं पूरयंस्तात्पर्याभिधानप्रकारं सूचयति । तेन भाष्ये गीतायां सेनयोर्मध्येऽर्जुनमुवाचेत्येतन्नान्वितम्, कस्येदं भाषणमिति च न ज्ञायत इति चोद्यानवकाशः । **अत्र** अतिरोहितार्थग्रन्थे । **तादर्थ्याद्** उपोद्घातरूपतया तत्प्रमितिशेषत्वात् ।

ननु बान्धवादिनिष्ठेन मोहेनार्जुनस्य संवृतत्वमयुक्तम् । तस्यासमानाधिकरणत्वादित्यत आह **बान्धवादिविषयो मोह इति** । बान्धवादीनां मोह इति विग्रहः । षष्ठ्यर्थश्च कर्मत्वमिति भावः । यद्वा, बान्धवादिषु मोह इति विगृह्य सप्तम्यर्थो विषयत्वमित्यभिप्रेत्य बान्धवादिविषय इत्युक्तम् । तथा च वक्ष्यति ''तेषु स्नेहो वा'' इति । मोहशब्दार्थं वदंस्तत्स्वरूपं दर्शयति **ममैत इत्यादिना** । ''दृष्ट्वेमं स्वजनं कृष्ण'', ''स्वजनमाहवे'', ''स्वजनं हि कथम्'',''आचार्याः पितरः पुत्रास्तथैव च पितामहाः । मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा'' इत्यादिवचनतात्पर्यम् **ममैतेऽहमेतेषामिति** ॥ ''एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन'',''निहत्य धार्तराष्ट्रान्नः'' इत्यादितात्पर्यम् **एते मन्निमित्तं नङ्क्ष्यन्तीति** । ''स्वजनं हि कथं हत्वा सुखिनः स्याम'' इत्यस्य तात्पर्यम् **कथमेतैर्विनाऽहं भवेयमिति** । सुखीति शेषः । ''पापमेवाश्रयेदस्मान्'' ''पापादस्मान्निवर्तितुम्'' ''अहो बत महत् पापं कर्तुं व्यवसिता वयम्'' इत्येतत्तात्पर्यं **पापं चेति** ॥ ''यद्वा जयेम यदि वा नो जयेयुः'' इत्यादितात्पर्यं **जयश्च सन्दिग्ध इति** । ''न च श्रेयोऽनुपश्यामि'', ''श्रेयो भोक्तुं भैक्ष्यमपीह लोके'', ''न काङ्क्षे विजयं कृष्ण'' इत्यादिरादिपदार्थः । ''बन्धुस्नेहादधर्मत्वेन'' इति तात्पर्यनिर्णयानुसारेणाऽह **तेषु स्नेहो वेति** ॥ अत्र मोहपदेन तद्धेतुः स्नेहो लक्ष्यत इति भावः । यद् वक्ष्यति ''स्नेहश्चोत्पद्यते । ततो मोह इति प्रसिद्धमेव'' इति ॥ **जालमिवेति** ॥ मत्स्यबन्धनमिवेत्यर्थः । तेन जालशब्दस्य समूहार्थत्वे तत्संवरणमर्जुनस्य ज्ञानित्वादयुक्तमिति चोद्यं परिहृतम् ।

मोहप्रयोज्यत्वमर्जुनबोधनप्रयोजकत्वं च विषादस्य गीतायां भाष्ये च प्रतिपाद्यमानं घटयितुं ''क्षुद्रं हृदयदौर्बल्यम्'' इति गीतानुसारेण विषादशब्दार्थमाह **विषादो नामेति** । सेनयोर्मध्य इत्यस्य स्वरूपकथनपरत्वप्रतीत्या नातीव प्रयोजनवत्तेति शङ्कापनोदनाय तदवतारयंस्तात्पर्यमाह **नन्विदानीमित्यादिना** । सेनामध्योपनिपातादुपस्थितः काल इति भावेनोक्तं **मृतिकाल इति** । **ज्ञानित्वात्**, अपरोक्षज्ञानित्वात् । तथा च तात्पर्ये— ''दर्शयामास पार्थाय परमं रूपमैश्वरम्'' इत्यादिनाऽर्जुनस्योत्तमाधिकारित्वमपरोक्षज्ञानित्वं च इति । मोहजालसंवृतत्वादिकमित्यत्राऽदिशब्देन विषाद-

परिग्रहः। एतेन "महति शोकसागरे निमग्नस्यार्जुनस्य" इति परभाष्यं बहुमानविरोधीति भावितम्। एवं दशश्लोक्युत्तरस्याध्यायस्य सङ्क्षेपतस्तात्पर्यमुक्तं भाष्ये। तस्य गीतानुप्रवेशश्च टीकायां समर्थितः॥

**गीता**

## श्रीभगवानुवाच—

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः॥ ११॥**

***वि०वि०***— एवं साक्षादिन्द्रावतारमुत्तमाधिकारिणमात्मनः प्रियतममर्जुनं क्षत्रियाणां विशेषतोऽपि परमधर्मं नारायणद्विट्तदनुबन्धिनिग्रहं बन्धुस्नेहदधर्मत्त्वेनाशङ्क्य ततो निवृत्तप्रायं स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमोधर्मस्तद्विरुद्धः सर्वोप्यधर्मस्तदधीनत्वात्सर्वस्येति बोधयन् श्रीभगवानुवाच **अशोच्यानिति**। प्रसिद्धानुवादेनाप्रसिद्धस्य विधेयत्वात्। याननुशोचितवानसि ते अशोच्याः, यांश्च भाषसे ते प्रज्ञावाद इति योजना। अज्ञानव्यपदेशात्। प्रज्ञया स्वमनीषयैवोत्थितवादाः न वृद्धसम्मताः। यद्वा प्रकर्षेण जानन्तीति प्रज्ञाः। तदवादास्तद्विरुद्धवादाः। कथमासन्नविनाशा अशोच्या इत्यत आह **गतासूनिति**। पण्डिताः अगतासून् जीवत इव गतासून् मृतान् अनुशोचन्ति। यद्वा, गता निर्गता असवः प्राणेभ्यस्तइति गतासवो देहाः तद्विपरीतत्वाज्जीवाः अगतासवः।

'पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु।
अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम्॥'

इति वचनात् तानुभयान् नानुशोचन्ति॥ ११॥

***वा०ल०***— 'प्रज्ञावादांस्तु भाषसे' इत्यत्र प्रज्ञावादान् केवलं बुद्ध्या उत्प्रेक्षितान् धर्मवादान्, स्वकपोलकल्पितानित्यर्थः॥ ११॥

***सा०सं०***— भगवन्माहात्म्यज्ञानतद्भक्तिपूर्वकं भगवदाराधनरूपतया स्वविहितवृत्तित्वेन वा अनुष्ठीयमानो नारायणद्विट्तदनुबन्धिनिग्रहः क्षत्रियाणां परमो धर्मः। तं धर्मं बन्धुस्नेहादधर्मत्वेनोक्तदिशा शङ्कमानमर्जुनं प्रति उक्तरूपो निग्रह एव परमधर्मः तद्विरुद्धः सर्वोऽप्यधर्म इति कृत्स्नगीताशास्त्रेण बोधयिष्यन्नादौ तावदविवेकेन तव शोक इत्याह **अशोच्यानिति**। **अशोच्यान्** शोका-

नर्हान् । हे पार्थ **त्वम् अन्वशोचः** । यान् त्वं शोचितवानभूस्ते न शोकार्हा इति यावत् । **प्रज्ञावादांश्च भाषसे** । प्रज्ञयोत्था वादाः प्रज्ञावादाः स्वबुद्धिमात्रपरिकल्पिता वादाः, तान् भाषसे । यान् प्रभाषसे ते स्वबुद्धिमात्रपरिकल्पिता वादाः, न वृद्धसम्मता इति यावत् ।

यद्वा, प्रकर्षेण जानन्तीति प्रज्ञाः । "इगुपधज्ञाप्रीकिरः कः" (३-१-१३५) । तेषामवादाः प्रज्ञावादाः प्राज्ञविरुद्धवादाः तान्, प्रभाषस इत्यर्थः । न हि "दृष्ट्वेमं स्वजनं कृष्ण" इत्यादि अर्जुनवाक्येषु कश्चित् प्राज्ञसम्मतवादोऽस्ति । न हि प्राज्ञा नारायणद्विट्तदनुबन्धिनिग्रहमधर्मं वदन्तीति भावः । ननु आसन्नविनाशास्ते कथमशोच्या इत्यत आह **गतासूनिति** । **पण्डिताः** ज्ञानिनः । **गतासून्** आसन्नविनाशान् । **अगतासून्** इव इत्युपमार्थश्चकारः । जीवत इव तान् । नानुशोचन्ति यतोऽतो न शोच्यास्त इति तान् **अन्वशोचः** त्वम् इत्यर्थः ॥ ११ ॥

***अ०प्र०***— एवमर्जुनबोधने प्रसक्तिं प्रदर्श्य क्षत्रियाणां विशेषतो नारायणद्विट् तदनुबन्धिनिग्रहं परमधर्मं बन्धुस्नेहादिना अधर्मत्वेनाशङ्क्य ततो निवृत्तप्रायं साक्षादिन्द्रावतारमुत्तमाधिकारिणं आत्मनः प्रियतमं अर्जुनं निमित्तीकृत्य स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमधर्मः तद्विरुद्धः सर्वोऽप्यधर्मः तदधीनत्वात् सर्वस्वेति भावेन योग्यसकलसज्जनान् बोधयति समस्तगीताप्रबन्धेन भगवान्नारायणो इत्याह । देहात्मनोरविवेकादस्यैव शोको भवतीति तद्विवेकप्रदर्शनार्थं च श्रीभगवानाह **अशोच्यानन्वशोचस्त्वमिति** ।

हे अर्जुन ![१], त्वं[१], अशोच्यान्[२], अन्वशोचः[३], पुनश्च प्रज्ञावादांश्च[४], भाषसे[५], यतः पण्डिताः[६], गतासून्[७], अगतासूंश्च[८], नानुशोचन्ति[९] इत्यन्वयः ।

हे अर्जुन ! त्वम् अशोच्यान् = शोकस्य अविषयभूतान् बन्धून्[२], अन्वशोचः = अनुशोचितवानसि[३], प्रज्ञावादांश्च = पुनश्च प्रज्ञावतां पण्डितानां वादान् स्वमनीषोत्थवचनानि तान् शब्दान् केवलं[४], भाषसे = वदसि न तु पण्डितोऽसि[५], यतः पण्डिताः[६], गतासून् = गतप्राणान् बन्धून्[७], अगतासूंश्च = जीवतोऽपि बन्धून्[८], नानुशोचन्ति = मया हीना एते कथं जीविष्यन्तीति नानुशोचन्ति[९], यद्वा प्रकर्षेण जानन्तीति प्रज्ञाः तेषां अवादाः तद्विरुद्धवादा इत्यर्थः । तथा च तान् प्रति शोको न कार्यः नापि भाषनीया इति भावः । अशोच्यानेव प्रत्यशोचः, प्रज्ञावादानेव भाषस इति । अग्निमानेव धूमवा-नितिवत् एवकाराध्याहारेण वा अन्वयितव्यम् ॥ ११ ॥

***त्रि०वि०***— अर्जुनोक्तमनूद्य शिष्टाचारप्रदर्शनेन तत्त्वमुपदिशति **अशोच्यानिति** ॥ हे अर्जुन, त्वं पूर्वं "दृष्ट्वा मे स्वजनं कृष्ण" इत्यादिना अशोच्यान् – शोकानर्हान् स्वबान्धवान्, अन्वशोचः

अनुशोचितवानसि । यद्वा— अन्विति पृथक् पदं, अनु – अनन्तरं द्वितीयाध्याय इत्यर्थः, "कथं भीष्ममहं सङ्ख्ये" इत्यादिना प्रज्ञावादांश्च भाषसे । एतत्सूचनायैव शोकक्रियायां लङः, भाषण-क्रियायां लटः, उपादानम् । एतदाश्चर्यमिति भावः । न हि शोकाविष्टे ज्ञानवादो युज्यते, ज्ञानिनि च शोकसम्भवः, त्वयि तु उभयस्यापि दृष्टत्वादित्याशयः । अतस्तवेमे ज्ञानवादा एव न स्युः यतः अर्थकामानिति विशेषणेनैवावध्यत्वाभावं सूचयित्वा पुनः संशेषे । अर्थकामानित्यस्य भगव-द्विडर्थसाधनेच्छून्, धर्ममोक्षविरोधिपुमर्थवत, इति वार्थः । किन्तु प्रकर्षेण जानन्ति ते प्रज्ञाः – पण्डिताः तेषां अवादान् विरुद्धवादान्, स्वमनीषकल्पितवाक्यानि वा, ब्रूषे इत्येव निश्चीयते इति वाक्यशेषः । तत्र हेतुमाह ॥ पण्डिताः अगतासूनिव – सप्राणानिव लुप्तोपममेतत्, गतासून् – मृतान् नानुशोचन्ति, । यद्वा चोह्यर्थे । पण्डिताः अगतासून् – आर्थं – विष्णुप्रीत्यर्थं मृतान् नानुशोचन्ति, किन्तु गतासून् तद्विरोधेन विद्यमानप्राणानेवानुशोचन्ति तेषां जीवन्मृतत्वात् "ते नराः पशवो लोके किं तेषां जीवने फलम् ॥ यैर्न लब्धा हरेर्दीक्षा" इत्युक्तेः । अथवा गताः असवः – प्राणाः येभ्यस्ते गतासवः – देहाः तद्विरुद्धत्वादगतासवो – जीवास्तांश्च । "पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति भागशोऽनुव्रजन्ति तम्" इत्युक्तेः । नानुशोचन्ति पण्डिताः ॥ "अन्तवन्त इमे देहा" इत्यादिना उभयाशोच्यत्वस्य वक्ष्यमाणत्वादिति भावः ॥ ११ ॥

**भाष्यम्**

**प्रज्ञावादान् स्वमनीषोत्थवचनानि । कथं अशोच्याः ? गतासून् ॥ ११ ॥**

*प्र०दी०*— प्रज्ञावादानित्येतत् प्रज्ञावतां बुद्धिमतां वादान् वचनानीति कश्चिद् व्याख्यातवान् । तदसत् । न हि 'दृष्ट्वेमं स्वजनम्' इत्याद्यर्जुनवाक्येषु कश्चिद् बुद्धिमद्वादो विद्यते । न हि बुद्धिमन्तो नारायणद्विट्तदनुबन्धिनिग्रहमधर्मं वदन्ति । न च धर्माधर्मविषयत्वमात्रेण बुद्धिमद्वादो भवति । बौद्धादेरपि तत्त्वप्रसङ्गादित्याशयेनान्यथा व्याचष्टे— **प्रज्ञावादानिति** । स्वस्या एव मनीषाया उत्थितानि । न तु शास्त्राचार्योपदेशप्राप्तानि । कथमेतल्लभ्यते ? उच्यते । प्रज्ञाया वादाः प्रज्ञावादाः । कार्यकारणभावे षष्ठी । न हि स वादोऽस्ति यः प्रज्ञापूर्वो न भवतीति सामर्थ्यात् स्वेति लभ्यते । सावधारणं चैतत् । अब्भक्ष इति यथा । अन्यथा पुनर्वैयर्थ्यादिति । **कथमशोच्याः** । इत्यत आहेति शेषः । गतासूनित्यतः परमितिशब्दः । आसन्नविनाशाः कथमशोच्या इत्यर्थः ।

ननु प्रागशोच्यत्वानुवादेनान्वशोच इत्येवोक्तम् । नत्वशोच्यत्वम् । तत् कथमेवमाक्षेपः । मैवम् । न हि यथाश्रुतैवात्र वाक्यवृत्तिः । असिद्धस्यानुवादः सिद्धस्य बोधनमित्यापत्तेः । किन्तु

यानेवान्वशोचः त्वं तेऽशोच्याः । तस्मात् तान् प्रति न शोकः कार्यः । त्वं यांश्च भाषसे ते प्रज्ञा-वादाः । अतो न भाषणीया इति । तथा चाशोच्याः कुतोऽवगन्तव्या इति प्रश्नो वाऽऽक्षेपो वा युज्यत एव ॥ ११ ॥

*न०टी०*— **स्वमनीषोत्थवचनानि** न वृद्धसम्मतानि । न हि महान्तो नारायणद्विषां तदनुबन्धिनां वा निग्रहमधर्मं मन्यन्त इति भावः । अनेन प्रज्ञाया वादाः प्रज्ञावादा इति विग्रहः सूचितः । नन्वस्तु धर्मो हरिशत्रुवधः । तथापि तदितरे मरिष्यमाणाः कथमशोच्या इति प्रश्नोत्तरत्वेनोत्तरार्धमवतारयति **कथमित्यादिना** ॥ ११ ॥

*भा०दी०*— **पुनर्वैयर्थ्यादिति** । सर्वस्यापि वादस्य प्रज्ञापूर्वकत्वमिव स्वप्रज्ञापूर्वकस्यापि सिद्धत्वेन स्वप्रज्ञावादानित्यस्यापि [1]वैय्यर्थ्यमिति [2]सावधारणं विवक्षणीयमित्यर्थः । कथमशोच्या इति प्रश्नस्य शेषोक्त्या अर्थमाह **आसन्नेत्यादि** । अस्योत्तरं गतासूनिति भाष्ये प्रतीकग्रहणेनोक्त-मुत्तरार्धम् । तदर्थमनन्तरश्लोकावतारिकायां वक्ष्यतीति वाक्यवृत्तिर्वाक्यस्थितिरित्यर्थः । **असिद्ध-स्येति** । अशोच्यस्य प्रज्ञावादस्य चेत्यर्थः । **सिद्धस्येति** । शोचानीत्यादिना पूर्वत्र शोकस्य अर्जुन उवाचेति भाषणस्य च प्रस्तुतत्वादिति भावः ॥ ११ ॥

*भा०र०*— **अशोच्यानन्वशोच**ः । कश्चित् सङ्करः । तथा च तदीयं भाष्यं "त्वं प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतन्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः" इति । प्रज्ञाशब्दस्य प्रज्ञावदर्थकत्वे लाक्षणिकत्वापत्तिरिति स्फुटत्वादर्थदोषमाह **न हीति** । हिशब्दो हेतौ । ननु कथं न विद्यते । "कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन । इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन" इत्यादेर्दर्शनादित्यत आह **न हि बुद्धिमन्त इति** । भीष्मद्रोणा-दीनामपि नारायणद्विडनुबन्धितया तन्निग्रहोऽपि धर्म एव । "नाऽततायिवधे दोषो हन्तुर्भवति कश्चन" इत्यादिवचनादिति भावः । "धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत", "मित्रद्रोहे च पातकम्" इत्यादौ धर्माधर्माभिधानदर्शनात् कथं बुद्धिमद्वादो न दृश्यत इत्युच्यत इत्याशङ्क्य निषेधति **न च इति** । मात्रशब्देन परमार्थतो धर्मविषयत्वं व्यावर्त्यते **बौद्धेति** । "अहिंसा परमो धर्मस्त्वधर्मः प्राणिनां वधः" इति बौद्धोपदेशस्यापि बुद्धिमद्वादत्वप्रसङ्गादित्यर्थः ।

"शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इत्यादिरूपवादस्यापि स्वमनीषोत्थितत्वात् कथ-मभाषणीयत्वमित्यतो व्याचष्टे **स्वस्या एवेति** । "न वृद्धसम्मतानि" इति प्राचीनटीकां विवृण्वन्नेव-कारव्यावर्त्यमाह **न तु शास्त्रेति** । "शिष्यस्तेऽहम्" इत्यादेस्तु शास्त्रीयत्वान्नोक्तरूपत्वमिति

भावः । **कथमिति** । एतत् प्रज्ञावादानित्यस्य स्वमनीषामात्रप्राप्तानिति भाषणं कथमक्षरैर्लभ्यत इत्यर्थः । **षष्ठीति** । प्रज्ञाया इति विग्रहे श्रूयमाणा षष्ठी कार्यकारणसम्बन्धबोधिनीत्यर्थः । **इति सामर्थ्यादिति** । इति हेतोर्व्यर्थप्रज्ञाग्रहणबलादित्यर्थः । प्रज्ञानिमित्तको हि वादः प्रज्ञावादः । वादश्च सर्वोऽपि प्रज्ञानिमित्तक एवेति व्यावर्त्याभावात् प्रज्ञाविशेषणं व्यर्थम् । व्यर्थं च किञ्चिज्ज्ञापयतीति तद्ग्रहणसामर्थ्यात् स्वेति प्रज्ञाविशेषणं वक्तव्यमिति भावः । **सावधारणम्,** अवधारणगर्भम् । **अन्यथा** सावधारणत्वानभिप्राये । **वैय्यर्थ्यादिति** । वादमात्रस्याप्यन्ततः पदावलीप्रज्ञापूर्वकत्वनियमेन व्यावर्त्याभावात् स्वेति विशेषणमुपात्तमपि व्यर्थमेवाऽपततीति सावधारणत्वमेष्टव्यमिति भावः । अनेन "प्रज्ञाया वादाः प्रज्ञावादा इति विग्रहः" इति प्राचीनटीकाऽपि विवृता । इति शब्दः शेष इति वर्तते । प्राणानामद्याप्यनिर्गमादाह **आसन्नेति** । गतासूनित्येतदशोच्यत्वाक्षेपे हेतुतात्पर्यकमिति भावः । **न त्वशोच्यत्वमिति** । उक्तमिति वर्तते । 'यथाश्रुत' इत्यत्र यथा अनतिक्रान्तं श्रुतं श्रवणं ययेति बहुव्रीहिः । अव्ययार्थप्राधान्यादनव्ययीभावत्वम् । **वाक्यवृत्तिः** वाक्यस्थितिः वचनभङ्गी-त्यर्थः । तत्र हेतुः **असिद्धस्येति** । अशोच्यत्वस्य प्रज्ञावादत्वस्य चार्जुनेनानङ्गीकृतत्वादसिद्धत्वम् । अप्राप्तस्य चाननुवादः, "शोकसंविग्नमानसः" इत्यादिना शोकस्य "अर्जुन उवाच", विषीदन्निद-मब्रवीत् इत्यादिना भाषणस्य च सिद्धत्वात् तस्य बोधनमित्यापत्तेः । तथा चाप्रयोजनत्वरूप-शब्ददोष आपद्येतेति भावः । इति वाक्यवृत्तिरिति वर्तते । आसन्नविनाशत्वाख्योपपत्त्यननुसन्धान-दशायां प्राचीनटीकामनुरुन्धानेनोक्तं **प्रश्न इति** । तदनुसन्धानदशायामाह **आक्षेपो वेति** ॥ ११ ॥

**गीतातात्पर्यनिर्णयः**

**प्रकर्षेण जानन्तीति प्रज्ञाः तद्वादः प्रज्ञावादः । प्राज्ञमतविरुद्धवादं वदसि । कथम् ? गतासून् ॥ ११ ॥**

***प्रका०***— पूर्वोक्तमेवार्थम् "अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे" इत्यारभ्य अशेष-भगवद्गीतया प्रतिपादयितुम् उपक्रमते **प्रकर्षेणेति** । कथमेतदिति आशङ्कापरिहारत्वेनोपरितनवाक्य-मुपादत्ते **गतासूनिति** ।

***न्या०दी०***—एवं सङ्क्षेपतो गीतातात्पर्यमुक्त्वाऽथ विस्तरेण तद्विवक्षुः कतिपयश्लोकाधिका-ऽद्याध्यायस्यातिरोहितार्थत्वात् सङ्गृहोक्त्यैव व्याख्याततां मन्वानोऽशोच्यानन्वशोचस्त्वमित्यादि व्याकुर्वन् प्रज्ञावादपदार्थमाह **प्रकर्षेणेति** । तद्वादो न तदुपेक्षितः । अपि तु तद्वादविरुद्ध इत्यभि-प्रेत्योक्तं विवृण्वन् वाक्यार्थमाह **प्राज्ञेति** । ननु कथं विनशिष्यन्तोऽशोच्याः । येनाशोच्यानन्व-

शोचस्त्वमित्युच्यते । कथं च न योत्स्य इति वाक्यं प्राज्ञमतविरुद्धम् ? दृष्ट्वेममित्यादिनोपपत्तेरुक्तत्वादित्याक्षिपति **कथमिति** ॥ तत्राऽद्यचोद्यपरिहारतयोत्तरार्धमुपादत्ते **गतासूनिति** ॥ ११ ॥

*भा०दी०*— **सङ्ग्रहोक्त्यैवेति** । 'तत्र साक्षादिन्द्रावतारम्' इत्यादिनेति भावः ॥ **दृष्ट्वेममित्यादिनेति** । पूर्वाध्याये 'दृष्ट्वेमं स्वजनं कृष्ण' इत्यादिना भयकम्पगाण्डीवस्रंसनादेः युद्धनिवृत्तावुपपत्तेः उक्तत्वादित्यर्थः ॥ **उत्तरार्धमुपादत्त इति** ॥ अर्थस्तु स्पष्टः । चशब्द उपमाऽर्थो ध्येय इति भावः ॥ ११ ॥

**गीता**

**नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामस्सर्वे वयमतः परम् ॥ १२ ॥**

*वि०वि०*— कुतो मृतान्नानुशोचन्ति इत्यतो नित्यत्वादित्याह **नत्ववेति** । जातु कदाप्यहं न नासम् । अपि त्वासमेव । त्वं न नासीः अपि त्वासीः । इमे जनाधिपाः न नासन्नपि त्वासन्नेव । अहं यूयं च सर्वे वयं अतः परस्मिन्नन्ते काले न चैव न भविष्यामः । अपि तु भविष्याम इति कालद्वयसम्बध उक्तः । वर्तमानकालसम्बन्धः स्फुटत्वान्नोक्तः । एवं कालत्रयसम्बन्धित्वेनानुमितानां नित्यत्वान्न शोकः कार्य इत्यर्थः । भगवत्सामर्थ्यस्यार्जुनेन बहुशो दृष्टत्वादचिन्त्यशक्तित्वेनेश्वरस्य जीववैलक्षण्यावगमादनित्यत्वस्य नाशंकितत्वाद्दृष्टान्तत्त्वेन ग्रहणम् । यथाऽहं परमेश्वरः सर्ववेदान्तेषु नित्यः प्रसिद्धः तथा त्वमेते जनाधिपाश्च नित्याः । ननु ईश्वरवज्जीवानामपि नित्यत्वं वेदान्तेषु प्रसिद्धमेव । सत्यम् । तथापि

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'

इत्यादौ नित्ये निर्धारणसामर्थ्यात् जीवानां नित्यत्वमीश्वरस्य परमनित्यत्वमवगम्यते । नित्यत्वं च विनाशाभावः, न चाभावे तारतम्यमस्तीति जीवनित्यत्वमुपचरितमिति शङ्क्येत । तदर्थं जीवनित्यत्वमुपपाद्यते । तत्र वक्ष्यमाणचित्प्रतिबिम्बादिकं साधनम् । अनादित्त्वेन नित्यत्वसाधनेन व्यभिचारपरिहाराय विशेषणमुपादेयम् ॥ १२ ॥

*वा०ल०*— 'न त्वेवाहम्' इत्यत्र अहं तु जात्वपि नासमिति नैव, किन्तु सर्वदाऽप्यासम् । त्वं च जात्वपि नासीरिति न । इमे जनाधिपाश्च नासन्निति न । अतः परम् उत्तरकालेऽपि सर्वे वयं न भविष्याम इति न । तुशब्देन स्वस्मिन् देहस्यापि नित्यत्वाख्यविशेषमाह । जीवस्य स्वरूपतो

नित्यत्वात् देहादेश्च प्रवाहतो नित्यत्वादिति भावः । अनेन जगतो भाविबाधकशङ्कां च निवारयति ॥ १२ ॥

*सा०सं०*— ननु कुतो न शोचन्ति कुतश्च मदीया वादाः प्राज्ञमतविरुद्धा इति । "दृष्ट्वेमं स्वजनं कृष्ण" इत्यादिना उपपत्तेरुक्तत्वादिति चेत्, तत् किं तेषां जीवनाशात् तव शोकः, उत देहनाशात् । अथ देहान्यात्मनोऽभावात् तद्देहनाश एव तन्नाश इति । नाद्यः । जीवानाम् अनादिनित्यत्वादित्याह **न त्वेवेति । जातु** कदाऽपि । **अहं न नासं** नासमिति न । किं त्वासमेव । त्वं **न नासीः** विपरिणामेन क्रियान्वयः । अपि त्वासीरेव । **इमे जनाधिपाश्च न नासन्** आसन्नेव । अहं यूयं च वयं **सर्वे** एव **अतः परम्** अनन्तरकाले । **न न भविष्यामः** किन्तु भविष्याम एव ।

अत्र पूर्वोत्तरार्धाभ्यां कालद्वयसम्बन्धोक्त्याऽनादित्वं नित्यत्वं चोक्तम् । वर्तमानकालसम्बन्धस्तु स्फटत्वान्नोक्तः । "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः" इति न्यायेन नञ्द्वयप्रयोगादेव अवधारणसिद्धौ पुनरुक्तदुक्तिः "नित्यो नित्यानाम्" (काठक २-५-२३) ।

"स्वदेहयोगविगमौ नाम जन्ममृती पुरा ।
इष्येते ह्येव जीवस्य मुक्तेर्न तु हरेः क्वचित् ॥"

इति श्रुतिस्मृतिप्रसिद्धिद्योतनार्था । च शब्दोऽनादित्वेन सह नित्यत्वस्य समुच्चयार्थः । तुशब्दस्तु स्मृत्युक्तदिशा ईश्वरस्येतरेषामिव देहतोऽप्युत्पत्तिनाशौ नेति विशेषार्थः । तदाह "ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ" (२-३-९) "ॐ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ" (२-३-१७), इति सूत्राभ्याम् । तत्राणुभाष्यमपि "सोऽनुत्पत्तिलयः" इति ।

ये तु कृष्णस्येश्वरत्वमनादित्वं च न जानन्ति तान् प्रति यथाश्रुतैवोक्तयोजना । ये तु तज्ज्ञात्वा जीवानादिनित्यतामेव न जानन्ति तान् प्रति तु यथैवंपदयोरध्याहारेण दृष्टान्तदार्ष्टान्तिकभावेन यथाऽहं न नासमनादितो वर्ते । एवं त्वमेते च सर्वे यूयं न नासुः अनादितोऽवर्तध्वमिति योजना ।

अत्रैतौ प्रयोगावभिमतौ कृष्ण त्वदादिचेतना न नाशवन्तः भावत्वे सत्यनादित्वात् । **'नासतः'** इति श्लोके वक्ष्यमाणप्रकृत्यादिवदिति । द्वितीययोजनायां तु - त्वदादयो जनाधिपा न नाशवन्तः चेतनत्वे सत्यनादित्वात् । कृष्णवदिति । स्वरूपासिद्धिस्तु **'देहिनः'** इत्यत्र निरसिष्यते । न च साधनवैकल्यम् । 'नित्यो नित्यानाम्' इति श्रुतेः । तत्र अनादित्वस्यापि उपलक्षणात् । एवं चैवमनादिनित्या जीवा कथं नाम शोच्याः, अनादिनित्यजीवानां नाशभीत्या "न योत्स्ये" इत्यादि त्वदीया वादाः कथं नाम प्राज्ञमतविरुद्धा न भवेयुः, इति भावः ॥ १२ ॥

*अ०प्र०*— पण्डिता अपि कुतो मृतादीन् नानुशोचन्तीत्यतो नित्यत्वादित्याशयेन अशोच्यत्वे हेतुमाह **न त्वेति** ।

हे अर्जुन ! अहं[१], जातु[२], नासं[३], इति नैव[४,५] अपि त्वासमेव[६], त्वं[७], नासीः इति नैव अपि तु असि एव[८], तथा इमे[९], जनाधिपाः[१०], नासन्निति न अपि तु असन्नेव[११], अतः[१२], परं[१३], वयं[१४], सर्वे[१५], न भविष्याम इति[१६], न चैव[१७], अपि तु स्थास्याम एव[१८] इत्यन्वयः ।

हे अर्जुन ! अहं यथाऽहं परमेश्वरः[१], जातु कदापि[२], लीलाविग्रहस्य आविर्भावे तिरोभावेऽपि नासं इति नैव, अपि त्वासमेव अनादित्वात्[३]; वेदान्तप्रसिद्ध इत्यर्थः । त्वं नासीः नाभूः इति न अपि त्वसि एव मत्प्रतिबिम्बत्वात्[४], । तथा इमे पुरोवर्तिनः[५], जनाधिपाः नृपाः नासन्निति न अपि त्वासन्नेव[६], अतःपरं इत उपर्यपि[७], वयं सर्वे अहं त्वं इमेऽपि सर्वे[९], न भविष्याम इति न चैव[११] न स्थास्याम इति न चैव अपि तु स्थास्याम एव, एवं जन्ममरणशून्यत्वादशोच्या इत्यर्थः ॥ १२॥

*त्रि०वि०*— **न त्वेवेति** ॥ पूर्वत्र नानुशोचन्ति पण्डिता इत्युक्तम्, तेन गतासुविषये पण्डितानां शोकाभावः सूचितः पण्डितत्वं च न घटादिज्ञत्वं, किन्तु सर्वोत्तमत्वज्ञत्वमेव, त्वयि तद्वति जाते सत्येव शोकाभावः स्यादित्याशयेनाह **न त्वेवेति** ॥ अहं, अहज्ञा – अहङ्कारोत्पन्ना भूतमात्रेन्द्रियपरम्परा । तुना – "तुर्विशेषे च भेदे च स्वसिद्धान्तेऽवधारणे" इति शब्दनिर्णयात्, तुना – स्वसिद्धान्तरूपेण तु – विशेषेण नैवास – नाभवम् । अनेन पूर्वमपि भेदः प्रतिपादितः । नन्वस्तु जडैर्भेदः, चेतनैस्त्वभेदः स्यादित्याशङ्क्य तन्निराकुर्वंस्तावद्वर्तमानैरभेदं निराकरोति **न त्वं इति** ॥ त्वं अर्जुनः, इमे – एतत्कालिका जनाधिपाः – राजानः, अहं तत्तदभिन्नो नास्मीत्यर्थः । युष्मदिदं शब्दयोर्विद्यमानार्थगमकत्वादिति भावः ॥ अथावशिष्टभविष्यैरभेदं निराह **न चैवेति** ॥ अहं भविष्या राजानश्च नैव भविष्यामः । अस्तूत्पन्नोत्पद्यमानोत्पत्स्यमानैः क्षुद्रैस्तव भेदः तथापि जगत्सृष्टि-संहारकर्त्रोस्तु तवाभेदः स्यादत आह **म इति** ॥ "मः – शिवश्चन्द्रमावेधाः" इत्येकाक्षरात् । शिवो ब्रह्मा वा 'म'शब्दवाच्यः, सोऽपि नाहम् । इति तृतीयपादगतद्वितीयनकारेण अन्वयः । अतः – कारणात् । सर्वे – "सप्तसु प्रथमा" इति सूत्रात् प्रथमा पञ्चम्यर्थे, सर्वेभ्यः उक्तेभ्य इत्यर्थः । परं – विलक्षणं, श्रेष्ठं, पालकं वा । यं – ज्ञानरूपं "येति ज्ञानं समुद्दिष्टम्" इति भागवतदशमतात्पर्योक्तेः ॥ यद्वा— सर्वे – "सृ गतौ", "वा गतिगन्धनयोः" इति धातोः, औणादिना प्रत्ययलोपश्च । सरणेन – गमनेन, वीयते इति सर्वः – वायुः, सदागतिनामवत्वादिति योगार्थाङ्गीकारात् । सर्वनामसंज्ञाभावेन तस्मिन्नित्यादेशस्य प्रसक्त्या सर्वे इति सप्तमी, वायौ इत्यर्थः । यं – याति प्राप्नोतीति तं प्राणान्तर्यामिणमित्यर्थः । मामिति शेषः । अव – जानीहि, अवगत्यादौ गत्यर्थानां च ज्ञानार्थत्वात् । एवं पण्डितो भवसि चेत् अशोको भवसीति भावः ॥ १२ ॥

**भाष्यम्**

**किमिति ? नत्वेवाहम् । ईश्वरनित्यत्वस्याप्रस्तुतत्वात् दृष्टान्तत्वेनाह— 'न त्वेवेति' । यथाऽहं नित्यः सर्ववेदान्तेषु प्रसिद्धः, एवं त्वमेते जनाधिपाश्च नित्याः ॥ १२ ॥**

***प०टी०***— कथं दृष्टान्तता ? इत्यतो वाक्यं योजयति **यथेति** । ननु मरिष्यमाणमुद्दिश्यापि नित्य ............ निवारणायोत्तरश्लोकमवतार्य व्याचष्टे **देहिन इति** ॥ १२ ॥

***न०टी०***— मृतान् प्रति किमर्थं न शोचन्तीति देहात्मनोरविवेकेन प्रश्नः, विवेकेनोत्तरं **न त्वेवाहमिति** । तर्हि भगवत्यपि देहात्मविभेदः स्यादित्यत आह **ईश्वरनित्यत्वस्येति** । न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यमिति भावः । ननु स्वस्वबान्धवादिनाशतया ह्यर्जुनविषादः, अतो यदुनन्दनानित्यत्वशङ्कापरिहारौ कथमप्रस्तुतौ ? इति । उच्यते । न ह्यर्जुनेनेतरदेहहानिवत् भगवदेहहानिः शङ्क्यते । येन सा परिह्रीयते । प्रत्युताप्राकृतानन्तचिद्घन एवायं भगवानित्यर्जुनबुद्धिः । अदृष्टाश्रुतभाववत्वात् । इह दृष्टश्रुतभाववत्वात् बहुशः । अतः सुतरामीश्वरानित्यत्वस्याप्रस्तुतत्वादिति । नन्वीश्वरस्यालौकिकत्वात् कथं दृष्टान्तता ? इत्यत आह **यथाऽहमिति** । **सर्ववेदान्तेषु** सर्वासूपनिषत्सु 'नित्यो नित्यानाम्' इत्याद्यासु । सर्वेषां वेदानाम् अन्तो निर्णयो येषु पुरुषेषु तेष्विति वा ॥ १२ ॥

***प्र०दी०***— किमिति कस्मात् कारणात् । पण्डिता अपि अगतासूनिव गतासूना-सन्नविनाशान् नानुशोचन्तीति शेषः । अत्र नित्यत्वादित्युत्तरम् । कुतो नित्यत्वमित्यत आहेति वाक्यं चाध्याहार्यम् । न त्वेवाहमित्यतःपरमितिशब्दश्च । अर्जुनं निमित्तीकृत्य प्राप्तलोकोपकारार्थं हि भगवतोपदेशः क्रियते । तत्र ये भगवतः कृष्णस्येश्वरत्वं नित्यत्वं च न जानन्ति तान् प्रति यथाश्रुतैव योजना । दृष्टान्तस्तूत्तरत्र भविष्यति । ये तु तज्ज्ञात्वा जीवनित्यतामेव न जानन्ति तान् प्रत्यन्यथा योज्यमित्याह— **ईश्वरेति** ।

अप्रस्तुतत्वादनाशङ्कितत्वात् । दृष्टान्तत्वेनाह जीवनित्यतायां साध्यायामीश्वरमिति शेषः । अत एव कृष्णेत्यनुक्त्वेश्वरेत्युक्तम् । नन्वीश्वरनित्यत्वं कुतस्सिद्धम् ? पूर्वार्धे वाक्यत्रयसद्भावात् कथञ्चिद् योजनासम्भवेऽप्युत्तरार्धस्यैकवाक्यत्वात् कथं योजनेत्यत आह— **यथेति** ।

वेदान्ता उपनिषदः । सिद्धस्यार्थस्य साध्यत्वेन निर्देशो दोषायेति सामर्थ्याद् यथैवंशब्दाध्याहारेण वाक्यभेदेन च योज्यमिति भावः । ननु वेदान्तैरीश्वरनित्यत्वं जानन्तः तत्रैवोक्तं जीवनित्यत्वं कथं न

*अ०प्र०*— पण्डिता अपि कुतो मृतादीन् नानुशोचन्तीत्यतो नित्यत्वादित्याशयेन अशोच्यत्वे हेतुमाह **न त्वेति** ।

हे अर्जुन ! अहं[१], जातु[२], नासं[३], इति नैव[४,५] अपि त्वासमेव[६], त्वं[७], नासीः इति नैव अपि तु असि एव[८], तथा इमे[९], जनाधिपाः[१०], नासन्निति न अपि तु असन्नेव[११], अतः[१२], परं[१३], वयं[१४], सर्वे[१५], न भविष्याम इति[१६], न चैव[१७], अपि तु स्थास्याम एव[१८] इत्यन्वयः ।

हे अर्जुन ! अहं यथाऽहं परमेश्वरः[१], जातु कदापि[२], लीलाविग्रहस्य आविर्भावे तिरोभावेऽपि नासं इति नैव, अपि त्वासमेव अनादित्वात्[३]; वेदान्तप्रसिद्ध इत्यर्थः । त्वं नासीः नाभूः इति न अपि त्वसि एव मत्प्रतिबिम्बत्वात्[४], । तथा इमे पुरोवर्तिनः[५], जनाधिपाः नृपाः नासन्निति न अपि त्वासन्नेव[६], अतःपरं इत उपर्यपि[७], वयं सर्वे अहं त्वं इमेऽपि सर्वे[९], न भविष्याम इति न चैव[११] न स्थास्याम इति न चैव अपि तु स्थास्याम एव, एवं जन्ममरणशून्यत्वादशोच्या इत्यर्थः ॥ १२॥

*त्रि०वि०*— **न त्वेवेति** ॥ पूर्वत्र नानुशोचन्ति पण्डिता इत्युक्तम्, तेन गतासुविषये पण्डितानां शोकाभावः सूचितः पण्डितत्वं च न घटादिज्ञत्वं, किन्तु सर्वोत्तमत्वज्ञत्वमेव, त्वयि तद्वति जाते सत्येव शोकाभावः स्यादित्याशयेनाह **न त्वेवेति** ॥ अहं, अहज्ञा – अहङ्कारोत्पन्ना भूतमात्रेन्द्रियपरम्परा । तुना – "तुर्विशेषे च भेदे च स्वसिद्धान्तेऽवधारणे" इति शब्दनिर्णयात्, तुना – स्वसिद्धान्तरूपेण तु – विशेषेण नैवास – नाभवम् । अनेन पूर्वमपि भेदः प्रतिपादितः । नन्वस्तु जडैर्भेदः, चेतनैस्त्वभेदः स्यादित्याशङ्क्य तन्निराकुर्वंस्तावद्वर्तमानैरभेदं निराकरोति **न त्वं इति** ॥ त्वं अर्जुनः, इमे – एतत्कालिका जनाधिपाः – राजानः, अहं तत्तदभिन्नो नास्मीत्यर्थः । युष्मदिदं शब्दयोर्विद्यमानार्थगमकत्वादिति भावः ॥ अथावशिष्टभविष्यैरभेदं निराह **न चैवेति** ॥ अहं भविष्या राजानश्च नैव भविष्यामः । अस्तूत्पन्नोत्पद्यमानोत्पत्स्यमानैः क्षुद्रैस्तव भेदः तथापि जगत्सृष्टि-संहारकर्त्रोस्तु तवाभेदः स्यादत आह **म इति** ॥ "मः – शिवश्चन्द्रमावेधाः" इत्येकाक्षरात् । शिवो ब्रह्मा वा 'म'शब्दवाच्यः, सोऽपि नाहम् । इति तृतीयपादगतद्वितीयनकारेण अन्वयः । अतः – कारणात् । सर्वे – "सप्तसु प्रथमा" इति सूत्रात् प्रथमा पञ्चम्यर्थे, सर्वेभ्यः उक्तेभ्य इत्यर्थः । परं – विलक्षणं, श्रेष्ठं, पालकं वा । यं – ज्ञानरूपं "येति ज्ञानं समुद्दिष्टम्" इति भागवतदशमतात्पर्योक्तेः ॥ यद्वा— सर्वे – "सृ गतौ", "वा गतिगन्धनयोः" इति धातोः, औणादिना प्रत्ययलोपश्च । सरणेन – गमनेन, वीयते इति सर्वः – वायुः, सदागतिनामवत्वादिति योगार्थाङ्गीकारात् । सर्वनामसंज्ञाभावेन तस्मिन्नित्यादेशस्य प्रसक्त्या सर्वे इति सप्तमी, वायौ इत्यर्थः । यं – याति प्राप्नोतीति तं प्राणान्तर्यामिणमित्यर्थः । मामिति शेषः । अव – जानीहि, अवगत्यादौ गत्यर्थानां च ज्ञानार्थत्वात् । एवं पण्डितो भवसि चेत् अशोको भवसीति भावः ॥ १२ ॥

**भाष्यम्**

**किमिति ? नत्वेवाहम् । ईश्वरनित्यत्वस्याप्रस्तुतत्वात् दृष्टान्तत्वेनाह— 'न त्वेवेति' । यथाऽहं नित्यः सर्ववेदान्तेषु प्रसिद्धः, एवं त्वमेते जनाधिपाश्च नित्याः ॥ १२ ॥**

*प०टी०*— कथं दृष्टान्तता ? इत्यतो वाक्यं योजयति **यथेति** । ननु मरिष्यमाणमुद्दिश्यापि नित्य ............ निवारणायोत्तरश्लोकमवतार्य व्याचष्टे **देहिन इति** ॥ १२ ॥

*न०टी०*— मृतान् प्रति किमर्थं न शोचन्तीति देहात्मनोरविवेकेन प्रश्नः, विवेकेनोत्तरं **न त्वेवाहमिति** । तर्हि भगवत्यपि देहात्मविभेदः स्यादित्यत आह **ईश्वरनित्यत्वस्येति** । न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यमिति भावः । ननु स्वस्वबान्धवादिनाशतया ह्यर्जुनविषादः, अतो यदुनन्दनानित्यत्वशङ्कापरिहारौ कथमप्रस्तुतौ ? इति । उच्यते । न ह्यर्जुनेनेतरदेहहानिवत् भगवद्देहहानिः शङ्क्यते । येन सा परिह्रीयते । प्रत्युताप्राकृतानन्तचिद्घन एवायं भगवानित्यर्जुनबुद्धिः । अदृष्टाश्रुतभाववत्वात् । इह दृष्टश्रुतभाववत्वात् बहुशः । अतः सुतरामीश्वरानित्यत्वस्याप्रस्तुतत्वादिति । नन्वीश्वरस्यालौकिकत्वात् कथं दृष्टान्तता ? इत्यत आह **यथाऽहमिति** । **सर्ववेदान्तेषु** सर्वासूपनिषत्सु 'नित्यो नित्यानाम्' इत्याद्यासु । सर्वेषां वेदानाम् अन्तो निर्णयो येषु पुरुषेषु तेष्विति वा ॥ १२ ॥

*प्र०दी०*— किमिति कस्मात् कारणात् । पण्डिता अपि अगतासूनिव गतासूना-सन्नविनाशान् नानुशोचन्तीति शेषः । अत्र नित्यत्वादित्युत्तरम् । कुतो नित्यत्वमित्यत आहेति वाक्यं चाध्याहार्यम् । न त्वेवाहमित्यतःपरमितिशब्दश्च । अर्जुनं निमित्तीकृत्य प्राप्तलोकोपकारार्थं हि भगवतोपदेशः क्रियते । तत्र ये भगवतः कृष्णस्येश्वरत्वं नित्यत्वं च न जानन्ति तान् प्रति यथाश्रुतैव योजना । दृष्टान्तस्तूत्तरत्र भविष्यति । ये तु तज्ज्ञात्वा जीवनित्यतामेव न जानन्ति तान् प्रत्यन्यथा योज्यमित्याह— **ईश्वरेति** ।

अप्रस्तुतत्वादनाशङ्कितत्वात् । दृष्टान्तत्वेनाह जीवनित्यतायां साध्यायामीश्वरमिति शेषः । अत एव कृष्णेत्यनुक्त्वेश्वरेत्युक्तम् । नन्वीश्वरनित्यत्वं कुतस्सिद्धम् ? पूर्वार्धे वाक्यत्रयसद्भावात् कथञ्चिद् योजनासम्भवेऽप्युत्तरार्धस्यैकवाक्यत्वात् कथं योजनेत्यत आह— **यथेति** ।

वेदान्ता उपनिषदः । सिद्धस्यार्थस्य साध्यत्वेन निर्देशो दोषायेति सामर्थ्याद् यथैवंशब्दाध्याहारेण वाक्यभेदेन च योज्यमिति भावः । ननु वेदान्तैरीश्वरनित्यत्वं जानन्तः तत्रैवोक्तं जीवनित्यत्वं कथं न

जानन्ति ? उच्यते— 'नित्यो नित्यानाम्' इत्यादौ निर्धारणसामर्थ्याद् जीवानां नित्यत्वमीश्वरस्य च परमनित्यत्वमवगम्य मन्दाः प्रतिपद्यन्ते 'नित्यत्वं हि विनाशाभावः । न च अभावः तारतम्यवान् । अत ईश्वर एव नित्यो जीवेषु तूपचारः' इति । तान् प्रत्यनुमानेन जीवनित्यत्वमीश्वरदृष्टान्तेन साध्यते । तत्र 'न त्वेवाहं जातु नासम्' इति दृष्टान्तेनानादित्वं साधनमनुवदति । न त्वमित्यादिना तस्य पक्षधर्मतामाह । न चैवेत्यादिना दृष्टान्ते पक्षे च साध्याभिधानमिति । अत्र भगवता जीवानां परस्परम् ईश्वराच्च भेदे प्रतिपादितेऽपि बहुवचनं शरीरापेक्षया न तु आत्मापेक्षयेति वदतो भविष्यत्युत्तरम् ।

*भा०दी०*— पूर्वमुत्तरार्धस्यार्थानुक्तेः । किमितीति मूलानुवादेन तदर्थोक्तिः । पूर्वं गतासूनिति भाष्यस्य शेषोक्त्या अर्थमाह **किमितीत्यादिना** । **अत्रेति** । न त्वेवाहमित्यतः पूर्वभाष्य इत्यर्थः । **यथाश्रुते वेति** । कृष्णस्यापि नित्यत्वोक्तिपरतयैवेत्यर्थः । नन्वस्मिन्पक्षे जीवजीवनित्यत्वे दृष्टान्तो नोक्तः स्यादित्यत आह **दृष्टान्तस्तूत्तरत्रेति** । ''देहिनोऽस्मिन्'' इति श्लोकव्याख्यावसरे यथा कौमारादीत्यादिभाष्ये कौमारयुवादि देहभेदेऽपि तद्देहस्थः एकः सिद्ध एवमनेकदेहप्राप्तावपि सर्वदेहगोऽनादिनियमः सिद्ध इति वक्ष्यमाणत्वादिति भावः ।

यद्वा नासत इति श्लोके प्रकृत्यादेरपि नित्यतोक्तेरिति भावः । **अत एवेति** । अविवादद्योतनार्थत्वादेवेत्यर्थः । **वाक्यत्रयेति** । 'न त्वेवाहमि'ति, 'न त्वं नेम' इति प्रत्येकं नञ्श्रवणेन 'न नासीरि'ति, 'न नासन्नि'ति च क्रियाध्याहाराद्यथातथेति चाध्याहारात् कथञ्चिदित्युक्तम् **उत्तरार्धस्येति** । न चैवेत्यादेः सकृदेव नञ्द्वयश्रवणात् सर्वेषां संसृष्टतया निर्देशाच्चोक्तम् **एकवाक्यत्वादिति** । **उपनिषदः** 'नित्यो नित्यानामि'त्यादयः । इत्थंभाष्ये योजनायां बीजमाह **सिद्धस्येति** । ईश्वरनित्यत्वरूपार्थस्येत्यर्थः । **यथैवमिति** । यथैवशब्दयोरध्याहारेणेत्यर्थः । **वाक्यभेदेन चेति** । अहं न भविष्यामीति नत्वं न भविष्यसीति न । इमे त्वदादयो जनाधिपाः नित्याः चेतनत्वे सत्यनादीत्वादीश्वरावतारकृष्णादिति ध्येयमिति भावः । **भविष्यत्युत्तरमिति** । बुद्धियुक्त इति श्लोकव्याख्यावसरे न चैकीभूत एव ब्रह्मणा सहेत्यादिना जीवब्रह्मैक्यनिरासेनेति भावः ॥ १२ ॥

*भा०र०*— 'किमिति' इति भाष्यमनूद्यार्थमाह **कस्मात् कारणादिति** । शोचनीयत्वाप्रसक्त्या निषेधो न युक्त इति । अगतासुग्रहणं दृष्टान्तार्थमिति भावेनोक्तम् **इवेति** । उपमार्थश्चकार इति भावः । तथा च पादपूरणे हेतौ तुल्यत्वविनियोगयोश्चशब्द इत्यमरशेषः । अत्र कुतो गतासून्नानुशोचन्तीति प्रश्न आक्षेपो वा । इतिशब्दश्चाध्याहार्यः । ननु ''न त्वेवाहम्'' इति श्रीकृष्णेनार्जुनं प्रति

स्वात्मन ईश्वरस्य नित्यत्वमुपदिश्यमानमनुपपन्नम् । अर्जुनस्येश्वरनित्यताज्ञानित्वात् । अप्राप्ते ह्युपदेशोऽर्थवान् । न चार्जुनः सज्जनमात्रं प्रत्युपदेशे निमित्तमात्रमिति तदितरसज्जनं प्रति तदुच्यत इति वाच्यम् । तस्यापीश्वरनित्यताज्ञानसम्भवेन तं प्रत्यप्येवंविधोपदेशायोगात् । अन्यथा सत्त्वमेव न स्यादित्यत आह **अर्जुनं निमित्तीकृत्येति** । निश्चिततत्त्वं लोकं व्यावर्तयितुं प्राप्तेत्युक्तम् । उपदेशाय प्राप्तः शङ्कावानित्यर्थः । लोकशब्दः सज्जनार्थः । कृष्णस्य नित्यत्वं न जानन्तीत्ययुक्तम् । नित्यत्वव्याप्येश्वरत्वज्ञानरूपविशेषदर्शने तज्ज्ञानावश्यम्भावादित्यत उक्तम् **ईश्वरत्वमिति** । **यथाश्रुतैवेति** । कृष्णस्यापि नि यत्वबोधनपरतया प्रतीतैवेत्यर्थः । अस्यां योजनायां जीवनित्यत्वे दृष्टान्तो नोक्तः स्यादित्यत आह **दृष्टान्त इति** । **उत्तरत्र** "नासतो विद्यते भावः" इत्यत्र । प्रकृत्यादिरूपो दृष्टान्तो भविष्यतीत्यर्थः । अत्रायं प्रयोगोऽभिमतः । अहं त्वदादयो जनाधिपाः नित्याः । भावत्वे सत्यनादित्वात् । यथा प्रकृत्यादिरिति ॥ **इत्याहेति** । इति भावेनावतारयतीत्यर्थः । ईश्वरस्य किमिति दृष्टान्तत्वम् ? पक्षत्वमेव किं न स्यादित्यतो भाष्ये "ईश्वरनित्यत्वस्याप्रस्तुतत्वात्" इत्युक्तम् । तत्राप्रस्तुतत्वं नाम नाप्रकृतत्वम् । अप्रकृतत्वेऽपीश्वरपक्षीकारेण नित्यत्वसाधनोपपत्तावप्रयोजकत्वादित्यतोऽप्रस्तुतत्वादित्यस्य विवक्षितमर्थमाह **अनाशङ्कितत्वादिति** । अविप्रतिपन्नत्वादित्यर्थः । एवमपि तत्साधनेऽर्थान्तरं स्यादिति भावः ।

ननु कथं कृष्णस्य दृष्टान्तत्वम् ? तस्य युद्धमण्डलस्थत्वेन विनाशशङ्कास्पदतावश्यम्भावेन निश्चितसाध्यकत्वाभावादित्यत ईश्वरग्रहणभावमाह **अत एवेति** । अविप्रतिपन्नत्वद्योतनप्रयोजनकत्वादेवेत्यर्थः । कृष्णत्वेन शङ्कास्पदत्वेऽपि नेश्वरत्वं जानतां शङ्केति तान् प्रति दृष्टान्तत्वं युक्तमिति भावः । एतेन "न त्वेवाहम्", "न त्वेवेति" इति प्रतीकं भाष्यकृत् किमिति द्विरग्रहीदिति शङ्का परास्ता । ईश्वरस्य नित्यत्वपरयोजनायां, तस्य दृष्टान्तत्वयोजनायां च द्विर्ग्राह्यत्वादिति । "सर्ववेदान्तेषु" इत्येतन्निवर्तनीयां शङ्कां प्रदर्श्य पूर्वार्धयोजनाया अप्रदर्शने हेतुं वदन् "यथाऽहम्" इति समग्रभाष्यव्यावर्त्याशङ्कां दर्शयति **नन्वीश्वरेत्यादि** । **वाक्यत्रयेति** । नाहमिति, न त्वमिति, नेम इति च प्रत्येकं नञः श्रवणान्नाऽसीर्नाऽसन्निति क्रियापदद्वयाध्याहारे विपरिणामे वाक्यत्रयनिष्पत्तेरित्यर्थः । "न त्वेवाहम्" इतीश्वरस्य दृष्टान्तत्वप्रदर्शनाय यथैवंशब्दयोरध्याहारं, "न त्वं नेमे" इत्यत्र नाऽसमित्यतो नञोऽनुवृत्तिम् आसीरासन्निति पदद्वयाध्याहारं च कर्तुमपरितुष्यन् कथञ्चिदित्याह । वेदनिर्णयेष्वित्यन्यथाप्रतीतिनिरासायाऽह **उपनिषद इति** । "नित्यो नित्यानाम्" इत्याद्याः । प्राचीनटीकायां "वेदान्ता उपनिषदः" इत्युक्त्वा "वेदानामन्तो निर्णयो येषु पुरुषेष्विति वा" इत्यर्थान्तरमुक्तम् । **दोषाय** सिद्धसाधनत्वरूपदोषाय । एकवाक्यत्वादित्यस्यासिद्धिं वक्तुमाह **वाक्यभेदेन**

**चेति**। अहं न भविष्यामीति न, त्वं च न भविष्यसीति न, एते जनाधिपा न भविष्यन्तीति न चेति पूर्वार्धानुसारेण वाक्यभेदेन चेत्यर्थः। "त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यते" इति वचनादस्मच्छब्दशेषे वयमिति युक्तमिति भावः।

ननु, एते जीवा न शोच्याः नित्यत्वात्। न चासिद्धिः। जीवा नित्या अनादित्वात् यथेश्वर इत्यनुमानादिति वक्तुं हि "न त्वेवाहम्" इति कृष्ण आह। तत्रेश्वरस्य निश्चितसाध्यकत्वरूपदृष्टान्तत्वाय वेदान्ता अनुसन्धेयाः। तैरेव जीवनित्यतावगतिसम्भवाद् व्यर्थोऽयमनुमानप्रयासः। किञ्च अनुमाने व्याप्तिः पक्षधर्मता च वक्तव्या। कथमत्र ते उच्येते। अपि च साध्यस्य साधनस्य वाऽननुगमाद् दृष्टान्तो दुष्ट इति तत्र तदनुगमो वाच्यः। स च कथमित्याशङ्क्य तत्सर्वं श्लोकारूढं वक्तुमाह **ननु वेदान्तैरिति** ॥ **निर्धारणेति**। ननु जातिगुणक्रियाभिः समुदायादेकदेशस्य विवेचनं निर्धारणम्। न च नित्यत्वं जात्यादिरूपम्। येन तत्र षष्ठी स्यादिति चेत् उच्यते। षष्ठ्युक्तनिर्धारणबलान्नित्य इत्येतत् परमनित्यत्वे पर्यवस्यति। नित्यत्वं च विनाशाभावः। विनाशश्च दोषः। "दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि" इत्युक्तेस्तदभावो गुण एवेति गुणेनैकदेशपृथक्करणं सम्भवतीति युक्तैव षष्ठी। उपचारः गौणी वृत्तिः। इति प्रतिपद्यन्त इति सम्बन्धः। "अनादित्वसाधनम्" इत्यत्राभावान्यत्वे भावत्वे वा सतीत्युपस्कर्तव्यम्। तेन प्रागभावे न व्यभिचारशङ्का। "पक्षधर्मताम्" इति वदन् त्वदादयो जीवा इति पक्षनिर्देशमभिप्रैति। यद्यपि साधनस्य समुचितदेशवृत्तित्वमेव सामर्थ्यम्। न परेषामिव पक्षधर्मतानियमः। तथाऽप्यत्र सम्भवात् तदुक्तिः। **दृष्टान्ते** ईश्वरे। तथा च तत्र साध्यसाधनानुगतिप्रदर्शनेन तद्दोष उद्धृतः। **साध्याभिधानम्** अविनाशिनः नित्याः इति साध्याभिधानम्। ननु "न चैव न भविष्यामः" इत्यर्धस्य यदुक्तं व्याख्यानम् "अहं न भविष्यामीति न, त्वं च न भविष्यसीति न, इमे जनाधिपाश्च न भविष्यन्तीति नेति वाक्यं भेत्तव्यम्। तत्रापि सिद्धस्यार्थस्य साध्यत्वेन निर्देशो दोषायेति यथाऽहं नित्यः सर्ववेदान्तेषु प्रसिद्ध एवं त्वमेते जनाधिपाश्च नित्या इति यथैवंशब्दावध्याहर्तव्य" इति तदयुक्तम्। अध्याहारस्य दोषत्वात्। वाक्यभेदस्यान्याय्यत्वाच्च। यदत्रोक्तं सिद्धार्थस्येत्यादि तदपि न। आत्मभेदाभावेन सिद्धासिद्धत्वादिविभागस्यैवायोगात्। अत एव 'देहिनः' इति "अन्तवन्त इमे देहाः नित्यस्योक्ताः शरीरिणः" इत्यादावेकवचनमात्माभेदाभिप्रायं सङ्गच्छते। न चैवं न भविष्यामो वयमिति कथं बहुवचनम्? "बहुषु बहुवचनम्" इति हि शास्त्रमिति वाच्यम्। शरीरबाहुल्यापेक्षया तदुपपत्तेः। तदाह सङ्करः— "देहभेदानुवृत्त्या बहुवचनं नाऽत्मभेदाभिप्रायेण" इति। तथा च न न भविष्यामः, किन्तु भविष्याम एव सर्वे वयमित्येकवाक्यत्वेनैव व्याख्यानं युक्तमित्यत आह

**अत्र भगवतेति** । "न त्वेवाहम्" इति श्लोके अहम्पदगृहीतादीश्वरात् त्वम्पदबहुवचनान्तजनाधिप-पदगृहीतानां जीवानां परस्परं च पृथङ्निर्देशेन, भेदसापेक्षबहुवचनेन च भेदः प्रतिपिपादयिषित इति विज्ञायते । एवं प्रतिपादितेऽपि भेदे तमनादृत्य केवलमात्माभेदमभ्युपगम्य बहुवचनगतिं वदतः परस्य पूर्वार्धाक्षरानानुगुण्यं स्फुटम् । देहिन इत्यादावेकवचनं पूर्वोत्तरदेहेष्वात्मैकत्वबोधकत्वेनान्यथा-सिद्धम् । न पुनर्देवदत्तयज्ञदत्तादिदेहेष्वात्मैक्यसाधकमित्युत्तरं 'देहिनः' इति श्लोकव्याख्यानावसर एव भविष्यति । यदि च प्रमाणान्तरबलादात्मैक्यमित्यभिमानस्तदा 'बुद्धियुक्तः' इत्यत्र "न चैकीभूत एव ब्रह्मणा सः" इ यैक्यप्रमाणनिरासेन नेदं व्याख्यानं युक्तमित्युत्तरं भविष्यतीत्यर्थः । अतोऽध्याहारेण, वाक्यभेदेन च व्याख्यानमेव युक्तमित्याशयः ।

प्रमेयदीपिकाभाष्यगीतो गीतार्थ उच्यते ।
प्रस्थानान्तरगीतार्थविभेदप्रतिपत्तये ॥ १ ॥
तत्रोक्तार्थोऽपि भाष्यादावनुक्तः क्वापि वर्ण्यते ।
यथामनीषं विबुधा अनुगृह्णन्तु मां (सदा) मुदा ॥ २ ॥

तत्र "अशोच्यानन्वशोचस्त्वम्" इत्यादिगीताश्लोकद्वयाक्षरार्थस्तु— "तत्र साक्षादिन्द्रावतार-मुत्तमाधिकारिणमात्मनः प्रियतममर्जुनं क्षत्रियाणां विशेषतोऽपि परमधर्मं नारायण द्विट्तदनुबन्धि-निग्रहं बन्धुस्नेहादधर्मत्वेनाऽऽशङ्क्य ततो निवृत्तप्रायं स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमधर्मः तद्विरुद्धः सर्वोऽप्यधर्मः भगवदधीनत्वात् सर्वस्य इति बोधयति भगवान्नारायणः" इति "अशोच्या-नन्वशोचस्त्वम्" इत्यादिसमग्रगीताग्रन्थोऽवतारितस्तात्पर्ये । त्वमिति श्रवणाद् हे पार्थेति लभ्यते । हे पार्थ त्वमशोच्यानन्वशोचः । प्रसिद्धानुवादेनाप्रसिद्धस्य विधेयत्वाद् यानन्वशोचः अनुशोचित-वानसि तेऽशोच्या इति वाक्यवृत्तिः । अतस्तान् प्रति न शोकः कार्यः । यांश्च "दृष्ट्वेमं स्वजनं कृष्ण" इत्यादिवादान् भाषसे ते प्रज्ञावादाः, स्वमनीषामात्रपरिकल्पितानि वचनानि । न तु शास्त्राचार्योपदेशप्राप्तानि । कथमेतल्लभ्यते ? उच्यते— प्रज्ञाया वादाः प्रज्ञावादाः कार्यकारणभावे षष्ठी । न हि स वादोऽस्ति यः प्रज्ञापूर्वो न भवतीति सामर्थ्यात् स्वेति लभ्यते । सावधारणं चैतत् अब्भक्ष इति यथा । अन्यथा पुनर्वैयर्थ्यादिति । नन्वासन्नविनाशाः कथमशोच्याः ? येनाशोच्या-नन्वशोचस्त्वमित्युच्यते । कथं च "न योत्स्ये" इति वाक्यं स्वमनीषोत्थितवचनम् ? 'दृष्ट्वेमम्' इत्यादिनोपपत्तेरुक्तत्वादित्यत उक्तम् **गतासूनिति** ॥ "पण्डः षण्डे धियि स्त्री स्यात्" इत्यभिधानात् पण्डा बुद्धिरेषां सञ्जाता पण्डिता बुद्धिमन्तः । चशब्द उपमार्थः । अगतासूनत्यक्तप्राणानिव गतासू-नासन्नविनाशानपि नानुशोचन्ति यतोऽतस्तान् प्रति न शोकः कार्यः ॥ ११ ॥

पण्डिता अप्यगतासूनिव गतासून्नानुशोचन्तीति कस्मात् कारणादित्यतो नित्यत्वादित्युच्यते **न त्वेवाहमिति**। जातु कदाऽप्यहं नाऽसमिति न। किन्त्वासमेव। त्वं च नाऽसीरिति न। अपि त्वासीरेव। इमे जनाधिपा न नाऽसन्। अपि त्वासन्नेव। ते च त्वं च यूयं यूयमहं च "त्यदादीनां मिथः सहोक्तौ परं शिष्यते" वयं सर्वे अतः परस्मिन्नपि काले न चैव न भविष्यामः अपि तु भविष्याम एवेत्यतीतानागतकालद्वयसम्बन्ध उक्तः। वर्तमानकालसम्बन्धः स्फुटसिद्धत्वान्नोक्तः। एवं सर्वकालसम्बन्धसिद्धावतीतकालसम्बन्धरूपेणानादित्वेन हेतुनानागतकालसम्बन्धलक्षणनित्यत्वावगमाच्छोकानर्हतेति। अयमत्र प्रयोगोऽभिमतः। अहं कृष्णः त्वदादिचेतनाश्च नित्याः। अविद्यान्यभावत्वे सत्यनादित्वात्। प्रकृत्यादिवत्। इति। अत्र भावरूपाज्ञाने प्रागभावे च व्यभिचारपरिहाराय हेतौ विशेषणद्वयम्। अयं च हेतुः जीवाः नित्याः चेतनत्वादीश्वरवत्, पर्वतो वह्निमान् धूमवत्त्वात् महानसवदित्यादौ चेतनत्वधूमवत्त्वादिहेतुरिव सपक्षैकदेशवृत्तिरभिमत इति ध्वंसमादाय असाधारण्यं न शङ्कनीयम्। अर्जुनं निमित्तीकृत्य प्राप्तलोकोपकारार्थं हि भगवतोपदेशः क्रियते। तत्र ये भगवतः कृष्णस्येश्वरत्वं नित्यत्वं न जानन्ति तान् प्रति यथाश्रुतैव योजना। दृष्टान्तस्तूत्तरत्र प्रकृत्यादिर्भविष्यति। ये तु तज्ज्ञात्वा जीवनित्यतामेव न जानन्ति तान् प्रत्यन्यथा योजना "यथाऽहं परमेश्वरः सर्ववेदान्तेषु नित्यः प्रसिद्धस्तथा त्वमेते जनाधिपाश्च नित्या इति। ननु वेदान्तैरीश्वरनित्यत्वं जानन्तस्तत्रैवोक्तं जीवनित्यत्वं कथं न जानन्ति ? उच्यते— "नित्यो नित्यानाम्" इत्यादौ निर्धारणसामर्थ्यात् जीवानां नित्यत्वमीश्वरस्य परमनित्यत्वमवगम्य मन्दाः प्रतिपद्यन्ते "नित्यत्वं हि विनाशाभावः। न चाभावस्तारतम्यवान्। अत ईश्वर एव नित्यो जीवेषु तूपचारः" इति। तान् प्रत्यनुमानेन त्वदादयो जनाधिपा नित्याः अविद्यान्यभावत्वे सत्यनादित्वात् मद्वदित्येवंरूपेण जीवनित्यत्वम् ईश्वरदृष्टान्तेन साध्यते। तत्र "न त्वेवाहं जातु नाऽसम्" इति दृष्टान्तेऽनादित्वं साधनमनुवदति। "न त्वम्" इत्यादिना तस्य पक्षधर्मतामाह। "न चैव" इत्यादिना दृष्टान्ते पक्षे च साध्याभिधानमिति ॥ १२ ॥

### गीतातात्पर्यनिर्णयः

**बन्धुस्नेहाद्धि त्वया स्वधर्मनिवृत्तिः क्रियते। तत्र देहनाशभयात्किं वा चेतननाशभयात् ? देहस्य सर्वथा विनाशित्वान्न तत्र भये प्रयोजनम्। न च चेतननाशभयात्। तस्याविनाशित्वादेव।**

*प्रका०*— 'न योत्स्य' (अ.२ श्लो.११) इति अर्जुनवचनं कथं प्राज्ञमतविरुद्धमित्यत आह **बन्धुस्नेहादिति** ।

*न्या०दी०*— द्वितीयं चोद्यं परिहर्तुमनुवदति **बन्धुस्नेहादिति** ॥ बन्धुस्नेहनिमित्तात्तन्नाशभयादित्यर्थः । सत्यमित्यतो विकल्पासहत्वात्तत्प्राज्ञमतविरुद्धमिति भावेन बन्धुशब्दस्य शरीरविशिष्टचेतने प्रयोगाद्विकल्पयति **तत्रेति** ॥ आद्यं दूषयितुं देहिन इति श्लोकतात्पर्यमाह **देहस्येति** ॥ न तत्र भये प्रयोजनमिति । देहनाशभयनिमित्तया स्वधर्महान्या प्रयोजनं नास्तीत्यर्थः ।

(परिहारो हि भये प्रयोजनम् । न चासौ सम्भवति । कौमारादीनामिव देहस्य सर्वथा विनाशित्वात् । प्रयोजनाभावेन च भयानुपपत्तौ न तेन स्वधर्मनिवृत्तिर्युक्तेत्यर्थः । भयस्यास्वाधीनत्वेन प्रयोजनापेक्षापूर्वत्वाभावात् कथमिति चेन्न । यदृच्छया भयोत्पत्तावपि प्रयोजनाभावपरामर्शेन तत्परिहारस्याभिप्रेतत्वात् ।)

*भा०दी०*— **सत्यमिति** । बन्धुस्नेहनिमित्तान्नाशभयात् 'न योत्स्ये' इत्येतत्सत्यमिति अर्जुनोक्तिपरिहारार्थं विकल्पयतीत्यन्वयः ॥ **तदिति** । उक्तरूपमर्जुनवचनमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**न तावत्परमचेतनस्य मम नाशोऽस्ति । एवमेव तवान्येषां च । —**

**'नित्यो नित्यानां चेतनश्चेतनानाम् ।'**
**'एको बहूनां यो विदधाति कामान्' ॥ इत्यादि श्रुतेः ।**

*प्रका०*— यच्चोक्तं निवृत्तस्य प्रवृत्तिनिमित्तमीश्वरवज्जीवनित्यत्ववचनादिकं मानं नत्वेवेति तदर्थमनुवदति **न तावदिति** ।

*न्या०दी०*— द्वितीयनिरासाय न त्वेवेति श्लोकतात्पर्यमाह **नेति** ॥ अविनाशित्वेन भयप्राप्तेरेवायोगाद्भयेन स्वधर्मनिवृत्तिः सुतरामयुक्तेत्यर्थः । नन्वीश्वरनाशस्यानाशङ्कितत्वात्किमर्थं न त्वेवाहमित्युक्तिरित्यतो दृष्टान्तत्वेन श्लोकं व्याचष्टे **न तावदिति** ॥ प्रागभावश्चेति द्रष्टव्यम् । तावदितीश्वरस्य स्वरूपतो देहतश्च नाशाद्यभावं सूचयति । परमचेतनस्येति स्वतन्त्रचेतनत्वहेतुं सूचयति **एवमेव इति** । चेतनमात्रत्वेन स्वरूपतो नाशादिर्नास्तीत्यर्थः । ईश्वरस्य परमनित्यत्वचेतनत्वे कुतः प्रसिद्धे ? येनासौ दृष्टान्ततयोपादीयत इत्यतः श्रुतिप्रसिद्धिं दर्शयति **नित्य इति** ॥

*भा०दी०*— एवमेवेत्यस्य परमचेतनत्वेनेति भ्रमनिरासायाह **चेतनमात्रत्वेनेति** ॥ **अतिशयेन नित्यत्वमेवेति** । 'चेतनश्चेतनानाम्' इत्यत्रेति भावः । **विवक्षितेति** । स्वरूपतो देहतश्च प्रागभावविनाशयोरभावरूपोऽर्थ इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**'स्वदेहयोगविगमौ नाम जन्ममृती पुरा ।**
**इष्येते ह्येव जीवस्य मुक्तेर्न तु हरेः क्वचित्' ॥**

**—इति स्कान्दे ।**

*प्रका०*— नित्यानां चेतनानां नित्यचेतन इत्यतिशयेनेश्वरनित्यत्वं श्रूयते तत्कथमित्यत आह **स्वदेहेति** ।

*न्या०दी०*— नित्यो नित्यानामित्यतिशयेन नित्यत्वमेवोच्यते, न तु विवक्षितार्थ इत्यतस्तत्स्मृत्या विवृणोति **स्वदेहेति** ॥ विष्णोरपि जीववद्देहयोगादिसद्भावात्स्वदेहेत्युक्तम् । मुक्तेः पुरेति सम्बन्धः ।

**गीतातात्पर्यनिर्णयः**

**ईश्वरस्यापि युद्धगतत्वान्मोहात्तस्याप्युभयविधानित्यत्वशङ्काप्राप्तौ तदपि निवार्यते न त्वेवाहं जातु नासमिति । यद्यप्येषा शङ्काऽर्जुनस्य नास्ति तथाऽपि प्राप्तलोकोपकारार्थं भगवता निवार्यते । एकान्ते कथयन्नपि व्यासरूपेण तदेव लोके प्रकाशयिष्यति हि ॥ १२ ॥**

*प्रका०*— नत्वेवाहं जातु नासमित्येतत्प्रकारान्तरेण वर्णयति **ईश्वरस्येति** ।

*न्या०दी०*— अथवा दृष्टान्ततां विना ईश्वरोऽपि पक्षे निक्षिप्यत इति तत्प्राप्तिपूर्वकमाह **ईश्वरस्येति** ॥ तदपि उभयविधानित्यत्वमपि । नन्वत्रेश्वरस्य जीववत्स्वरूपनाशाद्यभाव एवोच्यते । तत्कथमुभयविधानित्यत्वं निवार्यत इत्युच्यत इत्यत आह **न त्वेवेति** ॥ तुशब्देनेश्वरस्य विशेषतो नाशाद्यभावो ज्ञायते । स चोक्तविध एवेति भावः । नन्वर्जुनस्य ज्ञानित्वाद्युद्धगतेऽपि भगवत्येतच्छङ्काऽभावादप्राप्तप्रतिषेधोऽयमित्यत आह **यद्यपीति** ॥ प्राप्तः योग्यः शङ्कावान् सज्जनश्च । अनेनैवेश्वरानित्यत्वस्याप्रस्तुतत्वादिति भाष्यविरोधोऽपि परिहृतः । एकान्ते कथ्यमानेनानेन कथं लोकोपकार इत्यत आह **एकान्त इति** ॥ व्यासरूपेण गीतायां निबध्य ॥ १२ ॥

*भा०दी०*— **उभयविधेति** । स्वरूपतो देहतश्चेत्यर्थः । प्रतीकग्रहणबलाच्छङ्कानिरासलाभ इति भावेनाह **तुशब्देनेति** । लोकपदेन विवक्षितमर्थमाह **प्राप्त इत्यादिना** ॥ **अनेनेति** । लोकस्य प्रसक्तिकथनेनार्जुनापेक्षयाऽप्रस्तुतत्वोक्तिविरोधो नेत्यर्थः ॥ १२ ॥

**गीता**

## देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
## तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

*वि०वि०*— ननु देहव्यतिरिक्तात्मनः सत्त्वे तस्य नित्यत्वं स्यात्, तदेवासिद्धमिति चेत्तत्राह **देहिन इति** । यथा कौमारादिविशिष्टदेहभेदेपि योऽहं कुमारशरीरवानभूवं सोऽहमिदानीं युवशरीवान् वर्त इत्यादिप्रतिसन्धानाद्देहातिरिक्त आत्मा सिद्धः । तथैतद्देहपरित्यागेन देहान्तरप्राप्तावपि प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वदेहानुसन्धानात्तद्व्यतिरिक्तात्मसिद्धिरिति । ननु न तावज्ज्ञानमात्रेण देहव्यतिरिक्तात्मसिद्धिर्नैरात्म्यवादिभिरुत्प्रेक्षितैः शरीरादीनां सन्निधौ ज्ञानदर्शनात् । तेषामन्यतमस्य ज्ञातृत्वात् । नापि प्रत्यभिज्ञानेन, तस्य भ्रांतित्वादित्यत आह **धीर इति** । धीरो धीमान् एवंविधैः कुतर्कैः देहव्यतिरिक्तात्मविषये न मुह्यति । ते धीरेण स्वयमेव निराकार्या इति । तथाहि– न तावदहं मनुष्य इत्यनुभवाच्छरीरस्य कौमाराद्यनुभवः शंकनीयः, भौतिकत्वात् । अन्यथा मृतस्यापि तत्प्रसङ्गात् । प्राणेन्द्रियापगमान्मृतस्यादर्शनमितिचेन्न । प्राणादेः सत्त्वेऽपि सुप्त्यादौ ज्ञानादर्शनात् । अत एव मनसोऽपि न ज्ञातृत्वम्, सुप्त्यादौ सत्यपि मनसि ज्ञानादर्शनात् करणत्वाच्च । मनसा जानामीत्यनुभवात् । न च करणस्य कुठारस्येव कर्तृत्वमुपपद्यते । एतेन बाह्येन्द्रियाणामपि ज्ञातृत्वं निरस्तम् । चक्षुषा पश्यामीत्यादौ तेषामपि करणत्वप्रतीतेः । न च प्रत्यभिज्ञानं भ्रान्तिः । बाधकाभावादिति ।

अथवा, बंधुस्नेहाद्धि त्वया स्वधर्मनिवृत्तिः क्रियते । सा किं चेतननाशभयात्, किं वा देहनाशभयात् । नाद्यः । तस्याविनाशत्वादेवेत्याह **न त्वेवेति** । युद्धगतत्वादीश्वरस्याप्यनित्यत्वं शङ्क्येत । सा शङ्का लोकोपकारार्थं भगवता निवार्यते । एकान्ते कथितस्यापि व्यासरूपेण तस्यैव लोके प्रकाशयिष्यमाणत्वात् । तुशब्दो देहतोऽपि विनाशाभावं जीवेभ्यो विशेषं द्योतयति । तदुक्तम्—

'स्वदेहयोगविगमौ नाम जन्ममृतीपुरा ।
इष्येते ह्येव जीवस्य मुक्तेर्न तु हरेः क्वचित् ॥' इति ॥

मुक्तेः पुरैवेत्यन्वयः । नापि देहनाशभयात्स्वधर्मनिवृत्तिः कार्या । देहस्य सर्वथा नाशादित्याह **देहिन इति** । देहिग्रहणेन देहिदेहविभेदशून्यः परमात्मा व्यावर्त्यते । तेन स्वस्य स्वकीयदेहान्तरप्राप्तिरपि नास्तीति दर्शयति । इतरेषां सा भविष्यतीत्यपि शोको न कार्यः । देहस्येदानीमप्यन्यथात्वदर्शनात् । तत्र यथा कौमारादिदेहहानेन जरादिप्राप्तौ धीरो न शोचति । एवं जीर्णादिदेहहानेन देहान्तरप्राप्तावपि न शोचतीत्यर्थः ॥ १३ ॥

***वा०ल०***— जीवानां स्वसाम्यं निवारयति **देहिन इति** ॥ देहिनः प्राकृतदेहवतो जीवस्येत्यर्थः ॥ १३ ॥

***सा०सं०***— देहनाशभयादिति द्वितीयपक्षं निराह **देहिन इति** । **देहिनः** देहवतो जीवस्य **अस्मिन्** इदानीं वर्तमाने स्थूलदेहे । **कौमारं यौवनं जरा** च यथा प्राप्नोति **तथा देहान्तरप्राप्तिः** । अयं भावः कौमारावस्थाविशिष्टदेहहाने यौवनावस्थाविशिष्टदेहहाने च शोकस्तावन्नास्तीति प्रसिद्धम् । तत्कुत इति वाच्यम् । जरादिविशिष्टदेहान्तरलाभात् । समानलाभेन हानिर्हि समाधीयत इति चेत्, मृतावपि शोको न कार्यः, देहान्तरलाभादेव । यदा तु जीर्णदेहसमीचीनयौवनदेहहानेः प्रतिनिधिः, तदा सुतरां समीचीनदेहान्तरलाभेन जीर्णदेहहानेरिति । अतो **धीरः** बुद्धिमान् **तत्र** देहनाशविषये **न मुह्यति** न मोहं प्राप्नोति । एतेषां देहाः नश्यन्तीति शोकं न प्राप्नोति इत्यर्थः । तत्रावस्थामात्रहानिः, अत्रावस्थावतोऽपीतिवैषम्यमनुपयुक्तम् । निष्कदानेन पटग्रहणदृष्टेरिति । अत्र देहिन इत्युक्त्या देहवतो जीवस्यैव न तु देहदेहिभेदहीनस्य हरेर्जराद्यवस्था देहान्तरावाप्तिर्वेति सूचितम् ।

देहान्यजीव एव नास्ति । एवं च 'त्वदादयो जनाधिपा नित्याः अनादिनित्यत्वात्' इति प्रागुक्तप्रयोगे देहपक्षीकारे असिद्धिबाधौ, जीवपक्षीकारे चाश्रयासिद्धिरिति तृतीयपक्षमाशङ्क्य परिहरति **देहिन इति** । अत्र कौमारादिविषयेण तदनुभवो विषयी लक्ष्यते । **देहिन** इत्यस्य देहादन्यस्येत्यर्थः । देहोऽस्यास्तीत्यर्थे मतुबर्थे निप्रत्ययविधानात् । एकवचनात् एकस्येत्यपि लभ्यते । देहान्तरशब्दोऽत्रानेकदेहपरः । तथा चायमर्थः **अस्मिन्** देहे **कौमारं** कौमारानुसन्धानम्, **यौवनं** यौवनानुसन्धानम्, **जरा** जरानुसन्धानम्, योऽहं कौमारशरीरवानभूवं स इदानीं युवशरीरवान् वर्ते, योऽहं युवशरीरवानभूवं स इदानीं जीर्णशरीरवान् वर्ते इत्येवंरूपेण तावदस्ति । तच्च देहिनो देहवतः देहान्यस्येति यावत् । देहशब्दोऽत्र देहेन्द्रियान्तःकरणसङ्घातपरः । देहेन्द्रियान्तःकरणेभ्योऽन्यस्य चेतनस्य भवति । देहादेर्जडत्वेनानुसन्धानकर्तृत्वायोगात् । एवं च देहेन्द्रियादितोऽतिरिक्तजीवसिद्धिः । तथा चैकवचनबलादेकस्यैव देहादन्यस्य कौमाराद्यनेकदेहानुसन्धानं यथा, तथा देहान्तरप्राप्तिरनेकदेहप्राप्तिः देहिनो देहादन्यस्यैकस्यैव भवतीति पूर्वार्धेन देहादन्यसिद्धिः । त्रिपाद्या चोक्त-

विधयाऽनेकदेहप्राप्तिमान् सिद्ध इति देहादन्यजीवपक्षीकारे नाश्रयासिद्धिः । प्रत्यग्रजातस्य शिशो-राहाराद्यभिलाषेण पूर्वपूर्वतरदेहानुसन्धानेन सिद्धानेकदेहानुगत्याऽनादित्वसिद्धेर्न हेतोः स्वरूपासिद्धिरिति भावः ।

ननु देहाद्यन्यतमस्यैवास्त्वनुसन्धानम् । चार्वाकाद्युक्ततर्कबलादित्यत आह **धीर इति । बुद्धिमान्** तत्र देहादन्यात्मविषये **न मुह्यति** । देहादीनां जडत्वकरणत्वादिना कर्तृत्वायोग इत्यादि-रूपेण ते तर्का निरस्या इति भावः ॥ १३ ॥

*अ०प्र०*— तथाहि न तावत् प्रत्यक्षं देहातिरिक्तमात्मानं तद्व्यतिरिक्तपरमात्मानं बोधयति । ननु ईश्वरस्य तव जन्मादिशून्यत्वं सत्यमेव जीवानां जन्ममरणे प्रसिद्धे तत्राह **देहिनेति** ।

देहिनः[१], अस्मिन्[२], देहे[३], यथा[४], कौमारं[५], यौवनं[६], जरा[७], च एतास्तिस्रो अवस्था भवन्ति, तथा देहान्तरप्राप्तिः[८], इति मत्वा, धीरः[९], तत्र[१०], न[११], मुह्यति[१२] इत्यन्वयः ।

देहिनः = देहाभिमानिनो जीवस्य[१], अस्मिन्[२], स्थूलदेहे[३], यथा[४] आदौ कौमारं[५], मध्ये यौवनं[६], अन्ते जरा च[७] एतास्तिस्रो अवस्था भवन्ति, तत्र यथा शोको असिद्धः[७], तथा देहान्तरप्राप्तिः, न तु तावता आत्मनो नाशः इति मत्वा[८], धीरः = अतो धीमान्[९], तत्र देहनाशोत्पत्त्योः[१०], न मुह्यति = आत्मैव मृतो जातश्चेति न मन्यते[११], तत्कस्य हेतोरिति वाच्यम्, जराविशिष्टदेहान्तरलाभात् = समानलाभे, न हानिर्हि समाधीयत इति चेत् तर्हि मरणेऽपि देहान्तरलाभात् शोको न कार्यः ॥ १३ ॥

### भाष्यम्

**देहिनो भाव एतद्भवति; तदेवासिद्धमिति चेत् न । देहिनोऽस्मिन् । यथा कौमारादिशरीरभेदेऽपि देही तदीक्षिता सिद्धः । एवं देहान्तरप्राप्तावपि; ईक्षितृत्वात् ।**

*प०टी०*— अत्रेक्षणान्यथानुपपत्त्या देहातिरिक्तात्मसिद्धिः, कौमाराद्यपायेऽपि तदनुस्मरणेन आत्मनः स्थैर्यं च सिद्ध्यति । तद्दृष्टान्तेन मरिष्यमाणा अपि देहातिरिक्ता स्थायिनश्च, ईक्षणा-न्यथानुपपत्त्यैव सिद्ध्यन्ति ।

*न०टी०*— ननु 'आत्मनित्यत्वं देहहानिः' इत्युक्तिरात्मसत्वे स्यात् । तदेवासिद्धम् । मानाभावाद्विचारासहत्वाच्च । तथाहि— स किं सर्वगतः ? अणुः ? देहमानो वा ? नाद्यः ।

अदेहप्रदेशे तद्भोगादर्शनात् । व्यञ्जकाभावाददर्शनमिति चेत् । न । देहेष्वपि सर्वेष्वदर्शनात् । सर्वेषाम् अतत्कर्मारब्धेष्वदर्शनमिति चेत् । न । सर्वगतात्मपक्षे तदतत्कर्मविभागानुपपत्तेः । अतद्देहोत्पन्नं अतत्कर्मेति चेत् । न । कर्मविभागसिद्धौ देहविभागसिद्धिः, देहविभागसिद्धौ कर्मविभागसिद्धिरित्यन्योन्याश्रयापत्तेः । बीजाङ्कुरयोरिव देहादृष्टयोरनादितः कार्यकारणभावोपपत्तावपि, सर्वदेहगतानां कर्मविभागे देहविभागे वा न काचिदुपपत्तिरित्येषा दिक् । अतो न सर्वगत आत्मा । न चाणुः । देहेऽप्यव्याप्तिप्रसङ्गात् । नापि तत्तद्देहमानः । सङ्कोचविकासाभ्यां विकारत्वेनानित्यत्वप्रसङ्गात् । अतो न देहातिरिक्त आत्मेति चोद्याभिप्रायः । अस्योत्तरत्वेनोत्तरश्लोकं व्याचष्टे **देहिन इत्यादिना** ॥

अत्रेक्षणान्यथानुपपत्त्यैवं देहातिरिक्तात्मसिद्धेः, तस्य यथा कौमारादिकं हित्वा यौवनादिप्राप्तौ स्थायित्वं च सिद्ध्यति । तथेमं देहं हित्वा देहान्तरप्राप्तावपि ईक्षणान्यथानुपपत्त्यैव देहातिरिक्तात्मसिद्धेस्तन्नित्यत्वमपि सिद्ध्यतीति भावः ।

अत्र **देहान्तरप्राप्तावपीत्यनेन** सर्वगतत्वादिविचारासहत्वमपि प्रत्युक्तम् । उत्क्रान्तिगत्यागतीनामणुत्वसाधकत्वात् । न चैतावता देहव्याप्त्यभावः । प्रदीपस्यालोकेन गुणेन गृहव्याप्तिवदात्मनश्चिद्गुणेन देहव्याप्तिसम्भवात् । उक्तं हि भगवता 'गुणाद्वाऽऽलोकवत्' इति ॥ १३ ॥

***प्र०दी०***— ननु चात्र किं परिदृश्यमानदेहपक्षीकारेणानुमीयते, किंवा तदतिरिक्तदेहिपक्षीकारेण । नाद्यः । देहोत्पत्तिविनाशयोः प्रत्यक्षसिद्धत्वेन हेतोः स्वरूपासिद्धत्वात्, कालात्ययापदिष्टत्वाच्चेति स्फुटत्वान्नोक्तम् । द्वितीये दोषमाह— **देहिन इति** । देहिनः देहवतः देहातिरिक्तस्यात्मनः सद्भावे एतत् नित्यत्वानुमानं भवति सम्भवति । देहपक्षोक्तदोषाभावात् । किन्तु तद्देहातिरिक्तात्मसत्त्वमेवासिद्धम् । प्रमाणाभावात् । ततश्च आश्रयासिद्धिरिति । अस्तु वा देहातिरिक्तात्मसत्त्वम् । तथाऽपि नानुमानं सम्भवतीत्याह— **देहिन इति** । 'देहिनः' इत्येकवचनं तन्त्रम् । तत्पूर्वोत्तरदेहेष्वेक एवायमात्मेत्यस्यार्थस्य भाव एतदनुमानं सम्भवति । स्वरूपासिद्ध्याद्यभावात् । किन्नाम ? तत्पूर्वोत्तरदेहेष्वात्मैकत्वमेवासिद्धं प्रमाणाभावात् । तथा च देहोत्पत्तावुत्पत्तिमतः तद्विनाशे च नाशवतः कथमनादित्वेन नित्यत्वं साध्यत इति । उभयस्यापि परिहारदर्शनादेवं योज्यम् । अर्थद्वयानुगुण्यायैव बहुवचने प्रकृतेऽप्येकवचनम् । तथा भाव इति पुल्लिङ्गे प्रकृतेऽपि 'तदेव' इति सामान्यग्रहणाय नपुंसकनिर्देशः । न इत्याहेति शेषः । देहिनोऽस्मिन्नित्यतःपरमितिशब्दश्च । आक्षेपद्वयपरिहाराय पादत्रयं व्याख्याति— **यथेति** ।

अत्र 'देही तदीक्षिता सिद्धः' इति देहातिरिक्तात्मसाधनम् । तदिति कौमारादिपरामर्शः । याजकादित्वात् समासः । द्वितीयान्तस्य तृन्नन्तेन वा समासः । अस्ति तावत् कौमारादिविषयमीक्ष-

णम् । न चेक्षणमीक्षितारं विना सम्भवति । स च वक्ष्यमाणात् परिशेषप्रमाणाद् देही देहातिरिक्तः सिद्ध इति । अत्र कौमारादिग्रहणमतन्त्रम् । ज्ञानमात्रेण ज्ञातृसिद्धेः देहशब्दश्चेन्द्रियादिसहितशरीर-वृत्तिः । श्लोके च 'कौमारं यौवनं जरा' इति विषयेण विषयीक्षणमुपलक्ष्यते । तद् देहिनो देहाति-रिक्तस्येत्युक्तं भवति । यथेत्यादिसमस्तवाक्यं श्लोके न पादत्रयं देहभेदेऽप्यात्मैकत्वसाधनम् । कौमा-रादिमच्छरीरभेद इत्यर्थः । देह्येक एवेत्यर्थः । **तदीक्षितेति** । योऽहं कुमारशरीरवानभूवं स इदानीं युवशरीरवान् वर्त इत्यादिप्रत्यभिज्ञातेत्यर्थः । देहान्तरप्राप्तावपीत्यनेकदेहप्राप्तावपीत्यर्थः । एक एव देही सिद्ध इति वर्तते । **ईक्षितृत्वादिति** । प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वदेहानुसन्धानसिद्धे-रित्याशयः ॥ १३ ॥

***भा०दी०***— तदनुवादः देहातिरिक्तात्मसत्त्वमिति व्याख्या । आश्रयासिद्धिरितीत्यनन्तरं इत्येकाशङ्केति शेषः । तदेव वाक्यमन्यथापि योजयति **अस्तु वेति** । **तन्त्रमिति** । विवक्षित-त्वेनोपात्तमित्यर्थः । **तत्पूर्वोत्तरेति** । तदीयत्वेनाभिमतपूर्वोत्तरदेहेष्वित्यर्थः । **एतद्** इत्यनुवादः । **अनुमानम्** इति व्याख्या । 'साध्यत इतीत्यनन्तरं "अन्या शङ्का" इति शेषः । योजनाद्वये ज्ञापकान्याह **उभयस्यापीति** । देहिन इति श्लोके भाष्यरीत्या शङ्काद्वयपरिहारदर्शनादित्यर्थः । **बहुवचन इति** । पूर्वश्लोकस्योत्तरार्धे ।

ननु तदीक्षितेत्यत्र कौमारादेरीक्षित इति षष्ठीसमासो न युक्तः । "कर्तरि च" इति सूत्रे कर्त्रर्थकतृजकाभ्यां योगे षष्ठी न समस्यत इत्युक्तेरित्यतो याजकादिभिश्च (२-२-९) इति प्रति-प्रसवादात्ताच्छिलिकतृच्प्रत्ययान्तत्वेन द्वितीयाश्रितातीतेति सूत्रे गमिगम्यादेरुपसङ्ख्यानमित्युक्ते द्वितीयातत्पुरुषो वेत्याह **याजकादित्यादि** । **द्वितीयान्तस्येति** । न लोकाव्ययनिष्ठेति षष्ठी-निषेधादिति भावः । आद्यशङ्कोत्तरत्वेन भाष्यं योजयति **अस्ति तावदिति** । **वक्ष्यमाणत्वादिति** । न हि जडस्येत्यादिनेति भावः । अस्यां योजनायां यथेति न सम्बध्यते । **अतन्त्रमिति** । अविव-क्षितमित्यर्थः । तत्र हेतुः **ज्ञानमात्रेणेति** । इन्द्रियादिभ्यो व्यतिरिक्तत्वसिद्ध्यर्थमाह **देहशब्दश्चेति** । 'आदिपदेन मनःप्राणजाठराग्न्यादि ग्रहः' इत्यन्तभाष्येण सूचितां मूलयोजनां दर्शयति **श्लोके चेति** । एवं मूले 'पूर्वार्धव्याख्यापनसिद्धं' इत्यन्तभाष्यं आद्यशङ्कानिवर्तकत्वेन व्याख्याय अधुना ईक्षितृ-त्वादित्यन्तं समग्रभाष्यं पादत्रयव्याख्यापनं द्वितीयचोद्यनिवर्तकत्वेन व्याख्याति **यथेत्यादिना** । देहीत्येकवचनस्य तन्त्रत्वमुपेत्याह । देहीत्येक एवेत्यर्थः । कौमारादिदेहनिष्ठो जीवः एक एवेत्यर्थः ।

***भा०र०***— ननु चेति निपातसमुदायो विरोधोक्तौ । विरोधमेव व्यनक्ति **देहोत्पत्तिविनाशयो-रिति** ॥ **कालात्ययापदिष्टत्वाद्** बाधितसाध्यकत्वात् । **द्वितीये** देहिपक्षीकारपक्षे । 'देहवतः' इति

व्याख्यानं देहोऽस्यास्तीति देही, तस्येति व्युत्पत्तिप्रदर्शनार्थम् । प्रकृतोपयोगायाह **देहातिरिक्तस्येति** । इनिप्रत्ययेन सम्बन्धवाचिना भेदाक्षेपादेवमुक्तिः । "एतद् भवति" इति पदद्वयमनूद्यार्थमाह **एतदनुमानं भवति सम्भवतीति** । क्वचित्तु भवतीत्येव पाठः । तत्र भवति सम्भवतीत्यर्थः । तत्र हेतुः **देहेति** ॥ **तत्पक्षोक्तदोषौ** स्वरूपासिद्धिकालात्ययापदिष्टत्वे । आत्मनित्यत्वस्य प्रत्यक्षबाधाभावादिति भावः । भाष्यपदमनूद्य व्याचष्टे **तद्देहेति** ॥ किमतः प्रकृतानुमानदूषणमित्यत आह **ततश्चेति** ॥ एतदेव भाष्यं प्रकारान्तरेणावतारयति **अस्तु वेति** ॥ **तन्त्रं** विवक्षितार्थम् । तद्विवक्षया लब्धमर्थमाह **तत्पूर्वोत्तरदेहेति** । सम्भवहेतुः **स्वरूपेति** ॥ बाध आदिपदार्थः । तर्ह्यनुमानं निष्प्रत्यूहमिति पृच्छति **किं नामेति** । परिहरति **तदिति** । देहपक्ष इव स्वरूपासिद्धिबाधयोरनिवारणाभिप्रायेणाऽऽह **कथमिति** । उभयस्यापि परिहारदर्शनादिति ॥ देहातिरिक्तात्मसत्त्वमेवासिद्धमित्याद्यचोद्यस्य "देही तदीक्षिता सिद्धः" इति भाष्ये परिहारदर्शनात् पूर्वोत्तरदेहेष्वात्मैकत्वमेवासिद्धमिति द्वितीयचोद्यस्य "यथा कौमारादि" इति समस्तभाष्ये श्लोके च पादत्रये देहभेदेऽप्यात्मैकत्वमस्तीति परिहारदर्शनाद् गमनिकाभाष्यमुक्तरीत्या द्वेधा योज्यमित्यर्थः । अत्र ज्ञापकमाह **अर्थद्वयेति** । देहातिरिक्त आत्मा, पूर्वोत्तरदेहेष्वेक एवाऽऽत्मेत्यर्थद्वयेत्यर्थः । बहुवचने, "त्वमेते जनाधिपाः" इति पूर्वश्लोके । एकवचनं, देहिन इत्येकवचनम् । तच्च तन्त्रमिति पूर्वोत्तरदेहेष्वेको देही सिद्ध्यतीति तन्नित्यत्वलाभ इति भावः । **सामान्येति** । प्रकरणात् स एवासिद्ध इति वक्तव्येऽपि यत् तदित्याह तत् "सामान्ये नपुंसकम्" इति न्यायात् सामान्यग्रहणाय । सामान्यं चानेकापेक्षम् । अनेकं च देहातिरिक्तात्मसत्त्वं पूर्वोत्तरदेहेष्वात्मैकत्वं च ग्राह्यमिति युक्तमुक्तव्याख्यानमिति भावः । इतिशब्दश्च । शेष इति वर्तते । देहातिरिक्तात्मसाधनप्रकारं दर्शयितुमाह **तदिति कौमारादीति** ।

ननु तदीक्षितेति कथम् ? "तृजकाभ्यां कर्तरि" इति षष्ठीसमासनिषेधादित्यत आह **याजकादित्वादिति** । "याजकादिभिश्च" इत्यस्य "तृजकाभ्यां कर्तरि" इत्येतत्प्रतिप्रसवरूपत्वाद् युक्तो भूभर्तेतिवत् समास इति भावः । याजकादिगणस्य पठितत्वात् तत्रेक्षितृशब्दाभावात् पक्षान्तरमाह **द्वितीयान्तस्येति** । गमिगम्यादीनामुपसङ्ख्यानाद् द्वितीयेति योगविभागाद् वा द्वितीयातत्पुरुष इति भावः । वा समास इत्यत्र समासो वेति वाशब्दसम्बन्धे यथाश्रुतान्वये वा समास इत्यस्य वैकल्पिकत्वं विज्ञायत इति व्यासपक्षे न काऽप्यनुपपत्तिः, समासपक्षे द्वितीयातत्पुरुष इति व्याख्येयम् । तेन व्यासत्वेनैव सामञ्जस्ये समासत्वनिर्वाहप्रयासो न युक्त इति चोद्यानवकाश इति । क्रियायाः कर्तृसापेक्षत्वस्वाभाव्यादाह **विना न सम्भवतीति** ॥

**सः** ईक्षिता । वक्ष्यमाणात् "न हि जडस्य शरीरस्य" इत्यादिना "**काष्ठादिवच्च**" इत्यन्तेन वक्ष्यमाणात् । **अत्र** तदीक्षिता सिद्ध इति वाक्ये । तच्छब्देन कौमारादिग्रहणमविवक्षितमित्यत्र हेतुमाह **ज्ञानमात्रेणेति** ॥ देहातिरिक्तात्मसत्त्वमाक्षिपन्तं प्रति स हि सिषाधयिषितः । तत्साधने च ज्ञानमेव लिङ्गम् । तच्च यत्किञ्चिद्विषयमप्यतिरिक्तात्मसाधनायालमिति न तदर्थं कौमारादिविषय-मीक्षणं विवक्षणीयमिति भावः ।

नन्वीक्षणेन देहातिरिक्तात्मा सिद्ध्यन्निन्द्रियप्राणादिरूपः सिद्ध्यतु । तथा चार्थान्तरमित्यत आह **देहशब्दश्चेति** ॥ देहीति तद्धितप्रकृतिरित्यर्थः । एतादृशदेहातिरिक्तश्चेतन एव सिद्ध्यतीति नार्था-न्तरमिति भावः । ननु भाष्ये कथमीक्षणेन देहातिरिक्तात्मसाधनम् । अस्य गीतायामदर्शनेनोन्मूलता-पत्तेरित्यत आह **श्लोके चेति** । लक्षणाबीजं सम्बन्धं वक्तुमुक्तं **विषयेण विषयीति** ॥ विषयवाचक-शब्देन तद्विषयीक्षणलक्षणेत्यर्थः । **तत्** कौमारयौवनजरावस्थाविषयमीक्षणम् । **उक्तं भवति** श्लोक इति सम्बध्यते । एवं पूर्वार्धव्याख्यारूपं "देही तदीक्षिता सिद्धः" इति भाष्यमाद्यशङ्कोत्तरत्वेन व्याख्याय समग्रम् 'ईक्षितृत्वात्' इत्यन्तं भाष्यं द्वितीयचोद्यपरिहारत्वेन व्याख्यातुमाह **यथेत्यादि इति** । ननु 'कौमारादिशरीरभेदे' इति भाष्ये न तावत् कर्मधारयः । तस्य शरीरावस्थारूपस्य तद्धर्मतया तदभेदासम्मतेः । नापि षष्ठीतत्पुरुषः । "द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिः प्रधानतः" इति नियमाद् धर्मवाचकशब्दे षष्ठ्यनुपपत्तेरित्यत आह **कौमारादिमदिति** । कौमाराद्यवस्थायुक्तानि शरीराणि कौमारादिशरीराणीति विग्रहे शाकपार्थिवादित्वेनोत्तरपदलोपः । कौमारादिपदेन तद्वल्लक्षणा वेति भावः । अत्र देहातिरिक्त इत्यर्थस्य प्रकृतानुपयोगादेकवचनं तन्त्रमित्यभिप्रेत्य तदर्थमाह **एक एवेति** । "द्व्येकयोर्द्विवचनैकवचने" इत्येकत्वविवक्षायामेवैकवचनानुशासनादिति भावः । ननु कथमेकत्वम् ? भाष्योक्तेक्षणेन ईक्षितृमात्रसिद्धावपि तदभेदसाधनोपायाभावादित्यत ईक्षितृपदं व्याख्याति **योऽहमिति** । **कुमारशरीरवानिति** । कौमारशब्दितबाल्यावस्थापन्नशरीरवानित्यर्थः ॥ **प्रत्यभिज्ञातेति** । प्रत्यभिज्ञा च "सोऽयं देवदत्तः" इत्यादावैक्यावगाहिनीति भावः । नन्वन्यो देहो देहान्तरस्तस्य प्राप्तिः तस्यामिति भाष्यार्थे यथा वर्तमानदेहे कौमारादिभेदेऽपि तदीक्षितैकः सिद्ध एवमन्यदेहसम्बन्धेऽपि कौमारादिमानेक एवेत्युक्तं स्यात् । ततश्च प्रस्तुतस्य सिषाधयिषितस्य पूर्वोत्तरदेहेष्वात्मैकस्यासिद्धिरित्यत आह **अनेकदेहेति** ॥ नानादेहलाभेऽप्येक एव सिद्ध इति न प्रस्तु-तानानुगुण्यमिति भावः । देहान्तरेत्यत्रान्तरशब्दस्य मध्यपरत्वभ्रमनिरासायोक्तमनेकदेहेति केचित् । कथमीक्षणं निश्चितं भवतेत्यत आह **प्रत्यग्रेति** ॥ सद्यःसमुत्पन्नेत्यर्थः ।

**भाष्यम्**

**न हि जडस्य शरीरस्य कौमाराद्यनुभवः सम्भवति । मृतस्यादर्शनात् । मृतस्य वाय्वाद्यपगमादनुभवाभावः, 'अहं मनुष्यः' इत्याद्यनुभवाच्चैतत् सिद्धमिति चेत्, न । सत्येवाविशेषे देहे सुप्त्यादौ ज्ञानादिविशेषादर्शनात् ।**

*प०टी०*— नन्वीक्षणस्य देहान्वयव्यतिरेकित्वात् देह एवेक्षिता किं न स्यात् ? इत्यत आह **न हीति** । 'यदा देहस्तदेक्षणम्' इति व्याप्तेः मृतशरीरे व्यभिचारान्नेक्षणस्य देहान्वय इत्यर्थः । मृतशरीरस्याग्न्यादिशून्यत्वेनाशरीरत्वान्न शरीरान्वयबाधो ईक्षणस्येति न शरीरातिरिक्त आत्मा । 'अहं मनुष्यः' इति सामानाधिकरण्याद्देहात्मत्वं सिद्धमित्याशङ्क्यते । मृतशरीरस्य शरीरत्वे विप्रतिपत्तावपि सुप्तमूर्छितादिशरीरे भवत्येवान्वयव्यभिचार इति परिहरति **नेति** । **अविशेषे** वाय्वाद्यपगमादिविशेष-शून्य इत्यर्थः ।

*न०टी०*— नन्वीक्षणस्य देहान्वयव्यतिरेकदर्शनान्न तेन देहातिरिक्तात्मसिद्धिरित्याशङ्क्य, देहान्वयं तावदीक्षणस्य विघटयति **न हि जडस्येति** । मृतशरीरस्य भस्मीभावादेः पूर्वमीक्षणाभावात् न देहान्वितमीक्षणमित्यर्थः । ननु भूतचतुष्टयारब्धे देहे वायुवह्न्याख्यभूतद्वयापगमात् मृतस्यानुभवाभावः । अतोऽनुभवस्य सम्पूर्णदेहान्वयव्यतिरेके बाधकाभावात् 'अहं मनुष्यः' इत्याद्यनुभवितुः देहसामानाधिकरण्याच्च देह एवात्मेति चोदयति **मृतस्येति** । वाय्वाद्यनुगमेन सम्पूर्णेऽपि देहे सुप्त्यादौ जीवतत्स्वरूपसुखकालतमोऽज्ञानं विनाऽन्यज्ज्ञानादर्शनात् न देहान्वयित्वम् अनुभवस्येति परिहरति **नेत्यादिना** ।

*प्र०दी०*— एवमात्मनो देहातिरेकं देहभेदेऽप्येकत्वं च प्रसाध्य 'धीरस्तत्र न मुह्यति' इत्युच्यते । तस्य वैयर्थ्यमित्याशङ्क्य येऽस्मिन् विषयेऽन्येऽपि मोहहेतवः ते धीरेण स्वयं निराकार्या इत्येवमर्थत्वान्न वैयर्थ्यमित्याशयवान् तत्प्रदर्शनार्थमुत्तरं प्रकरणमारभते । तत्रेक्षणेन कथं देहातिरिक्तात्मसिद्धिः । ईक्षिता हि तेन सिद्ध्यति । स च शरीरप्राणजाठरानलेन्द्रियमनोविषयसन्निधावीक्षणदर्शनात् तेष्वन्यतमः किं न स्यादित्यतः शरीरस्य तावदीक्षणं निषेधति **न हीति** । अत्रापि 'कौमारादि' इत्यतन्त्रम् । शरीरस्यानुभवो न सम्भवतीति प्रतिज्ञा । 'जडस्य', 'शरीरस्य' इति हेतुद्वयम् । मृतस्यादर्शनादिति दृष्टान्तोक्तिः । जडत्वं च भौतिकत्वं विवक्षितमिति न साध्याविशिष्टता । अप्रयोजकत्वाभिप्रायेण शङ्कते— **मृतस्येति** । जीवच्छरीरमृतशरीरयोर्भौतिकत्वे शरीरत्वे च समानेऽपि मा भूत् मृतशरीरस्येक्षणम् । प्राणादिवायूनां जाठरानलस्येन्द्रियाणां चापगमात् ।

जीवतस्तु प्राणादिसन्निधानाद् भविष्यति । को विरोधः । मा हि भूदेकधर्मोपपन्नानामवान्तरकारण-वैचित्र्याद् वैचित्र्याभावः । न केवलमिदमाशङ्क्यते । किन्तु 'अहं मनुष्यः' इत्याद्यनुभवादेतद् देहस्येक्षितृत्वं सिद्धं प्रमितं चेत्यर्थः । दूषयति—→ **नेति** । न प्राणादिसन्निधानं शरीरस्येक्षितृत्वे प्रयोजकं वाच्यम् । सुप्तिमूर्च्छयोः शरीरे प्राणाद्यपगमलक्षणविशेषरहिते सत्येव ज्ञानादीनां धर्माणा-मदर्शनात् । ज्ञानग्रहणमुपलक्षणम् । सुखदुःखेच्छाद्वेषप्रयत्नैरप्यात्मा साध्य इति सूचयितुमादिपदम् । मृतादौ ज्ञानाद्यभावश्च तत्कार्यादर्शनात् सिद्ध इति दर्शयितुं ज्ञानादिविशेषेत्युक्तम् । ज्ञानादीनां विशेषः कार्यमिति । एतेन सङ्घातचैतन्यपक्षः प्राणादिचैतन्यपक्षश्च पराकृतो वेदितव्यः ।

***भा०दी०***— **उत्तरं प्रकरणं** 'न ही'त्यारभ्य 'धीरस्तत्र न मुह्यती'त्यन्तं अनेकवाक्यसन्दर्भ-रूपं प्रकरणमित्यर्थः । **इति प्रतिज्ञेति** । विमतं जीवशरीरं नेक्षितृ-जडत्वाच्छरीरत्वाच्च मृतशरीरवदिति प्रयोगः सूचितो भवति । जडत्वस्य नीक्षितृत्वरूपत्वात् साध्याविशिष्टतेत्यत आह **जडत्वं चेति** ।

ननु प्राणादिराहित्यतद्वत्त्ववैचित्र्येऽपि भौतिकत्वशरीरत्वसाम्यमात्रेण जीवच्छरीरमृतशरीरयो-रनीक्षितृत्वं सममिति किमर्थं नाभ्युपेयमित्यत आह **मा भूदिति** । घटपटकुड्यादीनां द्रव्यत्वरूपैक धर्माक्रान्तानामवान्तरमृत्वादिकारणवैचित्र्यात् घटपटादिवैचित्र्याभावे मा भूदित्येतदर्थं वा तदभ्युपेय-मित्यर्थः । अन्यथा पटोऽपि द्रव्यत्वसाम्यात् घटत्ववान् स्यात् । पर्वतह्रदयोरपि प्रमेयत्वसाम्यात् वह्निमत्वेन साम्यं स्यादिति भावः । चशब्दार्थं वदन्नेवाहमित्यादिभाष्यार्थमाह **न केवलमिति** । **प्रयोजकमिति** । निमित्तमित्यर्थः । **ज्ञानग्रहणमिति** । न हीतिवाक्ये कौमाराद्यनुभव इत्यादा-वनुभवपदेन कृतं ज्ञानग्रहणमित्यर्थः । यद्वा ईक्षितासिद्ध इत्यादावीक्षितृपदेन कृतमित्यर्थः । **साध्य इति** । न हि जडस्य सुखादिकं मृतस्य वाय्वाद्यपगमाद् ज्ञानसुखाद्यभावः । अहं सुखीत्याद्यनुभवा-च्चेत्यादिरूपेण परिशेषात्साध्य इत्यर्थः । **सङ्घातेति** । पृथिव्यादि भूतचतुष्टयसङ्घात एव चेतनः प्राणवायुरेव इन्द्रियाणि वा । जाठराग्निरेव वा चेतन इति पक्षो निरस्तः । सुप्त्यादौ तेषु सत्स्वपि ज्ञानादेरदर्शनादित्यर्थः ।

***भा०र०***— अस्मिन् विषये, देहातिरिक्तनित्यात्मसद्भावविषये । **अन्येऽपि मोहहेतव इति** ॥ सङ्घातचैतन्यपक्षः, प्राणादिचैतन्यपक्षः, इन्द्रियचैतन्यपक्षः इत्येवंरूपा मिथ्याप्रत्ययहेतवो वक्ष्यमाणाः कुतर्का इत्यर्थः । **उत्तरं प्रकरणं** "न हि" इत्यादिकम् "अतः कुतर्कैः" इत्यन्तं वाक्यसन्दर्भम् । **ईक्षिता हीति** । ईक्षणस्य क्रियात्वेन कर्तृमात्राक्षेपकत्वादिति भावः । **स च** ईक्षिता च । अन्यतम इति सम्बन्धः । भाष्यतः प्राप्तामन्येक्षणसम्भवशङ्कां परिहर्तुमाह **अत्रापीति** ॥ तथा च सिद्धमाह

**शरीरस्यानुभवो न सम्भवतीति प्रतिज्ञेति** । जडस्येति न विशेषणम् । व्यावर्त्याभावात् । उपरञ्जकदानमिति त्वतीव स्थवीय इत्यतो व्यर्थं सत् किञ्चिद् ज्ञापयतीति भावेनाऽह **जडस्य शरीरस्येति हेतुद्वयमिति** । 'मृतस्य' इत्यनन्तरमनुभवेत्युपस्कर्तव्यम् । तथा चायं प्रयोगः । विमतं जीवच्छरीरं नेक्षितृजडत्वात् । शरीरत्वाच्च । यज्जडं यच्च शरीरं न तदीक्षितृ । यथा मृतशरीरमिति । नन्वनीक्षितृत्वमेव जडत्वमिति साध्याविशिष्टता । तथा च साध्यस्येव हेतोस्सन्दिग्धत्वात् सन्दिग्धासिद्धो हेतुरित्यतो विवक्षया तद्दोषं परिहरन्नाह **जडत्वं चेति** । भौतिकमेव शरीरं पक्ष इति नाप्राकृतशरीरे भागासिद्धिश्चेति भावः । **अप्रयोजकत्वाभिप्रायेणेति** । प्रकृतसाध्ये नायं हेतुः प्रयोजकः । किन्त्वन्य एव प्रयोजक इति सोपाधिकत्वाभिप्रायेणेत्यर्थः । ''अप्रयोजक उपाधिमानित्यनर्थान्तरम्'' इति वरदराजोक्तेः । ''अप्रयोजकान्यथासिद्धौ च सोपाधी'' इति मणिकृदुक्तेश्चेति भावः । वाय्वाद्यपगमश्चात्रोपाधिरिति हृदि निधाय हेतोरप्रयोजकतां दर्शयन्नुपाधेर्दृष्टान्ते साध्यव्यापकतामुपपादयति **जीवच्छरीरेत्यादि** । भाष्यस्थादिपदार्थो **जाठरानलस्येन्द्रियाणां चेति** । प्राचीनटीकायां तु वाय्वग्न्याख्यभूतद्वयापगमादित्युक्तम् । साधनाव्यापकतां दर्शयितुमुक्तम् **जीवतस्त्विति** । **भविष्यति** ईक्षणम् । ननु जीवच्छरीरमृतशरीरयोः शरीरत्वभौतिकत्वलक्षणधर्माविशेषे कथं प्राणादिसन्निधानासन्निधानाभ्यामीक्षणतदभावावित्यत आह **मा हि भूदिति** । सहकारिशब्दितावान्तरकारणवैचित्र्याद् वैचित्र्याभावो न हीत्यर्थः । न च कथं वाय्वाद्यपगम उपाधिः । सुप्तमूर्छितशरीरेऽनीक्षणे सत्यप्युपाध्यभावेन साध्याव्यापकत्वादिति वाच्यम् । सिद्धान्ते वक्ष्यमाणेन व्यभिचारेण पूर्वपक्षदशायामुपाधित्वनिरसनस्यायोगादिति ।

केचित्तु, ''अप्रयोजकत्वाभिप्रायेण हेतुरस्तु साध्यं माऽस्त्विति शङ्कायां बाधकाभावेन नासौ हेतुरुक्तसाध्यं प्रयोजयतीत्यभिप्रायेणेत्यर्थः'' इत्युक्त्वा ''तामेव शङ्कां दर्शयति– जीवच्छरीरेत्यादि'' इति व्याचक्षते । भाष्यस्थचशब्दाभिसन्धिं वदन्नाह **न केवलमिति** । अहं मनुष्य इति मनुष्यत्वप्रकारकोऽयमनुभवः । मनुष्यत्वं च देहधर्मो, न चेतनधर्म इति सुप्रसिद्धत्वाद् देहस्यैवेक्षणं युक्तमिति भावेनाह **एतदिति** । **प्रमितं चेति** । तथा च साध्याभावप्रमाबाधोऽप्यनुमानदूषणमिति भावः । **दूषयति** एवमाशङ्कितं पक्षम् । 'विशेषरहिते' इति वदन् न विशेषो यस्येति विग्रहमभिप्रैति ॥ **ज्ञानग्रहणमिति** ॥ 'तदीक्षिता' इत्यत्र प्रकृत्या ईक्षणशब्दितज्ञानग्रहणं सुखादेरुपलक्षणमित्यर्थः । केचित्तु, 'तदीक्षिता' इत्यत्र प्रकृत्यर्थभूतमीक्षणं न चाक्षुषं ज्ञानं विवक्षितम् । ''कौमाराद्यनुभवः'' इत्यादावनुभवश्च न स्मृतिभिन्नः प्रत्ययो विवक्षितः । ज्ञानमात्रेण ज्ञातृसिद्ध्या तद्विशेषस्याननुमानत्वात् । अत ईक्षणपदेनानुभवपदेन च ज्ञानमेव ग्रहीतव्यम् । तेन कृतं ज्ञानग्रहणं सुखादेरुप-

लक्षणमित्यर्थ इत्याहुः ॥ **आत्मा साध्य इति** । अनुभूयते तावत् सुखादिरूपं कार्यम् । न च कार्यं कर्तारं विना सम्भवति । स च देहादेरन्यतमो न सम्भवतीति परिशेषात् तदन्य आत्मा सुखादिरूपकार्येण साध्य इत्यर्थः ।

केचित्तु, सुखं दुःखमिच्छा द्वेषः प्रयत्नश्च अष्टद्रव्यातिरिक्तद्रव्याश्रयः, अष्टद्रव्यानाश्रितत्वे सति गुणत्वादिति सुखादिपक्षकानुमानैरात्मा साध्य इत्यर्थ इत्याहुः । अनुमाने दृष्टान्तीकृते मृतशरीरे ज्ञानाभावरूपं साध्यमुपपादयितुं विशेषपदकृत्यमाह **मृतादाविति** । प्रकृतोपयोगाय विवक्षितमर्थमाह **विशेषः कार्यमिति** । **एतेनेति** । "ज्ञानादिविशेषादर्शनात्" इति भाष्येणेत्यर्थः । पृथिव्यादिभूतचतुष्टयसङ्घात एव चेतनः । यद्यपि भूतेषु प्रत्येकं न ज्ञानादि । तथाऽपि क्रमुकादौ प्रत्येकं मदजनकत्वाभावेऽपि समुदाये तज्जनकत्वस्येव भूतसमुदायस्य चैतन्यं युक्तमिति न ज्ञानादिना देहातिरिक्तात्मसिद्धिरिति पक्षः, प्राणवायुर्वा जाठरानलो वा चेतंन इति पक्षश्च सुप्त्यादौ तेषु सत्स्वपि ज्ञानादीनां धर्माणामदर्शनात् पराकृत इत्यर्थः ।

**भाष्यम्**

## समश्चाभिमानो मनसि । काष्ठादिवच्च ।

***प०टी०***— 'अहं मनुष्यः' इत्यनुभवाद्देहात्मत्वं सिद्धमिति यदुक्तम्, तत्राह **समश्चेति** । यद्यभेदाभिमानाद्देहात्मैक्यं गृह्यते, तर्हि 'मम देहः' इत्यभिमानस्य तद्भेदेऽपि **साम्यात्** स एव स्वीक्रियतामित्यर्थः । कथमनुभवे विकल्पः ? इति शङ्कापनोदाय **मनसि** इत्युक्तम् । एकस्य मानसिकत्वाद्वैविध्यमित्यर्थः । तर्ह्युभयथा प्रतीतौ कथं निश्चयः ? इत्यत आह **काष्ठेति** । काष्ठादौ दग्धे, 'दग्धोऽहम्' इत्युपचारवत् 'मनुष्योऽहम्' इत्युपचार एवेत्यर्थः ।

***न०टी०***—यस्तु मनस्यभिमानो 'अहं मनुष्यः' इति देहस्यैवात्मत्वे, स तस्यादेहत्वेऽपि समः, मम देह इति दर्शनादित्याह **समश्चेति** । दग्धे काष्ठादौ 'अहं दग्धः' इतिवदुपचारेणाहं मनुष्य इत्याद्यभिमानसम्भवाच्च न देह आत्मेत्याह **काष्ठादिवच्चेति** ।

***प्र०दी०***— मनस ईक्षितृत्वमतिदेशेन निराचष्टे— **समश्चेति** ।.मनोविषय ईक्षितृ-त्वाभिमानश्च पूर्वेण समः । सुप्त्यादौ सत्यपि मनसि ज्ञानादर्शनात् । एवं तर्ह्यात्माऽपि ज्ञाता न स्यादिति चेत्, न । तदा तस्य मनसा सन्निकर्षाभावात् । मनसोऽपि तथाऽस्त्विति चेत्, सिद्धस्तावदात्मा । मनसो ज्ञातृत्वे दोषान्तरमाह— **काष्ठादीति** । मनो न ज्ञातृ । ज्ञानकरणत्वात् । यद्यस्यां क्रियायां करणं न तत् तत्र कर्तृ । यथा पाके काष्ठानि । छिदायां कुठारो वा । न चासिद्धो हेतुः । 'मनसा

जानामि' इत्यनुभवात् । एतेनात्मसन्निकर्षेण मनो ज्ञात्रिति निरस्तम् । ननु जन्यज्ञानं मनोनिष्ठमिति सिद्धान्तः । तत् कथमेतत् । मैवम् । मनोनिष्ठस्यापि ज्ञानस्य न मनः कर्तृ । किन्त्वात्मैव । यथाऽवयवविक्लेदलक्षणस्य पाकस्य न तण्डुलाः कर्तारः । किन्तु देवदत्त इति । एतेन इन्द्रियचैतन्यपक्षोऽपि निरस्तः । चक्षुषा पश्यामीत्यादौ तेषामपि करणत्वप्रतीतेरिति । अतीतादिज्ञानदर्शनाद् विषयचैतन्यपक्षः स्फुटदूषण इति न निराकृतः ।

*भा०दी०*— **एवं तर्हीति** । सुप्त्यादौ ज्ञानाद्यभावे देहादेश्चैतन्याभावे इदानीं सत्यप्यात्मनि ज्ञानादेरदृष्टेरिति भावः । तथास्तु आत्मना सन्निकर्षाभावाद् ज्ञानाद्यभावोऽस्त्विति चेत्यर्थः । आदिपदार्थोक्तिः **कुठारो वेति** । **एतेनेति** । करणत्वसाधनेनेत्यर्थः । **एतेनेन्द्रियेति** । कामादिवच्चेति कारणत्वोक्तिपरभाष्येणेत्यर्थः । देहान्यजीवसत्वेऽपि परिशेषप्रमाणोक्तिः ।

*भा०र०*— विषयसप्तमीभावेनाऽह **मनोविषय इति** । **पूर्वेण** देहस्येक्षितृत्वाभिमानेन । अतिदेशलब्धं हेतुं स्वयमाह **सुप्त्यादाविति** । अतिदेशस्याभ्यधिकशङ्कापूर्वकत्वात् तामाह **एवं तर्हीति** । सुप्त्यादौ ज्ञानादर्शनमात्रेणानीक्षितृत्व इत्यर्थः ॥ **मनसेति** । सर्वेन्द्रियोपरमस्य सुप्तौ वक्तव्यत्वादिति भावः । मनस इति पाठे तन्निरूपितसन्निकर्षाभावादित्यर्थः । **तथाऽस्तु** आत्मना सन्निकर्षाभावात् अज्ञातृत्वमस्तु । **सिद्धस्तावदिति** । सन्निकर्षार्थमात्मनोऽपेक्षितत्वात् तावतैव तत्सिद्धेरिति भावः ॥ **दोषान्तरमिति** । सुप्तौ ज्ञानादर्शनादित्युक्तदोषादन्यं दोषमित्यर्थः । एतेनातिदेशे प्रयोजनान्तरं चोक्तं भवति । दृष्टान्तोक्त्या सूचितमनुमानमाह **मन इति** । **ज्ञातृ** तृचः कर्तर्यनुशासनाज्ज्ञानकर्तृ । "कुठारो वा" इति भाष्यस्थादिपदार्थोक्तिः । चशब्दः शङ्कापरिहारसमुच्चय इति भावेन तां शङ्कां वदन्निराह **न चेति** । **एतेन** ज्ञानकरणत्वसाधनेनेत्यर्थः । "इत्येतत् सर्वं मन एव" इति श्रुतेराह **इति सिद्धान्त इति** । किन्तु देवदत्त इति वदन् देवदत्तस्तण्डुलान् पचतीत्यत्राऽख्यातेन कर्तोच्यते । अत एव न कर्तरि तृतीयेत्यभिप्रैति । एतेनेत्युक्तं हेतुं विवृणोति **चक्षुषेति** । विषयसन्निधावीक्षणदर्शनादिति प्राग् विषयस्य चेतनत्वमस्त्विति शङ्कितम् । भाष्ये तत्पक्षादूषणतात्पर्यं वदन् स्वयं दूषयति **अतीतेति** ।

प्राचीनटीकायां तु "यस्तु नरस्याहं मनुष्य इत्यभिमानो देहस्याऽत्मत्वे प्रागुपन्यस्तः स तस्यानात्मत्वेऽपि समः । मम देह इति दर्शनादित्याह **समश्चेति** । दग्धे च काष्ठादावदग्ध इतिवदुपचारेणाहं मनुष्य इत्याद्यभिमानसम्भवाच्च न देह आत्मेत्याह **काष्ठादिवच्चेति** ।" इति वाक्यद्वयमवतारितम् ।

भाष्यम्

**श्रुतेश्च । प्रामाण्यं च प्रत्यक्षादिवत् । न च बौद्धादिवाक्यवत् । अपौरुषेयत्वात् । न ह्यपौरुषेये पौरुषेयाज्ञानादयः कल्पयितुं शक्याः । विना च कस्यचित् वाक्यस्यापौरुषेयत्वं सर्वसमयाभिमतधर्माद्यसिद्धिः । यश्च तौ नाङ्गीकुरुते नासौ समयी । अप्रयोजकत्वात् ।**

*प०टी०*— एवमीक्षणस्य देहान्वयं विघटय्य, तद्व्यतिरेकं विघटयति **श्रुतेश्चेति** । ''सामभिरुन्नीयते ब्रह्मलोकम्' इति देहविमोकमुक्त्वा 'परात्परं पुरिशयं पुरुषमीक्षते' इति देहाभावेऽपीक्षणदर्शनान्नेक्षणस्य देहव्यतिरेकोऽपीत्यर्थः । ननु 'मम देहः' इत्यप्युपचारः किं न स्यात् ? घटस्य स्वरूपमितिवदित्यत आह **श्रुतेश्चेति** । उपचारत्वकल्पनं श्रुतिविरुद्धमित्यर्थः । ननु देहात्मवादिनं प्रति कथं श्रुत्युदाहरणम् ? तेन तत्प्रामाण्यानभ्युपगमादित्यत आह **प्रामाण्यं चेति** । श्रुतेः प्रामाण्यं च यथार्थत्वात् प्रत्यक्षादिवदेव सिद्धमित्यर्थः । 'वेदो न प्रमाणं वाक्यत्वात् बौद्धागमवत्' इत्यत आह **न चेति** । प्रत्यनुमानेनानुमानं दूषयति **अपौरुषेयत्वादिति** । नन्वपौरुषेयत्वेऽपि कुतः प्रामाण्यम् ? व्याप्त्यभावादित्यत आह **न हीति** । नास्माभिरपौरुषेयत्वं प्रामाण्ये हेतुतयोच्यते किन्तु निर्दोषत्वमेव अपौरुषेयत्वं त्वप्रामाण्यापादकदोषाभाव एव हेतुः । न ह्यपौरुषेयेऽज्ञानादि दोषाः । तेषां पौरुषेयत्वादित्यर्थः । यद्वाक्यं तत्पौरुषेयमेवेत्यत आह **विना चेति** । प्रत्यक्षैकप्रमाणवादिना धर्मादिकं नाभ्युपगम्यते । कथं तस्य सर्वसमयाभिमतत्वम् ? इत्यत आह **यश्चेत्यादि** । समयस्य लोकोपकाराख्यप्रयोजनसम्भवान्न तदर्थं धर्माद्यस्तीत्यत आह **अप्रयोजकत्वादिति** ।

*न०टी०*—एवं तावद्विद्यमानेऽपि देह ईक्षणाद्यदर्शनादीक्षणस्य न देहान्वय इत्युक्तम् । इदानीं 'स सामभिरुन्नीयते ब्रह्मलोकम्', 'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' इत्यादिश्रुते....................स्यापि आत्मन ईक्षणदर्शनात् यदैतद्देहाभावः तदेक्षणाभाव इति योऽयं व्यतिरेकः सोऽपि निरस्त इत्याह **श्रुतेश्चेति** । एतेनैतदपि प्रत्युक्तम् । यदुतोच्यते - भगवत्पक्षे 'ममात्मा' इत्यात्मनीव स्वाभिन्नेऽपि देहे 'मम देहः' इति षष्ठी किं न स्यात् ? इति । विनाऽपि देहमीक्षणस्य उपपादितत्वादात्मनः, विनाऽऽत्मानं देहस्य तदनुपपत्तेः । ननु वेदाप्रामाण्यवादिनो लोकायतादीन् प्रति कथं श्रुत्युद्भावनम् ? इत्यत आह **प्रामाण्यं च प्रत्यक्षादिवदिति** ।

यद्वा लोकायतस्यैव प्रस्तुतत्वात् प्रत्यक्षेष्वादिभूतं साक्षिप्रत्यक्षम्, तस्येव श्रुतेरपि प्रामाण्यं निरपेक्षत्वादित्यर्थः । ननु वेदबौद्धादिवाक्ययोः परस्परविप्रतिपत्तेरन्यतरप्रामाण्ये विशेषहेत्वभावादुभयाप्रमाण्यमित्याशङ्क्य, अपौरुषेयत्वविशेषहेतोर्वेदप्रामाण्यमित्याह **न चेति** । शब्दाप्रामाण्यं वक्त्रज्ञानादिनैव न च तदपौरुषेये वेद इत्याह **न हीति** । ननु यद्वाक्यं तदनित्यमेव लोकवाक्यवदित्यत आह **विना चेति** । लोकायतेनानभ्युपगमात् न सर्वसमयाभिमतत्वं धर्मस्य ? इत्यत आह **यश्चेति** । धर्माद्यभावेन स्वसमये पुरुषान् प्रयोक्तुं न शक्नोतीत्यप्रयोजक इत्यर्थः ।

*प्र०दी०*— एवं परिशेषप्रमाणेन देहातिरिक्त आत्मा सिद्धः । तस्य स्वभावादेव आहाराद्यभिलाषोपपत्तेः प्रत्यभिज्ञानमसिद्धमिति वदन्तं प्रत्यात्मनित्यत्वे प्रमाणान्तरं चाह— **श्रुतेश्चेति** । 'अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके' इत्यादिश्रुतेश्च देहातिरिक्तो नित्य आत्मा सिद्धः । अत एव न स्वभाववादावकाश इति । ननु बौद्धचार्वाकादीन् प्रति देहातिरिक्तनित्यात्मसाधनमिदम् । न च ते श्रुतेः प्रामाण्यमङ्गीकुर्वते । तत् कथं श्रुत्युदाहरणमित्यत आह— **प्रामाण्यं चेति** । बौद्धेन तावत् प्रत्यक्षानुमानयोः, चार्वाकेण च प्रत्यक्षस्य प्रामाण्यमङ्गीकृतम् । तत् कुत इति वक्तव्यम् । बोधकत्वेनेति चेत् तर्हि तद्वत् श्रुतेरप्यङ्गीक्रियताम् । ननु वाक्यत्वे समेऽपि केषाञ्चिद् बौद्धादिवाक्यानामप्रामाण्यदर्शनात् श्रुतेरपि तदाशङ्क्यत इत्यत आह— **न चेति** । बुद्धस्येदं बौद्धम् । चार्वाको बौद्धमुदाहरति । बौद्धस्त्वन्यदिति द्रष्टव्यम् । अप्रामाण्यं श्रुतेः शङ्कनीयमिति शेषः । तथा सतीन्द्रियलिङ्गयोरपि क्वचिद् अप्रामाण्यदर्शनात् सम्प्रतिपन्नयोरपि प्रत्यक्षानुमानयोः तच्छङ्काप्रसङ्गादिति भावः । प्रसक्ताऽपि शङ्का तत्र निर्दोषत्वेनापनीयत इति चेत्, समं प्रकृतेऽपीत्याह— **अपौरुषेयत्वादिति** । अपौरुषेयत्वेऽपि दोषित्वं किन्न स्यादित्यत आह— **न हीति** । सामान्योक्तित्वात् 'अपौरुषेये' इति नपुंसकोक्तिः । अन्यथा श्रुतेः प्रकृतत्वात् स्त्रीलिङ्गं स्यात् । शब्दे ह्यबोधकत्वादयो दोषाः । ते च वक्तृपुरुषाश्रिताज्ञानादिमूलाः । यस्य तु वक्ता पुरुष एव नास्ति तत्र कथं वक्तृपुरुषाश्रिताज्ञानादयो दोषा दोषमूलत्वेन कल्पयितुं शक्याः । व्याहतेरिति । अत्राज्ञानादीनां पौरुषेयत्वोक्तिरुपचारात् । पुरुषशब्दात् तत्कृतवाक्यादिष्वेव ढञः स्मरणात् ।

ननु श्रुतेरपौरुषेयत्वमेव नास्ति । वाक्यत्वात् । लौकिकवाक्यवदिति चेत्, किमेवं वदतः किमपि वाक्यमपौरुषेयं नास्तीति मतम् । उत किञ्चिदस्तीति । आद्ये दोषमाह— **विना चेति** । कस्यचिद् वाक्यस्यापौरुषेयत्वाभावे धर्माधर्मयोरसिद्धिनिश्चयः प्रसज्येत । निश्चायकाभावात् । न च तथाऽस्त्विति वक्तुं शक्यम् । तत्सद्भावस्य सर्वैः समयिभिर्निश्चितत्वादिति ।

ननु प्रत्यक्षैकप्रामाण्यवादी यश्चार्वाको धर्माधर्मौ नाङ्गीकुरुते तस्य नेदमनिष्टम् । किमप्यपौरुषेय-वाक्यमनङ्गीकृत्य वेदापौरुषेयत्वं प्रत्याचक्षाणान् सर्वान् प्रति चायं प्रसङ्ग इत्यतस्तेनापि धर्मादिक-मङ्गीकार्यैनं प्रसङ्गं वक्ष्याम इत्याशयेनाह— **यश्चेति** । तौ धर्माधर्मौ । इति प्रसज्येत इति शेषः । धर्माद्यनङ्गीकारे कुतस्तच्छास्त्रस्याशास्त्रत्वप्रसङ्गो येनासौ शास्त्री न स्यादित्यत आह— **अप्रयोजक-त्वादिति** । प्रयुज्यते प्रवर्त्यते प्रणेता श्रोता च शास्त्रे याभ्यां ते प्रयोजके, विषयप्रयोजने । अविद्यमाने प्रयोजके यस्य शास्त्रस्य तत् तथा । अनन्यलभ्यं कमपि पुरुषार्थमधिकृत्य तत्साधनं तथाविधमर्थं प्रतिपादयन् वाक्यसमूहो हि शास्त्रम् । अन्यथाऽतिप्रसङ्गात् । न चातीन्द्रियस्याभावेऽन्यत् तथाभूतं शक्यनिरूपणम् । अतः शास्त्रत्वसिद्धये विषयादित्वेन धर्मादिकं किमप्यङ्गीकार्यमिति भावः ।

*भा०दी०*— **प्रत्यभिज्ञानमिति** । प्रत्यग्रजातस्वशिशोरित्यादिनोक्तप्रत्यभिज्ञान-मित्यर्थः । **इत्यादिश्रुतेश्चेति** । ऐतरेयश्रुतेरित्यर्थः । ननु बौद्धचार्वाकौ द्वावेवात्र निराकार्यौ । तथा च बौद्धादिवत् बौद्धचार्वाकादितिवत् । नान्योऽस्त्यतः कथमेवमुक्तिरित्यत आह **चार्वाक इति** । **अन्यदिति** । उन्मत्तवाक्यादिकं चार्वाकवाक्यं वेत्यर्थः । **तत्कृतवाक्यादिष्वेवेति** । कृते ग्रन्थे इति सूत्रेण पुरुषकृतवाक्यं पौरुषेयं, तेन प्रोक्तमित्यनेन च प्रोक्तमित्यर्थोणादिप्रत्ययविधानादित्यर्थः । नासौ समयीत्यनन्तरं शेषमाह **इति प्रसज्यत इति** । **तथाविधमिति** । अनन्यलभ्यमर्थविषयानित्यर्थः ।

*भा०र०*— स्वभावादेवाहाराद्यभिलाषोपपत्तेरित्युक्तदोषमुद्धरति **अत एवेति** । नित्यात्मनः श्रुतिसिद्धत्वादेवेत्यर्थः । **तर्हि तद्वच्छ्रुतेरिति** । अयमत्र प्रयोगः— श्रुतिः प्रमाणं बोधकत्वात्, प्रत्यक्षवदनुमानवच्चेति स्वरीत्या वा यद् बोधकं तत् प्रमाणं यथा प्रत्यक्षमनुमानं च, बोधकं च श्रुतिवाक्यमिति पररीत्या वा द्रष्टव्यः । न च संशयजनके विर्पययजनके च शब्दे बोधकत्वं व्यभिचरितमिति कथमेवमनुमानमिति वाच्यम् । संशयविपर्ययाजनकत्वे सतीति हेतौ विशेषण-स्याभिप्रेतत्वात् । अत एव सुधायाम् "शब्दः प्रमाणम् संशयविपर्ययाजनकत्वे सति ज्ञानजनक-त्वात् । प्रत्यक्षादिवत्" इति प्रयोगो दर्शितः । ननु बुद्धो भक्तिरस्येत्यर्थे 'भक्तिः' इति सूत्रेणाणप्रत्यये निष्पन्नो बौद्धशब्दो बुद्धशिष्यमाह । "भज्यते सेव्यते इति भक्तिः" इति वृत्तिकृता व्याख्यानात् । शिष्यार्थत्वे च न प्रकृतोपयोग इत्यतः प्रकृतोपयोगायाह **बुद्धस्येदमिति** । "तस्येदम्" इतीदमर्थे बुद्धस्येदं वाक्यं बौद्धमित्यपि निष्पादनीयमिति भावः ।

ननु यद् वाक्यं तदप्रमाणम्, वाक्यं श्रुतिरिति खलु परेण शङ्कनीयम् । नैवं शङ्क्यम् । बौद्धा-दिभिः स्वागमाप्रामाण्यानङ्गीकारेण बौद्धादिवदित्युदाहरणायोगादित्यत आह **चार्वाक इति** । यद्

वाक्यं न तत् प्रमाणम् । यथा बुद्धवाक्यमिति लोकायतः । बुद्धस्तु यथा चार्वाकवाक्यमित्युदाहरतीति नोक्तदोष इति भावः । दृष्टान्तोक्त्या सूचितां प्रतिज्ञामध्याहरति **अप्रामाण्यमिति** । अत्र हेत्वनुक्तिः चार्वाकस्यापि शङ्कितृत्वात् । **तत्र** सम्प्रतिपन्ने प्रत्यक्षेऽनुमाने च । ननु श्रुतेः प्रकृतत्वात् कथं 'पौरुषेये' इति भाष्ये नपुंसकनिर्देश इत्यत आह **सामान्योक्तित्वादिति** । स्त्रीत्वविवक्षां विहाय पुरुषकृतत्वाभावमात्रविवक्षापूर्वकोक्तित्वादित्यर्थः । यदा च प्रवृत्तिनिमित्तमात्रं विवक्षितं न स्त्रीत्वादि तदाऽनियतलिङ्गस्य शब्दस्य "सामान्ये नपुंसकम्" इति वैयाकरणवचनेन नपुंसकत्वविधानाद् युक्त उक्तनिर्देश इति भावः । अपौरुषेयत्वेऽपि दोषत्वं किं न स्यादिति कृतशङ्कायाः कथमनेन परिहार इत्यतस्तमुपपादयति **शब्दे हीति** । **अबोधकत्वादयः** अबोधकत्वविपरीतबोधकत्वादयः । **अज्ञानादिमूलाः** अज्ञानमिथ्याज्ञानविप्रलम्भादिमूलकाः । 'पौरुषेयाज्ञानादयः' इति भाष्यप्रयोगो गौण इत्याह **उपचारादिति** । उपचारबीजं मुख्यानुपपत्तिमाह **पुरुषशब्दादिति** ॥ "सर्वपुरुषाभ्यां णढञौ" इति सूत्रेण सर्वशब्दात् पुरुषशब्दाच्च यथासङ्ख्यं णप्रत्ययो ढञ्प्रत्ययश्च विहितः "तस्मै हितम्" इत्यर्थ इति प्राप्ते "पुरुषाद् वधविकारसमूहतेनकृतेषु" इति वक्तव्यत्वात् पुरुषेण कृतं पौरुषेयमिति पुरुषशब्दाड्ढञ्प्रत्ययविधानादित्यर्थः । अज्ञानादेश्च पुरुषकृतिनिष्पन्नत्वाभावेन न पौरुषेयशब्दमुख्यार्थत्वमिति भावः । धर्माधर्मयोर्विहितनिषिद्धक्रियाजन्यत्वात् सिद्धिशब्देन नात्रोत्पत्तिः किन्तु ज्ञानमिति भावेनासिद्धिरित्यनन्तरं शेषमाह **अनिश्चयः प्रसज्येतेति** । तत्र हेतुं स्वयमाह **निश्चायकेति** । 'सर्वसमय' इत्यस्य युक्तिसूचकत्वमिति भावेन तन्निवर्तनीयशङ्कामाह **न चेति** । "दोषैकदृक् पुरोभागी" "ह्लादैकमयी" इत्यादिप्रयोगदर्शनात् सङ्ख्यार्थकस्यैकशब्दस्यैव 'पूर्वकालसर्व' इति समासे पूर्वनिपातो, न केवलार्थस्येत्यतः 'प्रत्यक्षैकप्रमाण' इति साधु । **अयं प्रसङ्गः** धर्माधर्मानिश्चयप्रसङ्गः । **तच्छास्त्रस्य** धर्माधर्माद्यभावप्रतिपादकशास्त्रस्य । प्रकृतोपयोगाय प्रयोजकशब्दं व्युत्पादयति **प्रयुज्यत इति** । अत्र युजिधात्वर्थो योजनं योगकारणम्, न योगमात्रमिति भावेनाह **प्रवर्त्यत इति** ॥ प्रवृत्तिमान् क्रियत इत्यर्थः । 'याभ्याम्' इति तृतीया विषयप्रयोजनयोः प्रवर्तनेऽवान्तरकर्तृत्वविवक्षया कर्तरि न करणे । तेन प्रयोजकशब्दस्य कर्त्रर्थकण्वुल्प्रत्ययान्तत्वात् कथं करणव्युत्पत्तिप्रदर्शनमिति चोद्यमनवकाशम् । एवं व्युत्पत्तिवर्णनं फलितप्रदर्शनमात्रम् । व्युत्पत्तिस्तु प्रयोजयतः प्रणेतारं श्रोतारं च शास्त्रे ये विषयप्रयोजने ते प्रयोजके इति द्रष्टव्येत्यपि केचित् । **तथाविधमर्थम्** अनन्यलभ्यं विषयम् । **शास्त्रत्वसिद्धय इति** । व्यापकाभावे व्याप्यस्यायोगादिति भावः ।

प्राचीनटीकायां तु "धर्माधर्मभावेन समये पुरुषान् प्रयोजयितुं न शक्नोतीत्यप्रयोजकश्चार्वाकः" इत्युक्तम् ।

**भाष्यम्**

**मास्तु धर्मोऽनिरूप्यत्वादिति चेन्न । सर्वाभिमतस्य प्रमाणं विना निषेद्धुमशक्यत्वात् । न च सिद्धिरप्रामाणिकस्येति चेन्न । सर्वाभिमतेरेव प्रमाणत्वात् ।**

**अन्यथा सर्ववाचिकव्यवहारासिद्धेश्च । न च मया श्रुतमिति तव ज्ञातुं शक्यम् । अन्यथा वा प्रत्युत्तरं स्यात् । भ्रान्तिर्वा तव स्यात् ।**

**सर्वदुःखकारणत्वं वा स्यात् । एको वाऽन्यथा स्यात् ।**

***प०टी०***— प्रत्यक्षेतरस्यानिरूप्यत्वादित्याशङ्क्य परिहरति **माऽस्त्वित्यादिना** । न धर्मादि निषेद्धुं शक्यते । तदभावग्राहकप्रमाणाभावादित्यर्थः । ननु प्रमाणाभावादेव धर्माद्यभावः सिद्ध्यतीत्याशङ्क्य परिहरति **न चेत्यादिना** । सर्वाभिमत्याख्यप्रमाणस्यैव सद्भावादित्यर्थः । न केवलं प्रत्यक्षैकप्रमाणवादिना धर्माद्यभावो वक्तुं शक्यते किन्तु किमपि न वक्तुं शक्यत इत्याह **अन्यथेति** । कथं प्रत्यक्षैकप्रामाण्ये सर्ववाचिक व्यवहाराभावः ? इत्यत आह **न चेति** । न त्वदुक्तं यदि मया श्रुतमिति तव ज्ञातुं शक्यं प्रमाणाभावादित्यर्थः । प्रत्युत्तरान्यथानुपपत्त्या त्वया श्रुतमिति ज्ञायत इत्यत आह **अन्यथा वेति** । अर्थापत्तेः प्रामाण्यानभ्युपगमात् प्रत्युत्तरमबोधकं स्यादित्यर्थः । प्रमाणत्वाभावेऽपि बोधकत्वमस्तीत्यत आह **भ्रान्तिर्वेति** । यदि प्रामाण्याभावेऽपि बोधकत्वं तर्हि तव मतेऽर्थापत्तिर्भ्रान्तिः सन्देहो वा स्याद्गत्यन्तराभावादित्यर्थः । यदुक्तं धर्माद्यभावेऽपि ............. यद्यपि कस्यचिदुपकारकस्तथाऽपि सर्वदुःखकारणत्वं च स्यात् । धर्माधर्माभावज्ञाने परस्परहिंसादिप्रवृत्तेरित्यर्थः । ननु सर्वदुःखकारणत्वेऽपि किं बाधकम् । शास्त्रप्रयोजनसिद्धेरित्यत आह **एको वेति** । ययोश्चार्वाक उपकारकोऽनुपकारकस्तावुभावपि चार्वाकं प्रत्यन्यथा स्याताम्, धर्माद्यभावात् । यस्योपकारकस्तस्यान्यथाभावेऽपि य उपकारकः स एको वा चार्वाकं प्रत्यन्यथा प्रतिकूलो घातकः स्यात् । अतः स्वजीवन विरोधोक्तिरुपेक्ष्य एवेत्यर्थः ।

***न०टी०***—ननु न धर्म एव प्रयोजनम् । अपि तु लोकोपकारः । अतोऽसौ माऽस्तु, प्रत्यक्षैकप्रमाणवादिनं प्रति तन्निरूपणायोगादित्येतन्मनसि निधाय चोदयति **माऽस्त्विति** । न निरूपणमपेक्षते धर्मसद्भावः । सर्वाभिमतत्वात् । अतस्तदभाव एव प्रमाणमपेक्षते । स च न प्रत्यक्षेण सिद्ध्यति । धर्मस्याप्रत्यक्षत्वात् । अतः प्रत्यक्षैकवादिनो धर्मापलापोऽपि न शक्य इति भावेन परिहरति **नेत्यादिना** । ननु सर्वाभिमतेरपि मूलभूतप्रमाणं निरूपणीयमेव । वस्तुसिद्धेः

प्रमाणाधीनत्वात् । तदभावस्तु प्रमाणाभावादेव सिद्ध्यतीति भावेन चोदयति **न चेति** । न च तन्मूलप्रमाणानुमानं सर्वाभिमत्या, अपि तु सैव प्रमाणमिति परिहरति **नेत्यादिना** । न केवलं चक्षुरादिप्रत्यक्ष्यैकप्रमाणवादिनः परं प्रति धर्माभावोक्तिरयुक्ता । किन्तूक्तिरेवायुक्तेत्यभिप्रायेणाह **अन्यथेति** । 'त्वदुक्तं मया श्रुतम्' इत्यत्र न हि तव प्रत्यक्षमस्ति । अतो न वक्तव्यं त्वयेत्यभिप्रायेणाह **न चेति** ।न च प्रत्युत्तरान्यथानुपपत्त्या प्रत्यक्षैकप्रमाणवादिनस्त्वैतत् ज्ञातुं शक्यम् । अतः प्रत्युत्तरमपि तव निश्चायकं न स्यादित्याह **अन्यथा चेति** । प्रत्यक्षेतरप्रमाणाभावादेव युष्मदस्मदुक्त्योरुक्तिप्रत्युक्तिरूपत्वं यत्प्रतीयते तत्रापि तव भ्रान्तिरस्तु संशयो वेत्याह **भ्रान्तिर्वेति** । तदेवं प्रत्यक्षैकप्रमाणवादिनः परं प्रत्युक्तेरेवासम्भवात्, धर्मादेः सर्वलौकिकपरीक्षकसम्मतत्वेन बलवत्प्रमाणोपन्यासं विनाऽभावोक्त्यसम्भवाच्च न धर्माद्यभावः । यच्चान्यत् ते मनसि वर्तते 'धर्माद्यभावोक्त्या धनव्ययदेहायासादिपरिहारे सर्वसुखकारणत्वात् कथमहमप्रयोजकः स्वसमये पुरुषाणाम् ? इति, तत्राह **सर्वदुःखकारणत्वं वेति** । धनव्ययादिपरिहारेण सुखकारणत्वं वा परस्परहिंसादिना दुःखकारणत्वं **वा**शब्दार्थः । ननु यो धर्माद्यभावोक्त्या सुखदुःखकारणं प्रबलदुर्बलयोस्तेनासौ स्वसमयप्रयोजक एव स्यात् । न काचिद्धानिस्तस्येत्यत आह **एको वेति** । यो हि धर्माद्यभावोक्त्या वध्यघातकनिमित्तत्वेन दुःखकारणं ययोस्तावुभावपि तं प्रत्यन्यथा स्याताम् । धर्माद्यभावात् । तयोर्मध्ये यस्य सुखकारणं स **एको वाऽन्यथा स्यात्** प्रतिकूलः स्यात् । घातकः स्यादित्यर्थः । तदेवं स्वजीवनविरुद्धोक्तिः कथं बुद्धिमान् प्रतीयते । तत् तु अनादरणीयमेव धर्माद्यभावमतम् ।

*प्र०दी०*— शङ्कते— **माऽस्त्विति** । माऽयं, न माङ् । अस्त्वित्यव्ययं वा । धर्म इत्युपलक्षणम् । अनिरूप्यत्वात् प्रमाणाभावेन प्रतिपादयितुमशक्यत्वात् । इदमुक्तं भवति । विषयप्रयोजने हि ते भवतः ये प्रमाणेन प्रतिपादयितुं शक्येते । वाङ्मात्रस्य श्रोतृभिरनादरणात् । न च धर्मादिकं प्रमाणेन प्रतिपादयितुं शक्यम् । प्रत्यक्षागोचरत्वात् । अनुमानादेश्च प्रामाण्याभावात् । अतो न शास्त्रविषयत्वादिना धर्मादिकमङ्गीकर्तुमुचितम् । न चैतावता निर्विषयत्वाद्यापत्तिः । यतो धर्माद्यभावो विषयो भविष्यति । प्रयोजनं च श्रोतॄणां धर्माद्यनुष्ठानप्रसक्तक्लेशनिवृत्तिः । धर्मादिसद्भावभ्रमोपरुद्धविषयसुखावाप्तिश्च । प्रणेतुश्च लोकोपकारः । उपकर्तारं च प्रत्युपकुर्वन्ति लोका इति । निराकरोति— **नेति** । एवं वदता धर्माद्यभावोऽपि न शास्त्रविषयत्वेन शक्यते वक्तुम् । सर्वाभिमतस्य धर्मादेः प्रमाणं विना वाङ्मात्रेण निषेद्धुं नास्तीति प्रतिपादयितुमशक्यत्वात् । घटाद्यभाव इव प्रत्यक्षेणैव धर्माद्यभावो निश्चेष्यत इति चेत् । स्यादेवं यद्यत्र न काचिद् विप्रतिपत्तिः । यत्र त्वस्तित्वाभिमानः, तत्र पिशा-

चादाविव प्रत्यक्षानुपलम्भः सन्देहहेतुरेव भवतीति । तदिदमुक्तम्— **सर्वाभिमतस्येति** । पुनः शङ्कते— **न चेति** । मा भूद् धर्माद्यभावस्य विषयत्वम् । तत्साधकप्रमाणाभावात् । तथापि धर्मादिविषयत्वादिकं न घटते । अप्रमाणकस्य प्रमित्यनुपपत्त्या साधयितुमशक्यत्वादिति । निराकरोति— **नेति** । अस्ति तावद् धर्मादिविषये सर्वेषामाविपालगोपालमस्तित्वाभिमानः । अभिमानो ज्ञानमेव । न च तस्य बाधकं किञ्चित् । धर्माद्यभावप्रतिपादकप्रमाणाभावस्योक्तत्वात् । अतः सर्वाभिमतेरेव धर्मादौ प्रमात्वात्, तत्करणस्य च प्रमाणत्वाद् असिद्धमप्रामाणिकत्वमिति भावः । किं तत्प्रमाणमिति चेत् । धर्मादेः प्रामाणिकत्वसिद्धौ किमनया व्यर्थचिन्तया । न च तत्र प्रमाणविशेषोऽशक्यनिरूपणः । आगमस्य तत्सहकारिणोऽनुमानस्य च सत्त्वात् । अत एव नान्धपरम्पराऽपि । आगमादेः प्रामाण्यं नास्तीत्युक्तमित्यत आह— **अन्यथेति** । यद्यागमस्यानुमानस्य च न प्रामाण्यं स्यात् तदा सर्वस्य वाचा निर्वर्त्यस्य व्यवहारस्यासिद्धिः स्यात् । परप्रत्यायनार्थो हि वाग्व्यवहारः । स यदि न परं प्रत्याययेद् व्यर्थो न क्रियेतैवेति । च शब्दः प्रमाणसामान्यसिद्ध्या तद्विशेषसिद्धेः समुच्चये । भवत्वागमाप्रामाण्ये वाचिकव्यवहारासिद्धिः । अनुमानाप्रामाण्ये तु कथमित्यत आह— **न चेति** । त्वदीयवाक्यं मया श्रूयत इति ज्ञात्वा मां प्रति त्वया वाग्व्यवहारः क्रियतेऽन्यथा वा । द्वितीये निष्फलो न कर्तव्यः स्यात् । नाद्यः । परचित्तवृत्तीनां परस्याप्रत्यक्षत्वेन मया श्रुतमिति तव ज्ञातुमशक्यत्वात् । मदीयं प्रत्युत्तरमेव तज्ज्ञानोपाय इत्येवं वक्तव्यमिति भावः । अस्त्वेवमित्यत आह— **अन्यथा वेति** । वाशब्दोऽवधारणे । प्रत्युत्तरं हि लिङ्गतया ज्ञापकम् । न च तव मतेऽनुमानं प्रमाणम् । अतः प्रत्युत्तरमन्य-थैवाज्ञापकमेव स्यादिति । ननु शब्दलिङ्गयोः प्रामाण्यमेव नाङ्गीक्रियते । ज्ञापकत्वमात्रं त्वङ्गीक्रियत एव । अतः कथं वाचनिकव्यवहारासिद्धिरित्यत आह— **भ्रान्तिर्वेति** । ज्ञापकत्वमङ्गीकृत्य प्रामाण्यानङ्गीकारे शब्दलिङ्गाभ्यां जायमानः प्रत्ययस्तव मते भ्रान्तिर्वा स्यात् संशयो वा । गत्यन्तराभावात् । न च परस्य भ्रान्त्याद्यर्थं वचनप्रयोगः, नापि प्रत्युत्तरेण भ्रान्तः सन्दिग्धो वा वाक्यं प्रयुङ्क्ते इति युक्तम् । अतो वाचिकव्यवहारसिद्ध्यर्थमागमानुमानप्रामाण्यमङ्गीकार्यमिति ।

एवं चार्वाकशास्त्रस्य विषयं निराकृत्य प्रयोजनमपि निराकुर्वन् श्रोतृ-प्रयोजनं तावन्निराचष्टे— **सर्वेति** । यथा शास्त्रस्य सर्वेषां श्रोतॄणां सुखकारणत्वं तथा धर्माद्यभावज्ञाने सर्वमर्यादातिक्रमे परस्परहिंसादिना सर्वदुःखकारणत्वं च स्यात् । तथा च समव्ययफलं निष्प्रयोजनमेवेति । इदानीं शास्त्रप्रणेतृप्रयोजनं निराकरोति— **एको वेति** । धर्मादिज्ञानशून्याः पशुप्राया नोपकारिणमुपकुर्वन्ति । अपि तु सर्वेऽप्यपकर्तुमलम् । तदभावेऽपि एको वाऽन्यथाऽपकारकः स्यादित्यर्थः । तदेवं धर्माद्यनङ्गीकारे शास्त्रस्य विषयाद्यभावेनाशास्त्रत्वप्रसङ्गात् सर्वैर्धर्मादिकमङ्गीकार्यमिति ।

*भा०दी०*— **माऽयं न माङिति** । अमानोनाः प्रतिषेध इति चादिगुणसूत्रे पठितो निषेधार्थको माशब्दोऽयं न माङ् । तथात्वे माङि लुङि सति मा भूदिति स्यादिति भावः । **उक्तत्वादिति** । षण्मात्रेणेत्यादि ग्रन्थेनेति भावः । **अत एव नान्धपरम्परापि इति** । आगममूलत्वादेवेत्यर्थः । वाचिकेति ठगर्थमाह **वाचा निर्वर्त्यस्येति** । भ्रान्तिर्वेति वाशब्देन संशयग्रह इत्युपेत्याह **संशयो वेति** । **सुखकारणत्वमिति** । श्रोतॄणां धर्मावनुष्ठानेत्यादिनोक्तरीत्येति भावः ।

*भा०र०*— ननु माऽस्त्विति कथं लोटो भाष्ये प्रयोगः । ''माङि लुङ्'' इति सर्वलकारापवादेन लुङो विहितत्वादित्यत आह **माऽयमिति** । ''अमानोनाः प्रतिषेधे'' इति गणसूत्रपठितनिषेधार्थक-माशब्दोऽयं, न पुनर्माङ् । येन मा भूदिति लुङ् स्यादिति युक्त एव लोटः प्रयोग इति भावः । **अव्ययं** तिङन्तप्रतिरूपकमव्ययम् । धर्माधर्मादिः प्रस्तुतत्वादाह **उपलक्षणमिति** । धर्मस्वर्गादिरभावे विषय-प्रयोजनालाभान्न शास्त्रत्वमिति कथं तस्य शास्त्रित्वमिति दूषणस्य नानेनोद्धार इत्यत आह **इदमुक्तं** भवतीति । प्रमाणं भवत् प्रत्यक्षमनुमानमागमो वेति विकल्पं हृदि कृत्वाऽऽद्य आह **प्रत्यक्षेति** । द्वितीयतृतीययोराह **अनुमानादेरिति** । प्रत्यक्षमात्रप्रमावादित्वादिति भावः । प्रयोजनं च श्रोतॄणां प्रणेतुश्च व्यवस्थितमिति दर्शयति **प्रयोजनमिति** ॥ 'लोकोपकारः' इत्यत्र प्रयोजनमिति वर्तते । ननु न लोकोपकारः प्रयोजनम् । प्रणेतुः सुखदुःखहान्योरन्यतरत्वाभावादित्यत आह **उपकर्तारं चेति** । **प्रत्युपकुर्वन्ति** द्रविणादिसम्पत्तिमापादयन्ति । 'प्रत्यक्षानुपलम्भः' इत्यत्र वादिविप्रतिपत्तिसंवलित इति संयोज्यम् । **सन्देहेति** । वादिनामभिमानात् प्रत्यक्षानुपलम्भेऽपि पिशाचादिकमिव किमस्ति धर्मा-दिकमुत प्रत्यक्षानुपलम्भाद् घटादिकमिव नास्तीति सन्देहेत्यर्थः । **तत्साधकेति** । धर्माद्यभाव-साधकेत्यर्थः । अशोभने शोभनाध्यासादिलक्षणाभिमानग्रहणे तस्य प्रमाणत्वोक्त्ययोगाद् विवक्षित-मभिमतिपदार्थमाह **ज्ञानमेवेति** । तस्य प्रमात्वमुपपादयति **न च तस्येति** । **उक्तत्वात्** ''एवं वदता धर्माद्यभावः'' इत्यत्र, **तत्प्रमाणं** धर्मादिप्रमाकरणम् । अभिमतिशब्दितज्ञानस्य बाधकाभावेन प्रमात्वे तस्य कार्यत्वेन समूलत्वज्ञानसम्भवान्मूलविशेषचिन्ता न प्रयोजनावहेत्याह **व्यर्थचिन्तयेति** ।

ननु प्रमाणं भवत् किं प्रत्यक्षरूपमुतानुमानमथाऽऽगम आहोस्वित् प्रवादपारम्पर्यम् । नाद्यः, तस्यातीन्द्रियार्थधर्मादिग्रहणासामर्थ्यात् । न द्वितीयतृतीयौ । तयोः स्वरूपत एव अप्रमाणत्वाङ्गी-कारात् । तुरीये त्वन्धपरम्परापत्तिर्दूषणमिति न तच्चिन्ता व्यर्थेत्याशङ्क्य निषेधति **न चेति** ॥ अनुमानस्य कामचारित्वं व्युदसितुमुक्तं **तत्सहकारिण इति** ॥ तुरीयदूषणमुद्धरति **अत एवेति** । आगमादिप्रमाणमूलकत्वादेवेत्यर्थः । **उक्तम्** ''अनुमानादेश्च प्रामाण्याभावात्'' इत्यत्र ।

ठगर्थमाह **वाचा निर्वर्त्यस्येति** । अत्र "निर्वृत्तेऽक्षद्यूतादिभ्यः" इति ठक् । यद्यपि वृत्तावक्षद्यूतादिगणः पठितः, तथाऽपि "निवृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके" इत्यमरटीकायां "अङ्गसत्त्वशब्दाभ्यामक्षद्यूतादित्वाट्ठक्" इत्युक्तत्वेनाक्षद्यूतादेराकृतिगणत्ववेदनात् । सूत्रे निष्ठार्थो न विवक्षित इति भावेन निर्वर्त्यस्येत्युक्तम् । यद्यपि "वाचो व्याहृतार्थायाम्" इति वाक्शब्दादाहत्य ठक् विहितः । अमरे च "सन्देशवाग् वाचिकं स्यात्" इत्युक्तम् । तथाऽपि व्याहृतार्थे वाच्ये एव स्वार्थिकठक उक्तत्वात् प्रकृते च वाचा निर्वत्यस्य व्यवहारस्य ग्राह्यत्वात् "निर्वृत्तेऽक्षद्यूतादिभ्यः" इत्येव ठगुत्पादनीय इति भावयितुं निर्वर्त्यस्येत्युक्तम् ।

केचित्, "तेन निर्वृत्तम्" इति सूत्रेण ठञमुत्पादयन्ति । तदसत् । तत्र 'कालात्' इत्यधिकारात् । अत एव वृत्तौ तेनेति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकादित्युक्त्वा अह्ना निर्वृत्तमाह्निकं मासिकं सांवत्सरिकमित्युदाहृतम् ।

**प्रमाणसामान्येति** । अयमर्थः । अस्ति तावद्धर्मादिविषय इत्युक्तरीत्या तस्य प्रामाणिकत्वेन प्रमाणसामान्यं तावत् तत्र सिद्धम् । न केवलमेतावत् । आगमाद्यप्रामाण्ये च वाग्व्यवहारासिद्ध्यापत्त्या तन्निर्वाहायाऽगमोऽनुमानं च प्रमाणमेष्टव्यमिति प्रमाणविशेषसिद्धिसमुच्चयाभिधानाय चशब्दो भाष्य इति । प्राचीनटीकायां तु "न केवलं प्रत्यक्षैकप्रमाणवादिनश्चार्वाकस्य धर्माद्यभावोक्तिरयुक्ता । किन्तूक्तिरेवायुक्तेत्यभिप्रायेणाह– अन्यथेति" इति चशब्दार्थ उक्तः । आगमस्येवानुमानस्य वाचा निर्वत्यत्वाभावादाक्षिपति **भवत्विति** ॥ **द्वितीये** अज्ञात्वेति पक्षे । निष्फलः परप्रत्यायनादिप्रयोजनशून्यो वाग्व्यवहार इति योज्यम् । **तज्ज्ञानोपायः** मया श्रुतमिति ज्ञानोपायः । "वा स्याद् विकल्पोपमयोरेवार्थेऽपि समुच्चये" इति विश्वकोशादाह **वाशब्दोऽवधारण इति** । प्रत्युत्तरस्याज्ञापकत्वापादनमुपपादयति **प्रत्युत्तरं हीति** ॥ तर्ह्यज्ञापकमेव स्यादित्यत आह **ज्ञापकत्वमात्रमिति** । **कथमिति** । ज्ञापनमात्रार्थत्वेनापि वाग्व्यवहारोपपत्तेरिति भावः । "वा विकल्पोपमानयोः" इत्यभिधानाद् वाशब्दो विकल्पार्थ इति भावेनाह **संशयो वेति** । गत्यन्तरेति वदन् ईश्वरज्ञानमप्रमेति मते तस्य "जायमानः प्रत्ययः" इति निरासः, स्मृतितर्कयोः सिद्धान्ते प्रमात्वेन इतरमते भ्रमत्वेनोक्तान्तर्भाव इत्यभिप्रैति । पक्षद्वयेऽपि दोषमाह **न चेत्यादिना** । **प्रयोग इति** । "इति युक्तम्" इति वक्ष्यमाणेनान्वयः । पराङ्गीकृतज्ञापकभावस्यापि प्रत्युत्तरस्य न भ्रान्त्याद्यापादकत्वं युक्तम्, अनुभवविरोधादित्याह **नापीति** ॥ वाशब्दो भाष्ये उपमार्थक इत्यभिप्रायेणाह **यथेति** । चशब्दार्थोऽपि स एव वाशब्द इति भावेनोक्तं **कारणत्वं चेति** । दुःखस्य नान्तरीयकत्वे शास्त्रप्राप्तव्यसुखस्य प्रयोजनत्व-

मुपपद्यत एवेत्याशङ्क्याह **तथा चेति** । **पशुप्रायाः** पशुतुल्याः । "प्रायो बाहुल्यतुल्ययोः" इति विश्वोक्तेः । **अलं** पर्याप्ताः । **तदभावेऽपि** सर्वेषामपकर्तृत्वाभावेऽपि ।

**भाष्यम्**

**रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशङ्का स्यात् । न च अदोषत्वं स्ववाक्येनैव सिद्ध्यति ।**

***प०टी०***— नन्वस्तु धर्मादिकं तथापि तदर्थमपौरुषेयवाक्यं स्वीकार्यम् । रचितवाक्यादेव तत्सिद्धेरित्यत आह **रचितत्वे चेति** । नन्वसौ कर्ता निर्दोष एवेत्यत आह **न चेति** । प्रमाणान्तराभावात् तन्निर्दोषतायां तद्वाक्यमेव प्रमाणं वाच्यम् । न च स्ववचनात् स्वस्य निर्दोषता सिद्ध्यति । अतोऽप्रसिद्धकर्तृकत्वादपौरुषेयवाक्यमेव धर्माद्यर्थमङ्गीकार्यमित्यर्थः ।

***न०टी०***— नन्वस्तु नाम धर्मादिः । पौरुषेयवाक्येनैव तत्सिद्धिः किमिति न स्यात् ? इति काणादाद्याः । तान् प्रत्याह **रचितत्वे चेति** । प्रत्यनुमानादिपराहतत्वेन सर्वज्ञत्वाद्यनुमानासम्भवात् । तस्याज्ञानादिदोषाभावस्तद्वाक्येन वक्तव्या । तथा च तस्यन्योन्याश्रय इति भावेनाह **न चादोषत्वमिति** ।

***प्र०दी०***— ननु स्वीकृतं धर्मादिकम्, पौरुषेयवाक्यात् तन्निश्चयः स्यादित्यत आह— **रचितत्वे चेति** । ततश्च न धर्मादिनिश्चय इति भावः । निर्दोषत्वेन प्रमितो-ऽसाविति चेत् । तस्य निर्दोषत्वं किं तद्वाक्यात् सिद्धं प्रमाणान्तरेण वा, न द्वितीयः । तदभावात् । आद्यं दूषयति— **न चेति** । अतिप्रसङ्गादिति भावः । न च प्रत्यक्षादिना धर्मादिसिद्धिः । अतः सर्वैः किमप्यपौरुषेयं वाक्यमङ्गीकार्यम् । अङ्गीकृतं च बौद्धादिः स्वसमयापौरुषेयत्वम् । 'शौद्धोदनिप्रभृतयः सम्प्रदायप्रवर्तकाः' इत्युक्तत्वात् । ततः किमिति चेत् । वाक्यत्वहेतोः तत्र अनैकान्त्यमिति ।

***भा०दी०***— **न च प्रत्यक्षादिनेति** । अयोग्यत्वादिति भावः । **अन्यतरेति** । बौद्धवाक्यापौरुषेयत्वस्य सिद्धान्तिना अनङ्गीकारादन्यतरेत्युक्तम् ।

***भा०र०***— **असौ** रचयिता पुरुषः । **न च प्रत्यक्षेति** । तस्यातीन्द्रियत्वादिति भावः । किमेवं वदतः किमपि वाक्यमपौरुषेयं नास्तीति मतम् उत किञ्चिदस्तीति प्राग् विकल्पितं द्वितीयपक्षमङ्गीकारयन्नुपसंहरति **अत इति** । न केवलं प्रामाणिकैरेवमङ्गीकार्यमिति त्वयाऽपि स्वीकार्यमापद्यते । किं तर्हीत्यत आह **अङ्गीकृतं चेति** । **शौद्धोदनिप्रभृतय इति** । यः शकेषु जातो बुद्धावतारः

स शौद्धोदनिरिति क्षीरस्वामी । तत्प्रभृतयः सम्प्रदायस्यैव प्रवर्तकाः, न पुना रचयितार इत्यपौरुषेयत्वं प्राप्तमिति भावः । **वाक्यत्वहेतोरिति** । श्रुतेरपौरुषेयत्वमेव नास्ति वाक्यत्वाल्लौकिकवाक्यवदिति प्रागुक्तवाक्यत्वहेतोस्तत्राङ्गीकृतापौरुषेयभावे वाक्ये उक्तसाध्येन व्यभिचार इत्यर्थ इति सुधीन्द्रतीर्थश्रीमच्चरणाः ।

**भाष्यम्**

**न च येन केनचिदपौरुषेयं इदं इत्युक्तमुक्तवाक्यसमम् । अनादिकालपरिग्रहसिद्धत्वात् । अतः प्रामाण्यं श्रुतेः । अतः कुतर्कैर्धीरस्तत्र न मुह्यति ।** ॥ १३ ॥

*प०टी०*— नाप्रसिद्धकर्तृकत्वेनापौरुषेयत्वं सिद्ध्यति । व्यभिचारादित्यत आह **न चेति** । **उक्तवाक्यम्** अपौरुषेयवाक्यम् । प्रामाण्यं च इत्याद्युक्तमुपसंहरति **अत इति** । 'न त्वेव' इति श्लोकद्वयं प्रकारान्तरेण व्याचष्टे **अथवेत्यादिना** ॥ १३ ॥

*न०टी०*—तदेवं कर्तुरप्रसिद्धेः स्वत एवापौरुषेयत्वसिद्धौ वेदस्य, नातिप्रसङ्ग इति भावेनाह **न च येन केनचिदित्यादिना** । सिद्धे वाऽपौरुषेयत्वे दोषाभावात् प्रामाण्यसिद्धिरित्याह **अत इति** । सिद्धे च वेदप्रामाण्ये तेन देहव्यतिरिक्तात्मसिद्धेः धीरो धीमान् तत्र न मुह्यतीत्याह **अतः कुतर्केरिति** । 'न त्वेव' इत्यादिश्लोकद्वयं प्रकारान्तरेणापि व्याचष्टे **अथवेत्यादिना** । अस्मिन् पक्षे 'गतासून्' इत्यत्रापि गतासवो देहान्निर्गता भवन्त्यसवो येभ्य इति कृत्वा गतासवो जीवाः । न हि तेभ्यः असवो गच्छन्ति मृतावपि 'भागतोऽनुव्रजन्ति तम्' इति वचनात् ॥ १३ ॥

*प्र०दी०*— अस्त्वेवमनुमानस्यान्यतरानैकान्त्यात् श्रुतेरपौरुषेयत्वे बाधकाभावः । साधकं तु किमिति चेत्, कर्तुरप्रसिद्धिरपौरुषेयत्वप्रसिद्धिश्चेति ब्रूमः । एवं तर्हि गूढकर्तृकस्य कृतापौरुषेयत्वप्रसिद्धिकस्याप्यपौरु-षेयत्वप्रसङ्ग इत्यत आह— **न चेति** ।

केनचित् कृतमिति शेषः । उक्तवाक्यसमं वेदवदपौरुषेयमित्यर्थः । अनादिकाले यः परिग्रहः प्राक्तनमेवैतदिति ज्ञानं तेन विषयीकृतत्वात् श्रुतेः । इतरस्य तदभावात् अपौरुषेयत्वप्रसिद्धिरेव तत्र भग्नेति भावः । अपौरुषेयत्वसिद्धौ सिद्धमर्थमुपसंहरति— **अत इति** । एवं च चतुर्थपादोपयुक्तं प्रमेयमुक्त्वा तमिदानीं निवेशयति— **अत इति** । यत एवं नैरात्म्यवादिभिरुत्प्रेक्षिताः कुतर्का अतस्तैः कुतर्कैः धीरः धीमान् तत्र देहातिरिक्तनित्यात्मसद्भावविषये न मोहमापद्यते । ''नरके नियतं वासः'' इत्याद्यर्जुनवचनेन तस्य नित्यात्मप्रतिपत्तिसिद्धेः प्रथमपुरुषप्रयोगः ॥ १३ ॥

*भा०दी०*— अर्जुनं प्रत्युक्तरूपत्वात् त्वं न मुह्यसीति वाच्ये मुह्यतीत्युक्तिः कथमित्यत आह **नरके इत्यादिना**। चार्वाकादिनिरासः ॥ १३ ॥

*भा०र०*— श्रुतेः पक्षत्वात् तदन्यवाक्यस्य सिद्धान्तिना अपौरुषेयत्वानङ्गीकारात् कथमनैकान्त्योद्भावनमित्यत उक्तम् **अन्यतरेति**। पराङ्गीकारानुसारेण परस्यानैकान्त्योद्भावनमिति भावः। **कर्तुरप्रसिद्धिरिति**। अप्रमितकर्तृकत्वमित्यर्थः। तेन कर्तृभ्रान्त्या नासिद्धिः। नापि गूढकर्तृकि व्यभिचारः। गूढेन कर्त्रा स्ववाक्ये कर्तुः प्रमितेः। एवं तत्त्वनिर्णयोक्तं हेतुं स्वयमुक्त्वा उत्तरभाष्यमनुरुध्य हेत्वन्तरमाह **अपौरुषेयत्वप्रसिद्धिश्चेति**। अत्र व्यभिचारं शङ्कते **एवं तर्हीति**। 'गूढकर्तृकस्य' इति साध्याभावोपपादनम्। ''कृतापौरुषेयत्वप्रसिद्धिकस्य'' इति हेतुसत्त्वोपपादनम्। **इतरस्य** गूढकर्तृकस्य। **तदभावात्** प्राक्तनमेवेदमधीमहे अध्यापयामश्चेति लोकानुसन्धानगोचरत्वाभावात्। **तत्र** गूढकर्तृकवाक्ये। **तं** चतुर्थपादम्। ''धीरस्तत्र न मुह्यति'' इति मत्वर्थे रप्रत्यय इति भावेनोक्तं **धीमानिति**। अर्जुनस्य बोध्यत्वान्मुह्यसीति वाच्यमित्यत आह **नरके नियतमित्यादि**।

**भाष्यम्**

**अथवा जीवनाशं देहनाशं वाऽपेक्ष्य शोकः? न तावत् जीवनाशम्। नित्यत्वादित्याह— नत्वेवेति ॥ १२ ॥ नापि देहनाशमित्याह— देहिन इति। यथा कौमारादिदेहहानेन जरादिप्राप्तावशोक एवं जीर्णादिदेहहानेन देहान्तरप्राप्तावपि ॥ १३ ॥**

*प्र०दी०*— अनेकार्था गीतेति दर्शयितुं श्लोकद्वयं प्रकारान्तरेण व्याचष्टे— **अथवेति**। न जीवनाशमपेक्ष्य शोकः कार्य इति शेषः। नित्यत्वात् जीवस्य। अनेन योजना पूर्ववदेवेति ज्ञापयति ॥ १२ ॥

नापीत्यत्रापि पूर्ववत् शेषः। अत्र पूर्वयोजना न सङ्गच्छते। अतोऽन्यथा पादत्रयं व्याख्याति— **यथेति**। जरादिप्राप्तौ देहान्तरप्राप्ताविति निमित्तसप्तम्यौ। ततश्चायमर्थः। कौमाराद्यवस्थाविशिष्टदेहहाने तावत् नास्ति शोक इति प्रसिद्धम्। तत् कस्य हेतोरिति वाच्यम्। जरादिविशिष्टदेहान्तरलाभात्; समानलाभेन हानिर्हि समाधीयत इति चेत्। तर्हि मरणेऽपि शोको न कार्यः। देहान्तरलाभादेव। यदा तु जीर्णलाभेन समीचीनहानेः प्रतिविधानं तदा सुतरां समीचीनलाभेन जीर्णहानेरिति। तत्रावस्था-

मात्रहानिः । अत्र त्ववस्थावतोऽपीत्येतदनुपयुक्तं वैषम्यम् । निष्कप्रदानेन पटग्रहणदर्शनादिति भावेनोक्तं 'धीरः' इति ॥ १३ ॥

***भा०दी०***— **जीर्णहानेरिति** । प्रतिविधानमिन्त्यनुषङ्गः । चतुर्थपादं स्वयं योजयति **तत्रावस्थामात्रेत्यादिना । धीर इतीति** । तत्र पूर्वदेहत्यागेन देहान्तरप्राप्तिविषये धीरो विवेकी न मुह्यतीति मूलार्थ इति भावः ॥ १३ ॥

***भा०र०***— **इति दर्शयितुमिति** ॥ लेशत इत्युक्त्या सूचितं बह्वर्थत्वं मन्दानामपि गीतासु दर्शयितुमित्यर्थः । 'जीवनाशम्' इत्यत्र पूर्वभाष्याद् अपेक्ष्य शोकः इति पदद्वयमनुवर्त्य तत्रापि ल्यपो घटनाय शेषमाह **कार्य इति शेष इति** । 'नित्यत्वात्' इति भाष्ये शेषोक्तिर्जीवस्येति । **अनेन** 'नत्वेव' इतीति प्रतीकमात्रग्रहणेन ॥ १२ ॥

अत्र 'कौमारम्' इत्यादित्रिपाद्याम् । यद्वा, नापि देहनाशमपेक्ष्य शोकः कार्य इत्यत्रेत्यर्थः । एवं हि तत्र पूर्वयोजना । यथा कौमारादिशरीरभेदेऽपि देही तदीक्षिता सिद्धः, एवं देहान्तरप्राप्तावपि । ईक्षितृत्वादिति । इयं च देहातिरिक्तात्मादिसाधनाय कृता । न प्रकृतार्थसङ्गता । अतोऽन्यथाऽत्र व्याख्यातीत्यर्थः । **निमित्तसप्तम्याविति** । जरादिप्राप्तिनिमित्तकः शोकः देहान्तरप्राप्तिनिमित्तकः शोक इति च निमित्तार्थे सप्तम्यावित्यर्थः । यद्यपि विशिष्य निमित्ततायां न सप्तमीविभक्तेरनुशासनमस्ति । तथाऽपि जरादिप्राप्तौ देहान्तरप्राप्तावित्युभयत्र सत्यामिति अशोक इत्यत्र तु युक्त इति शेषो व्याख्यायते । ततो "यस्य च भावेन भावलक्षणम्" इति सूत्रेण सप्तमी, गोषु दुह्यमानासु गतः कृष्ण इत्यत्र यथा । तथा च जरादिप्राप्तौ सत्यामशोको युक्त इति संयोजने सति सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपकल्पत इति उपलक्षणीभूतसप्तम्याश्रययोर्जरादिप्राप्तिदेहान्तरप्राप्त्योर्निमित्तत्वं लभ्यत इत्यभिप्रायेण 'निमित्तसप्तम्यौ' इत्युक्तमित्याहुः । निमित्तकारणहेतुषु सर्वासामिष्टिरिति तत्कस्येति षष्ठी । कस्माद्धेतोरित्यर्थः । परिदृश्यमानदेहेति वक्तव्ये यज्जीर्णग्रहणं तत्तात्पर्यमाह **यदा त्विति** ॥ ॥ १३ ॥

***गीताश्लोकद्वयाक्षरार्थस्तु***— ननु चात्र किं परिदृश्यमानदेहपक्षीकारेणानुमीयते किं वा तदतिरिक्तदेहिपक्षीकारेण ? नाऽद्यः, देहोत्पत्तिनाशयोः प्रत्यक्षसिद्धत्वेन हेतोः स्वरूपासिद्धत्वात् कालात्ययापदिष्टत्वाच्च । द्वितीये देहातिरिक्तात्मनः सद्भावे तन्नित्यत्वानुमानं सम्भवति । देहपक्षोक्तदोषाभावात् । तद्देहातिरिक्तात्मसत्त्वमेवासिद्धम् । ततश्चाऽश्रयासिद्धिरिति । अस्तु वा देहातिरिक्तात्मसद्भावः । तथाऽपि नानुमानं सम्भवति । यतः पूर्वोत्तरदेहेष्वेक एवायमात्मेत्यस्यार्थस्य भावे एतदनुमानं सम्भवति । स्वरूपासिद्ध्याद्यभावात् । किं नाम ? तत्पूर्वोत्तरदेहेष्वात्मैकत्वमेवासिद्धं प्रमाणा-

भावात् । तथा च देहोत्पत्तावुत्पत्तिमतः तद्विनाशे च नाशवतः कथमनादित्वेन नित्यत्वं साध्यत इत्येतदाक्षेपद्वयपरिहाराय "देहिनोऽस्मिन्" इत्यादित्रिपादी प्रवृत्ता । **देहिन इति** । अत्र देहशब्देन शरीरेन्द्रियान्तःकरणप्राणादिसङ्घातो ग्राह्यः । **देहवतो** देहातिरिक्तस्य । **अस्मिन् देहे** परिदृश्यमाने स्थूलदेहे । कौमारं यौवनं जरेति विषयेण विषयीक्षणमुपलक्ष्यते । तत् देहिनो देहातिरिक्तस्यैव । न हि जडस्य शरीरस्य कौमाराद्यनुभवः सम्भवतीति कौमारादीक्षणेन लिङ्गेन देहातिरिक्त आत्माऽस्तीत्यनुमीयते । तथा 'देहिनः' इत्यादिपादत्रयं देहभेदेऽप्यात्मैकत्वसाधनं योजनीयम् । देहिन इत्येकवचनं तन्त्रम् । कौमारादिमच्छरीरभेदे देही एक एव । योऽहं कुमारशरीरवानभूवं स इदानीं युवशरीरवान् वर्ते इत्यादिप्रत्यभिज्ञानात् । देहान्तरप्राप्तावपि अनेकदेहप्राप्तावपि एक एव देही सिद्धः । उक्तरीत्या तत्प्रत्यभिज्ञातृत्वात् । प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वदेहानुसन्धानादिसिद्धिरिति ।

अथवा, जीवनाशं देहानाशं वाऽपेक्ष्य शोकः कार्यः ? न जीवनाशम् । तस्य नित्यत्वात् । नापि देहनाशमपेक्ष्य शोकः कार्यः । प्रतिनिधिलाभेन हानेः प्रतिविधानसम्भवादिति "न त्वेवाहम्" इत्यादिश्लोकद्वयेनोच्यत इति भाष्ये द्विश्लोकी प्रकारान्तरेणावतारिता । तत्र प्रथमश्लोके पूर्ववदेव योजना । द्वितीयश्लोके पूर्वयोजना न सङ्गच्छत इति पादत्रयं यथा कौमारादिदेहहानेन जरादिप्राप्तावशोकः, एवं जीर्णादिदेहहानेन देहान्तरप्राप्तावपि न शोक इति प्रकारान्तरेण व्याख्यातम् । अत्रायं भावः । कौमाराद्यवस्थाविशिष्टदेहहाने तावन्नास्ति शोक इति प्रसिद्धम् । तत् कस्य हेतोरिति वाच्यम् । जरादिविशिष्टदेहान्तरलाभात् । समानलाभेन हानिः समाधीयत इति चेत्, तर्हि मरणेऽपि शोको न कार्यः । देहान्तरलाभादेव । यदा तु जीर्णलाभेन समीचीनहानेः प्रतिविधानं तदा सुतरां समीचीनलाभेन जीर्णहानेरिति । तत्रावस्थामात्रहानिरत्र तु अवस्थावतोऽपीत्येतदनुपयुक्तं वैषम्यम् । निष्कप्रदानेन पटग्रहणदर्शनादिति भावेनोक्तं **धीर इति** । धीरः धीमान् तत्र देहातिरिक्तात्मविषये न मुह्यति । देहेन्द्रियादीनां जडत्वकरणत्वादिना ईक्षणादिकर्तृत्वायोग इत्यादिरूपेण ते तर्का निराकार्याः । तथा हि । न तावदहं मनुष्य इत्याद्यनुभवाच्छरीरस्य कौमाराद्यनुभवः शङ्कनीयः । भौतिकत्वात् । अन्यथा मृतस्यापि तत्प्रसङ्गः । प्राणेन्द्रियाद्यपगमान्मृतस्यादर्शनमिति चेन्न । प्राणादेः सत्त्वेऽपि सुप्त्यादौ ज्ञानादर्शनात् । अत एव मनसोऽपि न ज्ञातव्यम् । सुप्त्यादौ सत्यपि मनसि ज्ञानादर्शनात् । करणत्वाच्च । मनसा जानामीत्यनुभवात् । न च करणस्य कुठारस्येव कर्तृत्वमुपपद्यते । एतेन बाह्येन्द्रियाणामपि कर्तृत्वं निरस्तम् । चक्षुषा पश्यामीत्यादौ तेषामपि करणत्वानुभवात् । न च प्रत्यभिज्ञा भ्रान्तिः । बाधकाभावादिति ॥ १२-१३ ॥

**गीतातात्पर्यनिर्णयः**

**मम स्वकीयदेहान्तरप्राप्तिरपि नास्तीति दर्शयितुं देहिन इति विशेषणम् । भवदादीनां सा भविष्यतीत्यपि शोको न कर्तव्यः । देहस्येदानीमप्यन्यथात्वदर्शनात् ॥ १३ ॥**

***प्रका०***— एतत्स्फुटीकुर्वन् उत्तरश्लोकं व्याचष्टे **ममेति** । ईश्वरस्याप्यन्तर्यामिरूपेण जीवदेहप्रवेशात् **स्वकीयेत्युक्तम्** । तददर्शनादिनिमित्तं दुःखमित्यर्थः । फलं तु विषयापायादिनिमित्तदुःखसहनजम् ॥ १३ ॥

***न्या०दी०***— यद्यत्रेश्वरस्योभयविधनाशाद्यभावो विधीयते कथं तर्हि देहिन इत्यत्र पूर्वोक्तानामीश्वरादीनां देहान्तरप्राप्तिरुच्यते । न चेश्वरातिरिक्तानाम् । तद्व्यावर्तकाश्रवणादित्यत आह **ममेति** ॥ न देहिन इत्यत्रेश्वरस्य देहान्तरप्राप्तिरुच्यते । अपि तु जीवानामेव । न चेश्वरव्यावर्तकाभावः । ईश्वरव्यावृत्त्यर्थमेव देहिन इति विशेषणस्य प्रयुक्तत्वात् । विष्णोर्भिन्नदेहाभावेन देहित्वाभावादिति भावः । ईश्वरस्यापि जीवदेहान्तरप्राप्तिसद्भावात्स्वकीयेत्युक्तम् । एवं चेत्कः श्लोकार्थ इत्यतस्तमाह **भवदिति** ॥ इदानीमेकस्मिन्नपि शरीरे कौमारादिरूपेणान्यथात्वदर्शनात् तत्र यथा शोकाभावस्तथैवेत्यर्थः ॥ १३ ॥

**गीता**

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तान् तितिक्षस्व भारत ॥ १४ ॥**

***वि०वि०***— ननु कौमारादिदेहहानेन जरादिप्राप्तावशोको युज्यते तस्यैव पुनर्दर्शनादिसम्भवात् । देहान्तरप्राप्तौ तु तदभावाच्छोक इत्यत आह **मात्रास्पर्शा इति** । मीयन्त इति मात्रा विषयाः तेषां स्पर्शाः सम्बन्धाः । तु शब्दोऽवधारणे । शीतोष्णग्रहणं विषयमात्रोपलक्षणम् । तेन तत्तत्साक्षात्कारो लक्ष्यते । ततश्चायमर्थः— शीतोष्णादीनामिंद्रियैः सम्बन्धा एवात्मनः शीतोष्णाद्यनुभवमुत्पाद्य सुखदुःखप्रदा भवन्ति । नह्यात्मनः स्वतो दुःखादिकं सम्भवति । न च विषयसम्बन्धा एवात्मनः स्वरूपानुवेधिनः सुषुप्तावभावात्, तत्कार्यस्य साक्षात्कारस्य कदाप्यदर्शनात् । न हि सामग्री कार्यं व्यभिचरतीत्याह **आगमापायिन इति** । यदा विषयसम्बन्धानामागमापायित्वमेवात्मनि तेषां स्वाभाविकत्वं वारयति, तदा किमु वक्तव्यं नित्यत्वं निवारयतीति भावेनाह

**अनित्या इति** । अतो विषयसम्बन्धानामात्मनो देहाद्यभिमानद्वारैव दुःखादिहेतुत्वादभिमानं परित्यज्य तान्विषयसम्बन्धान् । तितिक्षस्व विफलान् कुर्वित्यर्थः ॥

अन्यत्तु व्याख्यानं स्पर्शत्वगिन्द्रियसम्बधस्यावर्जनीयत्वात्सुप्त्यादावपि विषयेन्द्रियसम्बधाः सन्त्येव । अतस्तेषामेव शीतोष्णत्वादिकत्वमाशङ्क्य तुशब्दात् परया काक्वा निवार्यते । मात्रास्पर्शा एव केवलं शीतोष्णसुखदुःखदा न हि । किं नामाभिमानसहिता इति । विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः येनाभिमानोऽप्यधिकः कारणसामग्र्यां निवेश्यत इत्यत उक्तम् **आगमापायिन इति** । हेत्वर्थं विशेषणम् । 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात् शीतोष्णसुखदुःखप्रदानां मात्रास्पर्शादीनां विशेषणं सत्, इदं शीतोष्णसुखदुःखदत्वमुपसङ्क्रामति । ततश्च मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यत् तस्यागमापायित्वादित्यर्थः । प्रवाहरूपेण नित्यस्याप्यागमापायित्वात् । प्रवाहनित्यत्वमत्र न विवक्षितम् । किन्तु प्रवाहविच्छेदोऽपि सुप्त्यादावभावादित्याशयेनोक्तम् **अनित्या इति** । शेषं पूर्ववत् ॥ १४ ॥

***वा०ल०***— 'मात्रास्पर्शास्तु' इत्यत्र मात्राणां रूपरसादिपञ्चतन्मात्राणां स्पर्शाः चक्षुरादीन्द्रियैरनुभवाः शीतोष्णसुखदुःखदा इति योजना ॥ १४ ॥

***सा०सं०***— सत्यमेव तत्सर्वं भवदुक्तम्— "उक्तविधयाऽऽत्महानेरभावात्, देहहानावपि समीचीनदेहान्तररूपप्रतिनिधिलाभात्, बान्धवानां हानिः भविष्यतीति धिया शोको न युक्तः" इति । तथाऽपि, तन्मृतौ ममैव सुखहानिर्दुःखप्राप्तिश्च स्यात् । तद्देहदर्शनस्पर्शसम्भाषणादेः सुखहेतोरभावात् । छेदभेदादिना विकृततद्देहदर्शनस्य दुःखहेतोर्भावादित्यत आह **मात्रेति** । मीयन्त इति मात्राः 'माङ् माने' इत्यतः कर्मणि त्रप्रत्ययः । स्त्रीत्वं शब्दस्वाभाव्यात् । ज्ञानविषयाः गन्धरसरूपस्पर्शशब्दाः, तेषां स्पर्शाः सम्बन्धाः । शीतोष्णशब्दौ शीतोष्णस्पर्शवाचकौ, लक्षणया गन्धरसरूपस्पर्शशब्दाख्यसर्वविषयपरौ भूत्वा तदनुभवलक्षकौ । लाक्षणिकोक्तिकृत्यमग्रे व्यक्तम् ।

गन्धरसरूपस्पर्शशब्दाख्यविषयाणां घ्राणरसनचक्षुस्त्वक्श्रोत्ररूपेन्द्रियैः यथाक्रमं ये सन्निकर्षाः ते **मात्रास्पर्शाः शीतोष्णसुखदुःखदाः** सुगन्धसुरससुरूपसुस्पर्शसुशब्दविषयकसाक्षात्काररूपानुभवजननद्वाराऽऽत्मनः सुखप्रदाः । अनिष्टगन्धरसादिविषयकसाक्षात्कारजननद्वारा दुःखप्रदाः ।

'तेषां मृतौ च तन्निमित्तसुखदुःखहानिप्राप्ती भवत इति किल कौन्तेय तवाशयः' इति पार्थहार्दमनूद्य, भगवान् कृष्णः काकुस्वरशिरस्कतुशब्देनावधारणार्थकेन निराचष्टे । हे **कौन्तेय, मात्रास्पर्शा** एव, गन्धादिविषयेन्द्रियसन्निकर्षा एव, इष्टानिष्टस्वविषयसाक्षात्कारद्वारा **सुखदुःखदाः**

किमिति काकुस्वरेणाक्षेपः । केवलं तन्मात्रा एव न भवन्ति, किन्तु विषयेषु शोभनाध्यासनिमित्त-स्नेहरूपेण वा अरित्वादिभ्रमहेतुकद्वेषरूपेण वा देहेन्द्रियान्तःकरणेषु ममतातिशयहेतुकाविवेकरूपेण वाऽभिमानेन सहिता एव, तथेत्यर्थः ।

कुत एवं तन्मात्रा एव स्वस्वविषयानुभवद्वारा सुखदुःखहेतवो भवन्तीत्यत आह **आगमेति** । यत इति शेषो वा, हेतुगर्भविशेषणं वा । एतच्चागामपायित्वं शीतोष्णसुखदुःखदाः मात्रास्पर्शा आगमापायिन इत्येवं स्वस्वविषयकधीद्वारा सुखदुःखत्वविशिष्टमात्रास्पर्शानां विशेषणम्, "सविशेषणे हि विधिनिषेधौ विशेष्ये बाधाद्विशेषणमुपसङ्क्रामतः" इति न्यायात्, मात्रास्पर्शानां स्वस्वविषयक-धीद्वारा यत् सुखदुःखदत्वं तस्यागमापायित्वादिति सुखादिदत्वरूपविशेषणम् उपसङ्क्रामति । सुप्त्यादौ श्रीचन्दनाग्निकणादिशीतोष्णस्पर्शसम्बन्धेऽविनाभूतमनःसम्बन्धात्मसन्निकृष्टत्वगिन्द्रियस्य सत्त्वेऽपि स्वविषयानुभवद्वारा सुखदुःखादिदत्वस्यादर्शनात् । जाग्रद्दशायाम् अभिमानसत्त्व एव तद्दर्शनात् । अन्वयव्यतिरेकाभ्याम् अभिमानसहिता एव मात्रास्पर्शाः स्वस्वविषयकधीद्वारा सुखदुःखादिदाः, न तु केवला इति भावः । सुप्तौ अन्येन्द्रियाणाम् उपरमेऽपि त्वगिन्द्रियस्य नोपरमः । तस्य तदाऽपि विषयसन्निकर्षोऽस्तीति ज्ञापनायैव इतरविषयलाक्षणिकशीतोष्णपदप्रयोगः ।

आगमापयित्वं चात्र गङ्गोदकस्येव प्रवाहतो नित्यत्वेऽपि व्यक्तिरूपेणानित्यत्वं न विवक्षितम् । मात्रास्पर्शानां सुखादिदत्वेन तदयोगात् । तथात्वे सुप्त्यादौ सत्वेनाभिमानस्य प्रकृतान्वयव्यतिरेको-क्त्ययोगात्, अर्जुनस्य अभिमाननिवर्तनबोधानुपयोगाच्च । किन्तु किंशुककुसुमानामिव प्रवाहतोऽपि विच्छिद्यमानत्वम् । सुप्तिमूर्छासम्प्रज्ञातसमाधिषु विच्छेदेन प्रवाहविच्छेदसम्भवात् । तस्य प्रकृतोप-योगाच्चेति भावेन आगमापायित्वं व्यनक्ति **अनित्या इति । शीतोष्णसुखदुःखदाः मात्रास्पर्शा अनित्याः** प्रवाहतोऽप्यनित्याः । तेषां सुखादिदत्वं प्रवाहतोऽप्यनित्यं यतोऽतोऽन्वयव्यतिरेकाभ्याम् अभिमानयुता एव सुखादिदा इत्यर्थः । अत इति शेषः । अभिमानहीनमात्रास्पर्शानां सुखादि-दत्वाभावात् । अभिमानत्यागेन तान् मात्रास्पशान् **तितिक्षस्व** विफलीकुरु । सुखदुःखादिदा **यथा** न भवन्ति तथा कुरु । न ह्यभिमानं विना कुतो मात्रास्पर्शरूपः सामग्र्यैकदेशः सुखादिदाने शक्तो भवतीति भावः ॥ १४ ॥

*अ०प्र०*— तानहं न शोचामि किन्तु तद्वियोगादिदुःखभाजं मामेवेति चेत् तत्राह तथाहि । प्रेमास्पदानां दर्शनस्पर्शनादिकं सुखहेतुः । तेषु मृतेषु तद्दर्शनाभावात् सुखहानिः । तथा तेषां छेदभेदादिदर्शनेन दुःखावाप्तिश्चेत्याशङ्कां परिहरति **मात्रास्पर्शा इति** ।

अथान्वयः— हे कौन्तेय[१], आगमापायिनः[२], अत एव अनित्याः[३], मात्रास्पर्शास्तु[४], शीतोष्णसुखदुःखदाः भवन्ति[५], अतः हे भारत[६], तान् तितिक्षस्व[८] ।

हे कौन्तेय[१], आगमापायिनः[२], अत एव अनित्याः = अस्थिराः[३], मात्रास्पर्शास्तु = मीयन्ते ज्ञायन्ते आभिरिति मात्राः इन्द्रियवृत्तयः तासां स्पर्शाः शब्दाद्याः विषयाः तैस्सह सम्बन्धाः श्रोत्रादीन्द्रियैरिति शेषः, शीतोष्णसुखदुःखदाः ते सम्बन्धाः शीतोष्णसुखदुःखादिप्रदा भवन्ति । अतः = कारणात्[५], हे भारत ![६], तान् = सुखदुःखादीन्[७], तितिक्षस्व = सहस्वेत्यन्वयः । तेषां च अस्थिरत्वात् सहनं तव धीरस्य उचितं न तु तन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४ ॥

**भाष्यम्**

**तथाऽपि तद्दर्शनाभावादिना शोक इति चेन्नेत्याह—मात्रास्पर्शा इति । मीयन्त इति मात्रा विषयाः । तेषां स्पर्शाः सम्बन्धाः । त एव हि शीतोष्ण-सुखदुःखदाः । देहे शीतोष्णादिसम्बन्धाद्धि शीतोष्णाद्यनुभव आत्मनः । ततश्च सुखदुःखे । न ह्यात्मनः स्वतो दुःखादिः सम्भवति । कुतः ? आगमापायि-त्वात् । यद्यात्मनः स्वतः स्युः सुप्तावपि स्युः । अतो यतो मात्रास्पर्शा जाग्र-दादावेव ते सन्ति नान्यदेति तदन्वयव्यतिरेकित्वात् तन्निमित्ता एव नात्मनः स्वतः ।**

***प०टी०***— ननु कौमाराद्यपायेऽपि तद्देहस्यैव दर्शनादिसम्भवादशोकेऽपि देहान्तरप्राप्त्यनन्तरं तदभावाच्छोक इत्याशङ्क्य उत्तरश्लोकमवतार्य व्याचष्टे **तथापीति** । 'तु'शब्दार्थः **एवेति** । पूर्वार्धाभिप्रायमाह **देह इति** । देहे विषयसम्बन्धनिमित्तमेवात्मनः सुखादि, न साक्षात् सन्निकर्षात्, इत्येतत् कुतः ? इत्याशङ्क्याह **कुत इति** । सुप्त्यादावभावे विषयसंयोगानाम्, कुतो देहनिमित्तत्वं सुखादेः ? इत्यत आह **अत इति** । तच्छब्दाद्देहाभिमानः ।

***न०टी०***—ननु बन्धूनां जरादिप्राप्तावपि पूर्वदेहदर्शनान्न शोकः, देहान्तरप्राप्तौ तु तददर्शनाच्छोक इत्याशङ्क्य, परिहारत्वेन उत्तरश्लोकमवतारयति **तथाऽपीत्यादिना** । तत्र तावत् पूर्वार्धं व्याचष्टे **मीयन्त इत्यादिना** । तुशब्दार्थमाह **एवेति** । अभिप्रायं कथयति **देह इत्यादिना** । शीत उष्णः समशीतोष्णो वा एवं सुरूपः सुरसः सुगन्धः सुखरूपी परितो देह इति देहे साक्षाद्विषयसम्बन्धः, तदुपयोगिद्वारो वा । तत एव शीतोष्णाद्यनुभव आत्मनः । ततः तस्मादनुभवात्

सुखदुःखे । न हि स्वप्नजाग्रद्दुखादिकमात्मनो जडदेहसम्बन्धविषयानुभवं विनेत्यर्थः । देह एव कुतो मात्रासंसर्गाः, आत्मनि किं न स्युः ? इत्याशङ्कापरिहारत्वेनोत्तरपदं हेतुत्वेनावतारयति **कुत इत्यादिना** । 'आगमापायि'शब्दार्थं सूचयन्नेव तद्धेतुत्वं घटयति **यदिति** । विषयसम्बन्धानामागमापायित्वकथनेन तेषां देहान्वयव्यतिरेक उक्तः । अतस्ते देहनिमित्ता एवेत्याह **अतो यत इति** ।

*प्र०दी०*— प्रकारान्तरेण शोकं शङ्कते— **तथापीति** । यद्यपि बान्धवादीनां हानिर्भविष्यतीति धिया न शोको युक्तः । उक्तविधयाऽऽत्महानेरभावात् । देह-हानावपि प्रतिनिधिलाभात् । तथापि तन्मरणे ममैव सुखहानिर्दुःखावाप्तिश्च भविष्यतीति धिया मे शोकः समुत्पतितः । कथम् । तद्दर्शनाभावादिना । 'तत्' इति बान्धवादिदेहादिपरामर्शः । आदिपदेन विकृततद्दर्शनं च गृह्यते । प्रेमास्पदानां हि दर्शनस्पर्शनालापादिकं सुखहेतुः । तेषु मृतेषु तद्दर्शनाद्यभावात् सुखहानिः । तथा तेषां छेदभेदादिदर्शनेन दुःखावाप्तिश्चेति । एतन्निषेधपूर्वकं श्लोकमवतारयति— **नेति** । 'मीयन्ते विषया एभिरिति मात्रा इन्द्रियाणि' इति व्याख्यानमसत् । पुराणादौ मात्राशब्दस्य विषये रूढत्वादित्याशयवान् व्याचष्टे— **मीयन्त इति** । ननु गन्धरसरूपस्पर्शशब्दा विषयाः । अतो भिन्नपदत्वे द्वन्द्वत्वे वा स्पर्शानां विषयान्तर्गतानां पुनरुक्तिर्व्यर्थेत्यत आह— **तेषामिति** । विषयाणाम् । तथाप्यनुपपत्तिः । विषयाणां स्पर्शाभावादित्यत आह— **सम्बन्धा इति** । एवं तर्हि किं षष्ठीसमासपरिग्रहेण । भिन्नपदत्वादावपि दोषाभावादित्यतो वाक्यं योजयति— **त एवेति** । **तुशब्दस्यार्थ एवेति** । न हि विषयाणां सम्बन्धानां च पृथगेतत्कार्यं सम्भवतीति भावः । ननु शीतोष्णशब्दौ विषयविशेषवचनौ । तत् कथं विषयसम्बन्धा विषयविशेषं दद्युः । कथं च साक्षात् सुखदुःखे । कश्च प्रतिसम्बन्धी । कस्मै ददतीत्यत आह— **देह इति** । देहशब्देनात्रेन्द्रियाणि लक्ष्यन्ते । अनेन शीतोष्णशब्दौ सकलविषयोपलक्षकौ । विषयोक्त्या च तत्साक्षात्कारो लक्ष्यत इति लक्षितलक्षणेयम् । अनुभवद्वारैव सुखदुःखदानम् । प्रतिसम्बन्धी देहः । दानं चात्मन इत्युक्तं भवति । एतेन लौकिकी प्रतीतिरर्जुनेन शङ्किताऽनूद्यते । तत्तद्विषयाणां तैस्तैरिन्द्रियैर्ये ये सन्निकर्षाः तैस्तैः तत्तद्विषयसाक्षात्कारो भवति । तत्रेष्टविषयसाक्षात्कारात् सुखं भवति । अनिष्टविषयसाक्षात्कारात् दुःखं भवतीति । भवेदेतदेवं ततः किं प्रकृतशङ्काया इत्यतः तुशब्दात् परया काङ्क्षा सिद्धमर्थमाह— **न हीति** । स्वतः विषयेन्द्रियसन्निकर्षमात्रेण । दुःखादिरिति विषयसाक्षात्कारः सुखदुःखे च । अनेन मात्रास्पर्शा एव केवलाः किं शीतोष्णसुखदुःखदाः । न हि । किन्नामाभिमानसहिता इत्युक्तं भवति । अभिमानो नामात्र **विषयेषु** शोभनाध्यासनिमित्तः स्नेहः । अरित्वादिभ्रमनिमित्तो द्वेषश्च, शरीरेन्द्रियान्तःकरणेषु ममताऽतिशयहेतुकोऽविवेक इत्यादिः । विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः,

येनाभिमानोऽप्यधिकः कारणसामग्र्यां निवेश्यत इति शङ्कापूर्वकमुत्तरपादं व्याचष्टे— **कुत इति** । ननु कथमिदं लभ्यते । यत इत्यध्याहारादिति ब्रूमः । प्रयोजनान्तराभावात् हेत्वर्थगर्भत्वेन वा । 'सविशेषणे' विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात् शीतोष्णसुखदुःखदत्वविशिष्टानां मात्रास्पर्शानामिदं विशेषणं भवत् शीतोष्णसुखदुःखदत्वमुपसङ्क्रामति । मात्रास्पर्शानां शीतोष्ण-सुखदुःखदत्वं यत् तस्यागमापायित्वादित्यर्थः । अनेन कथमुक्तशङ्कानिरास इत्यतोऽतिप्रसङ्गमुखेन व्याचष्टे— **यदीति** । मात्रास्पर्शा यदि स्वतः स्वयमे-वाभिमानमनपेक्ष्य, आत्मनः शीतोष्णसुख-दुःखदाः स्युः तर्हि सुप्तावपि स्युः । न हि कारणसामग्री कार्यं व्यभिचरतीत्यर्थः । न च वाच्यं सुप्तौ विषयेन्द्रिय सम्बन्धा एव न सन्तीति । स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयत्वात् । अत एव शीतोष्ण-ग्रहणं कृतम् । एतेनेन्द्रियमनस्सन्निकर्षाभावोऽपि प्रत्युक्तः । न चात्ममनस्सन्निकर्षाभावः । मनसः कदाप्यात्मवियोगाभावस्य वक्ष्यमाणत्वात् । अतिप्रसङ्गस्य विपर्यये पर्यवसानं वदन् साक्षादर्थं दर्शयति—**अत इति** । अतो मात्रास्पर्शा नात्मनः स्वतः स्वयमेव केवलाः शीतोष्णसुखदुःखदा भवन्तीति सम्बन्धः । अत इत्युक्तस्यैव विवरणं यतस्तन्निमित्ता एवेति । तदित्यभिमानपरामर्शः । तेन निमित्तेन सहिता एव शीतोष्णसुखदुःखदा यत इत्यर्थः । तत्कुत इत्यत उक्तम्— **मात्रेति** । मात्रास्पर्शा जाग्रत्स्वप्नयो-रभिमानवतोरेव ते तथाविधा शीतोष्णसुखदुःखदाः सन्ति भवन्ति । नान्यदा अभिमानरहिते सुप्त्यादाविति मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वस्याभिमानान्वयव्यतिरेकानु-विधायित्वादित्यर्थः । नन्वभिमानहीनेऽपि ज्ञानोत्पत्तिः तृणादौ दृश्यते । सत्यम् । सुखदुःखहेतुभूतं ज्ञानमत्राधिकृतमित्यदोष इति ।

*भा०दी०*— **विषयविशेषवचनाविति** । स्पर्शरूपविषयविशेषेत्यर्थः । कश्च प्रतिसम्बन्धीति मात्रास्पर्शरूपशब्दितविषयसम्बन्धानां प्रतिसम्बन्धीक इत्यर्थः । **अनेनेति** । देह इत्यादि भाष्येण इत्यर्थः । **सकलेति** । शीतोष्णादीत्युक्तेरिति भावः । अनुभव इत्युक्तिलब्धमाह **तत्साक्षात्कार इति** । **लक्षितलक्षणेयमिति** विषयविशेषवाची शीतोष्णशब्दाभ्यां रूपादिसकलविषयलक्षणद्वारा तदनुभवस्य लक्षणयोपादानमिति भावः । एवं भाष्यं व्याख्याय मात्रेति मूले पूर्वार्धार्थमाह **एतेन इति** । मात्रास्पर्शा इत्यर्धेन कथमनूद्य इत्यत आह **तत्तद्विषयाणामिति** । **भवेदेतदेवमिति** । उक्तो दुःखसुखादिकं भवतीत्येतद्भवेदित्यर्थः । **कथमिति** । हेतुरूपत्वमित्यर्थः । 'अनेन कथमुक्तशङ्के'ति आगमापायित्वादित्यनेन' विषयेन्द्रियसन्निकर्षेत्यनेनोक्तशङ्कानिरासः कथमित्यतः शेषोक्त्या भाष्यं व्याचष्टे **मात्रास्पर्शा इति** । विषयसम्बन्धा इत्यर्थः । कारणसामग्रीकारण सम्मेलनम् । **अत एवेति** । अन्येन्द्रियाणां तदाविषये सम्भवेऽपि त्वगिन्द्रियस्य शीतस्पर्शरूपविषयसम्बन्धावश्यं-

भावित्वादेवेत्यर्थः । एतेन शीतोष्णरूपत्वगिन्द्रियविषयग्रहणेनेत्यर्थः । त्वगिन्द्रियस्य बहिरन्तर्व्यापित्वेन मनःसंयोगस्याप्यवश्यंभावित्वादिति भावः । **वक्ष्यमाणत्वादिति** । 'यत्र प्राणो मनस्तत्र जीवश्च परमस्तथे'त्यष्टमभाष्ये । **केवलाः** अभिमानं विना कृता इत्यर्थः । **तथाविधाः** अभिमानेन सहिताः सन्ति हि । ज्ञानमात्रस्यान्वयव्यतिरेकाभ्यां अभिमानकारणत्वं मत्वा व्यभिचारं शङ्कते **नन्विति** । **अभिमानहीनेऽपीति** । उदासीनज्ञानस्य तथात्वेऽपि सुखदुःखहेतुभूतज्ञानविषयविषयिसम्बन्धे अभिमाने सत्येव तादृशविषयज्ञानं जनयतीति । दुःखमित्युक्तौ न क्वापि व्यभिचारः । तादृशज्ञानं चेह प्रकृतमित्यादिना अधिकृतं प्रकृतमित्यर्थः । **उपप्लवः** दुःखहेतुः ।

*भा०र०*— "तथाऽपि इति भाष्ये प्रतियोग्याह **यद्यपीति** । **उक्तविधया** जीवनाशं देहनाशं वेत्युक्तविधया । 'विकृत' इत्यत्र छेदादिर्विकृतिः । 'छेदभेदादि' इत्यत्रावयवविश्लेषहेतुः क्रिया छेदः । भिन्नतयाऽवस्थानहेतुर्विदारणं भेदः । नेति श्रवणादाह **एतन्निषेधेति** ॥ तथाऽपीति कृतशङ्कानिषेधेत्यर्थः । **श्लोकं** मात्रास्पर्शा इति श्लोकम् । क्वचित्तु श्लोकद्वयमिति पाठः । तत्र **श्लोकद्वयं** "मात्रास्पर्शास्तु","यं हि न व्यथयन्ति" इति श्लोकद्वयमित्यर्थ इत्याहुः । **इति व्याख्यानमिति** । तथा च शङ्करभाष्यं "मात्राः आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि" इति । **पुराणादाविति** । "जगद्रक्षाश्रया ह्येषा प्रकृतिश्च गुणत्रयम् । मूलं मात्राः शिफास्तस्य" इति तात्पर्योदाहृतप्रमाणे "त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च", "देहोऽसवोऽक्षा मनवो भूतमात्रा नाऽत्मानमन्यं च विदुः परं यत्" इति भागवतादिपुराण इत्यर्थः । अत्राद्ये वचने मात्रा विषया एव ग्राह्याः । "इन्द्रियाण्यस्य पत्राणि" इति तत्रैवेन्द्रियाणां पृथगुक्तेः । द्वितीये मात्रेन्द्रियाणीति सहपाठात् । तृतीये अक्षाणां मात्राणां च पृथगभिधानात् । अतः सर्वत्र त एव व्याख्येया इति । **रूढत्वादिति** । प्रयोगप्राचुर्याद् योगरूढत्वादिति वाऽर्थः । तेन भाष्योक्तयोगवृत्तिविरोध इति शङ्कानवकाशः । मीयन्त इति वदन् भाष्यकारः कर्मणि "हुयामाश्रुभसिभ्यस्त्रन्" इत्यौणादिकत्रन्प्रत्ययमभिप्रैतीति भावः । "रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी" इति कोषोक्तेराह **ननु गन्धरसेति** । **भिन्नेति** । मात्रा इति स्पर्शा इति च भिन्नपदत्व इत्यर्थः । **द्वन्द्वत्वेति** । मात्राश्च स्पर्शाश्चेति द्वन्द्वत्वे वेत्यर्थः । **स्पर्शानां** त्वगिन्द्रियग्राह्यगुणविशेषाणाम् । "विषयान्तर्गतानाम्" इति हेत्वर्थगर्भम् । स्त्रीलिङ्गमात्रापरामर्शस्तेषामित्यनेन कथमित्यत आह **विषयाणामिति** । मात्रा विषया इति प्रकृतत्वात् पुल्लिङ्गेन विषयपरामर्शो युक्त इति भावः । **तथाऽपि** तत्पुरुषाश्रयणेन पुनरुक्तिपरिहारेऽपि । **एवं तर्हि** स्पर्शशब्दस्य सम्बन्धार्थत्वे । **भिन्नेति** । मात्रा इति स्पर्शा इति भिन्नेत्यर्थः । आदिशब्देन द्वन्द्वपरिग्रहः । **दोषाभावात्** 'स्पर्शाभावात्' इत्युक्तदोषाभावात् । वाक्यार्थाघटनदोषा-

भावाद् वा । **पृथक्** प्रत्येकम् । **एतत् कार्यं** सुखदुःखप्रदानलक्षणं कार्यम् । अनेन भिन्नपदत्वे द्वन्द्वत्वे वा वाक्यार्थानुपपत्तिदोषाभावादित्युक्तमसिद्धमित्युपपादितं भवति । **विषयविशेषेति** । त्वगिन्द्रिय-ग्राह्यस्पर्शरूपविषयविशेषेत्यर्थः । **साक्षात्सुखदुःखे** । विषयसम्बन्धा दद्युरिति वर्तते । **कश्चेति** । मात्रास्पर्शशब्दितविषयसम्बन्धानां प्रतिसम्बन्धी कः । सम्बन्धस्य सम्बन्धीद्वयाधीनत्वादिति भावः । **कस्मा इति** । "सुखदुःखदाः" इत्यत्र दानस्य सम्प्रदानापेक्षत्वादिति भावः ।

ननु न शरीरविषयसन्निकर्षस्य विषयानुभवहेतुत्वं, सुप्त्यादौ व्यभिचारादित्यत आह **देह-शब्देनेति** । देहगतत्वं सम्बन्ध इति भावः । ननु शीतोष्णशब्दावित्यादिना कृतचोद्यस्य भाष्येण कथं परिहार इत्यतस्तदुपपादयितुमाह **अनेनेति** । "देहे शीतोष्णादि" इति भाष्येणेत्यर्थः । शीतो-ष्णादीत्यत्र आदिपदसूचितमर्थं वक्तुमाह **शीतेति** ॥ विषयविशेषवचनावपि शीतोष्णशब्दौ गन्ध-रसादिरूपसकलविषयसामान्यलक्षकावित्यर्थः । तथाऽप्यनुपपत्तिः । विषयसम्बन्धानां विषयादातृ-त्वादित्यत उक्तम् **विषयोक्त्या चेति** । सकलविषयलक्षकशीतोष्णपदेनेत्यर्थः । "तत्साक्षात्कारः" इति वदन् विषयविषयीभावं लक्षणाबीजं सम्बन्धमभिसन्धत्ते **लक्षितलक्षणेति** । लक्षितार्थद्वारिका लक्षणा लक्षितलक्षणेत्यर्थः । केचित्तु लक्षिता च सा लक्षणेति कर्मधारयः । लक्षिता लक्षणायुक्ता लक्षणा लक्षितलक्षणा । भवति च शीतोष्णशब्दगता साक्षात्कारलक्षणा सकलविषयसामान्यलक्षणा-युक्तेत्याहुः । कथं च साक्षात् सुखदुःखे इत्युक्तं चोद्यं परिहर्तुं 'ततश्च' इत्यनेन सूचितमर्थमाह **अनुभवद्वारैवेति** । साक्षात्कारद्वारैवेत्यर्थः । कश्च प्रतिसम्बन्धीत्यस्योत्तरमाह **प्रतिसम्बन्धी देह इति** । इन्द्रियाणीत्यर्थः ।

ननु विषयेन्द्रियसम्बन्धाः विषयसाक्षात्कारद्वारा सुखादिप्रदा इति न विधिः, काक्काऽपि निषेधानुपपत्तेः । नाप्यर्जुनेनाऽशङ्कितस्य निषेधायानुवादः । अर्जुनस्य तत्त्वज्ञानित्वेनैवंविधशङ्का-नुदयादित्यत आह **एतेनेति** । काकुहीनेन मात्रास्पर्शा इत्यर्धेनेत्यर्थः । अनुवादप्रकारं दर्शयन् लक्षितार्थं विशदयति **तत्तदित्यादिना** ॥ **प्रकृतशङ्कायाः** "तथाऽपि तद्दर्शनाभावादिना" इति कृतशङ्कायाः । **तुशब्दात् परया काक्केति** । अवधारणार्थकतुशब्दगतध्वनिविकारेणेत्यर्थः । "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः" इति ह्यभिधानम् । स्वत इत्यनूद्यार्थमाह **विषये-न्द्रियेति** । उक्तरीत्या साक्षात्कारस्यैव दुःखादिप्रदत्वात् तदनुसारेणाह **विषयसाक्षात्कार इति** ॥ दुःखस्यादिर्दुःखादिरिति दुःखसुखहेतुरेवाभिधीयते । यद् वक्ष्यति "सुखदुःखहेतुभूतं ज्ञानम्" इति । दुःखमादिर्यस्य सुखस्य तद् दुःखादि । तत्र धर्मो ग्राह्य इति समासद्वयं तन्त्रेणोपात्तमिति भावेन व्याचष्टे **दुःखादिरिति विषयसाक्षात्कारः सुखदुःखे चेति** ॥ गीतानुसारात् स्ववचनानुसाराच्च

सुखादिरिति वक्तव्येऽपि यद् भाष्ये 'दुःखादिः' इत्युक्तं तत् सात्त्विकप्रकृतेर्विषयेन्द्रियसम्प्रयोग-मन्तरेणापि स्वरूपसुखमस्तीति नैतदत्र विवक्षितमिति दर्शयितुम् । वैषयिकमेव सुखादिकमत्राभि-संहितमिति न क्षुद्रोपद्रवः । अनेन तुशब्दात् परया काक्वा लब्धार्थप्रतिपादनपरेण ''न ह्यात्मनः'' इति भाष्येणोक्तं भवति 'मात्रास्पर्शाः' इति पूर्वार्धस्य तात्पर्यम् ।

ननु ''सर्वाभिमतेरेव'' इति भाष्ये अभिमानो ज्ञानमेवेत्युक्तं प्राक् । ज्ञानं च सविषयमेव । तत्र न तावन्मात्रास्पर्शास्तद्विषयाः । अज्ञायमानानामेव तेषां विषयसाक्षात्कारहेतुत्वात् । नापि शीतोष्णादि तद्विषयः । विषयानुभवं प्रति शीतोष्णादिज्ञानस्य हेतुत्वापत्त्या आत्माश्रयापातादित्यतो नात्राभिमानशब्देन ज्ञानमभिप्रेतम् । येनोक्तदोषः । किं नाम ? रागादिरेवेत्याह **अभिमानो नामेति** । ''अत्यन्तशोभना एते विषयाः'' इति भ्रमनिमित्तको रागोऽभिमानोऽत्र विवक्षित इत्यर्थः । ममता-तिशयहेतुकः ''ममैवेदं शरीरम्'' ''ममैवेमानीन्द्रियाणि'', ''ममैवेदमन्तःकरणं न पुनरन्यस्य'' इति भ्रमहेतुकोऽविवेकः । स्फुटतरतत्त्वविवेकाभाव इत्यर्थः । आदिपदेन स्वात्मन्यनन्याधीनस्वातन्त्र्यभ्रमो ग्राह्यः, न पुनर्देहात्मैक्यभ्रमः । तस्यान्यत्र निरस्तत्वात् । प्रक्रमानुगुण्याय विषयाभिमानमात्रे वक्त-व्येऽपि शरीराद्यभिमानस्य विषयाभिमानं प्रति हेतुत्वाच्छरीराद्यभिमानोक्तिः । **कारणसामग्र्यां** कारणकूटे । 'कुतः' इति भाष्ये हेतुः शङ्कितः । हेतुश्च साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनम् । न च आगमापायिन इत्यत्र तादृशी विभक्तिरस्ति । तत् कथं पञ्चम्यन्तत्वेनोत्तरभाष्यमिति शङ्कते **नन्विति** । परिहरति **यत इति** । अध्याहारात् हेतुसमर्पकत्वं लभ्यत इत्यनुकृष्यते अश्रुतपदकल्पन-रूपाध्याहारापेक्षया लक्षणाश्रयणं गुण इति भावेन पक्षान्तरमाह **प्रयोजनान्तरेति** । विशेषणं भवद्धि व्यावृत्तिप्रयोजनकम् । नीलमुत्पलमित्यत्र नीलमित्यस्य अनीलोत्पलव्यावर्तकत्वदर्शनात् । न च प्रकृते अनागमापायिनो मात्रास्पर्शाः सम्भवन्ति । येनास्य सप्रयोजनत्वं स्यात् । अत एव हि ''विशेषणं विशेष्येण बहुलम्'' इत्यत्र भेदकं विशेषणमिति वैयाकरणाः । ततोऽस्य विशेषणस्य व्यावृत्तिलक्षणप्रयोजनासंस्पर्शित्वादागमापायित्वादिति यद्धेतुवाक्यं तस्य योऽर्थः साध्यज्ञापनहेतुत्व-रूपः तद्गर्भत्वेन लक्षणया तत्प्रतिपादकत्वेन आगमापायित्वादिति भाषणं युक्तमिति भावः ।

ननु हेत्वर्थगर्भत्वेऽपि नैतद् विशेषणं भवितुमर्हति । स्पर्शत्वगिन्द्रियसम्बन्धस्य सुप्तावप्यवर्ज-नीयतया सदा सत्त्वेनासम्भावितत्वादित्यत आह **सविशेषण इति** । सविशेषणे विधिनिषेधौ प्रवर्तमानौ विशेष्ये बाधाद् विशेषणमुपसङ्क्रामतः विशेषणे बाधाद् विशेष्यमिति न्यायस्यायमनु-वादः । विशिष्टमात्रास्पर्शानामागमापायित्वविधिर्विशेषणे पर्यवस्यतीति दर्शयन् विशेषणतात्पर्यमाह **शीतोष्णसुखदुःखदत्वविशिष्टानामित्यादिना** । **अनेन** आगमापायिन इति विशेषणस्य हेत्वर्थ-

गर्भत्वभाषणेन । **उक्तशङ्का** विषयेन्द्रियसन्निकर्षा एवेत्यादिनोक्तशङ्का । कारणकोटावभिमानः प्रवेशनीय इत्येतद् भाष्यत एव लभ्यत इति भावेन स्वत इत्यस्य तात्पर्यमाह **अभिमानमनपेक्ष्येति** ॥ सामग्र्यभावात् कार्याभाव इति न वक्तुं शक्यम् अभिमानो न प्रवेशनीय इति वदता परेणेत्याह **न हीति** । अन्यथा अत्यन्तसंयोगे सत्यपि कदाचित् कार्यानुपपत्तिप्रसङ्ग इति हृदयम् । 'सुप्तौ' इति वदन् चक्षुरादीन्द्रियव्यापाराभावमभिप्रैति **अत एवेति** । सुप्तावितरेन्द्रियाणां विषयासम्बन्धेऽपि स्पर्शत्वगिन्द्रियसंस्पर्शस्यानिरसनीयत्वादेव गीतायां शीतोष्णयोः स्वपदेन ग्रहणं कृतमित्यर्थः । **एतेनेति** । स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयत्वकथनेनेत्यर्थः । त्वगिन्द्रियस्य सर्वशरीरव्यापित्वेन शरीर एव मनसः सत्त्वेन च तयोः सम्बन्धो दुर्निरस इति भावः । न च वाच्यम् 'अणवश्च' इत्यत्र इन्द्रियमात्राणुत्वस्य सूत्रितत्वात् कथं त्वगिन्द्रियस्य शरीरव्यापित्वमिति । तेजसा व्याप्तेस्तत्राप्यभिमतत्वात् । **आत्ममनःसन्निकर्षाभाव इति** । तथा च न सुप्तौ शीतोष्णसुखदुःखदाः कारणाभावादिति भावः ।

**मनसः कदाऽप्यात्मवियोगाभावस्येति** । नन्वात्मा "हृदि ह्येष आत्मा" इति श्रुतेर्हृदयदेशस्थः । मनस्तु "ता एताः शीर्षन् श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः" इति श्रुतेः शिरोदेशस्थम् । तत् कथं दूरस्थयोर्वियोगाभाव इति चेन्न मनसोऽपि हृदयदेशस्थत्वेनावियोगसम्भवात् । तथा च श्रुतिः "चन्द्रमा मनो भूत्वा हृदयं प्राविशत्" इति । ऋग्भाष्यटीका च "हृदये मनसः प्राचुर्येण वृत्तेः" इति । तथा च हरिवंशेषु "देहस्य मध्ये हृदयं स्थानं तु मनसः स्मृतम्" इति । न चैवं शिरःस्थत्वश्रुतिविरोध इति वाच्यम् । मनसो रश्मिविशेषेण दक्षिणाक्षिस्थत्वस्य शास्त्रसिद्धत्वेन तच्छ्रुतिसम्भवात् । स्वप्नकाले कण्ठदेशे सन्निधानविशेषाङ्गीकारेण तत्स्थत्वश्रुतिविसंवादस्याप्यभावात् । नन्विदं पूर्वग्रन्थविरुद्धम् । तत्र "समश्चाभिमानो मनसि" इति भाष्यव्याख्यानावसरे "तदा तस्य मनसा सन्निकर्षाभावात्" इत्युक्तत्वादिति चेत्, अत्र केचित् अनुपरतमनसः सन्निकर्ष एव ज्ञानहेतुः । स्वापे तु मन उपरतम् । तथा च अनुपरतमनसा सन्निकर्षाभावः पूर्वटीकावाक्यार्थः । अत्र तु आत्ममनसोरवियोगकथनं वस्तुस्थितिप्रदर्शनपरम् । "यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा" इत्यष्टमाध्यायभाष्ये । **वक्ष्यमाणप्रमाणसिद्धत्वादिति** । अन्ये तु पूर्वटीकापरमतानुवादः, इयं तु "यत्र प्राणः" इति मानसिद्धत्वात् स्वमतमित्यविरोध इत्याहुः ।

**अतिप्रसङ्गस्य** यद्यात्मनः स्वतः स्युः सुप्तावपि स्युरिति तर्कस्य । **भवन्तीति सम्बन्ध इति** । 'सन्ति' इति भाष्यपदस्य भवन्तीति व्याख्यास्यमानत्वात् तदभिप्रायेणैवमुक्तिः । **तदि-**

**त्यभिमानेति** । स्वत इत्यत्राभिमानस्याभिसंहितत्वेन बुद्धौ विपरिवृत्तेस्तच्छब्देन परामर्शो युक्त इति भावः । स निमित्तं सुखादिदाने येषां मात्रास्पर्शानां ते तथोक्ता इति विग्रहमभिप्रेत्य तत्तात्पर्यमाह **तेन निमित्तेनेति** । **तत्** अभिमानसहितानामेव सुखादिदानम् । आदिपदार्थं वदंस्तत्तात्पर्यमाह **जाग्रत्स्वप्नयोरभिमानवतोरिति** ॥ 'ते' इत्यनूद्यार्थमाह **ते तथाविधा इति** । तद्विवरणम् **शीतेति** । अभिमानसहिताः सन्त इति वाऽर्थः । **सुप्त्यादाविति** । सुप्तिमोहासम्प्रज्ञातसमाधिष्वित्यर्थः । दाप्रत्ययस्य कालेऽनुशासनेऽप्यत्र कालोपलक्षितावस्था ग्राह्येतीयमुक्तिः ।

अन्वयव्यतिरेकावुक्तौ । तत्र व्यतिरेको नास्तीति शङ्कते **नन्विति** ॥ ज्ञानमात्रस्यान्वयव्यतिरेकाभ्यामभिमानकारणकत्वं मत्वा चेयं शङ्का । **अधिकृतमिति** । शीतोष्णशब्दे लक्षितलक्षणाङ्गीकारेण विषयसाक्षात्कारग्रहणात् प्रकृतमित्यर्थः । नन्वेवं सुप्त्यादावपि तृणादिज्ञानं स्यादेव । तत्र अभिमानाभावेन सुखादिहेतुभूतविषयानुभवानङ्गीकारेऽपि उदासीनतृणादिज्ञाने प्रतिबन्धाभावात् । विषयेन्द्रियसंम्बन्धस्येन्द्रियमनःसन्निकर्षस्य आत्ममनःसंयोगस्य वाऽभावेन न तृणादिविषयानुभव इति तु पूर्वटीकयैव परिहृतमिति चेत्, उच्यते । विषयेष्वत्यन्तशोभनाध्यासनिमित्तस्नेहादिलक्षणस्य शरीरेन्द्रियान्तःकरणेषु ममतातिशयहेतुकाविवेकरूपस्य स्वात्मन्यनन्याधीनस्वातन्त्र्यभ्रमरूपस्य च त्रिरूपस्याप्यभिमानस्य सुखदुःखहेतुसाक्षात्कारजनकता । विषयाभिमानान्यस्य शरीरेन्द्रियाद्युक्तलक्षणस्य मानसज्ञानसामान्यहेतुताऽभिमता । एवं च सुप्तावुक्तलक्षणस्य विषयाभिमानान्यस्याभिमानस्याभावेन सामग्र्यभावात् तत्र तृणाद्युदासीनज्ञानाभावो युक्तः । 'अभिमानहीनेऽपि' इति टीकायां विषयाभिमान एव त्याजितः । न त्वितरः । पूर्वोत्तरग्रन्थपर्यालोचनायां तथा प्रतीतेः । फलबलेनैवं कल्पनेति ।

केचित्तु, सुप्तौ तृणादिज्ञानसामग्री यद्यपि टीकोक्तरीत्याऽस्ति । तथाऽपि सा सामग्री सुप्त्या प्रतिबद्धा कल्प्यते । मानसं हि ज्ञानं तत्र आपादनीयम् । मनस्तूपरतं तदेत्यप्रतिबद्धसामग्र्यभाव इत्याहुः । तन्न "न हि कारणसामग्री कार्यं व्यभिचरति" इत्यादिग्रन्थास्वारस्यात् । करणसामग्र्याः प्रतिबन्धादेव सुप्तौ तदापादनानुपपत्तेः । अभिमानस्य कारणकोटौ निवेशो वक्तव्य इति सिद्धान्तासिद्ध्यापाताच्चेति ।

**भाष्यम्**

**आत्मनश्च तैः विषयविषयिभावसम्बन्धादन्यः सम्बन्धो नास्ति ।**

*न०टी०*— मा भूत् संसारिणः स्वतः शुभाशुभविषयसम्बन्धः । देहनिमित्तस्त्वङ्गीक्रियत एव । तस्ताभ्यां सुखदुःखे स्यातामित्यत आह **आत्मनश्चेति** । **अन्यः** तादात्म्यादिरित्यर्थः ।

*प्र०दी०*— इतश्चाभिमान एवात्मन उपप्लव इत्याह— **आत्मनश्चेति** । अत्र तैरिति ज्ञान-सुखदुःखपरामर्शः । आत्मनो ज्ञानादिभिः सम्बन्धो नास्ति । तेषां मनोवृत्तित्वात् । तथा च अन्यगतधर्माः कथमन्यस्य विक्रियाहेतवो, विनाऽभिमानात् । प्रसिद्धं च स्वाभिमतगृहदाहो देवदत्तं दुःखाकरोतीति । ज्ञानादिभिरात्मनः सम्बन्धाभावे कथमुक्तं शीतोष्णाद्यनुभव आत्मन इत्यादीत्यत उक्तम्— **विषयेति** । मनोवृत्तिरूपाणि ज्ञानादीनि विषयभूतानि । आत्मा च विषयी । साक्षिचैतन्यस्य तद्विषयत्वात् । एतमेव सम्बन्धमभिप्रेत्यात्मनो ज्ञानमित्यादिव्यवहारः । उपलक्षणं चैतत् । ईश्वराधीनं स्वामित्वमपि ग्राह्यम् । तादात्म्यसमवायनिरासे तात्पर्यात् ।

*भा०दी०*— **विक्रियाहेतुरिति** । मूलपिण्डपरिमाणस्यैवोच्चत्वनीचत्वरूपविकारहेतुरित्यर्थः । **दुःखाकरोतीति** । दुःखात्प्रातिलोम्य इति अच्प्रत्ययः । चित्तं पीडयत्यर्थः । **उपलक्षणं चैत-दिति** । विषयविषयिसम्बन्धादित्येतदुपलक्षणम् । ईश्वराधीनस्व'स्वामित्वसम्बन्धादन्यो नास्तीत्यपि ग्राह्यमित्यर्थः । तथात्वे अन्यो नेत्युक्तिः । कथं भाष्य इत्यत आह **तादात्म्येति** ।

*भा०र०*— भाष्ये चशब्दः किञ्चेत्यर्थ इति भावेनाह **इतश्चेति** । **उपप्लवः** विक्रियाहेतुः । 'तैः' इत्यत्र न तावदभिमानपरामर्शः, आत्मना सह तस्य विषयविषयिभावानुपपत्तेः । बहुवचनायोगाच्च । नापि मात्रास्पर्शपरामर्शः । तैः सहात्मनो विषयविषयिभावानुपपत्तेरित्यत आह **अत्र तैरितीति** । शीतोष्णपदेन तत्साक्षात्कारलक्षणाभिप्रायेणोक्तं **ज्ञानेति** । **ज्ञानादिभिः** ज्ञानसुखदुःखैः । "एतत्सर्वं मन एव" इति श्रुतेराह **मनोवृत्तित्वादिति** । **अन्यगताः** मनोगताः । **अन्यस्य** आत्मनः । **विक्रिया** नीचोच्चतालक्षणा । सत्यप्यभिमाने कथमन्यधर्मोऽन्यं विकुर्यादित्यत उपपादयति **प्रसिद्धं चेति** । अभिमान एवाऽत्मन उपप्लव इति स्फोरणाय 'स्वाभिमत' इत्युक्तम् । अन्यदीयगृहदाहस्यातथात्वा-नुभवादिति भावः ।

**दुःखाकरोतीति** । "दुःखात् प्रातिलोम्ये" इति "दुःखपदस्य कृञा योगे डाच्प्रत्ययः । पीडयतीत्यर्थः । आत्मन इति षष्ठ्याऽनुभवस्यैवाऽत्मसम्बन्धित्वं प्रतीयत इति न मन्तव्यमिति भावेन आदीत्युक्तम् । "ततश्च सुखदुःखे" इति भाष्यमादिपदार्थः । **तद्विषयत्वादिति** । मनो-वृत्तिरूपज्ञानादिविषयकत्वादित्यर्थः । तथा च पद्धतौ "मनस्तद्वृत्तयः कालोऽव्याकृताकाशश्चेत्याद्याः साक्षिणो विषयाः" इति । उक्तं भाष्यविसंवादमुद्धरति **एतमेवेति** । विषयविषयिभावम् । **स्वामि-**

**त्वमिति** । स्वस्वामिभावसम्बन्धोऽपि । आत्मनोऽनुभव इत्यादिव्यवहारप्रयोजकत्वादिति भावः । एवं तर्हि कोऽयं व्यावर्त्यः सम्बन्ध इत्यत आह **तादात्म्येति** ।

**भाष्यम्**

**न च आगमापायित्वेऽपि प्रवाहरूपेणापि नित्यत्वमस्ति । सुप्तिप्रलयादावभावादित्याह— अनित्या इति ।**

***न०टी०***— यदैवं विषयसम्बन्धानामागमापायित्वमेवात्मनि तेषां तादात्म्यादिभावं वारयति, किं पुनरनित्यत्वम् ? इति भावेनोत्तरपदमवतारयति **न चागमापायित्वेऽपीति** ।

***प्र०दी०***— नन्वभिमानसहितानामेव मात्रास्पर्शानां ज्ञानादिहेतुत्वं, न केवलानामित्युपपादितमेतत् । ततोऽनित्या इति व्यर्थमिति चेन्न । आगमापायित्वस्यैव अनेन व्याख्यानात् । व्याख्यानेऽपि किं प्रयोजनमित्यत आह— **न चेति** ।

***प्र०दी०***— आगमापायिशब्दो द्वयोः प्रयुज्यते । यत् प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यम् । यथा गङ्गोदकम् । तदेकमागमापायीत्युच्यते । यस्य तु प्रवाहोऽपि विच्छिद्यते, यथा किंशुककुसुमं, तदपरमिति । तत्रागमापायिशब्दादुभयप्रतीतौ आगमापायित्वेऽपि, आगमापायिशब्दार्थत्वेऽपि यत् प्रवाहरूपेण नित्यत्वं तदत्र विवक्षितं नास्ति न भवति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वे तदसम्भवात् । प्रकृतानुपयोगाच्च । किन्तु द्वितीयमेव । सुप्त्यादावभावेन सम्भवादुक्तरीत्या प्रकृतोपयोगादित्येतदनित्या इत्यनेनाह भगवानित्यर्थः । प्रलयो मूर्च्छा । आदिपदेनासम्प्रज्ञातसमाधेर्ग्रहणम् । ननु अनित्यपदमप्यनेकार्थमेव । सत्यम् । तथापि पुनःप्रयत्नाद्यालोचनादेतत्सिद्धिः । एतदपि विशेषणोपसंक्रान्तं विशेषणम् । आगामिव्याख्यानमपेक्ष्य भाष्यकृताऽयमर्थः प्रागुपन्यस्त इति ज्ञेयम् । उक्तमर्थं पिण्डीकृत्योपसंहरति— **अत इति** ।

***भा०दी०***— **तदसम्भवादिति** । सुप्तिमूर्च्छादावभावेन प्रवाहतोऽनित्यत्वासम्भवात् । मात्रास्पर्शानां विषयानुभवद्वारा सुखदुःखदत्वस्य प्रवाहतो नित्यत्वेऽभिमानेन राहित्यदशायामपि तस्य सत्त्वेनाभिमानस्यान्वयव्यतिरेकाभ्यां तद्धेतुत्वोपपादनरूपप्रकृतप्रमेयानुपयोगाच्चेत्यर्थः । **उक्तरीत्येति** । यतो मात्रास्पर्शा इत्यादि भाष्योक्तदिशेत्यर्थः । प्रलये देहाद्यभावादेव ज्ञानसुखादि कार्याभावो नाभिमानाभावनिमित्त इत्यतस्तत्पदार्थमाह **प्रलयो मूर्च्छेति** । **अनेकार्थमिति** । व्यक्त्या नित्यप्रवाहानित्यादिरूपानेकार्थमेवेत्यर्थः । एवशब्देन नोक्तशङ्कानिरासकं तदिति सूचयति **पुनःप्रयत्नेति** ।

आगमापायिन इत्युक्त्वा पुनरनित्या इति पुनरनित्यपदप्रयोगरूप प्रयत्नाङ्गीकृतः तत्तात्पर्यालोचनादेतत् । प्रवाहतोऽनित्यत्वार्थकत्वं सिद्ध्यति । अन्यथा नित्यपदं गीताकारो न प्रयुञ्जीतेति भावः । **एतदपीति** । यथागमापायित्वविशेषणं सुखदुःखदत्वविशिष्टमात्रास्पर्शानां विशिष्टमात्रास्पर्शानां विशेषणभूतसुखदुःखदत्वविशेषणोपसङ्क्रान्तं तथा प्रवाहतो नित्यत्वरूपमनित्यपदोक्तं विशेषणं सुखदुःखदत्वरूपविशेषणोपसङ्क्रान्तिविशेषणं सुखदुःखदत्वं मात्रास्पर्शानां प्रवाहतो नित्यमित्येवंरूपेणेत्यर्थः । नन्वेवमागमापायिपदार्थोक्तिपरे अतो यत इत्यादिभाष्ये एवायमित्यर्थः । कथमुक्त इत्यत आह **आगामीति** ।

*भा०र०*— आत्मनो मनोवृत्तिरूपैर्ज्ञानादिभिर्न तादात्म्यम् । चेतनस्याचेतनज्ञानाद्यात्मकत्वायोगात् । नापि समवायः । तस्य स्वरूपत एवाप्रामाणिकत्वादित्येवं सम्बन्धद्वयस्य विक्रियाहेतुत्वेन पराभ्युपगतस्य निरासे नान्य इति भाष्यस्य तात्पर्यान्नोक्तविरोध इति भावः । **इत्युपपादितमेतदिति** । मात्रास्पर्शा एव केवलाः शीतोष्णसुखदुःखदा न हि । किं नाम ? अभिमानसहिता एवेति ''मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।'' इत्यर्धेनोक्ते शङ्कोन्मिषति विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः, येनाभिमानोऽप्यधिकः कारणसामग्र्यां निवेश्यत इति । सेयमागमापायिन इत्यनेन गीतायां परिहृता । तत्परिहारप्रकारश्च ''कुतः ? आगमापायित्वात्'' इत्यादिना ''अन्यः सम्बन्धो नास्ति'' इत्यन्तेन ग्रन्थेन भाष्यकृतोपपादितमित्यर्थः । **ततः** पूर्वविशेषणेन शङ्कायाः परिहृतत्वात् । **व्यक्तिरूपेण** प्रवाहित्वेन । 'आगमापायित्वेऽपि' इति भाष्यपदमनूद्यार्थमाह **आगमापायिशब्दार्थत्वेऽपीति** ।

नन्वागमापायिनामपि कालांशक्षणलवादीनां प्रवाहरूपेण नित्यत्वमस्तीति कथं नास्तीति भाषणमित्याशङ्क्योक्तं **तदत्र विवक्षितं न भवतीति** । न हि वयं प्रवाहेण नित्यं वस्तु नास्तीति ब्रूमः । येनोक्तदोषः । किन्तु शीतोष्णसाक्षात्कारजन्यसुखादेः प्रवाहरूपेण न नित्यत्वमभ्युपगन्तुं शक्यत इति वदाम इत्यर्थः । तत्कुत इत्यत आह **मात्रास्पर्शानामिति** । सुप्त्यादौ सुखदुःखप्रवाहविच्छेदेन प्रवाहनित्यत्वस्यासम्भवादित्यर्थः । **प्रकृतेति** । आगमापायिन इति विशेषणं हि प्रकृतस्य अभिमानोऽप्यन्वयव्यतिरेकाभ्यां करणसामग्र्यां निवेशनीय इति प्रमेयस्य समर्थनाय प्राप्तम् । तत्र यदि प्रवाहतो नित्यत्वं तच्छब्दार्थतयाऽभिमतं स्यात् तर्ह्युक्तप्रमेयेऽनुपयोगः स्यादित्यर्थः । मात्रास्पर्शानामेव विषयानुभवजननद्वारा सुखदुःखादिप्रदत्वस्य प्रवाहरूपेण नित्यत्वे सुप्तौ व्यभिचारोत्तययोगाद् अभिमानव्यतिरेके ज्ञानादिव्यतिरेक इत्यस्यानेनासमर्थनादिति भावः । द्वितीयं किंशुककुसुमानामिव प्रवाहविच्छेदरूपमागमापायित्वं विवक्षितमिति योज्यम् । **अभावेन** प्रवाहस्य ।

**उक्तरीत्या** "जाग्रदादावेव ते सन्ति नान्यदा" इत्यादिभाष्योक्तरीत्या । व्यक्तिरूपेण नित्यत्वं तु न कस्यापि सम्मतमिति भाष्ये 'प्रवाहरूपेणापि' इत्यपिशब्दः । अभिमानेन विना कृतानां मात्रा-स्पर्शानां ज्ञानादिहेतुत्वं न भवति । प्रलये व्यभिचारादिति भाष्याभिप्रेतमयुक्तम् । महाप्रलये मात्रास्पर्शानामेवाभावादित्यतो व्याचष्टे **प्रलयो मूर्छेति** ।

**असम्प्रज्ञातेति** । न विद्यते सम्प्रज्ञातं सम्प्रज्ञानं बाह्यार्थज्ञानं यस्मिन् सोऽयमसम्प्रज्ञातः समाधिः । आगमापायिशब्दादुभयप्रतीतावेकतरनिर्धारणायानित्यपदं व्याख्यानरूपमित्युक्तम् । अनित्यपदस्यापि गङ्गोदके किंशुककुसुमे च प्रयोगदर्शनेनान्यतरनिर्धारणानुपपत्तिरिति शङ्कते **नन्वनित्येति** ॥ **पुनः प्रयत्नादीति** । आगमापायिशब्देन अनित्यत्वे सिद्धेऽपि यत् पुनरनित्या इत्यनित्यपदं गीताकृत् प्रयुङ्क्ते तेनानित्या एव, न केनापि रूपेण नित्या इति नियमेनानित्यत्वं विज्ञायते । सिद्धे सत्यारम्भो नियमार्थ इति न्यायात् । तेन प्रवाहतोऽप्यनित्यत्वसिद्धिः । प्रयत्ना-दीत्यादिपदेनानित्यपदव्युत्पत्तिपरिग्रहः । नित्यपदं तावत् "त्यब्नेर्ध्रुवे" इति ध्रुवार्थम् । अनित्यपदं च ध्रुवभिन्नार्थकम् । न च यथाकथञ्चिद् ध्रुवभिन्नत्वं विवक्षितुं युक्तम् । ध्रुवस्यापि तत्त्वसम्भवात् । ततः सर्वथाऽपि ध्रुवभिन्नत्वे वाच्ये सर्वप्रकारेणानित्यत्वसिद्धिः । यद्वा, आदिपदेन प्रकृतोपयोग-परिग्रहः । तथा च प्रकृतोपयोगपर्यालोचनया च विवक्षितार्थसिद्धिरिति व्याख्येयम् । एवं रूपेणोप-पत्त्यनुसन्धानेन विनाऽभिप्रेतार्थो न लभ्यत इत्यत 'आलोचनात्' इत्युक्तम् । नन्वत्र यत् प्रवाह-तोऽपि विच्छेदवत् तदेवानित्यशब्दार्थतया विवक्षितम् । न चैतद् युक्तम् । सुप्तावपि स्पर्श-त्वगिन्द्रियसम्बन्धस्यावर्जनीयतया प्रवाहविच्छेदाभावेन मात्रास्पर्शानामनेन विशेषणासम्भवात् । "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति वचनादित्यत आह **एतदपीति** । "सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः" इति न्यायात् । शीतोष्णसुखदुःखदत्वविशिष्टानां मात्रास्पर्शाना-मिदं विशेषणं भवच्छीतोष्णसुखदुःखदत्वमुपसङ्क्रामतीति मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यत् तदनित्यमिति मात्रास्पर्शविशेषणोपसङ्क्रान्तितात्पर्यकमनित्या इति विशेषणमित्यर्थः । न केवल-मागमापायिन इति विशेषणमित्यपिशब्दः । तथा च सुप्त्यादावपि सुखदुःखप्रवाहविच्छेदानुभवा-दनित्या इति विशेषणं सम्भवतीति भावः ।

ननु तर्हि अनित्यशब्दस्य प्रवाहविच्छेदवदर्थकत्वे "अतो यतः" इत्यादिभाष्येण सुप्त्यादौ प्रवाहविच्छेदार्थकतया आगमापायिशब्दः कथं व्याख्यात इत्यत आह **आगामीति** । अनित्यपदेन करिष्यमाणमागमापायिशब्दव्याख्यानमित्यर्थः ।

**भाष्यम्**

**अतश्चात्मनो देहाद्यात्मभ्रम एव सुखदुःखकारणम् । अतस्तद्विमुक्तस्य बन्धुमरणादिदुःखं न भवति । अतोऽभिमानं परित्यज्य तान् शीतोष्णादीन् तितिक्षस्व ॥ १४ ॥**

***प०टी०***— 'मयि शीतम्' इति साक्षादात्मनि शीतादिसन्निकर्षदर्शनात् कथं दुःखादेरभिमाननिमित्तत्वमित्यत आह **आत्मनश्चेति** । **अन्यः** साक्षात्सम्बन्धः । मात्रास्पर्शानामागमापायित्वमेव दुःखादेरस्वाभाविकतां साधयति । किं पुनरनित्यत्वमित्याशयेनाह **न चेति** । फलितमाह **अत इति** । उक्तस्य प्रकृतोपयोगमाह **अत इति** ॥ १४ ॥

***न०टी०***— यत एव देहदैहिकयोरेव शुभाशुभविषयसम्बन्धो नात्मनः । अतस्तत्रात्मीयत्वाभिमान एव सुखदुःखकारणमित्याह **अत आत्मन इति** । भ्रमशब्दोऽत्राभिमानपरो वर्णनीयः । तथा च वक्ष्यति 'अतोऽभिमानं परित्यज्य' इति । यतः देहगेहबन्ध्वादावात्मीयत्वाभिमान एव तद्वृद्धिह्रासादिना सुखदुःखकारणम् । अतस्तेष्वहं ममेत्यभिमानहीनस्यैते सुखदुखे न भवत इत्याह **अतस्तद्विमुक्तस्येति** । यत एवं देहादावात्मीयत्वाभिमान एव सुखदुःखादिकारणम्, यतश्च तद्विमुक्तस्यैते सुखदुःखे न स्याताम्, अतस्तत्रात्मीयत्वाभिमानं परित्यज्य तान् देहादिगतशीतोष्णादीन् सहस्वेत्याह **अतोऽभिमानमिति** ॥ १४ ॥

***प्र०दी०***— उक्तप्रकारेण देहादावात्मनो ममैवैतत् इत्यादिभ्रम एव । भ्रमसहिता एव मात्रास्पर्शा इत्यर्थः । ततः किमित्यतः चतुर्थपादं व्याख्यातुमुपोद्घातमाह— **अत इति** । तद्विमुक्तस्य भ्रमविमुक्तस्य । बन्धुमरणादिदुःखं यत्प्राक् शङ्कितम् । न हि सामग्रीकार्यमेकदेशेन भवतीति भावः । ततः किमित्यतः चतुर्थपादं व्याख्याति— **अत इति** । तितिक्षस्व विफलीकुर्विति भावः । ननु तानिति मात्रास्पर्शानां परामर्शो युक्तः । तत् कथं 'शीतोष्णादीन्' इत्युक्तम् । मैवम् । शीतोष्णादिहेतूनां मात्रास्पर्शानामेव तच्छब्देनोपलक्षणात् ॥ १४ ॥

***भा०दी०***— **न हि सामग्रीकार्यमिति** । अभिमानसहितमात्रास्पर्शं कार्यम् । सुखादिमात्रास्पर्शरूपैकदेशेन भवतीत्यर्थः । **शीतोष्ण्यादीति** । शीतोष्ण्यादिहेतूनां शीतोष्ण्याद्यनुभवद्वारा सुखदुःखहेतूनां मात्रास्पर्शानां विषयसम्बन्धानामित्यर्थः ॥ १४ ॥

***भा०र०***— **उक्तमर्थं** त्रिपाद्योक्तमर्थम् । **पिण्डीकृत्य** सङ्गृह्य । पिण्डीकरणं च बुद्ध्यारोहायेति भावः । देहादावित्यत्र आदिशब्देनेन्द्रियान्तःकरणयोर्विषयाणां च ग्रहणम् । ममैत इत्यादीत्यादिपदेन

विषयेषु शोभनत्वारित्वादिग्रहः । तत्र शरीरेन्द्रियान्तःकरणेष्वात्मनो ममैतदिति भ्रमः । विषयेषु शोभनत्वादिभ्रमनिमित्तस्नेहद्वेषौ भ्रमशब्दार्थ इति विवेक्तव्यम् । अनेन देहाद्यात्मभ्रम इत्यत्र देहादावात्मीयत्वभ्रम इत्यर्थ उक्तो भवति । तथा च प्राचीनटीका "देहादावात्मीयत्वेऽभिमान एव" इति । देहात्मैक्यभ्रमस्तु स्वरूपत एवान्यत्र निरस्तः ।

नन्वभिमान एव यदि सुखदुःखादिकारणं तर्हि मात्रास्पर्शाभावेऽपि सुखादिकं स्यात् । किञ्चाभिमानसहिता एव विषयसम्बन्धाः सुखादिहेतव इति गतः पक्ष इत्यत आह **भ्रमसहिता एवेति** । अत्र "भ्रमशब्दोऽभिमानपरो वर्णनीयः" इति प्राचीनटीका ।

अव्यवहितत्वादपि फलत्वेन प्राधान्यात् सुखदुःखपरामर्शे प्रकृतासामञ्जस्यमित्यतस्तच्छब्दार्थमाह **भ्रमेति** । अप्रसक्तत्वे प्रतिषेधोऽनुपपन्न इत्यत उक्तं **यत् प्राक् शङ्कितमिति** । "तथाऽपि तद्दर्शनाभावादिना शोकः" इति भाष्ये प्रसक्तमित्यर्थः । विमुक्ताभिमानस्यापि मात्रास्पर्शसम्भवेन तैर्दुःखं स्यादेवेत्यत आह **न हीति** । अभिमानसहितमात्रास्पर्शकार्यं दुःखादि मात्रास्पर्शरूपैकदेशेन भवतीत्येतन्मानबाह्यमित्यर्थः । **विफलान्** शीतोष्णसुखदुःखलक्षणविकाराहेतून् । अभिमानत्यागे विद्यमाना अपि मात्रास्पर्शा न विकारहेतव इति प्रसिद्धं च स्वाभिमतगृहदाहो देवदत्तं दुःखाकरोतीति प्रागेवोपपादितमिति भावः । **युक्त इति** । शीतादीनां प्रातिपदिकैकदेशार्थत्वेनाप्रधानत्वाद् विशेषणद्वयेन तेषामेवानुसन्धानेन प्राधान्याच्चेति भावः । तच्छब्देन शीतोष्णादीनितिशब्देनोपलक्षणात् । भाष्ये लक्षणाबीजं शक्यसम्बन्धं दर्शयितुमुक्तम् **शीतोष्णादिहेतूनामिति** । शीतोष्णाद्यनुभवद्वारा सुखादिहेतूनामित्यर्थः ।

नन्वत्र शीतोष्णशब्दाभ्यां सर्वविषयोपलक्षकाभ्यां तत्साक्षात्कारो लक्ष्यते । आदिशब्दो हेत्वर्थः । एवं च शीतोष्णादिसाक्षात्कारहेतुभूतान् मात्रास्पर्शान् तितिक्षस्व विफलीकुर्विति भाष्यव्याख्यानं किमिति टीकायां न कृतमिति चेत्, उच्यते । तानित्येतच्छीतोष्णादीनिति व्याख्यायत इति प्रतीतिस्तावत् स्वरसप्राप्ता । तत्र आदिशब्दस्य हेत्वर्थत्वमस्वरसम् ।

किञ्च "तांस्तितिक्षस्व" इत्येतावतैव पूर्तौ "शीतोष्णादीन्" इति भाषणमप्रयोजनम् । अपि च व्याख्येयव्याख्यानभावाविवक्षायां शीतोष्णादींस्तांस्तितिक्षस्वेत्येव भाषणं स्यान्न तु यथान्यासम् । न च आदिशब्दस्य मुख्यवृत्तिर्गुणः । बहुदोषसन्निपाते एकस्य गुणस्यास्वरसप्रतीतस्य त्याज्यत्वात् । लक्षणायां प्रयोजनं च मात्रास्पर्शापादितशीतोष्णसुखदुःखलक्षणवैषम्यहीनो भवेदिति ज्ञापनमिति ॥ १४ ॥

***गीताक्षरार्थस्तु***— यद्यपि बान्धवादीनां हानिर्भविष्यतीति धिया शोको न युक्तः । उक्तविधयाऽऽत्महानेरभावात् । देहहानावपि प्रतिनिधिलाभात् । तथाऽपि तन्मरणे ममैव सुखहानिर्दुःखावाप्तिश्च भविष्यतीति धिया शोकः समुत्पतितः । कथम् ? प्रेमास्पदानां हि दर्शनस्पर्शनालापादिकं सुखहेतुः । तेषु मृतेषु तद्देहदर्शनाद्यभावात् सुखहानिः । तथा तेषां छेदभेदादिदर्शनेन दुःखावाप्तिश्च इत्यत उच्यते **मात्रास्पर्शा इति** । मीयन्त इति मात्राः विषयाः । तेषां स्पर्शाः सम्बन्धाः । तुशब्द एवार्थे । "शीतोष्णसुखदुःखदाः" इत्यत्र शीतोष्णशब्दौ शीतस्पर्शोष्णस्पर्शशब्दितविषयविशेषवाचिनौ गन्धरसरूपस्पर्शशब्दलक्षणसकलविषयोपलक्षकौ । विषयोक्त्या च तत्साक्षात्कारो लक्ष्यत इति तत्र लक्षितलक्षणा । तुशब्दात् परा काकुश्चात्राभिसंहिता । गन्धरसरूपस्पर्शशब्दाख्यविषयाणां घ्राणरसनचक्षुस्त्वक्छ्रोत्ररूपैरिन्द्रियैर्ये सन्निकर्षास्ते शीतोष्णसुखदुःखदाः उक्तसर्वविषयसाक्षात्कारजन्यसुखदुःखप्रदाः । तत्रेष्टविषयसाक्षात्कारात् सुखं भवति । अनिष्टविषयसाक्षात्काराद् दुःखं भवति । तुशब्दात् परया च काक्काऽभिमानसाहित्यं मात्रास्पर्शानां लभ्यते । अनेन मात्रास्पर्शा एव केवलाः किं शीतोष्णसुखदुःखदाः ? न हि । किं नाम ? अभिमानसहिताः, इत्युक्तं भवति । अभिमानो नामात्र "विषयेषु शोभनाध्यासनिमित्तः स्नेहः अरत्वादिभ्रमनिमित्तो द्वेषश्च । शरीरेन्द्रियान्तःकरणेषु ममतातिशयहेतुकोऽविवेक इत्यादिः" इति टीकातोऽवसेयः । विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः ? येनाभिमानोऽप्यधिकः कारणसामग्र्यां निवेश्यत इत्यत उक्तम् **आगमापायिन इति** । यत इत्यध्याहारः । प्रयोजनान्तराभावाद् हेत्वर्थगर्भं वा विशेषणम् । "सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः" इति न्यायात् शीतोष्णसुखदुःखदत्वविशिष्टानां मात्रास्पर्शानामागमापायित्वं विशेषणं भवच्छीतोष्णसुखदुःखत्वमुपसङ्क्रामति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यत् तदागमापायीत्याशयः ।

इदमुक्तं भवति । यदि मात्रास्पर्शा अभिमानमनपेक्ष्य आत्मनः सुखदुःखदाः स्युः, तर्हि सुप्तिमूर्च्छासम्प्रज्ञातसमाधिष्वपि स्युः । न हि कारणसामग्री कार्यं व्यभिचरति । न च वाच्यं सुप्त्यादौ विषयेन्द्रियसम्बन्ध एव नास्तीति । स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयत्वात् । अत एव शीतोष्णग्रहणं कृतम् । एतेनेन्द्रियमनःसन्निकर्षाभावोऽपि प्रसक्तः । न च आत्ममनःसन्निकर्षाभावः । मनसः कदाऽप्यात्मवियोगाभावस्य "यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा" इत्यागमसिद्धत्वात् । अतो मात्रास्पर्शाः नाऽत्मनः स्वयमेव केवलाः शीतोष्णसुखदुःखदा भवन्ति, किन्त्वभिमानसहिता एव । जाग्रत्स्वप्नयोरभिमानवतोरेव मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वानुभवाद् अभिमानरहिते सुप्त्यादौ तदननुभवादिति मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वस्याभिमानान्वयव्यतिरेकानुविधायित्वादभिमानोऽपि कारणसामग्र्यां निवेशनीयः ।

नन्वभिमानहीनेऽपि ज्ञानोत्पत्तिस्तृणादौ दृश्यते । सत्यम् । सुखदुःखदं ज्ञानमत्राधिकृतमित्यदोष इति । नन्वभिमानसहितानामेव मात्रास्पर्शानां ज्ञानादिहेतुत्वं न केवलानामित्युपपादितमेतत् । ततोऽनित्या इति व्यर्थमिति चेन्न । आगमापायित्वस्यैवानेन व्याख्यानात् । व्याख्यानेऽपि किं प्रयोजनमिति चेदुच्यते । आगमापायिशब्दो द्वयोः प्रयुज्यते । यत् प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यं, यथा गङ्गोदकम् । तदेकमागमापायीत्युच्यते । यस्य तु प्रवाहोऽपि विच्छिद्यते, यथा किंशुककुसुमानाम् । तदपरमिति । तत्राऽगमापायिशब्दादुभयप्रतीतौ यत् प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यं तदत्र विवक्षितं न भवति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वे तदसम्भवात् प्रकृतानुपयोगाच्च । किन्तु द्वितीयमेव । सुप्त्यादावभावेन सम्भवात् । उक्तरीत्या प्रकृतोपयोगादित्येतदनित्या इत्यनेनाह **भगवानिति** । अतोऽभिमानं परित्यज्य तान् मात्रास्पर्शान् तितिक्षस्व । सामग्रीकार्यस्यैकदेशेनासम्भवाद् विफलान् कुर्विति तात्पर्यमिति ॥ १४ ॥

### गीतातात्पर्यनिर्णयः

**तददर्शनादिनिमित्तं सोढव्यमित्याह मात्रास्पर्शा इति । विषयसम्बन्धाः ॥ ॥ १४ ॥**

***न्या०दी०—*** कौमारादिहानेन यौवनादिप्राप्तावप्यशोको युज्यते । तस्यैव पुनर्दर्शनादिसम्भवात् । देहान्तरप्राप्तौ तद्दर्शनाद्यसम्भवाच्छोक इत्याशङ्कापरिहाराय श्लोकमवतारयति **तदिति** ॥ दुःखमिति शेषः । **सोढव्यमिति** ॥ अनभिमानेन परिहर्तव्यमित्यर्थः । मात्रास्पर्शा इत्येतच्छब्दश्रवणेन भिन्नपदत्वशङ्कापरिहाराय व्याचष्टे **विषयेति** ॥ १४ ॥

### गीता

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥**

*वि०वि०—* ननु दुःखाभावस्य युद्धाकरणेऽपि सम्भवादलं तत्कृत्वा दुःखाभावायाभिमानत्यागेनेत्यतो देहाद्यभिमानत्यागेन भवन् दुःखपरिहारः स्वयं फलरूपोऽपि परमपुरुषार्थहेतुश्च भवतीत्याह **यं हि इति** । यमेते मात्रास्पर्शा न व्यथयन्ति न चालयन्ति सुखदुःखलक्षणवैषम्यवन्तं न कुर्वन्ति । सोऽमृतत्वाय मोक्षाय कल्पते योग्यो भवतीत्यर्थः । सुप्त्यादौ पामराणामप्यभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरित्यत उक्तम् **पुरुषमिति** । पुरुषमेव सन्तं शरीराभिमानिनमित्यर्थः ।

अथवा, कथं व्यथापरिहारमात्रेणामृतत्वं "तमेवं विद्वान्" इत्यादिश्रुतिविरोधादित्यतो न केवलं व्यथापरिहारमात्रेणामृतत्वम् अपि तु ब्रह्मज्ञानेनापीत्याशयेनाह **पुरुषमिति** । पुरुसरणात् पुरुषम् । 'पुरु ब्रह्म गुणाधिक्यात् तज्ज्ञानात् पुरुषः स्मृत' इतिवचनात् । केनोपायेनाभिमानत्यागो भवतीत्यत उक्तं **समदुःखसुखमिति** । दुःखं यथानुपादेयमपुरुषार्थत्वात् तथा वैषयिकं सुखममृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः । एवंभावे कथं सुखहेतुषु शोभनाध्यासलक्षणस्तद्विरोधिषु द्वेषलक्षणाभिमानः स्यादिति भावः । समदुःखसुखत्वं च कथं भवति इत्यत उक्तं **धीरमिति** । सुखदुःखकार्यहर्षविषादस्तंभकप्रयत्नवन्तमित्यर्थः । अत्र चतुर्मुखादन्येषां धैर्येणातिव्यथाराहित्यमेव । लिङ्गभङ्गात् प्राग्देहाद्यभिमानराहित्याभावात् । उक्तं च—

'ब्रह्मा निरभिमानित्वाच्छरीर्यप्यशरीरवान् ।
रुद्राद्यास्तन्वभीमानाद्बहिरर्थयुजस्तथा ॥' इति ॥ १५ ॥

***वा०ल०***— 'यं हि न व्यथयन्त्येते' इत्यत्र एते मात्रास्पर्शाः ॥ १५ ॥

***सा०सं०***— ननु दुःखाभावस्य युद्धाकरणेऽपि सम्भवात्, किं तत्कृत्वा दुःखाभावायाभिमानत्यागेनेत्याशङ्क्य देहाद्यभिमानत्यागेन भवन् दुःखाभावः स्वयं फलरूपोऽपि परमपुमर्थहेतुश्च भवतीत्याह **यं हीति** । हे **पुरुषर्षभ** पुरुषश्रेष्ठ पार्थ । **एते** मात्रास्पर्शाः विषयेन्द्रियसन्निकर्षाः **पुरुषं** पुरं देहं सरति गच्छति, 'सृ गतौ', प्रत्यक्षतो जानाति । उपपदान्तस्योकारः । सरतेर्डप्रत्ययः । षत्वम् । शरीरदर्शनवन्तम् । यद्वा- पुरु पूर्णं ब्रह्म । तत् सरत्यवगच्छतीति ब्रह्मज्ञानी, तम् । **धीरं** सुखे दुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तम्भकप्रयत्नवन्तम् । अत एव **समदुःखसुखम्** । अनुपादेयत्वेन धर्मेण दुःखेन समं सुखं यस्य स तथा, तम् । दुःखं यथाऽपुमर्थत्वहेतुनाऽनुपादेयं तथा वैषयिकं सुखमपि अमृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः । दुःखसमसुखमिति यावत् । अत एव यम् अभिमानहीनं जीवं स्त्रीजनं पुञ्जनं वा **न व्यथयन्ति** न चालयन्ति सुखदुःखकृतोच्चत्वनीचत्वलक्षणविकारं न प्रापयन्ति । **सोऽ**धिकारी **अमृतत्वाय** मुक्तये **कल्पते** समर्थो भवति ।

अत्र 'धीरम्' इति समदुःखसुखत्वे हेतुः । तच्चाभिमानत्यागे हेतुः । समदुःखसुखो जीवः सुखहेतुषु शोभनाध्यासलक्षणाभिमानवांस्तद्विरोधिषु द्वेषरूपाभिमानवांश्च कथं भवेदिति । सुप्त्यादौ पामराणामपि अभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरिति शङ्काव्यावृत्तये पुरुषं शरीरदर्शनवन्तम् इत्युक्तम् । तथा व्यथाभावमात्रेण कथममृतत्वम्, 'तमेवं विद्वान्' (तै.आ.आ. ३-१२-७) इत्यादि

श्रुतिविरोधादित्यपि शङ्कापनुत्तये पुरुषं ब्रह्मज्ञानिनमित्युक्तम् । "पुरु ब्रह्म गुणाधिक्यात् तज्ज्ञानात् पुरुषः स्मृतः" इत्युक्तेः ।

अत्र **नरहरितीर्थीये** "ब्रह्मा निरभिमानित्वात्" इति स्मृतिमुदाहृत्य चतुर्मुखादन्येषाम् अतिव्यथाराहित्यमेव लिङ्गभङ्गात् प्राग्देहाद्यभिमानभावादित्युक्तम् ॥ १५ ॥

***अ०प्र०***— तत्प्रतीकारकरणप्रयत्नादपि तत्सहनमेव उचितं महाफलत्वात् इत्याह **यं हीति**।

हे पुरुषर्षभ[१], एते[२], समदुःखसुखम्[३], अत एव धीरं[४], यं पुरुषं[६], न[७], व्यथयन्ति[८], सः[९], हीति निश्चयेन[१०], अमृतत्वाय[११], कल्पते[१२] इत्यन्वयः ।

हे पुरुषर्षभ ! एते = मात्रास्पर्शाः[२], समदुःखसुखं = समे दुःखसुखे यस्य तं[३], अत एव धीरं = दुःखसुखकार्ययोः स्तम्भकप्रयत्नवन्तम्[४], यं = त्यक्ताभिमानिनम्[५], पुरुषं = पुरि शेत इति पुरुषः, यद्वा पुरु ब्रह्म सरति जानातीति पुरुषः तं पुरुषं[६], न व्यथयन्ति न चालयन्ति यद्वा नाभिभवन्ति[७], दुःखसुखलक्षणवैषम्यवन्तं न कुर्वन्तीत्यर्थः, सः पुरुषः तैः दुःखसुखैरविक्षिप्यमानभक्तिधर्मज्ञानद्वारा, हीति निश्चयेन[१०], अमृतत्वाय = मोक्षाय[११], कल्पते = समर्थो भवति योग्यो भवतीत्यर्थः[१२] ॥ १५॥

**भाष्यम्**

**अतः प्रयोजनमाह— यं हीति । यमेते मात्रास्पर्शा न व्यथयन्ति । पुरिशयमेव सन्तम् । शरीरसम्बन्धाभावे सर्वेषामपि व्यथाभावात् पुरुषमिति विशेषणम् । कथं न व्यथयन्ति ? समदुःखसुखत्वात् । तत्कथम् ? धैर्येण । ॥ १५ ॥**

***प०टी०***— न केवलं मात्रास्पर्शसहनादैहिकदुःखाभावः फलम्, किन्तु मोक्ष एवेत्युत्तरश्लोकमवतार्य व्याचष्टे **अत इति** । 'पुरुष' पदं न स्त्रीव्यावर्तकमित्याह **पुरुषमिति** । 'पुरुष' शब्दार्थस्य प्रकृतोपयोगं दर्शयति **शरीरेति** ॥ १५ ॥

***न०टी०***— एवं तावद्देहादावहङ्कारादिपरित्यागेन तदन्तशीतोष्णादिसहनात् तन्निमित्तदुःखाभावस्तात्कालिकः प्रयोजनमित्युक्तम् । अधुनैवंविधो दुःखाभावो न प्रयोजनमन्ततः । अपि तु साधयति च महत्फलं कैवल्याख्यमिति भावेनोत्तरं श्लोकमवतार्य व्याचष्टे **अतः प्रयोजनमित्यादिना** ॥

अतः अस्मादुःखाभावादित्यवगन्तव्यम् । 'यं न व्यथयन्ति सोऽमृतत्वाय' इत्यन्वयात् । ननु तन्वाभिमानाभावेनादुःखित्वं कथम् ? विरिञ्चेतरेषां तन्वभिमानस्यापि भावात् । तथाहि शक्तिविवेके—

'ब्रह्मा निरभिमानत्वात् शरीर्यप्यशरीरवान् ।
रुद्राद्यास्तन्वाभिमानात् बहिरर्थयुजः तथा ॥'

इत्यभिप्रायेण पृच्छति **कथमिति** । अस्त्वितरेषाम् ईषत्तन्वाभिमानात् दुःखित्वम् । तथाऽप्यतिव्यथाभावः समदुःखसुखानामिति भावेनावान्तरपदमवतारयति **समदुःखसुखत्वादिति** । नन्वनुकूलप्रतिकूलयोः सुखदुःखयोः कथं पुंसः समत्वम् ? इत्याशङ्क्य, तदुत्तरत्वेनोत्तरपदमवतारयति **तदित्यादिना** ॥ १५ ॥

*प्र०दी०*— अतो मात्रास्पर्शानां विफलीकरणतः, भवत्प्रयोजनमाह **अत इति** । दुःखाभावस्य युद्धाकरणेनैव सम्भवात् किं (कृत्वा) तत् कृत्वा प्रसक्तदुःखाभावायाभिमानत्यागेन इत्येतदाशङ्का-परिहारायेति शेषः । पूर्वश्लोके तितिक्षस्वेति पदं सहस्वेति कैश्चित् व्याख्यातम् । तदसत् । तदनुवादेऽत्र विफलीकरणस्यैव प्रतीतेरिति भावेनाद्यपादं व्याख्याति— **यमिति** । न व्यथयन्ति न चालयन्ति । न शीतोष्णसुखदुःखलक्षणवैषम्यवन्तं कुर्वन्तीत्यर्थः । स्त्रीणामप्येवंविधानां मैत्रेयीप्रमुखानाममृतत्व-श्रवणात् पुरुषमिति विशेषणमयुक्तमित्यतोऽन्यथा व्याचष्टे— **पुरीति** । शरीरसम्बन्धिनमेव सन्तम् । शरीरदर्शनवन्तमित्यर्थः । एतदपि किमर्थं विशेषणमित्यत आह— **शरीरेति** । सुप्त्यादौ सर्वेषां प्राकृतानामप्यभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरित्याशङ्कानिवृत्त्यर्थमित्यर्थः । ननु यस्य देहा-दावभिमानो नास्ति तस्य दुःखं सुखं च नास्तीत्युक्तम् । तस्य कथं 'समदुःखसुखं' 'धीरं' इति विशेषणद्वयम् । अस्य पूर्वकक्ष्यागतत्वादित्याशङ्क्य तदुपायप्रदर्शनार्थं पूर्वावस्थानुवादोऽयमिति क्रमेण पृच्छापूर्वकमाशयमाह— **कथमिति** । येनाभिमान-त्यागेन मात्रास्पर्शा न व्यथयन्ति स कथम् । केनोपायेन भवतीत्यर्थः । दुःखं यथाऽनुपादेयमपुरुषार्थत्वात्, तथा वैषयिकं सुखमप्यमृतत्वविरोधित्वा-दनुपादेयं यस्य स समदुःखसुखः । एवं भावे च कथं सुखहेतुषु शोभनाध्यासलक्षणः तद्विरोधिषु द्वेषलक्षणोऽभिमानः स्यादिति भावः । तत् समदुःखसुखत्वमेव । कथं केनोपायेन भवतीत्यर्थः । **धैर्येणेति** । सुखे दुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तम्भकेन प्रयत्नेनेत्यर्थः ॥ १५ ॥

*भा०दी०*— **एवंविधानामिति** । अभिमानहीनानामित्यर्थः । श्रवणाद् बृहदारण्यक इति भावः । **पूर्वकक्ष्येति** । अभिमानत्यागात्पूर्वकक्ष्यास्थत्वसमदुःखसुखत्वादेस्तदुत्तरकालं सुखादेरभाव इति पूर्वार्ध एवोक्तेनेदं विशेषणद्वयमभिमानत्यागिनो युक्तमित्याशङ्केत्यर्थः ॥ १५ ॥

*भा०र०*— उपसंहारत्वभ्रमनिरासाय भाष्यस्थातःपदमनूद्य तदर्थं वदन् प्रयोजनमित्यत्राध्याहार्यमाह **अतो मात्रास्पर्शानां विफलीकरणतो भवदिति**। 'आह' इति भाष्यपदमनूद्यातःपरं वाक्यमध्याहरति **आह दुःखाभावस्येत्यादि**। क्वचिदाहेत्यनन्तरमत इतीति पाठः। तत्राऽहेत्यनन्तरम् इत्याहेति शेषः। किं **तत् कृत्वा** युद्धं कृत्वा ? ''प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्'' इति न्यायादिति भावः। **अनुवाद इति**। यच्छब्दयोगादिति भावः। **अत्र** प्रथमपादे। ननु पूर्वश्लोके अभिमानत्यागे विषयसम्बन्धाः विषयानुभवद्वारा दुःखादिहेतवो न भवन्तीत्युक्तम्। अत्र पादे व्यथाशब्दितदुःखमात्राहेतुत्वं प्रतीयते। तत् कथमयं तस्यानुवाद इत्याशङ्क्याऽह **न चालयन्तीति**। नान्यथयन्तीत्यर्थः। एवमपि प्रकृतोपयोगाय तत्तात्पर्यमाह **न शीतोष्णेति**। गीताभाष्ययोः व्यथधातुर्विषयानुभवद्वारकसुखदुःखादिवैषम्यपर इत्युक्तानुवादत्वमुपपन्नमिति भावः। **एवंविधानां** मात्रास्पर्शकृतचलनहीनानां समदुःखसुखानां धीराणां चेत्यर्थः। **श्रवणात्** बृहदारण्यके। विशेषणं पुरुषशब्देन यच्छब्दार्थस्याधिकारिणः स्त्र्यादिभ्यो व्यावर्तनम्। **अन्यथा** पुरुषत्वरूपधर्मोपस्थापनमन्तरा देहसम्बन्धित्वप्रकारेण। तथा चात्र स्त्रीणामपि ग्रहणे न दोष इति भावः। सुप्त्यादौ शरीरसम्बन्धे सत्यपि व्यथाऽप्रसक्तेर्निषेधायोग इत्यत आह **शरीरदर्शनवन्तमिति**।

भाष्ये शरीरसम्बन्धशब्देन तत्कार्यबाह्यज्ञानं लक्षयित्वा तस्याभावः शरीरिणोऽवस्थाविशेष एव विवक्षित इति भावेनाऽह **सुप्त्यादाविति**। सुप्तिमूर्च्छाऽसम्प्रज्ञातसमाधिष्वित्यर्थः। अमृतत्वप्रसक्तिरित्याद्येव शेषोक्तिः। प्रथमपादं तात्पर्यतोऽनुवदन्नुत्तरभाष्यमवतारयितुं शङ्कते **ननु यस्येति**। देहादौ देहेन्द्रियान्तःकरणविषयेषु। 'इत्युक्तम्' इत्यनन्तरं तथा सतीति शेषः। **तस्य** अभिमानत्यागवतः। **अस्य** समदुःखसुखत्वस्य। अभिमानत्यागहेतुत्वेन पूर्वकक्ष्यागतत्वाद् अभिमानत्यागपूर्वभावित्वात्। धैर्यस्य च समदुःखसुखत्वं प्रति पूर्वभावित्वात्। **तदुपायप्रदर्शनार्थम्** अभिमानत्यागोपायप्रदर्शनार्थं समदुःखसुखत्वोपायप्रदर्शनार्थं च। **पूर्वावस्थानुवाद इति**। अभिमानं त्यक्ष्यतो धीरता समदुःखसुखता चावश्यम्भाविनीति अभिमानत्यागपूर्वभाविसाधनानुवाद इत्यर्थः। यावद् दुःखं तावत् सुखं यस्य सोऽयं समदुःखसुखस्तत्त्वादित्यन्यथाप्रतीतिनिरासाय कृतपृच्छापरिहाराय च भाष्यभावमाह **दुःखं यथाऽनुपादेयमिति**। दुःखहेतुषु सुखाभावहेतुषु, तदुभयव्याप्यहेतुषु चानुगतद्वेष्यतावच्छेदकसम्पादनाय दुःखहेतुष्वित्यनुक्त्वा 'तद्विरोधिषु' इत्युक्तम्। ''तत् कथम्'' इति भाष्ये तत्पदमनूद्य तदर्थमाह **तत् समदुःखसुखत्वमेवेति**। **उत्सेकविषादयोः** उच्चत्वनीचत्वयोः॥ १५॥

*गीताक्षरार्थस्तु*— दुःखाभावस्य युद्धाकरणेनैव सम्भवात् किं तत् कृत्वा प्रसक्तदुःखाभावाय अभिमानत्यागेनेत्येतदाशङ्कापरिहाराय मात्रास्पर्शानां विफलीकरणतो भवत् प्रयोजनमुच्यते

**यं हीति** ॥ एते मात्रास्पर्शाः पुरुषं पुरिशयमेव सन्तं शरीरदर्शनवन्तं शरीराभिमानिनमिति यावत् । एतच्च विशेषणं सुप्त्यादौ सर्वेषां प्राकृतानामप्यभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरित्याशङ्का-निवृत्त्यर्थम् । यं हि न व्यथयन्ति न चालयन्ति शीतोष्णसुखदुःखलक्षणवैषम्यवन्तं न कुर्वन्ति । येनाभिमानत्यागेन मात्रास्पर्शा न व्यथयन्ति स एव केनोपायेन भवतीत्यत उक्तम् **समदुःख-सुखमिति** । दुःखं यथाऽनुपादेयमपुरुषार्थत्वात् तथा वैषयिकसुखमप्यमृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः । एवम्भावे च कथं सुखहेतुषु शोभनाध्यासलक्षणः तद्विरोधिषु द्वेषलक्षणोऽभिमानः स्यादिति भावः । समदुःखसुखत्वमपि केनोपायेन भवतीत्यत उक्तं **धीरमिति** । धैर्यवन्तं सुखे दुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः यः स्तम्भकः प्रयत्नः स धैर्यशब्देन विवक्षितः । स चैवम्भूतः अमृतत्वाय कल्पते मुक्तो भवतीति ॥ १५ ॥

**गीतातात्पर्यनिर्णयः**

**फलमाह । यं हीति । न केवलमव्यथामात्रेणामृतत्वं किन्तु पुरुषम् ।**

**"पुरु ब्रह्म गुणाधिक्यात्तज्ज्ञानात्पुरुषः स्मृतः ।" इति प्रवृत्ते । पुरु सरणात् पुरुष इत्यर्थः ॥ १५ ॥**

***न्या०दी०***— ननु दुःखाभावस्य युद्धाकरणेऽपि सम्भवात् किं तत्कृत्वा दुःखाभावाय अभिमानपरित्यागेनेत्याशङ्क्य देहाद्यनभिमानेन भवन् दुःखपरित्यागः स्वयं फलरूपोऽपि परमपुरुषार्थहेतुश्च भवतीति भावेन श्लोकमवतरयति **फलमिति** ॥ अनभिमानेन दुःखपरिहारस्येति शेषः । कथं व्यथापरिहारमात्रेणामृतत्वम्? "तमेवं विद्वान्" इत्यादिश्रुतिविरोधादित्याशङ्कापरिहाराय पुरुषपदमवतारयति **नेति** ॥ कथमनेनैतच्छङ्कापरिहार इत्यतः स्मृत्यैव व्याचष्टे **पुरु ब्रह्मेति** ॥ अस्तु पुरुषपदेन ब्रह्म । तज्ज्ञानात्पुरुष इत्येतत्कथं लभ्यत इत्यत आह **पुरुसरणादिति** ॥ सरणं गमनम् । तदेव ज्ञानमिति भावः ॥ १५ ॥

***भा०दी०***— **सरणं गमनमिति** । सृ गताविति धातोः । ये गत्यर्थास्ते ज्ञानार्था इति भावः ॥ १५ ॥

**गीता**

**नासतो विद्यतेऽभावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥**

*वि०वि०*— ननु 'पापमेवाश्रयेदस्मान्' इत्यादिना बन्धुहननादि परलोकदुःखहेतुतयोक्तम् । अतः शोक इत्यत आह **नासत इति** । सदसच्छब्दौ सत्कर्मासत्कर्मवाचकौ—

"सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥"

इति वक्ष्यमाणत्वात् । भावाभावशब्दौ सुखदुःखवाचिनौ—

"सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः ।
अभाववाचिनः शब्दाः सर्वे ते दुःखवाचकाः ॥"

इति वचनात् । तथा चासत्कर्मणः सकाशात् सुखं नास्ति तथा सत्कर्मणः सकाशाद्दुःखं नास्तीति विद्वद्भिर्विनिश्चितम् । इदं तु नारायणद्विट्तदनुबन्धिनिग्रहरूपत्वात् सत्कर्मेति भावः ।

एतावता देहव्यतिरिक्तात्मा नित्य इत्युक्तम् । इदानीं न त्वेवाहमित्युक्त परब्रह्मणो विष्णोर्नित्यत्वं समर्थयमानः प्रसङ्गात् प्रकृतेरपि नित्यत्वं समर्थयते **नासत इति** । असतः कारणस्याव्यक्तस्य सतो ब्रह्मणश्चाभावो न विद्यते । पृथगभावप्रतिषेध आदरार्थः । सदसतोर्नित्यत्वे प्रमाणमाह **उभयोरिति** । निर्णयान्तत्वान्निरूपणस्य निर्णय इहान्तशब्देनोच्यते । अन्यदर्शनस्यान्यान् प्रत्यप्रत्यायकत्वात् दर्शनमूलः सम्प्रदाय उपदेशपरम्परारूपो लक्षणयाऽत्र प्रमाणत्वेनोच्यते । अपि शब्दस्य तत्वदर्शिभिरित्यनेन सम्बन्धः । 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' इत्यादिवाक्येन समुच्चीयते ॥ १६ ॥

*वा०ल०*— 'नासतो विद्यते भावः' इत्यत्र असत्पदेन शशशृङ्गादिकमेवोच्यते, तृतीयकोटेरकथनात् । सत्पदेन असद्भिन्नम्, अर्थक्रियाकारितया विद्यमानं च प्रस्तुतं देहादिब्रह्मान्तं सकलं सदुच्यते । असतः शशशृङ्गादेः भावः सत्ता न । सद्वैलक्षण्यमेतेष्वस्ति, न त्वसद्वैलक्षण्यमपि तेषामिति भावः । सतः देहादेरभावः अत्यन्ताभावो न । असद्वैलक्षण्यमेव तेष्वस्ति, न तु सद्वैलक्षण्यमपीति भावः । अनयोरुभयोः पूर्वार्धोक्तयोः पक्षयोरपि । अन्तः इदमित्थमेवेति निश्चयः । 'अन्तोऽस्त्री निश्चये नाशे' इत्यमरः ॥

तत्त्वदर्शिभिः तत्त्ववादिभिः दृष्टः साक्षिणा विषयीकृतः । साक्षिसिद्धत्वादस्यार्थस्य कदाऽपि न व्यत्यासः । जीवस्य नित्यत्वात्, देहादेरनित्यत्वमात्रसद्भावेऽप्यत्यन्ताभावाभावेन पुनर्देहान्तरसम्भवात्, नोभयविषयेऽपि दुःखं कार्यमिति भावः । सत्पदेन ब्रह्ममात्राङ्गीकारे, अन्तपदेन नाशाङ्गीकारे च, अनयोरुभयोः धर्मितया पूर्वार्धोक्तयोः सदसतोर्ब्रह्मशशशृङ्गयोः तन्निष्ठतयोक्तयोः

सद्वैलक्षण्यासद्वैलक्षण्ययोश्च कस्यापि मते नाशाभावात् नाशाख्यावसानाभावाच्च वाक्यार्थानुपपत्तिरेव । 'इतोऽन्यत्र जगति उभयोर्नाशः' इत्यङ्गीकारे 'जगति' इत्यस्याश्रवणात् श्रुतयोः 'सदसतोः' त्यागाच्च श्रुतहान्यश्रुतकल्पने मानाभावाच्च ।

अस्मिंश्च पक्षे जगत्यपि सदसतोर्नाशाभावात् न धर्मिनाशात् तयोरन्तो वक्तुं शक्यते । नापि धर्मनाशात्, एतन्निष्ठतयोक्तधर्मयोरन्यत्र नाशस्याप्यसम्भवादेव । एतद्धर्मसदृशधर्मनाशाङ्गीकारे च, अनयोरुभयोरिति पूर्वोक्तपरमर्शविरोधः ।

सत्यत्ववादिनां मते, सद्वैलक्षण्यस्य जगत्यत्यन्ताभावाङ्गीकारेण, असद्वैलक्षण्यस्य च सत्त्वाङ्गीकारेण नाशायोगादर्थानुपपत्तिरेव । मिथ्यात्ववादिभिस्तु, जगति सद्वैलक्षण्यासद्वैलक्षण्ययोरुभयोरप्यङ्गीकारेण नाशायोगात् सुतरामर्थानुपपत्तिरेव । प्रतीतत्वमात्रेणासद्विलक्षणेऽपि जगति, स्वात्यन्ताभावसमानाधिकरणत्वं मिथ्यात्वं वदता वादिना निषेध्यतया परम्पराप्रस्तुतभावाभावयोरन्तस्याप्यङ्गीकारायोगाच्च न कथञ्चिदप्यर्थावकाशः । यदि च भावाभावपदाभ्यां सत्त्वासत्त्वे विवक्षिते, तयोरन्तश्च लक्षणयाऽभाव इति मन्यसे, तदाऽपि जगति त्रैकालिकनिषेधाप्रतियोगित्वरूपसत्तानिषेधो हि, 'अभावाभावो भाव एव' इति वचनात्, त्रैकालिकनिषेधप्रतियोगित्वाख्यासत्त्वस्यैव स्थापकत्वात् तत्रैव पुनरुच्यमानमसत्त्वनिषेधं निरुणद्धि ।

एवं त्रैकालिकनिषेधप्रतियोगित्वरूपासत्त्वनिषेधश्च सत्त्वनिषेधफलीभूतत्रैकालिकनिषेधप्रतियोगित्वनिषेधरूपत्वात् सत्तानिषेधमेव निरुणद्धि । अतोऽस्मिन् पक्षे परस्परव्याहतिरधिका ।

अथ यदि 'असच्चेन्न प्रतीयेत' इति प्राचां वचनमनुस्मरन् प्रत्यक्षायोग्यत्वमेवासत्त्वं मन्यसे, न तु विशेष्यभूतं त्रैकालिकनिषेधप्रतियोगित्वञ्च, तथापि उक्तप्रत्यक्षायोग्यत्वाख्यासत्त्वनिषेधो नाम प्रत्यक्षयोग्यत्वमेव । तच्च सन्निकर्षयोग्यत्वरूपतया अर्थसत्तासाधकत्वात् पूनस्त्वदभिलषितसत्तानिषेधबाधकमेव । सत्तानिषेधश्च त्वदभिलषितप्रत्यक्षायोग्यत्वाख्यासत्वनिषेधफलीभूतप्रत्यक्षयोग्यत्वबाधक इति दत्तेऽप्यौषधे न रोगशान्तिः । 'नाभावो विद्यते(ऽ)सतः' इति मूलविरुद्धश्च । अतो यत्किञ्चिदेतत् ।

किञ्चैतत्प्रकरणारम्भे भगवतैव 'न चैव न भविष्यामः सर्वे वयमतः परम्' इति व्यतिरेकमुखेन जगत्यनित्ये प्रवाहतो नित्यस्य, नित्ये स्वरूपतो नित्यस्य च भावाख्यसत्त्वस्यैव स्थिरीकरणेन, अवसानरूपतदन्तस्य नाशरूपतदन्तस्य च कथमवकाशः ? अतोऽस्मदुक्त एव वाक्यार्थः इत्यनुसन्धेयम् ॥ १६ ॥

***सा०सं०***— ननु "पापमेवाश्रयेदस्मान् हत्वैतान् आततायिनः" इत्यादिना बन्धुहननरूपयुद्धात् परलोकदुःखं शोकहेतुतयोक्तम् । अतः शोक इत्यत आह **नासत इति** । अत्र सदसच्छब्दौ साध्व-साधुकर्मपरौ । भावाभावशब्दौ सुखदुःखवाचकौ । "सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते । प्रशस्ते कर्मणि तथा" (गी. १७-१६) इत्यादेः । "सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचिनः" इत्यादेः । **असतो** दुष्कर्मणः सकाशात् **भावः** सुखं नास्ति । यथेति दृष्टान्ततयाऽस्योपयोगः । **सतः** साधुकर्मणः सकाशात् **अभावो** दुःखं नास्ति । एतच्च युद्धं नारायणद्विट्तदनुबन्धिनिग्रहरूपत्वेन सत्कर्मत्वात् न परलोकदुःखहेतुः । प्रत्युत सुखहेतुरेवेति भावः । किमत्र प्रमाणमित्यत आह **उभयोरपीति** । **अन्तो** निर्णयः पूर्वार्धोक्तार्थस्यावधारणम् । अन्यदर्शनस्यान्यान् प्रति अप्रत्या-यकत्वात् दर्शनमूलः सम्प्रदायोऽत्र लक्ष्यते । **उभयोरप्यनयोः** सदसत्कर्मणोः दुःखसुखे **यथाक्रमं** न विद्येते इत्यर्थयोरपि **तत्त्वदर्शिभिः अन्तस्तु** सम्प्रदायस्तु प्रमाणतया दृष्ट इति वा दृष्टस्तु दृष्ट एवेति वा तुशब्दान्वयः । सत्कर्मणो दुःखं नास्ति, असत्कर्मणः सुखं वा नास्तीत्यनयोरर्थयोः निर्णायको-पदेशपरम्परारूपसम्प्रदायो महात्मभिः दृष्ट एवेत्यर्थः ।

ननु अनादित्वहेतुनाऽहमपि पक्षे निक्षिप्य नित्यत्वेनानुमातव्य इति यदुक्तं त्वया स त्वयुक्तः पक्षः । दृष्टान्ताभावेन व्याप्तिग्रहासम्भवात् । अन्यस्यानादिनित्यस्य मानाभावेनाभावादित्यतो-ऽन्यदपि अनादिनित्यमेतदप्यनेनोच्यते **नासत इति** । असतः कारणस्य प्रकृते**रभावः** प्रागभावः प्रध्वंसश्च न विद्यते नास्ति । तथा **सतो** ब्रह्मणश्चा**भावो** द्विरूपोऽभावः न विद्यते । अत्र 'असतः सतश्चाभावो न विद्यते' इत्येकवाक्ये सम्भवति वाक्यद्वयग्रहणं न विद्यते । प्रागुक्तानादित्वानुमाने व्याप्तिसद्भावे आदरसूचनार्थम् । अत एवाग्रे 'अविनाशि तु' इत्यादिना व्याप्तिग्रहणस्थलमनेकं दर्शयति । अत्र व्याप्तिस्थलप्रदर्शनार्थं **नासतो विद्यते भाव** इत्येतावदेव वाच्यम् । तथाऽपि प्रागुक्तद्वितीयप्रयोगे कृष्णो दृष्टान्तितः । तत्र साध्यसाधनानुगतिसूचनाय **नाभावो विद्यते सत** इत्यप्युक्तिः । तथा च द्वितीयप्रयोगेऽपि व्याप्तिः सुदृढा । नन्वन्यस्यानादिनित्यत्वे मानाभाव इत्युक्तमित्यत आह **उभयोरपीति** । सदसतोः अनादिनित्ययोः **अन्तस्तु** निर्णयभूतपरम्परोपदेश-लक्षणसम्प्रदायस्तु इत्यर्थः । **तत्त्वदर्शिभिः दृष्ट** इत्यर्थः ।

**नरहरितीर्थास्तु** तत्त्वदर्शिभिरपीत्यपिपदं भिन्नक्रममुपेत्य "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम" (वि.पु.) इत्यागमोऽत्रार्थे मानत्वेन समुच्चीयत इत्याहुः ॥ १६ ॥

***अ०प्र०***— यद्वा नत्वेवाहमित्यत्र ईश्वरनित्यत्वमुक्तं तत्प्रसङ्गात् प्रकृतेरपि नित्यत्वं समर्थयते **नासत इति** ।

तत्त्वदर्शिभिः[१], असतः[२], भावः[३], न[४], विद्यते[५], सतः[६], अभावः[७], न[८], विद्यते[९], इति अनयोः[१०], उभयोरपि[११], अन्तस्तु[१२], दृष्टः[१३] इत्यन्वयः ।

तत्त्वदर्शिभिः = वस्तुयाथात्म्यविद्भिः । असतः कारणरूपस्य अव्यक्तरूपस्य वा प्रकृतेः[२], भावः = प्राग्भावः प्रध्वंसश्च न विद्यते[३], सतः ब्रह्मणश्च अभावः प्राग्भावप्रध्वंसश्च[६], न विद्यते[७], इति अनयोः उभयोरपि एवं सदसतोः निरूपणस्य निर्णयान्तत्वात्[८], अन्तः अनादिनित्यत्वनिर्णयः[९], दृष्टः = वेदशास्त्रप्रमाणैर्निर्णीत इत्यर्थः । यद्वा मतान्तरेण— ननु शीतोष्णादिकं अतिदुःखदं कथं तत्सोढव्यं अतः तत्सहने च कदाचिदात्मनाशस्यापि सम्भवादित्याशङ्क्य तत्त्वं विचारतः (विचारं कुर्वतः) सर्वं सोढुं शक्यं इत्याशयेनाह **नेति** । तत्त्वदर्शिभिः = वस्तुयाथार्थ्यविद्भिः । असतः = अनात्मधर्मत्वात् अविद्यमानस्य शीतोष्णादेः आत्मनि भावः सत्ता न विद्यते तथा सतः, सत्स्वभावस्य आत्मनः अभावो विनाशो न विद्यते एवमनयोः सदसतोः अन्तो उभयोः निर्णयः दृष्टः । एवंभूतविवेकेन सहस्वेत्यर्थः ॥ १६ ॥

**भाष्यम्**

**नित्य आत्मेत्युक्तम् । किमात्मैव नित्य आहोस्विदन्यदपि ? अन्यदपि । तत् किमिति ? आह— नासत इति । असतः कारणस्य सतो ब्रह्मणश्चाभावो न विद्यते । "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम" इति वचनात् श्रीविष्णुपुराणे । पृथक् 'विद्यते' इत्यादरार्थः । असतः कारणत्वं च— "सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः" इति भागवते । "असतस्सदजायत" इति च । अव्यक्तेश्च । सम्प्रदायतश्चैतत् सिद्धमित्याह— उभयोरपीति । अन्तो निर्णयः ॥ १६ ॥**

*प०टी०*— चोदयति **नित्य** इति । जीवस्यैव नित्यत्वे सृष्ट्यनुपपत्तेरन्यदपि नित्यमिति वाच्यम् । तत् किम् ? इति प्रश्नार्थः । एतत्परिहारायोत्तरं श्लोकमवतार्य व्याचष्टे **असत इति** । **कारणं** प्रधानम् । प्रकृतिपुरुषनित्यत्वे, 'अपि' शब्दसमुचितप्रमाणमाह **प्रकृतिरिति** । द्विवारं 'विद्यते' इत्यस्य कृत्यमाह **पृथगिति** । 'शब्दः' इति शेषः । असच्छब्दवाच्यत्वं कारणस्य कथम् ? इत्यत आह **असत इति** । 'सिद्धम्' इति शेषः । **एतत्** प्रकृतिपुरुषनित्यत्वम् ॥ १६ ॥

*न०टी०*— चोदयति **नित्य इत्यादिना**। अयं भावः— किमात्मैव नित्यः ? अन्यदपि वा ? नाद्यः। कारणाभावेन जगदुत्पत्त्याद्यभावप्रसङ्गात्। न च जीवात्मैव कारणम्, परतन्त्रत्वात्। अतोऽन्यदपीति वक्तव्यम्। तत् किं चेतनम् ? अचेतनं वा ? साचेतनचेतनं वा ? नाद्यः। तस्यापरिणामित्वात्। न मध्यमः। सुतरां परतन्त्रत्वात्। नान्त्यः। उपादानत्वेनाचेतनाकाङ्क्षायां परतन्त्रत्वेन कुलालादिवदसर्वकर्तृत्वापत्तेरिति। द्रव्यं कर्म च' इत्यादिना प्रकृतिसत्ताप्रवृत्त्यादीनां भगवदधीनत्वावगमात् तामुपादाय कर्तृत्वेऽपि न भगवतः सर्वकर्तृत्वहानिरिति भावेनोत्तरश्लोकमवतार्य परिहरति **आहेति**। तद्व्याचष्टे **असत इत्यादिना**। **कारणस्य** इत्यपादानत्वविवक्षया प्रकृतिपुरुषयोरभावो न विद्यत इति प्रतिज्ञातार्थम् 'उभयोरपि' इत्यनेन साधयता, भगवता 'अपि' शब्देन तत्प्रतिज्ञातार्थस्य युक्त्यादिप्रसिद्धत्वं सूचितम्। तत्र तावत् जगदुत्पत्त्यन्यथानुपपत्तियुक्तिसिद्धत्वं **किमात्मैव नित्यः** इत्याद्याशङ्काभाष्येणैवार्थादुक्तम्। अधुनैतत्प्रतिज्ञातार्थमागमसिद्धोऽपीत्याह **प्रकृतिः पुरुषश्चैवेति**। तथा ह्युत्तरार्धस्य योजनां सूचयति **सम्प्रदायतश्चे**त्युत्तरभाष्येण। न केवलं युक्त्यागमसिद्धोऽनयोरुभयोर्निर्णयः। किन्तु तत्त्वदर्शिभिरपि **दृष्ट** इति भावः। 'असतः' इत्येतत्कारणस्येति व्याख्यातम्। कथं कारणस्यासच्छब्दवाच्यता ? इत्याकाङ्क्षायां श्रुतिपुराणयोः प्रयोगादव्यक्तत्वयुक्तेश्चेत्याह **असतः कारणत्वमित्यादिना**॥ १६॥

*प्र०दी०*— नत्वेवाहमित्यत्र भगवान् कृष्णोऽपि यं प्रति पक्षे निक्षिप्तः स आक्षेप्तुं प्रसक्तिं दर्शयति— **नित्य इति**। उक्तमनादित्वेन हेतुनानुमितम्। ततः किमित्यत आह— **किमिति**। अनादिश्चेत्यपि ग्राह्यम्। आद्ये दृष्टान्ताभावेन व्याप्तिग्रहासम्भवः। द्वितीयस्त्वप्रामाणिकत्वादशक्योपन्यास इति पूर्वपक्ष्यभिप्रायः। विदिताभिप्रायः सिद्धान्ती ''किमृजावन्वये सम्भवति वक्रेण व्यतिरेकेण'' इति मन्यमानो द्वितीयं पक्षमुपादत्ते— **अन्यदपीति**। उक्ताभिप्रायेण पृच्छति— **तदिति**। इति शङ्कायामिति शेषः। दुर्गमार्थत्वात् पूर्वार्धं व्याचष्टे— **असत इति**। कारणस्य प्रकृतेः। अभावः प्रागभावः प्रध्वंसश्च। कुत एतदित्यतो भाष्यकारस्तावत्प्रमाणमाह— **प्रकृतिरिति**। पुरुषः परमात्मा ब्रह्मशब्दोक्तः। अनादित्वेऽप्येवमागमो ज्ञेयः। नन्वसतः सतश्चाभावो न विद्यत इत्येकेनैव वाक्येन द्वयोरभावप्रतिषेधे कर्तुं शक्ये किमेवं पृथग् प्रतिषेधेनेत्यत आह— **पृथक् इति**। विद्यत इति वाक्यद्वयग्रहणम्। असतोऽभावो न विद्यते सतश्चाभावो न विद्यत इति द्वयोः पृथगभावप्रतिषेध आदरार्थ इति योज्यम्। आदरश्चानुमानव्याप्तिसद्भावे। अत एवानेकदृष्टान्तप्रदर्शनम्। ननु सतो ब्रह्मण इत्यस्तु 'सदेव सोम्य' इत्यादिप्रयोगात्। असतः कारणस्येति तु कथमित्यत आह— **असत इति**। असच्छब्दार्थस्य कारणत्वं च भागवतेऽभिहितमित्यर्थः। असतः

असच्छब्दस्य । कारणत्वं कारणार्थत्वमिति वा । सदसद्रूपया कार्यकारणरूपया । 'असतः' इति श्रुतेरनेकार्थत्वादत्रोदाहरणम् । कारणस्याव्यक्तेश्चासच्छब्दार्थत्वम् । गत्यर्थस्य सदेः क्विबन्तस्य कर्मणि हि सदिति रूपम् । 'असदव्यक्तरूपत्वात् कारणं चापि शब्दितम्' इति वचनात् । अत्रार्थे भगवता प्रमाणमुच्यते— **उभयोरपीति** । तदसत् । अन्यदर्शनस्य अन्यान् प्रत्यप्रत्यायकत्वादित्याशङ्क्य दर्शनमूलकः सम्प्रदाय उपदेशपरम्परारूपो लक्षणयाऽत्र प्रमाणत्वेनोच्यत इत्याह— **सम्प्रदायतश्चेति** । चशब्दो भाष्यकारोदितप्रमाणसमुच्चये । आगमो ग्रन्थनिबद्धं वाक्यम् । सम्प्रदायस्तूपदेशपरम्परामात्रमिति भेदः । एतत् प्रकृतिपुरुषयोरनादिनित्यत्वम् । केचिदपिशब्दस्य भिन्नक्रमत्वमङ्गीकृत्य तेन सूचितं प्रमाणं प्रागुदाहृतमिति वर्णयन्ति । नन्वन्तो विनाशादिः परिच्छेदोऽत्र तत्त्वदर्शिभिर्दृष्ट इत्युच्यते । तत्कथं न विरोध इत्यत आह— **अन्त इति** । निर्णयः अनादिनित्यत्वावधारणम् । अपव्याख्यानं त्वन्यत्र निराकृतम् ॥ १६ ॥

*भा०दी०*— **यं प्रतीति** । **पक्षे निक्षिप्त इति** । विभागेन योज्यम् । यस्य पुरुषस्य कृष्णेऽपि नित्यत्वसन्देह इत्यर्थः । उत्तरार्धव्यावर्त्योक्तिः **द्वितीयस्त्विवति** । ननु कृष्णादि सर्वं चेतनं नित्यमनादित्वादित्यत्रान्वयव्याप्तौ दृष्टान्ताभावेऽपि व्यतिरेकव्याप्तौ दृष्टान्तो घटादिरस्त्येवेति दृष्टान्तसिद्ध्यर्थं प्रकृत्यादेर्नित्यत्वोक्तिः **गीतायामयुक्तेति** ह्याशङ्क्य गीताभिप्रायमाह **सिद्धान्तीति** । गीताकार इत्यर्थः । **उक्तेति** । अप्रामाणिकत्वाभिप्रायेणेत्यर्थः । **ब्रह्मेति** । भाष्यस्थब्रह्मशब्दोक्त इत्यर्थः । **अनादित्वेऽपीति** । 'सदेव सोम्येदमग्रे', 'ब्रह्म वा इदमग्रे आसीदि'त्याद्यागम इत्यर्थः । एवं प्रकृतेरनादित्वेऽपि अजामेकां लोहितशुक्लकृष्णां गौरनाद्यन्तवती । भूतभावासितासितानरक्ता चेत्यादिरागम इत्यर्थः । **अनेकदृष्टान्तेति** । गीतायां प्रकृत्याद्यनेकेत्यर्थः । **असच्छब्दार्थस्य कारणत्वमिति** । कारणस्य असच्छब्दार्थत्वमित्यर्थः । ननु असम्भवस्तु सतोऽनुपपत्तेरित्यत्रासच्छब्दस्य ब्रह्मपरत्वमुक्तम् । तथा एतेन सर्वे व्याख्याता इत्यत्रापि असदिति चेदित्यत्र त्वभावपरत्वमात्रं तूच्यते । कारणपरत्वं तत्कथमित्यत आह **असत इति** । **श्रुतेरिति** । प्रकृतिरूपकारणार्थत्वमप्यत्रोपेत्य व्याजहारेत्यर्थः ।

नन्वागमसम्प्रदाययोः को भेदः येन चशब्दोपपत्तिरित्यत आह **आगम इति** । **एतदिति** मूलानुवादः । प्रकृतीत्यादिव्याख्याभिन्नक्रमत्वमिति । तत्त्वदर्शिभिरपीत्यन्वयमुपेयेत्यर्थः । **अपव्याख्यानमिति** । सत्कार्यपरत्वसदसद्वैलक्षण्यपरत्वादिरूपापव्याख्यानं तु तात्पर्ये निरस्तमित्यर्थः । ॥ १६ ॥

*भा०र०*— **यं प्रति पक्षे निक्षिप्त इति**। "ये भगवतः कृष्णस्येश्वरत्वं नित्यत्वं च न जानन्ति तान् प्रति यथाश्रुतैव योजना" इति पूर्वमेतद्व्याख्यानावसर एव टीकायामुक्तम्। यस्य तु पुरुषस्य कृष्णेऽपि नित्यत्वसन्देह इत्यर्थः। अनुमानदोषस्योच्यमानत्वात् पूर्वत्रानुमानस्यैव प्रस्तुतत्वात् 'उक्तम्' इत्येतदनूद्यार्थमाह **उक्तम् अनादित्वेनानुमितमिति**। अहं त्वमेते जनाधिपाश्च नित्याः, चेतनत्वे भावत्वे वा सत्यनादित्वात् इत्यनुमानेनावगतमित्यर्थः। नित्यत्वं विनाशाभावः। स च ध्वंसेऽस्ति। तथा च सपक्षे सति तत्रावर्तमानः पक्षमात्रवृत्तिश्चेतनत्वे सत्यनादित्वहेतुरिति न तेनानुमानं युक्तमिति तु प्रागेव परिहृतम्। "न त्वेवाहं जातु नाऽसम्" इत्यनादित्वस्याप्यात्मनि तत्राभिप्रेतत्वादाह **अनादिश्चेत्यपीति**। आद्ये आत्मैवानादिनित्यो नान्य इति पक्षे। द्वितीयः अन्यद-प्यस्त्यनादिनित्यमिति पक्षः।

ननु प्रकृतानुमाने निश्चितसाध्यस्यान्वयव्याप्तिग्रहणस्थलस्याभावेऽपि साध्याभावरूपस्य साधनाभावेन सम्बन्धरूपव्यतिरेकव्याप्तौ घटादिरेव दृष्टान्त इति न व्याप्तिग्रहासम्भवः। एवं च दृष्टान्तसम्पत्तये प्रकृत्यादेर्नित्यत्वोक्तिर्गीतायामयुक्तेत्याशङ्क्य गीताभावमाह **सिद्धान्तीति**। नात्र गीताचार्यस्य घटादौ गृहीता व्यतिरेकव्याप्तिरभिप्रेता। साक्षादनुमित्यनङ्गत्वेन तस्या वक्रत्वात्। किन्तु दृष्टान्तस्यान्यस्य भावेन साक्षादनुमित्यङ्गभूतान्वयव्याप्तिरेवेत्यभिप्रेत्याह **किमृजावित्यादि**। **उक्ताभिप्रायेण** अप्रामाणिकत्वाभिप्रायेण। 'इति' इति भाष्यपदमनूद्य ततः पूरणीयमाह **शङ्काया-मिति**। असच्छब्दस्यात्यन्ताभावप्रतियोगिपरत्वे शून्यस्य भावः सत्ता नास्तीति प्रकृतानुपयोगः। अभाव इति छेदे व्याघातः। सतो विद्यमानस्याभावो नास्तीति प्रमाणविरोधश्च। घटादेरभावोप-लब्धेः। अतः सदसच्छब्दावन्यार्थौ व्याख्येयौ। तौ चार्थौ न सुगमाविति भावेन 'दुर्गमार्थत्वात्' इत्युक्तम्। कारणतया प्रसिद्धस्य दण्डादेरनादिनित्यत्वाभावाद् वक्ष्यमाणप्रमाणमनुरुध्य प्रकृतार्थमाह **प्रकृतेरिति**। अभावशब्देनान्योन्याभावग्रहणे स प्रकृतेर्नास्तीति प्रमाणबाधितम्। पुरुषस्यैव तदन्योन्याभावप्रतियोगित्वात्। अत्यन्ताभावपरिग्रहे दृष्टान्ते साध्यसाधनोपदर्शनालाभ इत्यत आह **अभावः प्रागभावः प्रध्वंसश्चेति**॥ अनेन दृष्टान्ते साधनमनादित्वं साध्यं नित्यत्वं चोपदर्शितं भवति। "उभयोरपि दृष्टोऽन्तः" इति गीताकारः प्रमाणं वक्ष्यतीति **तावच्छब्दः**। "सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः" इति तृतीयभाष्ये "पुरिशयनात् पुरुषो जीवः" इत्यष्टमे भाष्ये च वक्ष्यमाणत्वात् प्रसिद्ध्या नरार्थत्वाच्च जीवप्रतीतिव्युदासायाह **पुरुषः परमात्मेति**। सच्छब्देन ब्रह्माभिहितं भाष्ये। पुराणे तु परमात्मा नित्य उच्यत इति शङ्कानिवर्तनायोक्तम् **ब्रह्मशब्दोक्त इति**। तथा च भाष्यपुराणयोर्न विसंवाद इति भावः।

अनेन दृष्टान्ते साध्यानुगतिसिद्धावपि न साधनानुगतिसिद्धिरित्यत आह **अनादित्वेऽपीति** । "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इत्यादिरागमः प्रकृत्यादेरनादित्वे द्रष्टव्य इत्यर्थः । 'आदरार्थः' इति पुल्लिङ्गं घटयन्नाह **अभावप्रतिषेध इति** ॥ प्रागभावप्रध्वंसप्रतिषेध इत्यर्थः । **अनुमानेति** । अनादित्वानुमानस्य नित्यत्वेन व्याप्तिरस्तीत्यत्र पृथक् प्रतिषेधस्तात्पर्यं ज्ञापयतीत्यर्थः । अत्रोपष्टम्भकमाह **अत एवेति** । प्रकृतिब्रह्मरूपानेकेत्यर्थः । इत्यादीत्यादिशब्देन "ॐ तत्सदिति निर्देशो ब्रह्मणः" इत्यादिप्रयोगग्रहः । असतः कारणत्वमित्ययुक्तम् । निरस्वरूपस्य पूर्वकालावस्थितिरूपकारणत्वस्य प्रमाणबाधितत्वादित्यत आह **असदिति** । **असच्छब्दार्थस्य कारणत्वं** कारणस्यासच्छब्दार्थत्वमित्यर्थः । **कारणार्थत्वं** कारणाभिधायकत्वम् । असच्छब्दस्य कारणवाचित्वं कथमित्याकाङ्क्षाशान्तय इतो योजनान्तरम् । उक्तार्थप्रमापकत्वाय प्रमाणार्थमाह **कार्येति** ।

ननु "असम्भवस्तु सतोऽनुपपत्तेः" इत्यधिकरणे असच्छब्दस्य ब्रह्मार्थत्वमुक्तम् । तदुक्तं भाष्ये "असच्छब्दो ब्रह्मवाची" इति "ब्रह्म वा असत्" इति च । तथा "एतेन सर्वे व्याख्याताः" इत्यत्र असदादिशब्दानां ब्रह्मण्येव मुख्यवृत्तिरित्यभिहितम् । तथा चात्र कथं प्रकृत्यर्थत्वमित्यत आह **असत इति श्रुतेरिति** । उक्तस्थले असच्छब्दस्य परममुख्यवृत्त्या प्रवृत्तावपि प्रकृतिशब्दिते कारणेऽपि मुख्यवृत्त्या वृत्तिरनुमतेति प्रकृते कारणार्थकासच्छब्दघटिताया अस्याः श्रुतेरुदाहरणं नानुचितमिति भावः । "अव्यक्तेश्च" इत्यत्र प्रकृतं कारणपदं संयोज्यमिति भावेनोक्तं **कारणस्येति** । प्रकृतेरित्यर्थः । असच्छब्दार्थत्वमुपपन्नम् ।

अव्यक्तिरसच्छब्दवाच्यतावच्छेदिकेत्युपपादयति **गत्यर्थस्येति** । ननु सदिति सदे रूपमस्तु ॥ तथाऽपि कथमसच्छब्दस्याव्यक्त्यर्थत्वमित्यत उक्तं **गत्यर्थस्येति** । "गत्यर्थाश्चावगत्यार्थाः" इति अव्यक्तेरनवगतेः परमसूक्ष्मत्वादित्यर्थ उक्तो भवति । क्विपः कर्तरि निष्पादने असच्छब्दादव्यक्तिकर्मत्वं न लभ्यत इत्यत उक्तं **कर्मणि क्विबन्तस्येति** । सम्पदादिलक्षणः क्विप् । तस्य सर्वापहारिणि लोपेऽपि 'कृत्तद्धित' इति प्रातिपदिकत्वं युक्तमिति भावः । अव्यक्तिरसच्छब्दप्रयोगप्रयोजिकेत्येतत् कुतो वेदितव्यम् ? इत्यतो नवमभाष्याभिहितं प्रमाणं स्वयमाह **असदव्यक्तरूपत्वादिति** । **अत्रार्थे** प्रकृतिपुरुषयोरनादिनित्यत्वे । लक्षणायां सम्बन्धं दर्शयितुमुक्तं **दर्शनमूलक इति** । **प्रमाणसमुच्चये** "प्रकृतिः पुरुषश्च" इति प्रमाणसमुच्चये । ननु सम्प्रदाय उपदेशपरम्परारूप आगम एव । विष्णुपुराणादिवचनान्यप्यागमाः । तत् कथं 'सम्प्रदायतः' इति शब्दान्तरेण व्यवहारश्चशब्दश्चेत्यत आह **आगमो ग्रन्थनिबद्धमिति** । एतेन "वचनाद् विष्णुपुराणे" इति भाष्ये 'वचनात्' इत्येतदागमादिति

व्याख्यातं भवति । व्याख्याने प्रयोजनं च वचनस्य पौरुषेयत्वेऽपि नानादरणीयत्वम् । "निर्दोषः शब्द आगमः" इत्युक्तलक्षणागमस्यैवात्र ग्राह्यत्वादिति सूचनम् । अत एव प्राक् "अनादित्वेऽप्येवमागमो ज्ञेयः" इति टीकायामागमशब्दः । न केवलं युक्त्याऽऽगमसिद्धोऽपीति प्राचीनटीकायां "प्रकृतिः पुरुषश्च" इति वचनमागमशब्देनोपात्तम् । "भाष्ये च सम्प्रदायशब्द आगममेवाह । तथा च कथं चशब्दः" इति शङ्कायामागमसम्प्रदायशब्दौ भिन्नार्थौ व्याख्यायेते, इति व्याख्यानं तु नातीव कुशलम् । एतदिति नपुंसकलिङ्गेन "असतः कारणत्वं च" इति भाष्ये सन्निहितं कारणत्वमुपस्थितम् । तच्चोभयोरिति वचनार्थासंस्पर्शि । "अभावो न विद्यते" इति गीताभाष्योपात्ताभावस्तु पुलिङ्गेन परामर्ष्टव्य इत्यत आह **एतत् प्रकृतिपुरुषयोरनादिनित्यत्वमिति** । अभावशब्दस्य पुलिङ्गत्वेऽपि तदर्थभूतस्यानादिनित्यत्वस्य नपुंसकलिङ्गेन एतच्छब्देन परामर्शो नानुचित इति भावः ।

केचित्तु नरहरितीर्थश्रीमच्चरणाः । **भिन्नक्रमत्वं** तत्त्वदर्शिभिरपीति अन्वयम् । तथा च नरहरितीर्थभट्टारकाः— प्रकृतिपुरुषयोरभावो न विद्यत इति प्रतिज्ञातार्थमुभयोरपीत्यनेन साधयता भगवता, अपिशब्देन स्वप्रतिज्ञातार्थस्य युक्त्यादिसिद्धत्वं सूचितम् । तत्र तावज्जगत्कारणत्वान्यथानुपपत्तिरूपयुक्तिसिद्धत्वं किमात्मैव नित्य इत्यादिशङ्काभाष्येणैवार्थादुक्तम् । अधुनैष प्रतिज्ञातार्थ आगमसिद्धोऽपीत्याह **प्रकृतिः पुरुषश्चैवेति** । उत्तरार्धयोजनां सूचयति 'सम्प्रदायतश्च' इत्युत्तरभाष्येण । न केवलमुक्तयुक्त्यागमसिद्धोऽनयोरुभयोर्निर्णयः । किन्तु तत्त्वदर्शिभिरपि दृष्ट इति भावः" इति ।। न केवलं प्रकृतिपुरुषयोरन्यतरस्यैव । किन्तु तयोरुभयोरप्यनादिनित्यत्वनिर्णयो दृष्ट इति यथाश्रुतान्वयपक्षे "पृथग् विद्यते" इति भाष्यरीत्या अनुमानमूलभूतव्याप्तावादरः सूचितो भवति । सदसतोः पृथगुभयत्र साध्यसाधनवत्त्ववचनेनेवात्र पृथगुभयत्र प्रमाणदर्शनेनाप्यादरसूचनसम्भवात् । सति चैवं भिन्नक्रमत्वाश्रयणं नातीव मनोहरमित्यनुशयं सूचयितुं केचिदित्युक्तम् । अत एव प्राक् टीकायामुभयोरपीति यथाश्रुतप्रतीक एव गृहीतः । केचित्तु "अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु" इति सूत्रे– अपि सिञ्च, अपि स्तुहीत्युदाहरणे सिञ्च च स्तुहि चेत्यर्थ इत्यङ्गीकारादत्रापि अपि दृष्ट इत्यस्य दृष्टश्चेत्यर्थाङ्गीकारे यथाश्रुतक्रमो न दोषमावहतीति स्वाभिप्राय इत्याहुः ।

**विनाशादिः परिच्छेद इति** । "अन्तवन्त इमे देहाः" इत्यनुपदमेवान्तशब्दस्य विनाशादिपरिच्छेदार्थताया अभिधास्यमानत्वादिति भावः । **न विरोधः** पूर्वार्धेन । तत्राभावो न विद्यत इत्यविनाशो ह्यभिहित इति भावः । ततश्च कथमुक्तदोषपरिहारः । यादृशतादृशनिर्णयस्तु प्रकृतानुप-

योगीत्यतो भाष्यमनुवदन्नभिप्रेतार्थमाह **निर्णयोऽनादिनित्यत्वावधारणमिति** । दृष्ट इत्येतत् टीकास्थावधारणशब्दानुसारात् कृतमिति यावदिति वा दर्शनमूलकोपदेशपरम्परया प्रापितमिति वा व्याख्येयम् ।

ननु 'नासतः' इति श्लोको 'न त्वेवाहम्' इति श्लोकोक्तेनानादित्वेन हेतुना आत्मनो नित्यत्वानुमानेऽनेकदृष्टान्तप्रदर्शनार्थ इति यद् भाष्यकारीयमवतारणं तदयुक्तम् । तथात्वे तच्छ्लोकानन्तरमस्य श्लोकस्य सन्निवेशापातात् । किन्तु ननु तथाऽपि शीतोष्णादिकमतिदुःखकरं कथं सोढव्यम् ? अत्यन्तं तत्सहने च कदाचिदात्मनाशस्यापि सम्भवादित्याशङ्क्य तत्त्वं विचारयतः सर्वं सोढुं शक्यमित्याह नासतो विद्यते भाव इत्यवतारणीयः । प्रकृतानुगुणत्वात् । तथा चासतः प्रागविद्यमानस्य शीतोष्णादेः आत्मनि भावः उत्पत्तिर्न विद्यते । सतो विद्यमानस्य अभावो नाशो न विद्यते । एवमुभयोः सदसतोः अन्तो निर्णयो दृष्टः । कैः ? तत्त्वदर्शिभिः वस्तुयाथात्म्यवेदिभिः । त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च त्यक्त्वा शीतोष्णादीन् सहस्वेत्यभिप्राय इति श्लोकार्थः । यद्वा, असतः भावः भानं ख्यातिः न विद्यते । सतः अभावः बाधो न विद्यते । अतः तदुभयवतो भ्रमविषयस्य सुखदुःखादिप्रपञ्चस्यार्थापत्त्या सदसद्विलक्षणत्वमेतेन श्लोकेनोच्यत इति यत् शङ्करादिकृतमस्य श्लोकस्यापव्याख्यानं तत्तु "न चाविद्यमानविद्यमानयोरुत्पत्तिनाशनिषेधकोऽयं श्लोकः । प्रत्यक्षविरोधात् । सदिति व्यवह्रियमाणमेव पदार्थस्वरूपमुत्पत्तेः प्राक् नाशोत्तरं च नास्तीति हि सर्वो लोको व्यवहरति । न च सदसद्विलक्षणं किञ्चिदस्तीत्यत्र किञ्चिन्मानम्" इत्यादिना भगवत्पादैर्गीतातात्पर्यनिर्णये प्रागसतोऽपि पश्चात् सत्त्वस्य प्राक् सतोऽपि पश्चादसत्त्वस्य च प्रत्यक्षसिद्धत्वोक्त्या सदसद्वैलक्षण्यस्याप्रामाणिकत्वोक्त्या च दूषितमित्यर्थः । न चैवं व्याख्याने "न त्वेवाहम्" इति श्लोकादस्य श्लोकस्य व्यवधानं दोष इति वाच्यम् । परपक्षेऽपि "तांस्तितिक्षस्व भारत" इत्यनन्तरमेवास्य सङ्गतत्वेन "यं हि न व्यथयन्ति" इत्यनेन व्यवधानस्य समत्वात् । बहुव्यवधानं भगवत्पक्षे, अस्मत्पक्षे तु न तथेति तु वैषम्यमात्रमित्युक्तमेव व्याख्यानमादरणीयमिति हृदयम् ।

एतेन यदत्र केषाञ्चिद् भाष्यम् "देहस्य स्वाभाविकनाशशालित्वादात्मनश्च नित्यत्वाच्छोकानिमित्तं यद् 'गतासूनगतासून्' इत्यनेनोक्तं तदुपपाद्यते **नासत इति** । असतो देहस्य सद्भावो न विद्यते । सतश्चात्मनः असद्भावो न विद्यते । उभयोर्देहात्मनोस्तत्त्वदर्शिभिर्निर्णय उपलब्धः । किमिति ? देहस्याचिद्वस्तुनोऽसत्त्वमेव स्वरूपमात्मनश्चेतनस्य सत्त्वमेव स्वरूपम्" इति तदपि

निरस्तम् । मम मते प्रकृतेरसच्छब्दवाच्यत्वे ब्रह्मणः सच्छब्दवाच्यत्वे च श्रुतिपुराणादेरिव तव मते देहस्यासच्छब्दवाच्यत्वे चेतनस्य सच्छब्दार्थत्वे च श्रुत्यादिरूपप्रमाणस्याभावात् । किञ्च देहस्य भावो न विद्यत इत्ययुक्तम् । प्रत्यक्षेणैव तत्सत्ताया गृह्यमाणत्वात् । अत एव देहस्याचिद्वस्तुनो सत्त्वमेव स्वरूपमित्याद्यप्यसदेवेति ।

तात्पर्यनिर्णये तु असतः असत्कर्मणः सकाशाद् भावः सुखं न विद्यते । सतः सत्कर्मणः सकाशाद् अभावो दुःखं न विद्यत इति सदसच्छब्दौ भाव इति छेदमङ्गीकृत्य भावाभावशब्दौ चानेकार्थौ गीतेति दर्शयितुमुक्तरीत्या सप्रमाणकमर्थान्तरपरौ व्याख्याताविति न तद्विसंवादः । तत्र तत्र एवमेव रामानुजव्याख्याननिरासं तात्पर्यनिर्णयविसंवादनिरसनं च द्रष्टव्यम् ॥ १६ ॥

***गीताक्षरार्थस्तु***— एवं तावदनादित्वेन हेतुना देहव्यतिरिक्त आत्मा नित्य इति साधितम् । इदानीं "न त्वेवाहम्" इत्यत्र भगवान् कृष्णोऽपि यं प्रति पक्षे निक्षिप्तस्तं प्रति अनादित्वेन नित्यत्वानुमाने दृष्टान्तं दर्शयितुमुच्यते **नासत इति** । असतः "सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः" इति भागवतप्रयोगात्," "असदव्यक्तरूपत्वात् कारणं चापि कथ्यते" इति शास्त्राच्च कारणस्य प्रकृतेः अभावः प्रागभावः प्रध्वंसश्च न विद्यते । सतः "सदेव सोम्येदमग्र आसीत्", "ॐ तत्सदिति निर्देशो ब्रह्मणः परिकीर्तितः" इत्यादिशास्त्राद् ब्रह्मणश्चाभावो न विद्यते । नन्वत्र असतः सतश्चाभावो न विद्यत इत्येकेनैव वाक्येन द्वयोरभावप्रतिषेधे कर्तुं शक्ये किमेवं पृथक् प्रतिषेधेन ? इति चेन्न । असतः अभावो न विद्यते, सतश्च अभावो न विद्यत इति द्वयोः पृथगभावप्रतिषेध उक्तानुमाने व्याप्तिसद्भावे आदरप्रदर्शनार्थ इति भाष्यादौ तात्पर्याभिधानात् । अत एव "अविनाशि तु" इत्यादावनेकदृष्टान्तप्रदर्शनं भविष्यति । अत्र दृष्टान्तप्रदर्शनार्थं "नासतो विद्यतेऽभावः" इत्येतावत्येव वक्तव्येऽपि यद् ब्रह्मणोऽप्यनादिनित्यत्ववर्णनं तत् त्वदादयो जनाधिपाः नित्याः, भावत्वे चेतनत्वे वा सत्यनादित्वाद् यथाऽहमिति प्रयोगे स्वात्मरूपदृष्टान्ते साध्यसाधनानुगतिविभावनार्थम् । अत्रार्थे प्रमाणमुच्यते **उभयोरपीति** । असतस्सतश्चेत्युभयोरनादित्वे नित्यत्वे चेत्युभयोः अन्तो निर्णयस्तु अनादिनित्यत्वावधारणं तत्त्वदर्शिभिः साक्षात्कृतपरापरतत्त्वैः पुरुषैः दृष्टः । अन्यदर्शनस्यान्यान् प्रत्यप्रत्यायकत्वादत्र दर्शनमूलः सम्प्रदाय उपदेशपरम्परारूपो लक्षणया प्रमाणत्वेनोपन्यस्त इति द्रष्टव्यम् । प्राचीनटीकायां तु— अपिशब्दस्य तत्त्वदर्शिभिरपीति भिन्नक्रमत्वमङ्गीकृत्य तेन "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम" इति भाष्यकारोदाहृतागमः समुच्चीयत इत्युक्तम् ॥ १६ ॥

**गीतातात्पर्यनिर्णयः**

न च युद्धात्परलोकदुःखमिति शोकः । असत्कर्मणः सकाशाद्भावो नास्ति सत्कर्मणः सकाशादभावो नास्तीति नियतत्वात् ।

"सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः ।
अभाववाचिनः शब्दाः सर्वे ते दुःखवाचकाः ॥"

—इति शब्दनिर्णये ।

"सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥"

—इति वक्ष्यमाणत्वात् ।

"असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।" इत्यादेश्च ।

अन्तो निर्णयः ।

*प्रका०*— "पापमेवाश्रयेदस्मान् हत्वैतानाततायिन" इत्यादिना यद्युद्धात्परलोक-दुःखनिमित्तशोचनमर्जुनस्य तन्निवर्तनपरं नासत इत्येतं श्लोकं व्याचष्टे **असत्कर्मण इत्यादिना** । अत्र सदसच्छब्दौ शुभाशुभपरौ । भावाभावशब्दौ सुखदुःखपरौ तथा वचनादित्यर्थः ।

*न्या०दी०*— ननु पापमेवाश्रयेदस्मानित्यादिना बन्धुहननादिरूपाद्युद्धात् परलोकदुःखं शोकहेतुतयोक्तम् । अतः शोक इत्यत आह **न चेति** ॥ कुतो नेत्यतो हेतुतया नासत इति श्लोकं व्याचष्टे **असदिति** ॥ असत्कर्मण इति दृष्टान्तः । नियतत्वादित्यनेनोत्तरार्धतात्पर्यमुक्तं भवति । इदं च नारायणद्विट्तदनुबन्धिनिग्रहरूपत्वात् सत्कर्मैवेति भावः । ननु यथाऽसत्कर्मणा सुखं नास्त्येवं सत्कर्मणा दुःखं नास्तीति वक्तव्ये भावाभावयोरभाववर्णनं क्वोपयुज्यत इत्यतो भावाभावशब्दयोरेव सुखदुःखवाचित्वे प्रमाणमाह **सद्भावेति** ॥ सदसच्छब्दयोः सदसत्कर्मवाचित्वं कुत इत्यत आह **सद्भाव इति** ॥ अश्रद्धयेत्युत्तरवाक्यं चात्र ग्राह्यम् । भावाभावशब्दपर्यायसदसच्छब्दयोः सुखादौ प्रयोगं प्रमाणं च दर्शयति **असन्निति** ॥ ब्रह्म दुःखीति वेद चेत्तर्हि स वेत्ता दुःख्येव भवति । ब्रह्म सुखरूपमिति वेद चेत्तर्हि वेत्तारं सुखिनं विदुरित्यर्थः । अन्तशब्दस्यानेकार्थत्वादिह विवक्षितार्थमाह **अन्त इति** ।

*भा०दी०*— 'नाभावो विद्यते सतः' इत्येतावता प्रकृतशङ्काऽपरिहारादाह **दृष्टान्त इति** ॥ **उत्तरार्धेति** । 'उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः' इत्युत्तरार्धे सदसत्कर्मभ्यां सुखदुःखे न स्त इत्यनयोरर्थयोरन्तो निर्णयस्तत्त्वदर्शिभिः दृष्ट इत्युक्त्या नैयत्यं लब्धमिति भावः । प्रकृतोपयोगमाह **अश्रद्धयेति** । 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ' इत्यष्टादशे 'सच्छब्दः पार्थ युज्यते' इत्येतस्मात्किञ्चिदुपरितनं वाक्यं च ग्राह्यमित्यर्थः ॥ **वेत्तेति** । विद ज्ञाने, वेदितेत्यर्थः । आगमशासनमनित्यमिति इट् अत्र न कृतः ।

**गीतातात्पर्यनिर्णयः**

**न च अविद्यमानविद्यमानयोरुत्पत्तिनाशनिषेधकोऽयं श्लोकः । प्रत्यक्षविरोधात् ।**

*प्रका०*— न चास्य श्लोकस्य असदुत्पत्त्यभावादिरूपः प्रातीतिकोऽर्थोऽभ्युपगन्तव्यः प्रत्यक्षविरोधादित्याह **न चाविद्यमानेति** ।

*न्या०दी०*— असतः प्रागविद्यमानस्य भाव उत्पत्तिर्न विद्यते । सतो विद्यमानस्याभावो नाशो न विद्यत इत्यपव्याख्यां प्रत्याख्याति **न चेति** ॥

**गीतातात्पर्यनिर्णयः**

**सन्निति व्यवह्रियमाणमेव पदार्थस्वरूपमुत्पत्तेः प्राङ्नाशोत्तरं च नास्तीति सर्वलोको व्यवहरति ।**

*प्रका०*— प्रत्यक्षविरोधं स्पष्टयति **सन्नित्यादिना** ।

*न्या०दी०*— गीतानुसारेणाल्पाच्तरमित्याद्यतिक्रमः । किमेकप्रत्यक्षविरोधोऽथ सर्वप्रत्यक्षविरोधः ? नाद्यः । भ्रान्तित्वोपपत्तेः । न द्वितीयः । परबुद्धेरसिद्धेरित्यत आह **सन्निति** ॥ स्थितिकाले सत्त्वेन व्यवह्रियमाणमेव पदार्थं उत्पत्तेः प्राङ्नाशोत्तरं च नास्तीति सर्वलोको व्यवहरति । तेन सर्वलोकस्याविद्यमानविद्यमानयोरुत्पत्तिनाशव्यवहारेण तन्मूलं प्रत्यक्षनुमातुं शक्यमिति भावः ।

*भा०दी०*— ननु विद्यमानाविद्यमानयोरिति वक्तव्यम् । विद्यमानशब्दस्य 'अल्पाच्तरं पूर्वम्' इति सूत्रेण, तथा भावस्याभावापेक्षयाऽभ्यर्हितत्वेन 'अभ्यर्हितं पूर्वम्' इति सूत्रेण पूर्वनिपातेन भाव्यत्वादित्यत आह **गीतानुसारेणेति** ॥ **उत्पत्तिनाशेति** । अविद्यमानस्योत्पत्तिव्यवहारेण विद्यमानस्य नाशव्यवहारेणेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**न च विपर्यये किञ्चिन्मानम् । इदं तु वाक्यमन्यथासिद्धम् ।**

***न्या०दी०*—** ननु व्यवहारान्यथानुपपत्त्या तन्मूलज्ञानमेव सिद्ध्यति । न तु तस्य प्रत्यक्षता-नियम इति चेत् । किमिदमनुमानादिज्ञानमुत भ्रमः? नाद्यः । अनङ्गीकारात् । लिङ्गाद्यभावेऽपि भावाच्च । द्वितीयं निराचष्टे **न चेति** ॥ भ्रमत्वे बाधकेन भाव्यम् । न च तदत्रास्ति । अतो नायं भ्रम इति परिशेषात्प्रत्यक्षमेव व्यवहारमूलं सिद्ध्यतीति भावः । नासत इत्येतद्वाक्यमेव विपर्यये मानमित्यत आह **इदमिति** ॥ सिद्धं घटितम् ।

***भा०दी०*—** **किमिदमिति** । कण्ठव्यवहारमूलभूतं किमनुमानागमार्थापत्तिजं ज्ञानमुत भ्रम इत्यर्थः । **घटितमिति** । सदसत्कर्मपरत्वेनान्यथा योजितमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"आद्यन्तयोः सर्वकार्यमसदेवेति निश्चितम् ।**
**यद्यसन्न विशेषोऽत्र जायते कोऽत्र जायते ॥**

***प्रका०*—** न चेदं प्रत्यक्षं भ्रान्तं विपरीतप्रमाणाभावात् । न चोदाहृतश्लोकोऽस्य बाधकः । अन्यथा घटमानत्वेन बाधकत्वायोगात् । अत्र ब्रह्मतर्कश्लोकमुदाहरति **आद्यन्तयोरिति** ।

***न्या०दी०*—** एतमेवार्थं ब्रह्मतर्केण साधयति **आद्यन्तयोरिति** ॥ उत्पत्तेः प्राङ्नाशोत्तरं चेत्यर्थः । निश्चितं प्रत्यक्षेणेति शेषः । आदावसत्त्वानङ्गीकारे बाधकमाह **यदीति** ॥ यद्यत्र कार्ये पृथुबुद्ध्नोदराकारादिविशेषः प्रागसन्न जायते तर्ह्यत्र कार्ये जायत इति वित्तिव्यवहारयोः को विषयः ? तौ निर्विषयौ प्रसज्येते इत्यर्थः ।

***भा०दी०*—** **ताविति** । वित्तिव्यवहारावित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**व्यक्तावपि समं ह्येतदनवस्थाऽन्यथा भवेत् ।**
**एवं नाशोऽपि बोद्धव्यमतो सन्नेव जायते ॥**

***प्रका०*—** अभिव्यक्त्यपेक्षया घटो जायत इति व्यवहारोपपत्तेः कथमसदुत्पत्तिरिति चेत् अव्यक्तिः पूर्वमसती पश्चाज्जायत इत्यसदुत्पत्त्यनिराकरणात् । अभिव्यक्तेरभिव्यक्तिश्चेत् तस्या

अप्येवमिति अनवस्थाप्रसङ्गः । एवं घटनाशेऽप्यनभिव्यक्तिश्चेत् अभव्यक्तिवन्निराकरणीयेत्यसदुत्पत्तिर्दुष्परिहरा । न चैवमप्यन्त्यतासदुत्पत्तिरभ्युपगन्तव्या । मृद् घटरूपेण जायते इति व्यवहाराभावप्रसङ्गात् । एतच्चोपादानकारणेन कार्यस्य अनुभवसिद्धभेदाऽभेदबलादुपपद्यत इत्यर्थः ।

***न्या०दी०***— अभिव्यक्तिर्विषय इत्यत आह **व्यक्ताविति** । व्यक्तिर्विषय इति वदताऽपि नासतो जन्म परिहृतम् । प्रागविद्यमानव्यक्तेर्जन्मनोऽङ्गीकार्यत्वात् । अन्यथा व्यक्तेः कादाचित्कत्वानुपपत्तेरिति भावः । प्राग्विद्यमानाया एव व्यक्तेरभिव्यक्तिः कदाचिद्भवति । अतोऽभिव्यक्तेः कादाचित्कतेत्यत आह **अनवस्थितेति** ॥ यदि व्यक्तेरपि व्यक्तिः तर्हि तस्याः प्रागसत्या एव जन्माङ्गीकार्यम् । अन्यथोक्तदोषात् । तस्या अपि प्राग्विद्यमानाया एव व्यक्तिश्चेत्तस्या अप्येवमित्यनवस्था स्यादित्यर्थः । विद्यमानस्य नाशनाभ्युपगमेऽप्येवं बाधकं बोद्धव्यमित्याह **एवमिति** ॥ तथाहि । सतो नाशाभावे नष्ट इति प्रत्ययादेर्निर्विषयत्वं स्यात् । अनभिव्यक्तिविषयत्वं चेत्तस्याः पूर्वमपि भावे कादाचित्कत्वानुपपत्तिः । अभावेऽसत्कार्यतापातः । अनभिव्यक्तेरभिव्यक्तिश्चेत् पूर्ववदनवस्थेति । सन् विनश्यतीति चोपसंहारो द्रष्टव्यः ।

***भा०दी०***— अतो सन्नेव जायत इत्यनन्तरं शेषमाह **सन्विनश्यतीति चोपसंहारो द्रष्टव्य इति** ॥

**गीतातात्पर्यनिर्णयः**

**तथाऽप्यभेदानुभवत्कार्यकारणयोः सदा ।**
**भेदस्य चाविशेषेण देहोऽगात्क्षितितामिति ।**
**व्यवहारो भवेद्यस्माद्धल्येवानुभवः सदा ॥"**

**—इति ब्रह्मतर्के ।**

***न्या०दी०***— नन्वेवमसतो जन्मोपपत्तेरत्यन्तासत एव स्यात् । किं विशेषो जायत इत्युक्तयेत्यत आह **तथापीति** ॥ यद्यप्येवसमतो जन्मोक्तम् । तथापि नात्यन्तासतः । किन्तु रूपभेदेन सदसत एवेति भावः । तत्कुत इत्यत आह **अभेदेति** ॥ भेदस्य चानुभवादिति सम्बन्धः । मृदेव घट इति कार्यकारणयोरभेदानुभवात् कारणस्य च प्रागपि सत्त्वात् कार्यस्यापि पूर्वं सत्त्वं सिद्ध्यति । भेदानुभवादसत्त्वं चेत्यर्थः । अभेदानुभवो भ्रमः किं न स्यादित्यत आह **अविशेषेणेति** ॥ अभेदानुभवस्य भ्रमत्वे भेदानुभावस्यापि भ्रमत्वं स्यात् । विशेषाभावादिति भावः ।

अभेदानुभव एव नास्तीत्यत आह **देह इति** ॥ तस्मादभेदव्यवहारमूलमनुभवोऽनुमीयत इत्यर्थः । अनुभवसद्भावेऽपि कुत एतदित्यत आह **बलीति** ॥ अबाधितानुभवः स्वविषयस्थापने शक्त इत्यर्थः ।

*भा०दी०*— **किमिति** । उक्त्या किमित्यर्थः । **रूपभेदेनेति** । कार्यरूपेणासतः कारणरूपेण सतो जन्मेत्यर्थः ॥ **कुत एतदिति** । असतो जन्म सतो विनाश इत्येतदित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**न च सदसद्विलक्षणं किञ्चिदस्तीत्यत्र किञ्चिन्मानम् ।**

*प्रका०*— न चासत्सद्विलक्षणे 'नासत' इति श्लोकः प्रमाणम् । अन्यार्थत्वेनोक्तत्वात् । यथा नाशान्यथानुपपत्त्या न सद्वैलक्षण्यं घटादेः सतो नाशसम्भवात् । एवं प्रतीत्यन्यथानुपपत्त्या नासद्वैलक्षण्यं शुक्तिरजतादेः भ्रान्तिविषयस्यासतः प्रतीतिं सम्भवादित्याह **न च सदसदिति** ।

*न्या०दी०*— यदपि सदसद्विलक्षणत्वं विश्वस्यानेन श्लोकेनोच्यत इति व्याख्यानं तन्निराचष्टे **न चेति** ॥ सदसद्विलक्षणं किञ्चिदपि न प्रामाणिकं, कुतो विश्वमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**न च असतः ख्यात्ययोगात् सतो बाधायोगात् उभयविलक्षणं भ्रान्ति-विषयम् । असतः ख्यात्ययोगादिति वदतोऽसतः ख्यातिरभून्न वा । यदि नाभून्न तत्ख्यातिनिराकरणम् । यद्यभूत्तथाऽपि । न चासतोऽसत्वेन भ्रान्तौ सत्वेन च ख्यातिर्नास्तीत्यत्र किञ्चिन्मानम् । असद्व्यवहारलोपप्रसङ्गाच्च ।**

*प्रका०*— असत्ख्यातिं विवृणोति **न चासत इत्यादिना** ।

*न्या०दी०*— नन्वसतो भावो भानं ख्यातिर्न विद्यते । सतोऽभावो बाधो न विद्यते । अतस्तदुभयवतो भ्रमविषयस्यार्थापत्त्या सदसद्विलक्षणत्वात्कथं सदसद्विलक्षणं किञ्चिदपि न प्रामाणिकमित्यत आह **न चेति** ॥ यद्भ्रमविषयस्य शुक्तिरजतादेः सद्वैलक्षण्यमुक्तं तदङ्गीक्रियत एव । ख्यात्यनुपपत्त्या यदसद्वैलक्षण्यमुक्तं न तद्युक्तम् । तथाहि । असतः ख्यातिरनुपपन्नेति किमसत्त्वेनोत सत्त्वेन । आद्ये विकल्पयति **असत इति** ॥ द्वितीयं दूषयति **यदीति** ॥ प्रतीत एव धर्मिणि धर्मनिषेधस्य दृष्टत्वादसतोऽप्रतीतौ न तत्र प्रतीतत्वधर्मो निषेद्धुं शक्यत इति भावः । आद्यं पराह

**यदीति** ॥ तथापि न तत्ख्यातिनिराकरणं सम्भवति । व्याघातादिति भावः । द्वितीयोऽपि किं भ्रान्तावभ्रान्तौ वा, असतः सत्त्वेन ख्यात्ययोगः ? द्वितीयोऽङ्गीकारपरास्तः । प्राचीनपक्षे दूषणान्तरं वदन्नाद्यं दूषयति **न चेति** ॥ प्राचीनपक्षे दूषणान्तरमाह **असदिति** ॥ न केवलमसतोऽप्रतीतौ तद्धर्मनिराकरणानुपपत्तिरपि तु न कोऽपि व्यवहारस्तत्र युज्यते । सर्वव्यवहाराणां प्रतीतिमूलत्वादिति भावः ।

*भा०दी०*— **भ्रमविषयस्येति** । शुक्तिरूप्यादेः ख्यातिबाधान्यथानुपपत्तिरूपार्थापत्त्येत्यर्थः ॥ **प्राचीनपक्ष इति** । असतोऽसत्त्वेन प्रतीतिर्नेति पक्षे मानाभावरूपदूषणान्तरमित्यर्थः । चशब्दार्थमाह **न केवलमिति** ॥ **तद्धर्मेति** । प्रतीतत्वरूपधर्मेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**यदविद्यमानं रूपं तस्य सत्त्वेन प्रतीतेरेव भ्रान्तित्वाच्च । अनिर्वचनीयत्वपक्षेऽपि सदिदं रजतमित्यविद्यमानसत्त्वप्रतीतिं विना न हि भ्रान्तित्वम् ।**

*प्रका०*— भ्रान्तो सत्त्वेन ख्यातिरसतो विद्यते इत्येतद्विवृणोति । **यदविद्यमानमित्यादिना** ।

*न्या०दी०*— असतो भ्रान्तौ सत्त्वेन प्रतीत्यभावे न मानमित्युक्तम् । तद्भावोऽपि कुत इत्यत आह **यदिति** ॥ शुक्त्यादेरधिष्ठानस्य योऽसद्रजतकाद्याकारस्तस्य सत्त्वेन प्रतीतेरेव भ्रान्तित्वात् । भ्रान्तावसतः सत्त्वेन प्रतीत्यनङ्गीकारे भ्रान्त्युच्छेदप्रसक्तेः साऽङ्गीकार्येति भावः ।

भवेदेतद्यदि भ्रान्तौ प्रतीयमानाकारस्यासत्त्वं सम्प्रतिपन्नं स्यात् । नैतदस्ति । अनिर्वचनीयत्वाङ्गीकारात् । अनिर्वचनीयप्रतीतौ भ्रमत्वोपपत्तेः । अतः कथं भ्रान्तावसतः सत्त्वेन प्रतीतिरित्यत आह **अनिर्वचनीयत्वेति** । अस्त्वनिर्वचनीयत्वं भ्रान्तौ प्रतीयमानाकारस्य तथापि न भ्रान्तावसतः सत्त्वेन प्रतीतिर्निवारयितुं शक्यते । तथाहि । तदनिर्वचनीयं रजतं किं भ्रान्तावनिर्वचनीयतयैव प्रतीयते सदिदमिति वा । नाद्यः । सदिदमिति प्रतीतिं विनाऽनिर्वचनीयमित्येव प्रतीतौ भ्रान्तित्वायोगात् । अन्यथा बाधकज्ञानस्यापि भ्रमत्वप्रसङ्गात् । परिभाषामात्रस्यान्यथयितुमपि शक्यत्वात् । द्वितीये च तत्सत्वं सदसद्वा । नाद्यः, अनिर्वचनीयत्वविरोधात् । भ्रान्तित्वानुपपत्तेश्च । द्वितीये प्राप्तमसतः सत्त्वेन प्रतिभानमिति भावः ।

*भा०दी०*— **तद्भावोऽपीति** । असतस्सत्त्वेन प्रतीतिभावोऽपीत्यर्थः ॥ **बाधकज्ञानस्यापीति** । श्रुतौ प्रतीतं रूपम् अनिर्वचनीयमेव न व्यारहारिकं सदपीति परस्य बाधकज्ञानोदयादिति भावः ॥ **अनिर्वचनीयत्वविरोधादिति** । सत्यभूतसत्ताश्रयस्य सद्वैलक्षण्यायोगादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**भ्रान्तिसत्त्वाङ्गीकारेऽप्यभ्रान्तं सदिदं रजतमित्यविद्यमानसत्वप्रतीतौ हि प्रवर्तते । तस्मादुभयविलक्षणं न किञ्चित् ।**

***न्या०दी०***— नानिर्वाच्यरजतस्य सत्त्वमसत् । किन्तु प्रातीतिकमतो नासतः सत्त्वेन प्रतीतिरित्यत आह **भ्रान्तीति** ॥ अस्तु तावदनिर्वचनीयस्य सत्त्वं प्रातीतिकम् । तथाऽप्यसतः सत्त्वेन ख्यातिर्दुष्परिहारा । तथाहि । तत्प्रातीतिकं सत्त्वं किं प्रातीतिकमित्येव प्रतीयत उत व्यावहारिकमिति ? नाद्यः । प्रवृत्त्यभावप्रसङ्गात् । द्वितीये तस्य व्यावहारिकत्वं सदसद्वा । नाद्यः । प्रातीतिकत्वविरोधात् । द्वितीये तु कथं नासतः सत्त्वेन ख्यातिरिति भावः । अतोऽसद्वैलक्षण्य-साधकार्थापत्तेर्दुष्टत्वान्न कस्यापि भ्रमविषयस्यानिर्वाच्यतेत्युपसंहरति **तस्मादिति** ॥

**गीतातात्पर्यनिर्णयः**

**'विश्वं सत्यम्' । 'यच्चिकेत सत्यमित्' ।**

**'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्**
**व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्यादि श्रुतेश्च ॥ १६ ॥**

***प्रका०***— तस्मान्नासद्वैलक्षण्यं भ्रान्तिविषयस्य । प्रपञ्चस्य सत्त्वाभावं श्रुतिर्दूषयति **विश्वं सत्यमित्यादिना** ।

***न्या०दी०***— माऽस्तु भ्रमविषयस्यानिर्वाच्यताऽत्रोच्यत इति । विश्वस्य तु भविष्यति । तत्रासद्वैलक्षणस्य सङ्गतत्वात् । सद्वैलक्षण्यं तु बाधान्यथानुपपत्त्या सिद्ध्यतीत्यतः श्रुतिविरोधान्नेति भावेनाह **विश्वमिति** ॥ विश्वस्य सदसद्विलक्षणत्वं विरुद्धं चेति भावेनाह **विश्वमिति** ॥ यशस्विनाविन्द्राबृहस्पती युवयोर्विश्वं सत्यमेव । कुतः ? युवयोः सत्यजगत्सृष्ट्यादिकर्म सर्वदेवता अपि जानन्ति यत इत्याहेत्यर्थः । बल्यादिभ्यः स्पृहणीयं वसु जेता इन्द्रादिभ्यो दाता । ईश्वरो यद्विश्वं चकार तत्सत्यमेव न मिथ्येत्यर्थः । सर्वज्ञो मनःप्रेरकः सर्वतो वरः स्वतन्त्रः परमेश्वरः पदार्थाननन्तकालेऽप्यबाधिततयैवाकरोदित्यर्थः ॥ १६ ॥

***भा०दी०***— मघवानावित्यस्यार्थो **यशस्विनाविति** । 'यशो वा व मघम्' इति कर्मनिर्णये यशोऽर्थकत्वे मघशब्दस्य श्रुत्युक्तेः । 'अच्छेन्द्राब्रह्मणस्पती' इत्यत्र ब्रह्मणस्पतिशब्दार्थो बृहस्पति-रित्युपेत्याह **इन्द्रबृहस्पती इति** । इन्द्राबृहस्पतीति भाव्यम् । ''देवताद्वन्द्वे च'' इति

पूर्वपदस्यानङ्गुक्तेः । 'युवोरिदापश्चन प्रमिनन्ति व्रतं वाम्' इति शेषस्यार्थमाह **युवयोरित्यादिना** । युवोः युवयोः । इदित्यस्यार्थ **एवेति** । व्रतमित्यस्यार्थः **सत्येत्यादि** । आपश्चनेति पदद्वयार्थः **सर्वदेवता अपीति** । प्रमिनन्ति = जानन्ति । 'तन्न मोघं वसु स्पार्हमुत जेतोत दाता' इति शेषस्यार्थोक्तिपूर्वमुपात्तपदानामर्थमाह **सर्वज्ञ इति** ॥ १६ ॥

**गीता**

## अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
## विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥ १७ ॥

***वि०वि०***— न केवलं प्रकृतिपुरुषावेव नित्यौ किं तर्हि देशतोऽपरिच्छिन्नं यद्वेदाकाशादिवस्तु तदपि नित्यमित्याह **अविनाशीति** । वेदादेः स्वाभाविकनाशाभावेऽपि केनचिच्छापादिना हेतुना विनाशः स्यादित्यत आह **विनाशमिति** । न केवलमविनाशः किन्तु ह्रासोऽपि नास्तीत्युक्तम् । **अव्ययस्येति** । नासत इत्यादेरपरा व्याख्या ॥ १७ ॥

***वा०ल०***— 'अविनाशि तु तद्विद्धि' इत्यत्र येन ब्रह्मणा इदं सर्वं जगत् ततं व्याप्तं तत् ब्रह्म देहादेरपि नाशाभावात् तु विशेषेण अविनाशि विद्धि ॥ १७ ॥

***सा०सं०***— ननु ''प्रकृतिः पुरुषः कालः'' इत्यादिवाक्यानाम् उपासनार्थत्वात्, सम्प्रदायस्य च मूलानिश्चयात्, प्रकृतिपुरुषयोः स्वरूपस्यैवासिद्धेः पुनरनुमानस्य व्याप्त्यसिद्धिरित्याशङ्क्य भगवान् किमिदानीं प्रकृत्यादिस्वरूपसाधनेन । किञ्चेदं नित्यम् इदं नित्यमिति प्रत्येकमुक्तेन च । यद्देशतो अनन्तं तत्सर्वं नित्यमेवेत्येवं सङ्ग्राहकसङ्गृहीतं वर्णादि जीवादन्यदपि अस्ति । तद्व्याप्तिग्रहणस्थलं भविष्यतीत्याह **अविनाशि त्विति** । **येनेदं सर्वं ततं** व्याप्तं तदकारादिवर्णजातम्, अव्याकृता-काशश्चेत्येवमादिसर्वम् **अविनाशि तु** नित्यमेवेति । तुरेवेत्यर्थः । अनादि चेत्यपि ग्राह्यम् ।

ननु ''सुप्यजातौ णिनिस्ताच्छील्ये'' (३-२-७८) इति सूत्रेण सोपसर्गस्यापि छान्दस-ताच्छीलिकणिनिप्रत्ययान्ताविनाशिशब्देन स्वाभाविकविनाशाभावोक्तावपि शापेन वा, बलवत्प्रय-त्नादिना वा विनाशः किं न स्यादित्यत आह **विनाशमिति** । **अस्य** व्याप्तस्य वस्तुनः **विनाशं** ध्वंसम् **कश्चित्** अपि **कर्तुं नार्हति** । कुत इत्यत उक्तम् **अव्ययस्येति** । ह्रासहीनस्येत्यर्थः । ह्रास एव नास्ति तादृशस्य नाशं न कोऽपि कर्तुमीष्ट इति किमु वाच्यमित्यर्थः ॥ १७ ॥

***अ०प्र०***— तत्र सत्स्वभावं अविनाशि वस्तुसामान्येनोक्तं विशेषतो दर्शयति **अविनाशीति** ।

येन[1], सर्वं[2], इदं[3], ततं[4], तत्[5], अविनाशि[6], इति[7], विद्धि[8], कश्चिदपि[9], अस्य[10], अव्ययस्य[11], विनाशं[12], कर्तुं[13], नार्हति[14] इत्यन्वयः ।

येन[1], सर्वं = आगमापायिधर्मकम्[2], इदं = देहादिकं[3], ततं = विस्तृतं साक्षित्वेन व्याप्तं वा[4], तत्, अविनाशीति विद्धि = विनाशशून्यमिति जानीहि[7], तत्र हेतुमाह, कश्चिदपि अस्याव्ययस्य विनाशं कर्तुं नार्हति ॥ १७ ॥

**भाष्यम्**

**किं बहुना । यद्देशतोऽनन्तं तन्नित्यमेव वेदाद्यन्यदपि इत्याह— अविनाशीति । नापि शापादिना विनाश इत्याह— विनाशमिति । अव्ययं च तत् । ॥ १७ ॥**

***प०टी०***— ननु नैतावताऽपि सृष्ट्युपपत्तिरित्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **किमिति** । गौतमशापादिना वेदादेर्विनाशात् कुतो नाशाभावः ? इत्यत आह **नापीति** । शापादिना व्ययोऽपि नास्ति कुतो नाश इत्याह **अव्ययं चेति** ॥ १७ ॥

***न०टी०***— यदेतत्सूचितं प्रकृत्यादिनित्यत्वमागमादपि सिद्धमिति, तदागमविशेषस्य नित्यत्व एव घटते, नान्यथेति भावेनोत्तरश्लोकमवतार्य व्याचष्टे **किं बहुनेत्यादिना** । युगपदनेकदेशेष्वभिधीयमानप्रत्यभिज्ञयैकत्वावगतेर्देशतोऽनन्तत्वं वेदस्य । देशतोऽनन्तत्वं ह्यनन्तदेशवर्तित्वम् । अतस्तन्न्यायेन देशस्यापि नित्यत्वमिति, **आदिशब्देन** देशः । कालश्च, तस्यापि सर्वगतत्वात् । शापेन युगभेदेन वा विस्मरणादिरेव वेदस्य, न नाश इत्याह **नापीति** । न केवलमविनाशः, किन्तु ह्रासोऽपि नास्तीत्याह **अव्ययं चेति** ॥ १७ ॥

***प्र०दी०***— अविनाशि त्विति श्लोके सर्वगतस्य नित्यत्वमुच्यते । तत् प्रकृतानुपयुक्तमित्याशङ्क्य पूर्वार्धं तावत् प्रकृतोपयोगं सूचयन् व्याचष्टे— **किं बहुनेति** । वाक्यानामुपासनार्थत्वात् सम्प्रदायस्य च मूलानिश्चयात् प्रकृतिब्रह्मणोः स्वरूपस्यैवासिद्धेः जीवादन्यस्यानादिनित्यस्याभावात् पुनरनुमानस्य व्याप्त्यसिद्धिरित्याशङ्क्य किं बहुना प्रकृत्यादिस्वरूपसाधनेन ? किं चेदं नित्यमिति बहुना प्रत्येकमुक्तेन । यद्देशतोऽनन्तं तन्नित्यमेवेत्येकसङ्ग्राहकसङ्गृहीतं वेदादिकं जीवादन्यदप्यस्ति तद्व्याप्तिग्रहणस्थलं भविष्यतीत्याह भगवानित्यर्थः । वेदशब्देन वर्णा गृह्यन्ते । आदिपदेनाकाशादयः । एतेषां च प्रत्यभिज्ञा(ना)दिना नित्यत्वसिद्धिः । ननु कालावयवाः क्षणादयः सर्वगता अपि न नित्याः । सत्यम् । न ह्यत्र व्याप्तिरुच्यते । किन्तु बहूक्तिपरिहारायोपलक्षणमात्रमिति । तुशब्दार्थं

एवेति । तथाप्युत्तरार्धः पुनरुक्त इत्यत आह— **नापीति** । पूर्वं स्वाभाविको नाशो निषिद्धः । अविनाशीति ताच्छीलिकप्रत्ययात् । अत्र तु नैमित्तिकः । कश्चित् कर्तुं नार्हतीति वचनात् । प्रागनुक्तस्य वेदादेरव्ययत्वस्य कथमनुवाद इत्यत आह— **अव्ययश्चेति** । विधानमेवेदं कैमुत्येन शापादिना विनाशस्याभावं साधयितुमिति भावः ॥ १७ ॥

*भा०दी०*— **वाक्यानामिति** । 'प्रकृतिपुरुषः', 'सदेव सोम्ये'त्यादि ब्रह्मादिबोधकवाक्यानामित्यर्थः । **अनुमानस्येति** । चेतननित्यत्वानुमानस्य न त्वेवाहमित्यत्रोक्तस्येत्यर्थः । **प्रत्यभिज्ञानादिनेति** । तदेवेदं वचनमिति प्रत्यभिज्ञानादिति तत्त्वनिर्णयोक्तेरिति भावः । "यावद्ब्रह्म विष्ठितं तावती वाक्", "अनादिर्वाऽयमाकाश" इत्यादिरादिपदार्थः । **ताच्छीलिकेति** । "सुप्यजातौ णिनिस्ताच्छील्ये" सोपसर्गस्यापि न शेस्ताच्छीलिछान्दसणिनिप्रत्यये विनाशीति सिद्धेरिति भावः ॥१७॥

*भा०र०*— **प्रकृतानुपयुक्तमिति** । उक्तानुमानस्य व्याप्तिसिद्धये दृष्टान्त उपदर्शनीय इति प्रकृतिपुरुषरूपदृष्टान्ते अनादिनित्यत्वं हि पूर्वश्लोके प्रकृतम् । न चात्र सर्वगतस्य नित्यत्ववचनमुपयुज्यते । न चान्यस्य ससाध्यकस्य दृष्टान्तस्याभिधानम् । 'अविनाशि' इत्यत्र क्रियत इति वाच्यम् । पूर्वेणैवेष्टसिद्धेरस्याप्रयोजनत्वादिति भावः । "येन सर्वमिदं ततम्" इत्यस्य "यद् देशतोऽनन्तम्" इति "अविनाशि तु" इत्यस्य "नित्यमेव" इति व्याख्यानादाह **व्याचष्ट इति** । व्याचक्षाण एतावतारयतीत्यर्थः । पूर्वश्लोके प्रस्तुतानुमाने प्रकृतिपुरुषौ दृष्टान्त इत्यभिधाय तत्स्वरूपासिद्धिशङ्कापरिहाराय यानि "सदेव सोम्य", "प्रकृतिं पुरुषं चैव विद्ध्यनादी" इत्यादीनि श्रुतिस्मृत्यादिरूपाणि वाक्यान्यभिसंहितानि तानि "योषितमग्निं ध्यायीत" इत्यादीनीवोपासनार्थानि । यश्च सम्प्रदाय उक्तः सोऽपि मूलानिश्चयादप्रमाणम् । न च दर्शनं तन्मूलम् । परदर्शनस्यास्माभिः सम्प्रदायमूलत्वेन ज्ञातुमशक्यत्वात् । अतो वाक्यसम्प्रदाययोः प्रकृतिपुरुषस्वरूपनिर्धारणासामर्थ्यादन्यस्य दृष्टान्तस्याभावादनुमाने व्याप्त्यनिश्चय इत्यभिप्रेत्याह **वाक्यानामित्यादि** । "किं बहुना" इत्यनन्तरं शेषमाह **प्रकृत्यादिस्वरूपसाधनेनेति** । तदेवावर्त्य किमित्यनन्तरं चशब्दं भाष्योक्तबहुभावं विवृण्वन् बहुनेत्यनन्तरं प्रत्येकमुक्तेनेत्येतच्चाध्याहृत्य योजयति **किञ्चेदमिदं नित्यमिति बहुना प्रत्येकमुक्तेनेति** । "अन्यदपि" इति भाष्ये प्रकृतिपुरुषयोः प्रस्तुतत्वेन प्रतियोगित्वप्रतीतिं व्युदस्य जीवादन्यस्यानादिनित्यस्याभावाद् व्याप्त्यसिद्धिरिति कृतचोद्यपरिहारायाह **जीवादिति** ।

ननु 'अविनाशि' इत्यत्र वेदादेरनादित्वमप्यभिप्रेतम् । दृष्टान्तत्वेनाभिमते वेदादौ साध्यवत् साधनानुगतेर्वक्तव्यत्वात् । अन्यथा साधनवैकल्यापत्तेः । न च वेदस्यानादित्वं युक्तमङ्गीकर्तुम् ।

क्रमविशेषविशिष्टवर्णानामेव वेदत्वात् क्रमस्य च बुद्धिघटितत्वेन तज्जन्यत्वावश्यम्भावादित्यत आह **वेदशब्देनेति** ॥ क्रमविशेषविशिष्टवर्णा वेद इति क्रमपरित्यागेन विशेष्यभूता वर्णा लक्षणया वेदयन्ति ज्ञापयन्तीति योगेन वाऽत्र ग्राह्या इत्यर्थः । तेषां चानादित्वान्नित्यत्वाच्च साध्यसाधनानुगतिः सम्भवतीति त एव व्याप्तिग्रहणस्थलं भविष्यन्तीति भावः ।

ननु नात्रोदशब्देन वर्णा ग्राह्याः । मुख्यार्थानुपपत्तेरभावेन लक्षणाया अयोगात् योगाद् रूढे-र्बलवत्त्वेन योगायोगाच्च । न च क्रमविशेषविशिष्टवर्णा एव वेदः । क्रमश्च बुद्ध्युपाधिको जन्य इति न तस्यानादित्वम् । ततश्च साधनवैकल्यमिति बाधकेन मुख्यार्थत्याग इति वाच्यम् । "नित्या वेदाः पुराणाद्याः" इति तत्त्वसङ्ख्यानटीकायां "नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वम् । तच्च वेदानां "नित्या वेदाः समस्ताश्च", "अनादिनिधना" इत्यादिप्रमाणसिद्धम् इत्युक्तत्वात् । युक्तं चैतत् । क्रमस्य सदेश्वरबुद्धिस्थत्वात् । अत एवोक्तं विष्णुतत्त्वनिर्णये "सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्" इति । एवं चानादित्वसिद्धेर्न साधनवैकल्यशङ्का । एतेनैव विनशिष्णुक्रमवतो वेदस्यानित्यत्वावश्यम्भावात् साध्यवैकल्यं स्यादित्यतो वेदशब्देन वर्णग्रहणमित्यपास्तम् । वेद-नित्यत्वस्योक्तटीकाद्यभिप्रेतत्वात् । किञ्च वेदस्यानित्यत्वमयुक्तम् । क्रमविशिष्टवर्णा एव हि वेदः । क्रमश्च बुद्धिनिमित्तक एव न स्वतः । ततश्च सर्वेषां सर्वथा वर्णविषयविवक्षितक्रमोपाधिभूतबुद्ध्युपरम एव वेदे विनाशो वक्तव्यो न तु घटादाविवापरः । न चेश्वरस्य तथाविधबुद्ध्युपरमो युज्यते । तस्य सदा सर्वज्ञत्वात् । तथा च न साध्यवैकल्यशङ्का च । नापि भाष्ये "यद् देशतोऽनन्तम्" इति दैशिकानन्त्यमुच्यमानं न वेदे । मानाभावात् । वर्णेषु तूपपद्यत इति वेदशब्देन वर्णग्रहणमिति वाच्यम् । "यावद् ब्रह्म विष्ठितं तावती वाक्" इति श्रुतौ ब्रह्मतुल्यत्वेन वेदानां वाक्छब्दितानां सर्वदेशकालव्यापितयाऽवस्थानाभिधानात् । तस्माद् वेदशब्देन रूढ्या मुख्यार्थग्रहणेऽनुपपत्त्याभावान्न लक्षणादिना वर्णा ग्राह्या इति चेत् ।

अत्र वदन्ति । क्रमविशेषविशिष्टानां वर्णानां वेदत्वान्नित्यानां सर्वगतानां च तेषां वर्णानां स्वतः क्रमस्यायोगेनाभिव्यक्तिगतस्यैव तस्य वक्तव्यत्वादभिव्यक्तेश्च जन्यत्वेन तद्गतक्रमस्यापि जन्यत्वा-ज्जन्यक्रमविशिष्टवर्णस्वरूपस्य वेदस्य नानादित्वं मुख्यमस्ति । यथोक्तं तर्कताण्डवे "अनादित्वश्रुतिर्न वेदस्वरूपानादित्वपरा । बाधात् । किन्त्वानुपूर्व्या अनन्यथात्वपरा" इति । न चैवं वेदस्यापौरुषेयत्वं कथमिति वाच्यम् । क्रमस्य कृतकत्वेऽप्याधुनिकाध्यापकेन स्वबुद्धिस्थपूर्वपूर्वदिवसीयक्रमानुसारेणैव उत्तरोत्तरदिवसेष्विव ईश्वरेणापि स्वबुद्धिस्थप्रवाहानादिपूर्वपूर्वकल्पीयक्रमानुसारेणैव उत्तरोत्तरकल्पेष्वपि वेदस्योच्चारितत्वेन रचनीयत्वाभावेऽप्यनियतानुपूर्वीरहितत्वरूपस्य स्वप्रतिपाद्यगोचरज्ञानत्वावच्छिन्न-

कारणताप्रतियोगिककार्यतानाश्रयत्वस्य वा । स्वप्रतिपाद्यगोचरयथार्थज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यतानाश्रयत्वरूपस्य वाऽपौरुषेयत्वस्य वेदेऽङ्गीकृतत्वात् । अत एव सुधायां "नियतैकप्रकारकत्वमपौरुषेयत्वम्" इत्युक्तम् । एवंविधापौरुषेयत्वरूपमनादित्वमभिसन्धायैव "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा", "विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः", "अनादिनित्या सा" इत्यादीनि प्रमाणानि प्रवृत्तानि । गायत्र्यधिकरणे च गायत्रीरूपवेदस्यानादित्वात् तत्स्वभावस्य गानत्राणकर्तृत्वादिरूपप्रवृत्तिनिमित्तस्य नेशाधीनत्वमिति शङ्का "अनादीनां गुणादीनां यथा गुण्यादितन्त्रता । तथाऽनादिश्रुतेरस्तु क्षेमायेश्वरतन्त्रता ॥ अकर्तुमन्यथाकर्तुं कर्तुं चास्तीश्वरस्य यत् । सामर्थ्यं तेन तत् तन्त्रमनाद्यपि च सादिवत्" इति समाधानं च उक्तापौरुषेयत्वरूपानादित्वाभिप्रायेणैव प्रवर्तितम् । एवं च क्रमविशिष्टवर्णात्मके वेदे स्वरूपानादित्वाभावात् तद्ग्रहणे साधनवैकल्यं स्यादेवेति स्वरूपत एवानादिस्वभावा वर्णा एव वेदशब्देन ग्राह्या इति टीकायां साधूक्तमिति ।

आकाशादय इत्यत्र आकाशशब्देन अव्याकृताकाशो ग्राह्यः । न तु भूताकाशः । तत्र "न हि देशकालाभ्यां परिच्छिन्नस्य" इति सुधया "अनन्तत्वं कथं तिष्ठेद् भूतेऽन्तत्रयसंयुते" इति चन्द्रिकया च देशपरिच्छेदस्य विभावितत्वात् । "अव्याकृताकाशादयः" इति पाठे न काऽप्यनुपपत्तिः । आदिशब्देन प्रकृतिमहालक्ष्मीश्वरकालप्रवाहा ग्राह्याः । **एतेषां** च वर्णादीनाम् । **प्रत्यभिज्ञानेति** । पूर्वं गकारं श्रुतवतः पुनस्तच्छ्रवणे स एवायं गकार इति प्रत्यभिज्ञा जायते । सा च प्रत्यभिज्ञान्तरवत् सोऽयमिति तत्तेदन्ताधिकरणाभेदावगाहिनी उच्चारणजन्यत्वं निरुणद्धि । न हि प्राक्तनस्येदानीन्तनेनोत्पत्तिर्युज्यते । एवं पूर्वं पूर्वतरमित्यनादिनित्यतामेव वर्णनामवगमयति । अन्यथा तत्तद्वादिभिस्तत्तद्वस्तुनः स्थायित्वे प्रमाणत्वेन प्रत्यभिज्ञा न वक्तव्या स्यादिति तया वर्णनामनादिनित्यत्वं सिद्ध्यति । आदिशब्देन वर्णो नित्यः ध्वनिशब्दत्वव्याप्यभिन्नत्वे सति श्रावणत्वाच्छब्दत्ववत्, श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवदित्याद्यनुमानग्रहः । ध्वनौ शब्दत्वव्याप्ये तारत्वादौ चाव्यभिचाराय ध्वनिशब्दत्वव्याप्यभिन्नत्वे सतीति हेतुविशेषणम् । इतरानुमाने नित्यद्रव्यं वर्ण एवेति तेनापि वर्णनित्यत्वसिद्धिः । आकाशस्य च "अनादिर्वा अयमाकाशः", "आकाशवत् सर्वगतश्च नित्यः", "स यथाऽनन्तोऽयमाकाशः" इत्यादिप्रमाणैरवकाशोपादानप्रागभावयोर्बुद्ध्यनारोहादियुक्तिभिः कूटस्थनित्यतावगाहिसाक्षिणा चानादिनित्यत्वसिद्धिः । प्रकृतिमहालक्ष्मीश्वरकालप्रवाहाणां "अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति । न ह्येतानि कदाचनोत्पद्यन्ते न विलीयन्ते पुरुषः प्रकृतिरात्मा कालः" इति वियदधिकरणोदाहृतप्रमाणेन तत्रापीश्वरस्य "असम्भवस्तु सतोऽनुपपत्तेः" इत्यधिकरणे अनुत्पत्तिः, "नाऽत्माऽश्रुतेः" इत्यधिकरणे विनाशाभावश्च वर्णित

इति ताभ्यां चानादिनित्यत्वसिद्धिः । उदाहृतश्रुतावात्मपरमात्मपुरुषादिपदैर्जीवचैतन्यप्रकृतिस्वरूप-कालप्रवाहा उच्यन्ते । तदभिमानिनी प्रकृतिश्चेति टीका । **नित्यत्वसिद्धिरिति** । अनादिनित्यत्व-सिद्धिः । यद्यपि तत्त्वसङ्ख्याने "पुराणाद्याः कालः प्रकृतिरेव च । नित्यानित्यम्" इति कालप्रकृत्योः पुराणतुल्यकक्ष्यतया नित्यानित्यत्वमुक्तम् । तथाऽपि सक्षणाद्यवयवकालस्य सविकारायाश्च प्रकृतेरेव तत्र नित्यानित्यत्वमभिप्रेतम् । "एषां विकारोऽनित्यः स्यात्" इत्युक्तेः । अत्र तु कालप्रवाहस्य प्रकृतिस्वरूपस्यैवानादिनित्यत्वमभिसंहितम् । तथा चानुव्याख्याने "कालप्रवाह एवैको नित्यः" इति । तत्त्वप्रकाशिकायां च "अविकृतप्रकृतिरेव प्रकृतिस्वरूपशब्देन गृहीता" इति । "यद् देशतो-ऽनन्तं तन्नित्यम्" इत्यत्र सर्वगतत्वेन नित्यत्वं विजिज्ञापयिषितमिति मत्वा चोदयति **ननु कालेति** । नात्र सर्वगतत्वेन हेतुना नित्यत्वं ज्ञातव्यम् । किन्तु प्रमाणान्तरेण । तच्चोदाहृतं प्रत्यभिज्ञादि । आनन्त्याभिधानं तु काकवद् देवदत्तगृहमित्यत्र देवदत्तगृहे काक इव व्यावृत्ति-प्रत्यायकमात्रमित्याह **सत्यमित्यादिना** । इमौ च शङ्कापरिहारौ गीताभाष्यारूढौ कुर्वन्नाह **इति तुशब्देति** । इति शङ्कापरिहारौ सूचयन् गीतास्थतुशब्दः एवकारेण भाष्ये व्याख्यात इत्यर्थः । तुशब्दार्थ एवेतीति वाक्यान्तरमित्यप्याहुः ।

जीवादन्यस्यानादिनित्यस्याभावादनुमानस्य व्याप्त्यसिद्धिरिति शङ्कासमुत्सादनाय 'अविनाशि' इति श्लोकः । तत्र पूर्वार्धो यद्यपि वर्णाव्याकृताकाशादिव्याप्तिग्रहणस्थलप्रदर्शनार्थोऽस्तु । तथाऽपि "विनाशमव्ययस्य" इत्युत्तरार्धः पूर्वार्धोक्तार्थाविशेषात् पुनरुक्तिरूप इति भावेन शङ्कते **तथा-ऽपीति** । स्वाभाविको नाश इति कथं विज्ञेयम् ? विनाशोऽस्यास्तीति "अत इनिठनौ" इतीनि-प्रत्यये विनाशवत्त्वमात्रप्रतीतेरित्यत आह **ताच्छीलिकेति** ॥ नात्र तद्धित इनिरिति शक्यं वक्तुम् । न विद्यते विनाशो यस्येति बहुव्रीहिणैवोक्तलाभात् । अत इतरस्मिन् प्रत्यये निष्पादनीयेऽन्यस्या-सम्भवाण्णिनिर्निष्पाद्यः । स च "सुप्यजातौ णिनिस्ताच्छील्ये" इति सूत्रविहित इति ताच्छी-लिकः । तस्माच्च प्रत्ययान्न विनष्टुं शीलमस्येत्यविनाशीति स्वाभाविकविनाशो निषिद्ध इति ज्ञायत इत्यर्थः ।

नन्वजात्यर्थे सुपि धातोर्णिनिप्रत्ययो भवति, तत्स्वभावतायां गम्यमानायामिति सूत्रं व्याकुर्वता वृत्तिकृता पुनः सुबुक्तिः प्रादिनिवृत्त्यर्थेत्युक्तम् । उदाहृतं चोष्णभोजीत्यादि । तत् कथमत्र वीत्युपसर्ग उपपदे नशेर्णिनिः । अत एव "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि" इत्यत्र सुपीत्यनुवृत्तावुपसर्गोक्त्या ज्ञायते, अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति वैयाकरणा इति चेन्न । भाष्ये सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् ? अनुपसर्ग इत्येवं तदभूत् । इदं तु सुम्मात्रे

यथा स्यात् । उदासारिण्यः प्रत्यासारिण्यः इति भाषणाद् भाष्यकारमतेनात्रोक्तार्थकणिन्युपपत्तेः । तथा च "स बभूवोपजीविनाम्", "न्यषेधि शेषोऽप्यनुयायिवर्गः" "पतत्यधो धाम विसारि सर्वतः" इत्यादिप्रयोगाः मनोरमायामुक्ताः । **अत्र तु** उत्तरार्धे । **नैमित्तिकः** शापादिहेतुजन्यः । नाशो निषिद्ध इति वर्तते ।

ननु 'अव्ययस्य' इति किमनुवादो विधानं वा । नाद्यः, प्रागनुक्तत्वात् । न च 'अविनाशि' इत्यनेनेदमुक्तमिति वाच्यम् । उक्तप्रत्ययेन स्वाभाविकाविनाशस्य तत्रोक्तत्वेनाव्ययपदोक्तह्रासादिरूपाविनाशस्य तेनानुक्त्याऽनुवादायोगात् । न द्वितीयः, अनुवादकेदंशब्दसामानाधिकरण्यायोगात् । विधाने प्रयोजनाभावाच्चेत्याशङ्क्य विधानपक्ष एवाभ्युपगम्यते । हेत्वर्थगर्भं चेदम् । अस्य प्रकृतस्य वेदादेरव्ययत्वम् अव्ययत्वाच्चास्य नाशं कर्तुं कोऽपि न शक्नोतीत्युक्तौ यत्नगौरवमिति तल्लाघवाय सामानाधिकरण्यमस्येत्यनेनाव्ययपदस्य, तत्र च यदाऽव्ययशब्दितं ह्रासमपि कश्चित् कर्तुं नार्हति तदा किमु वक्तव्यं शापादिना स्वरूपविनाशं कर्तुं नार्हतीति कैमुतिकन्यायेन विनाशाभावसाधनं विधानप्रयोजनमिति भावेन "अव्ययं च तत्" इति भाष्यमवतारयति **प्रागनुक्तस्येत्यादिना** । तत्तु वेदादि न केवलमविनाशि, किन्त्वव्ययं चेति भाष्यार्थः स्पष्ट इति नोक्तः । केचित्तु 'कैमुत्येन' इत्यत्र अव्ययशब्दस्य "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" इत्यादावविकारिणि प्रयोगाद् व्ययं विकारमपि कर्तुं नार्हति किमुत शापादिना स्वरूपनाशमिति कैमुतिकन्यायेनेत्यर्थ इत्याहुः । अव्ययशब्दस्य नाशसामान्याभावार्थकत्वाद् यदा नाशसामान्यमपि कर्तुं नार्हति तदा स्वरूपनाशादिरूपं तद्विशेषं न कर्तुमर्हतीति किमु वक्तव्यमिति कैमुत्येनेत्यर्थ इत्यप्यपरे ॥ १७ ॥

***गीताक्षरार्थस्तु***— "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तमः", "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इत्यादिवाक्यानामुपासनार्थत्वात् सम्प्रदायस्य च मूलानिश्चयात् प्रकृतिब्रह्मणोः स्वरूपस्यैवासिद्धेर्जीवादन्यस्यानादिनित्यस्याभावात् पुनरनुमानस्य व्याप्त्यसिद्धिरित्याशङ्क्य, किं बहुना प्रकृत्यादिस्वरूपसाधनेन । किञ्चेदमिदं नित्यमिति बहुना प्रत्येकमुक्तेन । यद् देशतोऽनन्तं तन्नित्यमेवेत्येवं सङ्ग्राहकसङ्गृहीतं वर्णादिकं जीवादन्यदप्यस्ति । तद् व्याप्तिग्रहणस्थलं भविष्यतीति भावेन उच्यते **अविनाशि त्विति** । येन वर्णाव्याकृताकाशप्रकृतिमहालक्ष्मीश्वरकालप्रवाहरूपेण वस्तुना इदं प्रत्यक्षादिप्रमाणसिद्धमर्थजातं ततं व्याप्तम्, यद् देशतोऽनन्तं तत् न विनष्टुं शीलमस्येत्यविनाशि स्वाभाविकनाशशून्यं तु नित्यमेव । अनादीत्यपि ग्राह्यम् । त्वं विद्धि विजानीहि । ननु स्वाभाविक-

इति ताभ्यां चानादिनित्यत्वसिद्धिः । उदाहृतश्रुतावात्मपरमात्मपुरुषादिपदैर्जीवचैतन्यप्रकृतिस्वरूप-कालप्रवाहा उच्यन्ते । तदभिमानिनी प्रकृतिश्चेति टीका । **नित्यत्वसिद्धिरिति** । अनादिनित्यत्व-सिद्धिः । यद्यपि तत्त्वसङ्ख्याने "पुराणाद्याः कालः प्रकृतिरेव च । नित्यानित्यम्" इति कालप्रकृत्योः पुराणतुल्यकक्ष्यतया नित्यानित्यत्वमुक्तम् । तथाऽपि सक्षणाद्यवयवकालस्य सविकारायाश्च प्रकृतेरेव तत्र नित्यानित्यत्वमभिप्रेतम् । "एषां विकारोऽनित्यः स्यात्" इत्युक्तेः । अत्र तु कालप्रवाहस्य प्रकृतिस्वरूपस्यैवानादिनित्यत्वमभिसंहितम् । तथा चानुव्याख्याने "कालप्रवाह एवैको नित्यः" इति । तत्त्वप्रकाशिकायां च "अविकृतप्रकृतिरेव प्रकृतिस्वरूपशब्देन गृहीता" इति । "यद् देशतो-ऽनन्तं तन्नित्यम्" इत्यत्र सर्वगतत्वेन नित्यत्वं विजिज्ञापयिषितमिति मत्वा चोदयति **ननु कालेति** । नात्र सर्वगतत्वेन हेतुना नित्यत्वं ज्ञातव्यम् । किन्तु प्रमाणान्तरेण । तच्चोदाहृतं प्रत्यभिज्ञादि । आनन्त्याभिधानं तु काकवद् देवदत्तगृहमित्यत्र देवदत्तगृहे काक इव व्यावृत्ति-प्रत्यायकमात्रमित्याह **सत्यमित्यादिना** । इमौ च शङ्कापरिहारौ गीताभाष्यारूढौ कुर्वन्नाह **इति तुशब्देति** । इति शङ्कापरिहारौ सूचयन् गीतास्थतुशब्दः एवकारेण भाष्ये व्याख्यात इत्यर्थः । तुशब्दार्थ एवेतीति वाक्यान्तरमित्यप्याहुः ।

जीवादन्यस्यानादिनित्यस्याभावादनुमानस्य व्याप्त्यसिद्धिरिति शङ्कासमुत्सादनाय 'अविनाशि' इति श्लोकः । तत्र पूर्वार्धो यद्यपि वर्णाव्याकृताकाशादिव्याप्तिग्रहणस्थलप्रदर्शनार्थोऽस्तु । तथाऽपि "विनाशमव्ययस्य" इत्युत्तरार्धः पूर्वार्धोक्तार्थाविशेषात् पुनरुक्तिरूप इति भावेन शङ्कते **तथा-ऽपीति** । स्वाभाविको नाश इति कथं विज्ञेयम् ? विनाशोऽस्यास्तीति "अत इनिठनौ" इतीनि-प्रत्यये विनाशवत्त्वमात्रप्रतीतेरित्यत आह **ताच्छीलिकेति** ॥ नात्र तद्धित इनिरिति शक्यं वक्तुम् । न विद्यते विनाशो यस्येति बहुव्रीहिणैवोक्तलाभात् । अत इतरस्मिन् प्रत्यये निष्पादनीयेऽन्यस्या-सम्भवाण्णिनिर्निष्पाद्यः । स च "सुप्यजातौ णिनिस्ताच्छील्ये" इति सूत्रविहित इति ताच्छी-लिकः । तस्माच्च प्रत्ययान्न विनष्टुं शीलमस्येत्यविनाशीति स्वाभाविकविनाशो निषिद्ध इति ज्ञायत इत्यर्थः ।

नन्वजात्यर्थे सुपि धातोर्णिनिप्रत्ययो भवति, तत्स्वभावतायां गम्यमानायामिति सूत्रं व्याकुर्वता वृत्तिकृता पुनः सुबुक्तिः प्रादिनिवृत्त्यर्थेत्युक्तम् । उदाहृतं चोष्णभोजीत्यादि । तत् कथमत्र वीत्युपसर्गे उपपदे नशेर्णिनिः । अत एव "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि" इत्यत्र सुपीत्यनुवृत्तावुपसर्गोक्त्या ज्ञायते, अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति वैयाकरणा इति चेन्न । भाष्ये सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् ? अनुपसर्ग इत्येवं तदभूत् । इदं तु सुम्मात्रे

यथा स्यात् । उदासारिण्यः प्रत्यासारिण्यः इति भाषणाद् भाष्यकारमतेनात्रोक्तार्थकणिन्युपपत्तेः । तथा च "स बभूवोपजीविनाम्", "न्यषेधि शेषोऽप्यनुयायिवर्गः" "पतत्यधो धाम विसारि सर्वतः" इत्यादिप्रयोगाः मनोरमायामुक्ताः । **अत्र तु** उत्तरार्धे । **नैमित्तिकः** शापादिहेतुजन्यः । नाशो निषिद्ध इति वर्तते ।

ननु 'अव्ययस्य' इति किमनुवादो विधानं वा । नाद्यः, प्रागनुक्तत्वात् । न च 'अविनाशि' इत्यनेनेदमुक्तमिति वाच्यम् । उक्तप्रत्ययेन स्वाभाविकाविनाशस्य तत्रोक्तत्वेनाव्ययपदोक्तह्रासादिरूपाविनाशस्य तेनानुक्त्याऽनुवादायोगात् । न द्वितीयः, अनुवादकेदंशब्दसामानाधिकरण्यायोगात् । विधाने प्रयोजनाभावाच्चेत्याशङ्क्य विधानपक्ष एवाभ्युपगम्यते । हेत्वर्थगर्भं चेदम् । अस्य प्रकृतस्य वेदादेरव्ययत्वम् अव्ययत्वाच्चास्य नाशं कर्तुं कोऽपि न शक्नोतीत्युक्तौ यत्नगौरवमिति तल्लाघवाय सामानाधिकरण्यमस्येत्यनेनाव्ययपदस्य, तत्र च यदाऽव्ययशब्दितं ह्रासमपि कश्चित् कर्तुं नार्हति तदा किमु वक्तव्यं शापादिना स्वरूपविनाशं कर्तुं नार्हतीति कैमुतिकन्यायेन विनाशाभावसाधनं विधानप्रयोजनमिति भावेन "अव्ययं च तत्" इति भाष्यमवतारयति **प्रागनुक्तस्येत्यादिना** । तत्तु वेदादि न केवलमविनाशि, किन्त्वव्ययं चेति भाष्यार्थः स्पष्ट इति नोक्तः । केचित्तु 'कैमुत्येन' इत्यत्र अव्ययशब्दस्य "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" इत्यादावविकारिणि प्रयोगाद् व्ययं विकारमपि कर्तुं नार्हति किमुत शापादिना स्वरूपनाशमिति कैमुतिकन्यायेनेत्यर्थ इत्याहुः । अव्ययशब्दस्य नाशसामान्याभावार्थकत्वाद् यदा नाशसामान्यमपि कर्तुं नार्हति तदा स्वरूपनाशादिरूपं तद्विशेषं न कर्तुमर्हतीति किमु वक्तव्यमिति कैमुत्येनेत्यर्थ इत्यप्यपरे ॥ १७ ॥

***गीताक्षरार्थस्तु***— "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तमः", "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इत्यादिवाक्यानामुपासनार्थत्वात् सम्प्रदायस्य च मूलानिश्चयात् प्रकृतिब्रह्मणोः स्वरूपस्यैवासिद्धेर्जीवादन्यस्यानादिनित्यस्याभावात् पुनरनुमानस्य व्याप्त्यसिद्धिरित्याशङ्क्य, किं बहुना प्रकृत्यादिस्वरूपसाधनेन । किञ्चेदमिदं नित्यमिति बहुना प्रत्येकमुक्तेन । यद् देशतोऽनन्तं तन्नित्यमेवेत्येवं सङ्ग्राहकसङ्गृहीतं वर्णादिकं जीवादन्यदप्यस्ति । तद् व्याप्तिग्रहणस्थलं भविष्यतीति भावेन उच्यते **अविनाशि त्विति** । येन वर्णाव्याकृताकाशप्रकृतिमहालक्ष्मीश्वरकालप्रवाहरूपेण वस्तुना इदं प्रत्यक्षादिप्रमाणसिद्धमर्थजातं ततं व्याप्तम्, यद् देशतोऽनन्तं तत् न विनष्टुं शीलमस्येत्यविनाशि स्वाभाविकनाशशून्यं तु नित्यमेव । अनादीत्यपि ग्राह्यम् । त्वं विद्धि विजानीहि । ननु स्वाभाविक-

विनाशाभावेऽपि शापादिरूपकारणविशेषेण नाशः किं न स्यादित्यत्रोक्तं **विनाशमिति** । अस्य प्रकृतस्य वर्णादेः विनाशं शापादिनाऽपि ध्वंसं न कश्चित् कर्तुमर्हति । यदा विकाररूपं ह्रासरूपं वा व्ययमपि कर्तुं नार्हति तदा नाशं न कर्तुमर्हतीति किमु वक्तव्यमिति भावेनोक्तम् **अव्ययस्येति** । अव्ययं चेदं वर्णादि । ततोऽपि न नाशशङ्केति । एतेन जीवादन्यस्यानादिनित्यस्य साध्यसाधनसबन्धग्रहणस्थलस्याभावादुक्तानुमाने व्याप्त्यसिद्धिरिति शङ्का निरस्तेति ॥ १७ ॥

**गीतातात्पर्यनिर्णयः**

**यद्यपि नित्यत्वं जीवस्याप्यस्ति । तथाऽपि सर्वप्रकारेणाविनाशित्वं विष्णोरेवेति तु शब्दः ।**

*प्रका०*— **यद्यपीत्यादिना** 'अविनाशि तु' इत्येतं श्लोकं व्याचष्टे ।

***न्या०दी०***— एवं युद्धाकरणे कारणाभावमुक्त्वा तत्कर्तव्यं, तच्च भगवत्पूजात्वेन कार्यमिति वक्ष्यति । तत्रोभयोरपि नित्यत्वेन ईश्वरस्यातिशयाभावात्किं तत्पूजयेत्यत्रोक्तमविनाशीति । तत्रापि कस्यचिदविनाशित्वमेवोच्यते, न जीवादीश्वरस्यातिशयः । तज्ज्ञापकाश्रवणादित्यत आह **यद्यपि इति** । इति जीवादीश्वरस्यातिशयं तुशब्दो ज्ञापयतीत्यर्थः ।

भा०दी०— **तत्कर्तव्यमिति** । तद्युद्धकर्म कर्तव्यम् । पूजात्वेन कार्यमित्यनुपदमेव 'तस्माद्युध्यस्व' इत्यत्र वक्ष्यतीति वक्ष्यतिक्रिययोक्त्वा इत्यस्यान्वयः । उभयोः = जीवेश्वरयोः । ॥ १७ ॥

**गीतातात्पर्यनिर्णयः**

**"अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।**
**नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।**
**तदन्येषान्तु सर्वेषां नाशाः केचिद्भवन्ति हि ॥**

**—इति महावाराहे ।**

***न्या०दी०***— नाशस्यानेकविधत्वं कथम् ? कुतश्चेश्वरस्य तदभाव इत्यत आह **नित्यत्वमिति** ॥ **अनित्यत्वं** स्वरूपनाशः ।

**गीतातात्पर्यनिर्णयः**

देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव नह्यन्ये पूर्णसद्गुणाः ॥

—इति परमश्रुतिः ॥ १७ ॥

***न्या०दी०***— अत्र विष्णुवाचकाभावात्कथमुच्यते विष्णोरित्यतो येन सर्वमिदं ततमित्येतदेव तद्वाचकमिति भावेनैतच्छ्रुत्यैव व्याचष्टे **देशत इति** ॥ १७ ॥

**गीता**

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥**

***वि०वि०***— ननु जीवानामीश्वरप्रतिबिम्ब**त्वस्य** 'रूपं रूपं प्रतिरूपो बभूव' इत्यादि प्रमाणसिद्धत्वात्प्रतिबिम्बस्योपाधिनाशे नाशनियमात् **देहा**नां च विनाशित्वात् कथं तदुपाधिकानामात्मनां नित्यत्वमुच्यते; नित्यत्वे वा, उपाधिभूतदेहानामपि केषाञ्चिन्नित्यत्वं स्यादित्यत आह **अन्तवन्त इति** । ये देहा अनित्याः न तेषामुपाधित्वं यस्य चोपाधित्वं नासावनित्य इति भावः । तदिदमुक्तम् **इम इति** । तथा चोक्तम्—

"जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ॥

सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् ।
कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् ॥"

इति । तथा—

'उपाधेश्चैव नित्यात्वान्नैव जीवो विनश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पना ॥'

इति । नित्यस्य देहस्यापि । अन्तवन्त इत्युच्यमाने ईश्वरदेहस्याप्यन्तवत्त्वं प्रसज्येतेत्यतस्तद्व्यावृत्त्यर्थं शरीरिण इति विशेषणम् । शरीरिशब्दस्य जीवे प्रसिद्धत्वात् । ननूपाधिनाशेन नाशाभावेप्युपाधिबिम्बसन्निधिनाशान्निमित्तात् प्रतिबिम्बस्यात्मनो नाशो भविष्यति । न चासिद्धिः

विनाशाभावेऽपि शापादिरूपकारणविशेषेण नाशः किं न स्यादित्यत्रोक्तं **विनाशमिति** । अस्य प्रकृतस्य वर्णादेः विनाशं शापादिनाऽपि ध्वंसं न कश्चित् कर्तुमर्हति । यदा विकाररूपं ह्रासरूपं वा व्ययमपि कर्तुं नार्हति तदा नाशं न कर्तुमर्हतीति किमु वक्तव्यमिति भावेनोक्तम् **अव्ययस्येति** । अव्ययं चेदं वर्णादि । ततोऽपि न नाशशङ्केति । एतेन जीवादन्यस्यानादिनित्यस्य साध्यसाधन-सबन्धग्रहणस्थलस्याभावादुक्तानुमाने व्याप्त्यसिद्धिरिति शङ्का निरस्तेति ॥ १७ ॥

**गीतातात्पर्यनिर्णयः**

**यद्यपि नित्यत्वं जीवस्याप्यस्ति । तथाऽपि सर्वप्रकारेणाविनाशित्वं विष्णोरेवेति तु शब्दः ।**

*प्रका०*— **यद्यपीत्यादिना** 'अविनाशि तु' इत्येतं श्लोकं व्याचष्टे ।

***न्या०दी०***— एवं युद्धाकरणे कारणाभावमुक्त्वा तत्कर्तव्यं, तच्च भगवत्पूजात्वेन कार्यमिति वक्ष्यति । तत्रोभयोरपि नित्यत्वेन ईश्वरस्यातिशयाभावात्किं तत्पूजयेत्यत्रोक्तमविनाशीति । तत्रापि कस्यचिदविनाशित्वमेवोच्यते, न जीवादीश्वरस्यातिशयः । तज्ज्ञापकाश्रवणादित्यत आह **यद्यपि इति** । इति जीवादीश्वरस्यातिशयं तुशब्दो ज्ञापयतीत्यर्थः ।

भा०दी०— **तत्कर्तव्यमिति** । तद्युद्धकर्म कर्तव्यम् । पूजात्वेन कार्यमित्यनुपदमेव 'तस्माद्युध्यस्व' इत्यत्र वक्ष्यतीति वक्ष्यतिक्रिययोक्त्वा इत्यस्यान्वयः । उभयोः = जीवेश्वरयोः । ॥ १७ ॥

**गीतातात्पर्यनिर्णयः**

**"अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।**
**नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।**
**तदन्येषान्तु सर्वेषां नाशाः केचिद्भवन्ति हि ॥**

**—इति महावाराहे ।**

***न्या०दी०***— नाशस्यानेकविधत्वं कथम् ? कुतश्चेश्वरस्य तदभाव इत्यत आह **नित्यत्व-मिति** ॥ **अनित्यत्वं** स्वरूपनाशः ।

**गीतातात्पर्यनिर्णयः**

देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव नह्यन्ये पूर्णसद्गुणाः ॥

—इति परमश्रुतिः ॥ १७ ॥

***न्या०दी०***— अत्र विष्णुवाचकाभावात्कथमुच्यते विष्णोरित्यतो येन सर्वमिदं ततमित्येतदेव तद्वाचकमिति भावेनैतच्छ्रुत्यैव व्याचष्टे **देशत** इति ॥ १७ ॥

**गीता**

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥**

***वि०वि०***— ननु जीवानामीश्वरप्रतिबिम्बत्वस्य 'रूपं रूपं प्रतिरूपो बभूव' इत्यादि प्रमाणसिद्धत्वात्प्रतिबिम्बस्योपाधिनाशे नाशनियमात् **देहा**नां च विनाशित्वात् कथं तदुपाधिकानामात्मनां नित्यत्वमुच्यते; नित्यत्वे वा, उपाधिभूतदेहानामपि केषाश्चिन्नित्यत्वं स्यादित्यत आह **अन्तवन्त इति** । ये देहा अनित्याः न तेषामुपाधित्वं यस्य चोपाधित्वं नासावनित्य इति भावः । तदिदमुक्तम् **इम इति** । तथा चोक्तम्—

"जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ॥

सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् ।
कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् ॥"

इति । तथा—

'उपाधेश्चैव नित्यात्वान्नैव जीवो विनश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पना ॥'

इति । नित्यस्य देहस्यापि । अन्तवन्त इत्युच्यमाने ईश्वरदेहस्याप्यन्तवत्त्वं प्रसज्येतेत्यतस्तद्व्यावृत्त्यर्थं शरीरिण इति विशेषणम् । शरीरिशब्दस्य जीवे प्रसिद्धत्वात् । ननूपाधिनाशेन नाशाभावेप्युपाधिबिम्बसन्निधिनाशान्निमित्तात् प्रतिबिम्बस्यात्मनो नाशो भविष्यति । न चासिद्धिः

शङ्क्या, परिच्छिन्नस्यैव प्रतिबिम्बनाशसम्भवेन सन्निधिनाशध्रौव्यात् इत्यत उक्तम् **अनाशिन इति** । तत्र **हेतुरप्रमेयस्येति** । भेदप्रमितौ समानाधिकरणत्वस्य सारूप्यगमकत्वादप्रमेयेश्वरसरूपत्वं गम्यते। ततो बिम्बभूतस्येश्वरस्य सर्वगतत्वात्कथमुपाधिसन्निधिनाशः। न च सर्वगतस्य प्रतिबिम्बासम्भवः । तदधीनसारूप्यस्य प्रतिबिम्बत्वादिदिति भावः । अतो जीवानां नित्यत्वेनाशोच्यत्वात् तद्भयात्स्वधर्मं मा त्याक्षीरित्याह **तस्मादिति** । एवं युद्धाकरणे कारणं नास्तीत्युक्तम् । इदानीं भगवत्पूजात्वेन युद्धं कर्तव्यमिति वक्तुं भगवतो जीवेभ्योऽतिशयाभावात् किं तत्पूजयेति शङ्कां परिहरति **अविनाशीति** ।

"देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः ॥"

इति श्रुतेः सर्वप्रकारेण ततं यद्विष्ण्वाख्यं ब्रह्म तदविनाशि विध्दीति । यद्यपि नित्यत्वं जीवस्याप्यस्ति तथापि सर्वप्रकारेणाविनाशित्वं विष्णोरेवेति तुशब्दः । तदुक्तम्—

"अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ॥
तदन्येषां तु भावानां नाशाः केचिद्भवन्ति हि ॥"

इति । विनाशमित्यादि पूर्ववद् व्याख्येयम् । अस्येति विष्णोः परामर्शः । अस्तु हरेः सर्वप्रकारेणाविनाशित्वं तथापि कथं तस्य जीवादतिशय इत्यत आह **अन्तवन्त इति** । इमे देहा इति विशेषणान्मुक्तदेहस्यापि नित्यचिदानन्दरूपत्वमनुज्ञायते, किमुतेश्वरस्य—

"चिदानन्दशरीरेण सर्वे मुक्ता यथा हरिः ।
भुञ्जते कामतो भोगांस्तदन्तर्बहिरेव च ॥"

इत्यादिकं च तत्र प्रमाणम् । अत ईश्वरः सर्वप्रकारेणाविनाशी । शरीरिणां नित्यत्वमात्रमेवास्ति । न तु सर्वप्रकारेणाविनाशित्वमनिच्छया देहहान्यादिसद्भावात् । अतोऽस्ति जीवादीश्वरस्यातिशय इति भावः । ततः किमित्यत आह **अनाशिन इति** । तस्मादीश्वरस्य सर्वप्रकारेण अविनाशित्वेन स्वातन्त्र्यात् दुःखनिवृत्तेः सुखस्य च प्राप्तेः तत्प्रसादाधीनत्वादनाशिनः सर्वथा नाशरहितस्याप्रमेयस्य देशतः कालतो गुणतश्च परिपूर्णस्य विष्णोः पूजार्थं युध्यस्वेति । अथवा 'अविनाशि तु' इत्यनेन भगवतः स्वातन्त्र्यसमर्थनेन तत्पूजायाः सत्कर्मत्वं समर्थितम् । अन्तवन्त इति जीवानामनित्यदेहवत्त्वेनास्वातन्त्र्योक्त्या हन्तुमसामर्थ्यं समर्थितमिति द्रष्टव्यम् ॥ १८ ॥

***सा०सं०***— ननु ''रूपं रूपं प्रतिरूपो बभूव'' (काठक २-५-९) इति श्रुतेः जीवः प्रतिबिम्बः । प्रतिबिम्बश्च उपाधिकृतः, प्रतिमुखमिव दर्पणोपाधिकृतम् । देह एवात्र जीवोपाधिर्नान्योऽस्ति । तथा च— 'जीवचेतना न नित्या नाशवद्देहोपाधिकत्वात् दर्पणोपाधिकप्रतिमुखवत्' । 'नश्वरबिम्बोपाधिसन्निधिकत्वात् नश्वरमुखदर्पणसन्निधिकप्रतिमुखवत्' इति प्रतिपक्षग्रस्तमनादिनित्यत्वानुमानमित्यत आह **अन्तवन्त इति** । एकवचनं बहुवचनार्थे । शरीराणां नित्यानाम् **इमे** परिदृश्यमानाः भौतिकाः **देहाः अन्तवन्तः** विनाशिनः इति योजना । **इम** इति विशेषणादन्येऽन्तहीना अपि देहाः सन्तीति सूच्यते । त एवोपाधयो जीवानां नान्तवद्भौतिकदेहा इत्याद्यप्रतिपक्षे हेतुरसिद्धः । अत एव नित्यस्येति साध्योक्तिः । जीवाः नित्याः नित्योपाधिकत्वात् व्यतिरेकेण प्रतिमुखवदित्युक्तं भवति । 'नित्यस्य' इत्येवोक्तौ ईश्वरस्यापि देहोऽन्तवानिति प्राप्नोतीत्यतः 'शरीरिणः' इति विशेषणम् । द्वितीयहेतुरप्यसिद्ध इत्याह **अनाशिन इति** । बिम्बोपाधिसन्निधिनाशकृतनाशहीनस्य शरीरिण इत्यन्वयः । 'जीवाः नित्याः नित्यबिम्बोपाधिसन्निधिकत्वात् व्यतिरेकेण प्रतिमुखवत्' इत्युक्तं भवति ।

ननु उपाधेर्नित्यत्वेऽपि परिच्छिन्नपरिमाणस्यैव वस्तुनो बिम्बत्वयोग्यत्वात् परिच्छिन्नयोश्च बिम्बोपाध्योः सन्निधेः दर्पणमुखसन्निधेरिव कादाचित्कत्वनियमात् कथं तस्य नित्यतेत्यत आह **अप्रमेयस्येति** । प्रमा परिमितिः । अपरिच्छिन्नस्येत्यर्थः । सर्वगतस्येति यावत् । जीवे सर्वगतत्वस्याभावात् 'अतद्भावे सामानाधिकरण्यं सारूप्यं गमयति' इति 'सिंहश्चैत्र' इत्यादौ प्रसिद्धेः सर्वगतेश्वरसरूपस्येत्यर्थः । तत्प्रतिबिम्बस्येति यावत् । सर्वगतेश्वरप्रतिबिम्बस्य कथं बिम्बोपाधिसन्निधिनाशेन नाशः स्यादिति भावः । न च सर्वगतस्य प्रतिबिम्बत्वायोगः । तत्सारूप्यस्यैव प्रतिबिम्बताशब्दार्थत्वात् । तदाह सूत्रकारः ''ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ'' (२-३-३०) इति ।

उपसंहरति **तस्मादिति** । बिम्बोपाधितत्सन्निधीनां नाशाभावेन तन्नाशप्रयुक्तनाशस्य जीवचेतने अनाशङ्क्यत्वेन प्रतिपक्षानुत्थानात्, 'न त्वेवाहम्' इत्यत्रोक्तानादिनित्यत्वानुमानेन जीवस्य नित्यत्वात्, जीर्णदिहहानेऽपि समीचीनदेहान्तरलाभरूपप्रतिनिधिना समाधानसम्भवात्, बन्धुदेहस्पर्शनदर्शनाद्यभावनिमित्तशोकस्य च परमपुमर्थहेत्वभिमानत्यागेन निवर्तितुं शक्यत्वात्, भगवत्पूजार्थं हे भारत युद्धस्वेति ।

नन्वेतदयुक्तम् । जीवेश्वरयोः नित्यत्वाविशेषात्, कुत ईश्वरस्य पूज्यतेत्यतो वा जीवाद्धरेर्विशेषं वक्तुम् 'अविनाशि तु' इत्यादि श्लोकद्वयं प्रवृत्तम् । तथाहि— **येन** भगवता **इदं** जगत् कालः

गुणजातं **ततं** व्याप्तम् । कालतो गुणतो देशतश्च यद्विष्णवाख्यं ब्रह्म ततिमत् **तत्** विष्णवाख्यं ब्रह्म **अविनाशि** । तुर्विशेषे ।

"अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ॥"

इत्युक्तदिशा चतुर्विधनाशहीनमिति **विद्धि** जानीहीत्यर्थः । विनाशमित्यादि प्राग्वद्व्याख्येयम् । वर्णाकाशादेर्देशकालाभ्यां व्याप्तत्वेऽपि न गुणतः साऽस्ति । जीवस्य कालतस्ततत्वेऽपि न देश-गुणाभ्यां ततिरस्तीति हरेस्ततत्वे विशेषः ।

अस्त्वेवं हरेः सर्वप्रकारेण विनाशाभावः । तावता जीवादविनाशविषये को हरेर्विशेष इत्यत आह **अन्तवन्त इति** । **शरीरिणां** शीर्यमाणदेहवताम् संसारिणामिति यावत् । स्वरूपतो नित्यानां जीवानाम् **इमे देहाः** । **अन्तवन्तः** विनाशवन्तः । जनिमन्तश्चेत्यपि ग्राह्यम् । संसारिदेहाः आद्यन्तवन्त इत्युक्त्या मुक्तदेहो नैवमिति लाभात् मुक्तेश्वरस्य हरेः कैमुत्यसिद्धो नित्यदेहः । एवं चोत्पत्तिविनाशवद्देहवतां च दुःखप्राप्तिरवर्जनीयैव । गुणतोऽपूर्णता व्यक्तैवेति । स्वरूपतो नित्यत्वेऽपि त्रिविधनाशवत्त्वाज्जीवस्य, ततो हरेश्चतुर्विधनाशहीनस्यास्ति महान् विशेष इति तत्पूजा कार्येत्युपसंहरति **अनाशिन इति** । **तस्मात्** जीवेभ्योऽतिशयत्वात्, **अनाशिनः** चतुर्विधनाशहीनस्य **अप्रमेयस्य** देशकालगुणापरिच्छिन्नस्य हरेः । पूजार्थं **युध्यस्व** इति । किञ्च न केवलं सर्वप्रकारेणाविनाशित्वात् तत्पूजा कार्येति । किन्तु सर्वथैवाविनाशित्वात् स एव स्वतन्त्रः । ततश्च तदधीनत्वान्मुक्तेः, युद्धादिस्वकर्मणाऽराधितश्च मोक्षं ददातीत्यतस्तत्पूजा कार्येति भावेन चोक्तम् **अनाशिनोऽप्रमेयस्येति** ॥ १८ ॥

***अ०प्र०***— आगमापायिधर्मसम्बन्धमसद्दर्शयति **अन्तवन्त इति** ।

तत्त्वदर्शिभिः, नित्यस्य[१], अत एव अनाशिनः[२], अप्रमेयस्य[३], शरीरिणः[४], इमे देहा[५], अन्तवत इति[६], यस्मादुक्ताः[७], तस्मात्[८], हे भारत[९], युध्यस्व इत्यन्वयः ।

तत्त्वदर्शिभिः, नित्यस्य सर्वदैकरूपस्य अत एव अनाशिनः अविनाशिनः[२], अप्रमेयस्य अपरिच्छिन्नस्य[३], शरीरिणः, शरीरवतः[४], इमे प्रत्यक्षाः देहाः सुखदुःखादिधर्मका देहाः[५], अन्तवन्तः – अतो नाशो विद्यते येषां ते अन्तवन्तः इति[६], यस्मादुक्ताः[७], तस्मात्[८], हे भारत[९], युध्यस्व च[१०], स्वधर्म-मात्याक्षीः मोहजशोकं त्यक्त्वा युद्धाय उत्तिष्ठेत्यर्थः[८] । ननु यदि जीवानां नित्यत्वं ईश्वरस्य च स्वतन्त्रत्वं तर्हि अयं अस्य हन्ता अयं अनेन हत इति प्रतीतिः कीदृशी इत्याशङ्क्य भ्रान्तिः इत्याह ॥ १८ ॥

**भाष्यम्**

**भवतु देहस्यापि कस्यचित् नित्यत्वमिति । नेत्याह— अन्तवन्त इति । अस्तु तर्हि दर्पणनाशात् प्रतिबिम्बनाशवदात्मनाश इत्यत आह– नित्यस्येति । 'शरीरिणः' इति ईश्वरव्यावृत्तये । न च नैमित्तिकनाश इत्याह— अनाशिन इति । कुतः ? अप्रमेयेश्वरसरूपत्वात् । न ह्युपाधिबिम्बसान्निध्यनाशे प्रतिबिम्बनाशः सति च प्रदर्शके । स्वयमेवात्र प्रदर्शकः । चित्त्वात् । नित्यश्चोपाधिः कश्चिदस्ति ।**

**प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपया ।**
**चिद्रूपया युतो जीवः केशवप्रतिबिम्बकः ॥**

**—इति भगवद्वचनात् ॥ १८ ॥**

*प०टी०*— ननु हरिप्रतिबिम्बभूतजीवस्य नित्यत्वे तदुपाधेर्देहस्यापि नित्यत्वं स्यादित्याशङ्क्य, उत्तरश्लोकमवतारयति **भवत्विति** । उपाधेरनित्यत्वे जीवस्यापि नाशो लोकवदित्याशङ्क्य, उत्तरत्वेनावान्तरपदमवतारयति **अस्त्विति** । नायं देह उपाधिरिति भावः । ननूपाधिनाशेन जीवनाशाभावेऽप्युपाधिबिम्बसन्निधिनाशेन नाशः किं न स्यात् इत्याशङ्क्याह **न चेति** । कुतो नायं नाशः ? इत्याशङ्क्याह **कुत इति** । सर्वगतबिम्बस्योपाधिसन्निधिरेव न नश्यतीत्यर्थः । नन्वथापि निमित्तान्तरेण नाशः किं न स्यात्, इत्यत आह **न हीति** । **प्रदर्शकः** उपाधिर्बिम्बश्च । ननु देहातिरिक्तोपाधेरननुभवात् कथं प्रदर्शकत्वम् ? इत्यत आह **स्वयमेवेति** । लोके प्रतिबिम्बोपाध्योर्भेदनियमात् कथमेतत् ? इत्यत आह **चित्त्वादिति** । विलक्षणत्वादिति भावः । जीवस्यैवोपाधित्वे सर्वोपाधिविलये मोक्षे जीवविनाशः स्यादित्यत आह **नित्यश्चेति** । जीवोपाधेर्नित्यत्वादौ प्रमाणमाह **प्रतिपत्ताविति** ॥ १८ ॥

*न०टी०*— ननु प्रतिबिम्बत्वात् जीवस्य, तन्नित्यत्वे तदुपाधेर्देहस्यापि कस्यचित् नित्यत्वं स्यादित्याशङ्कापरिहारायोत्तरश्लोकमवतारयति **भवत्विति** । नन्वादर्शाद्युपाधिनाशात् तदनतिभिन्नप्रतिबिम्बनाशवत् देहाख्योपाधिनाशात् जीवनाशोऽस्तीत्याशङ्कापरिहाराय अवान्तरपदमवतारयति **अस्त्विति** । देहनाशेऽपि प्रतिबिम्बरूपात्मनित्यत्वमङ्गीकुर्वतां देहातिरिक्तात्मोपाधिरस्तीत्यभिप्रायः । नित्यस्यानित्यदेहत्वं जीवस्यैव नेश्वरस्येत्येतत् शरीरिण इति विशेषणाल्लब्धमित्याह **शरीरिण इति**

इति । ननु सत्यप्यादर्शाद्युपाधौ क्वचित् तद्गतप्रतिबिम्बस्य नैमित्तिकनाशवत्, जीवोपाधौ च सति नैमित्तिको जीवनाशः किं न स्यात् ? इत्याशङ्कापरिहारायोत्तरं पदमवतारयति **न चेति** । प्रतिज्ञातो नैमित्तिकनाशाभावो **कुतः** इति हेत्वाकाङ्क्षां कृत्वोत्तरपदं हेतुत्वेनावतारयति **अप्रमेयेश्वरसरूपत्वादिति** । सति चोपाधौ समाशङ्क्यमानो नैमित्तिकः प्रतिबिम्बनाशः, उपाधेर्बिम्बसन्निधिनाशनिमित्त एव । न चासौ नित्यसर्वगतेश्वरप्रतिबिम्बस्य जीवस्येति भावः । स्थिरोपाधिकप्रतिबिम्बनाशो बिम्बसन्निधिनाशं विना न निमित्तान्तरं शङ्कनीयमित्याह **न हीति** । सति च **प्रदर्शके** आदर्शे प्रतिबिम्बनाशः उपाधेर्बिम्बसन्निधिनाशेन हीत्यर्थः । ननु जीवस्य तत्प्रदर्शकस्योपाधेश्च नित्यत्वकल्पने कल्पनागौरवं स्यादित्यत आह **स्वयमेवेति** । चेतनत्वाज्जीवस्य न जडस्तदुपाधिः । यावदुपाधिभाविनः प्रतिबिम्बस्य ततो भेदानिरूपणात्, चिज्जडयोरेकत्वायोगादिति भावः । तथा ह्यन्यत्र—

'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पना ॥' इति ।

ननु मुक्तावुपाधिविलयात् कथं तस्य जीवस्वरूपत्वम् ? इत्यत आह **नित्यश्चेति** । **नित्यश्च** अनित्यश्च जीवोपाधिः । तत्रानित्यस्यैव नाशो मुक्तौ नित्यस्यावशेष इति भावः । तत्र प्रमाणमाह **प्रतिपत्ताविति** । स्कान्दे च—

'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ॥'

सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् ।
कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् ।
अपुमर्थता च मुक्तेः स्यादभावात् पुंस एव तु ॥' इति ॥ १८ ॥

***प्र०दी०***— देहानामन्तवत्त्वं प्रागुक्तं किमर्थमुच्यत इत्यत आह— **भवत्विति** । आत्मनित्यत्वानुमानस्य प्रतिपक्षं वक्तुं स्वाभिप्रेतस्य हेतोः सिद्धान्तिनाऽप्यभ्युपगतत्वं दृढीकुर्वता पूर्वपक्षिणा देहस्यापि कस्यचित् नित्यत्वं भवतु किमिति पृष्टे नेत्याहेत्यर्थः । सिद्धार्थतापरिहाराय कस्यचिदित्युक्तम् । नन्वतिप्रसङ्गोऽयं कस्मान्न भवति । कस्यचिदिति विशेषणवैयर्थ्यात् । 'नित्यस्य' इत्यात्मनित्यत्वं पुनः कस्मादुच्यत इत्यत आह— **अस्त्विति** । एवं देहानित्यत्वं सिद्धान्तिनोऽपि सिद्धं कृत्वा तर्हि प्रतिबिम्बस्यात्मन उपाधेर्देहस्य नाशात् नाशोऽस्तु । दर्पणनाशात् मुखप्रतिबिम्बस्येवेति पूर्व-

पक्षिणा प्रतिपक्षेऽभिहिते तत्प्रतिषेधायेदमाहेत्यर्थः । अनेन 'तथाप्यात्मा नित्यः' इति वाक्यवृत्तिः सूचिता । अनुवादे प्रयोजनाभावात् । ये देहा अनित्या न तेषामुपाधित्वम् । यस्य चोपाधित्वं नासावनित्य इति भावः । तदिदमुक्तं 'इमे' इति । व्यक्तीकरिष्यते चैतत् । ननु 'शरीरिणो देहाः' इति व्यर्थम् । अशरीरस्य देहाभावादित्यत आह— **शरीरिण इति** । नित्यस्य देहा अन्तवन्त इत्युच्यमाने ईश्वरदेहस्यापि अन्तवत्त्वं प्रसज्यते । तद्व्यावृत्त्यर्थं 'शरीरिणः' इति विशेषणम् । 'जन्तुजन्युशरीरिणः' इत्यभिधानात् शरीरिशब्दस्य जीवे प्रसिद्धेः । तथापि 'अनाशिनः' इति पुनरुक्तिरिति । अत्र केचि-देतत्परिहाराय 'विनाशिनः' इति पाठान्तरं कुर्वन्ति । तदसत् । 'अन्तवन्त' इत्यनेन पुनरुक्तितादव-स्थ्यात् । कथञ्चित् समाधानेऽपि अन्यत्रापि तत् समम् । किमन्यथापाठेनेत्याशयवानाह— **न च इति** । उपाधिनाशेन नाशाभावेऽपि उपाधिबिम्बसन्निधिनाशान्निमित्तात् प्रतिबिम्बस्यात्मनो नाशो भविष्यति । न च असिद्धिः शङ्क्या । परिच्छिन्नस्यैव प्रतिबिम्बसम्भवेन सन्निधिनाशध्रौव्यादिति पुनः प्रतिपक्षिते तत्प्रतिषेधायेदमिति भावः । 'अप्रमेयस्य' इत्यसम्भवि विशेषणम् । व्यर्थं चेत्यतः तन्निवर्त्यामाशङ्कां दर्शयित्वा व्याचष्टे— **कुत इति** । न हि प्रतिपक्षो वाङ्मात्रेण निषेद्धुं शक्यत इति भावः । अप्रमेयेत्यनेन प्रतिपक्षहेतोरसिद्धिमाचष्टे । नायमात्मा घटादेः कस्यचित् प्रतिबिम्बः । किन्तु ईश्वरस्य । स चाप्रमेयः सर्वगत इति कथं तस्योपाधिसन्निधिनाश इति । ननु कथमिदं लभ्यते । अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति प्रसिद्धमेव । न च सर्वगतस्य प्रतिबिम्बासम्भवः । तदधीनसारूप्यस्य प्रतिबिम्बत्वात् । तदिदमुक्तं सरूपत्वादिति । ननु वक्तव्यं सर्वमुक्त्वोपसंहारः क्रियते । तत्किमात्मनित्यत्वविषये सर्वशङ्कोद्धारो जातो येन 'तस्माद्युध्यस्व' इत्युपसंह्रियत इत्यतो जात इत्याह— **न हीति** । उपाधिबिम्बसन्निध्यनाशे सति प्रदर्शके आदर्शे उपाधौ बिम्बे चाविनष्टे प्रतिबिम्बनाशो न ह्यस्ति । उपपादितश्चात्र त्रयस्यानाश इति भावः । ननु विनाशिनां देहाना-मनुपाधित्वात् कोऽत्रोपाधिरित्यत आह— **स्वयमेवेति** । उपाध्युपाधिमद्भावो विशेषबलेनेति भावः । लोकेऽदृष्टमिदं कथमङ्गीकार्यमित्यत आह— **चित्त्वादिति** । जडेष्वयावद्वस्तुभावित्वात् सर्वत्र भेदाभेदौ । चित्स्वरूपे तु यावद्वस्तुभावित्वादभेद एवेति भावः । स्वस्यैवोपाधित्वे मुक्तावात्मनिवृत्तिः स्यात् । उपाधिनिवृत्तिलक्षणत्वात् मुक्तेरित्यत आह— **नित्यश्चेति** । द्विविध उपाधिरात्मनः । नित्यो-ऽनित्यश्च । तत्र नित्यस्यावस्थानमन्यस्य निवृत्तिर्मुक्ताविति । कुत एतदित्यत आह— **प्रतिपत्ता-विति** । प्राप्तौ सत्याम् । युतस्तिष्ठतीति शेषः । ननूपाध्येति कथम् । किप्रत्ययान्तस्य पुल्लिङ्गता-नियमात् । तर्हि इषुधिर्द्वयोः कथम् । प्रयोगदर्शनादपवादः । यथाऽह 'लिङ्गशेषविधिर्व्यापी विशेषै-र्यद्यबाधितः' इति । समं प्रकृतेऽपि । स्वः आत्मा रूपं यस्याः सा स्वरूपा । चिद्रूपत्वात् स्वरूप-त्वम् । स्वरूपत्वात् नित्यत्वम् ॥ १८ ॥

*भा०दी०*— **प्रागुक्तमिति** । देहिनोऽस्मिन्नित्यत्र प्रतिपक्षमिति प्रतिबिम्बात्मा न नित्यः, अनित्योपाधित्वात् । दर्पणोपाधिकप्रतिबिम्बवदित्येवं प्रतिपक्षं वक्तुमित्यर्थः । **सिद्धार्थतेति** । अन्तवत इमे देहा इत्युक्तेः सिद्धार्थत्वपरिहाराय कस्यचिदपि त्वया शङ्कितस्य नित्यत्वं नास्तीति वक्तुं प्रश्ने कस्यचिदिति विशेषणोक्तिरित्यर्थः ।

ननु आत्मनो नित्यत्वे तदुपाधिभूतदेहानामपि नित्यत्वं स्यादित्यतिप्रसङ्गोक्तिपरमिदं वाक्य-मन्यथाप्रश्नार्थत्वे भवत्विति न स्यात् भवतीत्येव स्यादिति शङ्कते **नन्विति** । वाक्यवृत्तिः गीता-वाक्यस्य वृत्तिरित्यर्थः । कुतो नित्यस्येत्यस्य विधेयपरतेत्यत आह **अनुवादे इति** । **व्यक्तीकरिष्यत इति** । नित्यश्चोपाधिरित्यादावेतदुपाधिद्वैविध्यमिति भावः । **एतत्परिहारायेति** । पौनरुक्त्यपरि-हारायेत्यर्थः । **कथञ्चिदिति** । स्वाभाविकनैमित्तिकनाशभेदेन इत्यर्थः । **पुनः प्रतिपक्षित इति** । प्रति-बिम्बात्मा न नित्यः अनित्यबिम्बोपाधिसन्निधिकत्वात् मुखप्रतिबिम्बवदिति प्रतिपक्षित इत्यर्थः । **इति भाव इति** । कुत इति शङ्कितुरिति योज्यम् । कथमित्यतो सिद्धिं व्यनक्ति **नायमिति** । **कथमिदमिति** । अप्रमेयसरूपत्वादित्येतत्प्रमेयमित्यर्थः । अप्रमेयस्य शरीरिण इति सामानाधि-करण्यमित्यर्थः । **प्रसिद्धमेवेति** । सिंहो माणवक इत्यादौ इत्यर्थः । चशब्दोऽनुक्तसमुच्चय इत्येवोक्तं **बिम्बे चेति** । सतीत्यस्यार्थो **(अ?)विनष्ट इति** । **उपपादितश्चात्रेति** । 'नाभावो विद्यते सत' इतीश्वरस्य इमे अन्तवन्त इत्युक्त्या अन्यो नित्योपाधिरस्तीति सूचनेनोपाधेः अनाशिन इत्यनेन बिम्बोपाधिसन्निधेश्च नाश उपपादित इत्यर्थः । **अप्रमेय** इत्यनेन हेतुत्वोरुभयोरपि दृष्टान्त इति उक्तेश्चोपपादित इत्युक्तम् । पाणिनीयलिङ्गानुशासने "पुमानि"त्यधिकारे "क्यन्तो घुः इति सूत्रे "दाधाघ्वदाप्" इति घुसंज्ञिकस्य किप् प्रत्ययान्तस्य पुल्लिङ्गत्वोक्तेरुपाधिशब्दस्य च "उपसर्गे घोः किः" इति किप्रत्ययान्तत्वात् स्त्रीलिङ्गानुपपत्तिरिति शङ्कते **ननूपाध्येति कथमित्यादिना** । **तर्हीषुधिरिति** । तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोरिति क्षत्रियवर्गो किप्रत्ययान्तेषुधिशब्दस्पृच-द्वयोरिति पाणिनीयलिङ्गानुशासने इषुधिः स्त्रियां चेति चशब्देन पुल्लिङ्गस्त्रीलिङ्गयोरुक्तिः । कथ-मिषुधिशब्दः द्वयोः स्त्रीलिङ्गपुल्लिङ्गयोः कथं वर्तत इत्यर्थः । अपवादः पुल्लिङ्गनियमस्येति योज्यम् । **यथाहेति** । अमरकोशकारो लिङ्गानुशासनवर्गे आहेत्यर्थः । पूर्वमनुक्तस्य लिङ्गस्य विधिव्यापी व्यापकस्तदा स्यात् । यदि प्रागुक्तैर्विशेषैरबाधितो भवतीति तस्यार्थः । तथा च क्यन्तः पुमानेवेति विधिरिषुधिर्द्वयोरिति विशेषेण बाधितमित भावः । **सममिति** । उपाध्येतीहापि प्रयोगदृष्टेरिति भावः ॥ १८ ॥

*भा०र०*— प्रागुक्तं "तथा देहान्तरप्राप्तिः" इत्यत्र जीर्णादिदेहहानेन देहान्तरप्राप्तावपीति भाषणादुक्तप्रायम् । **प्रतिपक्षं वक्तुमिति** । "अस्तु तर्हि दर्पणनाशात् प्रतिबिम्बनाशवदात्मनाशः" इत्यत्रेति शेषः । नाऽत्मा नित्यः । अनित्यस्वभावदेहरूपोपाधिकत्वात् । यस्यानित्योपाधिकत्वं तस्यानित्यत्वम् । यथा दर्पणोपाधिकप्रतिबिम्बस्येति । प्रतिपक्षे हेतोरसिद्धिरिति न शङ्कनीयम् । कश्चिद् देहोऽपि नित्यः किं तव मते । न हि न हि । किन्तु सर्वोऽप्यनित्य एवेति तवापि मतमिति सिद्धान्तिनाऽपि हेतोरभ्युपगतत्वं द्रढयन् पूर्वपक्षी पृच्छति **भवत्विति** । 'अन्तवन्तः' इत्यनेन नित्यत्वसम्मतमित्याह भगवानिति शङ्कोत्तरभाष्याभ्यामुच्यत इति पुनरुक्तेर्वैयर्थ्यशङ्केति भावः । ननु नायं प्रश्न उपपद्यते । सन्देहमूलत्वात् प्रश्नस्य न चात्र सन्देहो युक्तः । प्रसिद्धदेहेष्वनित्यत्वस्य निश्चितत्वेन तत्र नित्यत्वानित्यत्वकोटिकसन्देहस्योत्पत्त्यनुपपत्त्या प्रश्नस्य प्रसिद्धदेहेषु सिद्धार्थत्व-लक्षणदोषप्रसङ्गात् । तदुक्तं "प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः । सिद्धार्थता च वैफल्यम्" इतीत्याशङ्क्योक्तदोषं परिहर्तुं प्रसिद्धानित्यताकदेहव्यावर्तकविशेषणमुपात्तं भाष्य इत्याह **सिद्धा-र्थतेति** ।

ननु नासौ प्रश्नः । तत्सूचककिमादिपदाभावात् । किन्त्वात्मनित्यत्वानुमाने यद्यात्मा नित्यः स्यात् तर्हि देहोऽपि नित्यः स्यात् । अविशेषात् । भवति चानित्यो देहः । तस्मादात्माऽपि न नित्य इति प्रतिकूलतर्कोऽनेनाऽशङ्क्यत इति किमिति न भाष्यं योजितमिति शङ्कते **नन्विति** । तर्कत्वे तत्राऽपाद्ये प्रमाणबाधस्यालङ्कारत्वेन प्रमितानित्यताकदेहव्यावर्तकस्य कस्यचिदित्यस्य वैयर्थ्यापातात् प्रसङ्गो न भवतीत्याह **कस्यचिदिति विशेषणवैयर्थ्यादिति** । किंशब्दाभावेऽपि योग्यतया तस्या-ध्याहारः कर्तव्यो भाष्य इति हृदयम् । "न चैव न भविष्यामः" इति प्रागुक्तत्वात् **पुनरिति** । **कस्मा इति** । प्रयोजनायेति शेषः । **तर्हि** देहस्यानित्यत्वे । **प्रतिबिम्बस्य** ईश्वरप्रतिबिम्बस्य । **प्रतिपक्षे** अनित्योपाधिकत्वरूपसत्प्रतिपक्षे । नित्यस्येत्यनेन कथं प्रतिपक्षप्रतिक्षेप इत्यत आह **अनेनेति** । यद्यपि परिदृश्यमाना देहा अनित्या इति ममापि सम्मतम् । तथाऽपि आत्मा नित्य इति वचन-व्यक्तिः सूचितेत्यर्थः । प्रागुक्तत्वादनुवादः किं न स्यादित्यत आह **अनुवाद इति** । विधानपक्षे सत्प्रतिपक्षप्रतिक्षेपः प्रयोजनम् । न चैवं प्रयोजनमनुवादपक्ष इत्यर्थः । अतः सप्रयोजनत्वाय विधानमेवेदमिति भावः । ननु प्रतिपक्षो न वाङ्मात्रेण प्रतिक्षेप्तुं शक्य इत्यतो हेतुदोषं वक्तुमाह **ये देहा इति** । **न तेषामुपाधित्वमिति** । जीवे प्रतिबिम्बनाशप्रयोजकत्वमित्यर्थः । तेन द्विविध उपाधिरात्मन इति भाविग्रन्थाविरोधः । नन्वेवमात्मनः प्रतिबिम्बत्वमपि न स्यात् । प्रतिबिम्बत्व-स्योपाधिमत्त्वव्याप्यत्वात् । देहस्य चोपाधित्वानभ्युपगमादिति चेन्न । वक्ष्यमाणरीत्याऽन्योपा-

ध्यङ्गीकारेण प्रतिबिम्बत्वोपपत्तेः । तस्याप्यनित्यत्वे पुनरात्मनाशानुमानमप्रत्यूहमिति चेन्न । प्रतिबिम्बताप्रयोजकोपाधेरनित्यत्वाभावादित्याह **यस्य चेति** । तथा च अनित्योपाधिकत्वादिति हेतोः देहस्यानुपाधित्वात् विशेष्यासिद्धिः, उपाधित्वेन सम्मतस्य चानित्यत्वाभावाद् विशेषणासिद्धिरिति दूषणाभावान्न तस्य प्रतिपक्षत्वमिति भावः । प्रतिबिम्बत्वघटक उपाधिरन्योऽस्ति, स च नित्य इत्येतद् गीताभिमतमित्याह **तदिदमिति** । अन्यनित्योपाध्यभावे इम इति विशेषणं व्यर्थमिति भावः । ननु कश्चिदुपाधिर्नित्योऽस्तीत्येतत् कुत इत्यतः, आत्मनो नित्योपाधिसद्भावे तस्य मोक्षो न स्यात् । उपाधिनिवृत्तिलक्षणत्वान्मोक्षस्येत्यतो वाऽह **व्यक्तीकरिष्यत इति** । द्विविध उपाधिरात्मनो नित्योऽनित्यश्च । तत्र नित्यस्यावस्थानमन्यस्य निवृत्तिर्मुक्ताविति "नित्यश्चोपाधिः" इति भाष्ये व्यक्तीकरिष्यत इत्यर्थः ।

ननु शरीरिण इति देहविशेषणं न युक्तम् । राज्ञः पुरुष इत्यादौ पुरुषस्येतरपुरुषव्यावर्तनाय राज्ञ इति विशेषणस्येवेह विशेषणस्य व्यभिचाराभावेनाव्यावर्तकत्वात् । "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति वचनादिति भावेन शङ्कते **ननु शरीरिण इति** । नित्यस्येत्येतद् विधेयसमर्पकतया सार्थकमित्युक्तम् । सहश्रुतनिखिलपदानां च सम्भूयकारित्वस्य व्युत्पन्नतया नित्यस्य देहा अन्तवन्त इत्यन्वये ईश्वरदेहस्याऽप्यनित्यत्वापत्त्या व्यभिचारादस्ति विशेषणस्य सार्थकत्वमित्याह **नित्यस्येत्यादि** । ईश्वरस्यापि चिदानन्दशरीरशालित्वात् कथं तेन तद्व्यावृत्तिरित्यतो नात्र शरीरिशब्दो यौगिकः । येनेश्वरस्यापि समः स्यात् । किन्तु रूढ इति भवति तेन तद्व्युदास इत्याह **जन्तुजन्त्विति** । "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इत्यभिधानाद् जीवे रूढेरित्यर्थः । न ह्यबाधे प्रसिद्धस्त्यक्तव्य इति भावः । **परिहारायेति** । प्रथमाबहुवचनान्तमेतद् विनाशिन इति पदमिति न पौनरुक्त्यमित्यभिमानः । तं खण्डयति **अन्तवन्त इतीति** । ननु 'अन्तवन्तः' इति स्वाभाविको नाशः । 'विनाशिनः' इति नैमित्तिको विवक्षित इति व्याख्याने न पौनरुक्त्यमित्यत आह **कथञ्चिदिति** । 'अन्तवन्तः' इति परिच्छेदवत्त्वं 'विनाशिनः' इति ध्वंसोऽभिधित्सित इति परिहारः सम्भवतीति कथञ्चिदित्युक्तमिति केचित् । **अन्यत्रापि** 'अनाशिनः' इति प्रसिद्धपाठेऽपि । नित्यस्येति स्वाभाविकनाशाभावः । 'त्यब्नेर्ध्रुवे' इति नित्यशब्दस्य ध्रुवेऽनुशासनात् । अनाशिन इति नैमित्तिकनाशशून्यत्वमभिसंहितमिति समाधानं सममित्यर्थः ।

नन्वेवं समाधानसम्भवेऽपि किमनाशिन इति पदप्रयोजनम् । येनास्यात्र निवेशः । उपाधिनाशनिमित्तकनाशोऽपि नित्यस्येत्यनेन प्रतिक्षिप्त इत्यत उक्तम् **उपाधीति** । यद्यप्युपाधिनाशनिमित्तनाशः प्रतिषिद्धः तथाऽपि निमित्तान्तरनाशान्नाशः शङ्क्यत इत्युच्यते **उपाधिबिम्बेति** ।

प्रतिबिम्ब आत्मा नाशवान् । नश्यदुपाधिबिम्बसन्निधिकत्वात् । यथा दर्पणमुखसन्निधिनाशेन नश्यन्मुखप्रतिबिम्ब इति प्रयोगोऽत्राभिमतः । उपाधिबिम्बसन्निधिनाश एव नेति हेतोरसिद्धिमाशङ्क्य निषेधति **न चेति** । जीवस्य प्रतिबिम्बत्वं बिम्बाद्भिन्नाभूतत्वम् । न ह्यपरिच्छिन्नस्य गगनादेः प्रतिबिम्बो नाम सम्भवतीति तद्बिम्बभूतस्य मूर्तत्वमेव वक्तव्यम् । मूर्तस्य च क्रियावतः क्वचिद् गमने बिम्बोपाधिसन्निधिनाशोऽवश्यम्भावीति नासिद्धिरिति भावेनाह **परिच्छिन्नस्यैवेति** । अपरिच्छेद्यत्वरूपाप्रमेयत्वस्याणौ जीवे सर्वथाऽसम्भवादाह **असम्भवीति** ॥ "अप्रमेयेश्वरसरूपत्वात्" इति व्याख्यानव्यावर्त्याशङ्केयम् । **व्यर्थं चेति** । इयं चाप्रमेयत्वरूपविशेषणलब्धहेत्वसिद्धिलक्षणप्रयोजनव्यावर्त्याशङ्का वेदितव्या । शङ्कितुर्हृदयमाह **न हीति** ॥ असिद्धिमुपपादयति **नायमिति** ॥ **घटादेरिति** । परिच्छिन्नस्येत्यर्थः । सर्वशास्त्रप्रमेयस्येश्वरस्य कथमप्रमेयत्वमित्याशङ्क्य नात्र प्रमागोचरत्वाभावोऽप्रमेयत्वं, किन्त्वन्यदेवेत्याह **सर्वगत इति** ॥ इदं सरूपत्वम् । उत्तरम् **अतद्भाव इति** । तदैक्याभाव इत्यर्थः । **सामानाधिकरण्यं** शरीरिणोऽप्रमेयस्येति समानविभक्तिकशब्दवाच्यत्वम् । **प्रसिद्धमेव** सिंहो माणवक इत्यादौ "परत्र परशब्दः प्रयुज्यमानोऽन्तरेणापि वतिं वत्यर्थं गमयति" इति पण्डितपामरसाधारण्येन प्रसिद्धमित्यर्थः । प्रतिपक्षिणैतद्दोषपरिजिहीर्षया परिच्छिन्नस्यैव प्रतिबिम्बसम्भव इत्युक्तम् । तन्निषेधति **न चेति** । न ह्यत्र दर्पणालक्ष्यप्रतिमुखादाविव प्रतिबिम्बत्वं जीवे, किं नामान्यदेवेत्याह **तदधीनेति** । **प्रतिबिम्बत्वात्** प्रतिबिम्बशब्दार्थत्वात् । उक्तं प्रतिबिम्बत्वं भाष्यारूढमित्याह **तदिदमिति** । प्रस्तावादप्रमेयेश्वरप्रतिबिम्बत्वादिति वक्तव्येऽपि यद् गीतायां परत्र परशब्दं प्रायुङ्क्त भगवांस्तत्तात्पर्यं च सरूपत्वादिति भाषितं तदिदं तदधीनसारूप्यमेवात्र प्रतिबिम्बत्वमभिसंहितमिति वक्तुमिति भावः । "सति च प्रदर्शके" इति भाष्ये प्रदर्शनकर्तृपुरुषप्रतीतौ प्रकृतानुपयोगादादर्श इत्युक्त्वा प्रतिबिम्बोपाधिमात्रग्रहणायाह **उपाधाविति** । तत्र चशब्दस्य प्रदर्शके चेति भिन्नक्रमत्वमुपेत्य बिम्बसमुच्चायकत्वमिति भावेनोक्तं **बिम्बे चेति** । सतीत्यावृत्तस्य विद्यमान इत्यर्थकस्य विवक्षितार्थोक्तिः **अविनष्ट इति** । ननु उपाधिबिम्बसन्निध्यनाशः उपाध्यनाशः बिम्बानाशश्च भाष्योक्तः कुतोऽवगन्तव्यः । येन सर्वशङ्कोद्धारो जात इति गीतायां तस्मादित्युपसंहारो युक्त इत्यत आह **उपपादितश्चात्र त्रयस्येति** । अप्रमेयस्येति बिम्बोपाधिसन्निध्यनाशः नित्यस्येत्युपाध्यनाशः अप्रमेयपदेनैव बिम्बानाशश्च ग्राह्यः । अप्रमेयपदस्य सर्वगतार्थत्वात् सर्वगतस्य च "अविनाशि तु तद् विद्धि येन सर्वमिदं ततम्" इत्यविनाशित्वाद् हेत्वर्थगर्भेण तेन बिम्बानाशस्योपपादितत्वान्नित्यपदेनाभिप्रेतस्योपाधिनित्यत्वस्य अनित्या इमे देहा अन्यस्तु नित्योऽस्तीति ज्ञापनेनोपपादितत्वान्नित्य उपाधिर्बिम्बश्च सर्वगत इत्यप्रमेयपदेनैव बिम्बोपाधिसन्निध्यनाशस्याप्युपपादित-

त्वाच्च 'अन्तवन्तः' इति श्लोक एव त्रयस्याप्यनाश उपपादित इति सर्वशङ्कोद्धाराद् युक्त उपसंहार इति भाष्यतात्पर्यमिति भावः । ''नाभावो विद्यते सतः'' इति बिम्बस्य ''अन्तवन्तः'' इति नित्योपाधिसूचनादुपाधेरनाशिन इति प्रतिबिम्बोपाधिसन्निधेश्चानाशः ''उभयोरपि दृष्टोऽन्तः'' इति ''अप्रमेयेश्वरस्वरूपत्वात्'' इति च प्रमाणोक्त्या गीतायामुपपादित इति स्वामिनः ।

ननु बिम्बोपाधिसन्निध्यनाशस्यैव प्रतिबिम्बानाशप्रयोजकत्वान्न ह्युपाधिबिम्बसन्निध्यनाशे प्रतिबिम्बनाश इत्येव भाषणीयम् । न तु ''सति च प्रदर्शके'' इति बिम्बोपाध्यनाशावपि भाष्ये वक्तव्यौ । सन्निध्यनाशे सन्निधिमतोरनाशस्य नान्तरीयकत्वादिति चेत्, अत्राऽहुः । प्रतिबिम्बनाशो हि उपाधिनाशाद् बिम्बनाशादुपाधिबिम्बसन्निधिनाशाद् वा वक्तव्यः । तत्रोपाधिबिम्बसन्निधिनाशशङ्का अप्रमेयपदेन निरस्ता । इतरौ द्वौ स्वतःसिद्धावपि सम्भावनामात्रेणोपाधिबिम्बसन्निधिनाशसमकक्षतया समाशङ्क्य ''सति च प्रदर्शके'' इति भाष्येण परिहृतौ । अयं च परिहार उपसंहारोपयोगिसर्वशङ्कोद्धारप्रदर्शनार्थः । यद्वा, यच्छङ्कितमुपाधिनाशादस्तु प्रतिबिम्बनाश इति यच्च बिम्बनाशान्नाशो भविष्यतीति शङ्कितुमर्हं तदुभयमपि ''सति च प्रदर्शके'' इति प्रतिक्षिप्तं भाष्ये । एवं चोक्तानुवादपूर्वकमुपाधिबिम्बसन्निधिनाशस्याप्यसम्भावितत्वं वक्तुं ''न हि उपाधिबिम्बसन्निध्यनाशे प्रतिबिम्बनाशः'' इत्युक्तमिति शङ्काक्रमाद् भाष्यं प्रवर्तनीयमिति नाऽनर्थक्यशङ्का । अयं च शङ्काक्रमो नित्यस्येति अनाशिन इति अप्रमेयस्येति च गीतापदक्रमात् सूचित इति । बिम्बोपाधिसन्निध्यनाश एव कुतः ? बिम्बस्योपाधेर्वा नाशे सन्निधिनाशध्रौव्यादित्याशङ्क्य सन्निध्यनाशप्रयोजकत्वेन ''सति च प्रदर्शके'' इति बिम्बोपाध्योरविनाशो भाषित इत्यपि भावबोधकृतः । अत्र जीवस्य प्रतिबिम्बत्वे स्वयमेव जीव एव प्रदर्शक उपाधिरिति भाष्यार्थमभिप्रेत्य एकस्यैवोपाधित्वं (उपाधिमत्त्वं च) प्रतिबिम्बत्वं च घटयति **उपाधीति** । ''भेदहीने त्वपर्यायशब्दान्तरनियामकः । विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः'' इत्युक्तलक्षणविशेषबलेन उपाधिरिति उपाधिमानिति च भेदव्यवहार उपपन्न इत्यर्थः । **लोके** दर्पणमुखप्रतिबिम्बादौ । **इदम्** उपाधिप्रतिबिम्बयोरेकत्वम् । अस्तु चित्त्वं माऽस्तु चाभेद इत्यप्रयोजकत्वशङ्कां परिहर्तुं प्रयोजकभेदमाह **जडेष्विति** । जडभूतेषु दर्पणाद्युपाधिषु मुखप्रतिबिम्बादिषु च सर्वत्र प्रतिबिम्बानामुपाधिपरिणामत्वेन तन्तुपरिणतपटादीनामिव यावदुपाधिभावित्वाभावात् ''खण्डिते भेद ऐक्यं च'' इत्याचार्योक्त्या युक्तो भेदसहिष्णुरभेदः । चित्स्वरूपे तूपाधौ प्रतिबिम्बस्य सर्वत्र नित्यतया जीवाख्यप्रतिबिम्बस्य यावत्स्वरूपदेहाख्योपाधिभावित्वाद् ''यावद्वस्तु न भेदवत्'' इत्याचार्यवचनादुपाध्युपाधिमतोरैक्यमेव युक्तमिति नाप्रयोजकत्वमिति भाष्यतात्पर्यमित्यर्थः । न केवलमनित्यः नित्यश्चास्तीति चशब्देन समुच्चयोक्तेराह

**द्विविध इति**। 'अनित्यश्च' इत्यनेन ये देहा अनित्या न तेषामुपाधित्वमिति प्राक्तनटीकया यथा न विरोधस्तथोक्तमधस्तात् । "जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः" इति वचनादाह **तत्र नित्यस्यावस्थानमन्यस्य निवृत्तिरिति**। **एतत्** मुक्तौ नित्योपाधिसत्त्वम् । प्रतिपत्तिशब्दस्य ज्ञानाद्यर्थत्वे प्रकृतानुपयोगात् तदर्थं वदंस्ततःपरं सत्यामिति शेषं युत इत्यस्यान्वयाय शेषं चाऽह **प्राप्तौ सत्यां युतस्तिष्ठतीति शेष इति**। **क्विप्रत्ययान्तस्य पुँल्लिङ्गतानियमादिति**। पाणिनीये लिङ्गानुशासने पुँल्लिङ्गाधिकारे "क्यन्तो घुः" इति सूत्रेण "घोः किः प्रादितोऽन्यतः" इत्यमरेण च पुँल्लिङ्गताया अनुशासनेन तन्नियमादित्यर्थः। "दाधाघ्वदाप्" इति घुसञ्ज्ञकः क्विप्रत्ययान्तो यः शब्दः स पुमानिति सूत्रार्थः । प्राद्युपसर्गा-दन्यस्माद् वा परो यो घुसञ्ज्ञको धातुः तस्माद् यः क्विप्रत्ययः तदन्तः पुँल्लिङ्ग इत्यमरार्थः । उपाधिशब्दश्च "उपसर्गो घोः किः" इति क्विप्रत्ययान्त इति न तस्य स्त्रीलिङ्गत्वं युक्तमिति भावः । यद्येवं क्विप्रत्ययान्तस्य पुँल्लिङ्गत्वनियमस्तर्हि "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरेण क्विप्रत्ययान्तस्यापीषुधिशब्दस्य स्त्रीत्वं पुंस्त्वं च कथमनुशिष्टमिति शङ्कते **तर्हीषुधिर्द्वयोः कथमिति**। तत्र सिद्धान्ती समः समाधिरिति वक्तुं परमुखेन समाधिं वाचयति **प्रयोगेति**। तत्रामरसम्मतिः **यथाऽऽहेति**। पूर्वमनुक्तस्य लिङ्गस्य विधिर्लिङ्गशेषविधिः । स "घोः किः प्रादितोऽन्यतः" इत्यादिरूपः । "इषुधिर्द्वयोः" इत्यादिविशेषवचनैः प्रागुक्तैरिहोक्तैश्च "शेषं तु ज्ञेयं शिष्टप्रयोगतः" इति शिष्टप्रयोगरूपविशेषवचनेन च यदि न बाध्येत तर्हि काण्डत्रयस्य व्यापकः उत्सर्गत्वादित्यर्थः। **सममिति**। उपाध्येति शिष्टप्रयोगोऽपवादक इति समः समाधिः। अत एव वचमादिति वक्तव्ये शिष्टतमप्रयोगत्वस्फोरणाय "भगवद्वचनात्" इत्युक्तमिति भावः।

ननु कथमत्र स्वशब्दे पुँल्लिङ्गता ? यावता "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः । आत्मवाचकं स्वशब्दं नपुंसकलिङ्गमभ्यधत्त । सुभूतिचन्द्रोऽपि रूपभेदादात्मनि क्लिबमभिधाय तत्र "स्वो ज्ञातावात्मनि क्लीबे" इति रभसवचनमुदाजहार । नैषधव्याख्याताऽपि "श्रिया स्वयोग्याऽहमिति स्वमीक्षितुम्" इति प्रथमे "प्रियातिथिः स्वेन गता गृहान् कथं न धर्मराजं चरितार्थयिष्यति" इति नवमे च स्वं स्वेनेत्येतयोर्दमयन्तीपरत्वेऽपि नपुंसकत्वममरवचनादित्युक्त-वानिति । मैवम् । सुबोधिनीकारेण "स्वो ज्ञातावात्मनि" इति पदत्रयस्यैकवाक्यत्वे सत्यात्मन्यपि पुल्लिङ्गत्वमेवेत्यमरवचनं व्याख्याय तत्र संवादित्वेन "ज्ञात्यात्मनोः स्वः स्वं स्वार्थे स्वं स्वः स्वात्मीयमात्रके" इति नानार्थरत्नकोशाभिधानस्योदाहृतत्वेन पुल्लिङ्गत्वावगमात् । अत एव "लक्ष्मी-भृतोऽम्भोधितटाधिवासाँल्लतावधूसम्प्रयुजोऽधिवेलम् । द्रुमानसौ नीरदनीलभासो बहूकृतान् स्वानिव

पश्यति स्म'' इति माघकाव्ये पुल्लिङ्गस्यात्मवाचकस्वशब्दस्य प्रयोगः । यत्त्वत्र स्वान् स्वकीयान् विग्रहानित्यर्थः । एवं चानपुंसकता निर्व्यूढा । आत्मार्थत्वे नपुंसकत्वममरवचनात् स्यादेवेति तद्व्याख्याता आह । तन्न । उक्तरीत्या अमरवचनस्य सावकाशत्वात् । विग्रहपदाध्याहारदोषात् । चोलपालितः स्वात्मन्यपि पुल्लिङ्गत्वमाहेति । हरिदीक्षितवचनात् । मनोरमायाम्— आत्मन्यपि स्वशब्दस्य पुंस्त्वमेव । न च तत्र प्रमाणाभावः । ''विभाषा जसि'' इति प्रकरणे स्वमात्मीय इत्येव वक्तव्ये गुरुनिर्देशं कुर्वतः सूत्रकारस्यैवात्र प्रमाणत्वात् । तथा च हेमचन्द्रः ''द्यौः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने'' इत्याह । मेदिनीकारेणापि ''स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये स्त्रियां धने'' इत्युक्तत्वाच्च । श्रूयते चाध्वर्युशाखायां न हि स्वः स्वं हिनस्तीति । न ह्यात्माऽऽत्मानं हिनस्तीति हि तत्र भट्टभास्करः । अत आत्मनि साधुरेव स्व इति पुँल्लिङ्गप्रयोगः । नित्योपाधिसत्त्वं कुत इति हेतुप्रश्नस्योत्तरमाह **चिद्रूपत्वादिति** । चिद्रूपया स्वरूपया नित्योपाध्येति पदत्रयस्योत्तरोत्तरं हेतुहेतुमद्भावेनान्वयादुक्तप्रश्नपरिहार इति भावः ॥ १८ ॥

***गीताक्षरार्थस्तु***— पूर्वश्लोके दृष्टान्ताभावादात्मनित्यत्वानुमानस्य व्याप्त्यसिद्धिरिति शङ्का निरस्ता । अत्र तु तस्यानुमानस्य प्रतिपक्षो निरस्यते । स्वधर्मश्च न त्याज्य इत्यभिधीयते । अनित्योपाधिकत्वादिति स्वाभिप्रेतस्य वक्ष्यमाणहेतोः सिद्धान्तिनाऽभ्युपगतत्वं दृढीकुर्वता पूर्वपक्षिणा देहस्यापि कस्यचिन्नित्यत्वं भवतु किमिति पृष्टे नेत्युच्यते **अन्तवन्त इति** । यद्यपि परिदृश्यमाना देहा अन्तवन्तः अनित्याः ''धातुरस्य त्वनित्यः'' इत्यादावुक्ताः । तथाऽप्यात्मा नित्यः । पुनरात्मनित्यत्वं किमर्थमुच्यत इति चेत्, एवं देहानित्यत्वं सिद्धान्तिनोऽपि सम्मतं चेत्, तर्हि प्रतिबिम्बस्याऽऽत्मन उपाधिभूतदेहनाशान्नाशोऽस्तु दर्पणनाशान्मुखप्रतिबिम्बस्येवेति पूर्वपक्षिणा प्रतिपक्षेऽभिहिते तत्प्रतिषेधायेदमिति ब्रूमः । ये देहा अनित्याः न तेषामुपाधित्वम् । यस्य चोपाधित्वं नासावनित्यः । तदिदमुक्तम् **इम इति** । इमे देहा अनित्याः । नित्यदेहरूपश्चोपाधिः कश्चिदस्तीति ।

ननु शरीरिणो देहा इति व्यर्थम् । अशरीरस्य देहाभावादिति चेन्न । नित्यस्य देहा अन्तवन्त इत्युच्यमाने ईश्वरदेहस्याप्यन्तवत्त्वं प्रसज्यते । तद्व्यावृत्तये शरीरिण इति विशेषणात् । ''जन्तुजन्युशरीरिणः'' इत्यभिधानाज्जीवस्येत्यर्थः । उपाधिनाशेन नाशाभावेऽपि उपाधिबिम्बसन्निधिनाशान्निमित्तात् प्रतिबिम्बस्यात्मनो नाशो भविष्यति । न चासिद्धिः । परिच्छिन्नस्यैव प्रतिबिम्बसम्भवेन सन्निधिनाशध्रौव्यादिति पुनः प्रतिपक्षिते तत्प्रतिषेधायोक्तम् **अनाशिन इति** । नैमित्तिकनाशशून्यस्येत्यर्थः । न हि प्रतिपक्षो वाङ्मात्रेण निषेद्धुं शक्यत इत्यतोऽप्रमेयस्येत्युक्तम् । हेत्वर्थगर्भ

चेदम् । अप्रमेयेश्वरसरूपत्वादित्यर्थः । अनेन च विशेषणेन प्रतिपक्षहेतोरसिद्धिमाचष्टे । नायमात्मा घटादेः कस्यचित् प्रतिबिम्बः, किन्त्वीश्वरस्य । स चाप्रमेयः सर्वगत इति कथं तस्योपाधिसन्निधि-नाश इति । अप्रमेयपदस्य तत्सरूपार्थत्वम् अपरिच्छिन्नस्यापि प्रतिबिम्बसम्भवश्च टीकातो-ऽवसेयः । तस्मादुपाधिबिम्बसन्निध्यनाशे उपाध्यनाशे च सति प्रतिबिम्बनाशस्याकारणकस्याना-शङ्कनीयतया आत्मनित्यत्वस्य निष्प्रत्यूहत्वाद् "युध्यस्व भारत" इत्यर्जुनं समबोधयद् भगवान् इति ॥ १८ ॥

### गीतातात्पर्यनिर्णयः

**शरीरिणां तु देहहान्यादिनाशो विद्यत एव । 'येन सर्वमिदं ततम्' इति तस्यैव लक्षणकथनात् । न जीवानां देशतो गुणतश्च पूर्णता । अनिच्छया देहहान्यादेरेव दुःखावाप्तिः सिद्धा । तस्मादनाशिनोऽप्रमेयस्य विष्णोः पूजार्थं युध्यस्व । तत्प्रसादाधीनत्वाद्दुःखनिवृत्तेः सुखस्य च । "ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । तेषामहं समुद्धर्ता" इत्यादेः ।**

*प्रका०*— **तस्मादित्यादिना** 'अन्तवन्त' इत्येतं श्लोकं व्याचष्टे ।

***न्या०दी०***— अस्तु हरेः सर्वप्रकारेणाविनाशित्वम् । तथापि कथं तस्य जीवादतिशय इत्याशङ्कापरिहारायोच्यत **अन्तवन्त इति** ॥ तत्रैकस्य शरीरिणो देहनाशमात्रमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे **शरीरिणामिति** ॥ ईश्वरः सर्वप्रकारेणाविनाशी । शरीरिणां तु नित्यत्वमात्रमेवास्ति । न तु सर्वप्रकारेणाविनाशित्वम् । देहहान्यादिसद्भावात् । अतोऽस्ति जीवादीश्वरस्यातिशय इति भावः ।

अस्त्वविनाशीति श्लोके भगवद्वाचकसद्भावः । तथापि येन सर्वमिदं ततं तदविनाशीति व्याप्तिरूपेणोक्तेः कथं विष्णोरेवेत्यवधार्यत इत्यत आह **येनेति** ॥ यद्यपि व्याप्तिरूपेणेदमुच्यते । तथापि सर्वततत्वस्य विष्णुलक्षणत्वेन तत्रैव पर्यवसानाद्युक्तमवधारणमिति भावः ।

कथमिदमीश्वरस्य लक्षणम् ? जीवानामपि कालतस्ततत्वेन तत्रातिव्याप्तेरित्यत आह **नेति** ॥ न केवलमत्र कालतस्ततिरुच्यते । अपि तु देशतो गुणतश्च । न च सा जीवानामस्तीति भावः । अत्र जीवस्य प्रतिपाद्यतानिषेधपरं भाष्यममुख्यार्थपरं चानुमतमिति न तद्विरोधः । तत्र जीवेभ्योऽपि ततेराधिक्यात् । न त्वेवाहमिति पुनरुक्तेश्चेति ।

नन्वन्तवन्त इत्यत्र जीवस्य देहहानिरेवोच्यते । न तु नाशान्तरम् । अतः कथमादिपदप्रक्षेपेण व्याख्यानमित्यत आह **अनिच्छयेति** ॥ सत्यं देहहानिरेवात्रोक्तेति । तथापि दुःखप्राप्तिहान्योरनिष्टत्वेन तद्वतो दुःखप्राप्तिनियमादिति भावः ।

***भा०दी०—*** **अत्र जीवस्येति** । अत्र 'अविनाशि त्वि'ति श्लोके जीवस्य प्रतिपाद्यतायाश्च निषेध्यतापरं भाष्यममुख्यार्थपरम् । चोऽप्यर्थः । अमुख्यार्थजीवादिपरं अनुमतमिति न भाष्यविरोधोऽस्य मूलस्येत्यर्थः । जीवपरत्वेऽमुख्यत्वं कुत इत्यत आह **तत्रेति** । हरावित्यर्थः । तर्हि मुख्यार्थविष्णुपर एवायं श्लोकोऽस्त्वित्यत आह **न त्वेवाहमिति** ॥ **आदिपदप्रक्षेपेणेति** । देहहान्यादीत्यादिपदेत्यर्थः ॥

***न्या०दी०—*** अस्त्वेवं जीवादीश्वरस्यातिशयः । ततश्च किमित्याशङ्कापरिहारायोत्तरार्धं व्याचष्टे **तस्मादिति** ॥ सर्वप्रकारेणाविनाशित्वेन सातिशयत्वेऽपि कुतस्तत्पूजा कार्येत्यत आह **तदिति** ॥ न केवलं सर्वप्रकारेणाविनाशित्वात्तत्पूजाऽत्र कर्तव्येत्युच्यते । अपि तु सर्वप्रकारेण अविनाशित्वात्स एव स्वतन्त्रः । ततश्च तदधीनत्वं मुक्तेः । युद्धादिस्वकर्मणाऽऽराधितश्चेश्वरो मोक्षं ददाति । अतस्तत्पूजा कर्तव्येत्येवाभिप्रेतमिति भावः ।

अस्त्वीश्वरस्य सातिशयत्वान्मोक्षप्रदानशक्तिः । तथापि स्वकर्मणाऽऽराधितो हरिर्मोक्षं ददातीत्येतद्गीताभिमतमित्येतत्कुतः । मुक्तेर्ज्ञानभक्तिसाध्यताया गीताभिमतत्वादित्यत आह **ये त्विति** ॥ केवलकर्मणा मोक्षसिद्धेः गीतानभिमतत्वेऽपि भक्तिज्ञानसहितेन साभिमतैव 'ये तु सर्वाणि' इति तथोक्तत्वात् । तादृशं च कर्मात्राभिप्रेतमिति भावः । 'मत्पराः' इत्यनेन भगवज्ज्ञानमुच्यते । अनन्ययोगः अनन्यभक्तिः ।

**गीतातात्पर्यनिर्णयः**

**जीवपक्षे नित्यस्योक्ता इत्युक्तत्वादनाशिन इति पुनरुक्तिः । "अविनाशि", "येन सर्वमिदं ततम्" इत्युक्तस्यैव "अनाशिनोऽप्रमेयस्य" इति प्रत्यभिज्ञानाच्च ।**

***न्या०दी०—*** 'अनाशिनोऽप्रमेयस्य' इति प्रकृतशरीरिविषयं किं न स्यादित्यत आह **जीवेति** ॥ जीवपक्षेऽनाशिनोऽप्रमेयस्येत्यत्र जीवो वाच्य इति पक्षे । ईश्वरग्रहणपक्षे स्फुटमर्थभेद-सम्भवात् तद्विहाय कथञ्चिदर्थभेदकथनं न युक्तमित्यत्रोच्यते । भाष्ये तु मुख्यार्थे सिद्धे गौण-मप्यर्थान्तरमुच्यत इत्यविरोधः । न केवलं जीवपक्षे पुनरुक्तेरीश्वरपरत्वं अपि तु तज्ज्ञापक-सद्भावाच्चेत्याह **अविनाशीति** । अविनाशीत्यत्र भगवता तावदीश्वर एव प्रतिपाद्य इति समर्थितम् ।

यदुक्तमविनाशित्वं तदेवात्र प्रत्यभिज्ञायते **अनाशिन इति** । यदपि सर्वततत्वमुक्तं तदेवाप्रमेयस्येति प्रत्यभिज्ञायते । अतोऽप्यत्रेश्वर एवोच्यत इति भावः ।

*भा०दी०*— **कथञ्चिदिति** । स्वाभाविकनाशनैमित्तकनाशभेदेन अर्थभेदकल्पनमित्यर्थः ॥ **अत्रोच्यत इति** । तात्पर्यनिर्णयाख्यैतद्ग्रन्थ इत्यर्थः ॥ **भाष्ये त्विति** । न च नैमित्तिकनाश इत्याहेत्यादिना जीवरूपार्थान्तरमुच्यत इत्यर्थः ॥ **भगवतेति** । भाष्यकृतेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**'इमे देहा' इति विशेषणान्नित्यश्चिदानन्दात्मकः स्वरूपभूतो देहो मुक्तानामपि विद्यत इति ज्ञायते ।**

*प्रका०*— मुक्तदेहव्यावृत्त्यर्थम् **इमे देहा** अन्तवन्त इत्युक्तम् । संसारिदेहवैलक्षण्यं मुक्तदेहानां "तस्मै स्वलोकं भगवान् सभाजितं सन्दर्शयामास परं न यत्पदम् ।" इत्यादिपुराणवचनेन 'चिदानन्दे'त्यादिश्रुत्या च सिद्धमित्याह **इमे देहा इतीति** ।

***न्या०दी०***— जीवस्य देहहानिसद्भावादीश्वरदेहस्य नित्यत्वादीश्वरस्य जीवादतिशय इति यद्व्याख्यानं न तद्गीताऽभिमतं भवितुमर्हति । देहस्यानित्यत्वनियमादित्यतो गीतायामेव इति विशेषणान्मुक्तदेहस्यापि नित्यत्वमनुज्ञायते । किमु हरेः । अन्यथा तद्विशेषणवैय्यर्थ्यात् । अतो युक्तमेव व्याख्यानमिति भावेनाह **इम इति** ॥ ननु मुक्तदेहस्यापि कथं नित्यत्वम् ? देहस्यानित्यत्वनियमादित्यत आह **चिदिति** ॥ जडशरीरत्वमेवानित्यत्वे प्रयोजकम् । तच्च मुक्तदेहस्य चिदानन्दात्मकत्वेन ततो व्यावर्तमानमनित्यत्वमपि व्यावर्तयतीति भावः । चिदानन्दात्मकत्वं देहस्य कथमित्यत आह **स्वरूपेति** ॥ स्वरूपं चिदानन्दात्मकमिति भावः । मुक्तानां देह एव नास्ति । 'अशरीरं वाव सन्तम्' इत्यादेरित्यतो वाह **चिदिति** ॥ जडदेहाभावपरा श्रुतिरिति भावः । भिन्नदेहाभावपरा चेति भावेनाह **स्वरूपेति** ॥

**गीतातात्पर्यनिर्णयः**

**"न वर्तते यत्र रजस्तमस्तयोः**
**सत्वं च मिश्रं न च कालविक्रमः ।**
**न यत्र माया किमतापरे हरे-**
**रनुव्रता यत्र सुरासुरार्चिताः ॥**

श्यामावदाताः शतपत्रलोचनाः
पिशङ्गवस्त्राः सुरुचः सुपेशसः ।
सर्वे चतुर्बाहव उन्मिषन्मणि-
प्रवेकनिष्काभरणाः सुवर्चसः ॥

प्रवालवैदूर्यमृणालवर्चसां
परिस्फुरत्कुण्डलमौलिमालिनाम् ।
भ्राजिष्णुभिर्यः परितो विराजते
लसद्विमानावलिभिर्महात्मनाम् ॥

विद्योतमानप्रमदोत्तमाभिः
सविद्युदभ्रावलिभिर्यथा नभः ॥"

—इति हि भागवते ।

चिदानन्दशरीरेण सर्वे मुक्ता यथा हरिः ।
भुञ्जते कामतो भोगांस्तदन्तर्बहिरेव च ।

—इति परमश्रुतेः ।

***न्या०दी०***— ननु मुक्तानां नित्यचिदानन्दात्मकदेहसद्भाव एव कुत इत्यत आह **न वर्तत इति** ॥ अपरे दोषाः । सुपेशसः सुरूपाः । उन्मिषन्मणिप्रवेकनिष्काभरणाः स्फुरद्रत्नप्रवरहाराभरणाः । सुवर्चसः सुकान्तिमन्तः । अत्र जडाभावमुक्त्वा तेषां शरीरोक्तेरर्थाच्चिदानन्दात्मकदेहवत्त्वं ज्ञायते ।

***भा०दी०***— **जडाभावमुक्त्वेति** । न वर्तत इत्यादिनेति भावः ॥ **शरीरेति** । 'श्यामावदाताः' इत्यादिनेति ज्ञेयम् ॥

**गीतातात्पर्यनिर्णयः**

**न च जीवेश्वरैक्यं मुक्तावपि ।**

***प्रका०***— **परं न यत्पदमिति** । यस्मात्परं स्थानं नास्तीत्यर्थः । तदेतत्सिद्ध्यर्थमुक्तौ जीवेश्वरयोरैक्यम् 'इदं ज्ञान'मित्यादि भगवद्वचनैर्निषेधति **न च जीवेति** ।

***न्या०दी०—*** नन्वेतानि वाक्यानि गौणमोक्षपराण्येव मुख्यमुक्तौ जीवेश्वरयोरैक्येनैतदनुपपत्तेरित्यत आह **न चेति** ॥

**गीतातात्पर्यनिर्णयः**

**"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।"** (गी. १४-२)

***न्या०दी०—*** कुतो नेत्यतो मुख्यमोक्षानन्तरमपि भेदस्य श्रुतिस्मृतिसिद्धत्वात् इत्याह **इदमिति** ।

**गीतातात्पर्यनिर्णयः**

**"यो वेद निहितं गुहायां परमे व्योमन् ।**
**सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता ।"**

**"एतमानन्दमयमात्मानमुपसङ्क्रम्य ।**
**इमान् लोकान्कामान्नी कामरूप्यनुसञ्चरन् ।**
**एतत्सामगायन्नास्ते ।"**

**"सर्वे नन्दन्ति यशसा(ऽऽ)गतेन सभासाहेन सख्या सखायः।**
**किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ।"**

***न्या०दी०—*** अत्रापुनरावृत्तिश्रवणान्मुख्यमोक्षत्वं ज्ञायते । न केवलं मुक्तानामीश्वराद्भिन्नतया व्यथाद्यभावमात्रमपि तु भिन्नतयैव परमानन्दानुभवोऽप्यस्तीति भावेनाह **यो वेदेति** ॥ एतद्वाक्ययोः परब्रह्मप्रकरणगतत्वान्मुख्यमोक्षपरत्वम् । अन्योन्यं सखायस्ते सर्वे मुक्ताः । स्वावगतेन यशोरूपेण ब्रह्मादिसभां सहमानेनेश्वरेण निमित्तेन नन्दन्ति । कथम्? यतोऽसौ एणामनिष्टस्पर्धी दिव्यान्नदाता सन्निन्द्रियाय हितो भवतीत्यर्थः । अत्राप्यनिष्टाभावश्रवणान्मुख्यमोक्षविषयत्वम् ।

***भा०दी०—*** **एतद्वाक्ययोरिति** । 'यो वेद' इति, 'आनन्दमयम्' इति वाक्ययोः 'ब्रह्मविदाप्नोति परम्' इत्युक्तपरब्रह्मप्रकरणगतत्वादित्यर्थः ॥ **यशोरूपेणेति** । यशोनामकरूपेणेत्यर्थः । 'तस्य नाम महद्यशः' इति श्रुतेः ॥ **ईश्वरेणेति** । सख्येति योज्यम् । 'किल्बिषस्पृत्पितुपणिर्ह्येषां अरंहितो भवति वाजिनाय'इति शेषार्थमाह **यतोऽसाविति** ।

**गीतातात्पर्यनिर्णयः**

"ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ।"

"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ।"

"स तत्र पर्येति जक्षन् क्रीडन् रममाणः ।"

"तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।"

***न्या०दी०***— कश्चिद्ब्रह्मा ऋचां सम्यगुच्चारणं कुर्वन्नास्ते । स्वयं चातिपुष्टिमान् कश्चिद्ब्रह्मा शक्करीषु छन्दोमतीषु ऋक्षु गायत्रं साम गायति । कश्चिद्ब्रह्मा पुराणविद्यां वदति । कश्चिद्ब्रह्मा विष्णोर्मूर्तिं ध्यायतीत्यर्थः । अस्य च ब्रह्मबाहुल्यप्रतिपादकत्वान्मुख्य-मोक्षविषयत्वम् । जक्षन् भक्षयन् हसंश्च रममाणो रतिं प्राप्नुवन् ।

***भा०दी०***— 'गायत्रं त्वो गायति शक्करीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमित उ त्वः' इति शेषार्थमाह **कश्चिदित्यादिना** । जक्षभक्षसहनयोरिति धातोः जक्षन्नित्यस्यार्थद्वयमाह **भक्षयन् हसंश्चेति** ।

**गीतातात्पर्यनिर्णयः**

"मुक्ताः प्राप्य परं विष्णुं तद्देहं संश्रिता अपि ।
तान्तम्येन तिष्ठन्ति गुणैरानन्दपूर्वकैः ।
भूपा मनुष्यगन्धर्वा देवाः पितर एव च ।
आजानेयाःकर्मदेवास्तत्त्वदेवाः पुरन्दरः ।
शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः ।
मुक्तावपि तदन्ये ये भूपाच्छतगुणावराः ।
न समो ब्रह्मणः कश्चिन्मुक्तावपि कथञ्चन ।
ततः सहस्रगुणिता श्रीस्ततः परमो हरिः ।
अनन्तगुणितत्वेन तत्समः परमोऽपि न ।"

*प्रका०*— देवा इति देवगन्धर्वा इत्यर्थः । **तदन्ये ये भूपाच्छतगुणावरा इति** । क्षितिपादिभ्योऽन्ये ये मानुषोत्तमाः ते भूपाच्छतगुणावराः । न तु ततो हीनाः सन्ति इत्यर्थः ।

***न्या०दी०***— परमसाम्यं नाम योग्यानन्दपूर्वत्वमेव । न तु सर्वसाम्यमिति भावेन मुक्ततारतम्ये च मानमाह **मुक्ता इति** ॥ देवा देवगन्धर्वाः । तत्त्वरूपाः तत्त्वाभिमानिनो बृहस्पत्यादयः । उक्तेभ्योऽन्ये ये मनुष्येत्तमास्ते भूपाच्छतांशोना इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।**
**कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि ।"**

**—इत्यादि मोक्षानन्तरमपि भेदवचनेभ्यः ।**

***न्या०दी०***— तारतम्यसद्भावे परस्परं विरोधः स्यादित्यत आह **अक्षण्वन्त इति** ॥ प्राप्ताक्षिकर्णफलाः परस्परविरोधशून्या मुक्ताः ज्ञानादिगुणेष्वसमा बभूवुः । तत्र केचित्क्षीरसागरमग्नाः । केचिदश्वत्थवनमुपवर्तमानाः । केचित्स्नातव्यह्रदा इव गम्भीरा भगवन्तं ददृशुरित्यर्थः । इदं वाक्यं 'श्रुत्वा विष्णुं' इत्यागमेन मुख्यमुक्तिविषयतया व्याख्यातम् । अत एव ऋचां त्व इत्यस्य ऋत्विग्विषयत्ववर्णनं परास्तम् । तारतम्येऽपूर्तिः स्यादित्यत आह **कामस्येति** ॥ यत्रेच्छाविषयाः पर्याप्तास्तत्र लोके माममृतं कुर्वित्यर्थः ।

*भा०दी०*— 'मनोजवेषु' इत्यस्यार्थो **ज्ञानादिगुणेष्विति** । 'आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे' इति शेषार्थमाह **तत्र केचिदिति** ॥ **श्रुत्वा विष्णुमिति** ।

'श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात्कर्णसंयुताः ।
अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्तास्तु ये गणाः ॥

तारतम्यं च तेषां च श्रुतावुदितमञ्जसा ।
क्षीरसागरदघ्नास्तु केचित्तिष्ठन्ति मुक्तिगाः ॥

उपस्थिता ब्रह्मवनं(ब्रह्मव्रतं) केचिदश्वत्थमण्डलम् ।
ऐरे ह्रदे केचिदपि देवा एव सदा हरिम् ॥

नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः ।
सागरादिस्थितं विष्णुं पश्यन्ति क्वचिदेव हि ।'

इत्यैतरेयभाष्योक्तागमेनेत्यर्थः ॥ **अत एवेति** । अस्य वाक्यस्य आगमेनेत्थमर्थ उक्त इति व्याख्यानादेवेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**न च — "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ।"**
**"यद्वै तत्र पश्यति पश्यन्वैतत्र पश्यति ।"**
**"न हि दुष्टुर्दृष्टेर्विपरिलोपो विद्यते ।"**
**"अविनाशित्वान्न तु तद्वितीयमस्ति ।**
**ततोऽन्यद्विभक्तं यत्पश्येत् ।"**
**"परमं ब्रह्म वेद ब्रह्मैव भवति ।"**
**'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादि वाक्यविरोधः ।**

***न्या०दी०***— तथापि न जीवेशभेदो युक्तः । तदभेदाभिधायकश्रुतिविरोधादित्यत आह **न चेति** ॥ कुतो न विरोध इति चेदर्थान्तरसम्भवात् ।

**गीतातात्पर्यनिर्णयः**

**"संज्ञानाशो यदि भवेत्किमुक्त्या नः प्रयोजनम् ।**
**मोहं मा प्रापयामास भवानत्रेति चोदितः ॥**

***प्रका०***— न च यत्रेत्यादिना श्रुतिभिः अभेदमुक्तमाशङ्क्य भेदपरत्वेन ताः श्रुतीः श्रुत्यन्तरैर्व्याचष्टे । **संज्ञेत्यादिनाऽर्थान्तरस्यैवावगमादित्यन्तेन** ।

***न्या०दी०***— प्रतीत एवार्थः किं न स्यादिति चेन्न । श्रुत्यन्तरेभ्य एवार्थान्तरस्यावगमादित्याह **संज्ञेति** ॥ "प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति । न प्रेत्य संज्ञाऽस्ति" इति याज्ञवल्क्यवाक्यानन्तरं तदभिप्रायमजानन्त्याः मैत्रेय्याश्चोद्यवाक्यम्— 'अत्रैव मा भगवान् मोहान्तमापीपन्न प्रेत्य संज्ञाऽस्ति' इति । तदर्थ उच्यते **संज्ञेति** ।

***भा०दी०***— 'यत्र त्वस्य' इति वाक्यार्थं पश्चाद्विवरितुं संज्ञेत्यादिप्रमाणव्याख्येयवाक्यं स्वयमाह **प्रज्ञानघन इत्यादिना** । मोहान्तं मोहाख्यनाशनम् ।

**गीतातात्पर्यनिर्णयः**

**याज्ञवल्क्यः प्रियामाह नाहं मोहं ब्रवीमि ते ।**
**भूतजज्ञानलोपः स्यान्निजं ज्ञानं न लुप्यते ॥**

***न्या०दी०—*** यदि मोक्षे ज्ञानं नश्येत्तर्हि तस्यापुरुषार्थत्वं स्यात् । भवति चासौ पुरुषार्थः । अतस्तत्र ज्ञानाभाववचनं मोहकमेवेत्यर्थः । 'स होवाच । न वा अरे अहं मोहं ब्रवीमि' इत्यस्यार्थ इतीति । ज्ञानानाशकथनं कथं न मोहकमित्यत उच्यते— 'अविनाशी वा अयमात्माऽनुच्छित्ति-धर्मा' इति । तस्यार्थो **भूतजेति** । भौतिकज्ञानं लुप्यत इति मद्वाक्यार्थो न तु निजज्ञानमपीत्यतो न मद्वाक्यं मोहकमिति भावः ।

**गीतातात्पर्यनिर्णयः**

**न च ज्ञेयविनाशः स्यादात्मनाशः कुतः पुनः ।**
**स्वभावतः पराद्विष्णोर्विश्वं भिन्नमपि स्फुटम् ॥**

***न्या०दी०—*** भूतजानाममुक्तानामेतद्विषये ज्ञानं लुप्यत इति वा । कुतो निजं ज्ञानं न लुप्यत इत्यत आह **न चेति** ॥ आत्मनाशः आत्मस्वरूपभूतज्ञाननाशः । आत्मातिरिक्तमपि यदा न नश्यति तदा किं वाच्यमतिप्रेमास्पदात्मस्वरूपज्ञानं न नश्यतीत्यर्थः । ज्ञेयानाशोऽपि कुत इत्याशङ्का-परिहाररूपं— 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । तदितरं इतरं जिघ्रति । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्तत्केन कं जिघ्रेच्चेनेदं सर्वं विजानाति तं च केन विजानीयात् । विज्ञातारमरे केन विजानीयात्' इति वाक्यं व्याख्यायते **स्वभावत इति** ॥ आत्मव्यतिरेकेण ज्ञेयसद्भाव एव घ्राणादिभोगस्येश्वरज्ञानस्यात्मज्ञानस्य च सम्भवादन्यथाऽसम्भवाज्ज्ञेयसद्भावोऽङ्गीकार्य इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अस्वातन्त्र्यादभिन्नमिव स्थितमेव यदेदृशम् ।**
**तदा घ्राणादिभोगः स्यात्स्वरूपज्ञानशक्तितः ॥**

***न्या०दी०—*** निर्विशेषाद्वैते कर्मकर्तृभावविवोधात् स्वज्ञानं च नोपपद्यते । यो ज्ञेयाभावे भोगाद्यसम्भव उक्तः सोऽप्यस्त्वित्यत आह **यदेति** ॥ अन्यद्गन्धादि । कथं भोगाद्यभावे पुरुषा-

र्थताभाव इत्यत आह **तदिति** ॥ पुरुषेणार्थ्यो हि पुरुषार्थः । न हि भोगाद्यभावं पुरुषोऽर्थयते । तदर्थं यतते वा । अतो भोगाद्यभावरूपो मोक्षो न पुरुषार्थ इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**तदाऽत्मानुभवोऽपि स्यादीश्वरज्ञानमेव च ।**
**यदाऽन्यं न विजानाति नात्मानं नेश्वरं तथा ॥**
**पुरुषार्थता कुतस्तु स्यात्तदभावाय को यतेत् ।**
**तस्मात्स्वभावज्ञानेन भिन्ना विष्णुसमीपगाः ॥**
**भुञ्जते सर्वभोगाश्च मुक्तिरेषा न चान्यथा ।"**

***न्या०दी०***— 'एतावदरे खल्वमृतत्वम्' इत्युपसंहारवाक्यं व्याक्रियते **तस्मादिति** ॥ भोगाद्यभावेऽपुरुषार्थत्वप्रसक्तेर्भोगाद्यङ्गीकार्यम् । भोगादिसम्भवाच्च भिन्ना विषयादयः । ततश्च स्वरूपज्ञानमिति भावः ।

***भा०दी०***— इतीत्यन्तेनेति चोदित इत्यादिवाक्यसङ्ग्रहः । ऐहिकज्ञानं वृत्तिज्ञानमित्यर्थः । एतद्विषये मुक्तविषय इत्यर्थः ।

***प्रका०***— 'विज्ञानघन् एवं तेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति अरेब्रवीमीति होवाच याज्ञवल्क्यः । सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तमापीपन्न प्रेत्य संज्ञास्तीति होवाच । न वा अरेऽहं मोहं ब्रवीमि । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । तदितर इतरं जिघ्रति । यत्र त्वस्य सर्वमात्मैवाभूत् । तत्केन कं पश्येत् । तत्केन कं जिघ्रेत् । येनेदं सर्वं विजानाति, तं केन विजानीयात् । विज्ञातारमरे केन विजानीयात्' इत्येतां श्रुतिं व्याख्याय 'यद्वैतं न पश्यति' इत्येषा श्रुतिः व्याख्यायते **यन्न पश्येदित्यादिना** ।

**गीतातात्पर्यनिर्णयः**

**यन्न पश्येत्परो विष्णुर्द्वितीयत्वेन स स्वतः ।**
**यद्द्वितीयं न भवति प्रादुर्भावात्मकं वपुः ॥**

***न्या०दी०***— 'यद्वैतन्न पश्यति न तु तद्द्वितीयमस्ति' इत्यस्यार्थो **यदिति** ।

**गीतातात्पर्यनिर्णयः**

**प्रधानपुरुषादन्यद्यत्तस्माद्भिन्नमीश्वरः ।**
**विभक्तत्वेन नियतं यस्मात्पश्यति सर्वदा ॥**

***न्या०दी०—*** 'ततोऽन्यद्विभक्तं यत्पश्येत्' इत्येतद्व्याक्रियते **प्रधानेति** ॥

**गीतातात्पर्यनिर्णयः**

**पश्यन्नेव यतो विष्णुस्तदभेदं न पश्यति ।**
**चेतनाचेतनस्यास्य नाभेदोऽस्ति ततोऽमुना ।**
**न हि ज्ञानविलोपोऽस्ति सर्वज्ञस्य परेशितुः ।**

***न्या०दी०—*** अन्यदवतारव्यतिरिक्तमीश्वरेण भिन्नतया दृष्टत्वात्प्रधानपुरुषादिकं भिन्नमेवेश्वरादित्युक्तम् । अभिन्नतया सर्वज्ञेनेश्वरेणादृष्टत्वाच्च भिन्नमित्युपपादकं 'पश्यन् वै तन्न पश्यति' इति । एतद्वाक्यं व्याक्रियते **पश्यन्निति** ॥ प्रधानादीनां स्वतो भिन्नत्वेन दर्शनमीश्वरस्य भ्रमः किं न स्यादित्याशङ्कापरिहाररूपं—'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्येतद्व्याक्रियते **न हीति** ॥ विपरिलोपो विपरीतत्वम् । **अविनाशित्वादिति** । नित्यत्वेन निर्दोषत्वादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगाः ।**
**प्रकृतिः परमं ब्रह्म परमं महदुच्यतः ।**

***प्रका०—*** 'स यो ह वै तत्परं ब्रह्म वेदे' त्येषा श्रुतिर्व्याख्यायते **ब्रह्माणीत्यादिना** ।

***न्या०दी०—*** 'परमं ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतिं व्याख्यातुं तदुपयुक्तमाह **ब्रह्माणीति** ॥ श्रुतिव्याख्यानं **अपीति** । यद्यपि परमं ब्रह्म वेद तथापि ब्रह्मैव भवति न परं ब्रह्म भवतीत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**नैव मुक्ता न प्रकृतिः क्वापि तद्विष्णुवैभवम् ।**
**प्राप्नुवन्त्यपि तज्ज्ञानान्निजं ब्रह्मत्वमाप्यते ।**
**यद्यस्य परमेशित्वं तदा स्याद्दुःखिता कुतः ।**
**दुःखी चेत्कुत ईशत्वमनीशो ह्येव दुःखभाक् ।**

र्थताभाव इत्यत आह **तदिति** ॥ पुरुषेणार्थ्यो हि पुरुषार्थः । न हि भोगाद्यभावं पुरुषोऽर्थयते । तदर्थं यतते वा । अतो भोगाद्यभावरूपो मोक्षो न पुरुषार्थ इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**तदाऽत्मानुभवोऽपि स्यादीश्वरज्ञानमेव च ।**
**यदाऽन्यं न विजानाति नात्मानं नेश्वरं तथा ॥**
**पुरुषार्थता कुतस्तु स्यात्तदभावाय को यतेत् ।**
**तस्मात्स्वभावज्ञानेन भिन्ना विष्णुसमीपगाः ॥**
**भुञ्जते सर्वभोगाश्च मुक्तिरेषा न चान्यथा ।''**

***न्या०दी०***— 'एतावदरे खल्वमृतत्वम्' इत्युपसंहारवाक्यं व्याक्रियते **तस्मादिति** ॥ भोगाद्यभावेऽपुरुषार्थत्वप्रसक्तेर्भोगाद्यङ्गीकार्यम् । भोगादिसम्भवाच्च भिन्ना विषयादयः । ततश्च स्वरूपज्ञानमिति भावः ।

***भा०दी०***— इतीत्यन्तेनेति चोदित इत्यादिवाक्यसङ्ग्रहः । ऐहिकज्ञानं वृत्तिज्ञानमित्यर्थः । एतद्विषये मुक्तविषय इत्यर्थः ।

***प्रका०***— 'विज्ञानघन् एवं तेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति अरेब्रवीमीति होवाच याज्ञवल्क्यः । सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तमापीपन्न प्रेत्य संज्ञास्तीति होवाच । न वा अरेऽहं मोहं ब्रवीमि । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । तदितर इतरं जिघ्रति । यत्र त्वस्य सर्वमात्मैवाभूत् । तत्केन कं पश्येत् । तत्केन कं जिघ्रेत् । येनेदं सर्वं विजानाति, तं केन विजानीयात् । विज्ञातारमरे केन विजानीयात्' इत्येतां श्रुतिं व्याख्याय 'यद्वैतं न पश्यति' इत्येषा श्रुतिः व्याख्यायते **यन्न पश्येदित्यादिना** ।

**गीतातात्पर्यनिर्णयः**

**यन्न पश्येत्परो विष्णुर्द्वितीयत्वेन स स्वतः ।**
**यद्द्वितीयं न भवति प्रादुर्भावात्मकं वपुः ॥**

***न्या०दी०***— 'यद्वैतन्न पश्यति न तु तद्द्वितीयमस्ति' इत्यस्यार्थो **यदिति** ।

**गीतातात्पर्यनिर्णयः**

**प्रधानपुरुषादन्यद्यत्तस्माद्भिन्नमीश्वरः ।**
**विभक्तत्वेन नियतं यस्मात्पश्यति सर्वदा ॥**

***न्या०दी०—*** 'ततोऽन्यद्विभक्तं यत्पश्येत्' इत्येतद्व्याक्रियते **प्रधानेति** ॥

**गीतातात्पर्यनिर्णयः**

**पश्यन्नेव यतो विष्णुस्तदभेदं न पश्यति ।**
**चेतनाचेतनस्यास्य नाभेदोऽस्ति ततोऽमुना ।**
**न हि ज्ञानविलोपोऽस्ति सर्वज्ञस्य परेशितुः ।**

***न्या०दी०—*** अन्यदवतारव्यतिरिक्तमीश्वरेण भिन्नतया दृष्टत्वात्प्रधानपुरुषादिकं भिन्नमेवेश्वरादित्युक्तम् । अभिन्नतया सर्वज्ञेनेश्वरेणादृष्टत्वाच्च भिन्नमित्युपपादकं 'पश्यन् वै तन्न पश्यति' इति । एतद्वाक्यं व्याक्रियते **पश्यन्निति** ॥ प्रधानादीनां स्वतो भिन्नत्वेन दर्शनमीश्वरस्य भ्रमः किं न स्यादित्याशङ्कापरिहाररूपं—'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्येतद्व्याक्रियते **न हीति** ॥ विपरिलोपो विपरीतत्वम् । **अविनाशित्वादिति** । नित्यत्वेन निर्दोषत्वादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगाः ।**
**प्रकृतिः परमं ब्रह्म परमं महदुच्यतः ।**

***प्रका०—*** 'स यो ह वै तत्परं ब्रह्म वेदे' त्येषा श्रुतिर्व्याख्यायते **ब्रह्माणीत्यादिना** ।

***न्या०दी०—*** 'परमं ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतिं व्याख्यातुं तदुपयुक्तमाह **ब्रह्माणीति** ॥ श्रुतिव्याख्यानं **अपीति** । यद्यपि परमं ब्रह्म वेद तथापि ब्रह्मैव भवति न परं ब्रह्म भवतीत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**नैव मुक्ता न प्रकृतिः क्वापि तद्विष्णुवैभवम् ।**
**प्राप्नुवन्त्यपि तज्ज्ञानान्निजं ब्रह्मत्वमाप्यते ।**
**यद्यस्य परमेशित्वं तदा स्याद्दुःखिता कुतः ।**
**दुःखी चेत्कुत ईशत्वमनीशो ह्येव दुःखभाक् ।**

***न्या०दी०***— कुत इत्थं कल्प्यते? परब्रह्मज्ञानेन परब्रह्मत्वं भवतीत्येवार्थः किं न स्यादित्यत आह **यदीति** ॥ यदि जीवस्य मुक्तौ परमेश्वरैक्यं स्यात्तर्हि संसारेऽपि तथा स्यात् । प्राग्भिन्नस्य पश्चादभेदानुपपत्तेर्नैतद्युज्यते । तथात्वे दुःखानुपपत्तेरिति भावः । कुतो न स्याद्दुःखितेत्यत आह **दुःखीति** ॥

**गीतातात्पर्यनिर्णयः**

**कुतः सर्वविदोऽज्ञत्वं क्व भ्रमोऽप्यज्ञतां विना ।**
**तस्मान्नैवेश्वरो जीवस्तत्प्रसादात्तु मुच्यते ।**

***न्या०दी०***— परमेश्वरभूतस्याप्यज्ञानवशाद्दुःखितेत्यत आह **कुत इति** ॥ सर्वज्ञस्यापि भ्रान्त्याऽज्ञानमित्यत आह **क्वेति** ॥ भ्रमस्याधिष्ठानाज्ञानमूलत्वादज्ञानस्य च भ्रान्तिमित्यत आह **क्वेति** ॥ भ्रमस्याधिष्ठानाज्ञानमूलत्वादज्ञानस्य च भ्रान्तिमूलत्वाङ्गीकारेऽन्योन्याश्रयतेति भावः ।

**गीतातात्पर्यनिर्णयः**

**अहेयत्वादहं नामा भगवान्हरिरव्ययः ।**
**ब्रह्मासौ गुणपूर्णत्वादस्म्यसावसनान्मितेः ।**

*प्रका०*— अहं ब्रह्मास्मि तत्त्वमसि' इत्याद्या श्रुतिर्व्याख्यायते । **अहेयत्वादित्यादिना** ।

***न्या०दी०***— 'अहं ब्रह्मास्मि', 'तत्त्वमसी'ति श्रुतिद्वयं व्याचष्टे **अहेयत्वादिति** ॥ **असनान्मितेरिति** ॥ स्वस्मिन् परिमितेर्निरासादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**असनादसिनामाऽसौ तैजस्त्वात्त्वमितीरितः ।**
**सर्वैः क्रियापदैश्चैव सर्वैर्द्रव्यपदैरपि ।**

***न्या०दी०***— विरोधिनां निरसनात्प्रमितिरूपत्वाच्चेति वा । त्विट्(त्विड्) प्रकाशन इति धातोस्तेजस्त्वात्त्वमितीरितः ।

**गीतातात्पर्यनिर्णयः**

**सर्वैर्गुणपदेश्चैव वाच्य एको हरिः स्वयम् ।**
**युष्मत्पदैः प्रातियोग्यात्तद्युतैश्च क्रियापदैः ।**

***न्या०दी०*—** न केवलमेतच्छब्दवाच्यत्वं हरेरपि तु सर्वशब्दवाच्यत्वं चेत्याह **सर्वैरिति** ॥ सर्वशब्दवाच्यत्वेऽपि रूपविशेषनियमोऽस्तीत्याह **युष्मदिति** ॥

**गीतातात्पर्यनिर्णयः**

**अस्मत्पदैरान्तरत्वात्क्रियार्थैश्च तदन्वयैः ।**
**परोक्षत्वात्तत्पदैश्च मुख्यवाच्यः स एव तु ।**
**सर्वान्वेदानधीत्यैव प्रज्ञाधिक्येन हेतुना ।**
**श्वेतकेतुरहङ्कारात्प्रायशो नास्मि मानुषः ।**

***प्रका०*—** सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय । तं ह पितोवाच श्वेतकेतो यन्नु खलु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति, अमतं मतमविज्ञातं विज्ञातमिति । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भण विकारो नामधेयं मृत्तिकेत्येव सत्यम् । 'सदेव सोम्येदमग्र आसीत्' एकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्येताः श्रुतीर्व्याचष्टे **सर्वान्वेदानित्यादिना** ।

***न्या०दी०*—** तत्त्वमसीति वाक्यं नाभेदपरम् । पूर्वोत्तरवाक्याननुसारित्वादिति भावेनाऽऽदित एव प्रकारान्तरेण व्याक्रियते । तत्र 'सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एवाय' इत्येतद्व्याक्रियते **सर्वानिति** ॥

**गीतातात्पर्यनिर्णयः**

**देवो वा केशवांशो वा नैषा प्रज्ञाऽन्यथा भवेत् ।**
**एवं महत्त्वबुद्ध्यैव दर्पपूर्णोऽभ्यगात्पितुः ।**
**सकाशमकृताचारं तं दृष्ट्वा स्तब्धमब्रवत् ।**
**पितोवाच कुतः पुत्र स्तब्धता त्वामुपागता ।**
**प्रायो नारायणं देवं नैव त्वं पृष्टवानसि ।**
**यस्मिञ्ज्ञाते त्वविज्ञातज्ञानादीनां फलं भवेत् ।**

***न्या०दी०*—** 'तं ह पितोवाच श्वेतकेतो यन्नु खलु सोम्यैवं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवति'

इत्येतद्व्याक्रियते **अकृताचारमिति** ॥ आदिश्यत इत्यादेशो नारायणः । ज्ञाते श्रुते मते च । **अविज्ञातज्ञानादीनामिति** ॥ अविज्ञाताश्रुतामतज्ञानश्रवणमनननामित्यर्थः । अविज्ञातान्यज्ञानादीनां यत्फलं तत्तदभावेऽपि भगवज्ज्ञानादिमात्रेणापि भवतीत्यर्थः । अविज्ञातान्यज्ञानादीनां जातानामपि यत्फलं तदपि भगवज्ज्ञानादौ जात एव जातं भवतीति च । परमात्मज्ञानादौ सत्यन्यदज्ञातादपि ज्ञातादिवद्भवतीति वा । एवंविधत्वादीश्वरस्य तज्ज्ञाने स्वात्मनोऽत्यन्ताधमत्वज्ञानसम्भवेन केशवोऽस्मीत्याद्यभिमानायोगान्नासौ त्वया पृष्ट इति भावः । तत्राऽद्ययोजनाद्वये प्राधान्यं हेतुः । तृतीययोजनायां सादृश्यं हेतुः ।

*भा०दी०*— 'तमादेशमप्राक्ष्यः' इत्यादेरर्थो 'नारायणोऽयम्' इत्यादीति भावेनाह **आदिश्यत इतीति** । उपदेशविषय इत्यर्थः । तदभावेऽपि अन्यज्ञानाभावेऽपीत्यर्थः । 'यस्मिन्' इत्यादेरर्थान्तरमाह **अविज्ञातान्येति** ॥

**गीतातात्पर्यनिर्णयः**

**प्राधान्यात्सदृशत्वाच्च तदधीनमिति स्फुटम् ।**
**तत्सृष्टं चेति विज्ञातं फलवद्धि भवेज्जगत् ।**

***न्या०दी०***— जातमपि जगज्ज्ञानादि परमात्मज्ञानादौ सत्येव सफलमिति कथमित्यत आह **तदधीनमिति** ॥ भगवज्ज्ञानादि तावदेवं भवति । वशीकृतविश्वो जगत्सृष्ट्यादिकर्तेश्वर इति । एवं च भगवज्ज्ञानादौ सति जगत्तदधीनमिति ज्ञानादिकं दृढं भवति । ततश्च मोक्षादिफलं भवतीत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**स्वातन्त्र्येणास्य विज्ञानं मिथ्याज्ञानमनर्थकृत् ।**

***न्या०दी०***— एवमज्ञातस्यापि जगतो ज्ञानादिना फलं किं न स्यादित्यतः का फलप्रत्याशा प्रत्युतानर्थ एव भवतीत्याह **स्वातन्त्र्येणेति** ॥ उक्तरीत्या भगवज्ज्ञानाद्यभावे जगतः स्वातन्त्र्येणैव ज्ञानादि प्राप्यते । तच्च मिथ्याज्ञानत्वादनर्थकृदित्यर्थः ।

*भा०दी०*— **एवमज्ञातस्यापीति** । भगवदधीनत्वादिनाऽज्ञातस्यापीत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**यथा चैवैकमृत्पिण्डज्ञानादेः सदृशत्वतः ।**
**मृन्मयं तदकार्यं च ज्ञातं मृदिति वै भवेत् ।**

***न्या०दी०***— सादृश्याद्भगवज्ज्ञानादौ सत्यन्यज्ज्ञातादिवद्भवतीत्यत्रोक्तं 'यथा सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञानं स्यात्' इति दृष्टान्तं व्याचष्टे **यथा चेति** ॥ ज्ञातं ज्ञातादि ।

***भा०दी०***— ज्ञातादेरित्युक्त्यनुसारादाह **ज्ञातादीति** । श्रुतं मतमित्यादिपदार्थः ।

**गीतातात्पर्यनिर्णयः**

**यथैव मृत्तिकेत्यादि नित्यनामप्रवेदनात् ।**
**वाचाऽरब्धमनित्यं तु ज्ञातं तन्मूलमित्यपि ।**

***न्या०दी०***— प्राधान्याद्भगवज्ज्ञानादिमात्रेणाज्ञातादेरप्यन्यस्य ज्ञानादिफलं भवति, भगवज्ज्ञानादौ सत्येव ज्ञातस्याप्यन्यस्य ज्ञानादेः फलं भवतीत्युभयत्रोक्तं 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति दृष्टान्तं व्याचष्टे **यथेति** ॥ यस्मात्साङ्केतिकनामधेयस्य वाचाऽऽरम्भणं क्रियते अतस्तद्विकारोऽत एवाप्रधानम् । मृत्तिकेत्यादि संस्कृतं नाम नित्यम् । अत एव प्रधानम् । प्राधान्यान्मृत्तिकेत्यादिसंस्कृतज्ञानमात्रेण साङ्केतिकाज्ञानादावपि तत्फलं विद्वानिति व्यवहारविषयत्वादिकं भवति । संस्कृतनामज्ञान एव च साङ्केतिकनामज्ञानं सफलं भवति । तन्मात्रेण विद्वानिति व्यवहारविषयत्वाद्यभावादित्यर्थः ॥ **तन्मूलमिति** ॥ तत्प्रधानकत्वादित्यर्थः ।

***भा०दी०***— इत्यत्रोक्तम् इत्यस्य दृष्टान्तम् इत्यनेन अन्वयः । 'वाचारम्भणं' इति श्रुत्यर्थमाह **यस्मादित्यादिना** । सत्यमित्यस्यार्थो **नित्यमिति** । इदानीं मूलार्थमाह **प्राधान्यादित्यादिना** । तत्फलं साङ्केतिकज्ञानादिफलम् । तत्किमित्यत आह **विद्वानितीति** । तन्मात्रेण साङ्केतिकज्ञानमात्रेणेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**एवं कारणभूतोऽसौ भगवान्पुरुषोत्तमः ।**
**प्रधानश्च स्वतन्त्रश्च तन्मूलमखिलं जगत् ।**
**तदाधारं विमुक्तौ च तदधीनं सदा स्थितम् ।**

***न्या०दी०***— 'एवं सोम्य स आदेशो भवति' इति दार्ष्टान्तिकवाक्यं व्याचष्टे **एवमिति** ॥ प्रधानोऽतस्तज्ज्ञानादिनोक्तप्रकारद्वयेनान्यज्ञानादिसाफल्यं भवतीति शेषः । एवं सदृशश्चेति द्रष्टव्यम् । प्राधान्यमेवेश्वरस्य कुत इत्यतः सदेव सोम्येत्यादिना स्वातन्त्र्येण जगत्कारणत्वमुक्तम् । तदेवाह **स्वतन्त्रः कारणभूत इति** ॥ ईश्वरोऽहमिति भावाकरणे हेतुतयेश्वरमाहात्म्यमुक्तम् । माहात्म्यान्तरं चोच्यते— 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति । तदर्थमाह **तन्मूलमिति** ॥

*भा०दी०*— एवं पुरुषोत्तमः प्रधान इत्यन्वयं तावदुपेत्य तदनन्तरं शेषमाह **प्रधानोऽत इत्यादि** ॥ **उक्तेति** । अज्ञातान्यज्ञानादीनां यत्फलं तत्तदभावेऽपि भवति । अज्ञातान्यज्ञानादीनां ज्ञातानामपि यत्फलं तदपि भगवज्ज्ञानादौ जात एव जातं भवतीति उक्तप्रकारद्वयेनेत्यर्थः । प्रधानश्चेति चशब्दसमुच्चेयं आह । एवं सदृशश्चेत्यपि द्रष्टव्यम् । कारणभूतोऽसावित्यंशस्योपयोगमाह **प्राधान्यमेवेति** । सादृश्यं च ब्रह्मजगतोरबाधितत्वात् इत्यादिना व्यक्तमित्यन्यत्र तत्त्वनिर्णयादावुपपादितं चेति नात्रोपपादितमिति भावः । तथा च वाचारम्भणदृष्टान्तमृत्पिण्डमृण्मयदृष्टान्तयोर्द्वयोरपि यथाक्रमं एवं प्रधान एवं सदृशश्चेति दार्ष्टान्तिकमुक्तं भवति ॥ **भावाकरण इति** । श्वेतकेतुनाऽहमीश्वरांश इति भावाकरणे जगत्कारणत्वस्वातन्त्र्यादिमाहात्म्यमुक्तमुद्दालकेनेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**स सूक्ष्मो व्यापकः पूर्णस्तदीयमखिलं जगत् ।**
**तस्मात्तदीयस्त्वमसि नैव सोऽसि कथञ्चन ।**

*प्रका०*— अनयोर्यथाक्रमं श्रुत्यादिविरोधात् 'स य एषोऽणिमा ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि श्वेतकेतो' इत्येषा श्रुतिर्जीवेशाभेदपरा नेत्याह **स सूक्ष्मेति** ।

*न्या०दी०*— माहात्म्यान्तरमुक्त्वा अभेदबुद्धिं मा कुर्वित्युच्यते—' स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति । तद्व्याचष्टे **स इति** ॥ व्यापकः पूर्ण इत्यात्मशब्दस्यार्थद्वयम् । पूर्णो गुणैः । नैव सोऽस्तीति । अतत्त्वमसीति विभज्य व्याख्यानान्तरम् ।

*भा०दी०*— **व्याख्यानान्तरमिति** । तदीयस्त्वमसीति व्याख्यानापेक्षयेति योज्यम् । तदित्यादिश्रुतीत्यस्यायमर्थः । तदुदाहृतवाक्यद्वयं व्याक्रियत इत्यन्वयः ।

**गीतातात्पर्यनिर्णयः**

**यथा पक्षी च सूत्रं च नानावृक्षरसा अपि ।**
**यथा नद्यः समुद्रश्च यथा वृक्षपरावपि ।**
**यथा धानाः परश्चैव यथैव लवणोदके ।**
**यथा पुरुषदेशौ च यथाऽज्ञज्ञानदावपि ।**

**यथा स्तेनापहार्यौ च तथा त्वं च परस्तथा ।**
**भिन्नौ स्वभावतो नित्यं नानयोरेकता क्वचित् ।**
**एवं भेदोऽखिलस्यापि स्वतन्त्रात्परमेश्वरात् ।**
**पन्तन्त्रं स्वतन्त्रेणकथमैक्यमवाप्नुयात् ।**

*प्रका०*— अत्र 'स यथा शकुनिः सूत्रेण प्रबद्धः' इत्यादिना जीवेशभेदे ये दृष्टान्ता उक्ताः तानाह **यथा पक्षीत्यादिना** ।

***न्या०दी०*—** जीवेश्वरभेदे 'स यथा शकुनिः' इत्यादिनोक्तदृष्टान्तवाक्यानि व्याचष्टे **यथेति** ॥

**गीतातात्पर्यनिर्णयः**

**स जीवनामा भगवान्प्राणधारणहेतुतः ।**
**उपचारेण जीवाख्या संसारिणि निगद्यते ।**
**तदधीनमिदं सर्वं नान्याधीनः स ईश्वरः ।**

*प्रका०*— अत्र यत् श्रूयते 'सेयं देवतैक्षताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति । तत्र जीवशब्देनान्तर्याम्युच्यते । न तु संसारिणः परेशात्मकत्वम् इत्याह **स जीवेति** ।

***न्या०दी०*—** यदपि 'जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति, 'स एष जीवेनात्मनाऽनुप्रभूतः' इति जीवेशाभेदाभिधायकवत्प्रतीयमानं वाक्यद्वयं तत् 'इत्यादिश्रुतिविरोध' इत्यादिपदगृहीतं व्याख्यायते **स इति** ॥ 'जीवापेतं वाव किलेदं म्रियते । न जीवो म्रियते' इत्यस्यार्थस्तदधीनमिति ।

*भा०दी०*— प्राग्भाष्यकृताऽनुपात्तं कथं व्याख्यायत इत्यत उक्तम् **इत्यादिश्रुतिविरोध इत्यादिपदगृहीतमिति** ॥

**गीतातात्पर्यनिर्णयः**

**जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।**
**जीवभेदो मिथश्चैव जडजीवभिदा तथा ।**

**जडभेदो मिथश्चेति प्रपञ्चो भेदपञ्चकः ।**
**स नित्य एव नोत्पाद्य उत्पाद्यश्चेन्नशेदपि ।**
**तस्मादनादिमानेव प्रकृष्टो भेदपञ्चकः ।**

*प्रका०*— "प्रपञ्चो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इत्येतां श्रुतिं तत्त्वमस्यहं ब्रह्मास्मि इत्यादिशब्दगृहीतां व्याचष्टे **जीवेश्वरेत्यादिना** ।

***न्या०दी०***— 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः' इत्यादिश्रुतिः भेदमिथ्यात्वाभिधायकवत्प्रतीयमाना प्रागादिपदगृहीता व्याख्यायते ॥ **जीवेति** ॥

**गीतातात्पर्यनिर्णयः**

**विष्णोः प्रज्ञामितं यस्माद् द्वैतं न भ्रान्तिकल्पितम् ।**
**अद्वैतः परमार्थोऽसौ भगवान्विष्णुरव्ययः ।**

***न्या०दी०***— विद उत्पत्ताविति धातुमाश्रित्य 'यदि विद्येत' इत्येतदुत्पाद्यश्चेदिति व्याख्यातम् । भ्रान्तिकल्पितत्वाद्भेदस्य कथमनादिनित्यतेत्याशङ्कानिवर्तकस्य 'मायामात्रमिदं द्वैतम्' इत्यस्यार्थो **विष्णोरिति** । भेदस्य सत्यत्वे कथमद्वैतं स्थानान्तरे कथ्यत इत्यत उक्तम् **अद्वैतं परमार्थत इति** । अस्यार्थोऽद्वैत इति । अनेन परमार्थत इति तसिः प्रथमार्थ इत्युक्तं भवति । अद्वैतवाक्यं परमार्थो भगवानद्वैत इत्याहेत्यर्थः ।

*भा०दी०*— **स्थानान्तर इति** । 'प्रपञ्चोपशमं शिवमद्वैतं' इति श्रुत्यन्तर इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**परमत्वं स्वतन्त्रत्वं सर्वशक्तित्वमेव च ।**
**सर्वज्ञत्वं परानन्दः सर्वस्य तदधीनता ।**
**इत्यादयो गुणा विष्णोर्नैवान्यस्य कथञ्चन ।**
**अभावः परमद्वैते सन्त्येव ह्यपराणि तु ।**

***न्या०दी०***— किं तत्परमत्वमित्यत आह **परमत्वमिति** ॥ एवं परमत्ववतोऽद्वैतत्वं नाम किमित्यत आह **इत्यादय इति** ॥ सोऽयं परमद्वैते अभावः । तदिदं परमत्ववतोऽद्वैतत्वं तदेवाद्वैतश्रुत्यर्थ इत्यर्थः । सर्वाद्वैतमेवार्थः किं न स्यादित्यत आह **सन्तीति** ॥

**गीतातात्पर्यनिर्णयः**

**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**अद्वैतं ज्ञानिनां पक्षे न तस्माद्विद्यते क्वचित् ।**

**इत्यादि श्रुतिभ्योऽर्थान्तरस्यैवावगतत्वात् ।**

***न्या०दी०***— बाधकाभावाच्च न भेदस्य कल्पितत्वमित्यर्थप्रतिपादकं विकल्प इति वाक्यम् । तस्यार्थो **विकल्प इति** ।

***भा०दी०***— **बाधकाभावाच्चेति** । स्थानान्तरोक्तेः श्रुत्यैव व्याख्यानबलादिति चार्थः । न केवलं मायामात्रत्वादिति वार्थः ।

**गीतातात्पर्यनिर्णयः**

**एकपिण्डनामधेयेतिशब्दानां वैयर्थ्यं चान्यथा ।**

***प्रका०***— एकपिण्डेत्यादेरयमर्थः । येनाश्रुतमित्यादेरुक्तमर्थनङ्गीकृत्य मृद्विज्ञानेन मृण्मयविज्ञानवत् ब्रह्मज्ञानेन जगद्ज्ञानमित्यर्थाङ्गीकारे एकेन मृत्पिण्डेनेत्यत्र एकशब्दमृत्पिण्डशब्दौ व्यर्थौ स्याताम् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'त्यत्र कारणमात्रसत्यत्वं विवक्षितं चेत् 'वाचारम्भणं विकारो मृत्तिकैव सत्ये' त्येव वाक्यं स्यात् । नामधेय इति शब्दयोर्वैय्यर्थ्यं स्यात् । नामधेयस्यापि विकारत्वेन पृथङ्निर्देशासम्भवात् । नामरूपात्मकप्रपञ्चमिथ्यात्वे ब्रह्मतत्त्वज्ञानेन सर्वज्ञानं च न स्यात् ।

***न्या०दी०***— 'स आत्मा तत्त्वमसि' इत्यादिवाक्यस्य भेदपरत्वसिद्ध्यर्थं 'यथा सोम्य' इत्यादिवाक्यस्य स्वोक्तमर्थमनङ्गीकृत्य अर्थान्तरताकल्पनायां उदाहृतश्रुतिविरोधो बाधकः । बाधकान्तरं चाह **एकेति** ॥ यथैकमृत्पिण्डविज्ञानेन सर्वं मृण्मयं विज्ञानं स्यात्, यतो नामरूपात्मकं मृण्मयं वागालम्बनमात्रं न तु पारमार्थिकं, मृत्तिकैव सत्या तथा परमात्मज्ञाने सति जगज्ज्ञानं भवति । ततोऽतिरेकेणाभावादित्यन्यथा व्याख्यानं न युज्यते । 'मृदा ज्ञातया सर्वं मृण्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो मृत्तिकैव सत्या' इत्येतावता पूर्णत्वेनैकादिशब्दानां वैय्यर्थ्यात् । सर्वमृण्मयानामेकमृत्पिण्डातिरेकेणाभावाभावात् । नामधेयस्यापि विकारत्वादिति भावः ।

***भा०दी०***— ननु नामधेयपदाभावे नामप्रपञ्चस्य वागालम्बनमात्रंत्वलाभः कथमित्यत आह **नामधेयस्यापीति** ।

**गीतातात्पर्यनिर्णयः**

**न चैकविज्ञानेन सर्वविज्ञानं तत्पक्षे। न हि शुक्तिज्ञो रजतज्ञ इति व्यवहारः। नवकृत्वोऽपि भेद एव दृष्टान्तोक्तेश्च। तस्मादतत्त्वमसीत्येवोच्यते।**

***न्या०दी०—*** किञ्च वाचारम्भणवाक्ये यदि ईशेशितव्यादिप्रपञ्चस्य परमात्मन्यारोपिततया ततोऽतिरेकेणाभावो विवक्षितस्तर्हि प्रतिज्ञातं परमात्मज्ञानेन जगज्ज्ञानं न स्यात्। सत्यज्ञानेन मिथ्याज्ञानस्या-नुपपत्तेः। विरोधात्तयोज्ञानयोरित्याह **न चेति**॥ ननु परमात्मज्ञानेन जगन्मिथ्येति ज्ञायत एव। अतः कथमुच्यते ब्रह्मण्यारोपितत्वे जगतः तज्ज्ञानेन जगज्ज्ञानानुपपत्तिरित्यत आह **न हीति**॥ एवं चेत्परमात्मज्ञानेन प्रपञ्चज्ञानं भवतीति वाच्यम्। न तु प्रपञ्चज्ञानं ब्रह्मज्ञानेन भवतीति। तथा लोके व्यवहाराभावादिति भावः। इतोऽपि नात्र प्रपञ्चस्य परमात्मातिरेकेणाभावो विवक्षित इत्याह **नवकृत्व इति**॥ किमतो यद्येवं वाचारम्भणश्रुतिर्भेदपक्षे युक्तेत्यत आह **तस्मादिति**। तस्मात्पूर्ववाक्यानां भेदपरत्वादित्यर्थः।

**गीतातात्पर्यनिर्णयः**

**ऐतदात्म्यमित्येतदात्मसम्बन्धि। तत्स्वामिकम्। त्वमपि तदैतदात्म्य-मेवासि न सोऽसीति वा। तदितिलिङ्गसाम्यं चात्र।**

***न्या०दी०—*** अतत्त्वमसीति भेदपरतया योजनायां 'ऐतदात्म्यमिदं सर्वम्' इति पूर्व-वाक्यविरोधः स्यादित्यतस्तस्य श्रुत्योक्तमर्थं स्मारयति **ऐतदात्म्यमिति**॥ अस्त्वेवमात्मसम्बन्धीति योजना। सम्बन्धश्च तादात्म्यमित्यतः स्वस्वामिभावसम्बन्ध एवेति भावेनाह **तदिति**॥ तत्त्वमसीति पदविभागमभ्युपेत्यापि पूर्वोत्तरवाक्यानां भेदपरत्वात् भेदपरतया श्रुतिसिद्धमर्थान्तरं चाह **त्वमपीति**॥ न सोऽस्तीति व्यावृत्तिकथनमात्रम्। इतोऽप्यैतदात्म्यपरामर्शोऽयमित्याह **तदिति**॥ ऐतदात्म्य-परामर्शे तदितिपदस्यैकलिङ्गत्वं गुणः स्यात्। ततश्चैतदात्म्यपरामर्शोऽयमित्यर्थः। प्राचीनपक्षेऽपि तस्मादन्यदतदिति न लिङ्गवैषम्यम्।

***भा०दी०—*** **श्रुतिसिद्धमिति**। 'तदीयस्त्वमसि' इति प्रागुदाहृतश्रुतिसिद्धमित्यर्थः। ननु 'अतत्त्वमसि' इति पक्षे असोऽसीति भाव्यमित्यत आह **प्राचीनेति**। वस्तुपदाध्याहारेणातद्वस्त्वसी-त्युपपत्तेर्न लिङ्गवैषम्यमित्यर्थः।

**गीतातात्पर्यनिर्णयः**

**अविद्यमानमेवेश्वरं सृष्ट्यादिकं चाप्राप्तमेवात्मनो भिन्नत्वेन प्रापयित्वा तन्निषेधे कथं श्रुतेरुन्मत्तवाक्यत्वं न स्यात् ?**

***प्रका०***— न हि शुक्तितत्त्वज्ञानेन तदध्यस्तरजतज्ञानं भवति । अतः मिथ्यात्वं त्वितोऽपि न युज्यते इत्याह **अविद्यमानमिति** ।

***न्या०दी०***— भवेदयमैतदात्म्यपरामर्शो भवतामनुगुणो यद्यैतदात्म्यपदेन सत्सम्बन्ध्युच्यते । न च तन्निश्चितम् । सर्वोऽपि ईशेशितव्यादिप्रपञ्चः परमात्मात्मक इत्यप्यर्थसम्भवादिति चेत् । तत्किमत्र ईशेशितव्यादिप्रपञ्चस्य साक्षात्परमात्माभेदोऽभिधीयत इति ते मतम् उत ईशेशितव्यादिप्रपञ्च एव परमात्मादिरिक्तो नास्तीति स्वरूपतो निषिध्यते ? नाद्यः । मिथ्यासत्ययोरभेदायोगात् । द्वितीयं दूषयति **अविद्यमानमिति** ॥ यद्येषा श्रुतिरीशेशितव्यादिप्रपञ्चं परमात्मातिरेकेण प्रतिषेधति तदेन्मत्तवाक्यवदप्रमाणं स्यात् । अविद्यमानस्यैवेशेशितव्यादिप्रपञ्चस्य स्वयमेव तदैक्षतेत्यादौ परमात्मातिरेकेण विहितत्वात् । न च वाच्यमत्र निषेद्धुं तदैक्षतेत्यादावीशेशितव्यादिप्रपञ्चोऽनुद्यूत एव, अतो न दोष इति । ईशेशितव्यादिप्रपञ्चस्य श्रुतिं विनाऽत्मनो भिन्नत्वेनाप्राप्ततयाऽनुवादायोगादिति भावः ।

***भा०दी०***— शङ्कते **भवेदिति** ॥

**गीतातात्पर्यनिर्णयः**

**अनुवादोऽपि 'यदिदं वदन्ति तन्न युज्यत' इत्यादिवाक्यं परिहारे विशेषयुक्तिं च विना न दृष्टः । अति प्रसङ्गश्चान्यथा । अभेदानुवादेन भेदोपदेशः किमिति न स्यात् ?**

***न्या०दी०***— इतोऽपि निषेधाय तदैक्षतेत्यादौ प्रपञ्चोऽनुद्यूत इति न युज्यते । 'यदिदं वदन्ति तन्न युज्यते' इति वाक्येन निषेधे विशेषयुक्त्या च हीनत्वात् । तद्विनाऽनुवादस्य क्वाप्यदृष्टत्वादित्याह **अनुवादोऽपीति** ॥ तादृशवाक्याद्यभावेऽपि निषेधायात्रानुवादः प्रपञ्चस्येत्यङ्गीकारे को दोष इति चेत् अदृष्टकल्पनेत्येकं दूषणम् । अपरं चाह **अतिप्रसङ्गश्चेति** ॥ कथमित्यत आह **अभेदेति** ॥ अन्यथेति सम्बध्यते । यद्येतादृशवाक्याद्यभावेऽप्यैतदात्म्यमित्यादौ निषेद्धुं तदैक्षतेत्यादिना परमात्मातिरिक्ततया प्रपञ्चोऽनूद्यत इति कल्प्यते तर्हि तदैक्षतेत्यादौ प्रपञ्चस्य परमात्मातिरेकेणाभावं निषिध्यातिरिक्तत्वेन

भावं विधातुमैतदात्म्यमित्यादिना प्रपञ्चस्य परमात्मातिरेकेणाभावोऽनूद्यत इत्यपि स्यादविशेषादित्यर्थः ।

*भा०दी०*— **तादृशवाक्याद्यभावेऽपीति** । अनुवादादिलिङ्गयत्तदादिशब्दोपेतवाक्यविशेषयुक्त्याद्यभावेऽपीत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**सर्वशाखान्ते भेदोक्तेश्चैतदेव युक्तम् ।**

*प्रका०*— सर्वशाखासमाप्तिषूक्तत्वाद्भेद एव विज्ञायते । नानूद्यत इत्येतद्विधातुमाह **सर्वशाखेति** ।

*न्या०दी०*— इतश्च निषेधायायं प्रपञ्चस्य परमात्मातिरिक्ततया सद्भावानुवादो न भवतीत्येतदेव युक्तमित्याह **सर्वेति** ॥

अनुवादो भवन् शाखादावेव भवेत् । तदन्ते तु निषेधः । न चात्र तदस्ति । भेदस्यैव शाखान्तेषूक्तत्वात् । अतोऽपि न भेदस्य निषेधाय श्रुतावनुवाद इत्यर्थः । शाखान्तेषु कास्ता भेदोक्तय इत्यत आह **नेति** ॥

**गीतातात्पर्यनिर्णयः**

**"नासंवत्सरवासिने प्रब्रूयात् नाप्रवक्त्र इत्याचार्या आचार्याः ।"**

**"अहं विश्वं भुवनमभ्यभवाम् ।"**

**"अनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति**
**प्रतितिष्ठतीति ब्रह्मविदो विदुः ।"**

**"नमो विष्णवे महते करोमि ।"**

**"पश्यन्त्यात्मन्यवस्थितम्" इत्यादि ।**

**नचेश्वरस्तद्भेदो वा प्रत्यक्षादिसिद्धः ।**

*प्रका०*— प्रत्यक्षादिसिद्धस्य भेदस्य श्रुत्यनूद्यत्वं किं न स्यादित्यत आह **न चेश्वर इति** ।

***न्या०दी०***— यदुक्तमभेदानुवादेन भेदोपदेशः स्यादिति न तद्युज्यते । अभेदस्य श्रुतिं विनाऽप्राप्तत्वात् । किं नामेशेशितव्यादिप्रपञ्चस्य परमात्मभिन्नतयाऽनुवादेन तन्निषेध एव युक्तः । ईशेशितव्यादिप्रपञ्चस्य परमात्मभिन्नतायाः प्रत्यक्षादिप्राप्तत्वादित्यत आह **न चेति** ॥ अत्रेश्वरपदेन परमात्मोच्यते । परमात्मन एव प्रत्यक्षाद्यसिद्धत्वेन तत्प्रतियोगिकेशेशितव्यादिप्रपञ्चस्य भेदः सुतरां प्रत्यक्षाद्यसिद्धः । यदुच्यते श्रुतिसिद्धं परमात्मानं प्रतियोगीकृत्य प्रपञ्चस्य भेदः प्रत्यक्षादिना गृह्यत इति तन्न । तथा सति प्रपञ्चभिन्नतया श्रुतावपि परमात्मनिरूपणप्रसङ्गात् । अन्यथा प्रत्यक्षादिनाऽपि तद्भेदस्य विषयीकर्तुमशक्यत्वात् । तथा चोन्मत्तवाक्यमेवेति भावः । ईश्वरस्यैव प्रत्यक्षादिनाऽसिद्धे-रीशेशितव्यस्य च तदाकारेणासिद्धेः परमात्मनः सकाशादीश्वरादिरूपप्रपञ्चस्य भेदः सुतरां तेनासिद्ध इति वा ।

***भा०दी०***— **परमात्मोच्यत इति** । शुद्धब्रह्मेत्यर्थः ॥ **अन्यथेति** । परमात्मनि जगद्भेदस्य श्रुत्या ग्रहण इत्यर्थः । ईश्वरपदस्य विशिष्टब्रह्मपरत्वमेवोपेत्यार्थमाह **ईश्वरस्यैवेति** । असिद्धेरिति च्छेदः ॥ **तेनेति** । प्रत्यक्षादिनेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**तत्पक्षे त्वैक्यादेरपि मिथ्यात्वात्स्वरूपस्य च सिद्धत्वाद्व्यर्थैव श्रुतिः ।**

***प्रका०***— जीवेश्वरभेदस्य प्रत्यक्षाद्यवेद्यत्वान्न तत्सिद्धभेदानुवादित्वं श्रुतेरित्यर्थः । जीवेश-भेदाद्यखिलप्रपञ्चस्य मिथ्यात्वे तदन्तर्गतस्याभेदस्यापि मिथ्यात्वेन प्रतिपाद्याभावादखिलवेदस्यान-र्थक्यं स्यात् । न च चित्स्वरूपं प्रतिपाद्यम् । तस्यावभासमानत्वेन प्रतिपादनवैय्यर्थ्यादित्याह **तत्पक्ष इति** ।

***न्या०दी०***— इतोऽपि न परमात्मातिरिक्तप्रपञ्चनिषेधो युज्यत इत्याह **तत्पक्ष इति** ॥ यदि परमात्मातिरिक्तः सर्वोऽपि प्रपञ्चो मिथ्या स्यात् । तदा सर्वश्रुतीनां वैयर्थ्यं स्यात् । तथाहि । 'एकमेवाद्वितीयम्', 'यः सर्वज्ञः' इत्यादिश्रुतिरैक्यादिधर्मप्रतिपादिका उत आत्मस्वरूपप्रतिपादिका । आद्येऽप्यैक्यसार्वज्ञादिधर्माः किं स्वरूपातिरिक्ताः स्वरूपं वा । नाद्यः । तथात्वे मिथ्यात्वापातात् । द्वितीयस्तु तृतीयेऽन्तर्भवति । नाप्यसौ युक्तः । स्वरूपस्य स्वतःसिद्धत्वेन प्रतिपादनवैयर्थ्यादिति भावः ।

***भा०दी०***— **तृतीय इति** । स्वरूपप्रतिपादकेति पक्ष इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**लक्षितस्वरूपस्यापि न स्वरूपाद्विशेषः । निर्विशेषत्वोक्तेः । मिथ्याविशेषोक्तौ चाप्रामाण्यं श्रुतेः ।**

*प्रका०*— न च वाच्यं भेदाभेदादिसकलधर्मरहितं तत्त्वंपदलक्षितं चित्स्वरूपं प्रतिपाद्यमिति । तस्यावभासमानात् स्वरूपात् विशेषाभावात् । विशेषमद्भावे निर्विशेषत्वभङ्गात् । निर्विशेषब्रह्मणि मिथ्याविशेषं बोधयति चेत् वेदोऽप्रमाणं स्यात् । व्याहतिश्च स्यात् । सर्वमिथ्यात्वेन मिथ्यात्वस्यापि मिथ्यात्वापातात् । सर्वसत्यत्वस्य सत्यत्वापातादित्याह । **लक्षितेत्यादिना** ।

***न्या०दी०***— शुद्धस्वरूपस्याप्रतिपाद्यत्वेऽपि भेदाभावसार्वज्ञाद्युपलक्षितस्वरूपस्य प्रतिपाद्यत्वान्न श्रुतिवैयर्थ्यमित्यत आह **लक्षितेति** ॥ लक्षितस्यापि शुद्धाद्विशेषाभावेन तद्वदस्याप्यप्रतिपाद्यत्वान्न तत्प्रतिपादकत्वं श्रुतेर्युक्तमित्यर्थः । कुतः शुद्धाद्विशेषाभावो लक्षितस्येत्यत आह **निर्विशेषत्वेति** ॥ लक्षितमिति यदोक्तं तदैव तस्य निर्विशेषत्वमप्युक्तमेव । अन्यथा विशिष्टत्वापत्त्या मिथ्यात्वापातात् । अतस्तस्य न शुद्धाद्विशेष इति भावः । ननु भवतु धर्माणां मिथ्यात्वम् । तथापि श्रुतेस्तत्प्रतिपादकत्वे को दोष इत्यत आह **मिथ्येति** ॥

**गीतातात्पर्यनिर्णयः**

**मिथ्यात्वं च मिथ्यैव तेषाम् । अतः सत्यत्वं सत्यं स्यात् ।**

***न्या०दी०***— इतोऽपि नाऽत्मातिरिक्तस्य सर्वस्य मिथ्यात्वं युक्तमित्याह **मिथ्यात्वमिति** ॥ आत्मातिरिक्तस्य सर्वस्य मिथ्यात्वे तन्मिथ्यात्वं सत्यं मिथ्या वा । नाद्यः । आत्मातिरिक्तं सर्वं मिथ्येति पक्षक्षतेः । अतो मिथ्येत्येवाङ्गीकार्यमिति भावः । किमतो यद्येवमित्यत आह **अत इति** ॥ इतश्च नात्मविशेषाणां मिथ्यात्वमिति वाऽऽह **मिथ्येति** ॥

*भा०दी०*— पूर्वं शङ्कोत्तरत्वेन योजितमधुना श्रुतिवैय्यर्थ्यरूपयुक्त्यपेक्षया युक्त्यन्तरोक्तिपरत्वेन योजयति **इतश्चेत्यादिना** ॥

**गीतातात्पर्यनिर्णयः**

**उपाधिकृतभेदेऽप्युपाधेर्मिथ्यात्वे त्वप्राप्तमेवोपाधिभेदं प्रापयित्वा पुनर्निषिध्यत इति स एव दोषः ।**

*प्रका०*— ननु निर्विशेषे ब्रह्मणि नाविद्यमानविशेषबोधको वेदः । येनाप्रमाणं भवेत् । किन्तु उपाधिकृतधर्मबोधक इत्यत आह **उपाधिकृतेति** । स एव दोष इत्यस्योन्मत्तवाक्यत्वं दोष इत्यर्थः । दोषाः समा एवेत्यस्यात्मनो मिथ्यात्वोपाधिकृतभेदपक्षे भवन्तीत्यर्थः ।

*न्या०दी०*— न सार्वज्ञादिविशेषा असन्तो येन श्रुतेरप्रामाण्यं स्यात् । नापि शुद्धं लक्ष्यं वा ज्ञानस्वरूपं श्रुतिवेद्यमित्युच्यते । येनोक्तदोषः स्यात् । किं नामैकस्मिन्नेवात्मनि उपाधिभेदभिन्ने तन्निमित्तसार्वज्ञादिविशेषाश्च भवन्ति । तदुपाधिभेदभिन्नमौपाधिकविशेषविशिष्टस्वरूपं श्रुतिप्रतिपाद्य-मिति चेत्, किमसावुपाधिः मिथ्या सत्यो वा । आद्ये दोषमाह **उपाधीति** ॥ उपाधिकृत एव आत्मनि भेदो विशेषाश्चेत्यङ्गीकृत्य उपाधेर्मिथ्यात्वाङ्गीकारे तद्भिन्नस्वरूपस्य तन्निमित्तविशेषाणां च मिथ्यात्वं स्यात् । तथा च तदभिधायकश्रुतेरप्रामाण्यं स्यात् । नेह नानेत्यादौ निषेधाय मिथ्या-भूतमपि तदुच्यते श्रुताविति चेत्तर्हि स्वयमेव मिथ्याभूतमुपाधिभेदभिन्नस्वरूपं तन्निमित्तविशेषांश्च विधाय पुनस्तन्निषेधे श्रुतेरुन्मत्तवाक्यत्वमेव स्यात् । निषेधाय तदनूद्यत इति चेन्न । उपाधिभेद-भिन्नस्वरूपस्य तन्निमित्तविशेषाणां च प्रत्यक्षाद्यप्राप्तत्वेनानुवादानुपपत्तेरिति भावः ।

*भा०दी०*— **उक्तेति** । वैय्यर्थ्यरूपदोष इत्यर्थः ॥ **तन्निमित्तेति** । उपाधिनिमित्तेत्यर्थः । उपाधीति मूलवाक्यं खण्डशः शेषोक्त्या व्याचष्टे **उपाधिकृत एवेत्यादिना भाव इत्यन्तेन** ॥

**गीतातात्पर्यनिर्णयः**

**सत्योपाधिपक्षेऽपि हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वदृष्टेरेकेनैवेश्वरेण सर्वोपाधिगतं सुखं दुःखं भुज्येतेत्येवमादयो दोषाः समा एव ।**

*न्या०दी०*— द्वितीयं दूषयति **सत्येति** ॥ यद्यप्यत्रापसिद्धान्तो वक्तुं शक्यः । तथापि तस्यातिस्फुटत्वेन दोषान्तरमेवोक्तम् । ब्रह्मातिरिक्तस्य सत्यत्वमङ्गीकृत्यापि ब्रह्मण्युपाधिभेदमङ्गी-कुर्वतां दूषणाय च । आदिपदेनोपाधेरप्येकदेशसम्बन्ध इत्यादिवक्ष्यमाणसङ्ग्रहः । सत्योपाधिपक्षेऽपि दोषाः समा इत्यनेन मिथ्योपाधिपक्षेऽप्येते भवन्तीति सूचयति ।

*भा०दी०*— **दूषणाय चेति** । दोषान्तरमित्यन्वयः । **इत्यादिवक्ष्यमाणेति** । एकादशे । ॥ १८ ॥

**गीतातात्पर्यनिर्णयः**

**अचेतनानामनुभवाभावान्न तत्साम्यम् ।**

*प्रका०*— नन्वेकत्वे आकाशस्यापि गृहाकाशादिगतं धूमशबलादिकं यथा नानुसन्धत्ते एवमेकत्वेऽप्यात्मनो देवदत्तगतसुखादिकं यज्ञदत्तो नानूसन्धत्तामित्याशङ्क्याह **अचेतनानामिति** ।

*न्या०दी०*— नन्वेकत्वेऽप्याकाशस्य यथा महानसाकाशगतधूमानुभवस्तस्यैव न सर्वाकाशस्योपाधिभेदात् । तथाऽत्रापि स्यादित्यत आह **अचेतनानामिति** ॥ किं महानसाकाशसम्बन्धवत्त्वेऽपि धूमस्य सर्वाकाशसम्बन्धाभाववद्दुःखाश्रयत्वाभावोऽस्त्वित्युच्यते उत तदनुभवाभाववदनुभवाभावः । नाद्यः । अस्माकमनिष्टाभावात् । न द्वितीयः । आकाशस्याचेतनत्वेन अनुभवप्राप्तेरेवाभावेन दृष्टान्तवैषम्यादिति भावः । अयं चाभ्युपगमवादः । आकाशस्यान्तर्भेदवत्त्वात् ।

**गीतातात्पर्यनिर्णयः**

**अतो जीवेश्वरयोर्भेद एवेति सिद्धम् ॥ १८ ॥**

*प्रका०*— विचारितार्थमुहसंहरति **अत इति** ॥ १८ ॥

*न्या०दी०*— उपसंहरति **अत इति** ॥ १८ ॥

**गीता**

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥**

*वि०वि०*— ननु यदि जीवाना नित्यत्वमीश्वरस्य च स्वतन्त्रत्वं तर्ह्ययमस्य हन्ता, अयमनेन हतः, इति प्रतिपत्तिः कीदृशीत्याशङ्क्य भ्रान्तिरित्याह **य एनमिति** । य एनं जीवं स्वातन्त्र्येण हन्तारं पश्यति । तथैनं जीवमीश्वरं वा चेतनस्य हन्तारं पश्यति । यश्चैनं जीवं हतं मन्यते तावुभौ न विजानीतः । अज्ञानिनौ । यतश्चित्प्रतिबिम्बोऽतः स्वातन्त्र्याभावान्नायं जीवो हन्ति नित्यत्वान्न हन्यते च । एतदज्ञानादेव जीवानां प्रायश्चित्तादिभागित्वमिति ॥ १९ ॥

*वा०ल०*— 'य एनं वेत्ति हन्तारम्' इत्यत्र एनं जीवमेव हन्तारं स्वातन्त्र्येण हन्तारं यः मन्यते, यश्चैनं जीवं हतं मन्यते देहस्यैव हतत्वेऽपि स्वात्मानमेव हतं मन्यते, तावुभौ न विजानीतः । ॥ १९ ॥

*सा०सं०*— ननु यदुक्तं जीवचैतनस्य नित्यत्वं, यच्चोक्तं सर्वथैकप्रकारेणाविनाशित्वात् ईश्वरः स्वतन्त्रः, अनिच्छया देहनाशात् तन्निमित्तदुःखवत्त्वाच्च जीवः परतन्त्र इति, तज्जीवनित्यत्वपारतन्त्र्ये न युक्ते । हन्ताऽयमस्य, हतश्चायमिति हननादिक्रियायाः, जीवे तत्र स्वातन्त्र्यस्य च प्रतीतेरित्यत आह **य इति** । **यः** पुमान् **एनं** जीवं **हन्तारं** जीवान्तरस्य स्वातन्त्र्येण घातकं **वेत्ति, यश्च एनं** केनचित् स्वातन्त्र्येण **हतं मन्यते, तावुभौ** जीवस्यानित्यत्वज्ञानी, हननादिक्रियायां जीवस्वातन्त्र्य-ज्ञानी चेत्युभौ **न विजानीतः** । जीवनित्यत्वभगवत्स्वातन्त्र्याज्ञानिनौ । भ्रान्ताविति यावत् ।

कुतो बाधकाद्भ्रान्तित्वकल्पनेत्यत आह **नायमिति** । बिम्बनित्यत्वोपाधिनित्यत्वबिम्ब-सन्निधिनित्यत्वानादित्वरूपोक्तहेतुभ्यो **नायं हन्ति** जीवम् । **न हन्यते** च जीवः । प्रतिबिम्बत्वादेव हेतोर्न स्वतन्त्रः सन् कश्चन हन्तीत्यर्थः । अतो बाधकाद्भ्रान्तित्वमिति भावः । अत्र हननक्रिया जीवक्रियान्तरोपलक्षणम् । सर्वत्र तस्यास्वातन्त्र्यादिति **एनम्** ईश्वरं जीवचेतनस्य **हन्तारं यो मन्यते** सोऽपि भ्रान्त एव । चेतनहननस्येश्वरेणाकरणादित्यपि योजना तात्पर्योक्ता ॥ १९ ॥

*अ०प्र०*— यद्वा तदेव भीष्मादिमृत्युनिमित्तः, शोको निवारितः यत्तु आत्मनो हन्तृत्वनिमित्तं तदपि तद्वदेव निर्निमित्तमित्याह **य एनमिति** ।

यः[१], एनं[२], हन्तारं[३], वेत्ति[४], यः[५], एनं[६], हतं च[७], मन्यते[८], तौ[९], उभौ[१०], न[११], विजानीतः[१२], अयं[१३], न[१४], हन्ति[१५], न[१६], हन्यते[१७] इत्यन्वयः ।

यः[१], एनं = जीवदेहस्य जीवस्य वा[२], हन्तारं = स्वातन्त्र्येण हननकर्तारम्[३], वेत्ति = पश्यति[४], यश्च[५], एनं = जीवं[६], हतं अन्येन ईश्वरेण जीवेन वा हतं अनित्यं[७], मन्यते[८], तौ न विजानीतः न सम्यक् ज्ञानिनौ[१०] । कुतः जीवपरमात्मनोः सेव्यसेवकज्ञानाभावात् तस्मान्नित्यत्वात्, अयं = जीवः[१३], न हन्ति = स्वातन्त्र्येण न हन्ति[१४], न हन्यते = तथाऽप्यन्येन केनापि न हन्यते[१७], इत्यर्थः ॥ १९ ॥

**भाष्यम्**

**व्यवहारस्तु भ्रान्त इत्याह— य एनमिति । कुतः । उक्तहेतुभ्यो नायं हन्ति न हन्यते । न हि प्रतिबिम्बस्य क्रिया । स हि बिम्बक्रिययैव क्रियावान् । 'ध्यायतीव' इति श्रुतेश्च ॥ १९ ॥**

*प०टी०*— जीवनित्यत्वे वध्यघातुकव्यवहारस्य का गतिः ? इत्येतत्परिहर्तुमुत्तरश्लोकमवतार्य व्याचष्टे **व्यवहारस्त्विति** । उक्तयुक्त्या बिम्बोपाधिसान्निध्यनाशः । प्रतिबिम्बत्वयुक्त्या कथमघात-

**गीतातात्पर्यनिर्णयः**

**अचेतनानामनुभवाभावान्न तत्साम्यम् ।**

*प्रका०*— नन्वेकत्वे आकाशस्यापि गृहाकाशादिगतं धूमशबलादिकं यथा नानुसन्धत्ते एवमेकत्वेऽप्यात्मनो देवदत्तगतसुखादिकं यज्ञदत्तो नानूसन्धत्तामित्याशङ्क्याह **अचेतनानामिति** ।

*न्या०दी०*— नन्वेकत्वेऽप्याकाशस्य यथा महानसाकाशगतधूमानुभवस्तस्यैव न सर्वाकाशस्योपाधिभेदात् । तथाऽत्रापि स्यादित्यत आह **अचेतनानामिति** ॥ किं महानसाकाशसम्बन्धवत्त्वेऽपि धूमस्य सर्वाकाशसम्बन्धाभाववद्दुःखाश्रयत्वाभावोऽस्त्वित्युच्यते उत तदनुभवाभाववदनुभवाभावः । नाद्यः । अस्माकमनिष्टाभावात् । न द्वितीयः । आकाशस्याचेतनत्वेन अनुभवप्राप्तेरेवाभावेन दृष्टान्तवैषम्यादिति भावः । अयं चाभ्युपगमवादः । आकाशस्यान्तर्भेदवत्त्वात् ।

**गीतातात्पर्यनिर्णयः**

**अतो जीवेश्वरयोर्भेद एवेति सिद्धम् ॥ १८ ॥**

*प्रका०*— विचारितार्थमुहसंहरति **अत इति** ॥ १८ ॥

*न्या०दी०*— उपसंहरति **अत इति** ॥ १८ ॥

**गीता**

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥**

*वि०वि०*— ननु यदि जीवानां नित्यत्वमीश्वरस्य च स्वतन्त्रत्वं तर्ह्ययमस्य हन्ता, अयमनेन हतः, इति प्रतिपत्तिः कीदृशीत्याशङ्क्य भ्रान्तिरित्याह **य एनमिति** । य एनं जीवं स्वातन्त्र्येण हन्तारं पश्यति । तथैनं जीवमीश्वरं वा चेतनस्य हन्तारं पश्यति । यश्चैनं जीवं हतं मन्यते तावुभौ न विजानीतः । अज्ञानिनौ । यतश्चित्प्रतिबिम्बोऽतः स्वातन्त्र्याभावान्नायं जीवो हन्ति नित्यत्वान्न हन्यते च । एतदज्ञानादेव जीवानां प्रायश्चित्तादिभागित्वमिति ॥ १९ ॥

*वा०ल०*— 'य एनं वेत्ति हन्तारम्' इत्यत्र एनं जीवमेव हन्तारं स्वातन्त्र्येण हन्तारं यः मन्यते, यश्चैनं जीवं हतं मन्यते देहस्यैव हतत्वेऽपि स्वात्मानमेव हतं मन्यते, तावुभौ न विजानीतः । ॥ १९ ॥

***सा०सं०***— ननु यदुक्तं जीवचैतनस्य नित्यत्वं, यच्चोक्तं सर्वथैकप्रकारेणाविनाशित्वात् ईश्वरः स्वतन्त्रः, अनिच्छया देहनाशात् तन्निमित्तदुःखवत्वाच्च जीवः परतन्त्र इति, तज्जीवनित्यत्वपारतन्त्र्ये न युक्ते । हन्ताऽयमस्य, हतश्चायमिति हननादिक्रियायाः, जीवे तत्र स्वातन्त्र्यस्य च प्रतीतेरित्यत आह **य इति** । **यः** पुमान् **एनं** जीवं **हन्तारं** जीवान्तरस्य स्वातन्त्र्येण घातकं **वेत्ति, यश्च एनं** केनचित् स्वातन्त्र्येण **हतं मन्यते, ताबुभौ** जीवस्यानित्यत्वज्ञानी, हननादिक्रियायां जीवस्वातन्त्र्यज्ञानी चेत्युभौ **न विजानीतः** । जीवनित्यत्वभगवत्स्वातन्त्र्याज्ञानिनौ । भ्रान्ताविति यावत् ।

कुतो बाधकाद्भ्रान्तित्वकल्पनेत्यत आह **नायमिति** । बिम्बनित्यत्वोपाधिनित्यत्वबिम्बसन्निधिनित्यत्वानादित्वरूपोक्तहेतुभ्यो **नायं हन्ति** जीवम् । **न हन्यते** च जीवः । प्रतिबिम्बत्वादेव हेतोर्न स्वतन्त्रः सन् कश्चन हन्तीत्यर्थः । अतो बाधकाद्भ्रान्तित्वमिति भावः । अत्र हननक्रिया जीवक्रियान्तरोपलक्षणम् । सर्वत्र तस्यास्वातन्त्र्यादिति **एनम्** ईश्वरं जीवचेतनस्य **हन्तारं यो मन्यते** सोऽपि भ्रान्त एव । चेतनहननस्येश्वरेणाकरणादित्यपि योजना तात्पर्योक्ता ॥ १९ ॥

***अ०प्र०***— यद्वा तदेव भीष्मादिमृत्युनिमित्तः, शोको निवारितः यत्तु आत्मनो हन्तृत्वनिमित्तं तदपि तद्वदेव निर्निमित्तमित्याह **य एनमिति** ।

यः[१], एनं[२], हन्तारं[३], वेत्ति[४], यः[५], एनं[६], हतं च[७], मन्यते[८], तौ[९], उभौ[१०], न[११], विजानीतः[१२], अयं[१३], न[१४], हन्ति[१५], न[१६], हन्यते[१७] इत्यन्वयः ।

यः[१], एनं = जीवदेहस्य जीवस्य वा[२], हन्तारं = स्वातन्त्र्येण हननकर्तारम्[३], वेत्ति = पश्यति[४], यश्च[५], एनं = जीवं[६], हतं अन्येन ईश्वरेण जीवेन वा हतं अनित्यं[७], मन्यते[८], तौ न विजानीतः न सम्यक् ज्ञानिनौ[१०] । कुतः जीवपरमात्मनोः सेव्यसेवकज्ञानाभावात् तस्मान्नित्यत्वात्, अयं = जीवः[१३], न हन्ति = स्वातन्त्र्येण न हन्ति[१४], न हन्यते = तथाऽप्यन्येन केनापि न हन्यते[१७], इत्यर्थः ॥ १९ ॥

### भाष्यम्

**व्यवहारस्तु भ्रान्त इत्याह— य एनमिति । कुतः । उक्तहेतुभ्यो नायं हन्ति न हन्यते । न हि प्रतिबिम्बस्य क्रिया । स हि बिम्बक्रिययैव क्रियावान् । 'ध्यायतीव' इति श्रुतेश्च ॥ १९ ॥**

***प०टी०***— जीवनित्यत्वे वध्यघातुकव्यवहारस्य का गतिः ? इत्येतत्परिहर्तुमुत्तरश्लोकमवतार्य व्याचष्टे **व्यवहारस्त्विति** । उक्तयुक्त्या बिम्बोपाधिसान्निध्यनाशः । प्रतिबिम्बत्वयुक्त्या कथमघात-

कत्वम् ? इत्यत आह **न हीति** । जीवस्याकर्तृत्वे विधिनिषेधवैयर्थ्यं स्यादित्यत आह **स हीति** । जीवस्य परतन्त्रकर्तृत्वे प्रमाणमाह **ध्यायतीति** ॥ १९ ॥

***न०टी०***— तर्हि वध्यघातकभावव्यवहारस्य का गतिः ? इत्यत आह **व्यवहारस्त्विति** । अप्रमेयेश्वरप्रतिबिम्बत्वम्, नित्योपाधिकत्वम्, 'नित्यो नित्यानाम्' इत्यादिवेदान्तप्रसिद्धेश्च **इत्युक्तहेतवः** । ननु भवतु नामाहन्यमानत्वमात्मस्वरूपस्योक्तहेतुभ्यः । अत एव न हन्तृत्वं कस्यचित् । अतस्तद्व्यवहारस्य भ्रान्तत्वम् । तथाऽपि देहवियोजनाख्यं हन्तृत्वं जीवस्यापि स्यात् । तदभावे प्रायश्चित्तोक्त्यादिविरोधादित्यत आह **न हीति** । प्रतिबिम्बत्वाद्देहवियोजनेऽपि न स्वतः कर्तृत्वं जीवस्य, किन्तु बिम्बाधीनत्वेन । अतो न प्रायश्चित्तादिविरोध इति भावः । **ध्यायतीवेति** ॥ इवशब्दात् न स्वतन्त्रं ध्यानादिकर्तृत्वं जीवस्य ॥ १९ ॥

***प्र०दी०***— य एनमिति पुनरात्मनित्यत्वं किमित्युच्यत इत्यतो नास्य नित्यत्वप्रतिपादने तात्पर्यम् । किन्तु निष्टङ्कितं चेदात्मनो नित्यत्वं तर्हि का गतिः तद्धननव्यवहारस्येत्याशङ्क्य तस्य भ्रान्तत्वमनेनोच्यत इत्याह— **व्यवहारस्त्विति** । व्यवहारोऽत्र ज्ञानम् । तथापि 'नायं हन्ति न हन्यते' इति पुनरुक्तिरेवेति चेन्न । ज्ञानानां प्रामाण्यस्य बाधकैकापोद्यत्वात् कुतो बाधकादस्य भ्रान्तत्वमित्याशङ्क्य स्वपक्षसाधकानामेवोक्तहेतूनाम् एतद्बाधनेऽपि व्यापारप्रदर्शनार्थत्वादस्येत्याह— **कुत इति** । नन्वत्र हननमेकमेव । तत्कथमुभाविति । कथं च 'नायं हन्ति न हन्यते' इति । अथैकस्या अपि क्रियायाः कारकभेदादेवमुक्तिः तर्हि करणाधिकरणोक्तिरपि प्रसज्यत इति । उच्यते । आत्मनो नित्यत्वमिव अस्वातन्त्र्यमपि प्राक् प्रतिपादितम् । यथोक्तं तात्पर्यनिर्णये । तत्र हननव्यवहारवत् स्वातन्त्र्यव्यवहारस्यापि भ्रान्तत्वमनेनोच्यत इति 'उभौ' इत्याद्युपपद्यते । अत एव भाष्यकारो व्यवहारस्त्विति सामान्येनाह । न तु हननव्यवहार इति निष्कृष्य । ननु नित्यत्वे बिम्बनित्यत्वादयो हेतव उक्ताः । अस्वातन्त्र्ये तु न कोऽपि । तत् कथमुक्तहेतुभ्य इत्युक्तमिति चेन्न । प्रतिबिम्बत्वस्योक्तत्वात् । तस्य कथमस्वातन्त्र्यहेतुत्वमित्यत आह— **न हीति** । क्रियेति वदता 'हन्तारं' 'हन्ति' इति पदद्वयं उपलक्षणार्थमिति सूचितम् । ननु प्रतिबिम्बस्यापि लोके क्रिया दृश्यते । जीवस्य च क्रियाऽभावे 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र.सू.२-३-१७-१) इत्यादिविरोध इत्यत आह– **स हीति** । बिम्बक्रियया बिम्बाधीनक्रियया । तथा च पूर्वं स्वातन्त्र्याभावापेक्षया क्रियाप्रतिषेध इति ज्ञातव्यम् । ननूपाधिक्रिययाऽपि प्रतिबिम्बे क्रिया भवति । तत्कथमुच्यते बिम्बक्रिययैवेति । मैवम् । स्वातन्त्र्यप्रतिषेधे तात्पर्यात् । जीवस्य पृथगुपाध्यभावाच्च । जीवस्येश्वराधीनक्रियत्वे श्रुतिं चाह— **ध्यायतीवेति** । ईश्वरो जीवं ध्याययतीत्यर्थः । इवशब्दोऽल्पार्थे ॥ १९ ॥

*भा०दी०*— गीतायां न विजानीत इत्युक्तेर्भाष्ये व्यवहारस्त्वित्युक्तिः कथमित्यत आह **व्यवहार इति । स्वपक्षसाधकानामेवेति** । जीवनित्यत्वसाधकानां बिम्बस्य नित्यत्वादुपाधेश्च नित्यत्वात् तत्सन्निधेरनाशाच्चेति हेतूनामित्यर्थः । करणेति शस्त्रेण कुरुक्षेत्रे इत्यप्युक्तिप्रसङ्गा-दित्यर्थः । **कथं चेति** । न हन्येत इत्येतावदुक्तौ हननबुद्धेर्भ्रमत्वोक्तिसम्भवादिति भावः । यथोक्तं तात्पर्यनिर्णय इति । गीतेति आदौ योज्यम् । गीतातात्पर्ये हि यद्यपि नित्यत्वं जीवस्याप्यस्ति तथापि सर्वप्रकारेणाविनाशित्वं विष्णोरेवेत्यादिना । तस्मादनाशिनो-ऽप्रमेयस्य विष्णोः पूजार्थं युध्यस्वेत्यन्तेन ग्रन्थेन । 'अविनाशि तु तद्विद्धि' इत्यादिश्लोकार्थतया ईश्वरस्य स्वातन्त्र्यं जीवस्या-स्वातन्त्र्यं चोक्तमित्यर्थः । **तत्रेति** । एवं सतीत्यर्थः । अनेन 'य एनमि'ति श्लोकेनोच्यते । य एनं जीवं स्वातन्त्र्येण हन्तारं वेति हतश्चैनं जीवं हतं मन्यते । तावुभौ स्वातन्त्र्यज्ञानी जीवहननज्ञानी चेत्युभौ न विजानीतः । भ्रान्तिमतौ । कुतः ? ईश्वरप्रतिबिम्बहेतुना स्वातन्त्र्याभावान्नायं स्वातन्त्र्येण हन्ति । बिम्बनित्यत्वादिप्रागुक्तहेतुभ्यो नित्यत्वेन न हन्यते । यस्मादित्येवंरूपेणोच्यत इति हेतो-रुभावित्याद्युपपद्यत इत्यर्थः । **उक्तत्वादिति** । 'अन्तवन्त' इति श्लोक इति भावः । **उपलक्ष-णार्थमिति** । हन्तारं हननोपलक्षितक्रियामात्रं प्रतिकर्तारं मन्यते हन्ति स्वातन्त्र्येण क्रियामात्रमपि न करोति । ईशप्रतिबिम्बत्वादिति क्रियामात्रोपलक्षणार्थमित्यर्थः ॥ १९ ॥

*भा०र०*— **किमित्युच्यत इति** । किं पुनरुक्तेः प्रयोजनमित्यर्थः ॥ भ्रान्तत्वमिति हननज्ञानस्य भ्रमत्वोक्तौ नित्यत्वप्राप्तेरवर्जनीयत्वादिति भावः । **तस्य** व्यवहारशब्दितस्य ज्ञानस्य । व्यवहार-शब्दस्य प्रसिद्ध्या अभिलापार्थत्वे वेत्ति मन्यते विजानीत इति ज्ञानवाचिपदप्रयोगो गीतायामयुक्तः स्यादित्यत आह **व्यवहारोऽत्रेति** । रूढ्याऽभिलपनार्थस्यापि व्यवह्रियते अनेनेति व्युत्पत्त्या ज्ञाना-र्थत्वं भ्रान्तपदसन्निधानादिति भावः । **तथाऽपि** त्रिपाद्या अन्यतात्पर्यकत्वेन पुनरुक्तित्वपरिहारेऽपि । **पुनरुक्तिरेवेति** । हननव्यवहारभ्रमत्वस्य पादत्रयेणाभिधानादन्त्यपादो "न त्वेवाहम्" "नित्यस्या-नाशिनः" इत्यादिना पुनरुक्त इत्यर्थः । एवेति वदतो न किमपि प्रयोजनमस्येत्यभिमानः । प्रयो-जनोक्त्याऽभिमानं खण्डयितुं शङ्कामुत्थापयति **ज्ञानानामिति** । ननु कथं बाधकैकापोद्यत्वादिति । यावता "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रं "विशेषणं विशेष्येण" इति सिद्धे पूर्वनिपातनियमार्थं कृतम् । अत एवैकवैयाकरण इत्युदाहरणे एकशब्दस्य पूर्वनिपातः । यावता च "वदस्सुपि क्यप् च" इति अनुपसर्गे सुप्युपपदे भावेऽर्थे वदतेः क्यब्विहितः । तथा चोदाहरन्ति सत्योद्यमिति । अत्र कित्त्वाद् वस्य सम्प्रसारणम् । प्रत्युदाहरन्ति च । सुपि किम् ? वाद्यम् । अनुपसर्ग इत्येव । **प्रवाद्यमिति** । अत्र चापशब्द उपसर्गः । क्यप् च कर्मणि । अत एक बाधका-

पवाद्यत्वादिति प्रयोक्तव्यमिति । उच्यते— "दोषैकदृक्पुरोभागी", "ह्लादैकमयीम्" इत्यादिदर्शनात् सङ्ख्यार्थस्यैकशब्दस्य पूर्वनिपातो न केवलार्थस्य । अत्र केवलार्थ एकशब्दः । यच्च वदेरनुपसर्ग एव क्यबिति, सत्यमेवैतत् । अयं चापशब्द उपसर्गप्रतिरूपकमव्ययान्तरं नोपसर्गः । सम्प्रसारणं तु कित्त्वात् । यद्यपि भाव इति तदपि न । सिद्धान्तकौमुद्यां "कर्मण्यपि प्रत्यय इत्येके" इत्युक्तत्वात् । अतो यथान्यासमेव प्रयोगः साधुरिति ।

**अस्य** प्रामाण्यस्य । **भ्रान्तत्वं** भ्रान्तिविषयत्वम् । कल्प्यमिति शेषः । **स्वपक्षेति** । आत्मनित्यत्वं स्वपक्षः । तत्साधकानां बिम्बनित्यत्वोपाधिनित्यत्वबिम्बोपाधिसन्निधिनित्यत्वरूपाणाम्, नित्यस्येत्यादिनोक्तानां हेतूनामित्यर्थः । **एतद्बाधनेऽपि** हननादिरूपात्मनाशज्ञानप्रामाण्यबाधनेऽपि । व्यापारोऽत्र सामर्थ्यम् । **अस्य** चतुर्थपादस्य । **एकमेवेति** । हन्तारं हतमिति पदद्वयेऽपि प्रकृतेरेकत्वेन तदर्थभूतं हननमेकमेव । तथा चैकस्मिन् विषये भ्रान्तिमतां जात्यपेक्षयैकवचनम्, व्यक्तिविवक्षया बहुवचनं युक्तम् । उभाविति द्विवचनं त्वयुक्तमिति भावः । **कथं चेति** । "न विजानीतः" इति हननज्ञानस्य यद् भ्रमत्वमुक्तं तद्धननरूपार्थाभावनिश्चये हि स्यात् । तन्निश्चयश्च "न हन्यते" इत्येकेनैव वाक्येनोत्पादयितुं शक्यत इति न हन्तीति व्यर्थमिति भावः । **कारकभेदात्** तिपः कर्तरि यकश्च कर्मण्यनुशासनात् कर्तृकर्मरूपकारकभेदादित्यर्थः ॥ **करणाधिकरणेति** । हननक्रियायाः सम्प्रदानापादानकारकशून्यत्वेन तदुक्त्यप्रसङ्गेऽपि अनेन करणेनास्मिन् देशे हन्यत इत्यप्युक्तिप्रसङ्गः । क्रियामात्रस्यानेककारकसाध्यत्वादिति भावः । **प्राक्** "अविनाशि तु" इत्यत्र । नन्वत्र जीवास्वातन्त्र्यं न भाष्यतः प्रतीयत इत्यत आह **यथोक्तं तात्पर्यनिर्णय इति** । "यद्यपि नित्यत्वं जीवस्याप्यस्ति । तथाऽपि सर्वप्रकारेणाविनाशित्वम्" इत्यादौ "तस्मादनाशिनोऽप्रमेयस्य विष्णोः पूजार्थं युध्यस्व तत्प्रदानाधीनत्वाद् दुःखनिवृत्तेः" इत्यन्तेन गीतातात्पर्यनिर्णय इत्यर्थः ।

तत्र हि "सातिशयत्वेऽपि कुतस्तत्पूजा कर्तव्येत्यत उक्तं **तदिति** । न केवलं सर्वप्रकारेण अविनाशित्वात् तत्पूजाऽत्र कर्तव्येत्युच्यते । अपि तु सर्वप्रकारेणाविनाशित्वात् स एव स्वतन्त्रः । ततश्च तदधीनत्वं मुक्तेः युद्धादिस्वकर्मणाऽऽराधितश्चेश्वरो मोक्षं ददात्यतस्तत्पूजा कर्तव्येत्येवाभिप्रेतम्" इति "अविनाशि तु" इति श्लोके स्वकर्मणाऽऽराधितेश्वराधीनमुक्तिभागितया जीवस्यास्वातन्त्र्यमभिमतमिति भावः । **अनेन** "य एनम्" इति श्लोकेन । इत्यादीत्यादिपदेन "नायं हन्ति" इत्यादि तुरीयपादग्रहः । स्वातन्त्र्यप्रतीतेः भ्रान्तित्वं भाष्यकृत्सम्मतमित्यत्रोपष्टम्भकमाह **अत एवेति** । **नित्यत्वे** प्रतिबिम्बभूतजीवनित्यत्वे । **बिम्बेति** । बिम्बनित्यत्वम्, उपाधिनित्यत्वं, बिम्बोपाधिसन्निधिनित्यत्वं चेति त्रयो हेतवः 'अन्तवन्तः' इत्यत्रोक्ता इत्यर्थः । ननु प्रतिबिम्बनित्यत्वे

बिम्बनित्यत्वमुपाधिनित्यत्वं च न हेतुः । तथात्वेऽपि तदुभयसन्निधिनाशेन प्रतिबिम्बनाशोपपत्त्या अप्रयोजकत्वात् । किन्तु तत्सन्निधिनित्यत्वमेव । तत् कथं त्रयोऽपि हेतवः ? मैवम् । यो यत्प्रतिबिम्बः सोऽसति विरोधे तत्समानधर्मेति **वक्ष्यमाणव्याप्तिबलेन** बिम्बभूतेश्वरनित्यत्वेऽपि तत्समानधर्मावच्छिन्ने प्रतिबिम्बेऽनित्यत्वशङ्कायोगात् । एवमुपाधिनित्यत्वेऽपि नाप्रयोजकत्वशङ्का । उपाधेः स्वरूपत्वेन तन्नित्यत्वे जीवनित्यत्वावश्यम्भावात् । न चैवं साध्यावैशिष्ट्यम् । उपाध्युपाधिमद्भाववद् । विशेषबलेन साध्यसाधनभावस्याप्युपपत्तेरित्याशयः । **न कोऽपि** हेतुरुक्तः । **उक्तत्वात्** "अप्रमेयेश्वरसरूपत्वात्" इत्यत्र । गीतायां हन्तारं हन्तीति हननक्रियायामेव कर्त्रुक्तेर्भाष्येऽपि न हि प्रतिबिम्बस्य हननक्रियेति वाच्येऽपि क्रियेति सामान्योक्तेरस्ति प्रयोजनमिति भावेनाऽऽह **क्रियेति वदतेति** । इति पदद्वयमिति वदता अस्वातन्त्र्यमात्रप्रतिपादनस्य प्रस्तुतत्वात् स्वातन्त्र्यभ्रमापादकतिङन्ततृजन्तपदमेवोपादातव्यम्, न तु हन्यते हतमिति पदमपीति सूचितम् ।

**उपलक्षणार्थमिति** । क्रियामात्रे जीवस्य स्वातन्त्र्यप्रतिषेधाय जीवगतसर्वक्रियोपलक्षणार्थमित्यर्थः । **दृश्यत इति** । तीरस्थवृक्षप्रतिबिम्बे जलचलनेन चलनक्रियोपलभ्यत इत्यर्थः । किञ्च जीव एवात्र प्रतिबिम्बः । स च क्रत्वनुष्ठानादिक्रियावान् । तस्य तदनङ्गीकारे सूत्रादिविप्रतिषेध इत्याह **जीवस्य चेति** । ज्ञो जीवः कर्ता शास्त्रार्थवत्त्वात् विधिनिषेधरूपशास्त्रस्यार्थवत्त्वात् । अन्यथा शास्त्रसार्थक्यं न स्यात् । जडेशमुक्तानां तदविषयत्वादिति सूत्रार्थः । बिम्बक्रियायाः बिम्बनिष्ठतया, तया प्रतिबिम्बः कथं क्रियावान् स्यादित्यत आह **बिम्बाधीनेति** । ननु पूर्ववाक्ये प्रतिबिम्बे क्रिया प्रतिषिद्धा । अत्र तु क्रियोच्यत इति विप्रतिषेध इति मन्दाशङ्कां तात्पर्योक्त्या परिहरति **तथा चेति** ॥ जलादिक्रियया वृक्षप्रतिबिम्बे क्रियादर्शनादाह **ननूपाधीति** । प्रतिबिम्बे स्वतन्त्रक्रिया नास्तीत्यत्रैव तात्पर्यमेवकारस्य न तूपाध्यधीनक्रियानिषेधेऽपीति भावेनाऽऽह **स्वातन्त्र्येति** ॥

किञ्च अस्तु सूर्यकादावुपाधिक्रिययाऽपि क्रियावत्त्वं, न प्रकृतप्रतिबिम्बे । तत्रोपाधिप्रतिबिम्बयोरभेदात् प्रतिबिम्बातिरिक्तोपाधेरभावेनोपाधिक्रियाया हेतुत्वासम्भवाद् बिम्बक्रियाया एव तत्र क्रियावत्त्वे निमित्तत्वात् प्रकृताभिप्रायेणैवकारो भाष्यकारीय इति भावेनाऽऽह **जीवस्येति** । जीवस्येश्वराधीनक्रियत्वे तत्प्रतिबिम्बत्वस्य हेतोरुपपादितत्वादाह **श्रुतिं चेति** ।

नन्वियं श्रुतिरीश्वरस्य ध्यातृत्वमाह न जीवस्य । "आत्मैवास्य ज्योतिः" इत्यात्मशब्दितेश्वरस्यैव प्रकृतत्वात् । तच्चायुक्तम् । तस्य नित्यसिद्धज्ञानत्वेन ध्यानाभिध्यानायोगात् । किञ्च जीवस्येश्वराधीनक्रियावत्त्वलाभाय हि एतच्छ्रुत्युदाहरणम् । न चैतया तल्लाभ इत्याशङ्क्य **ण्यर्थान्तर्भावमभिप्रेत्य** व्याचष्टे **ईश्वर इति** । "स्वातन्त्र्याद् ध्यायतीवासौ ध्यायय‌ञ्जीवमञ्जसा" इति बृहद्भाष्यो-

क्तेरिति भावः । ननु "प्रज्ञाचक्षुः पश्यतीव" इत्यादौ वस्तुतो न पश्यति इति प्राप्नोतीति ध्याययतीवेत्यत्रापि वस्तुतो नेश्वराधीनध्यानादिक्रियाऽस्तीति स्यादित्यत आह **इवशब्द इति** । "उपमार्थे तथाऽल्पत्वेऽपीवशब्दः प्रयुज्यते" इति बृहदारण्यकभाष्योक्ताभिधानात् । "ध्याययतीव" इत्यत्रेवशब्दबोध्याल्पत्वस्य योग्यतया जीवकर्तृकध्यानेऽन्वये जीवमल्पध्यानयुक्तं करोति । अल्पमेव स्वस्वरूपं जीवं प्रति प्रकाशयतीत्यर्थो लभ्यते । "दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात्" इत्यादौ तथा दर्शनादिति भावः । "कर्ता शास्त्रार्थवत्त्वात्" इत्यधिकरणचन्द्रिकायां तु, राज्ञा कारिते कर्मणि यथा देवदत्तस्य स्वातन्त्र्यं न तथा जीवस्य भगवत्कारिते ध्यानादावितीवशब्दार्थ इति व्यासतीर्थश्रीमच्चरणव्याख्यानानुसारेण "ध्यायति लेलायतीव" इत्यादिश्रुताविवशब्दोऽप्यस्वातन्त्र्यादितीवशब्दार्थ उक्तः ।। १९ ।।

***गीताक्षरार्थस्तु***— ननु निष्टङ्कितं चेदात्मनो नित्यत्वं तर्हि का गतिस्तद्धननव्यवहारस्येत्यतस्तस्य भ्रान्तत्वमनेन "य एनम्" इति श्लोकेनोच्यते । यः पुमान्, एनम् अन्वादेशे एनादेशः । पूर्वप्रकृतं जीवं हन्तारं स्वातन्त्रेण हननकर्तारं वेत्ति । यश्चैनं हतम् अनित्यं वेति । तावुभौ तत्त्वं न विजानीतः, भ्रान्ताविति यावत् । कुतो बाधकादिति चेद् यतस्तदधीनत्वे सति तत्सदृशत्वाख्यप्रतिबिम्बत्वरूपाद्धेतोर्नायं हन्ति हननक्रियायां स्वतन्त्रो न भवति, यतश्च बिम्बनित्यत्वादिहेतुभ्यो न हन्यते न नाश्यते, तस्मादित्येवं स्वातन्त्र्यानित्यत्वरूपार्थाभावलक्षणबाधोऽस्तीति ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**य एनं जीवं वेत्ति हन्तारं स्वातन्त्र्येण । अन्यथा "मया हतांस्त्वं जहि" इत्यादिविरोधः ।**

*प्रका०*— प्रकृतमनुसरन् य एनं वेत्तीत्येतत् व्याचष्टे **य एनमिति** । य एनं जीवं स्वातन्त्र्येण हन्तारं वेत्ति, नासौ सम्यक् जानाति न तु सर्वथा जीवो न हन्तेति । तथा सति "मया हतांस्त्वं जही"ति कौरवहनने भगवता अर्जुनो न युज्येत ।

***न्या०दी०***— यदुक्तं सर्वप्रकारेणाविनाशित्वात् ईश्वरः स्वतन्त्र इति । तदयुक्तम् । "अयमस्य देहवियोगकर्ता", "अनेनायं देहाद्वियोजितः" इति जीवस्यापि स्वातन्त्र्यप्रतीतेरित्याशङ्कापरिहाराय उच्यते "य एनम्" इति । तत्र जीवस्य देहवियोगादौ कथमपि कर्तृत्वं नास्तीत्यन्यथाप्रतीतिनिरासायाह **य एनमिति** ॥ य एवं जीवं स्वातन्त्र्येण देहवियोगकर्तारं पश्यति, यश्चैनं जीवं जीवान्तरेण स्वातन्त्र्येण देहाद्वियोजितं पश्यति तौ न विजानीत इत्येवं व्याख्येयम् । न तु

पारतन्त्र्येणापि जीवस्य हन्तृत्वादिकं पश्यन् न जानातीत्यर्थः । कुतोऽन्योऽर्थो न स्यादित्यत आह **अन्यथेति** ॥ जीवस्य पारतन्त्र्येणापि हन्तृत्वाभावे "मया हतांस्त्वं जहि" इति ईश्वराधीनतया जीवस्य हन्तृत्वोक्तिविरोधः स्यादित्यर्थः ।

*भा०दी०*— हन्तृशब्दार्थमाह **देहवियोगकर्तेति** । हतशब्दार्थो **देहाद्वियोजित इति** । **मयेति** । "मया हतांस्त्वं जहि मा व्यतिष्ठा युध्यस्व जेताऽसि रणे सपत्नान् ।" इत्येकादशोक्ति-विरोध इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**चेतनं प्रति "य एनम्" इति परमात्मनोऽपि समम् ॥ १९ ॥**

*प्रका०*— चेतनं प्रति न हन्तेति जीवे ईश्वरेऽपि व्याख्यातुं शक्यते । ईश्वरेण अहन्यमान-त्वात् । (चेतनस्येश्वरेणापि अहन्यमानत्वात्) इत्यर्थः ॥

*न्या०दी०*— यदुक्तं जीवो नित्य इति, न तद्युक्तम् । "अयं जीवस्य हन्ता", "अनेनायं जीवो हतः" इति व्यवहारेण चेतनस्य अनित्यत्वावगमादित्याशङ्कापरिहारायाप्ययमेव श्लोकः । तत्र प्रथमपक्षे य एनमिति पदं जीवविषयतया व्याख्यातम्, नेश्वरविषयतया । तत्र देहवियोगरूपहननस्य विवक्षितत्वात् । तत्र जीवस्यैव स्वातन्त्र्याभावादीश्वरस्य तद्भावात् । अस्मिन् पक्षे तु "य एनं चेतनं हन्तारं पश्यति स न जानाति" इति चेतनं प्रति हननस्य विवक्षितत्वात् । चेतनहननस्य जीववत् ईश्वरेणाप्यकरणात् एनमिति पदमुभयोरपि वाचकमित्याह **चेतनमिति** ॥

*भा०दी०*— **अयमेव श्लोक इति** । भाष्ये तथा योजितत्वादिति भावः ॥

**गीता**

**न जायते म्रियते वा कदाचि-**
**न्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ॥ २० ॥**

क्तेरिति भावः । ननु "प्रज्ञाचक्षुः पश्यतीव" इत्यादौ वस्तुतो न पश्यति इति प्राप्नोतीति ध्याययतीवेत्यत्रापि वस्तुतो नेश्वराधीनध्यानादिक्रियाऽस्तीति स्यादित्यत आह **इवशब्द इति** । "उपमार्थे तथाऽल्पत्वेऽपीवशब्दः प्रयुज्यते" इति बृहदारण्यकभाष्योक्ताभिधानात् । "ध्याययतीव" इत्यत्रेवशब्दबोध्याल्पत्वस्य योग्यतया जीवकर्तृकध्यानेऽन्वये जीवमल्पध्यानयुक्तं करोति । अल्पमेव स्वस्वरूपं जीवं प्रति प्रकाशयतीत्यर्थो लभ्यते । "दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात्" इत्यादौ तथा दर्शनादिति भावः । "कर्ता शास्त्रार्थवत्त्वात्" इत्यधिकरणचन्द्रिकायां तु, राज्ञा कारिते कर्मणि यथा देवदत्तस्य स्वातन्त्र्यं न तथा जीवस्य भगवत्कारिते ध्यानादावितीवशब्दार्थ इति व्यासतीर्थश्रीमच्चरणव्याख्यानानुसारेण "ध्यायति लेलायतीव" इत्यादिश्रुताविवशब्दोऽप्यस्वातन्त्र्यादितीवशब्दार्थ उक्तः ॥ १९ ॥

***गीताक्षरार्थस्तु***— ननु निष्टङ्कितं चेदात्मनो नित्यत्वं तर्हि का गतिस्तद्धननव्यवहारस्येत्यतस्तस्य भ्रान्तत्वमनेन "य एनम्" इति श्लोकेनोच्यते । यः पुमान्, एनम् अन्वादेशे एनादेशः । पूर्वप्रकृतं जीवं हन्तारं स्वातन्त्रेण हननकर्तारं वेत्ति । यश्चैनं हतम् अनित्यं वेति । तावुभौ तत्त्वं न विजानीतः, भ्रान्ताविति यावत् । कुतो बाधकादिति चेद् यतस्तदधीनत्वे सति तत्सदृशत्वाख्यप्रतिबिम्बत्वरूपाद्धेतोर्नायं हन्ति हननक्रियायां स्वतन्त्रो न भवति, यतश्च बिम्बनित्यत्वादिहेतुभ्यो न हन्यते न नाश्यते, तस्मादित्येवं स्वातन्त्र्यानित्यत्वरूपार्थाभावलक्षणबाधोऽस्तीति ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**य एनं जीवं वेत्ति हन्तारं स्वातन्त्र्येण । अन्यथा "मया हतांस्त्वं जहि" इत्यादिविरोधः ।**

*प्रका०*— प्रकृतमनुसरन् य एनं वेत्तीत्येतत् व्याचष्टे **य एनमिति** । य एनं जीवं स्वातन्त्र्येण हन्तारं वेत्ति, नासौ सम्यक् जानाति न तु सर्वथा जीवो न हन्तेति । तथा सति "मया हतांस्त्वं जही"ति कौरवहनने भगवता अर्जुनो न युज्येत ।

***न्या०दी०***— यदुक्तं सर्वप्रकारेणाविनाशित्वात् ईश्वरः स्वतन्त्र इति । तदयुक्तम् । "अयमस्य देहवियोगकर्ता", "अनेनायं देहाद्वियोजितः" इति जीवस्यापि स्वातन्त्र्यप्रतीतेरित्याशङ्कापरिहाराय उच्यते "य एनम्" इति । तत्र जीवस्य देहवियोगादौ कथमपि कर्तृत्वं नास्तीत्यन्यथाप्रतीतिनिरासायाह **य एनमिति** ॥ य एवं जीवं स्वातन्त्र्येण देहवियोगकर्तारं पश्यति, यश्चैनं जीवं जीवान्तरेण स्वातन्त्र्येण देहाद्वियोजितं पश्यति तौ न विजानीत इत्येवं व्याख्येयम् । न तु

पारतन्त्र्येणापि जीवस्य हन्तृत्वादिकं पश्यन् न जानातीत्यर्थः । कुतोऽन्योऽर्थो न स्यादित्यत आह **अन्यथेति** ॥ जीवस्य पारतन्त्र्येणापि हन्तृत्वाभावे "मया हतांस्त्वं जहि" इति ईश्वराधीनतया जीवस्य हन्तृत्वोक्तिविरोधः स्यादित्यर्थः ।

*भा०दी०*— हन्तृशब्दार्थमाह **देहवियोगकर्तेति** । हतशब्दार्थो **देहाद्वियोजित इति** । **मयेति** । "मया हतांस्त्वं जहि मा व्यतिष्ठा युध्यस्व जेताऽसि रणे सपत्नान् ।" इत्येकादशोक्ति-विरोध इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**चेतनं प्रति "य एनम्" इति परमात्मनोऽपि समम् ॥ १९ ॥**

*प्रका०*— चेतनं प्रति न हन्तेति जीवे ईश्वरेऽपि व्याख्यातुं शक्यते । ईश्वरेण अहन्यमान-त्वात् । (चेतनस्येश्वरेणापि अहन्यमानत्वात्) इत्यर्थः ॥

*न्या०दी०*— यदुक्तं जीवो नित्य इति, न तद्युक्तम् । "अयं जीवस्य हन्ता", "अनेनायं जीवो हतः" इति व्यवहारेण चेतनस्य अनित्यत्वावगमादित्याशङ्कापरिहारायाप्ययमेव श्लोकः । तत्र प्रथमपक्षे य एनमिति पदं जीवविषयतया व्याख्यातम्, नेश्वरविषयतया । तत्र देहवियोगरूपहननस्य विवक्षितत्वात् । तत्र जीवस्यैव स्वातन्त्र्याभावादीश्वरस्य तद्भावात् । अस्मिन् पक्षे तु "य एनं चेतनं हन्तारं पश्यति स न जानाति" इति चेतनं प्रति हननस्य विवक्षितत्वात् । चेतनहननस्य जीववत् ईश्वरेणाप्यकरणात् एनमिति पदमुभयोरपि वाचकमित्याह **चेतनमिति** ॥

*भा०दी०*— **अयमेव श्लोक इति** । भाष्ये तथा योजितत्वादिति भावः ॥

**गीता**

**न जायते म्रियते वा कदाचि-**
**न्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ॥ २० ॥**

***वि०वि०*— उक्तार्थे प्रमाणत्वेन मन्त्रवर्णमुदाहरति **न जायत इति** । नञा द्वितीयस्य म्रियत इत्यनेन सम्बधः । अयं संसारी स्वरूपेण न जायते न म्रियते च । ज्ञानी च देहेनापि न जायते न म्रियते च । अभिमानाभावेन देहसम्बन्धाभावात् । ननु जीवो न जायते चेत् तर्हि यथेश्वरस्य ज्ञानं वृद्धिह्रासादिवर्जितं भूत्वैव कयाचिदचिन्त्यया शक्त्या पुनर्भूतमिति व्यवहारालम्बनं 'तदैक्षत' इत्यादिश्रुतेः ।

"देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा स युज्येताजया कथम् ॥"

इति भागवतस्मृतेश्च । तथा जीवेऽपि जननव्यवहारे निमित्तम् इत्यत आह **अयमिति** । कुतो न जायते न म्रियते कुतो नेश्वरज्ञानसाम्याभाव इत्यत आह **अज इति** । अजादिलक्षणेश्वर-सरूपत्वादित्यर्थः । 'अजो नित्य' इत्याभ्यां बिम्बोत्पत्तिनाशनिमित्तौ 'शाश्वतः', 'सदैकरूपः' इत्यनेनोपाधिबिम्बसन्निधिजनननाशनिमित्तौ च जन्मनाशौ न स्तः । प्रतिबिम्बत्वादेव बिम्बसर्व-साम्याभाव इत्युक्तं भवति । तर्हि जननव्यवहारे किं निमित्तमित्याशङ्क्य देहान्तरप्राप्तिर्निमित्तमित्याह **पुराण इति** । पुराणि देहानणति गच्छतीति पुराणः एवं तर्ह्युपाधिभूतदेहनाशात् दर्पणनाशा-त्प्रतिबिम्बनाशवदात्मनाशः स्यादित्यत आह **न हन्यत इति** ।

अथवा, अयं ना परमपुरुषः स्वरूपेण न जायते न म्रियते देहं न जहाति । वाशब्दात् पूर्वनञोऽनुकर्षः । भूत्वा विद्यमान एव भूयः पुनर्देहसम्बन्धरूपेणापि न भविता । देहनाशाभावे स्वरूपनाशाभावः कैमुत्येनैव सिद्ध इति नोक्तः । देहवियोगस्यैव मरणत्वेन प्रसिद्धेर्घटादिनाशे मरणव्यवहाराभावान्न म्रियते इत्युक्त्या स्वरूपनाश उच्यते । अयं जीवोऽप्यजो नित्यश्चेत्कथं तर्हि ईश्वराद्विशेष इत्यत उक्तम् **शाश्वत इत्यादि** । शाश्वतो न कदाचिदस्वातन्त्र्यादिकं जीवरूपं जहाति । उक्तं च—

"अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥

स्वाभाविकं तयोरेतन्नान्यथा स्यात्कथञ्चन ।
वदन्ति शाश्वतावेतावत एव महाजना ॥"

इति । पुराण्यणतीति पुराणः । एतावांस्तु गुण इत्याह **न हन्यत इति** । शरीरे हन्यमाने स्वयं न हन्यत इत्येतावान् न तु स्वातन्त्र्यादिपरमात्मधर्मवानिति ॥ २० ॥

***वा०ल०***— न जायते म्रियते इत्यादिकं जीवचैतन्यापेक्षया । भूत्वा,भूयः मरणानन्तरं वा भविता न । शस्त्रघातेन, अस्त्रेण, विषपानेन, मन्त्रशापाभ्यां भावनया च लोके मरणादिदर्शनात् नानाप्रकारेऽपि मरणाभावसूचनार्थं पुनः पुनर्वचनम् ॥ २० ॥

***सा०सं०***— यदुक्तं जीवश्वरयोरुत्पत्तिनाशराहित्यम्, ईश्वरस्य देहतोऽपि उत्पत्त्यभावेन स्वातन्त्र्यम्, जीवस्य स्वरूपतो जन्मादिशून्यस्यापि देहोत्पत्त्यादिनाऽस्वातन्त्र्यम्, तेष्वर्थेषु प्रमाणत्वेन मन्त्रवर्णमुदाहरति **न जायत इति ।** तथा हि— जीवविषये तावदियं योजना **अयं** जीवः स्वरूपेण **न जायते न** म्रियते न नश्यति च । **वाशब्दश्चशब्दार्थः** । अग्रेतननञोऽनुकर्षः । जीवो **न जायते** चेत् तर्हि यथेश्वरज्ञानं वृद्धिह्रासविवर्जितं भूत्वैव कदाचिदचिन्त्यशक्त्या भूतमिव व्यवहारावलम्बनं भवति, "तदैक्षत" (छां. ६-२-३) इत्यादिश्रुतेः, तथा जीवेऽपि किं जननव्यवहारस्तन्निमित्त इत्यतो नेत्युच्यते । अयं जीवः स्वरूपेण **भूत्वा** कयाचिद्विवक्षया ईश्वरज्ञानव**द्भविता न** भवति । कुतो न जायते न म्रियते वेति स्वरूपोत्पत्तिविनाशाभावो जीवस्येत्यत उक्तम् **अजो नित्यः शाश्वत** इति । स्वरूपोत्पत्तिविनाशशून्यसदैकरूपभगवत्सरूपत्वादित्यर्थः । अतद्भावे सामानाधिकरण्यस्य सारूप्यगमकत्वात् । अजनित्यपदाभ्यां बिम्बोत्पत्तिविनाशाभावः, शाश्वतपदेन बिम्बोपाधिसन्निधिजन्मनाशाभावश्च हेतुरुक्तो भवति ।

ईश्वरज्ञानवद्भूत्वा भविताऽपि चेत् न जीवः, तर्हि किंनिमित्तो जननव्यवहारो जीव इत्यत उक्तम् **पुराण इति** । पुराणि देहान् अणति, 'अण पण गतौ' गच्छति देहाद्देहान्तरं प्राप्नोतीति देहयोगनिमित्त इत्यर्थः । एवं तर्हि उपाधिभूतदेहनाशात् नाशः स्यादित्यत आह **न हन्यत इति** । 'अन्तवन्त इमे देहाः' इत्यत्रोक्तदिशा नित्योपाधेरन्यस्य भावात्, एतच्छरीरनाशेऽपि न जीवनाश इति भावः ।

ईश्वरविषये तु पूर्वोत्तरार्धे ईश्वरजीवरूपविषयभेदेन योज्ये । तथा हि— वाशब्दादेव पूर्वनञो 'म्रियते वा' इत्यत्रानुकर्षस्य सिद्धेः नञन्तरवैयर्थ्यात्, **नायं भूत्वा** इत्यत्र श्रुतो नशब्दो न नञ् किन्तु नृशब्दः । तथाच— अयं ना परमपुरुषः न जायते न वा म्रियते, देहयोगवियोगवान् न भवति, नित्यदेह एवेत्यर्थः । अत एव स्वरूपानाशः कैमुत्यसिद्धः । देहोत्पत्तिविनाशयोरप्यभावेन स्वातन्त्र्यमपि सिद्धमेवेति भावः । एवं चेत् कथं तर्हि रामकृष्णादिरूपेण जननव्यवहार इत्यतः, **भूत्वा** रामकृष्णादिरूपेण सर्वदा भूत्वैव, **कदाचित्** जनदृग्विषयत्वादिरूपेण **भूयः** पुनः **भविता** । न तु देहयोगेनापि भविता । किन्तु,

"निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् ।
प्रदर्शयति लोकस्य जनिरित्युच्यते हरेः ॥" इति तत्त्वनिर्णयोक्तेः ।

**अयं** जीवोऽप्यजो **नित्यश्च** । ईश्वरस्येव जीवस्याप्यनादिनित्यत्वे स्वातन्त्र्यस्यापि प्राप्तेरीश्वरादविशेषः स्यादित्यत उक्तम् **शाश्वत इति** । सदैकरूपः । अनाद्यनन्तकालमत्यक्तपारतन्त्र्यादिस्वभाव इत्यर्थः । कुत एतदित्यत उक्तम् **पुराण इति** । अनिच्छयाऽपि देहाद्देहान्तरप्राप्तिमत्वादिति हेतुगर्भविशेषणमिदम् । न हि तादृशस्य स्वातन्त्र्यसम्भावनाऽपीति भावः । एतावान् गुण इत्याह **न हन्यते हन्यमाने शरीरे** इति ॥ २० ॥

***अ०प्र०***— ईशस्वातन्त्र्य-अज्ञानात्, स्वस्य अस्वातन्त्र्य-अज्ञानात् च जीवानां कर्मबन्धादिरूपसंसार इति ज्ञेयम् । एतदेव षड्भावविकारशून्यत्वेन दृढयति । तथाहि— जायते, अस्ति, वर्धते, परिणमते, अपक्षीयते, नश्यति इत्येवं षट्भावविकाराः । **न जायत इति** ।

अजः[१], नित्यः[२], शाश्वतः[३], पुराणः[४], अयं जीवः[५], कदाचित्[६], न जायते[७], न म्रियते च[८], भूयः[९], अयं जीवः[१०], भूत्वा[११] न भविता[१२], शरीरे[१३], हन्यमानेऽपि जीवः[१४], स्वयं न हन्यते इत्यन्वयः ।

अजः = उत्पत्तिशून्यः[१], नित्यः = स्वाभाविकनाशरहितः[२], शाश्वतः = त्रिकालावस्थायी[३], पुराणः = पुराणि देहान् अणति प्राप्नोतीति पुराणः[४], अयं जीवः[५], कदचित्[६], न जायते = जन्मप्रतिषेधः[७], न म्रियते = जीवस्वरूपदेहं न जहातीति नाशप्रतिषेधः[८], भूयः[९], अयं जीवः[१०], भूत्वा = उत्पद्य विद्यमान एव पुनर्देहसम्बन्धरूपेणापि न भविता न भविष्यति पुनर्जननव्यवहारहेतुर्न भवति[१२], शरीरे हन्यमानेऽपि जीवः[१३], स्वयं न हन्यते ॥ २० ॥

## भाष्यम्

**अत्र मन्त्रवर्णोऽप्यस्तीत्याह— न जायत इति । न चेश्वरज्ञानवत् भूत्वा भविता । तद्धि 'तदैक्षत', 'देशतः कालतो योऽसौ अवस्थातः स्वतोऽन्यतः । अविलुप्तावबोधात्मा' इत्यादि श्रुतिस्मृतिसिद्धम् । कुतः ? अजादिलक्षणेश्वरसरूपत्वात् । शाश्वतः सदैकरूपः । पुरं देहमणतीति पुराणः । तथापि न हन्यते हन्यमानेऽपि देहे ॥ २० ॥**

***प०टी०***— ईशप्रतिबिम्बत्वान्नित्यो जीव इत्येतद्दृढीकर्तुं मन्त्रवर्णोऽप्यस्तीत्युत्तरश्लोकमवतार्य व्याचष्टे **अत्रेति** । यद्ययं 'ना' जीवो न जायते न म्रियते, तर्हि उत्पत्तिव्यवहारः किमाविर्भावविषय इति ? नेत्याह **न चेति** । ईश्वरज्ञानस्य भूत्वैव भवनमित्यत्र प्रमाणमाह **तद्धीति** । कुतोऽयं न

जननमरणशून्यः ? कुतो वा नेश्वरसमः ? इत्याशङ्क्याह **कुत इति** । बिम्बत्वादेव नेशसाम्यमित्यर्थः । अनादिनित्यस्येशसाम्याभावे विकारो न कारणमित्याह **शाश्वत इति** । किं तर्हीश्वरवैलक्षण्यम् ? इत्यत आह **पुरमिति** । यदि पुराणः, तर्हि पुरनाशे नश्येद्दह्यमानगेहगतवदित्यत आह **तथाऽपीति** ॥ २० ॥

***न०टी०***— 'न त्वेवाहम्' इत्यादिना यत्प्रतिज्ञातं जीवस्य नित्यत्वमीश्वरनित्यत्वदृष्टान्तेन, तदेव 'अन्तवन्त' इत्यादिना समुत्थितम् - प्रतिबिम्बत्वाज्जीवस्य, उपाधिनाशात् बिम्बसन्निधिनाशाद्वा नाश इत्याशङ्क्य, नित्योपाधिकत्वान्नित्यसर्वगतेश्वरप्रतिबिम्बत्वादिति । अधुनैतदेव दृढीकर्तुमुदाहृतं मन्त्रवर्णमवतारयति **अत्रेति** । अयं भावः— 'ना' संसारी स्वरूपेण 'न जायते' । देहवियोगेऽपि साकल्येन प्राणवियोगाभावात् 'न म्रियते' इत्युच्यते । 'प्राणा भागतस्त्वेनमनुगच्छन्ति सर्वदा' इति वचनात् । ज्ञानिजीवस्यातोऽपि विशेषः । तथा हि काठकोपनिषद्भाष्ये 'विपश्चितस्तु देहसम्बन्धाभावात् न जायते न म्रियते वा' इति । न चोत्पत्तिनाशमात्रेणेश्वरज्ञानवदयं पूर्वं सम्पूर्ण एव सन् भविता देहसंयोगत एव । जन्यज्ञानादिबहुपरतन्त्रविशेषलाभादिति भावेनावान्तरपदमवतारयति **न चेति** । ईशज्ञानं तु 'देशतः' इत्यादिनाऽविलुप्तत्वेन प्रतीयमानत्वात्, 'तदैक्षत' इति तस्य भवनोक्तावपि पूर्वं सम्पूर्णमेव सम्भूत इत्युच्यत इत्याह **तद्धीति** । उत्पत्तिनाशाभावश्चोक्तो जीवस्य । तदुभयं पृच्छति **कुत इति** । तथाविधेशप्रतिबिम्बत्वम् उत्पत्तिनाशाभावः । प्रतिबिम्बत्वादेव न बिम्बसर्वसाम्यमिति भावेनोत्तरार्धमवतार्य परिहरति **अजादीति** । स्वरूपेण सदैकरूपोऽपि देहाद्देहान्तरं याति । एवमप्यौषधात् कलहदाहवत् (?) देहनाशेऽपि न नश्यत्यात्मेत्याह **तथाऽपीति** ॥ २० ॥

***प्र०दी०***— तथापि 'न जायते' इति पुनरुक्तमित्याशङ्क्य नेदं भगवद्वाक्यं, किन्तूक्तार्थे सम्मतित्वेन मन्त्रवर्णोऽयमुदाहियत इत्याह— **अत्रेति** । ननु जीवः स्वरूपेण भूत्वा देहसम्बन्धेन भवितैव । तत्कथमुच्यते भूत्वा भविता नेतीत्यतोऽन्यथा व्याचष्टे— **न चेति** । जीवो न जायते चेत्तर्हि यथेश्वरज्ञानं वृद्धिह्रासवर्जितं भूत्वैव कयाचिदचिन्त्यशक्त्या भूतमिति व्यवहारावलम्बनं तथा जीवेऽपि किं जननव्यवहारस्तन्निमित्त इति पृच्छायां नेत्यनेनोच्यत इत्यर्थः । नन्वीश्वरज्ञानस्योक्तप्रकारं भूत्वा भवनं कुतः सिद्धम् । येन जीवस्य तथाभावासम्भावनायोदाहियत इत्यत आह— **तद्धीति** । तत् ईश्वरज्ञानस्योक्तप्रकारं भूत्वा भवनं श्रुतिस्मृतिसिद्धं हीति सम्बन्धः । 'तदैक्षत' इति भवनमुच्यते । देवदत्तोऽपश्यदितिवत् । 'देशतः' इति वृद्धिह्रासादिराहित्यम् । नन्वीश्वरवदित्येव कस्मान्नोक्तम् । नैवं शङ्क्यम् । लोकदर्शनस्याधिकस्य तत्रोत्पादात् । 'अजो नित्यः' इति पुनरुक्तमित्याशङ्क्य तन्निवर्त्या-

माशङ्कामुक्त्वा अन्यथा व्याचष्टे— **कुत इति**। 'न जायते म्रियते' इत्येतत् कस्मात्कारणादित्यर्थः। अजादीत्यनेन 'अजो नित्यः शाश्वतः' इति व्याख्यातम्। 'शाश्वतः' इत्येतत् 'नित्यः' इत्यनेन गतार्थमित्यतोऽन्यथा व्याचष्टे— **शाश्वत इति**। तथा च 'अजो नित्यः' इत्याभ्यां बिम्बोत्पत्तिनाशनिमित्तौ 'शाश्वतः' इत्यनेनोपाधिबिम्बसन्निधिजनननाशनिमित्तौ जन्मनाशौ न स्त इत्युक्तं भवति। तथापि 'अजः' इत्युक्तत्वात् 'पुराणः' इति पुनरुक्तिरिति चेत् न। भूत्वा भविता वा नेत्युक्तम्। तत्कुतः। किन्निमित्तश्च तर्हि जननव्यवहार इत्याशङ्क्य देहात् देहान्तरप्राप्तिरस्यास्तीत्यनेनोच्यत इत्याह— **पुरमिति**। एवमपि 'न हन्यते' इति पुनरुक्तिरिति चेन्न। यदि पुराणस्तर्हि उपाधिभूतदेहनाशात् दर्पणनाशात् प्रतिबिम्बनाशवदात्मनाशः स्यादित्याशङ्काऽत्र पूर्वाभिप्रायेण परिह्रियत इति भावेनाह— **तथापीति**। पुराणत्वेऽपि ॥ २० ॥

*भा०दी०*— **ईश्वरवदिति कस्मान्नोक्तमिति**। ईश्वरवद्भूत्वा भविता न भवति जीव इति कस्मान्नोक्तमित्यर्थः। **लोकदर्शनस्येति**। लोककर्तृकदर्शनस्येत्यर्थः। सदाविद्यमानस्यापि रामकृष्णादेः जनदृग्विषयत्वरूपस्य जन्मनो जातादिव्यवहारालम्बनस्य भूत्वाभवनाधिकस्य तत्र सत्त्वेनाचिन्त्यशक्त्या तत्र जन्मनोऽनिर्वाह्यत्वात् तथा नोक्तमित्यर्थः। **न हन्यत इति**। पुनरुक्तिरिति चेदिति पूर्वार्धेन म्रीयत इति श्रवणादिति भावः। **पूर्वाभिप्रायेणेति**। 'अन्तवन्त इमे देहा' इत्यत्र इमे इत्युक्तिसूचितेन नित्योपाधिः। कश्चिदस्तीत्यादिनोक्तनित्योपाध्यभिप्रायेणेत्यर्थः। तथापीत्यस्यार्थः **पुराणत्वेऽपीति**। अनेक-देहप्राप्तिमत्त्वेऽपि इत्यर्थः ॥ २० ॥

*भा०र०*— **तथाऽपि** पूर्वश्लोके प्राप्तायाः पुनरुक्तिशङ्कायाः नास्य नित्यत्वे तात्पर्यं किन्त्वात्महननप्रतीतेर्भ्रान्तित्ववर्णन एवेति परिहारेऽपि। **उक्तेऽर्थे** आत्मनित्यत्वे। अनेन 'अत्र' इति भाष्यार्थ उक्तः। **मन्त्रवर्णो** वेदः। **स्वरूपेण भूत्वा** स्वरूपेण सन्निति यावत्। **तन्निमित्तः** अचिन्त्यशक्तिनिमित्तः। **अनेन** भूत्वा भविता नेत्यनेन। उक्तप्रकारं वृद्धिह्रासोत्पत्त्यादिवर्जितम्। **उदाह्रियते** भूत्वाभवनवत्तया। ईश्वरज्ञानं दृष्टान्तत्वेनोच्यते। 'तद्धि' इत्यत्र तदित्यस्यार्थं वदन् हिशब्दसम्बन्धं च दर्शयति **तदीश्वरज्ञानस्येत्यादिना**। भवनमुच्यत इत्ययुक्तम्। धातुना दर्शनक्रियामात्राभिधानात्। ईक्ष दर्शन इति वचनात्। लङा चातीतत्वप्रतीतेः। "अनद्यतने लङ्" इति स्मृतेः। भवनस्य च न बोधकः शब्द इति तत्राऽऽह **देवदत्तोऽपश्यदितिवदिति**। "साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धने" इति वचनात् सर्वत्र धातुभागेन साध्यत्वोपेता क्रियोच्यते। साध्यत्वावस्थैव भवनमिति 'ऐक्षत' इति दर्शनं भूतमित्यर्थो लभ्यत इत्युक्तं युक्तमिति भावः। 'वृद्धिह्रासादि' इत्यत्र

आदिशब्देनोत्पत्त्यादिग्रहः । अनया च स्मृत्या यथा देशकालावस्थादिभिरस्मदाद्यवबोधस्य विलोपो न तथेश्वरावबोधस्येति प्रतीत्या अर्थाद् वृद्धिह्रासादिराहित्यमवगन्तव्यमिति भावः । **ईश्वरवदिति** । ईश्वरवद् भूत्वा भविता न भवति जीव इत्येवानुक्त्वा तज्ज्ञानं किमित्युदाहृतमित्यर्थः । परिहरति **नैवमिति** । तत्र हेतुः **लोकदर्शनस्येति** । प्राथमिकी लोकानां दृष्टिर्हीश्वरस्यावतारः । तथा च सदा विद्यमानस्यापि रामकृष्णादेः "प्रत्यक्षत्वं हरेर्जन्म" इति जनदृग्विषयत्वरूपस्य जन्मनो जातादि-व्यवहारालम्बनस्य भूत्वा भवनादधिकस्य तत्रेश्वरविषये उत्पादाङ्गीकारेण तस्याचिन्त्यशक्तिमात्र-निर्वाह्यत्वाभावादीश्वरवदिति नोक्तमिति भाव इति सुधीन्द्रतीर्थश्रीमच्चरणाः ।

**अजो नित्य इति** । "न जायते" इत्युक्तेरज इति पदं पुनरुक्तम् । "न म्रियते" इत्युक्तत्वा-न्नित्य इति पदं पुनरुक्तमित्यर्थः । प्रागभावाप्रतियोगित्वध्वंसाप्रतियोगित्वयोरजनित्यपदार्थयोः "न जायते" इत्यादिनोक्तत्वादिति भावः । **अन्यथेति** । नात्र प्रागभावाप्रतियोगित्वं ध्वंसाप्रतियोगित्वं वा विधातुमिदं पदद्वयम् । येनोक्तरीत्या पुनरुक्तिशङ्का । किन्तु न जायते न म्रियते इत्येतदेव कुतो हेतोः प्रतिपत्तव्यमिति चोद्यपरिहाराय अजपदमजप्रतिबिम्बत्वं नित्यपदं नित्यप्रतिबिम्बत्वं च प्रतिपादयितुं हेत्वर्थगर्भमिति प्रकारान्तरेण व्याचष्टे भाष्यकृदित्यर्थः । उक्तगतार्थताशङ्कानिरासाय भाष्यभावमाह **तथा चेति** ॥ **बिम्बोत्पत्तीति** । अजशब्देन बिम्बोत्पत्तिनिमित्तकोत्पत्तिः नित्यशब्देन बिम्बनाश-निमित्तनाशश्च निषेध्यत इति विवेकः ॥ **पुराण इति पुनरुक्तिरिति** । अजशब्देनानुत्पत्तिर्ह्युच्यते, पुराणशब्देन पुरातनत्वं कारणपश्चाद्भावित्वलक्षणप्रागभावप्रतियोगित्वविरोध्यभिधीयत इति पुनरुक्ति-रित्यर्थः । नेत्यनन्तरं यत इति शेषः । **तर्हि** भूत्वा भविता न चेत् । अनेन पुराणपदेन । पुराण-शब्दस्य पुरातनार्थत्वे ह्युक्तशङ्का । मैवम् । किन्तु भाष्योक्तयोग एवात्र विवक्षित इति भावः । **न हन्यत इति पुनरुक्तिरिति** । विनाशाभावो ह्यनेनोच्यते । स च "न म्रियते" इत्यनेनोक्त इति पुनरुक्तिरित्यर्थः । अत्रापि नेत्यनन्तरं यत इति शेषः । **पूर्वाभिप्रायेण** उपाधिद्वयाभिप्रायेण । 'तथाऽपि' इति भाष्यपदार्थः । **पुराणत्वेऽपीति** । देहाद् देहान्तरप्राप्तिमत्त्वेऽपीत्यर्थः । तर्हि मया हतांस्त्वं जहीत्यादिप्रयोगस्य का गतिरित्याशङ्कया देहवियोगाभिप्रायं हननवचनमिति परिहारं वक्तुं "हन्यमानेऽपि देहे" इत्युक्तमिति भाष्यभावः स्फुटत्वान्नोक्तः ॥ २० ॥

***गीताक्षरार्थस्तु***— उक्ते आत्मनित्यत्वरूपेऽर्थे सम्मतित्वेन मन्त्रवर्णोऽयमुदाह्रियते **न जायत इति** । अयं जीवः स्वरूपेण न जायते न म्रियते न नश्यति च । वाशब्दश्चशब्दार्थः । जीवो न जायते चेत् तर्हि यथेश्वरज्ञानं वृद्धिह्रासादिवर्जितं भूत्वैव कयाचिदचिन्त्यया शक्त्या भूतमिति

व्यवहारालम्बनं भवति तथा जीवेऽपि किं जननव्यवहारस्तन्निमित्त इति पृच्छायामिदमुक्तं भवति **अयमिति** । अयं जीवः स्वरूपेण भूत्वा कयाचिच्छक्त्या ईश्वरज्ञानवद् भविता न भवति । न जायते न म्रियत इत्युक्तौ स्वरूपोत्पत्तिविनाशाभावौ जीवस्य कुत इत्यत उक्तम् **अजो नित्यः शाश्वत इति** ॥ "अजादिलक्षणेश्वरसरूपत्वात्" इति हेत्वर्थगर्भं विशेषणत्रयम् । अतद्भावे सामानाधिकरण्यं सारूप्यं हि गमयति । तत्राजो नित्य इत्याभ्यां बिम्बोत्पत्तिनाशनिमित्तौ शाश्वत इत्यनेनोपाधि-बिम्बसन्निधिजनननाशनिमित्तौ च जन्मनाशौ न स्त इत्युक्तं भवति । "भूत्वा भविता वा न" इत्युक्तम् । तत् कुतः ? किंनिमित्तश्च तर्हि जननव्यवहार इत्याशङ्क्योभयत्र देहाद् देहान्तरप्राप्ति-र्निमित्तमिति भावेनोक्तम् **पुराण इति** । पुराणि देहानणति गच्छतीति पुराणः शरीरयोगवानित्यर्थः । यदि पुराणस्तर्हि उपाधिभूतदेहनाशाद् दर्पणनाशात् प्रतिबिम्बनाशवदात्मनाशः स्यादित्याशङ्क्य नित्यानित्योपाधिद्वयाङ्गीकाराभिप्रायेण परिह्रियते **न हन्यत इति** । अनित्यदेहनाशेऽपि नित्योपाधि-सद्भावात् तस्य च नाशाभावान्नात्मनाशशङ्कावकाश इति भाव इति ॥ २० ॥

**गीतातात्पर्यनिर्णयः**

## जीवेश्वरयोर्नित्यत्वे मन्त्रवर्णोऽप्यस्तीत्याह न जायते म्रियत इति ।

***प्रका०***— जीवेशयोर्नित्यत्वाभावे न जायत इति मन्त्रवर्णविरोधः स्यादित्याह **जीवेश्वरयो-रिति** । तस्यायमर्थः— अयं ना परमपुरुषः स्वरूपेण न जायते । भूत्वा भविता वा नेति स्वरूपेण विद्यमानो देहरूपेणापि न जायते इत्येतदुच्यते । "न म्रियत" इत्यनेन "देहेन न वियुज्यते" इत्येतदेवोच्यते । मरणशब्दस्य देहवियोग एव प्रसिद्धिः । न तु नाशमात्रे घटादिनाशे मरणशब्द-प्रयोगाभावात् । यस्य देहवियोगोऽपि नास्ति स नित्य इति किमु वक्तव्यमिति पुरुषस्य स्वरूपा-नाशः कैमुत्यन्यायेन सिद्ध्यति । "अजो नित्य" इत्युत्तरार्धो जीवविषयः । पूर्वार्धस्यापि जीव-विषयत्वे (न) "न जायते न म्रियते" इत्यनेन पुनरुक्तिः स्यात् । वेदाविनाशिनं नित्यमित्येत-दीश्वरविषयम् ।

***न्या०दी०***— ननु जीवनित्यत्वादेः पूर्वमेवोक्तत्वात् किमुत्तरश्लोकेन इत्यत आह **जीवेति** ॥ नेदं भगवद्वाक्यं, येन पुनरुक्तिः स्यात् । किन्तु यदुक्तं स्वयं जीवेश्वरयोरुत्पत्तिविनाशराहित्यम्, ईश्वरस्य शरीरतोऽप्युत्पत्त्याद्यभावेन स्वातन्त्र्यं, जीवस्य स्वरूपतो जन्मादिशून्यस्यापि देहोत्पत्त्या-दिना अस्वातन्त्र्यं तत्र प्रमाणत्वेन मन्त्रवर्णोऽयमुदाह्रियत इति भावः ।

**गीतातात्पर्यनिर्णयः**

**अयं ना परमपुरुषो भूत्वा विद्यमान एव देहसम्बन्धरूपेणापि भविता न। मरणं तु देहवियोग इति प्रसिद्धमेव। न हि घटादीनां मरणव्यवहारः। स्वरूपानाशः कैमुत्येनैव सिद्धः।**

***न्या०दी०***— अत्रेश्वरप्रतिपादनादिप्रतीतेः कथमेतदित्यतो नायं भूत्वेत्यत्र देहतोऽप्युत्पत्तिराहित्यश्रवणात् तस्य च ईश्वरलिङ्गत्वात् पूर्वार्धः तत्प्रतिपादक इति भावेनाह **अयमिति** ॥ एतेन वा शब्दादेव पूर्वत्र नञोऽनुकर्षसम्भवात् किं तदन्तरेणेति परास्तम्। अपि चात्र "न म्रियते" इति देहवियोगाभावश्च श्रूयते। मरणशब्दस्य देहवियोग एव प्रसिद्धत्वात् देहवियोगाभावस्य चेश्वरलिङ्गत्वात् तत्प्रतिपादकः पूर्वार्ध इति भावेनाह **मरणमिति** ॥ देहवियोग इव स्वरूपनाशोऽपि मरणशब्दस्य प्रसिद्धत्वात् सोऽर्थः किं न स्यादित्यतः स्वरूपनाशे मरणशब्दस्य प्रसिद्धिरेव नास्तीत्याह **न हि इति** ॥ यदि मरणशब्दस्य न स्वरूपनाशोऽर्थः तर्हि ईश्वरस्वरूपनाशे नायं मन्त्रः प्रमाणं स्यात्। तदभिधायकशब्दान्तराभावात्। तथा च मरणशब्दस्य स्वरूपनाशोऽर्थे ग्राह्ये नैतद्बलात् पूर्वार्धस्येश्वरपरत्वसिद्धिरित्यत आह **स्वरूपेति** ॥ नात्रेश्वरस्य स्वरूपानाशो वक्तव्यः। येनैतत्पदस्य तत्परत्वं कल्प्यते। यस्य देहनाशोऽपि नास्ति तस्य स्वरूपानाशः किमु वाच्य इति कैमुत्येनैव सिद्धेरित्यर्थः।

***भा०दी०***— **एतेनेति**। "ना परमपुरुषः" इति व्याख्यानेनेत्यर्थः। अस्मिन् पक्षे नरान्तरभावादिति भावः ॥ २० ॥

**गीतातात्पर्यनिर्णयः**

**अयं जीवोऽप्यजो नित्यश्च। अन्यथा पुनरुक्तेः। शाश्वतश्च। न कदाचित् अस्वातन्त्र्यादिकं जीवस्वरूपं जहाति।**

***न्या०दी०***— अत्र जीवस्योत्पत्त्याद्यभावादिकथनं न श्रूयत इत्युत्तरार्धस्तद्विषय इति भावेनाह **अयमिति** ॥ अत्रापीश्वर एव प्रतिपाद्यः किं न स्यादित्यत आह **अन्यथेति** ॥ "न जायते", "अजः" इति पौनरुक्त्यम्। ननु पुनरुक्तिभयेन पूर्वोत्तरार्धयोर्विषयभेदकल्पने शाश्वतोऽप्यन्य एव प्रसज्यते। नित्यपदेन पुनरुक्तेरित्यत आह **नेति** ॥ न शाश्वतपदेन नित्यत्वमुच्यते। येन पुनरुक्तिः

स्यात् । अपि तु जीवोऽप्यजो नित्यश्चेत् तर्हि ईश्वरवत् स्वातन्त्र्यादिमानपि स्यात् । तथा च न तत्पूजा कार्येति शङ्कानिरासाय तस्या अस्वातन्त्र्याद्यहानमेवोच्यत इति भावः ॥

**गीतातात्पर्यनिर्णयः**

"अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ।
स्वाभाविकं तयोरेतन्नान्यथा स्यात्कथञ्चन ।
ववन्ति शाश्वतावेतावत एव महाजनाः ॥"

—इति महाविष्णुपुराणे ।

*न्या०दी०*— जीवस्यास्वातन्त्र्यादिकं स्वरूपं, तच्च न जहाति, तेन च शाश्वत इत्युच्यत इत्येतत्कुत इत्यत आह **अल्पेति** ॥

**गीतातात्पर्यनिर्णयः**

पुराण्यणति गच्छतीति पुराणः ॥ २० ॥

*न्या०दी०*— तथापि पुराण इति पुनरुक्तिरित्यत आह **पुराणीति** ॥ न अनेन पुराणपदेन अनादित्वमुच्यते । येन पौनरुक्त्यं स्यात् । किन्तु जीवस्येश्वरवदजत्वादिसद्भावेऽपि कुतो न स्वातन्त्र्यादीत्यतो देहोत्पत्त्यादिभावेन तद्वदजत्वाद्यभाव एवोच्यत इति भावः ॥

**गीता**

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥**

*वि०वि०*— जीवस्यानित्यत्वादिकं मन्यमानो न ज्ञानीत्युक्तम् । इदानीं ज्ञानी तु नैवं मन्यत इत्याह **वेदेति** । अविनाशिनं नैमित्तिकनाशरहितम् । नित्यं स्वाभाविकनाशरहितम् । अथवा, अविनाशिनं दोषयोगरहितम् । दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात् । यथा भीष्मादिचेतनानां नित्यत्वान्न त्वया हननं घातनं वा क्रियते तद्वत्तेषामदोषयोगित्वान्न त्वया दोषयोगः क्रियते कार्यते च । नित्यं सदाभाविनम् । अजम् उत्पत्तिवर्जितम् । अव्ययं स्वरूपविकारशून्यम् । एनं जीवमेवं यो

वेद । तथाऽविनाशिनं शरीरापायादिवर्जितम् । नित्यं स्वरूपतः । एनमजादिरूपं स्वतन्त्रं विष्णुं यो वेद स कथं घातयति हन्ति वा जीवानां नित्यत्वादस्वतन्त्रत्वादेनं घातयामि हन्मि चेति भावं न करोतीत्यर्थः ॥ २१ ॥

***बा०ल०***— 'कं घातयति हन्ति कम्' इत्यत्र घातयति शस्त्रघातवन्तं करोति ॥ २१ ॥

***सा०सं०***— **"य एनम्"** इति श्लोके 'जीवचैतन्यस्य हननं वा, हननक्रियायां स्वातन्त्र्यं वा, मन्यमानो न जानाति' इत्यत्र जीवचितो बिम्बोपाधिसन्निध्यनाशहेतुकनित्यत्वप्रतिबिम्बत्वहेतुका-स्वातन्त्र्यरूपहेतू उक्तौ । यस्तु जीवचितो नित्यत्वं हरेः स्वातन्त्र्यं च जानाति स ज्ञानी । स्वातन्त्र्याभिमानाभावात् । हन्ताऽहमिति वा, अस्यायं हन्तेति वा न जानातीत्यज्ञानेऽभिमानाभावो-ऽपरो हेतुरुच्यते **वेदेति** । **अविनाशिनं** बिम्बनाशादिनिमित्तकनाशहीनम् । 'मात्रास्पर्शाः' इत्यत्रोक्त-दिशाऽभिमानकृता एव रागद्वेषसुखादिदोषाः न तु स्वत इति स्वतो दोषहीनमिति वा । दुष्टेषु नष्टशब्दप्रयोगान्नाशोऽत्र दोषो ध्येयः । **नित्यं** स्वाभाविकनाशहीनम् । **अजम्** उत्पत्तिहीनम् । **अव्ययं** स्वरूपविकारशून्यम् । **एनं** जीवम् । यद्वा, **अविनाशिनं नित्यं** स्वरूपतो नाशहीनम् । **अजं** जन्महीनम् । **अव्ययं** निर्विकारम् । अत एव सर्वस्वतन्त्रमेनमीश्वरं **यो वेद** जानाति **स पुरुषो** ज्ञानी । **कथं** केन प्रकारेण । **कं घातयति कं वा हन्ति** । घातयाम्येनमिति वा हन्म्येनमिति वा भावं न करोतीत्यर्थः ॥ २१ ॥

***अ०प्र०***— किञ्च, **वेदेति** ।

हे पार्थ[१], यः[२], अविनाशिनं[३], नित्यम्[४], अजम्[५], अव्ययम्[६], एनम्[७], वेद[८], सः[९], पुरुषः[१०], कं[११], घातयति[१२], कं[१३], हन्ति[१४] इत्यन्वयः ।

हे पार्थ ! यः = पुरुषः[२], अविनाशिनं = नैमित्तिकनाशरहितं[३], दोषरहितं वा[३], नित्यं = स्वाभाविकनाशरहितं वृद्धिशून्यं सदाभाविनं वा[४], अजं उत्पत्ति-शून्यम्[५], अव्ययं स्वरूपविकार-शून्यम्[६], एनं जीवं इमं प्रकारेण यो वेद[८], पुरुषः[९], कं हन्ति कथं वा हन्ति[१०], कं घातयति अन्येन कथं वा घातयति न कथञ्चिदपीत्यर्थः ।

यद्वा तथा, अविनाशिनं शरीरयात्रादिवर्जितं नित्यं स्वरूपतः अजं विकाररहितम्, स्वतन्त्रं एनं विष्णुं च यो वेद स ज्ञानी कं कथं घातयति हन्ति वा, न कथञ्चिदित्यर्थः, जीवत्वे नित्यत्वस्य अस्वातन्त्र्ये विष्णोश्च स्वातन्त्र्यादिकं जानन्, ज्ञानी एनं अहं हन्मि अन्येन घातयामीत्यादिबुद्धिं न करोतीति भावः । हन्तृत्वाभावो पूर्वोक्तसिद्ध एवेत्याह **वेदेति** ॥ २१ ॥

**भाष्यम्**

**अतो य एवं वेद स कथं कं घातयति हन्ति वा ? अविनाशिनं नैमित्तिकनाशरहितम्, नित्यं स्वाभाविकनाशरहितम् । अथवा अविनाशिनं दोषयोगरहितम्, नित्यं सदा भाविनम्, इति सर्वत्र विवेकः । दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात् ॥ २१ ॥**

***प०टी०***— पुरविनाशित्वादि किमित्युच्यते ? इत्यत आह **अत इति** । **अत** इति प्रतिबिम्बत्वादितः । **घातयति हन्ति वा** इति घातयामि हन्मि वेति भावं करोतीत्यर्थः । अविनाशिनित्यपदयोरर्थभेदमाह **अविनाशिनमिति** । **दोषाः** छेदादयः ॥ २१ ॥

***न०टी०***— यस्यात्मनित्यत्वं नित्येश्वरप्रतिबिम्बरूपत्वं निश्चितं न तस्यात्मनि वध्यघातकभ्रम इति भावेनोत्तरं श्लोकं व्याचष्टे **अत इति** । नित्येशप्रतिबिम्बत्वान्न हन्यते । अत एव पारतन्त्र्यान्नाहमस्मीति भावस्तस्येति भावः । दोषयोगराहित्याभिधानस्यायं प्रकृतोपयोगः । यथा भीष्मद्रोणादिचैतन्यानां नित्यत्वान्न त्वया हननं घातनं वा । तद्वत् तेषामदोषयोगित्वात् न त्वया दोषयोगः क्रियते कार्यते वेति ॥ २१ ॥

***प्र०दी०***— वेदाविनाशिनमिति पुनरात्मनोऽविनाशित्वादिकं किमर्थमुच्यत इत्यतः अस्य तात्पर्यमाह— **अत इति** । उक्तैः प्रमाणैः । एवं अविनाशित्वादिरूपम् । कं घातयति हन्ति वा इत्येवं भावं करोतीत्यर्थः । जीवस्यानित्यत्वादिकं मन्यमानो न जानातीत्युक्तम् । इदानीं तु ज्ञानी नैवं मन्यत इत्युच्यत इति । 'अविनाशिनं', 'नित्यं', इति पुनरुक्तिमाशङ्क्य द्वेधाऽर्थभेदमाह— **अविनाशिनमिति** । नैमित्तिकः बिम्बनाशादिनिमित्तकः । स्वाभाविकः कालकृतः । 'दोषयोगरहितं' इत्यनेन 'मात्रास्पर्शाः' इत्यत्र यदुक्तमाभिमानिकमेवात्मनो दुःखादिकं न तु स्वगतमिति तस्यानुवादः क्रियते । एवं व्याख्यानप्रकारमन्यत्राप्यतिदिशति— **इति सर्वत्रेति** । विवेकः शब्दार्थयोः । अविनाशिनं दोषयोगरहितमिति कुतो लभ्यत इत्यत आह— **दोषेति** । अनेकार्थत्वाद्धातूनामिति भावः ॥ २१ ॥

***भा०दी०***— अत इत्यस्यार्थः उक्तैः **प्रमाणैरिति** । एवमित्यस्यार्थः **अविनाशित्वादिरूपमिति** । गीतोक्तनित्यत्वाजातत्वादिरादिपदार्थः । भाष्यानुवादपूर्वशेषमाह कं घातयति हन्ति वेत्येवंभावं करोतीत्यर्थ इति किमित्याक्षेपे । एनमयं घातयति, एनमयं हन्तीति भावं न करोतीति फलितोऽर्थः । श्लोकतात्पर्यं निष्कृष्य दर्शयति **जीवस्येत्यादिना** । प्रागप्रकृतस्य कथमनुवाद इत्यत आह **दोषयोगरहितमित्यनेनेति** । आभिमानिकं अभिमानकृतम् ॥ २१ ॥

*भा०र०*— **पुनरिति** । "अनाशिनः" इत्यविनाशित्वस्य "नित्यस्योक्ताः" इति नित्यत्वस्य "न त्वेवाहम्" इत्यादिना अजत्वस्य "अव्ययस्यास्य" इत्यव्ययत्वस्य चोक्तत्वादिह पुनस्तद्वचनं न प्रयोजनवदित्यर्थः । 'अतः' इति भाष्यस्यार्थः **उक्तैरिति** । अनादिभावत्वनित्यबिम्बकत्वादिरूपैः प्रमाणैरित्यर्थः । 'एवम्' इति भाष्यपदार्थः **अविनाशित्वादिरूपमिति** । "कथं कं घातयति हन्ति वा" इति भाष्यतात्पर्यमाह **घातयति हन्ति वेत्येवं भावं करोतीत्यर्थ इति** । कथं करोतीति भाष्येणान्वयः । न करोतीति पाठे त्वयमर्थः । ननु गीतायां यः अविनाशित्वादिरूपम् आत्मानं वेद स वेदिता पुरुषः कथं घातयति हन्ति वा ? न कथं घातयति हन्ति वा, न कथञ्चित् कमपि वेति ज्ञानिन एव स्वातन्त्र्याक्षेपप्रतीत्या अज्ञानिनः स्वातन्त्र्यमस्तीति विज्ञायते । न चैतद् युक्तम् । ज्ञान्यज्ञानिसाधारणजीवमात्रे स्वातन्त्र्येण कर्तृत्वादिनिषेधस्य प्रकृतत्वेन प्रकरणविरोधादित्यतो भाष्यभावमाह **एवं भावं न करोतीति** । जीवस्वातन्त्र्यानित्यत्वादिभावनां न करोति । तद्विषये भ्रान्तिमान्न भवतीत्यर्थः इति । ननु स्वातन्त्र्यादिभावनां न करोतीत्यत्र 'वेदाविनाशिनम्' इत्यस्य तात्पर्यमिति व्याख्यानान्नित्यत्वाद्युक्त्या पुनरुक्त्यभावेऽपि "उभौ तौ न विजानीतः" इत्युक्त्या अस्त्येव सा, उभयत्र तथा ज्ञाननिषेधप्रतीतेरित्याशङ्क्य तद्वाक्यतात्पर्यं वदन्नेतद्वाक्यतात्पर्यमाह **जीवस्येति** । **इत्युक्तम्** "य एनम्" इति श्लोकेन । इत्युच्यत इत्यनन्तरं तात्पर्यमिति शेष इत्याहुः ।

नैमित्तिकश्चासौ नाशश्चेत्यादिरूपेण विग्राह्यत्वान्नैमित्तिकः स्वाभाविक इति विच्छिद्य व्याख्याति **नैमित्तिक इत्यादि** ॥ 'बिम्बनाशादि' इत्यत्र आदिशब्देनोपाधिनाशतत्सन्निधिनाशौ गृह्येते । "य एनम्" इति यच्छब्दश्रवणादनुवादो ज्ञायते । अनुवादश्चोक्तस्यैव । न च दोषयोगराहित्यं प्रागुक्तम् । येनाविनाशिनमिति तदनुवाद इत्यत आह **दोषयोगेति** । मात्रास्पर्शा अभिमानसहिता एव दुःखादिप्रदा इति व्याख्यातत्वादुक्तम् **आभिमानिकमेवेति** । **स्वगतम्** अनागन्तुकम् । **अनुवाद इति** । न चाव्ययत्वस्येतः पूर्वमात्मन्यनुक्तेः कथं तस्यानुवाद इति वाच्यम् । स्वाभाविकनैमित्तिक-नाशनिषेधस्योक्तत्वेन नाशसामान्याभावरूपस्याव्ययत्वस्याप्युक्तिलाभेनानुवादोपपत्तेः । "नत्वेवाहम्" इत्यादावुक्तरूपाव्ययत्वस्योक्तत्वाद् युक्तोऽनुवाद इत्यप्याहुः । **शब्दार्थयोः** अविनाशिशब्दार्थस्य नित्यशब्दार्थस्य च । तेन, शब्दश्चार्थश्चेति विग्रहे अविनाशिशब्दनित्यशब्दयोर्द्वित्वात् तदर्थानां चातुर्विध्याद् द्विवचनानुपपत्तिरिति दूषणमलग्नकम् । शब्दयोः शब्दत्वेनार्थयोरर्थत्वेनैक्यं विवक्षित्वा द्विवचनं प्रायुङ्क्तेति केचित् । विनाशिशब्देन दोषयोगी न प्रत्येतुं युक्तः । नश्यतेरदर्शनार्थत्वेन दोषोपस्थापनाशक्तेरित्यत आह **अनेकेति** । नश्यतेरदर्शनमिवेह दोषयोगोऽप्यर्थो ग्राह्य इत्यर्थः ॥ ॥ २१ ॥

***गीताक्षरार्थस्तु***— जीवस्यानित्यत्वादिकं मन्यमानो न जानातीत्युक्तम् । इदानीं ज्ञानी नैवं मन्यत इत्युच्यते **वेदाविनाशिनमिति** ॥ यः पुमान् एनम् अन्वादेशे एनादेशः । प्रकृतं जीवम् अविनाशिनं बिम्बनाशादिनिमित्तकनाशरहितं नित्यं कालकृतनाशहीनं, यद्वा 'मात्रास्पर्शाः' इत्यत्रोक्ताभिमानादिदोषयोगरहितं नित्यं सदाभाविनमित्यर्थः । अजम् उत्पत्तिवर्जितम्, अव्ययं स्वरूपविकारशून्यम् उक्तैः प्रमाणैः वेद जानाति । स पुरुषः कं पुरुषं कथं घातयति कथं कं वा हन्ति ? घातयतीति हन्तीत्येवं भावं करोतीत्यर्थ इति ॥ २१ ॥

**गीतातात्पर्यनिर्णयः**

**अविनाशिनं शरीरापायादिवर्जितम् । नित्यं स्वरूपतः । एनं परमेश्वरम् ।**

**"कर्तृत्वं तु स्वतन्त्रत्वं तदेकस्य हरेर्भवेत् ।**
**तच्चाव्ययं तस्य जानन् कथं कर्ता स्वयं भवेत् ॥"**

**—इति परमश्रुतिः ।**

**अन्यथा अविनाशिनं नित्यमिति पुनरुक्तिः ॥ २१ ॥**

*प्रका०*—जीवविषयत्वं दूषणमाह **अन्यथा विनाशिनमिति** ॥

***न्या०दी०***— यदुक्तं "जीवे स्वातन्त्र्यं मन्यमानो न जानाति" इति तत्र "नायं हन्ति" इति हेतुरुक्तः । अथ ज्ञानिनां तादृशाभिमानाभावश्च तत्र हेतुरुच्यते "वेदेति" । तत्राविनाशिनित्यपदयोः पौनरुक्त्यपरिहारायार्थभेदमाह **अविनाशिनमिति** ॥ जीवस्य समीपोक्तत्वादेनमित्यस्य जीवविषयत्वप्रतीतिनिरासायाह **एनमिति** ॥ समस्तश्लोकं श्रुत्यैव व्याचष्टे **कर्तृत्वमिति** ॥ जानन् अविनाशित्वादिहेतुनेति शेषः । **कर्ता** कर्तृत्वाभिमानी । जीवस्य समीपोक्तत्वात् तद्विषयोऽयं श्लोकः किं न स्यादित्यत आह **अन्यथेति** ॥ ईश्वरस्य शरीरापायरहितत्वात् तत्परत्वे शक्यते पुनरुक्तिपरिहारः । न तु जीवपरत्वे । तस्य देहनाशसद्भावात् । अतः पुनरुक्तिविरोधात् समीपोक्तमपि जीवं विहायेश्वरग्रहणं युक्तमिति भावः ॥

***भा०दी०***— **हेतुरुक्त इति** । स्वातन्त्र्येण न हन्तीत्यत्र अस्वातन्त्र्यरूपो हेतुरुक्त इत्यर्थः ॥ **तादृशाभिमानाभाव इति** । हन्तृत्वहन्यमानत्वादौ स्वातन्त्र्याभिमानाभावश्च तत्र स्वातन्त्र्येण हननकर्तृत्वाद्यज्ञे हेतुरुच्यत इत्यर्थः । ज्ञानी चेच्छत्रुं हन्ति हन्यते च तदा स ज्ञानी स्वस्य हनने

स्वातन्त्र्यं न जानाति, स्वातन्त्र्यभ्रान्तिरूपाभिमानाभावादिति वा देहाद्यभिमानाभावादिति वा अभिप्रायः ॥ **समीपोक्तत्वादिति** । पुराणपदेनेति भावः ॥

**गीता**

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही ॥ २२ ॥**

***वि०वि०***— जीवो नित्यः । तस्य देहवियोगौ च कौमारादिवदित्युक्तम् । तत्र कौमारादिदेहानामनतिभिन्नत्वान्न तेन देहात्मनोर्विवेकः विनाशित्वाविनाशित्वलक्षणः स्फुटो अनुभवारूढो भवतीति देहात्मविवेकानुभवं दृष्टान्तेनोपपादयति **वासांसीति** । अथवा वाससो जरावत् स्वशरीरे जरादावस्वातन्त्र्यदर्शनात् सर्वत्रास्वातन्त्र्यं जीवस्य ज्ञातव्यमित्यनेनोच्यते ॥ २२ ॥

***सा०सं०***— पूर्वत्र पुराणपदेन जीवस्य देहाद्देहान्तरप्राप्तिरुक्ता । सा तु देहान्यनित्य जीवस्य सत्य एव युक्ता । 'कौमारं यौवनं जरा' इत्यत्र देहात्मविवेकोक्तावपि कौमारादिदेहानामतिभिन्नत्वाभावान्न तेन देहात्मनोर्विनाशित्वाविनाशित्वलक्षणो विवेकः स्फुटमनुभवारूढो भवतीत्यतो दृष्टान्तान्तरेण तमुपपादयति **वासांसीति** ।

, यद्वा, ईश्वरस्य देहतः स्वरूपतश्च नित्यत्वेन तद्विषये शोकाभावेऽपि जीवविषये तु स भविष्यति । जोवो नित्यः, तद्देहयोगवियोगौ कौमारादिदेहवदेवेत्युक्तावपि सर्वलोकप्रसिद्धजनिमृतिसत्वात्, युद्धे च तत्प्राप्तेस्तन्निमित्तः शोक इत्यत आह **वासांसीति** । शरीरयोगवियोगयोः कौमारादिवत् शोककारणत्वाभावोऽङ्गीकृतश्चेत् तर्हि जनिमृती अपि न शोककारणम् । देहयोगवियोगयोरेव जनिमृतिशब्दार्थत्वादिति भावः । यद्वा— वाससो जरावत् स्वशरीरे जरादावस्वातन्त्र्यदर्शनात् सर्वत्रास्वातन्त्र्यं जीवस्य ज्ञेयमित्यनेनोच्यते । श्लोकार्थस्तु व्यक्तः ॥ २२ ॥

***अ०प्र०***— ननु आत्मनो विनाशेऽपि तदीयशरीरनाशं पर्यालोच्य शोच्यामीति चेत् तत्राह **वासांसीति** ।

नरः[१], यथा[२], जीर्णानि[३], वासांसि[४], विहाय[५], पराणि[६], नवानि[७], गृह्णाति[८], तथा[९], देही[१०], जीर्णानि[११], शरीराणि[१२], विहाय[१३], अन्यानि[१४], नवानि[१५], संयाति[१६] इत्यन्वयः । कर्मनिबन्धनानां

नानादेहिनां अवश्यम्भावित्वात् जीर्ण-देहनाशेन शोकावकाश इत्यर्थः । यद्वा देहे कौमारादिवदित्युक्तं तत्र कौमारादेर्देहतो नेति भिन्नत्वान्न तेन देहात्मनो विवेकः स्फुटीभवति इति देहात्मविवेकानुभवं वस्त्रदृष्टान्तेनोपपादितम् । अथवा वासो जरावत् स्वशरीरजरादौ सर्वत्र जीवस्यास्वातन्त्र्यं ज्ञातव्यम्, ननु दक्षस्य शिरच्छेदो न स्वतो जातो नापि वीरभद्रस्यायुधेन निमित्तेन किन्तु यज्ञपशुत्वभावनाख्येन निमित्तविशेषेण जातः । तथाऽत्र स्वतः यशोनिमित्तैश्च अविनाशिनोऽपि जीवस्य केनचिन्निमित्त-विशेषेण नाशः स्यादित्यतो निमित्तविशेषान्निषेधति ॥ २२ ॥

*त्रि०वि०*— अत्र जीर्णदेहविसर्जनानन्तरं नवदेहप्राप्तिर्वासोदृष्टान्तेनोक्ता । भागवते तु "देहा-न्तरमनुप्राप्य प्राक्तनं त्यजते वपुः" इत्यनेन नवदेहप्राप्त्यनन्तरं जीर्णदेहविसर्जनमुक्तम् ॥ अतो विरोधः । वासोदृष्टान्तोऽप्यत्र न युज्यते । तथा प्रतीत्यभावात् । न हि कश्चित्पूर्वं जीर्णं विसृज्य नवग्रहणे प्रवर्तते । अतो विरोधान्तरं च । अत्र केचित्समादधुः – अविहायेति पदप्रश्लेषेण दृष्टान्ते न विरोध इति ॥ दार्ष्टान्तिके अकारप्रश्लेषासम्भवेन साम्यानुपपत्तेः । नरः – जानुकञ्चुकवान्मनुष्यः, अपराणि – नव जीर्णेतराणि कौपीनादीनि धृत्वैवेति शेषः, जीर्णानि – पूर्वधृतानि जानुकञ्चु-काख्यानि, विहाय – त्यक्त्वा, नवानि – तदाख्यानि वासांसि गृह्णाति यथा । अपरशब्देन कौपीनादेः, तथा धृत्वैवेति शेषस्य चाग्रहणे, जीर्णनवकञ्चुकहानग्रहणानुपपत्तेः । उभयोर्नवजीर्ण-शब्दयोर्ग्रहणेनैव चारितार्थ्ये अपराणीति पदस्य वैयर्थ्यापत्तेश्च । तथा अन्यानि – नवजीर्णेतर-लिङ्गशरीराणि, अधिष्ठायैव, जीर्णानि विहाय, नवानि संयाति – प्राप्नोति अत्रापि अन्यशब्देन लिङ्गशरीरादेः तथा अधिष्ठायैवेति शेषस्य चानङ्गीकारे जीर्णदेहत्यागनवदेहप्राप्त्योरनुपपत्तेः । न हि जीर्णदेहं विहाय अनावृत एव देहान्तरं गच्छेत् । लिङ्गानावरणे मोक्षसिद्धिप्रसङ्गात् । अन्यपदस्य च वैयर्थ्यापत्तिः । जीर्णान्नवस्य स्वत एवान्यत्वसिद्धेः ॥ तस्मादुक्तार्थस्य युक्तत्वेन नोक्तविरोधापत्तिरिति भावः ॥

श्रीमन्नारदशिष्येण श्रीनिवासेन लेशतः ।<br>
वासांसीत्यादिपद्यं तु विवृतं श्रीशतुष्टये ॥ २२ ॥

**भाष्यम्**

**देहात्मविवेकानुभवार्थं दृष्टान्तमाह— 'वासांसीति' ॥ २२ ॥**

*प०टी०*— देहात्मनोः प्राक्प्रतिपादितो विवेको नानुभवारूढोऽत्यभिमानित्वात् । तदर्थं दृष्टान्तमाहेत्युत्तरश्लोकमवतारयति **देहेति** ॥ २२ ॥

*न०टी०*— आत्मनो देहे व्याप्तत्वात् प्रायः प्राणिनां व्यवहारापाटवात् भेदज्ञानेऽपि तयोरङ्गारवह्निवदविविक्तव्यवहारो भवतीति दृष्टान्तमुखेनापि तद्विवेकमनुभवरूपं दृढीकरोतीत्याह **देहेति** ॥ २२ ॥

*प्र०दी०*— देहानामपगमोपगमयोरप्येक एवायमात्मेत्येतत् 'देहिनोऽस्मिन्' इत्यत्रैव सदृष्टान्तमुक्तम् । अतो वासांसीति व्यर्थोऽयं श्लोक इत्यत आह— **देहेति** । कौमारादिदेहाना(मनतिभिन्नत्वात्)मतिभिन्नत्वाभावान्न तेन देहात्मनोर्विवेको विनाशित्वाविनाशित्वलक्षणः स्पष्टमनुभवारूढो भवतीति भावः । दृष्टान्तं पूर्वोक्ताद्विलक्षणमिति शेषः । दृष्टान्तमित्युपलक्षणम् । दार्ष्टान्तिकस्यापि कथितत्वात् ॥ २२ ॥

*भा०र०*— यथा कौमारमित्याद्युक्तेस्सदृष्टान्तमित्युक्तम् । प्रत्यभिज्ञानेनैकतया सिद्धस्य देहरूपस्यावयवोपचयापचयाभ्यां तत्तत्परिणामतया विकारदर्शनादुक्तम् **अतिभिन्नत्वाभावादिति** । आविपालगोपालं देहात्मविवेक आजानसिद्ध इति न स दृष्टान्तेनोपपादनीय इत्याशङ्क्यात्र विवक्षितं विवेकशब्दार्थमाह **विनाशित्वाविनाशित्वलक्षण इति** । दुर्ग्रहमर्थं बुद्धिमारोहयितुमवश्यं वक्तव्यस्य दृष्टान्तस्य यथा देह इत्युक्तत्वादाह **पूर्वोक्ताद् विलक्षणमिति** । देहानामपगमोपगमयोरप्येक एवायमात्मेत्येतद् देहिनोऽस्मिन्नित्यत्रैव सदृष्टान्तमुक्तम् । तथाऽपि कौमारादिदेहानामतिभिन्नत्वाभावान्न तेन देहात्मनोर्विनाशित्वाविनाशित्वलक्षणो विवेकः स्पष्टमनुभवारूढो भवतीत्यतो दृष्टान्तान्तरेण पूर्वोक्ताद् विलक्षणेनैक एवायमात्मेत्येतत् प्रत्याय्यते **वासांसीति** ॥ गीताक्षरार्थस्तु स्पष्टः ॥ २२ ॥

**गीतातात्पर्यनिर्णयः**

**जीवस्यापि शरीरसंयोगवियोगावेव जनिमृती यतस्ततो न दुःखकारणमित्याह वासांसीति ॥ २२ ॥**

*न्या०दी०*— नन्वस्त्वीश्वरविषये शोकाभावो, जीवविषये तु भविष्यति । जीवो नित्यस्तस्य देहयोगवियोगौ कौमारादिवदित्युक्तेऽपि सर्वलोकप्रसिद्धजनिमृतिसद्भावात् युद्धे च तत्प्राप्तेरित्याशङ्कापरिहारत्वेन श्लोकमवतारयति **जीवस्येति** ॥ शरीरयोगवियोगयोः कौमारादिवच्छोककारणत्वाभावोऽङ्गीकृतश्चेत् तर्हि जनिमृती अपि न शोककारणम्, यतः शरीरयोगवियोगावेव जनिमृती इत्यर्थः ॥

*भा०दी०*— मूलं योजयति **शरीरयोगवियोगयोरिति** ॥

**गीता**

## नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
## न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

***वि०वि०***— ननु दक्षस्य शिरच्छेदो न स्वतो जातो, नापि वीरभद्रस्यायुधेन निमित्तेन, किन्तु यज्ञे पशुभावनाख्येन निमित्तविशेषेण, तथा स्वतः प्रायो निमित्तैश्चाविनाशिनोऽपि केनचिन्निमित्तविशेषेण नाशः स्यादित्यतो विशिष्टनिमित्तानि निषेधति **नैनमिति** ॥ २३ ॥

***सा०सं०***— ननु जीवचितः कालकृतस्य बिम्बनाशादिनिमित्तकृतस्य च नाशस्याभावेऽपि दक्षशिरच्छेद इव शस्त्रादिप्रबलहेतुना नाशोऽस्ति किमित्यत आह **नैनमिति । एनं** देहीति प्रकृतं जीवं **न क्लेदयन्ति** मृदुकरणेन शिथिलं न कुर्वन्तीत्यर्थः ॥ २३ ॥

***अ०प्र०***— कथं हन्ति इत्यनेनोक्तं वधसाधनाभावं दर्शयन् विनाशित्वमात्मनः स्फुटीकरोति **नैनमिति** ।

शस्त्राणि[१], एनं[२], न छिन्दन्ति[३], पावकः[४], एनं[५], न दहति[६], आपः[७], एनं[८], न क्लेदयन्ति[९], मारुतः एनं[१०], न शोषयति[११] इत्यन्वयः ।

स्पष्टार्थः । तत्र न क्लेदयन्ति = मृदुकरणेन शिथिलं न कुर्वन्ति ॥ २३ ॥

**भाष्यम्**

**स्वतः प्रायोनिमित्तैश्च अविनाशिनोऽपि केनचिन्निमित्तविशेषेण स्यात् ककच्छेदवत् इत्यतो विशेषनिमित्तानि निषेधति— नैनमिति ॥ २३ ॥**

***प०टी०***— सर्वप्रकारमनित्यत्वमीशस्य निषिद्धत्वात् किमुत्तरश्लोकेन ? इत्यत आह **स्वत इति । स्यात्** 'नाशः' इति शेषः । ककच्छेदो दक्षशिरश्छेदः ॥ २३ ॥

***न०टी०***— ननु नैमित्तिकनाशस्यापि निरस्तत्वात् किमुत्तरश्लोकेनेत्यत आह **स्वत इति** । ॥ २३ ॥

***प्र०दी०***— नैमित्तिकनाशस्य प्राक् निरस्तत्वात् किं नैनमिति श्लोकेनेत्यतः तन्निवर्त्याशङ्का-प्रदर्शनपूर्वकं तात्पर्यमाह— **स्वत इति** । स्वतः कालतः । प्रायः बाहुल्येन । शङ्क्यमाननिमित्त-

व्यावृत्त्यर्थमेतदव्ययम् । केनचित् शस्त्रादिना । स्याद्विनाश इति शेषः । असम्भावितशङ्काया न पर्यवसानमित्यतो दृष्टान्तमाह— **ककच्छेदवदिति** । यथा दक्षस्य प्रजापतेः शिरच्छेदो न स्वतो जातो नापि वीरभद्रस्यायुधेन निमित्तेन किन्तु यज्ञपशुभावनाख्येन निमित्तविशेषेण तथेत्यर्थः । इत्यतः एवं शङ्कितत्वात् । विशिष्यन्त इति विशेषाः । विशिष्टनिमित्तानि विनाशस्य ॥ २३ ॥

*भा०दी०*— **प्राक्निरस्तत्वादिति** । 'अन्तवन्त इमे' इति श्लोके बिम्बोपाधितत्सम्बधीनां नाशनिमित्तकनाशस्य निरस्तत्वादित्यर्थः । **प्राय** इत्यनुवादः । **बाहुल्येन** इति व्याख्या । तस्य कृत्योक्तिः । शङ्क्यमाननिमित्तव्यावृत्त्यर्थं **एतदव्ययमिति** । नैनमिति श्लोके नाशहेतुतया यच्छस्त्र-पावकादिकं शङ्क्यते तद्व्यावृत्तबिम्बनाशादिनिमित्तग्रहणायैतद्विशेषणम् । **अव्ययमिति** स्वरूप-कीर्तनम् । **यज्ञपशुभावनेति** । उक्तं हि चतुर्थस्कन्धे 'दृष्ट्वा संज्ञापनं योगं पशूनां सपतिर्मखे । यजमानपशोः कस्य कथात्तेनाहरच्छिर' इति ॥ २३ ॥

*भा०र०*— **प्राक्** 'अनाशिनः' इत्यत्र 'अविनाशिनम्' इत्यत्र च । उभयत्र तथा भाषणादिति भावः । 'प्रायः' इति भाष्यपदमनूद्य व्याकुर्वंस्तस्य कृत्यमाह **प्रायो बाहुल्येन शङ्क्यमानेति** । 'नैनम्' इत्यत्र निषेध्यतया यत् केनचिच्छस्त्रादिनेति निमित्तं शङ्क्यते तद्व्यावृत्त्यर्थमुपाधिनाशाद् बिम्बनाशादुपाधिबिम्बसन्निधिनाशाद् वा नाशोऽस्त्वित्यादिरूपैराशङ्कितैर्बहुतरनिमित्तैर्नाशशून्यस्यापि शङ्क्यमानशस्त्रादिरूपनिमित्तविशेषं व्यावर्तयितुमेतत् प्राय इति पदमित्यर्थः । प्रायः पदाभावे कालतो निमित्तैश्चानाशिनोऽपि निमित्तविशेषेण नाशोऽस्त्विति शङ्कैव विप्रतिषिद्धेति भावः ।

ननु "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्", "वेदो वा प्रायदर्शनात्" इत्यादिप्रयोगात् "प्रायः स्यात् ताडने मृत्यौ तुल्यबाहुल्ययोरपि" इति विश्वनिघण्टावुक्तेश्च बाहुल्यार्थः प्रायशब्दो-ऽयमकारान्तः । तस्माच्च "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति तृतीयायां प्रायेणेति स्यात् । सम-स्तत्वे प्रायनिमित्तैरिति भवेत् । भूमार्थस्य निमित्तपदसामान्याधिकरण्यायोगश्चेत्यत आह **अव्यय-मिति** । बाहुल्यार्थं प्राय इति पदं सान्तमव्ययमप्यस्ति । "अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः" इत्यमरेण सान्ताव्ययैः सहपाठात् । अत उपपन्नं प्रायोनिमित्तैरिति भाषणमिति भावः । **शस्त्रादिना** अस्यनलानिलादिना । एकः कशब्दः प्रजापतिविशेषार्थः । अन्यस्तु शिरोवाचक इति भावेन दृष्टान्तभाष्यं व्याचष्टे **यथेति** । **नापि वीरभद्रस्यायुधेनेति** । "भृगुं बबन्ध मणिमान् वीरभद्रः प्रजापतिम्" इति प्रस्तुतवीरभद्रस्य "शस्त्रैरस्त्रान्वितैरेनमनिर्भिन्नत्वचं हरः" इति तत्र शस्त्रायुधप्रयोगो मोह इत्याभिधानादिति भावः । **यज्ञपशुभावनाख्येन निमित्तविशेषेणेति** । "विस्मयं परमापन्नो

दध्यौ पशुपतिश्चिरम्'' इति ध्यानमुक्त्वा ''दृष्ट्वा सञ्ज्ञपने योगं पशूनां स पतिर्मखे । यजमानपशोः कस्य कायात् तेनाहरच्छिर'' इति श्लोके मख इत्युक्तेर्यजमानस्य पशुत्वोक्तेश्च यज्ञपशुभावनारूपमेव ध्यानं योगमुपायमास्थाय शिरो जहारेति विभावनादिति भावः ।

ननु भावसाधनो विशेषशब्दः कथं निमित्तशब्देन समानाधिकरणः स्यादित्यतो नासौ भाव-घञन्तः, किन्तु कर्मणीति भावेनाऽह **विशिष्यन्त इति** । तात्पर्यमाह **विशिष्टेति** ॥ २३ ॥

**गीतातात्पर्यनिर्णयः**

**कारणतोऽपि नेश्वरस्यान्यथात्वमित्याह नैनं छिन्दन्तीति ॥ २३ ॥**

*न्या०दी०*— अस्त्वीश्वरस्य स्वतो नाशाभावः । तथापि युद्धगतशस्त्रादिकारणविशेषेण छेदादिप्राप्तेः शोक इत्याशङ्कापरिहारत्वेन श्लोकमवतारयति **कारणतोऽपीति** ॥ **अन्यथात्वं** छेदादि ॥

**गीता**

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

*वि०वि०*— लट्प्रयोगेन वर्तमानस्यैव छेदादेर्निषेधात् इदानीं दृश्यमानत्वादात्मनः प्राग्वि-नाशाभावेऽप्युत्तरत्र शस्त्रादिना विनाशः स्यादित्यतोऽर्हार्थककृत्प्रत्ययप्रयोगेन छेदादियोग्यतैवात्मनो नास्तीत्याह **अच्छेद्य इति** । 'प्रवृत्ते शस्त्रसम्पाते' इति वचनात् प्रसक्तौ सत्यामपि वर्तमानस्य छेदादेरदर्शनाच्छेदायोग्यत्वमात्मनो युक्तमिति पूर्वश्लोकेन दर्शयति ।

ननु वर्तमानच्छेदाद्यदर्शनमात्मनः छेदाद्ययोग्यतायां न निश्चायकं पूर्वं कदाप्यदृष्टस्यापि पश्चाद्दर्शनात् । 'न च सम्भावनामात्रेण निश्चय इत्यतो नित्यसर्वगतत्वादिविशेषणेश्वरसरूपत्वं निश्चा-यकम्, प्रतिबिम्बे बिम्बधर्मसमानधर्माणां अविरुद्धानां सम्भवादित्याह **नित्य इति** । पुनरुक्ति-प्रसङ्गात्सामर्थ्याद्भिन्नपदोपात्तमपि नित्यत्वं सर्वगतत्वविशेषणं नित्यं सर्वेषु शस्त्रपावकादिषु स्थितः सर्वगतः स्थाणुः नैमित्तिकविकाररहितः । अनाद्यनन्तशक्तित्वादचलत्वादिबिम्बधर्मसाकल्याभावेऽपि अविरुद्धधर्मान्तरस्वीकाराय पुनः पुनः प्रतिबिम्बोक्तिः । तस्मादीश्वरप्रतिबिम्बत्वान्नित्यत्वेनात्मानं विदित्वा नानुशोचितुमर्हसि । अथवा ईश्वरदेहस्यापि छेदाद्यभावः स्वदेहस्य साक्षादेव दर्शयितुं शक्यत इति वर्तमानापदेशः ।

'सद्देहःसुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः ॥'

इति च श्रुतिः । अच्छेद्यत्वादिकं जीवस्यापि सममित्याह **अच्छेद्योऽयमिति** । नन्वच्छेद्यत्वादिसाम्येन जीवस्यापि स्वातन्त्र्यं स्यादित्यत आह **नित्य इति** । नित्यं सर्वगते विष्णौ स्थितोऽणुश्चेति तथा विष्णवधीन इत्यर्थः । विष्णवधीनत्वस्य कदाचिन्नाशे पुनरपि साम्यमित्यत आह **अचल इति** । हेतुतोऽपि तत्स्थत्वान्न चलतीत्यर्थः । जीवस्यास्वातन्त्र्ये हेत्वन्तरमाह **सनातन इति** । नादेन शब्देन सह वर्तत इति सनादः, सनाद एव सनातनः । विधिनिषेधशास्त्रबद्ध इति यावत् । उक्तं च—

'नित्यं सर्वगते विष्णावणुर्जीवो व्यवस्थितः ।
न चास्य तदधीनत्वं हेतुतोऽपि विचाल्यते ।
निषेधविधिपात्रत्वात्सनातन इति स्मृतः ॥' इति च ॥ २४ ॥

*सा०सं०*— ननु 'न छिन्दन्ति' इत्यादि लट्प्रयोगेण वर्तमानस्यैव छेदादेर्निषेधात् इदानीं दृश्यमानत्वेनात्मनः प्राग्विनाशाभावेऽप्युत्तरत्र शस्त्रादिना विनाशः स्यादित्यतः छेदादियोग्यतैवात्मनो नास्तीत्याह **अच्छेद्योऽयमिति** । **अयं** जीवः 'कृत्याः' (३-१-९५) 'प्राङ्ण्वुलः' इति सूत्रेणोक्तकृत्यसंज्ञकस्य ण्यप्रत्ययस्य 'अर्हे कृत्यतृचश्च' (३-३-१६९) इत्यर्हार्थे 'छिदि देह' इत्यादेर्धातोर्विधानाच्छेदनाद्यर्हो न भवतीत्यर्थः । **'अयम् अयम्'** इति पृथग्वचनं यो यो जीवः स सर्वोऽप्येवंरूप इति प्रदर्शनाय ।

कुतो नार्हतीत्यत उक्तं **नित्य इत्यादि** । **सर्वगतः स्थाणु**रिति पदविभागः । 'नित्य' इति 'सर्वगतः' इत्यस्य विशेषणम् । सर्वगतपदेन सर्वगतत्वविशिष्ट उच्यते । नित्यः सर्वगतत्वविशिष्ट इत्युक्ते "सविशेषणे हि" इति न्यायेन नित्यत्वं सर्वगतत्वरूपविशेषणमुपसङ्क्रामति । नित्यं यत् सर्वगतत्वमिति । तद्वान् सर्वगत इत्यर्थः । **स्थाणुरिति** यत् किञ्चिन्निमित्तकृतविकारहीनः । 'अजो नित्यः शाश्वतः' इत्यत्र शाश्वतपदेन सामान्यतो विकाराभावोक्तावपीह नैमित्तिकनिषेधप्रकरणान्नैमित्तकविकाराभावोक्त्यर्थं स्थाणुरित्युक्तम् । अतो न पुनरुक्तता । **अचलः** प्राकृतचलनहीनः, **सनातनः** वक्ष्यमाणदिशा सशब्द इत्यर्थः । 'त्वयीश्वरे ब्रह्मणि नो विरुध्यते', 'विज्ञानशक्तिरहमासमनन्तशक्तेः', 'पराऽस्य शक्तिर्विविधैव श्रूयते' इत्यादि श्रुतिस्मृतिरूपशब्दसहितः, तत्प्रतिपाद्य इति यावत् । तथा च— स्थाणुत्वेऽपि हरेः "तदैक्षत" (छां. ६-२-३) इत्याद्युक्तकर्तृत्वमचिन्त्यशक्त्यैव युक्तम् । न तु परीत्या मायावशादित्युक्तं भवति ।

ननु 'नित्यः' इत्यादिविशेषणविशिष्टेश्वरत्वादयं जीवो नित्यः सर्वगः स्थाणुरिति भगवदभेदोक्तिरयुक्तेति चेत् । सत्यम् । उक्तानुपपत्तेरेवाभेदोक्तिरत्र 'अतद्भावे सामानाधिकरण्यं सारूप्यं गमयति' इति न्यायाद्गौणी नेया, नित्यसर्वगतत्वादियुक्तभगवत्सरूपोऽयं जीव इति । उक्तगुणकेश्वरप्रतिबिम्बो जीव इति यावत् । तावता कथं चेदनाद्यनर्हो जीव इति शङ्कानिरास इति चेत्, 'यो यत्प्रतिबिम्बः सोऽसति विरोधे तत्समानधर्मकः' इति व्याप्तिबलेन जीवस्य स्थाणुत्वादीश्वरधर्मसमानधर्मप्राप्तेरिति तात्पर्यात् । 'अनाशिनोऽप्रमेयस्य' इत्यत्र 'अजो नित्यः शाश्वतः' इत्यत्र नित्य इति प्रकृतार्थे च जीवस्येश्वरप्रतिबिम्बत्वोक्तावपि न पुनरुक्तता शङ्क्या । तत्तच्छङ्कानिवर्तकत्वेन भिन्नगुणविशिष्टेश्वरप्रतिबिम्बत्वस्य तत्र तत्र कथनादिति ज्ञेयम् ।

ननु सयुक्तिकमच्छेद्यत्वाद्युक्त्यैव नैमित्तिकनाशशङ्कानिरासात् 'नैनम्' इति व्यर्थमिति चेत्, "प्रवृत्ते शस्त्रसम्पाते" इत्युक्तेः प्रसक्तौ सत्यामपि वर्तमानस्य छेदादेरदृष्टेरात्मनः छेदाद्ययोग्यत्वं युक्तमिति प्रदर्शनार्थत्वात् । यद्वा, 'नैनम्' इत्यादिश्लोक ईश्वरविषयः । तथाहि— 'वेदाविनाशिनम्' इत्यत्रेश्वरस्य स्वतो नाशाभावोक्त्या तन्निमित्तशोकाभावेऽपि युद्धगतशस्त्रादिकरणविशेषेण च्छेदादिप्रसक्तेः, तन्निमित्तशोको ममेत्यत आह **नैनमिति ।** "य एनं वेत्ति" इति श्लोके प्रकृतमीश्वरम् । शिष्टं व्यक्तम् । एतेन ईश्वरस्य देहतोऽपि छेदाद्यभावात् स्वातन्त्र्यमित्युक्तं भवति । 'एनम् एनम्' इति पृथक् पृथग्वचनं सर्वरूपाणामेवम्भावप्रदर्शनाय । एवम् 'अव्यक्तोऽयम्' इत्यत्रापि । ननु जीवस्य स्वतो नाशाभावेऽपि युद्धगतशस्त्रादिकरणविशेषेण छेदादिः स्यादित्यत आह **अच्छेद्योऽयमिति । अयं** जीवः । ननु जीवस्यापि ईश्वरवदच्छेद्यत्वादिमत्वे सर्वसाम्यं स्यात् । तथा च किं तत्पूजयेत्यतो जीवस्य नित्यमीशाधीनतामाह **नित्य इति । सर्वगतस्थाणु**रित्येकं पदम् । 'नित्यः' इति योग्यतया स्थितिरूपक्रियाविशेषणानां । "क्रियाव्ययविशेषाणां च नपुंसकत्वमेकवचनान्तत्वं च वाच्यम्" इत्येतन्नाश्रितम् । **अयं** जीवः । **नित्यः** नित्यं सर्वगते हरौ तिष्ठतीति नित्यः । सर्वगतस्थः । तदधीनतया सदा स्थित इति यावत् । स चासावणुश्च **सर्वगतस्थाणु**रित्यर्थः । ईशजीवयोः सर्वगतत्वाणुत्वरूपवैषम्यान्न सर्वसाम्यमिति भावेन सर्वगतेति अणुरिति चोक्तम् ।

ननु जीवस्येशाधीनत्वं यदा न स्यात् तदा स्यात् सर्वसाम्यम् । तथा च न तत्पूजा कार्येत्यत आह **अचल इति ।** सर्वगतस्थपदं बुद्धिविविक्तमाकृष्यते भावप्रधानम् । सर्वगतस्थत्वान्न कदाचिच्चलतीत्यचलः । 'नित्यं सर्वगतस्थः' इत्युक्त्यैवास्यार्थस्य लाभेऽपि केनचिद्द्वारादिनिमित्तेनापि च तदधीनत्वस्य नाश इति नैमित्तिकनाशाभावोक्त्यर्थमचल इत्युक्तिः । कुतः सदा हर्यधीनत्वं जीवस्येत्यत आह **सनातन इति** । नादेन विधिनिषेधरूपशब्देन सह वर्तत इति सनादः । सनाद एव

सनातनः । दशब्दस्य छान्दसस्तनादेशः । विधिनिषेधबद्धत्वात् सदा तदधीन इति भावः । तदुक्तं विष्णुपुराणे— 'नित्यं सर्वगते विष्णावणुर्जीवो व्यवस्थितः' इत्यादि ॥ २४ ॥

*अ०प्र०*— तत्र हेतूनाह **अच्छेद्य** इत्यादिसार्धेन ।

अयं[१], अच्छेद्यः[२], अदाह्यः[३], अक्लेद्यः[४], अशोष्य एव[५], नित्यः[६], सर्वगतः स्थाणुश्च[७], अचलश्च[८], अयं[९], सनातनः[१०] इत्यन्वयः ।

अयं अच्छेद्यः निरवयवत्वात्[२], अदाह्यः अमूर्तत्वात्[३], अक्लेद्यश्च मृदुकरणयोग्यश्च न भवति[४], अशोष्य एव द्रवत्वाभावादशोष्य एव[५], नित्यः अविनाशी[६], स्थाणुः = स्थिरस्वभावः रूपान्तरापत्ति-शून्यः नैमित्तिकविकाररहित इति यावत्[७], अचलः = पूर्वरूपापरित्यागी[८], अयं सनातनः = अनादिः शास्त्रैकगम्यः ॥ २४ ॥

**भाष्यम्**

**वर्तमाननिषेधात् स्यादुत्तरत्रेत्यत आह— अच्छेद्य इति । वर्तमानादर्शनाद्युक्तमयोग्यत्वमिति सूचयति वर्तमानापदेशेन । कुतोऽयोग्यता ? नित्यसर्वगतादिविशेषणेश्वरसरूपत्वात् । 'शाश्वतः' इत्येकरूपत्वमात्रमुक्तम् । स्थाणुशब्देन नैमित्तिकमन्यथात्वं निवारयति । नित्यत्वं सर्वगतत्वविशेषणम् । अन्यथा पुनरुक्तेः । ऐक्योक्तावप्यनुक्तविशेषणोपादानान्नेश्वरैक्ये पुनरुक्तिः ।**

*प०टी०*— यदि वर्तमानकाले छेदाद्यभावः, तर्ह्युत्तरत्र स्याद्विशेषनिषेधस्य शेषानुज्ञारूपत्वादित्याशङ्क्य, उत्तरश्लोकमवतारयति **वर्तमानेति** । छेदनाद्ययोग्यता प्रथममेव कुतो नोच्यते ? किं वर्तमानापदेशेन ? इत्यत आह **वर्तमानेति** । ननु वर्तमानकाले छेदाद्यदर्शने, कथं छेदाद्ययोग्यता ? इत्यत आह **कुत इति** । सर्वगतस्य छेदाद्यभावेन तत्प्रतिबिम्बस्यापि न छेदादिकमित्यर्थः । 'शाश्वत' 'स्थाणु' पदयोरीशवाचिनोरर्थभेदमाह **शाश्वतेति** । यदा बिम्बस्य भावेन सर्वगतत्वं तदा स्याच्छेदादीत्यत आह **नित्यत्वमिति** । **पुनरुक्तिः** 'सनातन'पदेन, 'अजो नित्यः' इत्यनेन च । बहुवारं जीवस्येशप्रतिबिम्बत्वोक्तेः पुनरुक्तिरित्यत आह **ऐक्येति** ।

*न०टी०*—ननु 'नैनं छिन्दन्ति' इति छेदनादेः वर्तमानत्वमेव निषिध्यते । अतः स्यात् उत्तरत्र । विशेषप्रतिषेधस्य विशेषाभ्यनुज्ञानविषयत्वादित्याशङ्क्य, परिहारत्वेनोत्तरश्लोकमवतारयति **वर्तमाननिषेधादिति** । ननु 'अच्छेद्यः' इत्यादि छेदनाद्ययोग्यत्वोक्त्या छेदनाद्यभावस्य सर्वकालीन-

त्वावगतेः 'नैनम्' इत्यादि वर्तमानछेदनादिप्रतिषेधेन किम् ? इत्यत आह **वर्तमानादर्शनादिति** । नन्विदानीमच्छिद्यमानस्यापि कालान्तरे छेदादिदर्शनात् **कुतः** छेदाद्ययोग्यत्वम् ? इत्याक्षिप्य तत्समाधानत्वेनोत्तरार्धमवतारयति **कुत इत्यादिना** । नित्यं सर्वेषु शास्त्रपावकाम्बुवाय्वादिषु स्थितो नित्यसर्वगतः । न तु नित्यश्चासौ सर्वगतश्चेति । तथा सति पुनरुक्तिः स्यादिति वक्ष्यति **नित्यत्वं सर्वगतत्वविशेषणमित्यादि** ॥ न ह्याकाशवत् सदा शास्त्रादिस्थो विष्णुस्तच्छेदनाद्यर्हति । काष्ठादिस्तु न सदा पावकादिस्थः । अतस्तैर्दाहाद्याप्नोति । नित्यसर्वगतत्वं हीशस्यैवाच्छेद्यत्वादिप्रदर्शकम् । जीवस्य तत्प्रतिबिम्बत्वादेवाच्छेद्यत्वादि । विद्यमानस्यैव हानवृद्धिरहितत्वेन सदैकरूपावस्थानमात्रं 'शाश्वत'शब्दोक्तम् । 'स्थाणुत्व'शब्दोक्तं तु शस्त्राग्न्यादिनिमित्तमप्यन्यथात्वं नेत्यतो न पुनरुक्तमित्याह **शाश्वत इतीति** । ननु 'अप्रमेयस्य' इत्यनेनैव बिम्बप्रतिबिम्बरूपसारूप्यस्योक्तत्वात् किमिति पुन 'नित्यः सर्वगतः' इत्यादिनोच्यते ? इत्यत आह **ऐक्योक्ताविति** । **ऐक्यं** सारूप्यम् । **अनुक्तविशेषणं** स्थाणुत्वादि ।

***प्र॰दी॰***— तर्ह्यच्छेद्योऽयमित्यादि पुनरुक्तमित्यत आह— **वर्तमानेति** । लट्प्रयोगेण वर्तमानस्यैव छेदादेर्निषेधादिदानीं दृश्यमानत्वेनात्मनः प्राग्विनाशाभावेऽप्युत्तरत्र शस्त्रादिना विनाशः स्यादिति शङ्कायां छेदादियोग्यतैव आत्मनो नास्तीति प्रतिपादनायैतदुदितम् । 'अर्हे कृत्यतृचश्च' (३-३-१६९) इति कृत्यस्य अर्हार्थत्वस्मरणादिति भावः । तर्हि तेनैवालम् । किमाद्येन श्लोकेनेत्यत आह— **वर्तमानेति** । 'प्रवृत्ते शस्त्रसम्पाते' इति वचनात्प्रसक्तौ सत्यामपि वर्तमानस्य छेदादेरदर्शनाच्छेदाद्ययोग्यत्वमात्मनो युक्तमिति दर्शयति प्रथमश्लोकेन । एवं तर्हि औत्तराधर्यप्रसङ्ग इति चेन्न । उपोद्घाताभिप्रायेण भगवतोक्तेऽभिप्रायमजानानस्य शङ्कामनूद्यावतारस्य कृतत्वात् । स्वाभिप्रायेण तूपोद्घातमुक्त्वा साध्यमाहेत्यवतारः कर्तव्यः । 'नित्यः सर्वगतः' इत्यादिकं जीवेऽसम्भावितमित्याशङ्क्य तन्निवर्त्याशङ्काप्रदर्शनपूर्वकं व्याचष्टे— **कुत इति** । वर्तमानच्छेदाद्यदर्शनमात्मनः छेदाद्ययोग्यतायां किं निश्चययुक्तिः । उत सम्भावनायुक्तिः । नाद्यः । कदाचिददृष्टस्यापि पश्चाद्दर्शनात् । द्वितीये कुतोऽयोग्यतानिश्चय इति शङ्कार्थः । 'नित्यः सर्वगतः' इति भावप्रधानो निर्देशः । ईश्वरस्य तावत् छेदाद्ययोग्यत्वं सिद्धम् । नित्यसर्वगतत्वादिविशेषणवत्वात् । न ह्येवंभूतस्य छेदादिकं सम्भवति । अतः तत्प्रतिबिम्बस्यापि जीवस्य तदयोग्यत्वमिति भावः । मन्त्रवर्णे 'शाश्वतः' इति ईश्वरविशेषणमुक्तम् । अत्र 'स्थाणुः' इति । तयोर्भेदमाह— **शाश्वत इति** । एकरूपत्वमात्रं सामान्येनान्यथात्वाभावः । तस्य सामान्यप्रकरणत्वात् । स्थाणुरित्यस्य नैमित्तिकनिषेधप्रकरणत्वात् । अस्यार्थभेदकथनस्योत्तरत्रोपयोगं वक्ष्यामः । 'नित्यः' इति ईश्वरविशेषणं प्रतिभाति । तदन्यथा व्याचष्टे— **नित्यत्वमिति** । भिन्नपदो-

क्तमपि विशिष्टस्य विशेषणं विशेषणमुपसङ्क्रामति । सन्निधानाच्च सर्वगतत्वमिति भावः । द्वयं पृथगीश्वरविशेषणं किं न स्यादित्यत आह— **अन्यथेति** । 'अजो नित्यः' इति नित्यत्वमीश्वरस्य प्रागुक्तम् । 'अप्रमेयस्य' इति सर्वगतत्वं च । अतस्ताभ्यां पुनरुक्तेरित्यर्थः । अस्याप्युत्तरत्रोपयोगः ।

ननु जीवस्येश्वरप्रतिबिम्बत्वमत्र बहुवारमुक्तम् । अतः पुनरुक्तिदोष इत्यत आह— **ऐक्येति** । जीवेश्वरैक्यविषये न पुनरुक्तिर्दोषः । कुतः । ऐक्यमात्रस्य पुनः पुनरुक्तावपि पूर्वपूर्वानुक्तानां तत्र तत्रोपयुक्तानामीश्वरविशेषणानामुत्तरत्रोपादानादिति । ऐक्यमत्र गौणं विवक्षितम् । विशेषणभेदाद्विशिष्टभेद इति भावः । नन्वेतदपि नास्ति । 'शाश्वतः' इत्युक्तस्यैव स्थाणुशब्देन ग्रहणादित्याशङ्कानिरासाय 'शाश्वत इत्येकरूपत्वमात्रं' इत्यादिकः प्राचीनो ग्रन्थः । ननु प्रतिबिम्बत्वं तत्तत्साध्यसिद्धये हेतुत्वेनोक्तम् । न चैकस्यैव हेतोरनेकसाध्यसिद्ध्यर्थं पुनः पुनरुपन्यासे दोषोऽस्ति । तत्कस्य हेतोः ? प्रमेयभेदात् । अतः कथमियं शङ्केति । उच्यते । एकत्रोक्तमीश्वरप्रतिबिम्बत्वमन्यत्रापि हेतुत्वेन शिष्यैरेव ज्ञायताम्, किं स्वयं वचनेनेति शङ्कितुरभिप्रायः । ईश्वरप्रतिबिम्बत्वमात्रस्य तत्तद्विशिष्टशङ्कानिरासासामर्थ्यात्तत्तदौपयिकविशेषणप्रदर्शनार्थं स्वयमुपादानमिति परिहाराभिप्रायः । नन्वीश्वरस्य नित्यसर्वगतत्वादिविशेषणवत्त्वादस्त्वच्छेद्यत्वादिकम् । जीवस्य तु कुतः । तथाविधेश्वरप्रतिबिम्बत्वादिति चेन्न । यो यस्य प्रतिबिम्बः स तद्धर्मेति नियमाभावादित्यत आह— **युक्ताश्चेति** ।

*भा०दी०*— **इदमुदितमिति** । 'अच्छेद्योयऽमि'त्यादिकमुदितमित्यर्थः । **कृत्यस्येति** । तृतीयस्याद्यपादे 'कृत्याः प्राक् ण्वुल' इति सूत्रे ण्वुल्तयावित्यतः प्राक्तव्यतव्यानीयर इत्यारभ्य विहितप्रत्ययानां कृत्यसंज्ञोक्तेः तन्मध्ये विहितस्य "ऋहलोर्ण्यत्" इति विहितण्यप्रत्ययस्य कृत्यसंज्ञस्य "अर्हे कृत्यतृचश्च" इति सूत्रेण कृत्यसंज्ञकण्यत्प्रत्ययस्याहार्थे स्मरणादित्यर्थः । श्लोकयोः पौर्वापर्यव्यत्यासः स्यादिति शङ्कते **एवं तर्हीति** । वर्तमानेत्यादि भाष्योक्तावतारिकापक्षे श्लोकयोरुत्तराधरभावः अच्छेद्य इत्यस्य पूर्वत्वं नैनमित्यस्य पश्चात्तनत्वं स्यादित्यर्थः । अच्छेद्य इति श्लोकोक्तार्थैनैनमिति श्लोकार्थस्य हेतुत्वादिति भावः । **शङ्कामनूद्येति** । वर्तमाननिषेधादिनेति भावः । **स्वाभिप्रायेणेति** । छेदादियोग्यतैव नेति वक्ष्याम इति कृष्णाभिप्रायेणेत्यर्थः । **भावप्रधान इति** । भाष्ये इति ज्ञेयम् । **मन्त्रवर्ण इति** । अजो नित्य इति प्रागुक्तमन्त्रवर्णः । **नैमित्तिकेति** । शस्त्रोदितनिमित्तिकेत्यर्थः । **उत्तरत्रेति** । ऐक्योक्तावित्युत्तरवाक्यव्याख्यावसरे इत्यादिकः प्राचीनो ग्रन्थः इत्यादिनेति भावः । अस्याप्युत्तरत्रोपयोगः इत्येतदपि तत्रैव बोध्यम् । **विशिष्टस्येति** । सर्वगतोऽयं नित्य इति सर्वगतत्वविशेषणयुक्तस्य यन्नित्यत्वविशेषणं तत् । **अजो नित्य** इत्यत्र नित्य इत्यनेन पौनरुक्त्येन विशेष्येण अनन्वितं सत् सन्निहितसर्वगतत्ववानित्यर्थः । विशेष्या-

नन्वयमेव दर्शयति **द्वयमित्यादिना** । **बहुवारमिति** । 'अनाशिनोऽप्रमेयस्ये'त्यत्र 'अजोनित्य' इत्यत्र 'नित्यः सर्वगत' इत्यत्र चोक्तेरिति भावः । **ईश्वरैक्यविषय इति** । ईश्वरसारूप्यरूपगौणविषय इत्यर्थः । **ऐक्यमात्रस्य** सारूप्यरूपगौणैक्यमात्रस्येत्यर्थः । **विशिष्टभेद इति** । भिन्नतनविशेषणोपेते स्वरप्रतिबिम्बोक्तेर्न पुनरुक्तिरित्यर्थः । **इत्यादिक इति** । शाश्वतस्थाणुपदयोरर्थभेदोक्तिपरः नित्य-पदस्य सर्वगतत्वविशेषणोक्तिपरो भाष्यग्रन्थ इत्यर्थः । **तत्तत्साध्यसिद्धय इति** । 'अनाशिनो-ऽप्रमेयस्य' इत्यत्र सर्वगतेश्वरप्रतिबिम्बत्वान्न बिम्बोपाधिसन्निधिनाशान्नाश इति 'अजो नित्य' इत्यत्र बिम्बोत्पत्तिनाशनिमित्तोत्पत्तिनाशौ न स्तः । **नित्येश्वरप्रतिबिम्बत्वादिति** । नित्यः सर्वगत इत्यत्र तु सर्वगतत्वस्य हरेरनित्यत्वे बिम्बोपाधिसन्निधाननाशाच्छेददाहादिकृतनाशो जीवस्य नास्ति नित्य-सर्वगतत्वविशिष्टेश्वरप्रतिबिम्बत्वात् इति भिन्नभिन्नसाध्यसिद्धय इत्यर्थः । तदिति पुनः पुनरुपन्यासे दोषो नास्तीत्येतत् । कस्य हेतोरिति प्रश्नस्योत्तरमाह **प्रमेयभेदादिति** । अतः दोषाभावादित्यर्थः ।

*भा०र०*— "वर्तमाने लट्" इत्यनुशासनादाह **वर्तमानस्यैवेति** । ननूत्तरत्रेतिवत् पूर्वत्रेति किमिति न शङ्क्यत इत्यत आह **इदानीं दृश्यमानत्वेनेति** । **इदम्** "अच्छेद्योऽयम्" इत्यादिकम् । अनेन छेदाद्ययोग्यत्वं कथं लभ्यत इत्यत आह **अर्हेति** । कृत्यसञ्ज्ञकाः प्रत्ययास्तृच्प्रत्ययश्चार्हार्थे भवन्तीति सूत्रेण कृत्यप्रत्ययस्यार्हार्थे विधानादत्र च छिदेः "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययान्तत्वाद् दहेश्च "आसुयुवपिरपिलपित्रपि च मश्चः" इति सूत्रे अनुक्तसमुच्चयार्थकचकारविहितण्यत्प्रत्यया-न्तत्वादेवमन्यस्मादपि कृत्यप्रत्यये छेद्यादिशब्दैश्छेदादियोग्यताभाव एव ज्ञायत इत्यर्थः । "वर्तमानापदेशेन" इति भाष्यस्य वर्तमानार्थकलट्प्रत्ययान्ततिङ्पदेन "नैनं छिन्दन्ति" इतीत्यादि-केनेत्यर्थः । **प्रसक्तौ** छेदादि कारणस्य । **एवं तर्हि** साध्यहेतुसमर्पकत्वे । **औत्तराधर्यप्रसङ्गः** 'अच्छेद्यः' इत्यस्य पूर्वत्वं 'नैनम्' इत्यस्य पश्चात्तनत्वं स्यादित्यर्थः । भाष्यकारीयगमनिकारीत्या 'अच्छेद्यः' इति श्लोकार्थे 'नैनम्' इति श्लोकार्थस्य हेतुत्वप्रत्यायनादिति भावः । **उपोद्घातेति** । अच्छेद्य इत्यनेन छेदाद्ययोग्यत्वरूपं साध्यं विवक्षुस्तत्र हेतुत्वेन वर्तमानछेदाद्यदर्शनं 'नैनम्' इत्यनेन उच्यत इति प्रकृतसिद्ध्युपयोगिवर्णनरूपोपोद्घाताभिप्रायेणेत्यर्थः । एवं तर्हि "वर्तमाननिषेधात् स्यादुत्तरत्र" इति शङ्काभाष्यानवतारः स्यादित्यत आह **अभिप्रायमजानानस्येति** । उपोद्घातसङ्गत्या कथनाभिप्रायम् । **शङ्काम्** उक्तभाष्योक्ताम् । **अवतारस्येति** । यदि भगवता छेदाद्ययोग्यत्व-प्रतिपादनाय हेतुरनेनोच्यत इत्यभिप्रायं पूर्वपक्षी जानीयात् तदा वर्तमानेत्यादिशङ्कां न कुर्यात् । कृतवांश्चैताम् । तेन ज्ञायते साधनसाध्यकथनाभिप्रायं न जानातीति । अत इमां शङ्कां वर्तमाने-त्यादिना अनूद्य "इत्यत आह अच्छेद्योऽयम्" इत्यवतारितत्वाद् भाष्यकारेणेत्यर्थः ।

ननु भाष्यकारं प्रत्यौत्तराधर्यप्रसङ्ग इति शङ्कानवतारेऽपि भगवन्तं गीताकारं प्रति स्यादेवोक्तशङ्केत्यत आह **स्वाभिप्रायेण त्विति** । भगवद्गीताकाराभिप्रायेण त्वित्यर्थः ॥ **अवतार इति** । अच्छेद्य इति श्लोके आत्मनश्छेदाद्ययोग्यत्वरूपसाध्यं वक्तुं तत्रोपोद्घातसङ्गत्योपपादकमाह भगवान्नच्छेद्य इत्यवतारिका देयेत्यर्थः । ननु वर्तमानादर्शनादिति छेदायोग्यत्वे हेतोरुक्तत्वात् कुतोऽयोग्यतेति पुनर्हेतुशङ्का नावकाशमश्नुत इत्यतोऽभिप्रायमाह **वर्तमानेति** । **कदाचिदिति** । संसारदशायामननुभूयमानस्यापि स्वरूपानन्दस्य मुक्तिदशायामनुभवदर्शनादित्यर्थः । 'नित्यसर्वगतादि' इति भाष्ये आदिशब्देन स्थाणुरचल इत्यादिविशेषणग्रहः । नित्यसर्वगतेत्यादिकं जीवेऽसम्भावितमिति कृतचोद्यं परिहर्तुं भाष्यभावमाह **ईश्वरस्येति** । **एवम्भूतस्य** नित्यसर्वगतत्वादिविशेषणविशिष्टस्य । **छेदादिकं** छेदादिकर्मताऽर्हत्वम् ।

अयमाशयः । 'अच्छेद्योऽयम्' इत्यादौ कृत्यप्रत्ययो हेतुकर्मणि । अर्हमात्रार्थत्वे "तयोरेव कृत्यर्थखलर्थाः" इत्यवधारणविरोधः । कर्म च चतुर्विधम् "उत्पाद्यं च विकार्यं च प्राप्यं संस्कार्यमेव च" इति । तत्र न तावदीशस्य प्राप्यत्वरूपं कर्मत्वम् । नित्यसर्वगतत्वेन छिदिक्रियाजन्यप्राप्त्याश्रयत्वरूपप्राप्यकर्मत्वायोगात् । नापि विकार्यत्वरूपं छेदादिकर्मत्वम् । ईश्वरस्य नैमित्तिकान्यथाभावशून्यत्वरूपस्थाणुत्ववत्त्वेन सुवर्णं कुण्डलं करोतीतिवत् क्रियाजन्यविकाराश्रयत्वाभावात् । नापि संस्कार्यत्वरूपं कर्मत्वम् । अचलत्वात् । सक्रियस्यैव दर्पणादेस्संस्कार्यत्वदर्शनात् । नाप्युत्पाद्यत्वरूपं कर्मत्वम् । त्रैकालिकत्वरूपसनातनत्वेन घटं करोतीतिवत् प्रागसतः सत्तायोगित्वरूपस्य तस्यायोगात् । न केवलं यावद्विशेषाभावमात्रेण छेदादिकर्मत्वसामान्याभावः । किन्तु तद्ग्राहकप्रमाणाभावादपि । न तावत् प्रत्यक्षमीश्वरस्य छेदादिकर्मत्वे मानम् । अव्यक्तत्वात् । नाप्यनुमानम् । अतर्क्यत्वरूपाचिन्त्यत्वात् । नाप्यागमः । अविकार्यत्वेन वेदवैदिकग्रन्थैरुच्यमानत्वात् । एवं चेश्वरस्य छेदादिकर्मत्वं न सम्भवतीति सिद्धमिति । **अत इति** । **तत्प्रतिबिम्बस्यापि** तदधीनसारूप्यस्यापि । तेन सर्वगतस्य प्रतिबिम्बासम्भव इति चोद्यमनवकाशम् । स्थाणुरितीत्यनन्तरमीश्वरविशेषणमित्यनुवर्त्य "उच्यते अतः पुनरुक्तिरित्यतः" इति पूरणीयम् । **मन्त्रवर्ण इति** । ननु मन्त्रवर्णस्थपदेन गीतापदस्यैकार्थत्वं गुण एव । मन्त्रवर्णस्योक्तार्थसम्मतित्वात् । तत् कथं पुनरुक्तिशङ्केति चेन्न । एकत्रोक्तस्येश्वरप्रतिबिम्बत्वस्यान्यत्रापि हेतुत्वेन शिष्यैरेव ज्ञातुं शक्यत्वात् किं पुनर्वचनेनेत्याशयस्याऽकर एव वक्ष्यमाणत्वात् ।

***भावबोधकृतस्तु*** — नात्र मन्त्रवर्णगतशाश्वतपदेन स्थाणुपदस्यागतार्थत्वायार्थभेदकथने तात्पर्यम् । किन्तूपाधिबिम्बसन्निधिनाशप्रयुक्तनाशशङ्कापरिहाराय पूर्वमप्रमेयस्येति यद् विशेषणमुक्तं

तेन मन्त्रवर्णगतं शाश्वतपदं समानार्थम् । तेनाप्युपाधिबिम्बसन्निधिनाशप्रयुक्तनाशशङ्काया एव परिहारात् । यथोक्तम् ''शाश्वत इत्यनेनोपाधिबिम्बसन्निधिजनननाशनिमित्तौ जन्मनाशौ न स्त इत्युक्तम्'' इति । अतो यस्मिन् गीतागताप्रमेयपदे मन्त्रवर्णगतं शाश्वतपदं सम्मतिरूपं तेनाप्रमेयपदेन स्थाणुपदस्यागतार्थत्वायार्थभेदवर्णने तात्पर्यम् । भाष्ये शाश्वतपदोपादानं तु स्थाणुपदशाश्वतपदयोः स्पष्टमेकार्थत्वप्रतिभासाभिप्रायेणेति युक्ते शङ्कासमाधाने इत्याहुः । एवमेवाजो नित्य इति नित्यत्वमीश्वरस्य प्रागुक्तमिति वक्ष्यमाणटीकावाक्यं व्याख्येयमित्यप्याहुः ।

केचित्तु उक्तार्थे हि सम्मतिर्मन्त्रवर्णः, न तु वक्ष्यमाणार्थेऽपि । अत्र मन्त्रवर्ण इति भाषणात् । तथा च मन्त्रवर्णस्यापि स्ववचनायितत्वात् तत्रोक्तशाश्वतपदेन स्थाणुपदस्य पौनरुक्त्यशङ्का युक्तेत्याहुः । **सामान्येति** । न जायते अजो नित्य इति सामान्यप्रकरणत्वादित्यर्थः । **नैमित्तिकेति** । ''नैनं छिन्दन्ति'' इत्यादिनिमित्तनिषेधप्रकरणस्थत्वादित्यर्थः ।

नन्वीश्वरप्रतिबिम्बत्वमनेकसाध्यसिद्धये हेतुत्वेन गीतायामुक्तम् । अतः प्रमेयभेदेन पुनरुक्तिचोद्यानवकाशादर्थभेदकथनमयुक्तमित्यत आह **अस्यार्थभेदकथनस्येति** । उत्तरत्र 'ऐक्योक्तावपि' इत्युत्तरवाक्यव्याख्यावसरे । नित्यत्वस्य सर्वगतत्वविशेषणत्वे नित्यसर्वगत इति समस्तपदं स्यात् । न ह्येवमस्तीत्यत आह **भिन्नपदोक्तमपीति** । **विशिष्टस्येति** । सर्वगतो नित्य इति सर्वगतत्वविशेषणयुक्तस्य यन्नित्यत्वविशेषणं तत् ''नित्यस्योक्ताः'', ''अविनाशिनं नित्यम्'', ''अजो नित्यः'' इत्यादिभिरपौनरुक्त्याय विशेष्येनान्वितं सद् विशेषणं सर्वगतत्वमुपसङ्क्रामतीति नित्यसर्वगतत्ववानित्यर्थः । ननु नित्यत्वं विशेषणमुपसङ्क्रामति चेत् स्थाणुत्वं कुतो नोपसङ्क्रमेत् । अविशेषादित्यत आह **सन्निधानाच्चेति** । नित्यः सर्वगत इति शब्दसन्निधानादित्यर्थः । **द्वयं** नित्यत्वं सर्वगत्वं च । ''अस्याप्युत्तरत्र'' इति वाक्यं प्राग्वदेवावतार्य व्याख्येयम् । **बहुवारमिति** । तथा च भाष्यम् ''अप्रमेयेश्वरसरूपत्वात्'', ''अजादिलक्षणेश्वरसरूपत्वात्'', ''नित्यसर्वगतादिविशेषणेश्वरसरूपत्वात्'' इति । 'ऐक्ये' इति भाष्ये विषयसप्तमीति दर्शयितुं विषय इत्युक्तम् । जीवस्य ब्रह्मणाऽत्यन्तभिन्नत्वात् कथमैक्योक्तावित्याद्युक्तिरित्यत आह **ऐक्यमत्रेति** । तत्र प्रतिबिम्बत्वरूपं सादृश्यमित्यर्थः । तथा च प्राचीनटीका ''ऐक्यं सारूप्यम्'' इति । भाष्ये त्रयोदशे ''जीवस्य हीश्वरैक्यमिति ध्येयम् । तदपि न निरुपाधिकम् । अतो न प्रतिबिम्बत्वविरोध्यैक्यम्'' इति च । ईश्वरविशेषणानां भिन्नत्वेऽपि तत्प्रतिबिम्बकत्वमेकमेवेत्यत आह **विशेषणेति** । ''अजादिलक्षणेश्वरसरूपत्वात्'' इत्यादिरूपेण विशिष्टहेतुरपि भिन्न इत्यर्थः ।

विशेषणावच्छिन्नविशिष्टहेतुभेद इत्येतदपि नास्ति । शाश्वतस्थाणुशब्दयोः एकार्थत्वादिति शङ्कते **एतदपीति** । भिन्नभिन्नविशेषणावच्छिन्नमपीत्यर्थः । आदिशब्देन "अजो नित्यः" इति नित्यत्वमीश्वरस्य प्रागुक्तम् । "अप्रमेयस्य" इति सर्वगतत्वं च । अतस्ताभ्यां पुनरुक्तिरिति शङ्कासङ्ग्रहः । इत्यादिक इत्यत्र "नित्यत्वं सर्वगतत्वविशेषणम्" इति ग्रन्थ आदिपदार्थः । प्राचीनो ग्रन्थ इत्युक्त्या अस्यार्थभेदकथनस्योत्तरत्रोपयोगं वक्ष्याम इत्यस्याप्युत्तरत्रोपयोग इत्युक्त उपयोगः प्रादर्शीति ज्ञातव्यम् । यच्छङ्कानिरासाय प्राचीनग्रन्थः सा शङ्का कर्तुमनुचितेति शङ्कते **नन्विति** ॥ **तत्तत्साध्येति** । छेदाद्ययोग्यत्वरूपसाध्येत्यर्थः ॥ **एकस्येति** । अन्यथा "इदं वाच्यं ज्ञेयत्वात्", "इदं सत् ज्ञेयत्वात्" इत्यादिप्रयोगो न स्यादिति भावः ।

**एकत्र** उपाधिबिम्बसन्निधिनाशनिमित्तनाशशून्यत्वे । **उक्तमीश्वरप्रतिबिम्बत्वमिति** । नायमात्मा घटादेः कस्यचित् प्रतिबिम्बः किन्त्वीश्वरस्य । स चाप्रमेयः । सर्वगत इति हेतुत्वेनोक्तमीश्वरप्रतिबिम्बत्वमेव । **अन्यत्रापि** छेदाद्ययोग्यत्वादिरूपसाध्येऽपि । हेतुत्वेन शिष्यैरेव ज्ञायतामित्यर्थः । किमीश्वरप्रतिबिम्बत्वमात्रं हेतुः ? किं वा अप्रमेयेश्वरप्रतिबिम्बत्वं नित्यसर्वगतेश्वरप्रतिबिम्बत्वमित्यादिरूपं विशिष्टम् ? आद्ये विशिष्टशङ्कानिरासासामर्थ्यम् । अप्रयोजकत्वात् । द्वितीये हेतुविशेषणप्रदर्शनार्थं तानि तान्युपादातव्यानीति मनसि निधायाऽह **ईश्वरप्रतिबिम्बत्वमात्रस्येत्यादि** । अच्छेद्यत्वादिकम् अस्त्विति शेषः । **तथाविधेति** । नित्यसर्वगतत्वादिविशेषणकेत्यर्थः । तद्धर्मेत्यत्र "धर्मादनिच्केवलात्" इत्यनिच्प्रत्ययः । **नियमेति** । मुखप्रतिबिम्बस्यापि प्रतिमुखस्य मुखगतावदातत्वादिधर्माधिकरणतयाऽदर्शनादिति भावः ।

**भाष्यम्**

## युक्ताश्च बिम्बधर्माः प्रतिबिम्बेऽविरोधे ।

***प०टी०***— नन्वीशस्य सर्वगतत्वाच्छेद्यादिमत्त्वेऽपि न जीवस्याच्छेद्यत्वादि । सर्वगतत्वाभावादित्यत आह **युक्ताश्चेति** ।

***न०टी०***— ननु प्रतिबिम्बे बिम्बधर्मसाकल्यादर्शनात् स्थाणुत्वाद्यपि न स्यात् । न चेत् सर्वगतत्वाद्यपि स्यात् । अतः सारूप्यमात्रस्य पूर्वमेवोक्तत्वात् पुनरुक्तिस्तदवस्थेत्यत आह **युक्ता इति** । मा भूत् बिम्बधर्मसाकल्यं प्रतिबिम्बे । तथाऽप्यविरुद्धधर्मान्तरस्वीकाराय पुनरुक्तिरित्यदोषः ।

***प्र०दी०***— बिम्बधर्माः बिम्बसमानधर्माः । यो यत्प्रतिबिम्बः सोऽसति विरोधे तद्धर्मेति व्याप्तिरत्राभिप्रेतेति भावः ।

*भा०र०*— सिद्धान्ते बिम्बप्रतिबिम्बयोरत्यन्तभेदेन बिम्बधर्माणां प्रतिबिम्बनिष्ठत्वमयुक्तमित्यत आह **बिम्बसमानेति** । बिम्बधर्मसमानधर्मा इत्यर्थः । नन्वेतदपि नास्ति । बिम्बत्वादिसमानधर्माणां प्रतिबिम्बेऽभावादिति शङ्कां निरसितुमविरोध इति भाष्यार्थमाह **असति विरोध इति** । अवदातत्वादेः प्रत्यक्षविरोधान्न प्रतिबिम्बधर्मत्वमिति भावः ।

**भाष्यम्**

**तत्ता च 'रूपं रूपं प्रतिरूपो बभूव', 'आभास एव च' (२-३-१८) इत्यादिश्रुतिस्मृतिसिद्धा । न च अंशत्वविरोधः । तस्यैवांशत्वात् । न च एक रूपैवांशता । प्रमाणं च उभयविधवचनमेव । न च अंशस्य प्रतिबिम्बत्वं कल्प्यम् । गाध्यादिष्वपि अंशबाहुल्यदृष्टेः इतरत्र अदृष्टेः ।**

*प०टी०*— जीवस्येशप्रतिबिम्बतैव कुतः ? इत्यत आह **तत्ता चेति** । जीवस्य प्रतिबिम्बत्वे 'अंशो नाना' इत्युक्तांशत्वाविरोध इत्यत आह **न चेति** । तस्यैव प्रतिबिम्बभूतस्यैवेत्यर्थः । कथमेकस्यैवैकदेशत्वं प्रतिबिम्बत्वं च ? इत्यत आह **न चेति** । तदीयत्वमेव जीवस्येश्वरांशत्वमित्यर्थः । कुतोऽयमंशत्वश्रुतेरर्थः ? इत्यत आह **प्रमाणं चेति** । वचनद्वयान्यथानुपपत्त्यैव तत्सिद्धमित्यर्थः । यदीशप्रतिबिम्बत्वमविहायैव जीवोंऽशस्तर्हीन्द्रांशगाध्यादीनां प्रतिबिम्बता च किं न स्यात् ? इत्यत आह **न चेति** । गाध्यादिष्वंशेषु नरवानरादि............ विधरूपत्वदृष्टेः **इतरत्र** अंशिन्यदृष्टेर्न बिम्बप्रतिबिम्बभावस्तेषामित्यर्थः । तर्हि जीवेशयोरपि न बिम्बप्रतिबिम्बभावो वैरूप्यादेवेत्यत आह **इतरत्रेति** । इतरत्र जीवेशयोरैक्यस्य प्रमाणैरदृष्टेर्युक्तं बिम्बप्रतिबिम्बत्वमित्यर्थः ।

*न०टी०*— ननु वादिविप्रतिपत्तेः प्रतिबिम्बतैव कुतो जीवस्य ? इत्यत आह **तत्तेति** । भगवतो रूपं प्रति जीवाख्यः प्रतिबिम्बो बभूवेति 'सदेव सोम्येदमग्र आसीत्' इतिवदनादित्वार्थे । ननु 'अंशो नानाव्यपदेशात्' 'ममैवांशः' इत्यादावंशत्वोक्तेर्जीवस्य न प्रतिबिम्बतेत्यत आह **न च इति** । प्रतिबिम्बस्यैव जीवस्य भगवदेकांशत्वात् नांशत्वविरोध इति भावः । ननु देहांशस्य हस्तादेर्न देहावयवसाकल्यम् । देहप्रतिबिम्बस्य तु तत्साकल्यात् नांशतेत्यत आह **न चैकरूपेति** । न च अस्माभिः प्रतिबिम्बस्यांशत्वं कल्प्यते । येनेतरांशत्ववैरूप्याद्विरुद्ध्येत । किन्तु वचनादेवाङ्गीक्रियत इत्याह **प्रमाणं चेति** । ननु भगवदंशानां ब्रह्मादीनां भगवत्प्रतिबिम्बत्ववदिन्द्राद्यंशानां गाध्यादीनामपि तत्तत्प्रतिबिम्बत्वं कल्प्यताम् । अविशेषादित्यत आह **न चेति** । गाध्यादिषु जीवांशेषु केषाञ्चिदंशानां नरवानराद्याकारवैचित्र्यदर्शनात् न तेषां प्रतिबिम्बत्वम् । न ह्येकवस्तुप्रतिबिम्बानामाकार-

वैचित्र्यं मिथः । न चायमाकारभेदः शरीरस्यैव नात्मन इति वाच्यम् । 'स एकधा भवति, त्रिधा भवति', 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिषु मुक्तावप्येकैकस्य विचित्रानेकाकारदर्शनात् । न च तत्रापि शरीरोपाधिक इति वाच्यम् । भगवत्प्रसादात् सत्यकामानां तेषां स्वरूपेणैकाकारोपपत्तावौपाधिककल्पनायाः क्लिष्टत्वात् । न चैवमेकबिम्बप्रतिबिम्बानां ब्रह्मादीनामाकारवैचित्र्यदृष्टिः । 'रूपं रूपम्' इत्यादि बिम्बभूतभगवद्रूपाणामनेकविधत्वावगमादित्यभिप्रायेणाह **इतरत्रेति** । बिम्बभूतानां भगवद्रूपाणां परस्परमानन्दसाम्येऽपि प्रतिबिम्बभूतानां ब्रह्मादीनामानन्दादिगुणतारतम्यमनाद्यविद्याकर्मवैचित्र्यादित्युक्तम् 'अदृष्टानियमात्' इत्यत्र । प्रतिबिम्बभूतानां ब्रह्मादीनामानन्दादिगुणतारतम्येऽपि तद्बिम्बभूतानां भगवद्रूपाणामानन्दादिसर्वगुणसाम्यमादित्यादिवदाधिक्यादित्युक्तं 'स्थानविशेषात् प्रकाशादिवत्' इत्यत्र । अतो नास्य तदधिकरणद्वयविरोध इत्येषा दिक् ।

*प्र०दी०*— स्यादिदं व्याख्यानं यदि जीवस्येश्वरप्रतिबिम्बता स्यात् । सैव कुतस्सिद्धेत्यत आह— **तत्ता चेति** ।

ननु जीवस्येश्वरप्रतिबिम्बत्वाङ्गीकारे 'अंशो नानाव्यपदेशात्' (ब्र.सू. २-३-४३) 'ममैवांशः' (भ.गी.१५) इत्यादिवाक्यसिद्धेन तदंशत्वेन विरोधः स्यात् । प्रतिबिम्बो हि बिम्बादत्यन्ताभिन्न इति केषाञ्चिन्मतम् । अत्यन्तभिन्न इत्यपरेषाम् । अंशस्तु तदेकदेशस्तेन भिन्नाभिन्नः । यथा पटांशस्तन्तुः पटेन । ततः पक्षद्वयेऽपि कथं न विरोध इत्यत आह— **न चेति** । जीवस्येश्वरप्रतिबिम्बत्वाङ्गीकारेऽपि न तदंशत्वविरोधः । कुत इत्यत आह— **तस्यैवेति** । प्रतिबिम्ब-त्वस्यैवांशशब्दप्रवृत्तिनिमित्तत्वात् ।

अयं भावः । अत्यन्तभिन्नस्य जीवस्य यदीश्वराधीनतत्सादृश्योपेतत्वं तत्प्रतिबिम्बत्वमुच्यते । अभेदमतस्य निराकरिष्यमाणत्वात् । तदेव तदंशत्वमिति कुतो विरोध इति । नन्वंशत्वं तदेकदेशत्वम् । तत्कथमुच्यते प्रतिबिम्बत्वमेवांशत्वमिति । तत्राह— **न च इति** । अंशताऽशशब्दप्रवृत्तिनिमित्तम् । न केवलमेकदेशत्वमंशशब्दप्रवृत्तिनिमित्तम् । अपि तु प्रतिबिम्बताऽपीति भावः । अस्तु नाम अनेकार्थत्वमंशशब्दस्य । तथापि 'अंशो नाना' (ब्र.सू. २-३-४३) इत्यादौ प्रतिबिम्बत्वमेवांशत्वमित्यत्र किं प्रमाणम् । तदेकदेशत्वं किं न स्यादित्यत आह— **प्रमाणं चेति** । जीवस्येश्वरप्रतिबिम्बत्वं तदंशत्वं च तावदुच्यते । न च परस्परविरुद्धः शास्त्रार्थो भवितुं युक्तः । तत्रानेकार्थस्यांशशब्दस्य विरुद्धार्थं परित्यज्यार्थान्तरं गृह्यत इत्यर्थापत्तिरेवात्र प्रमाणमिति भावः । स्यादेतत् । यथा प्रतिबिम्बत्वमेव तत्त्वमंशशब्दस्यापि तदेव प्रवृत्तिनिमित्तमिति वचनद्वयविरोधशान्त्यर्थं कल्प्यते तथैकदेशत्वमेव तत्त्वं प्रतिबिम्बशब्दस्यापि तदेव प्रवृत्तिनिमित्तमिति कुतो न कल्प्यम् । वचनद्वयविरोधस्यैवमपि शान्तेरित्यत आह— **न चेति** । अंशस्यांशत्वस्यैकदेशत्वस्य

प्रतिबिम्बत्वं प्रतिबिम्बशब्दप्रवृत्तिनिमित्तत्वं न कल्प्यम् । कुत इत्यत आह— **गाध्यादिष्विति** । गाध्यादिष्वंशशब्दाभिधेयेष्वंशत्वस्य बाहुरूप्यदृष्टेः । इतरत्र प्रतिबिम्बशब्दाभिधेयेषु सूर्यकादिषु प्रतिबिम्बत्वस्यानेकरूपत्वादृष्टेः ।

इदमुक्तं भवति । इन्द्रांशो गाधीत्युच्यते । तत्र विशेष एवांशशब्दस्य प्रवृत्तिनिमित्तम् । भेदाभेदादेः प्रमाणबाधितत्वात् । पटांशस्तन्तुरित्यत्रैकदेशत्वम् । सूर्यांशश्चक्षुरित्यत्रात्यन्तभिन्नस्य तदधीनसादृश्यम् । एवमंशशब्दोऽनेकार्थः प्रयोगेषु दृश्यते । तथा चोक्तं 'द्विरूपावंशकौ तस्य' इत्यादि । न चैवं प्रतिबिम्बशब्दस्यानेकं प्रवृत्तिनिमित्तं दृश्यते । तथा च सावकाशस्यांशशब्दस्य निरवकाशेन प्रतिबिम्बशब्देन बाधो युक्तः । न तु वैपरीत्यमिति ।

*भा०दी०*— **निराकरिष्यमाणत्वादिति** । बुद्धियुक्तय इति श्लोकव्याख्यावसर इति भावः । **ईश्वरप्रतिबिम्बत्वं तदंशत्वं चेति** । 'रूपं रूपमि'ति, 'ममैवांश' इति श्रुतिस्मृत्योः तथा **अंशो नानेति** । आभास एव चेति सूत्रयोश्चेति भावः । **बाहुल्येति** । अनेकविधत्वदृशेरित्यर्थः । **तथा चोक्तमिति** । आभास एव चेति सूत्रभाष्ये अंशशब्दस्य नानार्थत्वमुक्तमित्यर्थः । आदिपदेन "परमस्य हरेर्विभोः । प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव तु । प्रतिबिम्बांशकाः जीवाः प्रादुर्भावाः परे स्मृताः" इत्यस्य सङ्ग्रहः ।

*भा०र०*— **इदं व्याख्यानं** "नित्यसर्वगतादिविशेषणेश्वरसरूपत्वात्" इति व्याख्यानम् । "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादश" इति श्रुतेरयमर्थः— जीवसमुदायः परमेश्वरस्य रूपं रूपं प्रतिरूपो भूत्वा वर्तते । तद्बिम्बरूपस्य मुक्त्यर्थं साक्षात्कारविषयो भवति । स च परमेश्वरः स्वसामर्थ्येनानन्तजीवबिम्बरूपो ज्ञायते । "अस्यानन्तानि हरिनामकानि रूपाणि व्यूहशस्सन्ति" इति तत्त्वप्रकाशिकोक्तो द्रष्टव्यः । तथा च बृहदारण्यकभाष्यम् "भगवतो रूपं रूपं प्रति जीवाख्यः प्रतिबिम्बो बभूव" इति । ज्ञो जीवः आभास एव चेति । आभासः ईशप्रतिबिम्ब एव । मत्स्यादिस्तु न तथेति सूत्रार्थः ॥ **अंशो नानेति** । "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" इति सूत्रस्यायमर्थः । जीवः परस्यांशः नानाव्यपदेशात् । "नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्राता" इति श्रुतौ पितापुत्रत्वादिनानाप्रकारेण व्यपदेशात् । "नासावस्य कुतश्चन नैवांशो न सम्बन्धः" इत्यन्यथा च व्यपदेशात् । एके शाखिनः "ब्रह्मदाशाः ब्रह्मकितवाः ब्रह्मैवेमे दाशाः" इति जीवस्य ब्रह्माभेद-मधीयते । अन्यथा च "अन्यः परोऽन्यो जीवः" इति भेदं चाधीयते । एवं जीवेशयोः सम्बन्धा-सम्बन्धोक्त्यन्यथानुपपत्त्या भेदाभेदोक्त्यन्यथानुपपत्त्या च जीवस्य सर्वदा सर्वत्र सर्वैरपि प्रकारै-

रीश्वरोपजीवकत्वरूपभिन्नांशत्वं ततो न्यूनत्वे सति किञ्चित् तत्सदृशत्वरूपं गौणं भिन्नांशत्वं वा न त्वभेदः । **बाधादिति** । जीवलोके जीवदेहे जीवभूतो जीवाख्यश्चेतन इति स्मृत्यर्थः । अंशत्वेन प्रतिबिम्बत्वस्य विरोधमुपपादयति **प्रतिबिम्बो हीति** । **पक्षद्वयेऽपीति** । प्रतिबिम्बत्वाङ्गीकारे स्मृतिसिद्धांशत्वेन विरोधः, अंशत्वाङ्गीकारे सिद्धान्त्यभिमतप्रतिबिम्बत्वेन विरोध इत्यर्थः । प्रतिबिम्बस्य बिम्बादत्यन्ताभिन्नत्वपक्षे अत्यन्तभिन्नत्वपक्षे चेति वा । **कथं नेति** । भिन्नाभिन्नशरीरकांशशब्दार्थस्य प्रतिबिम्बत्वेन विरोधो दुर्वार इत्यर्थः । पक्षद्वयेऽपि कथं न विरोध इति कृतचोद्यस्य "प्रतिबिम्बत्वेन विरोधो दुर्वार इत्यर्थः । पक्षद्वयेऽपि कथं न विरोध इति कृतचोद्यस्य "प्रतिबिम्बत्वस्यैवांशशब्दप्रवृत्तिनिमित्तत्वात्" इत्युक्त्या कथं परिहार इत्यतो भाष्यभावमाह **अयं भाव इति** ।

ननु बिम्बेनात्यन्तभिन्नस्य जीवस्य कथं तदधीनसादृश्योपेतत्वरूपं प्रतिबिम्बत्वं घटत इत्यत आह **अभेदमतस्येति** । "न च प्रतिबिम्बस्य बिम्बैक्यं पश्यामः" इति भाष्ये निराकरिष्यमाणत्वादित्यर्थः । **तदंशत्वम्** ईश्वरांशत्वम्, स्मृतिविवक्षितमंशत्वमिति वा । **तत् कथमिति** । अत्यन्तभेदघटितं प्रतिबिम्बत्वम्, एकदेशत्वरूपमंशत्वं तु भेदाभेदघटितमिति कथमंशत्वप्रतिबिम्बत्वयोरविरोध इत्यर्थः । एवकारलब्धार्थमाह **न केवलमिति** । तथा चांशता एकरूपा एकदेशत्वरूपा, एकविधैव नेति भाष्यार्थ उक्तो भवति । "एकदेशत्वम्" इति टीकोक्तेः । "न चैकदेशतैवांशता" इति भाष्यं च केचित् पठन्ति । **अनेकार्थत्वम्** अनेकप्रवृत्तिनिमित्तकत्वम् । **प्रतिबिम्बत्वं** "रूपं रूपं प्रतिरूपो बभूव", "आभास एव च" इत्यादौ । **तदंशत्वम्** "अंशो नानाव्यपदेशात्", "ममैवांशो जीवलोके" इत्यादौ । **विरुद्धार्थं** तदेकदेशत्वरूपार्थम् । **अर्थान्तरं** प्रतिबिम्बत्वरूपम् । **तत्त्वम्** अंशत्वम् । **तदेव** एकदेशत्वमेव । प्रकृतोपयोगाय विवृणोति **एकदेशत्वस्येति** । **बाहुरूप्यदृष्टेः** अनेकविधत्वदृष्टेः । उक्तशङ्कापरिहारं स्फोरयितुं तात्पर्यमाह **इदमुक्तमिति** । विशेषः "भेदहीने त्वपर्यायशब्दान्तरनियामकः" इति लक्षितः । बाधितत्वादिति खण्डितत्वाभावादिति भावः । एकदेशत्वम् अंशशब्दप्रवृत्तिनिमित्तमिति वर्तते । चक्षुरत्र गोलकम् । **सादृश्यमित्ति** । "त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिका" इति श्रुतौ चक्षुषः सूर्यमण्डलसाम्योक्त्या तदंशत्वमुच्यते । अत एव तदभिमानोऽपि तदभिमान्यंशत्वम् । तस्य चापभ्रष्टस्य देहदोषलिप्सत्वादंश्यधीनप्रवृत्त्यादिमत्त्वमिति तत्त्वप्रकाशिकोक्तरीत्या तत्सादृश्यं द्रष्टव्यम् । **द्विरूपाविति** । "द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः । प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च । प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः ।" इति सूत्रभाष्य इत्यर्थः । आदिपदेन "स्वांशश्चाथो विभिन्नांश इति द्वेधांश इष्यते" इत्यादिप्रमाणसङ्ग्रहः । **एवमिति** । यथा अंशशब्दस्य प्रवृत्तिनिमित्तमनेकं तथेत्यर्थः । अंशशब्दस्य

"अंशो नानाव्यपदेशात्", "ममैवांशो जीवलोके जीवभूतः" इत्यादिवाक्यस्थस्य। प्रतिबिम्बशब्देन "रूपं रूपं प्रतिरूपः" इत्यादिवाक्यस्थेन।

*प्राचीनटीकायां तु*— ननु "अंशो नानाव्यपदेशात्", "ममैवांशो जीवलोके" इत्यादावंशत्वोक्तेर्जीवस्य न प्रतिबिम्बतेत्यत आह **न चेति**। प्रतिबिम्बस्यैव जीवस्य भगवदेकांशत्वान्नांशत्वविरोध इति भावः। ननु देहांशस्य हस्तादेः न देहावयवसाकल्यं, देहप्रतिबिम्बस्य तु तत्साकल्यान्नांशतेत्यत आह **न चैकरूपैवेति**। न चास्माभिः प्रतिबिम्बांशत्वं कल्प्यते।। येनेतरांशवैरूप्याद् विरुध्येत। किन्तु वचनादेवाङ्गीक्रियत इत्यत आह **प्रमाणं चेति**। ननु भगवदंशानां ब्रह्मादीनां भगवत्प्रतिबिम्बत्ववदिन्द्राद्यंशानां .गाध्यादीनामपि तत्तत्प्रतिबिम्बत्वं कल्प्यताम्, अविशेषादित्यत आह **न चेति**। गाध्यादिषु जीवांशेषु केषाञ्चिदंशानां नरवानराद्याकारवैचित्र्यदर्शनान्न तेषां प्रतिबिम्बत्वम्। न ह्येकवस्तुप्रतिबिम्बनामाकारवैचित्र्यं मिथः सम्भवति। न चायमाकारभेदः शरीरस्यैव नाऽत्मन इति वाच्यम्। "स एकधा भवति स त्रिधा भवति", "कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिषु मुक्तावप्येकस्य विचित्रानेकाकारदर्शनात्। न चात्रापि स शरीरोपाधिक इति वाच्यम्। भगवत्प्रसादात् सत्यकामानां तेषां स्वरूपेणैवानेकाकारोपपत्तावौपाधिकत्वोपगमायोगादित्यभिप्रायेण आह **इतरत्रेति**। इति व्याख्यातानीमानि वाक्यानि।

**भाष्यम्**

**स्थाणुत्वेऽपि 'ऐक्षत' इत्याद्यविरुद्धमीश्वरस्य। उभयविधवाक्यात्। अचिन्त्यशक्तेश्च। न च माययैकम्। 'त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते', 'न योगित्वादीश्वरत्वात्' 'चित्रं न चैतत् त्वयि कार्यकारणे' इत्याद्यैश्वर्येणैव विरुद्धधर्माविरोधोक्तेः।**

*प०टी०*— ननु कथमीश्वरस्य स्थाणुत्वम्? ईक्षत्यादिक्रियावाचित्वविरोधादित्यत आह **स्थाणुत्वेऽपीति**। प्रमाणवत्त्वेऽपि कथं घटते? ............... **अचिन्त्येति**। अचिन्त्यशक्त्या विरोधपरिहारादप्येकस्येक्षितृत्वादेर्मायिकत्वेनाविरोधाभिधानं वरमित्यत आह **न चेति**।

*न०टी०*—ननु कथमीशस्य स्थाणुत्वम्? तत्क्षणादावीक्षणादिक्रियावगतेरित्यत आह **स्थाणुत्वेऽपीति**। वाक्योक्तत्वादेव न विरुद्ध्यते। 'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात् क्वचित्' इति न्यायात्। इतश्चैवमित्याह **अचिन्त्यशक्तेरिति**। मायी तु भगवन्महिमानमसहमानः स्थाणु-

त्वमेव सत्यम्, ईक्षितृत्वादिकं मायामयम् इति मन्यते । तन्निराकरोति **न चेति** । लोकेऽनीशस्य कर्तृत्वं विरुद्धमपि त्वयि न विरुद्ध्यते । ईश्वर इति हेतुगर्भविशेषणम् । शेषगुणपूर्णत्वात् सर्व-सृष्ट्यादिकर्तृत्वाच्च सत्यम् । रूपं रूपान्तरं न च्यवतीति रूपाच्युतः । तथा त्वं न योगित्वात् । किन्त्वीश्वरत्वात् । यथा कश्चिदशक्तोऽपि कार्यविशेषमुपायतः साधयति समर्थोपासनया वा, तथा न । किन्तु स्वसामर्थ्येनेत्यर्थः । अप्रयासेन विश्वोद्भवादिकर्तृत्वं त्वयि न चित्रम् । कार्यकारण इति हेतुगर्भम् । कार्यमात्रस्वतन्त्रकारणत्वादित्यर्थः । एवं मानतः प्राप्तानां भगवद्धर्माणां लोकदृष्ट्या विरुद्धानां भगवदैश्वर्यघटितत्वस्यागमोक्तत्वात् न वृथाऽन्यतरमिथ्यात्वकल्पनं युक्तमित्यर्थः ।

*प्र०दी०*— ननु ईश्वरस्य स्थाणुत्वं न युज्यते । 'तदैक्षत', 'सोऽकामयत' (तै.ब्र.वल्ली) इत्यादिकर्तृत्वविरोधादित्यत आह— **स्थाणुत्वेऽपीति** । कुत इति चेत् किं द्वयोः परस्परपरिहारेण वृत्तिदर्शनाद्विरोधश्चोद्यते । उत सहा-दर्शनात् । नाद्यः । कर्तृत्वरहितस्य कस्याप्यदर्शनात् । न द्वितीय इत्याह— **उभयेति** । अन्यत्र सहादृष्टं स्थाणुत्वं कर्तृत्वं च कुतो भगवतीत्यत आह— **अचि-न्त्येति** ।

मायावादी तु कर्तृत्वस्थाणुत्वयोरेकं कर्तृत्वं मायामयम् । स्थाणुत्वं च पारमार्थिकम् । काल्प-निकपारमार्थिकयोश्च गगने नीलत्वनीरूपत्वयोरिव न विरोध इति विरोधसमाधानं मन्यते । तदसदित्याह— **न चेति** । कुत इत्यत आह— **त्वयीति** । 'ब्रह्मणि', 'ईश्वरे' इति सम्पूर्णैश्वर्ये । न योगित्वात् । किन्त्वीश्वरत्वात् । कार्यकारणे सकलकार्योत्पादनसामर्थ्योपेते । 'इत्यादि' इति क्रियाविशेषणम् । विरुद्धानामन्यत्र सहानवस्थितानां धर्माणां भगवत्यविरोधस्य सहावस्थानस्योक्तेः । तथा च बादरायणीयं मतमवलम्बमानस्यैवं विरोधसमाधानमसाम्प्रदायिकमिति भावः ।

*भा०दी०*— ब्रह्मणीश्वरयोरपौनरुक्त्यायावैयर्थ्याय वा द्वयोर्यौगिकत्वं नो विरोधः इत्यत्र हेतुगर्भविशेषणमिति भावेनाह **सम्पूर्णेति** । ऐश्वर्यविशेषणयुक्तेऽन्वीयमानत्वं ब्रह्मणीति विशेषणं त्वयि निर्विशेष्यान्वयेऽतिशयवन्नित्यत्ववत् । विशेषण एव चेतीति भावः । एवं विरोधसमाधानं कर्तृक-त्वस्य मायिकत्वेन समाधानमित्यर्थः ।

*भा०र०*— निष्क्रियत्वं स्थाणुत्वमित्यभिमानेन शङ्कते **नन्वीश्वरस्येति** । नैमित्तिकान्यथा-भावशून्यत्वं हि स्थाणुत्वं विवक्षितम् । तच्च क्रियावेशात्मककर्तृत्वावेदकश्रुतिविरुद्धमिति हृदयेन आह **इत्यादिकर्तृत्वेति** । इत्यादिश्रुत्यवगतकर्तृत्वेत्यर्थः । सिद्धान्ते कर्तुर्लकारवाच्यत्वाभ्युपगमेन ''लः कर्मणि च भावे चाकर्मकेभ्यः'' इति वैयाकरणैरभिहितत्वेन च 'ऐक्षत', 'अकामयत' इत्यादा-वाख्यातेनेक्षणादिकर्तृत्वस्य वक्तव्यत्वादिति भावः । **द्वयोः** स्थाणुत्वकर्तृत्वयोः ।

**कस्यापीति** । सर्वस्याप्यन्ततस्तिष्ठतीत्यादितिङन्तपदबोध्यत्वात् स्थाणुत्वे क्रियाराहित्यं वक्तव्यमित्यभिमानमात्रमिति भावः । उभयविधवाक्यं स्थाणुत्वप्रतिपादकं कर्तृत्वप्रतिपादकं च तस्मादिति भाष्यार्थः । प्राचीनटीकायां वाक्योक्तत्वादेव न विरुध्यते । "यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात् क्वचित्" इति न्यायात् । इतश्चैवमित्याह अचिन्त्यशक्तेरितीति व्याख्यानेऽपि भाष्ये चशब्दाभावात् स्वयमन्यथा योजयति **अन्यत्रेति । अचिन्त्येति** । अघटितघटनापटीयसी हि सा शक्तिरिति युक्तं तद्बलाद् विरुद्धधर्मसामानाधिकरण्यमिति भावः । त्वयीति विशेष्यस्याभिधानाद् ब्रह्मणीति विशेषणमेव । तच्च "विशिष्टस्य विशेषणं विशेषणमुपसङ्क्रामति" इत्युक्तरीत्या ऐश्वर्य-विशिष्टस्य विशेषणं भवदैश्वर्यविशेषणमिति भावेनाऽह **सम्पूर्णैश्वर्य इति** । सम्पूर्णम् ऐश्वर्यं यस्य तस्मिन्निति विग्रहः । हेत्वर्थगर्भं चेदम् । सम्पूर्णैश्वर्यशालित्वात् त्वयि उक्तधर्मद्वयं न विरुद्ध्यत इत्यर्थः । तथा त्वं न योगित्वात् किन्त्वीश्वरत्वात् । यथा कश्चिदशक्तोऽपि कार्यविशेषमुपायतः साधयति समर्थोपासनया वा, तथा न, किन्तु स्वसामर्थ्येनेति प्राचीनटीकानुसारेणाह **न योगित्वात् किन्त्वीश्वरत्वादिति** । अप्रयासेन विश्वोद्भवादिकर्तृत्वमपि त्वयि न चित्रमित्यत्र कार्यकारण इति हेतुगर्भं विशेषणमिति वक्तव्यम् । प्रयोजनान्तरादर्शनात् । तत्र च कारण इत्यनेनैव प्रतिसम्बन्धितया कार्यलाभेन तत्पदवैयर्थ्यात् । कारणत्वमात्रस्य व्यभिचारित्वेन हेतुत्वायोगाच्चेत्यतोऽभिप्रायमाह **सकलेति** । "कार्यमात्रस्वतन्त्रकारणत्वमर्थः" इति प्राचीनटीका ।

ननु "त्वयीश्वरे" इत्यादिवाक्यानां कारकत्वाद् बहुत्वाच्च तत्प्रतिपादके इत्यादिपदे तृतीया-बहुवचने इत्यादिभिरिति स्यादित्यत आह **क्रियाविशेषणमिति** । साधनं परित्यज्य धात्वर्थमात्रस्य विशेषणं हि क्रियाविशेषणमिति चतुर्थे वक्ष्यति । अत्र च उक्तिशब्दोक्तवचनक्रियाविशेषणम् । क्रियायाश्च सत्त्वरूपत्वेन करणत्वादिकारकशक्त्यनाश्रयत्वाद् बहुत्वादिसङ्ख्यानाश्रयत्वाच्च तद्विशेषणा-नामपि तथात्वेन तृतीयाबहुवचनाभावः । एकवचनं तु "क्रियाव्ययविशेषणानामेकवचनान्तत्वम्" इति वक्तव्यत्वात् । अत एव नपुंसकत्वमपीति भावः । विरुद्धानामविरोधोक्तिरसम्भाविनीत्यत आह **अन्यत्रेति** । विरुद्धधर्मयोरेकस्य मायिकत्वमपरस्य परमार्थत्वमिति यत् परकीयं समाधानं तत्र किं दूषणमुक्तमित्यतोऽभिप्रायमाह **तथा चेति** ।

**भाष्यम्**

**महातात्पर्याच्च । मोक्षो हि महापुरुषार्थः ।**

**"तत्रापि मोक्ष एवार्थः ।"**

"अन्तेषु रेमिरे धीराः न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमेतयोः ॥"

"पुण्यचितो लोकः क्षीयते"

इत्यादिश्रुतिस्मृतिभ्यः । स च विष्णुप्रसादादेव सिद्ध्यति ।

'वासुदेवमनाराध्य को मोक्षं समवाप्नुयात्',

'तुष्टे तु तत्र किमलभ्यमनन्त ईशे',

'तत्प्रसादादवाप्नोषि परां सिद्धिं न संशयः',

'येषां स एव भगवान् दययेदनन्तः
सर्वात्मनाश्रितपदो यदि निर्व्यलीकम् ।
ते वै विदन्त्यतितरन्ति च देवमायां
नैषां ममाहमिति धीः श्वसृगालभक्ष्ये ॥'

—(भागवतम् २-७-४२)

'तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते' ।,

'ऋते यदस्मिन् भव ईश जीवाः
तापत्रयेणोपहता न शर्म ।
आत्मन् लभन्ते भगवन् तवाङ्घ्रि-
च्छायांश विद्यामत आश्रयेम ॥',

—(भागवतम् ३-६-१८)

'ऋते भवत्प्रसादाद्धि कस्य मोक्षो भवेदिह'

'तमेवं विद्वान्'

इत्यादि श्रुतिस्मृतिभ्यः । स च उत्कर्षज्ञानादेव भवति । लोकप्रसिद्धेः । लोकप्रसिद्धमविरुद्धमत्राप्यङ्गीकार्यम् ।

*प०टी०*— इतश्च नेशक्रियादेर्मायिकत्वमित्याह **महातात्पर्याच्चेति** । ................त्यर्थः । स चेशप्रसादात्, स चोत्कर्षज्ञानात्, अतो जीवमोक्षार्थं प्रवर्तमानवेदस्य भगवदुत्कर्षे महातात्पर्यम् । तथा च तदुत्कर्षस्य मायिकत्वोक्तौ तद्विरोध इत्यर्थः । मोक्षस्य परमपुरुषार्थत्वमुपपादयति **मोक्षो हीत्यादिना** । नन्वीश्वरस्यालौकिकत्वात् कथं तत्प्रसादो लोकवदुत्कर्षज्ञानात् ? इत्यत आह **लोकेति** ।

*न०टी०*— इतोऽपि न युक्तमित्याह **महातात्पर्याच्चेति** । मोक्षो हि महापुरुषार्थः । स च विष्णुप्रसादादेव सिद्ध्यति । तत्प्रसादश्च तद्गुणोत्कर्षज्ञानादेव विशेषतः । अतस्तद्गुणोत्कर्ष एव महातात्पर्यमागमानाम् । यत्रैवं महातात्पर्यमागमानां तस्यैव मिथ्यात्वकल्पनमतिकष्टमिति । तत्र तावत् मोक्षस्य महापुरुषार्थत्वमागमैः साधयति **मोक्षो हीति** । धर्मादिमोक्षान्तानां धर्ममोक्षावन्तौ, तयोः । प्रतिपुरुषबहुवचनम् । न चैतावता धर्मस्य मोक्षसामर्थ्यम्, अनित्यत्वादिति भावेनाह **पुण्येति** । मोक्षस्य विष्णुप्रसादसाध्यत्वे सर्वकर्मदुर्दर्शनविप्रतिपत्तेर्ब्रह्मागमैस्तत्साधयति **स चेति** । ननु 'तमेवम्' इत्यनेन तज्ज्ञानात् मोक्षः प्रतीयते, न तत्प्रसादादिति चेत्, उच्यते । एवम् उक्तप्रकारेण ज्ञात्वेत्यवगम्यते । तत्प्रकारपर्यालोचनायां 'सहस्रशीर्षा' इत्यारभ्य 'अत्यतिष्ठद्दशाङ्गुलम्' 'उतामृतत्वस्येशानः' 'एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः', 'तस्माद्विराळजायत', 'वेदाहमेतं पुरुषं महान्तम्' इत्यादिनोत्कृष्टत्वेन ज्ञात्वेत्यवगम्यते । उत्कर्षज्ञानं च लोकप्रसिद्धेः प्रसादमेव जनयति । प्रसाद एव पुरुषार्थः । एवमेतन्निर्णयस्योत्तरभाष्यापेक्षत्वाच्छ्रुतिमप्येतां स्मृतीनामन्त उदाहृत तच्छिष्टत्वेनोत्कर्षज्ञानसाध्यत्वं प्रसादस्याह **स चोत्कर्षज्ञानादिति** । नन्वलोकसिद्धत्वाद्विष्णोः कथं तत्प्रसादो लोकवत् सिद्ध्येत् ? इत्यत आह **लोकसिद्धमिति** ।

*प्र०दी०*— इतश्च तदयुक्तमित्याह— **महातात्पर्याच्चेति** । सकलवेदानां परमेश्वरगुणोत्कर्षे महातात्पर्यम् । तत्रेक्षितृत्वादीनां मिथ्यात्वकल्पने तद्विरोधः स्यादित्यर्थः । समस्तवेदानां भगवद्गुणोत्कर्षे महातात्पर्यमित्येतदेव कुत इति चेत् । उच्यते । यस्य हि शास्त्रस्य यत्प्रयोजनं तद्यज्ज्ञानाद्भवति स तस्य विषय इति नियमः । अन्यथा विषयप्रयोजनयोः सम्बन्धो न स्यात् । तथा च तत्र प्रेक्षावतां प्रवृत्तिर्न भवेत् । वेदस्य च मोक्षः प्रयोजनम् । स च भगवद्गुणोत्कर्षज्ञानादेव भवतीति तत्रैव तस्य महातात्पर्यं युक्तमिति प्रतिपादयिष्यन्, सर्ववेदानां मोक्षः प्रयोजनमित्येवासिद्धम् । 'न स्वर्गादिः फलान्तरं' इति कैश्चिदङ्गीकृतत्वादित्यतः तत्तावत् साधयति— **मोक्षो हीति** । वेदो हि महच्छास्त्रम् । 'वेदशास्त्रात्परं नास्ति' इति वचनात् । तस्य च महापुरुषार्थेनैव प्रयोजनेन भवितुं युक्तम् । मोक्षश्च महापुरुषार्थः । अतः स एव तस्य प्रयोजनमिति भावः । मोक्षस्य महापुरुषार्थत्वं

कुत इत्यत आह— **तत्रापीति** । पुरुषार्थेष्वपि । अत्र एवेति निर्धारणेन महत्त्वं गम्यते । अन्तेषु धर्ममोक्षेषु । मध्येष्वर्थकामेषु । अन्तयोरन्तरं मध्यम् । नैतावता धर्मो मोक्षसमः । क्षयिफलत्वा- दित्याह— **पुण्येति** । चितः प्राप्तः । अस्त्वेवम् । ततः किमित्यत आह— **स चेति** । मोक्षस्य भगवत्प्रसादसाध्यत्वमन्यसाध्यत्वाभावश्चेति द्वे प्रमेये । तत्र यथायोगं वाक्यान्येतानि ज्ञातव्यानि । यदि निर्व्यलीकं छद्मना विना । सर्वात्मना सर्वप्रकारेण । श्रितपदो भगवान् येषां दययेत् दयां कुर्यात् । तर्ह्येषां श्वसृगालभक्ष्ये देहे ममाहमिति धीर्न भवति । ते देवमायां देवमहिमानं विदन्ति । अतितरन्ति च संसारमित्यर्थः । ऋते सत्ये, यद्यस्मात्, 'ईश' इति सम्बुद्धिः । अतस्तवाङ्घ्रिच्छायामाश्रयेमेति सम्बन्धः । ज्ञानं प्रसादसाधनमित्यनुपदं वक्ष्यते । अतः 'तमेवं' इत्याद्युदाहरणम् । ततोऽपि किमित्यत आह— **स चेति** । विष्णुप्रसादश्च । लोके सत्पुरुषप्रसादो गुणोत्कर्षज्ञानसाध्यः प्रसिद्धः । तद्दृष्टा- न्तेनानुमानादित्यर्थः । नन्वीश्वरस्यानुमानाविषयत्वात् कथं तत्र लोकप्रसिद्धमङ्गीकार्यम् । अन्यथा- ऽज्ञानादिकमङ्गीकार्यं स्यादित्यत आह— **लोकेति** । अन्यथा मीमांसारम्भानुपपत्तिरिति भावः ।

नन्विन्द्रप्रसादकामः 'अहल्यायै जार' इति तन्निन्दामेव करोति । ततो भग्नव्याप्तिकमनुमान- मित्यत आह— **अहल्येति** ।

***भा०दी०***— **न स्वर्गादिरिति** । स्वर्गैहिकफलातिरेके फलान्तरं नेत्यर्थः । **अत्रेति** । तत्रापीति वचन इत्यर्थः । **अन्यसाध्यत्वाभावश्चेति** । प्रसादादेवेत्येवकारेण तल्लाभादिति भावः । **यथा- योगमिति** । वासुदेवं इति अल्पकास्थ इति । ऋते भवदिति वाक्यान्यन्यसाध्यत्वाभावेऽन्यानिति तु प्रसादसाध्यत्व इति ज्ञेयमित्यर्थः । देवमायापदस्यार्थद्वयमुपेत्याह **महिमानमिति संसारमिति** च प्रसादसाध्यत्वोक्तिप्रस्तावे । ज्ञानसाध्यत्वार्थकवाक्योक्तिरयुक्तेत्यत आह **ज्ञानमिति** । तमेवेत्यस्यापि ज्ञानजन्यप्रसादसाध्यत्वोक्तिपरत्वादिति भावः । **अनुमानादिति** । ईश्वरप्रसादो 'गुणोत्कर्षज्ञानसाध्यः स सत्पुरुषप्रसादत्वात् राजप्रसादवदि'त्यनुमानादित्यर्थः । **अन्यथेति** । सर्वात्मना अनुमानागम्यत्वे युक्त्यनुसन्धानरूपमीमांसारम्भानुपपत्तेरित्यर्थः ।

***भा०र०***— भाष्ये चशब्दश्रवणादाह **इतश्चेति** । **तत्** विरोधसमाधानम् ।

**ईक्षितृत्वादीनां** गुणानाम् । **तद्विरोधः** महातात्पर्यविरोधः स्यादिति वदन्, ईक्षितृत्वादयो भगवद्गुणा न मायाकल्पिताः सकलवेदमहातात्पर्यगोचरत्वाद् ब्रह्मस्वरूपवदिति भाष्याभिमतानुमाने यदि महातात्पर्यविषयस्यापि मिथ्यात्वं स्यात् तर्हि ब्रह्मस्वरूपस्य जीवब्रह्मैक्यस्य च तत् स्यादि- त्यभिप्रैति । भगवद्गुणोत्कर्षस्य वेदमहातात्पर्यविषयत्वे प्रमाणाभावाद्धेतोरसिद्धिरिति शङ्कते **समस्त-**

**वेदानामिति** । भगवद्गुणोत्कर्षः वेदमहातात्पर्यविषयः तन्मुख्यप्रयोजनीभूतमोक्षसाधनज्ञानविषयत्वात् इत्यनुमानमेव प्रमाणमित्यभिप्रेत्य तत्र व्याप्तिमाह **यस्य हीति** । यो यच्छास्त्रप्रयोजनसाधनाज्ञानविषयः स तद्विषयः यथा धर्मादिरिति सामान्यव्याप्तिसिद्ध्यर्थमनुकूलतर्कमाह **अन्यथेति** । तत्प्रयोजनसाधनज्ञानाविषयस्यापि तच्छास्त्रविषयत्वे । **विषयप्रयोजनयोः** प्रयोजनस्य तच्छास्त्रविषयविषयकज्ञानजन्यत्वं विषयस्य तच्छास्त्रप्रयोजनकज्ञानजनकत्वमित्येवंरूपः सम्बन्धो न स्यात् इत्यर्थः । अत्रेष्टापत्तिं परिहरति **तथा चेति** । ''ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः'' इति वचनादिति भावः । इदानीं हेतोः पक्षधर्मतामुपपादयन्निगमयति **वेदस्य चेत्यादिना** ॥ हेतुशरीरप्रविष्टस्य मोक्षसाधनज्ञानप्रयोजनत्वस्यासिद्धिमाशङ्क्य तत्प्रतिपादनपरतया भाष्यमवतार्य व्याचष्टे **सर्ववेदानामित्यादि** । **स्वगदिरिति** । स्वर्गैहिकफलातिरेकेण मोक्षादिरूपं पुरुषार्थान्तरं नास्तीति कर्मतन्त्रादिनिष्ठैरङ्गीकृतत्वादित्यर्थः । 'वेदशास्त्रात्' इत्यत्र वेदश्च तच्छास्त्रं चेति विग्रहः । तेन वेदस्य शास्त्रत्वं सिद्ध्यति ॥ **पुरुषार्थेष्वपीति** । ''धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम्'' इति पूर्वत्र प्रस्तुतेषु धर्मादिरूपपुरुषार्थेष्वपीत्यर्थः । ''तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते'' इति चतुर्थे पृथुं प्रति सनत्कुमारवचनम् । तत्र मोक्षस्य पुरुषार्थत्वमात्रं सिद्ध्यति, न तु तस्य महत्त्वम् । प्रतिज्ञातं च महापुरुषार्थत्वमित्यत आह **अत्र निर्धारणेनेति** । ''यतश्च निर्धारणम्'' इत्यत्र समुदायादेकदेशस्य पृथक्करणं निर्धारणमिति वैयाकरणैर्व्याख्यानादत्र तेन महत्त्वमाक्षिप्यते । न च ''आत्यन्तिकतयेष्यते'' इति वाचनिकमेव महत्त्वमवगम्यत इति वाच्यम् । आत्यन्तिकशब्दस्य निर्धारणहेतुगुणसमर्पकत्वेन महत्त्वानुपस्थापकत्वात् । ''गोषु कृष्णा गौर्बहुक्षीरा'' इत्यत्र कृष्णशब्दस्येव ।

किञ्च आत्यन्तिकपदसद्भावेऽपि तत्रापीति पदाभावे यथा मोक्षस्यालौकिकत्वेन आत्यन्तिकपुरुषार्थत्वं तथा धमदिरप्यलौकिकत्वेन आत्यन्तिकपुरुषार्थतयेष्यमाणत्वमस्त्विति शङ्कायाः परिहाराभावात् तदर्थं तत्रापीति वक्तव्यम् । तत्र च सप्तमी उक्तशास्त्रप्राप्तेति धर्मादिपुरुषार्थेष्वपि मोक्ष आत्यन्तिकपुरुषार्थ इति धर्मादितोऽपि महत्त्वं निर्धारणसप्तम्या गम्यते । अत एव धर्मादिष्वपि मोक्ष एव महापुरुषार्थ इति कस्मादुच्यते इत्याशङ्क्य ''त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः'' इति धर्मार्थकामानां कालात्महरिभ्रूविभ्रमजनितनाशलक्षणभयशिरस्कत्वेन महापुरुषार्थत्वाभाव उक्त इति । **धर्ममोक्षेष्विति** । प्रतिपुरुषं धर्माणां मोक्षाणां च बहुत्वाभिप्रायेण 'अन्तेषु' इति बहुवचनमिति भावः । धर्मार्थकाममोक्षाणां धर्मादित्वेन निर्देशे मोक्षस्यान्तत्ववद् व्युत्क्रमेण निर्देशे धर्मस्याप्यन्त-

त्वमिति हृदयेन धर्मादिमोक्षान्तानां धर्ममोक्षावन्तावित्युक्तं प्राचीनटीकायाम् । अन्तयोरिति द्विवचनं समुदायाभिप्रायम् ।

केचित्तु, धर्ममोक्षयोरसाधनपरिपूर्त्यन्ते भोग्यत्वेनान्तत्वम् । यद्वा, द्वावत्रान्तशब्दौ एकशेष-निर्दिष्टौ । तत्राद्यः प्रसिद्धार्थ एव । अन्यस्तु लक्षणया आद्यार्थः । यथा "प्रथमयोः पूर्वसवर्णः" इत्यत्र एकस्य प्रथमाशब्दस्य प्रथमाविभक्त्यर्थत्वम्, अपरस्य द्वितीयाविभक्तिलक्षकत्वमङ्गीकृत्य प्रथमा-द्वितीययोरिति व्याख्यानं तद्वत् । तत्र साक्षात् परम्परया वा अर्थादीनां धर्मप्रयोज्यत्वाद् धर्म आद्यः, मोक्षस्तु धर्मादीनामन्त इति प्रसिद्धमेवेति तदभिप्रायेण आद्यन्तत्वं युक्तमित्यन्तयोरित्युक्तमित्याहुः । "अन्तरं बहिर्योगोपसङ्ख्यानयोः" इत्यत्र अन्तरशब्दो मध्यार्थो व्याख्यात इति तत्राऽऽह **अन्तरं मध्यमिति** । उक्तरूपधर्ममोक्षयोर्मध्ये वर्तनादर्थकामयोर्मध्यत्वम् । "अन्तप्राप्तिं सुखं प्राहुः" इत्यत्र मोक्षप्राप्तिं सुखमाहुः, धर्मप्राप्तिं सुखसाधनमाहुरिति व्याख्येयम् । दुःखं दुःखसाधनम् । "अर्थाना-मार्जने दुःखम्" इत्यादेः । प्राहुरिति सम्बन्धः । एतावता "अन्तेषु रेमिरे धीराः", अन्तप्राप्तिं सुखं प्राहुः" इति मोक्षसमकक्षतया निर्देशमात्रेण । **क्षयि(ष्णु)फलत्वादिति** । "यावदिन्द्रो यावन्मनुः" इत्यादौ स्वर्गादेः परिमितिश्रवणादिति भावः । मोक्षस्य वेदमुख्यप्रयोजनत्वसिद्धावपि भगवद्गुणोत्कर्ष-ज्ञानजन्यत्वासिद्धौ गुणोत्कर्षस्य मोक्षहेतुज्ञानविषयत्वासिद्धेः पुनर्हेत्वसिद्धिरित्याशङ्कापरिहाराय साध-नस्य व्यापारद्वारा कार्यजनकत्वान्मोक्षस्य ज्ञानव्यापारीभूतप्रसादसाध्यत्वप्रतिपादनपरतया भाष्यमव-तारयति **अस्त्वेवमिति** ॥ उक्तप्रमाणैर्मोक्षस्य महापुरुषार्थत्वमस्तु । ततः किं प्रकृत इत्यर्थः ।

ननु मोक्षस्य भगवत्प्रसादसाध्यत्वे प्रमाणान्युदाहर्तव्यानि । तत्र च "वासुदेवमनाराध्य" इत्यादेरतथाविधस्य किमित्युदाहरणमित्यत आह **अन्यसाध्यत्वाभावश्चेति** । "विष्णुप्रसादादेव" इत्येवकारश्रवणादिति भावः । **यथायोगमिति** । अन्यसाध्यत्वाभावे "वासुदेवमनाराध्य", "धर्मार्थ-कामैरलमल्पकास्ते", "ऋते भवत्प्रसादाद्धि" इति वाक्यानि । "तुष्टे तु तत्र" इत्यादीतरवाक्यानि तु विष्णुप्रसादसाधनसाध्यत्व इति यथासम्भवमित्यर्थः । ननु दयाऽपि सत्येव हेतौ स्यात्, अन्यथा वैषम्यादिप्राप्तिरित्यत उक्तं **यदि निर्व्यलीकमिति** । "व्यलीकं त्वप्रियेऽनृते" इत्यभिधानेनानृतस्य छद्मरूपत्वादाह **छद्मना विनेति** । डम्भफलाभिसन्ध्यादिदोषेण विनेत्यर्थः । **येषामिति** । "अधीगर्थ-दयेशाम्" इति कर्मणि षष्ठी । **दययेत्** दयेत । अत्र धात्वाख्यातार्थमाह **दयां कुर्यादिति** । अनेन दयाशब्दात् "तत्करोति" इति णिचि लिङि दययेदिति रूपमित्युक्तं भवति । यदीति श्रवणादाह **तर्हीति** ॥ "श्वसृगाल" इति "देहः किमन्नदातुर्वा निषेक्तुर्मातुरेव वा" इत्याद्युपलक्षणम् । विशेष्य-

**वेदानामिति**। भगवद्गुणोत्कर्षः वेदमहातात्पर्यविषयः तन्मुख्यप्रयोजनीभूतमोक्षसाधनज्ञानविषयत्वात् इत्यनुमानमेव प्रमाणमित्यभिप्रेत्य तत्र व्याप्तिमाह **यस्य हीति**। यो यच्छास्त्रप्रयोजनसाधनाज्ञान-विषयः स तद्विषयः यथा धर्मादिरिति सामान्यव्याप्तिसिद्ध्यर्थमनुकूलतर्कमाह **अन्यथेति**। तत्प्रयो-जनसाधनज्ञानाविषयस्यापि तच्छास्त्रविषयत्वे। **विषयप्रयोजनयोः** प्रयोजनस्य तच्छास्त्रविषय-विषयकज्ञानजन्यत्वं विषयस्य तच्छास्त्रप्रयोजनकज्ञानजनकत्वमित्येवंरूपः सम्बन्धो न स्यात् इत्यर्थः। अत्रेष्टापत्तिं परिहरति **तथा चेति**। ''ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः'' इति वचनादिति भावः। इदानीं हेतोः पक्षधर्मतामुपपादय-न्निगमयति **वेदस्य चेत्यादिना**॥ हेतुशरीरप्रविष्टस्य मोक्षसाधनज्ञानप्रयोजनत्वस्यासिद्धिमाशङ्क्य तत्प्रतिपादनपरतया भाष्यमवतार्य व्याचष्टे **सर्ववेदानामित्यादि**। **स्वर्गादिरिति**। स्वर्गैहिकफला-तिरेकेण मोक्षादिरूपं पुरुषार्थान्तरं नास्तीति कर्मतन्त्रादिनिष्ठैरङ्गीकृतत्वादित्यर्थः। 'वेदशास्त्रात्' इत्यत्र वेदश्च तच्छास्त्रं चेति विग्रहः। तेन वेदस्य शास्त्रत्वं सिद्ध्यति॥ **पुरुषार्थेष्वपीति**। ''धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम्'' इति पूर्वत्र प्रस्तुतेषु धर्मादिरूपपुरुषार्थेष्वपीत्यर्थः। ''तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते'' इति चतुर्थे पृथुं प्रति सनत्कुमारवचनम्। तत्र मोक्षस्य पुरुषार्थत्वमात्रं सिद्ध्यति, न तु तस्य महत्त्वम्। प्रतिज्ञातं च महापुरुषार्थत्वमित्यत आह **अत्र निर्धारणेनेति**। ''यतश्च निर्धारणम्'' इत्यत्र समुदायादेकदेशस्य पृथक्करणं निर्धारणमिति वैयाकरणै-र्व्याख्यानादत्र तेन महत्त्वमाक्षिप्यते। न च ''आत्यन्तिकतयेष्यते'' इति वाचनिकमेव महत्त्वमव-गम्यत इति वाच्यम्। आत्यन्तिकशब्दस्य निर्धारणहेतुगुणसमर्पकत्वेन महत्त्वानुपस्थापकत्वात्। ''गोषु कृष्णा गौर्बहुक्षीरा'' इत्यत्र कृष्णशब्दस्येव।

किञ्च आत्यन्तिकपदसद्भावेऽपि तत्रापीति पदाभावे यथा मोक्षस्यालौकिकत्वेन आत्यन्तिक-पुरुषार्थत्वं तथा धमदिरप्यलौकिकत्वेन आत्यन्तिकपुरुषार्थतयेष्यमाणत्वमस्त्विति शङ्कायाः परिहारा-भावात् तदर्थं तत्रापीति वक्तव्यम्। तत्र च सप्तमी उक्तशास्त्रप्राप्तेति धर्मादिपुरुषार्थेष्वपि मोक्ष आत्यन्तिकपुरुषार्थ इति धर्मादितोऽपि महत्त्वं निर्धारणसप्तम्या गम्यते। अत एव धर्मादिष्वपि मोक्ष एव महापुरुषार्थ इति कस्मादुच्यते इत्याशङ्क्य ''त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः'' इति धर्मार्थकामानां कालात्महरिभ्रूविभ्रमजनितनाशलक्षणभयशिरस्कत्वेन महापुरुषार्थत्वाभाव उक्त इति। **धर्ममोक्षेष्विति**। प्रतिपुरुषं धर्माणां मोक्षाणां च बहुत्वाभिप्रायेण 'अन्तेषु' इति बहुवचनमिति भावः। धर्मार्थकाममोक्षाणां धर्मादित्वेन निर्देशे मोक्षस्यान्तत्ववद् व्युत्क्रमेण निर्देशे धर्मस्याप्यन्त-

त्वमिति हृदयेन धर्मादिमोक्षान्तानां धर्ममोक्षावन्तावित्युक्तं प्राचीनटीकायाम् । अन्तयोरिति द्विवचनं समुदायाभिप्रायम् ।

केचित्तु, धर्ममोक्षयोरस्साधनपरिपूर्त्यन्ते भोग्यत्वेनान्तत्वम् । यद्वा, द्वावत्रान्तशब्दौ एकशेषनिर्दिष्टौ । तत्राद्यः प्रसिद्धार्थ एव । अन्यस्तु लक्षणया आद्यार्थः । यथा "प्रथमयोः पूर्वसवर्णः" इत्यत्र एकस्य प्रथमाशब्दस्य प्रथमाविभक्त्यर्थत्वम्, अपरस्य द्वितीयाविभक्तिलक्षकत्वमङ्गीकृत्य प्रथमा-द्वितीययोरिति व्याख्यानं तद्वत् । तत्र साक्षात् परम्परया वा अर्थादीनां धर्मप्रयोज्यत्वाद् धर्म आद्यः, मोक्षस्तु धर्मादीनामन्त इति प्रसिद्धमेवेति तदभिप्रायेण आद्यन्तत्वं युक्तमित्यन्तयोरित्युक्तमित्याहुः । "अन्तरं बहिर्योगोपसङ्ख्यानयोः" इत्यत्र अन्तरशब्दो मध्यार्थो व्याख्यात इति तत्राऽह **अन्तरं मध्यमिति** । उक्तरूपधर्ममोक्षयोर्मध्ये वर्तनादर्थकामयोर्मध्यत्वम् । "अन्तप्राप्तिं सुखं प्राहुः" इत्यत्र मोक्षप्राप्तिं सुखमाहुः, धर्मप्राप्तिं सुखसाधनमाहुरिति व्याख्येयम् । दुःखं दुःखसाधनम् । "अर्थानामार्जने दुःखम्" इत्यादेः । प्राहुरिति सम्बन्धः । एतावता "अन्तेषु रेमिरे धीराः", अन्तप्राप्तिं सुखं प्राहुः" इति मोक्षसमकक्षतया निर्देशमात्रेण । **क्षयि(ष्णु)फलत्वादिति** । "यावदिन्द्रो यावन्मनुः" इत्यादौ स्वर्गादेः परिमितिश्रवणादिति भावः । मोक्षस्य वेदमुख्यप्रयोजनत्वसिद्धावपि भगवद्गुणोत्कर्षज्ञानजन्यत्वासिद्धौ गुणोत्कर्षस्य मोक्षहेतुज्ञानविषयत्वासिद्धेः पुनर्हेत्वसिद्धिरित्याशङ्कापरिहाराय साधनस्य व्यापारद्वारा कार्यजनकत्वान्मोक्षस्य ज्ञानव्यापारीभूतप्रसादसाध्यत्वप्रतिपादनपरतया भाष्यमवतारयति **अस्त्वेवमिति** ॥ उक्तप्रमाणैर्मोक्षस्य महापुरुषार्थत्वमस्तु । ततः किं प्रकृत इत्यर्थः ।

ननु मोक्षस्य भगवत्प्रसादसाध्यत्वे प्रमाणान्युदाहर्तव्यानि । तत्र च "वासुदेवमनाराध्य" इत्यादेरतथाविधस्य किमित्युदाहरणमित्यत आह **अन्यसाध्यत्वाभावश्चेति** । "विष्णुप्रसादादेव" इत्येवकारश्रवणादिति भावः । **यथायोगमिति** । अन्यसाध्यत्वाभावे "वासुदेवमनाराध्य", "धर्मार्थकामैरलमल्पकास्ते", "ऋते भवत्प्रसादाद्धि" इति वाक्यानि । "तुष्टे तु तत्र" इत्यादीतरवाक्यानि तु विष्णुप्रसादसाधनसाध्यत्व इति यथासम्भवमित्यर्थः । ननु दयाऽपि सत्येव हेतौ स्यात्, अन्यथा वैषम्यादिप्राप्तिरित्यत उक्तं **यदि निर्व्यलीकमिति** । "व्यलीकं त्वप्रियेऽनृते" इत्यभिधानेनानृतस्य छद्मरूपत्वादाह **छद्मना विनेति** । डम्भफलाभिसन्ध्यादिदोषेण विनेत्यर्थः । **येषामिति** । "अधीगर्थदयेशाम्" इति कर्मणि षष्ठी । **दययेत्** दयेत । अत्र धात्वाख्यातार्थमाह **दयां कुर्यादिति** । अनेन दयाशब्दात् "तत्करोति" इति णिचि लिङि दययेदिति रूपमित्युक्तं भवति । यदीति श्रवणादाह **तर्हीति** ॥ "श्वसृगाल" इति "देहः किमन्नदातुर्वा निषेक्तुर्मातुरेव वा" इत्याद्युपलक्षणम् । विशेष्य-

मध्याहृतं **देह इति । धीर्न भवतीति** । भगवद्दययैव साऽपि निवर्तत इति भावः । यद्यप्यहं देह इति देहात्मभ्रमो नास्ति । यथोक्तम् "मम देहोऽहमिति च न देहोऽहमिति भ्रमः" इति । तथाऽपि श्वसृगालभक्ष्ये अहं देह इति धीरज्ञस्यापि यथा नास्ति तथा भगवदनुग्रहयोगिनां मम देह इति स्वातन्त्र्यभ्रमो नास्तीति दृष्टान्तदार्ष्टान्तिकभावेनोभयोपादानम् । "माया तु महिमा प्रोक्ता" इति "मायेति महिमोच्यते" इति च तृतीयतात्पर्योदाहृतप्रमाणानुसारेण मायाशब्दार्थमाह **महिमान-मिति** । तथा चोक्तं भगवत्पादैः "भगवतो मायां भगवन्महिमानम्" इति । "देवमायां विदन्ति संसारमतितरन्ति च" इति द्वितीयस्कन्धतात्पर्यानुसारेणाह **अतितरन्ति च संसारमिति** । दैवाधीनां शैवलीं मायां संसारमतितरन्तीति देवमायाशब्दस्यार्थान्तरमिदमुक्तमिति ज्ञातव्यम् । तथा चोक्तं तृतीयस्कन्धतात्पर्ये "शैवली नाम सा माया जगद्बन्धात्मिका" इति । गुरुपादैस्तु भगवतोपासनायां "ज्ञेयत्वं दुर्घटस्यापि घटनाधिकशक्तता । अभेद ईश्वरेणापि सृष्ट्यादावन्तरङ्गता । उच्येत यस्याः सा माया हरेरिच्छा" इत्यत्रोक्ततात्पर्यं मनसि निधाय देवमायाशब्दितहरीच्छातरणं कस्यापि न सम्भवतीत्यतो वेदनक्रियायामेवेच्छान्वयोऽतितरणक्रियायां तु तदिच्छाधीनसंसारस्य वा संसारहेतुजीववृत्तिशैवलमायाया देवमायाधीनतया देवमायाशब्दिताया वाऽन्वय इत्याह **तात्पर्यकृद् देवमाया-मिति** । संसारस्य देवेच्छाधीनत्वात् ताच्छब्द्यमिति मायाशब्दस्य संसारपरत्वमभ्युपेत्य हरीच्छापरत्वमप्युक्तम् । एतेन संसारमित्यध्याहार एव । न तु देवमायाशब्दस्यावृत्तिः । तस्या देवसम्बन्धत्वायोगादिति निरस्तम् । तदधीनतया ताच्छब्द्यं देवाधीना च सा माया चेति वा विग्रह इत्यङ्गीकारादिति । अनेन दशाशब्दितप्रसादादेव मोक्ष इत्युक्तं भवति । अलंयोगे तृतीयाविधानादुक्तं **धर्मार्थकामैरिति** । धर्मः प्रवृत्तिलक्षणः । अल्पकाः क्षयिष्णुफलकाः । मायामये संसारे शर्मालाभो न दोष इति शङ्कां परिहर्तुम् 'ऋते' इत्युक्तमिति भावेन तदर्थमाह **सत्य इति** । भागवतटीकायां तु बन्धमोक्षोपायभूतपादारविन्दमृते तत्सेवां विनेति व्याख्यातम् । "नताः स्म ते नाथ पदारविन्दम्" इति पदारविन्दस्य प्रकृतत्वात् । न चात्र पक्षे "अन्यारादितरर्ते" इति पञ्चमी स्यादिति वाच्यम् । "ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च । ऋते प्रसिद्धा" इत्यादिप्रयोगनिर्वाहाय "ऋते द्वितीया च" चान्द्रसूत्राद् ऋतेशब्दयोगे द्वितीयेति शब्दकौमुदीशब्दकौस्तुभोक्तरीत्यनुसारेणोपपत्तेः । "ईश जीवाः" इत्यैकपद्ये प्रमाणाविरोध इत्यत उक्तम् **ईशतेति** । अणिमादिसम्पूर्णैश्वर्यमूर्ते । सम्बुद्धिः सम्बोधनतात्पर्यकप्रथमैकवचनम् ।

ननु "आत्मन् लभन्ते" इत्यन्तवाक्यस्यान्वयाभावेनाबोधकत्वमित्यतो भागवतवचनशेषेण अन्वयं दर्शयन् "अत आश्रयेम" इत्यत्रत्यमतश्शब्दं व्यत्यस्य योजयति **अतस्तवाङ्घ्रेश्छाया-**

**माश्रयेमेति सम्बन्ध इति** । भाष्योपात्तवचनस्य भागवतवचनशेषेणान्वये भगवच्चरणारविन्दाश्रयणजन्यप्रसादस्य शर्मशब्दितमोक्षहेतुत्वं सिद्ध्यतीति भावः । न चैवं "ब्रह्मविद्या हरेश्छाया तदंशो हि सुरेष्वपि" इति तृतीयतात्पर्ये छायांशविद्येत्यैकपद्येन व्याख्यानादत्र कथमेवं व्याख्यानमिति वाच्यम् । "नित्यः सर्वगतस्थाणुः" इत्यत्र तात्पर्यनिर्णये सर्वगतस्थश्चासावणुश्चेत्यैकपद्येन व्याख्यानेऽपि भाष्ये सर्वगत इति स्थाणुरिति च भिन्नपदत्वाश्रयणेन व्याख्यानवदत्रापि पदभेदाश्रयणेन व्याख्यानोपपत्तेः । एतेन छायां शविद्यामाश्रयेमेत्येव पठितव्यम् । छायामाश्रयेमेति पाठस्तु प्रामादिक इति व्याकुर्वन्नपास्तः । न चैवं शविद्यामित्येतदनन्वितमिति वाच्यम् । शं सुखं तस्य विदनुभवः तं यापयति, यातेरन्तर्णीतण्यर्थस्येदं रूपं, येति । परमसुखानुभवजनिका तां तवाङ्घ्रेश्छायाम् । प्रपन्नतापोपशमातपत्रमिति पूर्वं पादारविन्दं विशेषितमिति तापत्रयोपहताश्छायामाश्रयेमेत्यन्वयोपपत्तेः । तथा च भागवते षष्ठस्कन्धे "भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधवृजिनसंसारोपशमनीमुपसन्नानाम्" इति । केचित्तु "शं क्लीबे शास्त्रे श्रेयसि मङ्गले" इति रत्नमालोक्तेः शं श्रेयो मङ्गलं वा वित् ज्ञानं शं च विच्च शविदौ ते अस्याः स्त इति मत्वर्थे यप् । "रूपादाहतप्रशंसयोर्यप्" इति सूत्रे अन्येभ्योऽपि दृश्यते" इति वार्तिकेन मत्वर्थे यब्विधानात् । मत्वर्थश्च हेतुत्वम् । तथा च श्रेयोज्ञानजनिकां छायामित्यन्वय इति टीकां व्याकुर्वते । अपरे तु भाष्ये क्वचित् छायां सविद्यामिति पाठात् सविद्यां शविद्यामिति भागवते पाठद्वयमप्यस्तीति पाठद्वयानुसारेण टीकातात्पर्ययोरवतार इत्याहुः ।

ननु "तमेवम्" इति वाक्यं न प्रकृतोपयोगि, तत्र मोक्षस्य ज्ञानसाध्यत्वावेदनेन प्रसादसाध्यत्वस्य प्रसादान्यासाध्यत्वस्य वा अनावेदनादित्यत आह **ज्ञानमिति** । **अनुपदं** पदस्य पश्चात् । अव्यवहितोत्तरवाक्य इत्यर्थः । **अतस्तमेवमिति** । यद्यप्यत्र वाक्ये प्रसादान्मोक्षे न भाति । तथाऽपि एवमित्युक्तप्रकारावमर्शः । तत्प्रकारश्च "सहस्रशीर्षा" इत्यारभ्य पठिते "अत्यतिष्ठद् दशाङ्गुलम्", "उतामृतत्वस्येशानः", "एतावानस्य महिमाऽतो ज्यायांश्च पुरुषः", "तस्माद् विराडजायत", वेदाहमेतं पुरुषं महान्तम्" इत्यन्ते वाक्यजाते उत्कृष्टत्वमेवावगम्यते । उत्कर्षज्ञानं च लोकप्रसिद्धेः प्रसादमेव जनयति । प्रसाद एव च पुरुषार्थ इति "तमेवम्" इत्यस्यापि ज्ञानजन्यप्रसादसाध्यत्वप्रतिपादनतात्पर्यकत्वं प्राचीनटीकारीत्या अवगन्तव्यमिति हृदयम् । आदिपदेन "तमेवं विदित्वाऽतिमृत्युमेति", "तरति शोकमात्मवित्" इत्यादिवाक्यग्रहः । विष्णुप्रसादस्य कर्मादिनाऽपि सम्भवाज्ज्ञानसाध्यत्वे मानाभावाच्च न ज्ञानं प्रसादहेतुरित्याशङ्क्य मोक्षजनकप्रसादस्य ज्ञानमात्रसाध्यत्वप्रतिपादनपरतया भाष्यमवतार्य व्याचष्टे **ततोऽपीति** । मोक्षस्य प्रसादसाध्यत्वोपपादना-

दपीत्यर्थः । विष्णुप्रसादश्च उत्तम इति शेषः । अधममध्यमप्रसादयोः "कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः । मध्यमः" इति कर्मादिसाध्यत्वेऽपि ज्ञानमात्रसाध्य उत्तमप्रसाद एव मोक्ष-हेतुरिति भावः । **अनुमानात्** विष्णुप्रसादो गुणोत्कर्षज्ञानसाध्यः, सत्पुरुषप्रसादत्वात् राजप्रसाद-वदित्यनुमानात् । **अनुमानाविषयत्वादिति** । "नेन्द्रियाणि नानुमानम्" इत्यादिश्रवणात् । शास्त्र-योन्यधिकरणे तथा स्थितेरिति भावः । **अन्यथा** अनुमानगोचरत्वाङ्गीकारे । ईश्वरोऽज्ञानादियुतः पुरुषत्वाद् देवदत्तवदित्यनुमानेन अज्ञानसंशयाद्यप्यङ्गीकर्तव्यं स्यादित्यर्थः । शास्त्रैकसमधिगम्यत्वं कथमीश्वरस्येत्यत उक्तं भाष्ये **अविरुद्धमिति** । अज्ञानादि तु सकलशास्त्रविप्रतिषिद्धमिति हृदयम् । **अन्यथा** लोकसिद्धस्याविरुद्धस्याप्यनुमानागम्यत्वे । **मीमांसेति** । "सर्वधर्मोपपत्तेश्च" इत्यादावभि-मतस्य ईश्वरः सदाऽवाप्तसमस्तकल्याणगुणः सदा तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् । यो यदा यत्र यत्प्रेप्सुत्वे सति यत्र शक्तः स तदा तद्वान् । यथा चैत्रः । ईश्वरः सदा त्यक्तसमस्तदोषः सदा तज्जिहासुत्वे सति तत्त्यागे शक्तत्वात् । यो यदा यज्जिहासुत्वे यत्त्यागे शक्तः स तदा त्यक्त-तद्दोषः । यथा चैत्रः । तत्प्रेप्सादिकं च प्रेक्षावत्त्वादित्यादिरूपस्य मीमांसाशब्दितयुक्त्यनुसन्धाना-त्मकानुमानस्य आरम्भानुपपत्तेरित्यर्थः ।

**भाष्यम्**

**अहल्याजारत्वाद्यपि दोषकृतोऽपि ते न बहुतरो लेप आसीत् इत्युत्कर्षमेव वक्ति । बहुनरकफलो ह्यसौ । 'तस्य लोम च न मीयते' इति श्रुत्यन्तराच्च ।**

***प०टी०***— ननु 'इन्द्रागच्छ अहल्यायै जार' इत्यादिदोषज्ञानादपि प्रसादो दृश्यत इत्यत आह **अहल्येति** । अहल्याजारत्वाद्यप्युत्कर्षमेव वक्ति । दोषकृतोऽपि ते न बहुतरो लेप आसीदित्यभिप्रायतः .................. दोषकत्वं कथम् ? इत्यत आह **बह्विति** । **असौ** दोषः । अत्र दोष एव श्रूयते न तदलेप इत्यत आह **तस्येति** । स **न** अपि **मानं** क्षयः ।

***न०टी०***—नन्विन्द्रं तत्प्रसादार्थी 'इन्द्र आगच्छ अहल्यायै जार' इति निन्दनेनाह्वयति । तत्कथं गुणोत्कर्षज्ञानादेव प्रसादः ? इत्यत आह **अहल्याजारत्वादीति** । अहल्याजारत्वाद्युत्कर्षमेव वक्ति । दोषकृतोऽपि तव बहुतरलेपो नासीदिति । बहुनरकफलत्वादस्य दोषस्य तेजीयस्त्वं विनैतत्तरणाभावादिति भावः । नन्वस्यां श्रुतावहल्याजारत्वमेवोच्यते । महत्तरणतः कथमियं स्तुतिरित्यत आह **तस्येति** । **न लोम चेति** । न लोमापीत्यर्थः ।

*प्र०दी०*— अहल्याजारत्वादिप्रतिपादकं वाक्यमप्युत्कर्षमेव वक्ति । कथम् । दोषकृतोऽपि ते यस्तत्फलं बहुतरो लेपः स नासीदित्यस्यार्थस्यानेन व्यञ्जनादित्यर्थः । कुत एतत् । अत्यन्तालौकिककल्पनादेव कल्पनस्य ज्यायस्त्वात् । तत्फलं बहुतरो लेप इत्येतत् कुत इत्यत आह– **बहुनरकेति** । असौ परनारीधर्षणदोषः । हीति सकलधर्मशास्त्रप्रसिद्धिं द्योतयति । स लेपस्तस्य नासीदित्येतत्कुत इत्यत आह— **तस्येति** । अहल्याधर्षणेन तस्येन्द्रस्य लोमाऽपि न क्षीयत इत्यर्थः ।

*भा०दी०*— बहुतरलेपो नास्तीत्युक्त्या अल्पलेप आसीदिति भ्रमनिरासाय अन्यथा योजयति **यस्तत्फलमित्यादि** । **अत्यन्तालौकिकेति** । निन्दाया प्रसादहेतुत्वस्य लोकविलक्षणत्वादिति भावः ।

*भा०र०*— "अहल्यायै जार" इत्यत्र "षष्ठ्यर्थे चतुर्थी वक्तव्या" इति चतुर्थी । अहल्याया इत्यर्थः । **भग्नव्यासिकमिति** । सत्पुरुषप्रसादत्वादित्यनुमानमिन्द्रनिन्दासाध्यतया गुणोत्कर्षज्ञानसाध्यत्वं व्यभिचरतीति नोक्तसाध्यसाधनसमर्थमित्यर्थः । वचनस्य शब्दधर्मत्वाल्लक्षणयाऽत्र वाक्यं ग्राह्यम् । प्रतिपाद्यप्रतिपादकभावश्च तत्र सम्बन्ध इति भावेनाह **अहल्याजारत्वादिप्रतिपादकं वाक्यमिति** । **दोषेति** । नारीधर्षणलक्षणदोषं कुर्वतोऽपि तवेत्यर्थः । बहुतरो लेपो नास्तीति विशिष्टनिषेधेनाल्पो लेपोऽस्तीति प्रतीयेत । ततश्च "तस्य लोम" इति वाक्यविरुद्धमित्यतो व्याचष्टे **यस्तत्फलमिति** । फलनिषेध एवात्र क्रियते फलस्वरूपनिरूपणाय तु बहुतरो लेप इत्युक्तमिति भावः । **अत्यन्तेति** । निन्दायाः प्रसादहेतुत्वं सर्वथा लोकविरुद्धमिति भावः । **एवं कल्पनस्य** अहल्याजारत्वादिप्रतिपादकमपि वाक्यमुक्तरीत्या गुणातिशयमाहेति कल्पनस्य । जारत्वादिपरामर्शे नपुंसकलिङ्गता स्यादित्यतो दोषः परामृश्यत इत्याह **असौ परनारीति** । अत्र स्वसमाधमानां नार्यः परनार्यो विवक्षिताः न तु स्वोत्तमानां नार्योऽपि । एकादशतात्पर्ये उत्तमनारीधर्षणस्य "तद्गतिस्सुमहत्तरा" इति सुमहत्तरपातकत्वमभिधाय "तत्पराणां पातकानां फलमन्धन्तमसस्मृतम्" इति अन्धन्तमसफलकत्वोक्तेः । परदारधर्षणमपि उपपातकपातकमहापातकभेदात् त्रिविधम् । तथा च तात्पर्ये— "उपपातकं तद्गतिश्च वर्णबाह्येषु पातकम् । महापातकसञ्ज्ञं तु पित्रादेर्दारधर्षणम्" इति । तत्फलं "उपपातकतश्चापि नरकं युगमात्रकम् । चतुर्युगावसानं तु पातकस्य फलं स्मृतम् । महापातकजन्यं च कल्पावधि समीरितम्" इति तत्रैव प्रमाणेन दर्शितम् । तदिदमुक्तं **हीति** ।

**भाष्यम्**

**'यो मामेवमसंमूढो जानाति पुरुषोत्तमम्' इति तदुक्तेश्च ।**

*प०टी०*— इतोऽपि गुणोत्कर्षज्ञानाद्भगवत्प्रसाद इत्याह **यो मामिति** ।

*न०टी०*— न केवलं मोक्षसाधनभगवत्प्रसादजनकत्वात् तदुत्कर्षज्ञानस्य, तदुत्कर्षे तात्पर्यमागमानां कल्प्यते । किन्तु उच्यत एव सर्ववेदेषु बह्वितिहासपुराणयोरिति भावेनाह **यो मामित्यादि** । तस्योक्तिः **तदुक्तिः** ।

*प्र०दी०*— भगवत्प्रसादस्तद्गुणोत्कर्षज्ञानसाध्य इत्येतन्न केवलमनुमानात्सिद्धम् । किं तर्हि भगवद्वचनाच्चेत्याह— **यो मामिति** । स सर्वविदित्यादिस्तुत्या प्रसादो गम्यते । तदेवं भगवद्गुणोत्कर्षे महातात्पर्यं सर्वागमानामिति प्रमितम् ।

*भा०र०*— ''श्रुत्यन्तराच्च'' इति भाष्ये चशब्देन तेजीयस्त्वसमुच्चयः । तथा चोक्तम् ''नान्यदोषस्य लेपस्तेजीयसाम्'' इति । प्रसादो गुणोत्कर्षज्ञानसाध्य इत्यत्र नेदं वाक्यं प्रमाणम् । तत्रोत्कर्षज्ञानिनः सर्वज्ञत्वमात्रावगमादित्यत आह स **सर्वविदित्यादिस्तुत्येति** । भगवान् हि स्वात्मानं पुरुषोत्तमतया जानन्तं सर्वविदिति स्तौति । तथात्वज्ञानिनि प्रसादाभावे स्तवनमेवासौ न कुर्यात् । तेन ज्ञायते प्रसन्न एवास्तौषीदितीति प्रसादोऽनुमीयते इत्यर्थः । इयता ग्रन्थेन साधितमर्थं बुद्ध्यारोहाय निष्कृष्य दर्शयति **तदेवमिति** ॥ **प्रमितमिति** । **भगवद्गुणोत्कर्षः** सर्वागम-महातात्पर्यगोचरः । आगमफलभूतमोक्षजनकज्ञानविषयत्वात् । यो यत्फलजनकज्ञानविषयः स तन्महातात्पर्यविषयः । यथा सम्प्रतिपन्न इत्यनुमानसद्भावादिति भावः । मोक्षजनकत्वं च प्रसाद-द्वारेति नानुपपत्तिः ।

**भाष्यम्**

**''सत्यं सत्यं पुनस्सत्यं शपथैश्चापि कोटिभिः ।**
**विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ॥**
**पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।**
**नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः ॥''**

**—इति नारदीये ।**

**अन्योत्कर्ष ऐक्यं च**

**''तथैव सर्वशास्त्रेषु महाभारतमुत्तमम् ।**
**को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद् भवेत्'' ॥**

**इत्यादिग्रन्थान्तरसिद्धोत्कर्षमहाभारतविरुद्धम् । तत्र हि**

**"नास्ति नारायणसमं न भूतं न भविष्यति ।**
**एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ॥"**

**"यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ।"**

**"न त्वत्समोऽस्त्यभ्यधिकः"**

**इत्यादिषु साधारणप्रश्नावसर एव महान्तमुत्कर्षं विष्णोर्वक्ति । अन्यत्र यत्किञ्चिदुक्तावप्यसाधारण एवावसरे । तद्धि अग्न्यादेरपि वेदादावस्ति "त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः", "विश्वस्मात् इन्द्र उत्तरः" इत्यादिषु ।**

*प०टी०*— सति भगवतः सर्वोत्कर्षे भवेदेतत्, स एव कुतः ? इत्यत आह **सत्यमिति** । ननु रुद्रादीनां विष्णोरुत्कर्षस्तदैक्यं च पुराणादौ श्रूयते । अतः कथं विष्णोः सर्वोत्कर्षः ? इत्यत आह **अन्येति** । भारतमेव कुतोऽन्येन न विरुद्ध्यते ? इत्यत आह **तथैवेति** । महाभारतविरोधं दर्शयति **तत्र हीति** । इतश्च महाभारतेनैवान्यस्य विरोध इत्याह **साधारणेति** । नन्वसाधारणावसरेऽप्यस्त्यन्येषामुत्कर्षादीत्यत आह **तद्धीति** ।

*न०टी०*— ननु रुद्रादेरपि सर्वोत्कर्षः श्रूयते 'विश्वाधिको रुद्रो महर्षिः' इत्यादिवेदादौ । विष्णवाधिक्यं च 'एकः परः पुरुषः इहास्य धत्ते स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः' इति । अतः कथं विष्णोः सर्वोत्कर्ष एव सर्वागमानां महत्तात्पर्यम् ? इत्यत आह **अन्योत्कर्ष इत्यादि** । एतदेव प्रदर्शयति **तत्र हीति । तत्र इति** । सर्वोत्तमशास्त्रे । **साधारणप्रश्नावसर इति** । कः सर्वपुरुषार्थ इति प्रश्नोत्तरप्रसङ्गे । न तु पुरुषविशेषं प्रक्रम्योक्ते । **महान्तमिति** । न केनापि प्रमाणेन सङ्कोचार्हम् । **अन्यत्रेति** । मध्यम अधमे च शास्त्रे । **यत्किञ्चिदिति** । मानान्तरेण सङ्कोचयोग्योत्कर्षोक्तौ । **असाधारण इति** । पुरुषविशेषप्रकरणरूपे । तत्तत्प्रकरणे तत्तदुत्कर्षः कस्य नास्ति ? अग्न्यादेरपीष्टत्वादाह **तद्धीति** ।

*प्र०दी०*— ननु ब्रह्मरुद्रादीनां सर्वोत्कृष्टत्वप्रसिद्धेः विष्णोः सर्वोत्कर्ष एव नास्ति । कुतस्तत्र सर्वागमानां महातात्पर्यमिति चेन्न । तत्प्रसिद्धेर्भ्रान्तित्वात् । तत्कुत इत्यत आह— **सत्यमिति** । सत्यं

वक्ष्यमाणम् । तस्य लेशस्येति सर्वत्र सम्बन्धः । ननु पुराणविरोधाल्लौकिकी प्रतीतिरस्तु भ्रान्तिः । पुराणेष्वेवान्येषां सर्वोत्कर्षौ भगवदैक्यं चोच्यते । तत्कथम् । न हि पुराणस्य पुराणं बाधकम् । साम्यादित्यत आह— **अन्येति** । अन्योत्कर्ष ऐक्यं च पुराणेषु प्रतीतमपि महाभारतविरुद्धम् । अतो न ग्राह्यमित्यर्थः । अत्रैक्यं प्रसङ्गादुक्तम् । महाभारतस्य पुराणबाधकत्वं कुत इत्यत उक्तम्— **तथैवेति** । इत्यादिना ग्रन्थान्तरेण सिद्धः प्रमित उत्कर्षः सर्वशास्त्रोत्तमत्वं यस्य तत् तथोक्तम् । कथं महाभारतविरुद्धमित्यत आह— **तत्र हीति** । तत्र महाभारते । इत्यादिवाक्येषु वक्ति भगवान् व्यासः । इतोऽपि महाभारतस्य पुराणबाधकत्वं युक्तमित्युक्तम्— **साधारणेति** । कस्सर्वोत्कृष्ट इति साधारणप्रश्नरूपेऽवसरे विष्णुप्रशंसामनुपक्रम्य स्वरूपकथनावसर इति यावत् । पुराणेऽप्येवमेवान्योत्कर्षाद्युक्तौ साम्यमेवेत्यत आह— **अन्यत्रेति** । अन्यत्र पुराणे । यत्किञ्चिदुक्तावप्यन्योत्कर्षाद्युक्तावपि । असाधारण एवावसरे तत्स्तुतिप्रसङ्गे । तदुक्तमिति शेषः । असाधारणावसरोक्तमपि रुद्रादेरुत्कृष्टत्वादि कुतो दुर्बलमित्यत आह— **तद्धीति** । तत् स्तुतिप्रस्तावोक्तं सर्वोत्कृष्टत्वम् । वेदादावग्न्यादेरप्यस्ति । तस्यापि ग्राह्यत्वं स्यादित्यर्थः ।

*भा०दी०*— **इति सर्वत्र सम्बध्यत इति** । विष्णुमाहात्म्यलेशस्य कोटिधा विभक्तो यो लेशः तस्य लेशस्य पुनश्चाप्यनन्तधा विभक्तो यो लेशस्तस्य लेशस्य पुनश्चाप्यनन्तधाविभक्तो यो लेशः लेशस्यैकांशसममाहात्म्या न हीत्येवं सम्बध्यत इत्यर्थः ।

*भा०र०*— उक्तानुमाने आश्रयासिद्धिपरिहारायोत्तरभाष्यमवतारयितुमाह **नन्विति** ॥ **वक्ष्यमाणं** "विष्णुमाहात्म्यलेशस्य" इति वक्ष्यमाणं प्रमेयम् । ब्रह्मरुद्राद्यपेक्षया विष्णोरुत्कृष्टत्वं कोटिसङ्ख्याकैः शपथैः सत्यमिति तात्पर्यद्योतनाय बहुवारमुच्यत इति भावः । तस्येत्यस्यार्थं वदन्नन्वयं दर्शयति **तस्य लेशस्येति** ॥ **सर्वत्रेति** । विष्णुमाहात्म्यलेशस्य कोटिधा विभक्तस्य मध्ये यो लेशः तस्य पुनश्च अनन्तधा विभक्तस्य मध्ये यो लेशः तस्यापि लेशस्य पुनश्च अनन्तधा विभक्तस्य मध्ये यो लेशः तस्य लेशस्य श्रीशेषब्रह्मशङ्करा "नैकांशसममाहात्म्याः" इत्येवं सर्वत्र सम्बद्ध्यत इत्यर्थः ।

ननु "सत्यं सत्यम्" इति पुराणवचनमन्योत्कर्षादिप्रतिपादकपुराणबाधकमस्त्वित्याशङ्क्य तत् कथमित्युक्तमुपपादयति **न हीति** । "ऐक्यं च" इत्यैक्यस्य महाभारतविरुद्धत्वेनाग्राह्यत्वभाषणमयुक्तम् । रुद्राद्युत्कर्षस्यैव प्रकृतत्वेनैक्यस्यानुक्तत्वादित्यत आह **अत्रैक्यमिति** । **प्रसङ्गात्** निषेध्यतया स्मृतत्वात् । ब्रह्मणो रुद्राच्चोत्कर्षं विष्णोर्वक्तुं यस्येति वाक्यम् । "महान्तं केनापि प्रमाणेन सङ्कोचानर्हम्" इति प्राचीनटीका । **इतोऽपि** साधारणावसर एव महोत्कर्षप्रतिपादकत्वादपि । उत्तरत्र भारतादिनिरवकाशत्वस्य स्तुतित्वेनाप्युपपत्त्या पुराणसावकाशत्वस्य च प्रतिपादनादितोऽपीत्यस्य

निरवकाशत्वादपीत्यर्थ इत्यप्याहुः । साधारणप्रश्नावसर एवोक्तत्वेऽपि बाधकत्वप्रयोजकप्राबल्यं कथमित्यत उक्तं **विष्णुप्रशंसामिति** । तदुपक्रमे हि स्तुतित्वेनान्यथासिद्धिसम्भावना स्यादपीति भावः । **साम्यमेवेति** । तथा च न बाध्यबाधकभाव इति शेषः । बाध्यताप्रयोजकदौर्बल्योपस्थापनाय भाष्यार्थमाह **तत्स्तुतीति** । तथा च स्तुतित्वेन सावकाशं पुराणं दुर्बलम् इति हृदयम् । तत् रुद्रादे-रुत्कृष्टत्वादि ।

**भाष्यम्**

**तद्ग्रन्थविरोधाच्च । तथा हि स्कान्दे शैवे ।**

**"यदन्तरं व्याघ्रहरीन्द्रयोर्वने यदन्तरं मेरुगिरीन्द्रविन्ध्ययोः ।**
**यदन्तरं सूर्यसुरेड्यबिम्बयोस्तदन्तरं रुद्रमहेन्द्रयोरपि ॥**
**यदन्तरं सिंहगजेन्द्रयोर्वने यदन्तरं सूर्यशशाङ्कयोर्दिवि ।**
**यदन्तरं जाह्नविसूर्यकन्ययोस्तदन्तरं ब्रह्मगिरीशयोरपि ॥**
**यदन्तरं प्रलयजवारिविप्रुषोर्यदन्तरं स्तम्बहिरण्यगर्भयोः ।**
**स्फुलिङ्गसंवर्तकयोर्यदन्तरं तदन्तरं विष्णुहिरण्यगर्भयोः ॥**
**अनन्तत्वान्महाविष्णोस्तदनन्तरमनन्तकम् ।**
**माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम् ॥"**
**"तत्समो ह्यधिको वाऽपि नास्ति कश्चित् कदाचन ।**
**एतेन सत्यवाक्येन तमेव प्रविशाम्यहम् ॥"इत्याद्याह ।**

**तत्रैव शिवं प्रति मार्कण्डेयवचनम् ।**

**"संसारार्णवनिर्मग्न इदानीं मुक्तिमेष्यसि" इत्यादि ।**

**पाद्मे शैवे मार्कण्डेयकथाप्रबन्धे शिवान्निषिध्य विष्णोरेव मुक्तिमाह— 'अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दनः' इत्यादि । समब्राह्मविरोधाच्च ।**

*प०टी०*— इतश्च नेतरेषामुत्कर्षादीत्याह **तद्ग्रन्थविरोधाच्चेति** । ..............र्न भूतयोः (?), सुरगुरोराधिक्यात् । दिवि प्रकाशे, न सर्वगुणेषु, द्वयोः साम्यात् । 'नाहं न च शिवोऽन्ये च' इति ब्राह्मवचनम् ।

***न०टी०***— इतोऽपि विष्णोरन्यस्य रुद्रादेः सर्वोत्कर्षो विष्णवैक्यं वा नाशङ्कनीयमित्याह **तद्ग्रन्थविरोधादिति** । रविगुरुबिम्बयोः, न तु तयोः । अधिकत्वात् गुरोः । दिवि प्रकाशे, न तु सर्वगुणेषु । समत्वात् तयोः । यत् ब्राह्मं पुराणं विष्णुशिवस्कन्दसूर्यविनायकदर्शनानां समानं 'नाहं न च शिवोऽन्ये च' इत्येतद्ग्रन्थविरोधादपि न विष्णवन्यस्य सर्वोत्कर्षः, तदैक्यं वा शङ्कनीयमित्याह **समब्राह्मविरोधादिति** ।

***प्र०दी०***— इतश्च न पुराणोक्तं रुद्रादेरुत्कृष्टत्वं ग्राह्यमित्याह— **तद्ग्रन्थेति** । तद्ग्रन्थः शैवपुराणम् । तत्कथमित्यत आह— **तथा हीति** । तद्ग्रन्थेत्युक्तप्रदर्शनाय शैव इत्युक्तम् । 'ङ्यापोः सञ्ज्ञाच्छन्दसोर्बहुलं' (६-३-६३) इति 'जाह्नवि' इति ह्रस्वः । **तत्रैव स्कान्द एव** शिवान्मुक्तिं निषिध्य । इतश्च न पुराणोक्तं ग्राह्यमित्याह— **समेति** । समं शैववैष्णवपक्षयोः । 'नाहं न च शिवोऽन्ये च' इत्यादि तद्वचनम् ।

***भा०दी०***— **ङ्यापोरिति** । णीबन्तस्याबन्तस्य च ह्रस्वो भवति । संज्ञाछन्दसोर्विषय इति षष्ठतृतीयपादीयसूत्रार्थः । रेवति पुत्र इत्यादादिव जाह्नविसूर्यकन्ययोरिति ह्रस्व इत्यर्थः ।

***भा०र०***— **शैवपुराणं** शिवोत्कर्षप्रतिपादनपरं पुराणम् । **तत्** तदुक्तं न ग्राह्यमित्येतत् । स्कान्दस्य शैवत्वमुक्तप्रयोजनं चेत्यतः शिवोत्कर्षाभिधायित्वाच्छैवत्वमित्यभिप्रेत्य तत्पदप्रयोजनमाह **इत्युक्तप्रदर्शनायेति** । **व्याघ्रहरीन्द्रयोः** व्याघ्रसिंहश्रेष्ठयोः । मेरुश्चासौ गिरीन्द्रश्च मेरुगिरीन्द्रः । "सूर्यसुरेड्यबिम्बयोः" इत्यत्र रविगुरुबिम्बयोरिति प्राचीनटीका । सूर्यबिम्बगुरुबिम्बयोश्चाधरोर्ध्वभावेन देशाव्यवधानपरोऽन्तरशब्दः । सुरेड्यबिम्बशब्देनेन्द्रस्वरूपमुच्यत इति व्याख्यानं तु बिम्बपदास्वारस्यात् प्राचीनटीकाविसंवादाच्चायुक्तम् । "सूर्यशशाङ्कयोर्दिवि" इत्यत्र दिवि प्रकाशे न तु सर्वगुणेषु । समत्वात् सूर्याचन्द्रमसोरिति प्राचीनटीका । केचित्तु, सूर्यशशाङ्कशब्दौ तन्मण्डलपरौ । तन्मण्डलयोश्चान्तरिक्षे व्यवधानं मानान्तरसिद्धम् । "अष्टाशीतिसहस्राणि" इति चन्द्रमण्डलस्य सूर्यमण्डलस्य सूर्यमण्डलादाधिक्यं वाऽत्रान्तरशब्दार्थ इत्याहुः ।

ननु जह्नुशब्दादपत्यार्थे "तस्यापत्यम्" इत्यणि "टिड्ढाणञ्" इत्यादिना ङीपि च जाह्नवीति भवितव्यम् । तत् कथं जाह्नविसूर्यकन्ययोरिति प्रयोग इत्यत आह **ङ्यापोरिति** । ङ्यन्तस्य आबन्तस्य च सञ्ज्ञायां छन्दसि च बहुलं ह्रस्वो भवतीति सूत्रार्थः । अत्र च जाह्नवीत्यस्य गङ्गासञ्ज्ञात्वाद् ह्रस्वः । अत एव ङ्यन्तस्य सञ्ज्ञायां रेवतिपुत्र इति वृत्तिकार उदाहरदिति भावः । ङ्यापोरिति प्रतीकग्रहणेन सूत्रोपस्थापनसम्भवेऽपि यत् समस्तसूत्रग्रहणं तन्न केवलमत्र सञ्ज्ञात्वाद्

ह्रस्वः । किन्तु पुराणस्य छन्दस्तुल्यत्वादपीति युक्तिसूचनार्थम् । सूर्यकन्या यमुना । विप्लुट् उदबिन्दुः । स्फुलिङ्गः अग्निकणः । संवर्तकः प्रलयानलः । रुद्रमहेन्द्रयोरिव ब्रह्मगिरीशयोरिव च विष्णुहिरण्यगर्भयोरप्यन्तरं किं सावधिकमिति जिज्ञासायां नैवमित्युक्तं भाष्ये । **तदन्तरमनन्तकमिति** । तत्र हेतुरनन्तत्वाद् देशतः कालतः गुणतश्चापरिच्छिन्नत्वादिति । तर्हि उदाहरणपूर्वकं किमिति विष्णुहिरण्यगर्भयोरन्तरं तादृशमित्युच्यते तत्राऽह **माहात्म्येति** । माहात्म्यं सङ्क्षेपेण बुद्धिमारोहयितुमुदाहरणम् । न तु उदाहरणमिवेदमपीयदेवेति वक्तुमित्यर्थः । "अनन्तत्वात्" इत्युक्तमानन्त्यमस्यैव कुत इत्यत उक्तं भाष्ये "तत्समोऽभ्यधिको वाऽपि नास्ति" इति । एवं समाधिकराहित्यं भगवतो जानतो मोक्ष एव महाफलमिति सूचयितुम् "एतेन" इति वाक्यम् । तद्ग्रन्थेत्युक्तप्रदर्शनाय भाष्ये "पाद्मे शैवे" इत्युक्तम् । मुक्तिमिति पदाकर्षं शेषं वा मत्वाऽऽह **शिवान्मुक्तिमिति** । पुराणोक्तं रुद्रादेरुत्कृष्टत्वादीति वर्तते । यद् ब्राह्मं पुराणं विष्णुशिवस्कन्दसूर्यविनायकदर्शनानां समानं तत्र "नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः । बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः" इत्यादिरूपं वचनं तद्विरोधादपि न विष्णवन्यस्योत्कर्षादीति प्राचीनटीकां हृदि कृत्वाऽऽह **समं शैवेति** ।

**भाष्यम्**

**वेदश्चेतिहासाद्यविरोधेन योज्यः । 'यदि विद्यात्' इत्यादि वचनात् । अनिर्णयाच्चेन्द्रादिशङ्कयाऽन्यथा । तत्रापीष्टसिद्धिः । नामवैशेष्यात् । अतो भगवदुत्कर्ष एव सर्वागमानां महातात्पर्यम् ।**

***प०टी०***— नन्वेवं भारतानुरोधात् पुराणादेः सङ्कोचेऽपि 'विश्वाधिको रुद्रः' इत्यादेर्न सङ्कोचः, वेदस्य स्वतः प्रमाणत्वादित्यत आह **वेदश्चेति** । इतिहासाद्यननुरोधेन योजने बाधकमाह **अनिर्णयाच्चेति** । अस्तु वा वेदश्च तत्र प्रमाणम् । तथाऽप्यनेनोत्कर्षविरोध इत्याह **तत्रापीति** । केवलवेदेऽपि । नामभिर्वैशेष्याद्रुद्रादिसर्वनामवत्त्वात् । महातात्पर्याच्च इत्याद्युक्तमुपसंहरति **अत इति** ।

***न०टी०***— ननु भवतु नाम सर्वशास्त्रोत्तमभारतोक्तविष्णुमहोत्कर्षविरोधिदेवतान्तरोत्कर्षार्पणाक्षणं पुराणादि । 'विश्वाधिको रुद्रः' इत्यादिवेदस्तु नित्यत्वेन मूलप्रमाणत्वात् कथं तदक्षमः ? इत्याशङ्क्याह **वेदश्चेति** । भारताद्युक्तविष्णुमहोत्कर्षानुरोधेन योजनायामपि वेदस्य प्रामाण्याहानेः । अन्यथा 'यदि विद्याच्चतुर्वेदान्' 'इतिहासपुराणाभ्याम्' इत्यादिवाक्याप्रामाण्येन, तत्प्रामाण्यग्राहकस्य 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इत्यादिवेदस्याप्रामाण्यापत्तेरिति भावः । न केवलं 'यदि विद्यात्'

इत्यादिवचनबलात् भारताद्यनुरोधेन सर्ववेदनिर्णयः, किन्त्वन्यथानिर्णयाभावाच्चेत्याह **अनिर्णयादिति** । 'विश्वाधिको रुद्रः' इत्यादिना रुद्रोत्कर्षे 'विश्वस्मादिन्द्र उत्तरः' इत्यादिनेन्द्रस्यापि किं न स्यात् । 'न यस्येन्द्रः' इत्यादिना सूर्यादिरपीत्यर्थः । एवं तावद्रुद्राद्युत्कर्षस्य 'नास्ति नारायणसमम्' इत्यादीतिहासादिविरोधात्, तद्विना निर्णयाभावात्, वेदेऽप्यसिद्धिरुक्ता । न तथा विष्णूत्कर्षस्य । तस्येतिहासादिसिद्धत्वात् । तद्बलात् 'विश्वाधिको रुद्रः' इत्यादीनां यथायोग्यं सङ्कोचात्, 'न ते विष्णो' इत्यादि वेदेषु सिद्धेः । इदानीं केवलेऽपि वेदे तत्सिद्धिरित्याह **तत्रापीति** । इष्टः सिद्धान्तो विष्णूत्कर्षः । वेदेऽपि तत्सिद्धिरितिहासादिकं विना । नामवैशेष्यात् तन्नामाधिक्याद्रुद्रेन्द्रादिसर्वनामवाच्यत्वात्, नामभिराधिक्यादिति वा । सर्वनामवाच्यत्वेन विष्णोराधिक्यात् नात्रातिप्रसङ्गः इन्द्रादिशङ्कयेत्यर्थः । गुणोत्कर्षज्ञानादेव लौकिकपुरुषपरितोषवत् मोक्षसाधनभगवत्प्रसादोऽपि तद्गुणोत्कर्षज्ञानादेवेति तत्रैव महातात्पर्यं वेदानामित्युक्तमुपसंहरति **अत इति** ॥

***प्र०दी०***— अस्तु लौकिकी प्रतीतिर्भ्रान्तिः । पुराणं च विप्रलम्भमूलं व्यामोहनार्थम् । तथाऽपि 'विश्वाधिको रुद्रः' इत्यादिवेदविरोध इत्यत आह— **वेदश्चेति** । सङ्कुचिताद्यर्थो व्याख्यातव्यः । कुत इत्यत आह— **यदीति** । इतिहासाद्यननुरुध्य यथाश्रुतवेदव्याख्यानेऽनिष्टमाह— **अनिर्णयाच्चेति** । न केवलं 'विश्वाधिको रुद्रः' इत्यादिवेदो विष्णोस्सर्वोत्कर्षस्याविरोधी । किन्तु प्रत्युत तत्र वेदेऽस्मदिष्टस्य विष्णोस्सर्वोत्कर्षस्य सिद्धिरपीत्याह— **तत्रापीति** । कुत इत्यत आह— **नामेति** । विष्णोर्नामभिर्वैशेष्याद्विशिष्टत्वात् । रुद्रादिसर्वनामवत्त्वादित्यर्थः । 'महातात्पर्याच्च' इत्यादिनोक्तमर्थमुपसंहरति— **अत इति** । अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेत्यर्थः ।

***भा०दी०***— **सङ्कुचिताद्यर्थ इति** । विश्वशब्दस्येन्द्रादिजगत्परत्वेनेन्द्रान्तर्यामिपरत्वेन वा व्याख्येय इत्यर्थः ।

***भा०र०***— विप्रलम्भमूलमिति हेत्वर्थगर्भम् । विप्रलम्भमूलकत्वादित्यर्थः । "अविरोधेन योज्यः" इति भाष्यं व्याचष्टे **सङ्कुचिताद्यर्थो व्याख्यातव्य इति** । "विश्वाधिको रुद्रः" इत्यत्र विश्वशब्दस्य रुद्रावरजगत्परत्वेन सङ्कोचः । आदिपदेन "विश्वं विष्णुः" इत्यादिविष्णुसहस्रनामसु विश्वशब्दार्थत्वेन प्रसिद्धो विष्णुरधिको यस्येति "विश्वो वायुः समुद्दिष्टः पूर्णत्वाज्जीवसङ्घतः" इति बृहद्भाष्यवचनाद् विश्वो वायुरधिको यस्येति वा व्याख्यानं ग्राह्यम् । प्रलये विश्वस्याऽधिं मानसीं व्यथां करोति गुरुत्वेन विश्वाधिं कृन्ततीति वा विश्वाधिकः । डु कृञ् करण इत्यतः कृती छेदन इत्यतो वा कर्तरि डप्रत्ययः । विश्वस्मादधि अधिकं कं सुखं यस्येति विश्वाधिक इति व्याख्यानमादिपदार्थ इत्यपि केचित् । "यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान् द्विजः । न चेत् पुराणं संविद्यान्नैव

स स्याद् विचक्षणः'' इति वचने यद्यपीतिहासो नोक्तः, तथाऽपि ''इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'' इत्युत्तरवचने इतिहासस्य गृहीतत्वादत्र पुराणपदमुपलक्षणमिति ज्ञातव्यमिति प्रागेव टीकायामुक्त-मितीतिहासाविरोधेन योज्य इत्यत्र नेदं प्रमाणमिति चोद्यमनवकाशम् । ''अन्यथा'' इति भाष्यपदं व्याकुर्वन्नेवावतारयति **इतिहासादीति** । अनिष्टमिति वदन् यदीतिहासाद्यननुरोधिना ''विश्वाधिकः'' इत्यादिवेदेनोक्तो रुद्रोत्कर्षो ग्राह्यः स्यात् तर्हि ''विश्वस्मादिन्द्र उत्तरः'', ''सूर्य आत्मा जगतः'' इत्यादिवेदेन इन्द्रसूर्यादिरप्युत्कर्षशङ्कनसम्भवेन निर्णयाभावापत्तेर्वेदस्याप्रामाण्यं स्यादिति भाष्ययोजनां सूचयति । भाष्ये न केवलमुक्तवचनात्, किन्त्वनिर्णयापत्तेश्चेति चशब्दार्थः । **तत्र** यत्र रुद्रोत्कर्षः शङ्कितस्तत्र । **रुद्रादीति** । अन्तराद्यधिकरणन्यायेन रुद्रादिसर्वशब्दानां महायोग-विद्वद्रूढिभ्यां विष्णावेव प्रवृत्तत्वेन तस्यैवासङ्कोचेन विश्वाधिकत्वसिद्धिरिति भावः । प्राचीनटीकायां सर्वनामवाच्यत्वेन विष्णोर्वैशेष्यादाधिक्यान्नात्रातिप्रसङ्ग इन्द्रादिशङ्कया शङ्कितुं शक्यत इत्यर्थ इत्यप्युक्तम् **उक्तमिति** । गुणोत्कर्षज्ञानादेव लौकिकपुरुषप्रसाद इव मोक्षसाधनभगवत्प्रसादोऽपि तद्गुणोत्कर्षज्ञानादेवेति तत्रैव महातात्पर्यं वेदानामित्युक्तमित्यर्थः । **प्रमाणविरुद्धत्वाच्चेति** । रुद्रा-द्युत्कर्षस्तु ''नास्ति नारायणसमम्'' इत्यादिप्रमाणविरुद्ध इति न तदुत्कर्षे आगमतात्पर्यमिति भावः ।

**भाष्यम्**

**तथाऽपि स्वतः प्रामाण्यात् सन्नेवोच्यते । अविरोधात् । न च प्रमाण-सिद्ध(दृष्ट)स्यान्यत्रादृष्ट्याऽपह्नवो युक्तः । धर्मवैचित्र्यादर्थानाम् । स्वतःप्रामा-ण्यानङ्गीकारे मानोक्तावप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः ।**

*प०टी०*— वेदस्य मोक्षार्थं भगवदुत्कर्षपरत्वे लोकवदविद्यमानवाचित्वं स्यात् । तथाऽपि इति संवादादस्याप्यभ्युपगमादित्यत आह **तथाऽपीति** । यद्यपि यथार्थं संवादरहितवेदेनोच्यते । तथाऽपि स्वतःप्रामाण्ये वा रुद्राद्युत्कर्षवद्विष्णूत्कर्षोऽसन्नेव किं न स्यात् ? इत्यत आह **अविरोधादिति** । काप्यदर्शनमेव सर्वोत्कर्षविरोधीत्यत आह **न चेति** । प्रामाण्यं संवादादेव जायत इत्यत आह **स्वत इति** । संवादकमानान्तरोक्तावपि तस्य प्रमाणान्तरेण प्रामाण्यं संवादयेदित्यनवस्थाख्यातिप्रसङ्ग इत्यर्थः ।

*न०टी०*— ननु यदि केवलेऽपि वेदे विष्णोरुत्कर्षः सिद्ध्यति लौकिकपुरुषवच्च तस्य प्रसादः । तर्हि संवादाद्यभावात् लोकवदेवाविद्यमानगुणोत्कर्षोक्तावपि भगवत्प्रसादः स्यादित्यत आह

**तथाऽपीति** । यद्यपि लौकिकपुरुषपरितोषायासन्नपि गुणोत्कर्ष उच्यते । गुणोत्कर्षोक्त्यैव परमपुरुषपरितोषः संवादाद्यभावश्च भगवदुत्कर्षे । तथाऽपि भगवतः सर्वगुणोत्कर्षः सन्नेवोच्यते वेदैः । स्वतःप्रामाण्यात् तेषामपीति भावः । ननु वेदोक्तयोरन्योत्कर्षैक्ययोरिदानीमेव निरस्तत्वात् कथमत्रापि विश्वास इत्यत आह **अविरोधादिति** । अन्योत्कर्षैक्ययोक्तयोर्भारतादिविरोधात्, अत्राविरोधादिति भावः । ननु सर्वोत्कर्षस्याप्यन्यत्रादृष्टेः, तद्वद्भिमतोऽपि न सर्वोत्कृष्टः पुरुषत्वादित्यनुमानविरोधादित्यत आह **न चेति** । न ह्यनुमानं श्रुतिं निरुणद्धि । कालात्ययदोषदुष्टत्वादिति भावः । ननु भवत्पक्षे वेदानामपौरुषेयत्वेनाप्तोक्तत्वगुणाभावात् तदुक्तनिश्चयायान्यन्मानं वक्तव्यमित्यत आह **स्वत इति** । अपौरुषेयत्वेनानाशङ्कितदोषवेदप्रमितेऽपि प्रमाणान्तरोक्तावत एवादोषत्वनिश्चयेऽप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः । अतः स्वत एव प्रामाण्यमङ्गीकार्यमिति भावः ।

*प्र०दी०*— अस्त्वेवम् । तथापीक्षितृत्वादेर्न मायामयत्वे तद्विरोधः । गुणोत्कर्षस्य सत्त्वे हि स स्यात् । न च वेदतात्पर्यविषयत्वमात्रेण सत्यता । मोक्षापेक्षयेश्वरं प्रसादयितुमुक्तस्य राजाद्युत्कर्षस्येवासत्त्वसम्भवात् । संवादाभावेन सत्त्वनिश्चयायोगादित्यत आह— **तथापीति** । फलापेक्षयेश्वरं प्रसादयितुं प्रतिपादितत्वेऽपि स्वतः प्रामाण्यात् संवादमनपेक्ष्य ज्ञानग्राहकेणैव प्रामाण्यस्य निश्चितत्वात् । न हि प्रामाण्यनिश्चये विषयासत्त्वशङ्का सम्भवति । एवं सति बौद्धाद्यागमविषयस्यापि सत्त्वं स्यादिति चेन्न । प्रसक्तस्यापि तत्प्रामाण्यग्रहणस्य वलवद्विरोधेनापोदितत्वात् । न च तथा प्रकृतेऽपीत्याह— **अविरोधादिति** । नन्वन्यत्र पुरुषे सर्वोत्कर्षस्यादर्शनात्तद्दृष्टान्तेनेश्वरेऽपि तदभावस्य साधयितुं शक्यत्वादनुमानविरोधोऽस्तीत्यत आह— **न चेति** । कालातीतमनुमानमिति भावः । प्रमाणविरुद्धस्याप्यनुमानत्वेऽतिप्रसङ्गं सूचयति— **धर्मेति** । धर्मैर्वैचित्र्यं धर्मवैचित्र्यम् । एवमनुमानेऽर्थानां धर्मवैचित्र्यं न स्यादिति भावः । यद्वाऽनेन ग्रन्थेनासम्भावनाविरोधं परिहर्तुं सम्भावनां दर्शयति । भवेदेवं यदि स्वत एव प्रामाण्यग्रहः स्यात् । तदनङ्गीकारे किमुत्तरमित्यत आह— **स्वत इति** । संवादाधीनः प्रामाण्यग्रह इत्यङ्गीकारे तु प्रामाण्यनिश्चयाय संवादकमानोक्तौ तस्यादोषत्वं प्रामाण्यमन्यसंवादेन साधयेदित्यनवस्थालक्षणोऽतिप्रसङ्ग इत्यर्थः ।

*भा०दी०*— **अस्त्वेवमिति** । प्रामाणिकत्वप्रमाणाविरुद्धत्वोक्तिप्रकारेण महातात्पर्य-विषयत्वं गुणोत्कर्षस्यास्त्वित्यर्थः । **राजादीति** । राजादिनो ग्रामद्रव्यादिफलं प्राप्तुं त्वमिन्द्रश्चन्द्र इत्यादिरूपेण प्रतिपाद्यमानोत्कर्षस्येवेत्यर्थः । **अनेनेति** । धर्मवैचित्र्यादिग्रन्थेनेत्यर्थः ।

*भा०र०*— **एवं** शिवाद्युत्कर्षस्य रुद्रादिशब्दानां मुख्यवृत्त्या विष्णुपरत्वेन "विश्वाधिको रुद्रः" इत्यादिप्रमाणप्रतिपाद्यत्वाभावप्रकारः प्रमाणविरोधप्रकारश्च । गुणोत्कर्षस्य वेदमहातात्पर्यविषयत्व-

साधनप्रकारोऽस्त्विति वाऽर्थः । **तद्विरोधः** महातात्पर्यविरोधः । गुणोत्कर्षः सत्यः । वेदतात्पर्यविषयत्वात् । ब्रह्मवदित्यनुमानेन सत्त्वसिद्धिरित्याशङ्क्य निषेधति **न चेति** । **मोक्षापेक्षया** मोक्षाकाङ्क्षया । **उक्तस्य गुणोत्कर्षस्य** । **सम्भवादिति** । तथा चोक्तहेतोरप्रयोजकत्वमिति भावः । कुतोऽसत्त्वसम्भव इत्यत आह **संवादेति** । गुणोत्कर्षप्रतिपादकवेदवाक्यस्य साक्षात् स्वविषयविषयकमानान्तरगोचरार्थकत्वरूपसजातीयसंवादो न सम्भवति । तदर्थस्य मानान्तरागोचरत्वात् । नापि स्वनिष्ठप्रामाण्यव्यवस्थापनद्वारा स्वविषयविषयकमानान्तरगोचरार्थकत्वलक्षणार्थक्रियाकारित्वरूपो विजातीयसंवादः । तस्य फलोत्तरकालं निश्चेतव्यत्वेनेदानीं तत्सत्त्वनिश्चयायोगादसत्त्वसम्भवशङ्का स्यादेवेति भावः ।

केचित्तु, यदि गुणोत्कर्षः असत्यः स्यात् तर्हि तत्तात्पर्यकवेदजन्यज्ञाने प्रामाण्यनिश्चयो न स्यात् । प्रामाण्यस्य विषयसत्तामूर्तिकत्वादिति तर्कपराहतत्वान्नाप्रयोजकतेत्यत आह **संवादेति** । **सत्त्वनिश्चयायोगात्** । सत्त्वघटितप्रामाण्यनिश्चयायोगात् । संवादेन खलु प्रमाणानां प्रामाण्यनिश्चयः । संवादश्च सजातीयेन विजातीयेन वा भवेत् । न चासौ प्रकृत इति प्रामाण्यग्राहकाभावादिष्टापादनमेतदिति भाव इत्याहुः । अन्ये तु, असत्त्वसम्भवादित्यनेनोक्तानुमाने किं दूषणमभिहितमित्यतः गुणोत्कर्षो न निश्चितसत्ताकः संवादशून्यत्वात् । शुक्तिरूप्यवदिति प्रतिपक्षपराहतिरिति भावेनाऽह संवादेतीत्यवतारयन्ति ।

"स्वतः प्रामाण्यात्" इति भाष्यस्य कृतचोद्यपरिहारपरत्वस्फोरणाय स्वशब्दस्य प्रामाण्याश्रयग्राहकपरत्वं प्रामाण्यशब्दस्य तन्निश्चयपरत्वं चोपेत्य व्याचष्टे **ज्ञानग्राहकेणैवेति** । एवकारव्यावर्त्यमुक्तं **संवादमिति** । वेदजन्यगुणोत्कर्षादिज्ञानप्रामाण्यस्य ज्ञानग्राहकग्राह्यत्वेऽपि वेदप्रतिपाद्यगुणोत्कर्षस्यासत्त्वं किं न स्यादित्यत आह **न हीति** । याथार्थ्यरूपप्रामाण्यस्यार्थसत्त्वशरीरकत्वादित्याशयः । **एवं सति** प्रामाण्यस्य ज्ञानग्राहकग्राह्यत्वे । **सत्त्वं स्यादिति** । अयमाशयः । "अनृतजडविरोधि" इत्यादिबौद्धागमजन्यज्ञानं तावत् साक्षिवेद्यम् । तद्गतप्रामाण्यं ज्ञानग्राहकसाक्षिवेद्यं न वा । नेति पक्षे प्रामाण्यस्य ज्ञानग्राहकग्राह्यत्वरूपस्वतस्त्वभङ्गः । आद्ये बौद्धागमविषयोऽपि सन् स्यात् । विषयसत्त्वमूर्तिकत्वात् प्रामाण्यस्येति । **तत्प्रामाण्यग्रहणस्य** बौद्धागमजन्यज्ञानप्रामाण्यग्रहणस्य । **अपोदितत्वादिति** । ज्ञानं गृह्णन् साक्षी प्रामाण्यं गृह्णातीत्युत्सर्गः । बलवद्बाधकोपनिपाते तु प्रामाण्यं न गृह्णाति । तदिहापि साक्षी बौद्धवाक्यजनितज्ञानमात्रं गृह्णन्नपि बलवद्बाधकोपनिपातरूपाप्रामाण्यग्राहकसामग्र्या प्रतिबद्धो न प्रामाण्यग्रहणस्येष्टे । स्वतो गमनसमर्थोऽपि गजो गोक्षुरकेन प्रतिबद्धो न गच्छतीति यथा । न चैवं स्वतस्त्वहानिः । ग्राह्यप्रामाण्यविरोध्युप-

स्थापकसामग्र्यसमवहितज्ञानग्राहकग्राह्यत्वस्य स्वतस्त्वशब्दार्थत्वादिति भावः । **तथा प्रकृतेऽपीति** । यथा बौद्धवाक्यजन्यज्ञानप्रामाण्यग्रहणेऽपवादः तथा सर्वोत्कर्षप्रतिपादकवेदजन्यज्ञानप्रामाण्यग्रहणे प्रबलविरोधोपनिपात इत्यर्थः । प्राचीनटीकायां तु, ननु वेदोक्तयोर्ब्रह्मरुद्रोत्कर्षयोरिदानीमेव निरस्तत्वात् कथं वेदोक्ते विष्णूत्कर्षे आश्वास इत्यत आह **अविरोधादिति** । अन्योत्कर्षयोर्भारतादिविरोधादत्राविरोधाद् युक्त आश्वास इति व्याख्यातम् **अनुमानेति** । ईश्वरो न सर्वोत्कृष्टः पुरुषत्वात् । परिदृश्यमानपुरुषवदित्यनुमानेत्यर्थः । ईश्वरसर्वोत्कर्षस्य अपौरुषेयतया निर्दोषेण वेदेन प्रमितत्वादनुमानं बाधितविषयमिति भाष्यभाव इत्याह **कालातीतमिति** । **प्रमाणविरुद्धस्यापि** प्रमाणबाधितस्यापि । धर्माणां वैचित्र्यमिति विग्रहे अर्थानामित्यन्वयः । अर्थानां ये धर्मास्तेषामित्युक्तेऽसामर्थ्येन धर्मवैचित्र्यमिति समासायोग इत्यत आह **धर्मैरिति** । अर्थानां धर्मवैचित्र्यं गवाश्वादिरूपाणामर्थानां सास्नैकशफादिधर्मैर्महिषादिवैलक्षण्यमस्ति तावत् । तन्न स्यात् । गौरश्वो वा न महिषाद्विलक्षणः । पशुत्वात् । महिषवदित्यनुमानसम्भवादिति भावः । अतिप्रसङ्गाभिधानाभिप्रायत्वे धर्मवैचित्र्यं न स्यादर्थानामित्येव भाषणं स्यान्न तु धर्मवैचित्र्यादितीत्यरुच्या पक्षान्तरमाह **यद्वेति** । **अनेन** न च प्रमाणदृष्टस्येत्यादिवाक्यद्वयेन । **असम्भावनेति** । सन्ति हि तेऽप्यर्थाः ये प्रमाणप्रमिता अप्यसम्भावनयाऽपोद्यन्ते । यथा देवगवानामुत्तानानां वहनम् । तथा न च प्रमाणदृष्टस्येति वाक्येन भगवद्गुणोत्कर्षस्य वेदलक्षणप्रमाणावसितस्याप्यन्यत्रादर्शनादसम्भावनयाऽपवादः किं न स्यादित्यसम्भावनया प्रतिहतत्वरूपविरोधं परिहर्तुं धर्मवैचित्र्यादिति वाक्येन निर्दोषाशेषसद्गुणत्वे समतीतक्षराक्षरत्वमिव गुणोत्कर्षे विचित्रधर्मयोगित्वलक्षणं सम्भावकप्रमाणं दर्शयतीत्यर्थः । दूषणसौकर्याय स्वतःप्रामाण्यानङ्गीकार इत्यस्यार्थं वदन् चशब्दस्तुशब्दार्थ इत्याह **संवादाधीनः प्रामाण्यग्रह इत्यङ्गीकारे त्विति** । अदोषत्वमित्यस्यार्थः **प्रामाण्यमिति** । विपरीतनिश्चयादिजनकत्वरूपदोषराहित्ये प्रामाण्यध्रौव्यादिति भावः । प्राचीनटीकायां तु भवत्पक्षे वेदानामपौरुषेयत्वेन आप्तोक्तत्वगुणाभावात् तदुक्तनिश्चयाय अन्यन्मानं वक्तव्यमित्यत आह **स्वत इति** । अपौरुषेयत्वेनाशङ्कितवेदप्रमितेऽपि प्रमाणान्तरोक्तावत एवादोषत्वनिश्चयेऽप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः । अतः स्वत एव प्रामाण्यमङ्गीकर्तव्यमिति भाव इति व्याख्यातम् ।

**भाष्यम्**

**अनन्यापेक्षया च तत्परत्वं सिद्धमागमानाम् । 'नारायणपरा वेदाः' 'सर्वे वेदा यत्पदमामनन्ति' 'वासुदेवपरा वेदाः' इति । न च एतद्विरुद्धम् । ईश्वर-**

**नियमात् । अनादौ च तत्सिद्धं 'द्रव्यं कर्म च कालश्च' इत्यादौ । प्रयोजकत्वं तु पूर्वोक्तन्यायेन । अतः सिद्धमेतत् ।**

*प०टी०*— एवं मोक्षार्थत्वेऽपि न विरुद्धमानाभिधायकत्वं वेदस्य किमुतानन्यापेक्षया तत्परतायामित्याह **अनन्येति** । वाक्यस्यापातार्थोऽयं विरुद्धः, क्वाप्यदर्शनादित्यत आह **न चेति** । अनादिवेदनियमनं कथमीशस्य ? इत्यत आह **अनादौ चेति** । प्रामाणिकमप्यनादिनियमनं कथं घटते ? इत्यत्राह **प्रयोजकत्वं चेति** । नियामकत्वम् । **पूर्वोक्तन्यायो**ऽचिन्त्यशक्तित्वम् । अशून्यार्थत्वं वेदस्योपसंहरति **अत इति** । वेदस्य मोक्षार्थत्वेन मोक्षसिद्धिः ।

*न०टी०*—एवं तावज्जीवमोक्षापेक्षया भगवद्गुणोत्कर्षे महातात्पर्यं सर्वागमानामित्युक्तम् । अधुना विनाऽप्यन्यापेक्षां तत्रैव महातात्पर्यम्, 'नारायणपरा वेदाः' इत्यादौ व्यवधानाप्रतीतेरित्याह **अनन्यापेक्षयेति** । अनेनाद्विमानगुणोत्कर्षोक्तिशङ्कैव वारितो भवति । ननु सर्वेषामागमानां जीव-मोक्षापेक्षया भगवद्गुणोत्कर्षे तात्पर्यमुक्तम् । अतस्तेषामेवानन्यापेक्षया तत्रैव तात्पर्यं विरुद्धमित्यत आह **न चेति** । मध्यमभक्तान् प्रति तन्मोक्षाय स्वगुणोत्कर्षपरत्वेनागमान् नियामयति भगवान् । एकान्तान् प्रत्यनन्यापेक्षयैव । तेषां मोक्षस्यापि निरन्तरभगवद्ध्यानार्थत्वादित्यविरोधः । नन्वनादि-नित्ये वेदे या वाचकत्वशक्तिस्तात्पर्यलक्षणा स्वाभाविकी, तामीशोऽपि कथं प्रयोजयेत् ? अनन्या-धीनत्वान्नित्यस्वभावयोरित्यत आह **अनादौ चेति** । 'द्रव्यं कर्म च' इत्यादिवाक्यपर्यालोचनया-ऽनादिनित्येऽप्यन्यप्रयोज्यत्वसिद्धौ सत्यां तत्प्रयोजकत्वमीशस्य पूर्वोक्ताचिन्त्यशक्तित्वनयेन सिद्ध्यतीत्यर्थः । एवमविरोधात् साक्षादेव भगवत्परोक्तेश्च सर्वागमानामनन्यापेक्षयाऽपि तत्परत्वं सिद्धमित्युक्तमुपसंहरति **अत इति** ।

*प्र०दी०*— इतोऽपि न वेदतात्पर्यगोचरस्य भगवद्गुणोत्कर्षस्यासत्त्वं शङ्कनीयमित्याह— **अनन्येति** । प्रयोजनानपेक्षया चेत्यर्थः । तर्हि तत्परत्वमेव न सिद्ध्येत् । प्रयोजनपर्यालोचनया हि तत्प्राक् साधितमित्यत आह— **सिद्धमिति** । कथमित्यत आह— **नारायणेति** । प्रयोजनापेक्षया भगवद्गुणोत्कर्षपरत्वपक्षे प्रयोजनेन तत्साधनं कृतम् । प्रयोजनानपेक्षापक्षे तु आगमैरेव तत्सिद्धम् । पक्षद्वयं च 'सर्वे वेदास्तु देवार्थाः' इत्यादिवक्ष्यमाणप्रमाणसिद्धम् । एकस्यैव वाक्यस्य प्रयोजन-सापेक्षत्वमनपेक्षत्वं च विरुद्धमित्यत आह— **न चेति** । प्रतिपत्तृभेदादिति भावः । ननु जडस्य वेदस्य 'एतान् प्रत्येवं प्रतिपादयिष्याम्येतान् प्रत्येवं' इति कथं चेतनवत्प्रवृत्तिरित्यत आह— **ईश्वरेति** । अनादिर्वेद इत्युक्तम् । तत्र कथमीश्वरस्य नियमनमित्यत आह— **अनादौ चेति** । अनादिपदार्थ-

विषये । नियामकत्वमन्यत्रादृष्टं कथमीश्वरस्येत्यत आह— **प्रयोजकत्वं त्विति** । अनादे(र्नियो-जकत्वं)र्नियामकत्वं त्वीश्वरस्याचिन्त्यशक्त्या युक्तम् । 'अनन्यापेक्षया च' इत्यादिनोक्तमुपसंहरति— **अत इति** । तथा च पक्षद्वयेऽपि महातात्पर्यविरोधान्नेश्वरस्येक्षितृत्वादिकं मायामयमिति भावः ।

*भा०दी०*— **इतोऽपीति** । न केवलं स्वतःप्रामाण्यात् किन्तु वक्ष्यमाणमोक्षाख्यप्रयोजन-नैरपेक्ष्ये वोत्कर्षप्रतिपादनादपीत्यर्थः । **प्राक्साधितमिति** । मोक्षो हीत्यादि ग्रन्थेनेत्यर्थः । **इत्यादि-वक्ष्यमाणेति** । सप्तमभाष्यान्त्यभागे प्रतिपत्तृभेदादिब्रह्मादिप्रतिपत्तृत्वाऽपेक्षया प्रयोजनानपेक्षत्वस्य तदितरप्रतिपत्रपेक्षया तत्सापेक्षत्वोपपत्तेरिति भावः । अर्श आदिभ्यो अजितिमत्वर्थे अच्प्रत्यये यस्येति लोपे च सति भगवानित्यर्थः । भग इति रूपं कुतो न भवति । येन भगशब्देनैवेत्येव कारणेन तद्व्यवच्छेदः कृतो भाष्य इत्यत आह **नियामकेति** ।

*भा०र०*— **इतोऽपि** न केवलं संवादमनपेक्ष्य ज्ञानग्राहकेणैव प्रामाण्यस्य निश्चितत्वाद् भगवद्गुणोत्कर्ष-स्यासत्त्वं न शङ्कनीयम् । किन्तु प्रयोजनानपेक्षयोत्कर्षप्रतिपादनादपि । **तर्हि** प्रयोजनापेक्षाभावे । वेदानां भगवद्गुणोत्कर्षपरत्वमेव न स्यादित्यर्थः । दूरे तु सत्त्वशङ्केत्येवकारार्थः । कुत इत्यत आह **प्रयोजनेति** । **तत्** तत्परत्वम् । **प्राक्** मोक्षो हि महापुरुषार्थ इत्यत्र । प्रयोजन-पर्यालोचनया हि तत् साधितमिति कृतचोद्यपरिहारं वक्तुमाह **प्रयोजनापेक्षयेति** । एकस्य वेदस्य प्रयोजनापेक्षानपेक्षे कुत इत्यत आह **पक्षद्वयं चेति** । **इत्यादिवक्ष्यमाणेति** । "सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः । नारायणस्तु मोक्षार्थो मोक्षो नान्यार्थ इष्यते । एवं मध्यमभक्तानामेकान्तानां न कस्यचित् । अर्थे नारायणो देवः सर्वमन्यत् तदर्थकम् ।" इति सप्तमभाष्ये वक्ष्यमाणेत्यर्थः । अत्र देवार्थाः देवप्रति-पत्त्यर्थाः । प्रतिपन्ना देवाः नारायणार्थकाः नारायणज्ञानार्थाः । **मोक्षार्थः** मोक्षार्थे ज्ञातव्यः । नान्यार्थः न तद्भिन्नपरमपुरुषार्थार्थः । मध्यमभक्तानां चित्तवृत्तिः । एकान्तानां नियताना-मुत्तमभक्तानां न कस्यचिदर्थे स एव परमपुरुषार्थ इत्येतदर्थके प्रमाणे "एवं मध्यमभक्तानाम्" इत्यन्तेन आद्यः पक्षः "एकान्तानाम्" इत्यादिना प्रमाणशेषेण द्वितीयः पक्षः प्रत्येतव्य इति विवेकः ॥ **एकस्यैव वाक्यस्येति** । "अर्थैकत्वादेकं वाक्यम्" इति न्यायेन भगवदुत्कर्षलक्षणैकार्थ-प्रतिपादकः सर्वो वेद एकमेव वाक्यमिति भावः । **प्रतिपत्तृभेदात्** मध्यमोत्तमरूपज्ञातृभेदात् प्रयोजनापेक्षत्वं तदनपेक्षत्वं च न विरुद्धमित्यर्थः ।

**एतान् प्रति** मध्यमभक्तान् प्रति । तन्मोक्षार्थं गुणोत्कर्षवन्तं भगवन्तं प्रतिपादयिष्यामि उत्तमभक्तान् प्रति तु प्रयोजनानपेक्षया प्रतिपादयिष्यामीति प्रवृत्तिश्चेतनस्यैव दृष्टा न जडस्येत्यर्थः । ईश्वरस्य जडं प्रत्यपि तथा नियमनाज्जडस्याप्येवं प्रवृत्तिर्युक्तेति भाष्यार्थः ॥ **इत्युक्तमिति** ।

''अपौरुषेयत्वात्'' इत्यत्र ''अविनाशि तु तद् विद्धि'' इत्यादौ चेति योज्यम् । **तत्र** अनादिपदार्थविषये ॥ **कथमिति** । अयमाशयः । वेदस्यानादित्वाद् वेदशब्दप्रवृत्तिनिमित्तस्य वेदत्वस्यार्थप्रतिपादनशक्तिरूपस्य वेदस्वभावत्वात् धर्मिणा सह पराधीनत्वं केन प्रकारेणेति । भाष्ये द्रव्यशब्देन प्रकृत्यादितत्त्वमुच्यते । कर्मेति धर्माधर्मौ । स्वभावः प्रकृत्यादीनां परिणामादिः । जीव इत्यभिमानीति सुधानुसारेणार्थो द्रष्टव्यः । प्रयोजकत्वमित्यस्यार्थः **अनादेर्नियामकत्वमिति** । अनादेर्नियोजकत्वं त्विति पाठेऽप्ययमेवार्थः । **ईश्वरस्याचिन्त्यशक्त्या युक्तमिति** । अयं भावः । ''अनादीनां गुण दीनां यथा गुण्यादितन्त्रता । तथाऽनादिश्रुतेरस्तु क्षेमायेश्वरतन्त्रता'' यथा वैशेषिकादिमते गग दिपरिमाणादीनामनादिनित्यानामपि स्वाश्रयगगनाद्यधीनता, यथा वाऽद्वैतिमतेऽनादेरात्माज्ञानसम्बन्धस्य जीवब्रह्मविभागादेश्च स्वसम्बन्ध्यज्ञानाद्यधीनता, यथा वा प्राभाकरमते दुःखप्रागभावस्य मोक्षस्य ज्ञानाधीनता, यथा वा मतान्तरे दुरितप्रागभावस्य निषिद्धाकरणाधीनता, तथा वेदस्य तत्पदप्रवृत्तिनिमित्तस्य चोत्पत्त्यभावेऽपि विष्णवधीनता ।

किञ्च सादेरप्युत्पत्तावन्यापेक्षायामपि तदनन्तरस्थितावनादितो न विशेषः । तत्र च सादिर्न केवलमुत्पत्तावीशतन्त्रः, किन्तु स्थितावपीति ''प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः'' इति सूत्रकृतैवोक्तत्वादनादेरुत्पत्त्यभावेन तत्रान्यानपेक्षायामपि स्थितावीश्वरापेक्षा किं न स्यात् । दृश्यते हि योगे अन्यापेक्षस्य पराधीनत्ववत् क्षेमेऽपि तदपेक्षस्य तदधीनता । किञ्च ''अकर्तुमन्यथा कर्तुं कर्तुं चास्तीश्वरस्य यत् । सामर्थ्यं तेन तत्तन्त्रमनाद्यपि च सादिवत्'' । ईश्वरो हि सर्वत्राप्रतिहतशक्तित्वाद्घटेनेवाव्याकृताकाशादिनाऽपि रहितमतीतादिकालं कर्तुं शक्नोति । सङ्कल्पाभावात् तु तदकरणम् । तदभावश्च कार्योन्नेयः । न च शक्त्यभावादेव तदुपपत्तिः । ''स्वभावजीवकर्माणि'' इत्यादितत्त्वप्रकाशिकोदाहृतश्रुत्यादिविरोधात् । ऐश्वर्यविरोधाच्च । तथा चानादीश्वरेच्छाधीनानादिस्वभावता कथमीश्वरतन्त्रताविरोधिनीति । तदुक्तं ''तादृशत्वात् तु तच्छक्तेः'' इत्यनुव्याख्यानसुधायाम् । तादृशी खल्वीश्वरस्य शक्तिः यन्नित्यानित्यस्वभावसर्वविषया । अन्यथेश्वरत्वहानेः । अथ तस्याः शक्तेः किं शक्यमिति चेत्, तत्स्वरूपसत्तैव । अनादिसिद्धा सेति चेत्, सत्यम् । अनादीश्वरशक्त्यैवेति वदाम इति । **पक्षद्वयेऽपीति** । प्रयोजनानपेक्षया तदपेक्षया च वेदस्य गुणोत्कर्षप्रतिपादकत्वमिति पक्षद्वयेऽपीत्यर्थः ।

**भाष्यम्**

**तच्चानन्यापेक्ष अचिन्त्यशक्तित्व एव युक्तम् । अतो न मायामयमेकम् ।**

*प०टी०*— तादर्थ्यातादर्थ्ययोरेकत्र विरोध इत्यत आह **तच्चेति** । ईश्वरस्य स्वतन्त्राचिन्त्यशक्तित्वे फलार्थत्वं च युक्तमेवेत्यर्थः । न च मायया इत्युक्तमुपसंहरति **अत इति** ।

*न०टी०*— ननु तर्ह्येतदेवास्तु । जीवमोक्षापेक्षया चेत् भगवतोऽप्राधान्यं स्यादित्यत आह **तच्चेति** । गुणोत्कर्षज्ञानात् प्रसन्नो भगवान् मुक्तिं ददातीति हि मोक्षार्थताऽपि भगवदुत्कर्षस्य । तत्र पारार्थ्यमात्रेणाङ्गत्वं भगवतः स्यात् । तर्हि मोक्षार्थतैव तस्य न स्यात् । उत्कर्षज्ञानं विना तत्प्रसादाभावात् । अतो यज्जीवमोक्षापेक्षयाऽपि भगवदुत्कर्षे तात्पर्यमागमानाम्, तदपि तस्यानन्यापेक्षयाऽचिन्त्यशक्तित्व एव युक्तम् । एतेनैतदपि प्रत्युक्तम् । यदाहुरन्ये— उद्देश्यदेवतानां यागार्थत्वात् तदङ्गत्वमिति । यागादेरपि तदधीनत्वादिति भावः । यत एवं भगवति स्वतन्त्राचिन्त्यशक्त्यैव विरुद्धधर्मयोरविरोधः, अतो नान्यतरमिथ्यात्वकल्पनमित्युपसंहरति **अत इति** ॥

*प्र०दी०*— अप्रामाणिकं च तन्मायामयत्वम् । तथा हि । किं स्थाणुत्व-ईक्षितृत्वान्यथाऽनुपपत्त्यैतत् कल्प्यत उत प्रमाणान्तरात् । नाद्यः । अन्यथैवोपपत्तेरुक्तत्वादित्याह— **तच्चेति** । स्थाणोरपीक्षितृत्वम् । अनन्यापेक्षा स्वतन्त्रा । न द्वितीयः । तददर्शनादिति भावेनोपसंहरति— **अत इति** ।

*भा०र०*— **तन्मायामयम्** ईक्षितृत्वादिमिथ्यात्वम् । **उक्तत्वादिति** । "त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते" इति अन्यत्र सहानवस्थितानामपि धर्माणामैश्वर्यबलादेवाविरोधस्य प्रागुक्तत्वेनेक्षितृत्वादेर्मायामयत्वं विनैव पारमार्थिकत्वेनैव सम्भवस्याभिधानादर्थापत्तिर्नोन्मिषतीति भावः । **तददर्शनात्** प्रमाणान्तरादर्शनात् ।

**भाष्यम्**

**अचलत्वं तु 'अप्रहर्षमनानन्दम्', 'अदुःखमसुखम्', 'न प्रज्ञम्', 'असद्वै' इत्यादिवत् । क्रियादृष्टेः ।**

**'तपो मे हृदयं साक्षात् तनुर्विद्या क्रिया कृतिः' इत्याद्युक्तेः । अतश्च न मायामयं सर्वम् । ऐश्वर्यादिवाचिभगशब्देनैव सम्बोधनाच्च 'तं त्वा भग' इत्यादौ ।**

**'स्वरूपत्वान्न मायामयत्वं युक्तम् । विज्ञानशक्तिरहमासमनन्तशक्तेः ।'**

**'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।'**

**'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिवचनात् ॥ २४ ॥**

*प०टी०*— 'अचलोऽयम्' इति स्वयमेव निष्क्रियत्वोक्तेः कुतो न मायामयं ब्रह्मणः कर्तृत्वादि ? इत्यत आह **अचलत्वमिति** । यथा सत्यं ज्ञानमनन्तं ब्रह्माभ्युपगच्छता परेण तदनानन्दादिवचनानां लौकिकानन्दादिराहित्यमेवेत्यर्थः कल्प्यः, तथा प्राकृतविचारराहित्यमेवार्थः 'अचल' पदस्येत्यर्थः । अनानन्दादिवाक्यस्यानन्दादिश्रुतिविरोधाद्युक्ताऽर्थान्तरकल्पना, न प्रकृते कारणाभावादित्यत आह **क्रियेति** । क्रियाद्यमायामयत्वप्रत्युक्त्यैवाशेषभगवद्गुणमायामयता प्रत्युक्तेत्याह **अतश्चेति** । इतश्च न मायामयं सर्वमैश्वर्यादीत्याह **ऐश्वर्यादीति** । अनेन गुणानां स्वरूपत्वमेव स्यान्न मायामयतेत्याह **स्वरूपत्वादिति** । बाधाभावाच्च न शक्त्यादेर्मायिकत्वमित्याह **विज्ञानेति** ॥ २४ ॥

*न०टी०*— ननु तर्ह्युत्तरपदेन क्रियानिषेधः कथमित्यत आह **अचलत्वं त्विति** । यथा 'अप्रहर्षमनानन्दम्' इत्याद्युक्तावपि, नाप्राकृतापरिमितस्वरूपानन्दज्ञानसत्त्वानां निराकृतिः । 'आनन्दं ब्रह्मणो विद्वान् न बिभेति' 'विज्ञानं ब्रह्म चेद्वेद' 'सदेव सोम्येदमग्र असीत्' इत्यादितद्दृष्टेः । एवमचलत्वोक्तावपि, नाप्राकृतस्वरूपानन्तगमनादिक्रियानिषेधः । अपि त्वप्राप्तप्राप्तिपूर्वदेशवियोगादिनिषेधः 'अनेजदेकं मनसो जवीयः' 'आतेन यातम्' इत्यादिक्रियादृष्टेः । 'क्रियाऽऽकृतिः' इत्यस्य 'शृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः' इति व्याख्यानेऽप्यङ्गदेवताधर्माणां भगवद्गतत्वस्य समाहारसूत्रसिद्धत्वादत्रोदाहरणमिति भावः । यत एवं चलादिमिथ्यात्वनयेन सत्यज्ञानादेः सर्वस्यापि मिथ्यात्वम्, असत्यादिव्यावृत्तिरपि सत्यज्ञानादिविशेषे सत्येव, अतः 'सत्यं ज्ञानम्' इत्यादिवत् सार्वज्ञसर्वैश्वर्यसर्वकर्तृत्वादिधर्मजातं सर्वं च न मायामयमित्याह **अतश्चेति** । इतश्च तन्न मायामयमित्याह **ऐश्वर्यादीति** । चशब्दो न मायामयं सर्वमित्यस्यानुकर्षणार्थः । नन्वनेन भगशब्दार्थैश्वर्यादिर्भगवत्स्वरूपत्वमवगम्यते । न त्वमायामयत्वमित्याह आह **स्वरूपत्वादिति** । बाधकप्रत्ययासम्भवाच्च न मायामयत्वं भगवच्छक्तिविग्रहाणामिति भावेन तेषामनन्तत्वप्रतिपादकं भागवतवचनद्वयमुदाहरति **विज्ञानशक्तिरिति** । करणदोषासम्भवाच्च न मायामयत्वं भगवच्छक्त्यादीनामिति भावेन तेषामनादित्वप्रतिपादिकां श्रुतिमुदाहरति **परेति** । न ह्यनादिवस्तुनः स्वाभाविको धर्मः सादिर्भवति । ॥ २४ ॥

*प्र०दी०*— प्रकृतमनुसरन् 'अचलः' इत्येतत्पदं यदन्यैः 'परिस्पन्दरहित' इति व्याख्यातं तदसदिति भावेनाह— **अचलत्वं त्विति** । इत्यादिवद्व्याख्येयमिति शेषः । सत्यज्ञानानन्दस्वरूपं

ब्रह्माभ्युपगच्छता यथैतानि वाक्यानि व्याख्यायन्ते 'लौकिकसत्तादिरहितं' इति तथा 'अचलः' इत्येतदपि लौकिकक्रियाप्रतिषेधपरं व्याख्येयम् । सर्वथा परिस्पन्दाभावार्थत्वे 'अप्रहर्ष' इत्यादेरपि सर्वथाऽनानन्दकत्वादिकमर्थः स्यात् । अविशेषादिति भावः । ननु विषमोऽयमुपन्यासः 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानं' इत्यादिभिरानन्दरूपत्वादेः प्रमितत्वेन तथा व्याख्यानोपपत्तेरिति चेत् समं प्रकृतेऽपीत्याह— **क्रियेति** । कुतः क्रियादृष्टिरित्यत आह— **तप इति** । तप आलोचनम् । 'विज्ञानमानन्दम्' इत्यादीनि निरवकाशानि । क्रियावाक्यानि सावकाशानि । सर्वस्य ब्रह्मधर्मस्य मायामयत्वात् । अतः पुनर्वैषम्यमित्यत आह— **अतश्चेति** । अत एव महातात्पर्यविरोधादेव । इतश्च नेश्वरधर्माणां मायामयत्वमित्याह— **ऐश्वर्यादीति** । सम्बोधनादीश्वरस्य । अर्शआद्यजन्तोऽयं शब्द इत्येवकारेण व्यवच्छिनत्ति । नियामकाभावेनाश्रुतप्रत्ययकल्पनाऽयोगात् । एवं सम्बोधने तत्स्वरूपत्वमेवैश्वर्यादीनां स्यात्, न तु अमायामयत्वमित्यत आह— **स्वरूपत्वादिति** । अनन्तत्वस्वाभाविकत्वादिवचनाच्च नेश्वरशक्त्यादीनां मायामयत्वम् । मायामयस्यानन्तत्वाद्यनुपपत्तेरित्याह— **विज्ञानेति** । ॥ २४ ॥

*भा०दी०*— **यथोक्तमिति** । भक्तिपादे सूत्रकृतोक्तमित्यर्थः । अतः अव्यक्तत्वे प्रत्यक्षत्वे च प्रमाणसत्त्वात् अनन्तेनापरिच्छिन्नशक्तिकेन ईश्वरेण तत्प्रसादेनेति यावत् । प्रकाशो व्यक्तस्यापि भवति । तस्याभिध्यानादित्युक्तेशप्रसादसाध्यबन्धनिवृत्तिरूपं लिङ्गं च प्रसादहेतुकप्रकाशज्ञापकं हि ततोऽप्यव्यक्तस्याप्यस्ति । प्रकाश इति ज्ञायत इति सूत्रार्थः ॥ २४ ॥

*भा०र०*— **एतानि वाक्यानि** "असद् वै", "न प्रज्ञम्", "असुखम्" इत्येतानि वाक्यानि । व्याख्यानप्रकारोक्तिः **लौकिकेति** । लौकिकी सत्ता परतन्त्रसत्ता । आदिशब्देन लौकिकमनित्यं ज्ञानं लौकिकं विषयजन्यमनित्यं सुखं च गृह्यते । "सत्यं ज्ञानम्", "विज्ञानमानन्दं ब्रह्म" इत्यादिवाक्यप्रमितसत्ताज्ञानानन्दरूपस्य ब्रह्मणः "असद् वा इदमग्र आसीत् ", "न प्रज्ञम्", "असुखम्" इत्यादिवाक्यैर्यदसत्त्वमज्ञानत्वमसुखत्वं च प्रतीयते तत् तथा न प्रत्येतव्यम् । किन्तु लौकिकसत्तारहितं लौकिकज्ञानरहितं लौकिकसुखरहितं ब्रह्मेत्येव । उक्तनिरवकाशमानादिति भावः । **सर्वथेति** । अनेन 'अदुःखम्' इत्यत्र यथा सर्वदुःखाभावार्थत्वं तथा 'अचलः' इत्यत्रापि सर्वथा परिस्पन्दाभावार्थत्वमिति भाष्ये 'अदुःखम्' इति वाक्योदाहरणमिति सूचितम् । **अविशेषादिति** । अचलपदव्याख्यानन्यायस्यात्रापि तुल्यत्वादित्यर्थः । **तथा व्याख्यानोपपत्तेः** असदित्यादेर्लौकिकसत्तादिरहितमित्यादिप्रकारेण व्याख्यानोपपत्तेः । **प्रकृतेऽपि** 'अचलः' इत्यत्रापि । **कुतः** प्रमाणात् । **क्रियादृष्टिः** क्रियावगमः ।

ननु कृच्छ्रचान्द्रायणादिसन्तापस्तप उच्यते— "तपः कृच्छ्रादिकर्म च" इत्यमरोक्तेः, "तपस्विभ्यः कृच्छ्रादिचारिभ्यः" इति भाष्ये वक्ष्यमाणत्वात्, तप सन्ताप इति धातोश्च । न च आप्तकामस्येश्वरस्य सन्तापः सम्भवति । अनाप्तकामस्यैव हि लोके सन्तापो दृश्यते । अतस्तपसो भगवद्धृदयत्वोक्तिरयुक्तेत्यत आह **आलोचनमिति** । "तप आलोचनं प्रोक्तम्" इति तृतीयतात्पर्योक्तवचनादिति भावः । यद्यपि कर्मनिर्णयटीकायां यस्य तपो ज्ञानस्वरूपं न त्वालोचनात्मकमित्यालोचनात्मकं तपः प्रत्यषेधि । तथाऽप्यज्ञानप्रयुक्तालोचनमेव तत्र दूषितं न तु ज्ञानात्मकालोचनमपि । अज्ञो ह्यालोचयतीति तत्रैव टीकायामुक्तत्वात् । मनःप्रणिधानलक्षणालोचनस्य ब्रह्मादाविवेश्वरेऽभावेऽपि ज्ञानलक्षणमालोचनमनुमतमेवेति । ननु "तपोभिमानी रुद्रस्तु विष्णोर्हृदयमाश्रितः । विद्यारूपा तथैवोमा विष्णोस्तनुमुपाश्रिता । भृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः" इति प्रमाणमुदाहृत्य तपोभिमानी रुद्रो मम हृदयाज्जातस्तदाश्रितश्च । विद्याभिमानिन्युमा तनोर्जाता तदाश्रिता च । क्रियाभिमानी पाकशासनः आकृतिः भृङ्गाराद्याकारजातः तदाश्रितश्चेत्येवं भगवत्पादैरिदं वचनमन्यथा व्याख्यातमिति कथमेतद् भगवतः क्रियावत्त्वे प्रमाणमिति चेत् ।

अत्राहुः नृहरितीर्थश्रीमच्चरणाः— अङ्गदेवताधर्माणां भगवद्गतत्वस्य समाहारसूत्रसिद्धत्वात् क्रियाऽऽकृतिरित्यस्यात्रोदाहरणमिति । अयं भावः— "अङ्गैः पराद्ये हि देवा विसृष्टास्तत्तद्गुणान् परमे संहरेत । तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत" इति समाहारसूत्रभाष्ये न केवलमङ्गेषु तत्तद्देवताभावनया पूर्यते, किन्तु तत्तदङ्गदेवगुणसमाहारश्च तत्तदङ्गेषु कर्तव्यः । यथा चक्षुर्मनआदिषु सूर्यसोमादिगुणा महाप्रकाशकत्वाह्लादकरत्वादय इति । तत्त्वप्रदीपोक्तरीत्या अत्र पालनशासनादिक्रियाणामपि भगवदाकृतौ भावनीयत्वावसायेन भगवतः क्रियावत्त्वे भवतीदं वचनं प्रमाणमिति । केचित्तु, तात्पर्ये प्रमाणेनान्यथा व्याख्यातस्याप्यस्य वचनस्य क्रियावत्त्वे प्रमाणत्वेन अत्र उदाहरणम् । आकृतिर्विग्रहः क्रिया क्रियास्वभाव इति तदर्थ इति यथाश्रुतार्थपरत्वाभिप्रायेणेति विभावयितुं टीकायां तपः तपोभिमानी रुद्र इत्यव्याख्याय आलोचनमिति व्याख्यातमित्याहुः । **निरवकाशानीति** । विज्ञानानन्दादेर्ब्रह्मस्वरूपत्वाभ्युपगमादिति भावः । सावकाशत्वोपपादनं **सर्वस्य ब्रह्मधर्मस्येति** । गुणक्रियादिरूपस्येत्यर्थः । चशब्द एवार्थ इति भावेन व्याचष्टे **अत एव महातात्पर्येति** ॥ **व्यवच्छिनत्तीति** । भगशब्देन केवलेन गुणवाचकेनेत्यर्थसूचनादिति भावः ।

ननु "अर्शआदिभ्योऽच्" इति सूत्रेण अर्शश्शब्दादिगणेभ्यो मत्वर्थे अच्प्रत्ययस्य विधानात् "तं त्वा भग प्रविशानि स्वाहा समा भग प्रविश स्वाहा" इत्यादौ भगवन्नित्यर्थे भगेति सम्बोधनं कुतो न भवेदित्यत आह **नियामकाभावेनेति** । "यशोऽहं भवानि" इति वक्ष्यमाणप्रयोगे यशो-

भवित्रोरैक्यायोगलक्षणनियामकेन यशस्वीति मत्वर्थीयप्रत्ययस्याश्रुतस्यापि कल्पनं युक्तम् । न प्रकृते । कल्पकाभावादिति भावः । ऐश्वर्यादीनाम् "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः" इति प्रमाणगृहीतानां षण्णां गुणानामित्यर्थः । **स्वरूपत्वादिति** । स्वरूपस्यापि मायामयत्वे ज्ञानानन्दादेरपि मायामयत्वं स्यादिति भावः । "स्वाभाविकत्वादि" इत्यत्र आदिशब्देन प्रत्येकशो गुणादेर्निस्सीमत्वं, शक्त्यादेः परत्वं च गृह्यते । शक्त्यादीनां शक्तिगुणविग्रहाणाम् । "नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः । रूपं विचित्रमिदमस्य विवृण्वतो मे मारीरिषीष्ट निगमस्य गिरां विसर्गः" इति तृतीयस्कन्धगतब्रह्मवाक्यस्यायमर्थः । इहाम्भसि सतोऽनन्तशक्तेर्यस्य पुंसो नाभिह्रदात् नाभिपद्मादिति यावत् । "देवाश्च ज्ञानशक्तयः" इति तात्पर्यवचनाद् देवशिखामणितया विज्ञानशक्तिरहं ब्रह्मा आसं समुदभवम् । अस्य हरेर्विचित्रं रूपं प्रतिमास्थानीयम् इदं विश्वं विवृण्वतः सृजतो मम निगमस्य सम्बन्धिनीनां गिरां वाचां विसर्गो विशिष्टनिश्चयः "विष्णुरेव सर्वोत्तमः" इत्यादिलक्षणः । मारीरिषीष्ट नष्टो मा भूदिति । "मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे । यदासीत् तत एवाऽद्यः स्वयम्भूः समभूदजः" इति षष्ठस्कन्धगतभगवद्वचनस्य तत्त्वोद्योतटीकारीत्या– मयि मम नाभौ । अनन्ते गुणत इति गुणानां प्रत्येकमानन्त्यमुच्यते । यदासीत् पद्मम् । स्वयम्भूरज इति हिरण्यगर्भस्य परमेश्वरादुत्पत्तावागमसम्मतिकथनम् । स्वयंशब्दस्याकारस्य च विष्णुनामत्वादित्यर्थो द्रष्टव्यः । भागवतटीकायां तु मत्सम्बन्धिनाभौ यत् पद्ममाविरासीत् तत एव स्वयम्भूः समभूत् । कोऽसौ स्वयम्भूरित्यत उक्तम् **अज इति** । "अजा विष्णुहरच्छागा" इत्यतोऽनिर्णय इत्यत उक्तम् **आद्य इति** । जगदादौ भूतश्चतुर्मुख एव "अजः पितामहो ब्रह्मा" इत्यभिधानात् । कीदृशे मयि ? अनन्तगुणे असङ्ख्यातज्ञानादिगुणे गुणतोऽनन्ते प्रत्येकशोऽप्यसङ्ख्याते । यथोक्तम् "प्रत्येकशो गुणानां तु निस्सीमत्वमुदीर्यते । अनन्तत्वं तु गुणतस्ते चानन्ता हि सङ्ख्यया । अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च" इति । अनन्तविग्रहे असङ्ख्यातरूपे इति व्याख्यातम् । अत्र गुणानामसङ्ख्यत्वं प्रत्येकं निरवधिकत्वं च, ज्ञानबलाभ्यां च सहिता क्रिया ज्ञानबलक्रियेति तच्छक्त्यादिचतुष्टयस्य परत्वं स्वाभाविकत्वं च ज्ञायते ॥ २४ ॥

**गीतातात्पर्यनिर्णयः**

**अच्छेद्यत्वादिकं जीवस्यापि तत्सममित्याह अच्छेद्योऽयमिति । नित्यं सर्वगते स्थितः अणुश्चायमिति सर्वगतस्थाणुः सर्वगतो विष्णुः तदधीनत्वादिकं तत्स्थत्वम् ।**

*न्या०दी०*— जीवविषयेऽप्येतदाशङ्कापरिहाराय श्लोकमवतारयति "अच्छेद्यत्वेति" ॥ ननु "नित्यः सर्वगतः" इति नित्यत्वं पुनः किमर्थमुच्यते । अत्र सर्वगतवस्तुप्रतिपादनात् कथं चास्य जीवविषयत्वम् ? न चायमर्ध ईश्वरविषयः । जीवस्य समीपोक्तत्वादित्यत आह **नित्यमिति** ॥ नित्यं सर्वगतस्थाणुरित्यर्थः । कः सर्वगतः ? किं च तत्स्थत्वमित्यत आह **सर्वगत इति** ॥ नात्र नित्यत्वं सर्वगतत्वं चोच्यते । येन पुनरुक्तिरीश्वरविषयत्वं च आशङ्क्येत । किन्तु "जीवस्यापि ईश्वरवदच्छेद्यत्वादिसद्भावे सर्वसाम्यम्, तथा च किं तत्पूजया" इत्यतो नित्यं तदधीनत्वाद्येवोच्यत इति भावः । सर्वगतस्थाणुत्वोक्त्या वैषम्यहेतुर्दर्शितः ।

*भा०दी०*— **एतदाशङ्कापरिहारायेति** । जीवस्य कालतो बिम्बादिनाशनिमित्ततो वा नाशाभावेऽपि युद्धादिगतशस्त्रादिकारणविशेषात् स्याद्विनाश इति शङ्कापरिहारायेत्यर्थः ॥ **समीपोक्तत्वादिति** । पूर्वार्धोक्तत्वादित्यर्थः । नित्यं सर्वगते स्थितोऽणुश्चेत्यर्धोक्त्या गीतावाक्यस्य कथं योजनेत्यत आह **नित्यमिति** । यद्वा सर्वगतस्थाणुरिति मूलवाक्यस्य नित्यपदसंयोजनेनार्थमाह **नित्यमिति** । अन्यथा व्याख्यानव्याख्येययोर्वैरूप्यापत्तेरिति भावः ॥ **वैषम्यहेतुर्दर्शित इति** । ईश्वरवज्जीवस्याच्छेद्यत्वादिसद्भावेऽपि न सर्वसाम्यमित्यत्र सर्वगतत्वाणुत्वरूपो हेतुर्दर्शित इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**हेतुतोऽपि तत्स्थत्वान्न चलतीति अचलः । नादेन शब्देन सह वर्तत इति सनादन एव सनातनः ।**

*न्या०दी०*— नन्वत्र सर्वगत इत्येव युक्तम् । न तु सर्वगतस्थ इति । सर्वगतस्यैव अचलत्वोपपत्तेः । अणौ तदनुपपत्तेरित्यत आह **हेतुतोऽपीति** ॥ नात्राचलपदेन क्रियाराहित्यमुच्यते । येन सर्वगत इत्येव पदविभागशङ्का । किन्त्वस्तु जीवस्येश्वराधीनत्वम् । तदपि कदाचिन्नश्यति । ततश्च सर्वसाम्यम् । तथाच न तत्पूजा कार्येत्यतः तदधीनत्वानाश एवोच्यत इति भावः । नित्यपदेनैव अस्यार्थस्य सिद्धेः किमनेनेत्यत उक्तं **हेतुत इति** । नित्यमपि सर्वगतस्थत्वं वरादिकारणविशेषेण नश्यत्विति शङ्कानिराकरणान्नैतद्वैयर्थ्यमिति भावः । तथापि सनातन इति पुनरुक्तिरित्यत आह नादेनेति ॥ न सनातनपदेन नित्यत्वमुच्यते । येन पुनरुक्तिः स्यात् । अपि तु स्वातन्त्र्याभावे जीवस्य विधिनिषेधबद्धत्वं हेत्वन्तरमुच्यत इति भावः । अत एवानूक्तहेतूपन्यासात्प्राक् अस्वातन्त्र्योक्तावप्यपौनरुक्त्यम् ।

***भा०दी०***— अचल इत्युक्तं क्रियाराहित्यं सर्वगतस्य विशेषणं युक्तम् । गगनादौ सर्वगते चलनादृष्टेः । अतः सर्वगत इति पृथक्पदेन भाव्यमिति शङ्कते **अत्रेत्यादिना** । अत एवेत्यस्य विवरणायोक्तम् **हेतूपन्यासादिति** ।

**गीतातात्पर्यनिर्णयः**

**"नित्यं सर्वगते विष्णावणुर्जीवो व्यवस्थितः ।**
**न चास्य तदधीनत्वं हेतुतोऽपि विचाल्यते ।**
**निषेधविधिपात्रत्वात् सनातन इति स्मृतः ॥"**

**—इति महाविष्णुपुराणे ।**

***न्या०दी०***— नन्वच्छेद्य इति श्लोकः प्रकृतेश्वरविषय इव किं न स्यात् । किमनेन प्रतीतपदविभागत्यागादिनेत्यत आह **नित्यमिति** ॥ स्मृतिसमाख्यानाज्जीवविषय एवायं श्लोक इति भावः ।

**गीतातात्पर्यनिर्णयः**

**अच्छेद्योऽयमित्यादिपुनरुक्तिश्चान्यथा ।**

***प्रका०***— "नैनं छिन्दन्ती"ति श्लोकस्य जीवविषयत्वे दूषणमाह **अच्छेद्योऽयमिति** ।

***न्या०दी०***— इतोऽपि नायं श्लोक ईश्वरविषय इत्याह **अच्छेद्य इति** ॥ "नैनं छिन्दन्ति" इतीश्वरस्याच्छेद्यत्वादेरुक्तत्वात् "अच्छेद्योऽयम्" इत्यच्छेद्यत्वादेः पुनरुक्तिप्रसङ्गोऽस्य श्लोकस्येश्वर-विषयतायाम् । अतो नायं तत्पर इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**यस्मिन्नयं स्थितः सोऽव्यक्ताचिन्त्यादिरूपः । एवं ज्ञातः परमेश्वरः सर्व-दुःखनाशं करोतीति नानुशोचितुमर्हसि ।**

***प्रका०***— अव्यक्तोऽयमित्येतत् व्याचष्टे **यस्मिन्नित्यादिना** ।

***न्या०दी०***— जीवस्य समीपोक्तत्वात् 'अव्यक्तोऽयम्' इत्यस्यापि तद्विषयत्वप्रतीतिनिरा-सायाह यस्मिन्निति ॥ यस्मिन्नयं स्थित इत्युक्त्या सर्वगतपदेनेश्वरस्यापि समीपोक्तत्वं सूचयति ।

यद्यत्रेश्वरः प्रतिपाद्यः तर्हि तस्मादित्युत्तरवाक्यमनुपपन्नं स्यात् । न हीश्वरस्य अव्यक्तत्वादिज्ञाने युद्धगतशोकाभावो भवति । नाप्यस्मिन् पक्षे तस्मादिति परामर्शविषयोऽस्ति । यदि तस्य जीवविषयता तदा दूरोक्तत्वदोष इत्यत आह **एवमिति** ॥ नात्र युद्धगतशोको निवार्यते । नापि तस्मादिति परामर्शविषयाभावः । यतोऽत्राच्छेद्यत्वादिसाम्यात् जीवस्यापि स्वातन्त्र्येण किमीश्वर-पूजया इत्यतः सनातनत्वादिहेतुना ईश्वरस्यैव स्वातन्त्र्यमुक्तम् । अस्त्वीश्वरस्य स्वातन्त्र्यं, किं तावता तत्पूजयेत्यतो यस्मादीश्वर एव स्वतन्त्रोऽतस्तस्यैव संसारशोकनाशकत्वं युज्यते । स च स्वकर्मणाऽव्यक्तत्वादिगुणयुक्तत्वेन ज्ञात एव सर्वसंसारदुःखनाशं करोति । तस्मात् युद्धादिस्वकर्मणा-ऽव्यक्तत्वादिरूपेण तं ज्ञात्वा संसारशोकं परिहरेत्येवोच्यत इति भावः ।

***भा०दी०***— सर्वगतस्थपदोक्तास्वातन्त्र्यरूपे साध्ये विधिनिषेधबद्धत्वरूपहेतूपन्यासात् इत्यर्थः ॥ **अस्मिन् पक्ष इति** । पूर्वार्धस्येश्वरपरत्वपक्ष इत्यर्थः ॥ **सनातनत्वादिहेतुत्वेनेति** । जीवस्य विधिनिषेधबद्धत्वप्रतिबिम्बत्वहेतुनेत्यर्थः । तस्मादिति परामर्शविषयमाह **यस्मादित्या-दिना** । तस्मादित्यस्यार्थमाह **तस्माद्युद्धादीत्यादिना** ।

**गीतातात्पर्यनिर्णयः**

**"तेषामहं समुद्धर्ता" इत्यादेः ।**

***न्या०दी०***— भवेदयमत्रार्थोऽभिप्रेतो यदि सर्वकर्मणा भगवज्ज्ञानं, ज्ञातो भगवान् सर्वदुःखनाशं करोतीति गीताभिमतं स्यात् । तदेव कुत इत्यत आह **तेषामिति** ॥ अत्र मां ध्यायन्त इत्यनेनैव ज्ञानं लभ्यते ।

***भा०दी०***— तेषामित्यस्य लाभमाह **मामिति** ।

"ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥"

इति पूर्वार्धे श्रवणात् द्वादशाध्याय इति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"न त्वेवाहं जातु नासं न त्वम्" इत्युभयोरपि प्रस्तुतत्वात् । देहिनः शरीरिणः देहीतिविशेषितत्वाच्च जीवस्य तत्र तत्र ।**

**"अविनाशि तु ।", "येन सर्वमिदं ततम् ।",**
**"अनाशिनोऽप्रमेयस्य ।", "न म्रियते ।",**
**"भूत्वा भविता न ।", "अविनाशिनम् ।" "अव्ययम् ।",**
**"अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयम् ॥"**

**—इत्यादि परमात्मनश्च ।**

***प्रका०***— अत्र यद्यज्जीवविषयतया व्याख्यातं वचनं यद्यच्चेश्वरविषयत्वेन व्याख्यातं, तत्तथाऽङ्गीकर्तव्यम् । उपक्रमवशात् तत्तदन्यथासिद्धसविशेषणत्वसामर्थ्याच्चेत्याह **न त्वेवाहमिति** ॥

*न्या०दी०*— एवमेतत्प्रकरणं जीवेश्वरपरतया व्याख्याय अथास्योभयपरत्वे युक्तिं चाह **न त्वेवेति** ॥ नन्वेकः प्रसङ्गादेवोपक्रान्तः । प्रकरणं त्वेकविषयमेव किं न स्यादित्यतः सर्वत्रोभयलिङ्गसद्भावादुभयविषयं प्रकरणमित्याह **देहिन इति** ॥ अस्तूपक्रमवशादुभयोः प्राकरणिकत्वं तथापि यद्वाक्यं यद्विषयतया व्याख्यातं तस्य तद्विषयता कुत इत्यतो यद्वाक्यं यद्विषयतया व्याख्यातं तत्र तल्लिङ्गसद्भावात् तस्य तद्विषयत्वं युक्तमिति वाऽह **देहिन इति** ॥

**गीतातात्पर्यनिर्णयः**

**न हि जीवेन ततं सर्वम् । न च मुख्यतोऽप्रमेयोऽसौ । न च न म्रियते । न च अविनाशिनं नित्यमिति नित्यत्वातिरिक्तमविनाशित्वं तस्य । न चाव्यक्तत्वमविकार्यत्वं च मुख्यम् । न च भूत्वा भविता वा नेति देहस्याप्यनुत्पत्तिः । परमात्मनस्तु देहवियोगादिकमपि नास्तीत्यविनाशि त्वित्यादिविशेषणम् ।**

***न्या०दी०***— नन्वस्तु तत्र तत्र जीवः प्रतिपाद्यः । देहित्वादिविशेषणानां जीवादन्यत्र निरवकाशत्वात् । अविनाशित्वादीनां तु जीवेऽपि सम्भवात् कथं तद्वाक्यस्येश्वरविषयत्वनिश्चय इत्यत आह **न हीति** ॥ ईश्वरोऽपि तत्सम्भवः कथमित्यत आह **परमात्मन इति** ॥ न च तत्र तत्र भाष्यविरोधः शङ्कनीयः । अत्र च मुख्ययैव वृत्त्यार्थमङ्गीकृत्य पौनरुक्त्यादिशङ्कोन्मूलनं विना केवलामुख्यार्थग्रहणे बाधकानामुक्तत्वात् । भाष्ये पुनर्मुख्यार्थमपरित्यज्यैवार्थान्तरस्योक्तत्वादिति ॥

***भा०दी०***— अथेत्यर्थान्तरेऽथशब्दः । एक इति भगवद्रूपः । जीवस्यानादिनित्यत्वे दृष्टान्तत्वेनोपक्रान्त इत्यर्थः ॥ **न च तत्र तत्रेति** । "अविनाशि तु" इत्यस्य वेदादिपरत्वमुक्तं भाष्ये ।

अनाशिन इत्यस्य जीवपरत्वं, अविनाशिनमित्यस्य देहयोगरहितमित्यादिना जीवपरत्वमुक्तमतस्तद्विरोध इत्यर्थः ॥ **पौनरुक्त्यादिशङ्केति** । ऐक्योक्तावप्यनुक्तविशेषणोपादान्न ईश्वैरैक्ये पुनरुक्तिरित्यादिना पुनरुक्तिवैय्यर्थ्यशङ्कयोरुन्मूलनं भाष्ये कृतम् । अत्र तु मुख्यार्थग्रहणे व्याख्याने तादृशाशङ्कैव नेति न तदुन्मूलनं कार्यमिति भावः ॥ **बाधकानामिति** । "न च जीवानां देशतो गुणतश्च पूर्णता । न हि जीवेन ततम्" इत्यादिनोक्तत्वादित्यर्थः ॥ अर्थान्तरस्य वेदादिरूपस्येत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**यस्मादेवंभूतः तस्मात् स एव स्वतन्त्रः । तदधीनम् अन्यत्सर्वम् । अतः स एव सर्वपुरुषार्थदः । अतस्तत्पूजा सत्कर्मैव । अतस्तदर्थं युध्यस्व । अन्येषां त्वन्तवन्त एव देहाः । प्राकृतदेहिनश्च । अतोऽस्वतन्त्रत्वान्न हन्तुं तेषां सामर्थ्यम् । नित्यत्वान्न हन्यते च । तस्माद्धन्ता हत इति मन्यमानौ न विजानीतः । यस्मादयमेव परमेश्वरः शरीरवियोगरूपेणापि न म्रियते तत्संयोगरूपेणापि न जायते जीववत्कदापि । अतः स एव स्वातन्त्रत्वात् सर्वस्य हन्ता । जीवस्तु तेन शरीरे हन्यमाने स्वयं न हन्यत इत्येतावत् ।**

***न्या०दी०***— तथापि नैतेषां वाक्यानामुक्तार्थता युक्ता । असङ्गतत्वादित्यतो 'नासतः' इत्यन्तानां सङ्गतेरुक्तत्वात् "अविनाशि तु" इत्यादीनां सङ्गतिं दर्शयन् "अविनाशि तु" इत्यस्य श्लोकस्य 'नासतः' इत्यनेन सङ्गतिं साक्षादसम्भवादवताक्रमेणाह **यस्मादिति** ॥ **एवम्भूत इति** ॥ सर्वप्रकारेणाविनाशीत्यर्थः । अस्य श्लोकस्योक्तप्रकारेण 'अनाशिनः' इति वक्ष्यमाणेनापि सङ्गतिरित्याह **अतस्तदर्थमिति** ॥ अथवा 'नासतः' इत्येतच्छेषत्वेनापि 'अनाशिनः' इत्यस्य सङ्गतिरित्यनेनोक्तम् । 'अन्तवन्तः' इत्यस्योक्तरीत्या 'अनाशिनः' इत्यनेन सङ्गतौ सिद्धायां 'नायं हन्ति' इत्यनेनापि सङ्गतिरित्याह **अन्येषामिति** ॥ प्राकृतदेहिनश्च । जीवा इति शेषः । अनेन 'शरीरिणः' इत्यस्योपयोगमाचष्टे । नित्यत्वादित्यनेन नित्यस्य इत्यस्य । अत एवास्य "न त्वेवाहम्", "देहिनाऽस्मिन्" इत्यनेन गतार्थताऽपि परिहृता भवति । "नायं हन्ति" इत्यत्र हेतुतया प्रकृतानुवादोऽयमित्याश्रयणात् । अत एवोक्तं 'नित्यस्योक्ताः' इति । "नायं हन्ति" इत्यस्य "य एनम्" इत्यनेन सङ्गतिमाह **तस्माद्धन्तेति** ॥ एतेन "नायं हन्ति" इत्येतत्पुनरुक्तम् । जीवास्वातन्त्र्यादेरुक्तत्वात् । न च "य एनम्" इत्येतदुपपादनायोक्तानुवादोऽयं, प्रमाणानुपन्यासेनोप-

पादनायोगादित्येतदपि पराकृतम् । "नायं हन्ति" इत्येतत्प्रकृतम् 'अन्तवन्तः' इत्यपेक्ष्य प्रवृत्तमित्युक्तत्वात् । मन्त्रवर्णस्य जीवेश्वरनित्यत्वमात्रोपपादकत्वोपपादकत्वमुक्तम् । "नायं हन्ति" इत्येतदुपपादकत्वेनापि सङ्गतिरित्याह **यस्मादयमेवेति** । एतेन मन्त्रवर्णस्य जीवेश्वरनित्यत्वमात्रोपपादकत्वेऽधिकविशेषणोक्तेरनुपयोग इत्येतदपरिहृतम् । जीववत् इत्यनेन 'पुराणः' इत्यस्य उपयोगं दर्शयति । "न हन्यते" इत्यस्य पूर्वार्धप्रकृतेन परमेश्वरस्यैव स्वातन्त्र्यमित्यनेन सङ्गतिमभिप्रेत्य तद्घटनाय तात्पर्यमाह **जीवस्त्विति** ॥ अनेनास्य गतार्थता परिहृता भवति ।

*भा०दी०*— **सङ्गतेरुक्तत्वादिति** । सङ्गततया प्रतिश्लोकमवतारितत्वादिति भावः ॥ **इत्येतच्छेषत्वेनेति** । नासत इत्यस्य असत्कर्मसत्कर्मभ्यां सुखदुःखे न स्त इति व्याख्यानात् इह च तत्पूजा सत्कर्मैवेत्युक्त्वा अतस्तदर्थे युद्धस्वेत्युक्तेरिति भावः ॥ **उक्तरीत्येति** । "न च जीवानां देशतो गुणतश्च पूर्णता अनिच्छया देहहान्यादेर्दुःखावाप्तिश्च सिद्धा । तस्मादनाशिनोऽप्रमेयस्य पूजार्थं युध्यस्व" इति प्रागुक्तदिशेत्यर्थः ॥ **इत्यस्येति** । उपयोगमाचष्ट इत्यनुकर्षः । अत एवेत्युक्तं हेतुं व्यनक्ति **नायमित्यादिना** ॥ **प्रकृतेति** ॥ **न त्वेवेति** । श्लोकप्रकृतजीवनित्यत्वस्य देहिनोऽस्मिन्निति प्रकृतप्राकृतदेहप्राप्तिमात्रस्य चेह शरीरिण इति नित्यस्येत्यनुवादादित्यर्थः ॥ **अत एवेति** । अनुवादादेवेत्यर्थः ॥ **उक्तत्वादिति** । अन्तवन्त इत्यादिनोक्तत्वादित्यर्थः । आदिपदेन नित्यत्वग्रहः । इत्येतत् प्रवृत्तमित्यन्वयः ॥ **अधिकविशेषणोक्तिरिति** । "न जायते म्रियते", "अजो नित्यः" इत्येतावता पूर्तेरिति भावः ॥ **गतार्थतेति** । न हन्यत इत्यनेनेति ज्ञेयम् । स्वतन्त्रेश्वरेण हन्यमाने शरीरे न हन्यत इति व्याख्यानादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**अत एवमविनाशित्वादेः स्वातन्त्र्यात् सर्वकर्तारं परमात्मानं यो वेद स कथं घातयति हन्ति वा ? वाससो जरावत् स्वशरीरजरादावस्वातन्त्र्यदर्शनात् सर्वत्रा-स्वातन्त्र्यं ज्ञातव्यं जीवस्य । ईश्वरस्य तु देहस्यापि छेदादेरभावात् स्वातन्त्र्यम् ।**

*न्या०दी०*— "वेदाविनाशिनम्" इतीश्वराविनाशित्वादेः "कथं स पुरुषः" इत्यनेन साक्षात्सङ्गतेरभावादवताक्रमेण तामाह **अत एवमिति** ॥ एतेनेश्वराविनाशित्वादेः प्रागेवोक्तत्वात्पुनरुक्तिरित्यपि परास्तम् । "कथं स पुरुषः" इत्येतदुपपादकस्वातन्त्र्योपपादनायोक्तानुवादोऽयमित्याश्रितत्वात् । 'वासांसि' इत्येतस्य प्रकृतेनेश्वरस्वातन्त्र्येणापि सङ्गतिमाह **वासस**

**इति** ॥ नैनमित्यस्य प्रकृतेन ईश्वरस्वातन्त्र्येणापि सङ्गतिमाह **ईश्वरस्येति** ॥ ज्ञातव्यमिति सम्बन्धः ।

***भा०दी०***— **अवतारक्रमेणेति** । अविनाशित्वादिनित्यदेहत्वादिना स्वातन्त्र्यावतारः तेन च सर्वकर्तृत्वावतारः तेन च कं घातयतीत्यस्य इत्येवं अवतारक्रमेणेत्यर्थः । एतेनेत्युक्तं व्यनक्ति **कथमित्यादिना** ॥ **इत्याश्रितत्वादिति** । इत्यादेर्मूले श्रवणादित्यर्थः । आदिपदेन सर्वकर्तृत्वस्य ग्रहः ॥

***न्या०दी०***— यद्वा तथापि नास्य प्रकरणस्य उभयविषयत्वं युक्तम् । उभयप्रतिपादनस्य प्रसङ्गाननुगुणत्वात् । युद्धविधानस्यैव प्रकृतत्वादतो नोभयप्रतिपादनं प्रसङ्गानुगुणम् । युद्धं कर्तव्यं, तच्चेश्वरस्यैव स्वतन्त्रत्वेन मोक्षप्रदानसमर्थत्वात्तत्पूज़ात्वेन कार्यमित्यत्राभिप्रेतम् । तत्रेश्वरस्य नित्यत्वप्रतिपादनं युद्धविधानाय शोकनिवारणार्थमुपयुज्यते । तस्य सर्वप्रकारेणाविनाशित्वादि-प्रतिपादनं च तत्पूजाविधानार्थं तस्य मोक्षदत्वसामर्थ्यसमर्थनाय स्वातन्त्र्योपपादकतया उपयुज्यते । जीवस्य नित्यत्ववर्णनं युद्धविधानाय शोकनिवारणार्थमुपयुज्यते । तस्य देहनाशादिवर्णनमपि शोकनिवारणाय परमेश्वरस्यैव स्वातन्त्र्यसिद्ध्यर्थं जीवस्यास्वातन्त्र्यप्रदर्शनायोपयुज्यते इति भावेन सर्ववाक्यान्यभिप्रेतार्थे योजयति **यस्मादेवम्भूत इति** ॥ सर्वप्रकारेणाविनाशीत्यर्थः । यस्मादेव-म्भूत इत्यविनाशित्वित्यभिमते प्रमेये योज्यम् । **अतस्तत्पूजेति नासत इति** । अतस्तदर्थमिति **अनाशिन इति** । अन्येषामिति **अन्तवन्त इति** । प्राकृतदेहिन इति **शरीरिण इति** । अत इति **नायं हन्तीति** । नित्यत्वादिति **न हन्यत इति** । तस्मादिति **य एनमिति** । यस्मादिति **न म्रियत इति** । तत्संयोगेति **नायं भूत्वेति** । जीवस्त्विति **न हन्यत इति** । अत एवमिति **वेदेति** । वासस इति **वासांसीति** । ईश्वरस्येति **नैनमिति** । यद्यप्येतद्व्याख्यानत एव सिद्धं, तथापि विप्रकीर्णतयोक्तं न मन्दबुद्धावरोहतीति पिण्डीकृत्योक्तम् ।

**गीतातात्पर्यनिर्णयः**

**नैनं छिन्दन्तीति छेदनाद्यभावः साक्षादेव दर्शयितुं शक्यते स्वदेहस्येति वर्तमानापदेशः । छेदनादिकं त्वीश्वरो मोहाय मृषैव दर्शयति ॥ २४ ॥**

***न्या०दी०***— अत्र ''नैनं छिन्दन्ति'' इति वर्तमानप्रयोगः कालान्तरच्छेदाद्यनुज्ञार्थ इत्यन्यथा-प्रतीतिनिरासायाह **नैनमिति** ॥ न कालान्तरच्छेदाद्यनुज्ञार्थं वर्तमानप्रयोगः । किन्तु मम देहे छेदादिकं

नास्तीति तत्र युक्तितया छेदादिप्राप्तिसद्भावेऽपीदानीं तदभावस्य प्रत्यक्षत एव दर्शयितुं शक्यत्वसूचनार्थमेवेति भावः । अत्रेश्वरस्वरूपस्यैव छेदाद्यभावः कथ्यते न तु देहस्यापि । देहस्य ''निशितशरैर्विभिद्यमानत्वचि'' इति तद्भावोक्तेः । अतः स्वदेहस्येति कथमुच्यत इत्यतोऽभिप्रायमाह छेदेति ॥ मृषा प्रदर्शनं किमर्थमित्यत आह **ईश्वर इति** ॥ कुतो मृषा, परमार्थत एव किं न स्यादित्यतो वाऽऽह **ईश्वर इति** । स्वतन्त्रस्य परमार्थतस्तदयुक्तमित्यर्थः ॥ २४ ॥

***भा०दी०***— **तद्भावोक्तेरिति** । प्रथमस्कन्धे नवमेऽध्याये भीष्मस्तुतौ छेदादिभावोक्तेरित्यर्थः । ॥ २४ ॥

**गीता**

## अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
## तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

***वि०वि०***— नन्वणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत् किमिति तथा न दृश्यत इत्यत आह **अव्यक्त इति** । कथमेतद्युज्यते अचिन्त्यशक्तित्वात् । न च सा शक्तिः कदाचिदन्यथा भवति अविकार्यत्वात् । यानि यान्यस्य रूपाणि तानि सर्वाण्येवम्भूतानीति दर्शयितुमेनमयमित्यादिपृथग्वचनम् । तदुक्तम्—

'प्रादुर्भावादिरूपेषु मूलरूपेषु सर्वशः ।
न विशेषोऽस्ति सामर्थ्ये गुणेष्वपि कदाचन'

इति । जीवे तु सर्वजीवेष्वनुगमार्थं पृथग्वचनम् । एवमव्यक्ताचिन्त्यादिरूपेण ज्ञातः परमेश्वरः सर्वदुःखनाशं करोतीति नानुशोचितुमर्हसि ॥ २५ ॥

***सा०सं०***— नन्वणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत् कुतस्तथा न दृश्यत इत्यत आह **अव्यक्तोऽयमिति** । अयं सर्वगतपदेन प्रकृतो हरिः । ननु 'नैनम्' इति श्लोके देहतोऽपि छेदाद्यभावात् स्वतन्त्रो हरिरित्युक्तम् । देहवान् सर्वगतश्चेत् कथमव्यक्त इत्यतः **अचिन्त्योऽयमिति** । अचिन्त्यशक्तिक इत्यर्थः । एतेन हरेरव्यक्तत्वे तद्दर्शनश्रुत्यप्रामाण्यमिति निरस्तम् । तदाह सूत्रे— ''ॐ अतोऽनन्तेन तथा हि लिङ्गं ॐ'' (३-२-२७) इति । अचिन्त्यशक्तेः प्रतिबन्धे नाशे वा तस्य प्रतीतिप्रसङ्ग इत्यत उक्तम् **अविकार्योऽयमिति** । सा शक्तिर्न कदाऽप्यन्यथा भवतीत्यर्थः । कुत

एतदच्छेद्यदेहत्वादीत्यत उक्तम् **उच्यत इति**। "सदेहः सुखगन्धश्च" इत्यादि तात्पर्योदाहृतश्रुतिषु एतत्सर्वं हरेरुच्यत इत्यर्थः। अयमिति पृथग्वचनं सर्वरूपाणामेवम्भावप्रदर्शनार्थम्। तेन 'अयमयम् अव्यक्तोऽयमयम् अचिन्त्योऽयमयम् अविकार्यो इतीदंशब्दो वीप्सारूपेणानेकरूपपरामर्शीति सूचितम्। 'नैनम्' इत्यत्रापि पूर्वश्लोके 'एनम् एनम्' इति बहुशब्दयोगेन बहुरूपपरामर्श इत्युक्तं भवति। अन्यथा नञः एनमित्यस्य च पुनः पुनरुक्तिरयुक्ता स्यादिति भावः।

एवं सर्वशङ्कोद्धारेणात्मनित्यत्वं प्रतिपाद्यसंहरति **तस्मादिति**। बिम्बोपाधितत्सन्निधिनाशनिमित्तस्य शापादिनिमित्तस्य शस्त्रास्त्रादिनिमित्तकस्य च नाशस्याभावेनात्मनो नित्यत्वादेनं जीवमेवं नित्यत्वादिना विदित्वा शोचितुं नार्हसीति। अथवा— अस्त्वेवं भगवानेव 'नित्यः सर्वगतस्थाणुः' इत्यादौ उक्तदिशा स्वतन्त्रः, ततश्च किमित्यत आह **तस्मादिति**। हरेरेव सर्वस्वतन्त्रत्वेन अखिलदुःखनिवृत्तिविशिष्टपुमर्थप्रदत्वात्, **एवं** युद्धादिस्वकर्मणाऽव्यक्तत्वादिरूपेण **एनं** भगवन्तं ज्ञात्वा **शोचितुं** संसारदुःखमनुभवितुं **नार्हसि** मुक्तो भविष्यसीत्यर्थः। अत उक्तरूपेण तं ज्ञात्वा युद्धादिस्वकर्मणा तम् आराध्याशेषदुःखं परिहरेति भावः॥ २५॥

***अ०प्र०***— अयं[१], अव्यक्तः[२], अचिन्त्यः[३], अयं[४], अविकार्यः, इति[५], उच्यते[६], श्रुतिभिः यस्मादुच्यते तस्मात्[७], एनं[८], एवं[९], विदित्वा[१०], अनुशोचितुं[११], नार्हसि[१२] इत्यन्वयः।

अयं[१], अव्यक्तः = चक्षुराद्यवेद्यविषयः[२], अचिन्त्यः = मनसो-ऽप्यविषयः[३], अयं[४], अविकार्यः इति = कर्मेन्द्रियाद्यविषयत्वादगोचर इति[५], श्रुतिभिः, यस्मात् उच्यते[६], तस्मात् नित्यसर्वगतत्वादि अविकार्यत्वादि ईश्वर-प्रतिबिम्बत्वादिहेतोः[७], एनं जीवं[८], एवं नित्यत्वेन[९], विदित्वा[१०], अनुशोचितुं = त्वं शोचितुं[११], नार्हसि = शोकं त्यक्त्वा युद्धं कुर्विति भावः[१२] ॥ २५ ॥

**भाष्यम्**

## अत एव अव्यक्तादिरूपः।

***प०टी०***— श्रवणादिना व्यक्त्यादिप्राप्नुवतो हरेः कथमव्यक्तत्वादि ? इत्यत आह **अत एवेति**। अचिन्त्यशक्तित्वादेव॥ २५॥

***न०टी०***— ननु भक्त्यैर्दृश्यत्वाद्ध्येयत्वाद्विविधावताररूपत्वाच्च भगवतः कथमसावव्यक्तोऽचिन्त्योऽविकार्यश्चेत्युच्यत उत्तरश्लोकेन ? इत्यत आह **अत एवेति**। यत एवमनाद्यनन्ता परा शक्तिरवसीयते भगवतः श्रुतिपुराणाभ्यां यतश्च क्रियावतोऽप्यचलत्वोपपत्तिः, त एवाव्यक्तत्वाद्युपपत्तिः दृश्यादिरूपस्येत्यर्थः॥ २५॥

नास्तीति तत्र युक्तितया छेदादिप्राप्तिसद्भावेऽपीदानीं तदभावस्य प्रत्यक्षत एव दर्शयितुं शक्यत्वसूचनार्थमेवेति भावः । अत्रेश्वरस्वरूपस्यैव छेदाद्यभावः कथ्यते न तु देहस्यापि । देहस्य ''निशितशरैर्विभिद्यमानत्वचि'' इति तद्भावोक्तेः । अतः स्वदेहस्येति कथमुच्यत इत्यतोऽभिप्रायमाह छेदेति ॥ मृषा प्रदर्शनं किमर्थमित्यत आह **ईश्वर इति** ॥ कुतो मृषा, परमार्थत एव किं न स्यादित्यतो वाऽऽह **ईश्वर इति** । स्वतन्त्रस्य परमार्थतस्तदयुक्तमित्यर्थः ॥ २४ ॥

***भा०दी०***— **तद्भावोक्तेरिति** । प्रथमस्कन्धे नवमेऽध्याये भीष्मस्तुतौ छेदादिभावोक्तेरित्यर्थः । ॥ २४ ॥

**गीता**

## अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
## तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

***वि०वि०***— नन्वणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत् किमिति तथा न दृश्यत इत्यत आह **अव्यक्त इति** । कथमेतद्युज्यते अचिन्त्यशक्तित्वात् । न च सा शक्तिः कदाचिदन्यथा भवति अविकार्यत्वात् । यानि यान्यस्य रूपाणि तानि सर्वाण्येवम्भूतानीति दर्शयितुमेनमयमित्यादिपृथग्वचनम् । तदुक्तम्—

'प्रादुर्भावादिरूपेषु मूलरूपेषु सर्वशः ।
न विशेषोऽस्ति सामर्थ्ये गुणेष्वपि कदाचन'

इति । जीवे तु सर्वजीवेष्वनुगमार्थं पृथग्वचनम् । एवमव्यक्ताचिन्त्यादिरूपेण ज्ञातः परमेश्वरः सर्वदुःखनाशं करोतीति नानुशोचितुमर्हसि ॥ २५ ॥

***सा०सं०***— नन्वणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत् कुतस्तथा न दृश्यत इत्यत आह **अव्यक्तोऽयमिति** । अयं सर्वगतपदेन प्रकृतो हरिः । ननु 'नैनम्' इति श्लोके देहतोऽपि छेदाद्यभावात् स्वतन्त्रो हरिरित्युक्तम् । देहवान् सर्वगतश्चेत् कथमव्यक्त इत्यतः **अचिन्त्योऽयमिति** । अचिन्त्यशक्तिक इत्यर्थः । एतेन हरेरव्यक्तत्वे तद्दर्शनश्रुत्यप्रामाण्यमिति निरस्तम् । तदाह सूत्रे— ''ॐ अतोऽनन्तेन तथा हि लिङ्गं ॐ'' (३-२-२७) इति । अचिन्त्यशक्तेः प्रतिबन्धे नाशे वा तस्य प्रतीतिप्रसङ्ग इत्यत उक्तम् **अविकार्योऽयमिति** । सा शक्तिर्न कदाऽप्यन्यथा भवतीत्यर्थः । कुत

एतदच्छेद्यदेहत्वादीत्यत उक्तम् **उच्यत इति** । ''सद्देहः सुखगन्धश्च'' इत्यादि तात्पर्योदाहृतश्रुतिषु एतत्सर्वं हरेरुच्यत इत्यर्थः । अयमिति पृथग्वचनं सर्वरूपाणामेवम्भावप्रदर्शनार्थम् । तेन 'अयमयम् अव्यक्तोऽयमयम् अचिन्त्योऽयमयम् अविकार्यो इतीदंशब्दो वीप्सारूपेणानेकरूपपरामर्शीति सूचितम् । 'नैनम्' इत्यत्रापि पूर्वश्लोके 'एनम् एनम्' इति बहुशब्दयोगेन बहुरूपपरामर्श इत्युक्तं भवति । अन्यथा नञः एनमित्यस्य च पुनः पुनरुक्तिरयुक्ता स्यादिति भावः ।

एवं सर्वशङ्कोद्धारेणात्मनित्यत्वं प्रतिपाद्यसंहरति **तस्मादिति** । बिम्बोपाधितत्सन्निधिनाश-निमित्तस्य शापादिनिमित्तस्य शस्त्रास्त्रादिनिमित्तकस्य च नाशस्याभावेनात्मनो नित्यत्वादेनं जीवमेवं नित्यत्वादिना विदित्वा शोचितुं नार्हसीति । अथवा— अस्त्वेवं भगवानेव 'नित्यः सर्वगतस्थाणुः' इत्यादौ उक्तदिशा स्वतन्त्रः, ततश्च किमित्यत आह **तस्मादिति** । हरेरेव सर्वस्वतन्त्रत्वेन अखिल-दुःखनिवृत्तिविशिष्टपुमर्थप्रदत्वात्, **एवं** युद्धादिस्वकर्मणाऽव्यक्तत्वादिरूपेण **एनं** भगवन्तं ज्ञात्वा **शोचितुं** संसारदुःखमनुभवितुं **नार्हसि** मुक्तो भविष्यसीत्यर्थः । अत उक्तरूपेण तं ज्ञात्वा युद्धादिस्वकर्मणा तम् आराध्याशेषदुःखं परिहरेति भावः ॥ २५ ॥

***अ०प्र०***— अयं[१], अव्यक्तः[२], अचिन्त्यः[३], अयं[४], अविकार्यः, इति[५], उच्यते[६], श्रुतिभिः यस्मादुच्यते तस्मात्[७], एनं[८], एवं[९], विदित्वा[१०], अनुशोचितुं[११], नार्हसि[१२] इत्यन्वयः ।

अयं[१], अव्यक्तः = चक्षुराद्यवेद्यविषयः[२], अचिन्त्यः = मनसो-ऽप्यविषयः[३], अयं[४], अविकार्यः इति = कर्मेन्द्रियाद्यविषयत्वादगोचर इति[५], श्रुतिभिः, यस्मात् उच्यते[६], तस्मात् नित्यसर्वगतत्वादि अविकार्यत्वादि ईश्वर-प्रतिबिम्बत्वादिहेतोः[७], एनं जीवं[८], एवं नित्यत्वेन[९], विदित्वा[१०], अनुशोचितुं = त्वं शोचितुं[११], नार्हसि = शोकं त्यक्त्वा युद्धं कुर्विति भावः[१२] ॥ २५ ॥

**भाष्यम्**

## अत एव अव्यक्तादिरूपः ।

***प०टी०***— श्रवणादिना व्यक्त्यादिप्राप्नुवतो हरेः कथमव्यक्तत्वादि ? इत्यत आह **अत एवेति** । अचिन्त्यशक्तित्वादेव ॥ २५ ॥

***न०टी०***— ननु भक्तैर्दृश्यत्वाद्ध्येयत्वाद्विविधावताररूपत्वाच्च भगवतः कथमसावव्यक्तो-ऽचिन्त्योऽविकार्यश्चेत्युच्यत उत्तरश्लोकेन ? इत्यत आह **अत एवेति** । यत एवमनाद्यनन्ता परा शक्तिरवसीयते भगवतः श्रुतिपुराणाभ्यां यतश्च क्रियावतोऽप्यचलत्वोपपत्तिः, त एवाव्यक्तत्वा-द्युपपत्तिः दृश्यादिरूपस्येत्यर्थः ॥ २५ ॥

*प्र०दी०*— ननु भगवान् ज्ञानिभिर्दृश्यते चिन्त्यते च । तत् कथमुच्यते 'अव्यक्तोऽयमचिन्त्योऽयं' इति । तत्राह— **अत एवेति** । अचिन्त्यशक्तित्वादेव । यथोक्तं 'अतोऽनन्तेन तथा हि लिङ्गम्' इति ॥ २५ ॥

*भा०र०*— **चिन्त्यते चेति** । चशब्देन "विविधावताररूपत्वाद् विक्रियते च" इति प्राचीनटीकारीत्या समुच्चीयते । **अव्यक्तोऽयमचिन्त्योऽयमितीति** । यद्यप्यव्यक्तादिलक्षणेश्वरसरूपत्वादित्येवमव्यक्तादिशब्दो जीवपरो न भगवद्विषयः । जीवप्रकरणविरोधात् । तथाऽपीश्वरे अव्यक्तत्वादिविशेषणाध्यवसायद्वारकत्वात् जीवविषयत्वस्येत्यभिप्रायेण टीकायामेवमाक्षेपः कृत इत्यदोषः । अव्यक्तस्वभावस्याप्यचिन्त्यशक्तियोगेन व्यक्तत्वमित्यत्र सूत्रसम्मतिमाह **यथोक्तमिति** । **अतः** अव्यक्तत्वे प्रत्यक्षत्वे च प्रमाणसद्भावात् । **अनन्तेन** अपरिच्छिन्नशक्तिकेनेशेन । तत्प्रसादेनेति यावत् । अव्यक्तस्यापि व्यक्तिर्ज्ञायते । तेनेति वाच्ये अनन्तेनेत्युक्तिः अव्यक्तस्वभावस्य प्रसादेनापि कथं प्रत्यक्षता स्यादिति न शङ्क्यम् । तस्यानन्तशक्तित्वादिति युक्तिं द्योतयितुम् । बलवद्युक्त्या चैवमेतदिति भावेनोक्तं **तथा हि लिङ्गमिति** । तथाशब्दः समुच्चये । हिर्हेतौ । "तस्याभिध्यानात्" इति श्रुत्युक्तमीशप्रसादसाध्यबन्धनिवृत्तिरूपं लिङ्गं च प्रसादहेतुप्रकाशज्ञापकं हि यस्मात् तस्मादप्येतज्ज्ञायते । "दृष्ट्वैव तं मुच्यते" इति मोक्षस्य दर्शनसाध्यत्वश्रवणात् प्रसादाद् दर्शनं, दर्शनान्मोक्ष इत्यङ्गीकरणीयत्वादिति सूत्रार्थः । अत्र पुरुषप्रयत्नेनाव्यक्तस्याप्यनन्तशक्तियोगेन प्रत्यक्षताऽपि युज्यत इत्यर्थो विज्ञायते । यथोक्तं भाष्यानुव्याख्यानयोः "नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः" इति । "अव्यक्तोऽपि स्वशक्त्यैव भक्तानां दृश्यते हरिः" इति च ॥ २५ ॥

*गीताश्लोकत्रयाक्षरार्थस्तु*— ननु यथा दक्षप्रजापतेः शिरश्छेदो न स्वतो जातः, नापि वीरभद्रस्यायुधेन निमित्तेन । किन्तु यज्ञपशुभावनाख्येन निमित्तविशेषेण । तथा स्वतः प्रायोनिमित्तैश्चाविनाशिनोऽपि केनचिच्छस्त्रादिना निमित्तविशेषेण विनाशः किं न स्यादित्यतो विशिष्टनिमित्तान्यपि नात्र सन्तीत्युच्यते **नैनमिति** । अन्वादेशे एनादेशः । "देही" इति प्रकृतं जीवम् । लट्प्रयोगश्रवणेन वर्तमानस्यैव छेदादेर्निषेधाद् इदानीं दृश्यमानत्वेन आत्मनः प्राक् विनाशाभावेऽप्युत्तरत्र शस्त्रादिना विनाशः स्यादित्याशङ्क्य छेदादियोग्यतैव आत्मनो नास्तीति प्रतिपद्यते **अच्छेद्योऽयमिति** । अयं जीवः । "अर्हे कृत्यतृचश्च" इत्यर्हार्थे कृत्यप्रत्ययस्य स्मरणात् छेदादियोग्यतैव आत्मनो नास्तीति सिद्ध्यति । "प्रवृत्ते शस्त्रसम्पाते" इति प्रसक्तौ सत्यामपि वर्तमानस्य छेदादेरदर्शनात् छेदाद्ययोग्यत्वमात्मनो युक्तमिति पूर्वश्लोकेनोक्तम् । तत्र वर्तमानच्छेदाद्यदर्शनमात्मनश्छेदाद्ययोग्यतायां किं निश्चययुक्तिरुत सम्भावना ? नाद्यः, कदाचिददृष्टस्यापि पश्चाद् दर्शनात् ।

द्वितीये तु कुतोऽयोग्यता निश्चेयेत्याशङ्क्य नित्यसर्वगतत्वादिविशेषणेश्वरसरूपत्वादिति निश्चययुक्तिं वक्तुं प्रतिबिम्बे बिम्बसमानधर्माणामविरुद्धानां सम्भवादिति भावेनोच्यते **नित्यः सर्वगतस्थाणुरचलोऽयं सनातन इत्यादिना** । पुनरुक्तिभयात् सामर्थ्याद् भिन्नपदोपात्तमपि नित्यत्वं विशिष्टस्य विशेषणं विशेषणमुपसङ्क्रामति । सन्निधानाच्च सर्वगतत्वमेव नित्यम् । सर्वेषु शस्त्रपावकादिषु स्थितः सर्वगतः । स्थाणुः नैमित्तिकविकाररहितः । अनाद्यनन्तशक्तित्वादचलादिः । ईश्वरस्य तावच्छेदाद्ययोग्यत्वं सिद्धम् । नित्यसर्वगतत्वादिविशेषणत्वात् । न ह्येवम्भूतस्य छेदादिकं सम्भवति । ईश्वरस्यैवम्भावोऽस्तु । जीवस्य तु कुतः ? तथाविधेश्वरप्रतिबिम्बत्वादिति चेन्न । यो यत्प्रतिबिम्बः स तद्धर्मेति नियमाभावादिति । मैवम् । यो यत्प्रतिबिम्बः सोऽसति विरोधे तद्धर्मेति व्याप्तेरत्राभिप्रेतत्वात् । नित्यसर्वगतत्वादिलक्षणेश्वरसरूपत्वात् प्रतिबिम्बस्य छेदाद्ययोग्यत्वं युक्तमिति भावः ।

एवं सर्वशङ्कोद्धारेण आत्मनित्यत्वं प्रतिपाद्योपसंह्रियते **तस्मादिति** । बिम्बोपाधितत्सन्निधिनाशनिमित्तस्य शापादिनिमित्तस्य शस्त्रादिनिमित्तविशेषकस्य च नाशस्याभावेन आत्मनो नित्यत्वादेनं जीवम् एवं नित्यत्वादिना विदित्वा नानुशोचितुमर्हसीति ॥ २५ ॥

**गीतातात्पर्यनिर्णयः**

**सर्वगतश्चेत्परमात्मा किमिति तथा न दृश्यत इत्यतो वक्ति । अव्यक्तोऽयमिति । कथमेतद्युज्यते ? अचिन्त्यशक्तित्वात् । न च सा शक्तिः कदाचित् अन्यथा भवति । अविकार्यत्वात् । यानि यान्यस्य रूपाणि तानि सर्वाण्यप्येवंभूतानीति दर्शयितुमेनमयमित्यादिपृथग्वचनम् । जीवे तु सर्वजीवेष्वनुगमार्थम् ।**

***प्रका०***— नैनं छिन्दन्तीत्यत्राव्यक्तोऽयमित्यत्रेश्वरविषयस्य एनमेनमिति अयमयमिति बहुशः प्रयोगस्याच्छेद्योऽयमदाह्योऽयमिति जीवविषयस्य बहुप्रयोगस्य अर्थमाह **यानि यानीत्यादिना** ।

***न्या०दी०***— 'अव्यक्तोऽयम्' इतीश्वरविषयमित्युक्तम् । तत्रेश्वरस्याव्यक्तत्वादिकथने का सङ्गतिरित्यतः 'सर्वगतस्थाणुः' इति परमात्मनः सर्वगतत्वमभिहितम् । तत्रेश्वरस्य देहोऽस्ति न वा ? आद्ये देहिनः सर्वत्र वर्तमानस्य सर्वत्र दर्शनं स्यात् । द्वितीये शरीरच्छेदादिनिरासो न युक्त इत्याशङ्कानिरासायाद्यपदमवतारयति **सर्वेति** ॥ देहित्वेऽव्यक्तत्वं कथं युज्यत इत्याशङ्क्य तत्परिहारत्वेनाचिन्त्यपदं व्याचष्टे **कथमिति** ॥ अचिन्त्यशक्तेः प्रतिबन्धे नाशे वा सति प्रतीतिप्रसङ्ग इत्याशङ्कापरिहारायाविकार्यपदं व्याचष्टे **न चेति** ॥ नन्वेकेनैव शब्देन पूर्तेः किमर्थं नैनमित्यत्र

प्रति प्रत्येनमिति वचनम् । "अव्यक्तोऽयम्" इत्यत्र प्रतिविशेषणम् "अयम्" इति वचनं च किमर्थमित्यत आह **यानीति** ॥ आदिपदेन नञो ग्रहणम् । अनेन प्रतिविशेषणमपि वीप्सारूपेण "एनम्" इत्यादिबहुशब्दयोजनां सूचयति । एवं चेज्जीवस्य बाहुल्याभावात् "अच्छेद्योऽयम्" इति पृथग्वचनं व्यर्थमित्यत आह **जीवे त्विति** ॥ जीवे पृथग्वचनमिति शेषः ।

*भा०दी०*— **शरीरच्छेदादिनिरास इति** । नैनमिति श्लोक इति भावः ॥ **प्रतिविशेषणमपीति** । न छिन्दन्ति, न दहतीत्युक्तच्छेदाभावादाहाभावादिप्रतिविशेषणं अपि एनमितिपदं वीप्सारूपेण एनमेनं इत्येवंरूपेण बह्वेतच्छब्दयोगेन तथा अयमयमिति बह्विदंशब्दयोगेन योजनां सूचयतीत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**सर्वं चैतत् श्रुतिसिद्धम् ।**

*न्या०दी०*— नन्वीश्वरस्य देहवत्त्वं, तस्य च देहस्य छेदादिराहित्यं एवम्भावश्च सर्वरूपाणामित्येतत्कुत इत्यत उक्तम् । "उच्यते" इति पदं व्याचष्टे **सर्वमिति** ॥

**गीतातात्पर्यनिर्णयः**

**"सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।**
**ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः ।"**

**—इति पैङ्गिश्रुतिः ।**

*प्रका०*— यद्यद्रूपं तत्तद्भौतिकं देहवता भिन्नं च लोके दृष्टम् । न तथा भगवन्मूर्तिरित्येतच्छ्रुतिभिः प्रतिपादयति **सद्देह इति** । अनेन भगवतो मूर्तत्वामूर्तत्वश्रुत्योर्विरोधः परिहृतो भवति ।

*न्या०दी०*— कास्ताः श्रुतय इत्यत आह **सदिति** ॥ छेदादिदोषरहितो देहो यस्यासौ सद्देहः । सुखगन्धः पुण्यगन्धः । सुखात्मकगन्धो वा । ज्ञानज्ञान इत्यादेरतिशयितज्ञानादिमानित्यर्थः ।

*भा०दी०*— "ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः" इति श्रुतिशेषे पदद्वयस्यार्थमाह **ज्ञानज्ञान इत्यादेरिति** ॥

**गीतातात्पर्यनिर्णयः**

**"अदेहो देहवांश्चैकः प्रोच्यते परमेश्वरः ।**
**अप्राकृतशरीरत्वात् अदेह इति कथ्यते ।**

शिरश्चरणबाह्वादिविग्रहोऽयं स्वयं हरिः ।
स्वस्मान्नान्यो विग्रहोऽस्य ततश्चादेह उच्यते ।
स्वयं स्वरूपवान् यस्माद्देहवांश्चोच्यते ततः ।
शिरश्चरणबाह्वादिः सुखज्ञानादिरूपकः ।
स च विष्णोर्न चान्योऽस्ति यस्मात्सोऽचिन्त्यशक्तिमान् ।
देहयोगवियोगादिस्ततो नास्य कथञ्चन ।
गुणरूपोऽपि भगवान् गुणभुक् च सदा स्मृतः ।
अहमित्यात्मभोगो यत्सर्वेषामनुभूयते ।''

*न्या०दी०*— नन्वीश्वरस्य देहसद्भावे श्रुतिविप्रतिपत्तेस्तत्सन्देह एव स्यात् कुतो निश्चयस्तद्भावस्य इत्यतः श्रुत्यन्तरेण तद्व्यवस्थां दर्शयति **अदेह इति** ॥ **स्वरूपवान्** स्वरूपभूतदेहवान् । सुखज्ञानादिरूपकः । अस्तीति सम्बन्धः । ततश्च देहवानुच्यत इत्यनुषज्यते । देहदेहिनोरैक्यम् अन्यत्रादृष्टं कथं युज्यत इत्यत आह **स चेति** ॥ ननु सुखज्ञानादिरूपो देहो विष्णोरनन्यश्चेत् तदा तस्य सुखादिगुणरूपत्वं प्रसज्यते । न च तद्युज्यते । ''आनन्दभुक्'' इत्यादावानन्दभोक्तृत्वस्योक्तत्वात् । एकस्य च भोक्तृभोग्यभावादर्शनादित्यत आह **गुणेति** ॥

*भा०दी०*— **श्रुतीति** । ''अरूपमव्ययम्'', ''अशरीरः प्रज्ञात्मा'' इत्यादिश्रुतिविगानादेवेत्यर्थः । ''स च'' इति पृथगारम्भाद्वाक्यसमास्यर्थमाह **अस्तीतिसम्बन्ध इति** ।

**गीतातात्पर्यनिर्णयः**

''अभिन्नेऽपि विशेषोऽयं सदाऽनुभवगोचरः ।''

*न्या०दी०*— दृष्टोप्ययमभिन्ने भोक्तृभोग्यभावः किन्निमित्त उपपद्यत इत्यत आह **अभिन्नेऽपीति** ॥ अस्ति । तेनाभिन्नेऽपि भोक्तृभोग्यभाव उपपद्यत इति शेषः । विशेषसद्भाव एव कुत इत्यत आह **अयमिति** ॥

*भा०दी०*— विशेषपदानन्तरमस्तीत्यादिपदाध्याहारेण योजनामाह **अस्तीत्यादिना** ॥

**गीतातात्पर्यनिर्णयः**

**"विशेषोऽपि हि नान्योऽतः स च स्वस्यापि युज्यते ।**
**नानवस्था ततः क्वापि परमैश्वर्यतो हरेः ।**
**युक्तायुक्तत्वमपि हि यदधीनं सदेष्यते ।**
**प्रमाणावगते तत्र कुत एव ह्ययुक्तता ॥" इत्यादि परमश्रुतिः ।**

*न्या०दी०*— नन्वयं विशेषो विशेषितोऽन्योऽनन्यो वा ? आद्ये भेदपरम्परयाऽनवस्था । द्वितीये विशेषविशेषिभावव्यवहारायोगः । तत्रापि विशेषाङ्गीकारेऽनवस्थेत्यत आह **विशेषोऽपीति** ॥ विशेषो विशेषितोऽनन्य इति न भेदपरम्परयाऽनवस्था । स एव विशेषो यथाऽभिन्नेऽपि वस्तुनि भोक्तृभोग्यभावनिर्वाहकः तथा विशेषितो भेदरहितस्यापि स्वस्य विशेषत्वं, विशेषिणो विशेषित्वं च निर्वहतीति न विशेषपरम्परयाऽप्यनवस्था इत्यर्थः । इतोऽप्येकस्यैव हरेर्भोक्तृभोग्यभावो युक्त इत्याह **परमेति** ॥ अभिन्नस्यैव स्वस्य भोक्तृभोग्यभावे अनुपपत्तिं परिहर्तुं हरेरैश्वर्यं कुत इत्यत आह **युक्तेति** ॥ युक्तायुक्तत्वं वस्तुनोरिति शेषः । **तत्र** ईश्वरे । तर्हीश्वरे दुःखित्वाद्यपि कल्प्यताम् अयुक्त्य-भावादित्यत उक्तम् **प्रमाणेति** ॥ एकस्यैव भोक्तृभोग्यत्वादिकं प्रमाणावगतत्वाद्विरुद्धमप्यैश्वर्यबला-दङ्गीकार्यं नान्यत् । तस्याप्रामाणिकत्वादिति भावः ।

*भा०दी०*— **विशेषित इति** । विशेषवत इत्यर्थः ॥ **भेदपरम्परयेति** । विशेषविशेषिणोर्भेदः स्वाश्रयाभ्यां विशेषविशेषिभ्यां भिन्नः । सोऽपि भेदः स्वाश्रयभूतभेदिभ्यां भिन्न इत्येवं भेद-परम्परयेत्यर्थः । **तत्र** इत्यनुवादः **ईश्वर** इति व्याख्या ।

**गीतातात्पर्यनिर्णयः**

**"गुणाः श्रुताः सुविरुद्धाश्च देवे**
**सन्त्यश्रुता अपि नैवात्र शङ्का ।**
**चिन्त्या अचिन्त्याश्च तथैव दोषाः**
**श्रुताश्च नाङ्गैर्हि तथा प्रतीताः ॥"**

**इत्यादि च ऋग्वेदे सौपर्णशाखायाम् ।**

*न्या०दी०*— एकस्यैव भोक्तृभोग्यभावादिगुणा एवेश्वरस्य प्रामाणिका न दुःखादिदोषा इत्यत्र श्रुत्यन्तरं चाह गुणा इति ॥ कथं न दोषाः श्रुताः ? ''जनितोत विष्णोः'' इत्यादौ प्रतीतेरित्यत आह **अज्ञैरिति** ॥

**गीतातात्पर्यनिर्णयः**

**''एकमेवाद्वितीयम् ।'' ''नेह नानास्ति किञ्चन ।''**
**''मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।''**
**''यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावति ।''**

*प्रका०*— प्राकृतमूर्तिनिषेधेन ''दिव्यो ह्यमूर्तः पुरुष'' इत्यादिश्रुतेः सावकाशत्वात् ॥ मूर्तितदवयवतद्गुणादिरूपेण भगवति नाना नास्तीत्येतदुच्यते **एकमेवाद्वितीयमित्यादिना** ।

*न्या०दी०*— प्रकृतगुणानां भगवताऽभेदे, सर्वाण्यपि रूपाण्येवंविधानीत्यत्र च श्रुतीराह **एकमिति** ॥ **एकम्** एकत्वसङ्ख्यायोगि । **एव** इति अवयवादिभेदनिराकरणम् । **अद्वितीयं** समाभ्यधिकरहितम् । किञ्चन **नानेति** रूपावयवगुणकर्मभेदः । तर्हि भेदाभेदौ स्यातामित्यत आह **मृत्योरिति** ॥ मृत्योः मृत्युं तम आप्नोति । **नानेव** इति भेदाभेदौ । भेददर्शिनि कोऽनर्थ इत्यत आह **यथेति** ॥ यथा पर्वतेषु दुर्गे शिखरे वृष्टमुदकम् अधो विधावति एवं गुणादीन् भिन्नान् पश्यन् तान् दृष्टाननु तेषामेव दर्शनान्तरमधो विधावतीत्यर्थः ।

*भा०दी०*— एवेत्यनेन अपौनरुक्त्याय आह **एकत्वसङ्ख्यायोगीति** । अन्वयमुखेनानुवदति **किञ्चन नानेति** ॥

**गीतातात्पर्यनिर्णयः**

**''मत्स्यकूर्मादिरूपाणां गुणानां कर्मणामपि ।**
**तथैवावयवानां च भेदं पश्यति यः क्वचित् ।**
**भेदाभेदौ च यः पश्येत् स याति तम एव तु ।**
**पश्येदभेदमेवैषां बुभूषुः पुरुषस्ततः ।**
**अभेदेऽपि विशेषोऽस्ति व्यवहारस्ततो भवेत् ।**

**विशेषिणां विशेषस्य तथा भेदविशेषयोः ।**
**विशेषस्तु स एवायं नानवस्था ततः क्वचित् ।**
**प्रादुर्भावादिरूपेषु मूलरूपेषु सर्वशः ।**

*प्रका०*— महापुराणवचनमप्यस्मिन्नर्थे दर्शयति **मत्स्यकूर्मेति** । भगवतो देहतदवयवतद्गुणानां परस्परमभेदेऽपि विशेषबलादेवंविधविविधव्यवहारः सिद्ध्यति । भगवद्देह-तदवयव-तद्गुणादिभ्यो विशेषिभ्यस्तदभेदश्च । तस्य निर्विशेषस्य प्रतीयमानो विशेषस्तु नान्यः । स्वनिर्वाहकत्वाद्विशेषस्य । अत एव विशेषपरम्परया नानवस्थेत्युच्यते **अभेदेऽपीत्यादिना** ।

*न्या०दी०*— सर्वाद्वैतपराः श्रुतय एता इत्यतः ताः स्मृत्यैव व्याचष्टे **मत्स्येति** ॥ अत्यन्ताभेदे व्यवहारभेदः किंनिमित्त इत्यत आह **अभेदेऽपीति** ॥ यद्यभिन्नेषु गुणादिविशेषेषु विशेषो वर्तते तर्हि विशेषिणां विशेषस्य तथाभेदविशेषयोः भेदोऽभेदो वा । आद्येऽनवस्था । द्वितीये व्यवहारविशेषायोगः । तत्रापि विशेषाङ्गीकारेऽनवस्थैवेत्यत आह **विशेषिणामिति** ॥ विशेषिणां विशेषस्य तथाभेदविशेषयोः भेदाभावान्न भेदपरम्परयाऽनवस्था । न च व्यवहारविशेषानुपपत्तिः । यतस्तत्र विशेषोऽङ्गीक्रियते । न चैवं विशेषपरम्परयाऽनवस्था । य एव विशेषोऽभिन्नेष्वपि गुण-गुण्यादिषु व्यवहारभेदनिर्वाहकः स एव विशेषो विशेषविशेष्यादिव्यवहारभेदनिर्वाहक इत्यङ्गीकारादित्यर्थः । मत्स्यादीनामभेदेऽपि इन्द्रार्जुनादिवत् तारतम्यमपि नास्तीत्याह प्रादुर्भावेति ॥

*भा०दी०*— **श्रुतय एता इति** । एकमेवेत्यादयः श्रुतय इत्यर्थः । अभेदविशेषयोरिति पदविभागः ॥ **विशेषविशेष्यादीति** । अयं विशेषोऽयं विशेषीत्यादिव्यवहारेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**न विशेषोऽस्ति सामर्थ्ये गुणेष्वपि कदाचन ।**
**मत्स्यकूर्मवराहाश्च नृसिंहवटुभार्गवाः ।**
**राघवः कृष्णबुद्धौ च कल्किव्यासैतरेयकाः ।**
**दत्तो धन्वन्तरिर्यज्ञः कपिलो हंसतापसौ :**
**शिंशुमारो हयास्यश्च हरिः कृष्णश्च धर्मजः ।**

नारायणस्तथेत्याद्याः साक्षान्नारायणः स्वयम् ।
ब्रह्मरुद्रौ शेषविपौ शक्राद्या नारदस्तथा ।
सनत्कुमारः कामभवोऽप्यनिरुद्धो विनायकः ।
सुदर्शनाद्यायुधानि पृथ्वाद्याश्चक्रवर्तिनः ।
इत्याद्या विष्णुनाऽविष्टा भिन्नाः संसारिणो हरेः ।
तेष्वेव लक्ष्मणाद्येषु त्रिष्वेवं च बलादिषु ।
नरार्जुनादिषु तथा पुनरावेश उच्यते ।
स्वल्पस्तु पुनरावेशो धर्मपुत्रादिषु प्रभोः ।
एतज्जानाति यस्तस्मिन् प्रीतिरभ्यधिका हरेः ।
सङ्करज्ञानिनस्तत्र पातस्तमसि च ध्रुवम् ॥"

—इत्यादि महावाराहे ॥ २५ ॥

*प्रका०*— यः पूर्वं विशेषो निर्दिष्टः स एव, नर-लक्ष्मण-बलभद्रत्वेनावतीर्णः । यः सनत्कुमारात्मकः कामः सुदर्शनरूपेण निर्दिष्टः, स एव भरतत्वेन प्रद्युम्नत्वेन, यः अनिरुद्धः स एव शत्रुघ्नत्वेन प्रद्युम्नादनिरुद्धत्वेनावतीर्णः । यः शक्रो निर्दिष्टः स एवार्जुनत्वेनावतीर्णः । एतेषु त्रिषु विष्णोः पुनरावेश इत्येतदुच्यते **तेष्विति** ॥ २५ ॥

*न्या०दी०*— के ते मत्स्यादयः प्रादुर्भावा इत्यत उक्तमेव विवृणोति **मत्स्येति** । ब्रह्मादयोऽपि भगवदवतारत्वेनान्यत्रोच्यन्ते । ते हि किमत्रादिशब्देन गृहीता उतानवतारा एवेत्यपेक्षायामाह **ब्रह्मेति** ॥ तर्ह्यवतारत्वोक्तेः का गतिरित्यत आह **विष्णुनेति** ॥ आवेशविशेषवत्तया तदुक्तिरित्याशयः । साक्षादवतारा एव किं न स्युरित्यत आह संसारिण इति ॥ **तेष्वेवेति** ॥ शेषसनत्कुमारानिरुद्धशक्रयमाश्विषु लक्ष्मणभरतशत्रुघ्नबलप्रद्युम्नानिरुद्धनरार्जुनयुधिष्ठिरनकुलसहदेवत्वेन जातेष्वित्यर्थः । अर्जुनादिचतुर्षु नैकप्रकारावेश इत्याह **स्वल्प इति** ॥ अवताराणामनवतारत्वेनानवताराणामवतारत्वेन ज्ञानं सङ्करज्ञानम् ॥

*भा०दी०*— **लक्ष्मणेत्यादि** । रामावतारे शेषसनत्कुमारानिरुद्धाः लक्ष्मणभरतशत्रुघ्नत्वेन, कृष्णावतारे बलप्रद्युम्नानिरुद्धत्वेन, शेषो नरत्वेन, शक्रादयोऽर्जुनादित्वेन च जातास्तेष्वित्यर्थः ॥

**गीता**

## अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
## तथाऽपि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥

*वि०वि०*— अस्त्वेवमात्मनो नित्यत्वं तथापि देहसंयोगवियोगात्मकजनिमृतीस्त एव तन्निमित्तं च दुःखं मदीयानां भविष्यतीति मे शोक इत्यत आह **अथ चेति** ।

'नित्यं सनातनं प्रोक्तं नित्यं नियतमेव च ।'

इत्यभिधानात् । अत्र नित्यशब्देन नियतं गृह्यते । 'जातस्य हि ध्रुवः' इति प्रकाशनात् । यदि यावन्मोक्षं जीवस्य जन्ममरणे नियते इति स्वयमेव मन्यसे तथापि तावन्मात्रेणापि ज्ञानेन शोचितुं नार्हसि ॥ २६ ॥

*वा०ल०*— 'अथ चैनं नित्यजातम्' इत्यत्र नित्यजातं स्वरूपतो नित्यं देहतो जातम् । स्वरूपतो नित्यं देहमादाय मृतम् ॥ २६ ॥

*सा०सं०*— अस्त्वेवम् आत्मनो नित्यत्वम्, अथापि देहयोगवियोगरूपजन्ममृती स्त एव । युद्धे च मृतिर्नियता । अतः तन्निमित्तं च दुःखं मदीयानां भविष्यतीति मे शोक इत्यत आह **अथ चेति** । **नित्यशब्दोऽत्रावधारणे** । **एनं** जीवं **नित्यजातं** देहयोगरूपजनिमन्तमेव **नित्यं मृतं** देहवियोगरूपमृतिमन्तमेव **त्वं मन्यसे** चेत्, **तथाऽपि** हे **महाबाहो एनं** जीवं **शोचितुं नार्हसी**त्यर्थः ॥ २६ ॥

*अ०प्र०*— तदेवमात्मनो जन्मविनाशाभावान्न शोकः कार्य इत्युक्तं इदानीं देहेन सहात्मनो जन्म तद्विनाशेन विनाशमङ्गीकृत्यापि शोको न कार्य इत्याह **अथ चेति** ।

हे महाबाहो[१], अथ च[२], एनं[३], नित्यजातं[४], नित्यं[५], मृतं वा[६], मन्यसे [७], तथाऽपि त्वं[८], एवं शोचितुं[९], नार्हसि[१०] इत्यन्वयः ।

हे महाबाहो ![१], अथ च = यद्यपि[२], एनं = आत्मानं[३], नित्यजातं = नियमेन देहसंयोगवन्तम्[४], नित्यं मृतं वा नियमेन देहवियोगवन्तं वा[६], मन्यसे देहे जाते जातं, देहे मृते मृतं मन्यसे[७], तथापि त्वं पुण्यपापयोः तत्फलभूतयोः जन्ममरणयोः आत्मगामित्वात् तथापि त्वं = तावन्मात्रेणापि ज्ञानेन[८], एवं शोचितुं नार्हसि ॥ २६ ॥

### भाष्यम्

**अस्त्वेवमात्मनो नित्यत्वं, तथाऽपि देहसंयोगवियोगात्मकजनिमृती स्त एवेत्यत आह— अथ चेति ॥ २६ ॥**

***प०टी०***— नन्वेवं सर्वप्रकारेण नित्यस्यापि जीवस्य देहसंयोगवियोगाख्यनाशाच्छोक इत्यादौ जीवपरिहारत्वेनोत्तरश्लोकत्रयं क्रमेणावतारयति **अस्त्वेवमिति** ॥ २६ ॥

***न०टी०***— ननूक्तप्रकारेणात्मनित्यत्वेऽपि देहवियोगात्मकमरणाच्छोको देहाभिमानिनां स्यादित्याशङ्क्य तदुत्तरत्वेनोत्तरश्लोकत्रयं क्रमेणावतारयति **अस्त्वेवमिति** ॥ २६ ॥

***प्र०दी०***— ननु सर्वशङ्कोद्धारेणात्मनित्यत्वं प्रतिपाद्य 'तस्मादेवं' इत्युपसंहृतम् । तत्किं 'अथ च' इति पुनरुच्यत इत्यतोऽङ्गीकृत्यात्मनित्यत्वं प्रकारान्तरेण शोकशङ्कयमित्याशयवानाह— **अस्त्वेवमिति** । युद्धे च मृतिर्नियता । जनिमृतिनिमित्तं च दुःखं मदीयानां भविष्यतीति मे शोक इति शङ्काशेषः । अनेन पूर्वार्धोऽपि व्याख्यातः । अत एव देहसंयोगवियोगात्मकजनिमृती इत्युक्तम् । अन्यथा देहसंयोगवियोगावित्येव वा जनिमृती इत्येव वा ब्रूयात् । 'स्त एव' इत्यनेन नित्यशब्दोऽवधारणार्थ इत्युक्तम् । अस्त्वेवमात्मनो नित्यत्वमिति वदता 'आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते' इति मायावादिनो व्याख्यानं निरस्तं भवति । 'ध्रुवं जन्म मृतस्य' इत्युत्तरवाक्यविरोधात् । 'अव्यक्तादीनि' इत्यनेनापि विरोधात् ॥ २६ ॥

***भा०दी०***— **पूर्वार्ध इति** । अथ चैनमिति पूर्वार्ध इत्यर्थः । **अन्यथेति** । जातमृतपदव्याख्यापरत्वाभाव इत्यर्थः ॥ २६ ॥

***भा०र०***— **पुनरुच्यत इति** । ''नानुशोचितुमर्हसि'' इति समनन्तरश्लोकोक्तस्य ''नैनं शोचितुमर्हसि'' इति पुनः श्रवणादिति भावः । ''स्त एव'' इत्यनन्तरं किञ्चातः प्रकृते इति शङ्कापरिहाराय शेषं पूरयति **युद्धे च मृतिर्नियतेति** । साधारणमृत्यनन्तरं जन्मापि नियतमिति जनिग्रहणम् । **अनेन** गमनिकाभाष्येण । **पूर्वार्धः** ''अथ चैनं नित्यजातम्'' इति पूर्वार्धः । व्याख्याने उपष्टम्भकमाह **अत एवेति** । जातमृतपदयोर्व्याख्यातव्यत्वादेवेत्यर्थः । तद्व्याख्यापरत्वाभावे बाधकमाह **अन्यथेति** । श्लोकावतारमात्राभिप्रायत्वे । निरासे युक्तिमाह **ध्रुवमिति** । ''ध्रुवं जन्म मृतस्य च'' इत्युत्तरवाक्ये मरणं प्रति यो धर्मी तस्यैव जन्मोक्त्या नित्यत्वावगमेन तद्विरोधादनित्यत्वाभ्युपगम आत्मनो न युक्त इत्यर्थः । **अव्यक्तादीनीत्यनेनापीति** । अव्यक्तं प्रधानमादिर्देहोत्पत्ति-

कारणं येषां तान्यव्यक्तादीनि । अव्यक्ते प्रधाने निधनं देहलयो येषां तान्यव्यक्तनिधनानीत्यत्र देहयोगलक्षणं जन्म तद्वियोगलक्षणं मरणं चोच्यते । आत्मनित्यत्वे च स्वरूपोत्पत्तिविनाशसम्भवेन देहयोगविलक्षणोत्पत्तिमरणकथनविरोधश्च स्यादित्यर्थः ॥ २६ ॥

**गीतातात्पर्यनिर्णयः**

**तिष्ठतु तावदयं विस्तारः । यावन्मोक्षं जीवस्य जन्ममरणे स्वयमेव मन्यसे न तु नियमेन । तथापि तावन्मात्रेणापि ज्ञानेन शोचितुं नार्हसि ।**

**"नित्यं सनातनं प्रोक्तं नित्यं नियतमेव च ॥"**

**—इति शब्दनिर्णये ।**

**अत्र तु नियतम् । "जातस्य हि ध्रुव" इति प्रकाशनात् ॥ २६ ॥**

*प्रका०*— अथ चैनमित्येतद्व्याचष्टे **तिष्ठत्वित्यादिना** ॥ २६ ॥

*न्या०दी०*— एवं स्वयं युक्तीरुक्त्वा शोको न कार्य इत्युक्तम् । तत्र देहनाशस्यावश्यम्भावित्वं यदुक्तं तन्नास्माभिः साध्यमपि तु भवतोऽपि सिद्धम् । तेनैव शोको न कार्य इत्युच्यते "अथेति" । तत्र मुक्तस्यापि जननमरणसद्भावं पराकुर्वन्नेव श्लोकं व्याचष्टे **तिष्ठत्विति** ॥ "अथ च" इत्यस्यार्थस्तिष्ठत्विति । तथापीत्यनूद्य तावन्मात्रज्ञानेनापीति व्याख्यानम् । नित्यपदस्य नियमवाचित्वे मानाभावात् कथं नियमेनेति व्याख्येत्यत आह **नित्यमिति** ॥ एवं नित्यपदस्योभयार्थत्वे नियमार्थग्रहणे को हेतुरित्यत आह **अत्र त्विति** ॥ एतच्छ्लोकार्थविवरणात्मकोत्तरश्लोके नित्यपदस्य ध्रुव इति विवृतत्वात् इत्यर्थः ॥

*भा०दी०*— **स्वयमिति** । कृष्णेन जीवचितो नित्यत्वाद्देहनाशस्यावर्जनीयत्वात् जीर्णपातस्य समीचीनलाभेन समाधानादित्यादियुक्तीरुक्त्वेत्यर्थः ॥

**गीता**

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥**

*वि०वि०*— कुतोऽशोक इत्यतो नियतत्वादित्याह **जातस्येति** ॥ २७ ॥

***सा०सं०***— पूर्वार्धेन अर्जुनशङ्कामनूद्य उत्तरार्धेन 'तथाऽपि त्वं न शोचितुम् अर्हसि' इत्येवोक्तम् । न तु तत्र हेतुरुक्तः । अतः शोकाभावे हेत्वाकाङ्क्षायां जन्ममरणयोः यावन्मोक्षं नियतत्वादिति हेतूक्तिपूर्वं साध्यमाह **जातस्येति । ध्रुवो** नियत इत्यर्थः । **मृत्युर्मृतिः । तस्मात्** जन्ममृत्योर्नियतत्वादित्यर्थः ॥ २७ ॥

***अ०प्र०***— कुत इत्यत आह **जातस्येति** ।

हे पार्थ ![१], हि = यस्मात्[२], जातस्य[३], मृत्युः[४], ध्रुवः[५], मृतस्य च[६], जन्म[७], ध्रुवं[८], तस्मात्[९], अपरिहार्ये[१०], अर्थे[११], त्वं[१२], शोचितुम्[१३], नार्हसि[१४] इत्यन्वयः ।

हे पार्थ ! हि = यस्मात् जातस्य = देहयोगवतः पुंसः स्वारम्भकर्मक्षये[३], मृत्युः = देहवियोगः[४], ध्रुवः = नियतः[५], मृतस्य च = देहवियोगवतः पुंसः तत्तद्देहकृतेन कर्मणा[६], जन्म ध्रुवं = जन्मापि ध्रुवमेव = देहसंयोगवियोगौ नियत एव[७], यावन्मोक्षं कर्माद्यधीनत्वाज्जन्ममरणे यस्मान्नियतः तस्मात्[८], एवं अपरिहार्येऽर्थे = अवश्यम्भाविनि जन्ममरणलक्षणेऽर्थे[१०,११], त्वं = विद्वान्[१२], शोचितुं[१३], नार्हसि = योग्यो न भवसि[१४] इत्यर्थः ॥ २७ ॥

**भाष्यम्**

**कुतोऽशोकः ? नियतत्वादित्याह— जातस्येति ॥ २७ ॥**

***प०टी०***— 'देहिनोऽस्मिन्' इत्यत्र देहनाशाच्छोकः परिहृतः ॥ २७ ॥

***प्र०दी०***— अनेनैवाभिप्रायेणैतदेकवाक्यतयोत्तरं श्लोकद्वयं क्रमेणावतारयति **कुत इति** । शङ्कामनूद्य ''तथापि त्वं न शोचितुमर्हसि'' इत्युक्तम् । तत्र को हेतुरित्यर्थः ॥ २७ ॥

***भा०दी०***— **शङ्कामनूद्येति** । अथ चैनमिति पूर्वार्धेनेति योज्यम् । **इत्युक्तमिति** । उत्तरार्धेनोक्तमित्यर्थः ॥ २७ ॥

***भा०र०***— **अनेनैवेति** । ''अस्त्वेवमात्मनो नित्यत्वम्'' इत्यात्मनित्यत्वमङ्गीकृत्यैव प्रकारान्तरेण शोकशङ्केत्युक्ताभिप्रायेणैवेत्यर्थः । **एतदेकवाक्यतयेति** । उक्तार्थे हेतुसमर्पकतया ''नानुशोचितुमर्हसि'' इत्यनेनैकवाक्यतयेत्यर्थः । अनूद्य ''अथ चैनम्'' इत्यर्धेन । भाष्ये अशोकः कुतः प्राप्त इत्यत उक्तं **तथाऽपि त्वमिति** ॥ २७ ॥

**गीतातात्पर्यनिर्णयः**

**तस्मान्नात्राश्चर्यबुद्धिः कर्तव्या ॥ २७ ॥**

*न्या०दी०*— जननमरणनियमोऽत्र शोकनिवारणे हेतुतयोक्तः स्फुटं प्रतीयते । प्रागभिप्रेते जीवस्यास्वातन्त्र्ये च हेतुतयाऽभिमत इति भावेनाऽऽह **तस्मादिति** ॥ तस्मात् जननादिनियमवत्त्वादेव । अत्र जीवे स्वातन्त्र्यबुद्धिश्च न कार्येत्यर्थः ॥

*भा०दी०*— अथ चेदिति श्लोके न कार्य इत्यत्र को हेतुरुक्त इत्यतस्तं वदन् स हेतुरन्यत्रापि प्रवर्तत इति मूलार्थमाह **जननमरणनियमोऽत्रेति** ॥ अथ चेदिति श्लोक इत्यर्थः । यद्वाऽत्रेति अथ चेदिति श्लोके तद्विवृत्तिपरोत्तरश्लोकद्वये चेत्यर्थः ॥ **प्रागिति** । "नित्यः सर्वगतस्थाणुः" इत्यादावित्यर्थः ॥

**गीता**

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

*वि०वि०*— एतदेव जन्ममरणस्वरूपनिरूपणेन स्पष्टयति **अव्यक्तादीनीति** । अव्यक्तं प्रधानम्, आदिरुत्पत्तेः पूर्वं रूपं येषां तानि अव्यक्तादीनि । भूतानि शरीराणि । व्यक्तमभिव्यक्तं मध्यं जन्ममरणान्तरालस्थितिलक्षणं येषां तानि । अव्यक्ते निधनं लयो येषां तानीमान्येवंभूतान्येव । तत्र तेषु का परिदेवना । कः शोकनिमित्तः प्रलापः । अथवा अव्यक्तमदर्शनमादिः प्रादुर्भावावधिर्येषां व्यक्तं दर्शनं मध्यस्थितिर्येषां तानीत्यादि व्याख्येयम्। तदुक्तम्–

'अदर्शनादिहायातः पुनश्चादर्शनं गतः ।
त्वं चाहं चापि राजेंद्र ततः किमनुशोचसि ॥' इति ॥ २८ ॥

*वा०ल०*— 'अव्यक्तादीनि भूतानि' इत्यत्र अव्यक्तं मूलप्रकृतिः । व्यक्तं तेजोबन्नात्मकं वा, पञ्चमहाभूतात्मकं वा ॥ २८ ॥

*सा०सं०*— एतदेव जन्ममृतिस्वरूपोक्त्या स्पष्टयति **अव्यक्तेति** । अव्यक्तं प्रधानम्, आदिरुत्पत्तिकारणं येषां तानि, **अव्यक्तादीनि भूतानि** जीवशरीराणि **व्यक्तमध्यानि** व्यक्तं कार्यतापत्त्याऽवस्थानं मध्यं जन्मनिधनान्तरालमेषां तानि, व्यक्तमध्यानि, अव्यक्ते प्रधाने निधनं लयो येषां तानि **अव्यक्तनिधनानि** एव । **तत्र** तेष्वेवंरूपेषु भूतेषु **का** परिदेवना कः शोक इति ।

यद्वा, कृष्णेनैवं स्वयं युक्तीरुक्त्वा शोको न कार्य इत्युक्तम् । तत्र देहनाशस्यावश्यम्भावित्वं यदुक्तं तन्नास्माभिः साध्यम्, भवतोऽपि सिद्धम्, तेनैव शोको न कार्य इत्याह **अथ चेति** । अत्र **नित्य**शब्दो नियतवाची । "नित्यं नियतमेव च" इति वचनात् । **अथ** इत्यस्य तिष्ठतु तावदयं प्राचीनो विस्तर इत्यर्थः । **एनं** जीवं **नित्यजातं** नियतजनिमन्तं **नित्यं मृतं** वा नियतमृतिमन्तं **त्वं मन्यसे** चेत्, यदि यावन्मोक्षं जीवस्य जन्ममरणे नियते इति स्वयमेव मन्यसे, **तथाऽपि** तावन्मात्रज्ञानेनापि **एनं** जीवं **शोचितुं नार्हसि** । जन्ममरणयोरवर्जनीयतया नियमेन प्राप्नुवतोस्त्वयैव ज्ञातत्वात् । अवर्जनीये कथं शोक इति भावः । एवं चास्मिन्नेव श्लोके शोकाभावे जनिमृतिनियमरूपो हेतुः स्पष्टमेवावगम्यत इति पुनः तत्र हेत्वाकाङ्क्षाभावादेतद्विवरणपरे 'जातस्य' इत्यादि श्लोकद्वये जीवस्य जनिमृतिनैयत्याऽनुवादः प्रागभिप्रेतजीवास्वातन्त्र्ये च हेतुत्वेनेति, का तव परिदेवना इत्यनन्तरं तस्माज्जीवस्य जनिमृतिनियमत्वाज्जीवे शोको यथा न कार्यः तथा स्वातन्त्र्यबुद्धिश्च न कार्येति श्लोकद्वयतात्पर्यार्थो ज्ञेयः ॥ २८ ॥

*अ०प्र०*— किञ्च देहानां स्वभावं पर्यालोच्य तदुपाधिके आत्मनो जन्ममरणे तयोः शोको न कार्य इत्याह **अव्यक्तादीनीति** ।

हे भारत ![१], भूतानि[२], अव्यक्तादीनि[३], तथा व्यक्तमध्यानि[४], तथैव अव्यक्तनिधनान्येव[५], तत्र[६], परिदेवना का ?[७] ।

हे भारत !, अव्यक्तादीनि = अव्यक्तं प्रधानं तदेव आदिः उत्पत्तेः पूर्वरूपं येषां तानि[२], तथा व्यक्तमध्यानि = व्यक्तं अभिव्यक्तं मध्यं जन्ममरणान्तरालावस्थितिलक्षणं येषां तानि[३], तथैव अव्यक्तनिधनान्येव = अव्यक्ते निधनं लयो येषां तानि इमानि एवं भूतान्येव[४], भूतानि = शरीराणि[५], तत्र = तेषु[६], का परिवेदना = कः शोकनिमित्तो विलापः[७], प्रतिबुद्धस्य स्वप्नदृष्टबन्धुष्विव शोको न युज्यत इत्यर्थः ॥ २८ ॥

**भाष्यम्**

**तदेव स्पष्टयति— अव्यक्तादीनीति ॥ २८ ॥**

*प्र०दी०*— स्पष्टनं च जन्ममरणस्वरूपनिरूपणेन ॥ २८ ॥

*भा०दी०*— **जन्ममरणस्वरूपनिरूपणेति** । अव्यक्तं प्रधानमादिरुत्पत्तेः पूर्वरूपमेषां तानि अव्यक्तादीनि भूतानि शरीराणि अव्यक्ते निधनं लयो एषां तान्यव्यक्तनिधनानीत्येवंरूपेणेत्यर्थः । तदुत्तरश्चतुर्थपादः ॥ २८ ॥

**गीतातात्पर्यनिर्णयः**

**तस्मान्नात्राश्चर्यबुद्धिः कर्तव्या ॥ २७ ॥**

*न्या०दी०*— जननमरणनियमोऽत्र शोकनिवारणे हेतुतयोक्तः स्फुटं प्रतीयते । प्रागभिप्रेते जीवस्यास्वातन्त्र्ये च हेतुतयाऽभिमत इति भावेनाऽऽह **तस्मादिति** ॥ तस्मात् जननादिनियमवत्त्वादेव । अत्र जीवे स्वातन्त्र्यबुद्धिश्च न कार्येत्यर्थः ॥

*भा०दी०*— अथ चेदिति श्लोके न कार्य इत्यत्र को हेतुरुक्त इत्यतस्तं वदन् स हेतुरन्यत्रापि प्रवर्तत इति मूलार्थमाह **जननमरणनियमोऽत्रेति** ॥ अथ चेदिति श्लोक इत्यर्थः । यद्वाऽत्रेति अथ चेदिति श्लोके तद्विवृत्तिपरोत्तरश्लोकद्वये चेत्यर्थः ॥ **प्रागिति** । "नित्यः सर्वगतस्थाणुः" इत्यादावित्यर्थः ॥

**गीता**

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

*वि०वि०*— एतदेव जन्ममरणस्वरूपनिरूपणेन स्पष्टयति **अव्यक्तादीनीति** । अव्यक्तं प्रधानम्, आदिरुत्पत्तेः पूर्वं रूपं येषां तानि अव्यक्तादीनि । भूतानि शरीराणि । व्यक्तमभिव्यक्तं मध्यं जन्ममरणान्तरालस्थितिलक्षणं येषां तानि । अव्यक्ते निधनं लयो येषां तानीमान्येवंभूतान्येव । तत्र तेषु का परिदेवना । कः शोकनिमित्तः प्रलापः । अथवा अव्यक्तमदर्शनमादिः प्रादुर्भावावधिर्येषां व्यक्तं दर्शनं मध्यस्थितिर्येषां तानीत्यादि व्याख्येयम्। तदुक्तम्–

'अदर्शनादिहायातः पुनश्चादर्शनं गतः ।
त्वं चाहं चापि राजेंद्र ततः किमनुशोचसि ॥' इति ॥ २८ ॥

*वा०ल०*— 'अव्यक्तादीनि भूतानि' इत्यत्र अव्यक्तं मूलप्रकृतिः । व्यक्तं तेजोबन्नात्मकं वा, पञ्चमहाभूतात्मकं वा ॥ २८ ॥

*सा०सं०*— एतदेव जन्ममृतिस्वरूपोक्त्या स्पष्टयति **अव्यक्तेति** । अव्यक्तं प्रधानम्, आदिरुत्पत्तिकारणं येषां तानि, **अव्यक्तादीनि भूतानि** जीवशरीराणि **व्यक्तमध्यानि** व्यक्तं कार्यतापत्त्याऽवस्थानं मध्यं जन्मनिधनान्तरालमेषां तानि, व्यक्तमध्यानि, अव्यक्ते प्रधाने निधनं लयो येषां तानि **अव्यक्तनिधनानि** एव । **तत्र** तेष्वेवंरूपेषु भूतेषु **का** परिदेवना कः शोक इति ।

यद्वा, कृष्णेनैवं स्वयं युक्तीरुक्त्वा शोको न कार्य इत्युक्तम् । तत्र देहनाशस्यावश्यम्भावित्वं यदुक्तं तन्नास्माभिः साध्यम्, भवतोऽपि सिद्धम्, तेनैव शोको न कार्य इत्याह **अथ चेति** । अत्र **नित्यशब्दो** नियतवाची । "नित्यं नियतमेव च" इति वचनात् । **अथ** इत्यस्य तिष्ठतु तावदयं प्राचीनो विस्तर इत्यर्थः । **एनं** जीवं **नित्यजातं** नियतजनिमन्तं **नित्यं मृतं** वा नियतमृतिमन्तं **त्वं मन्यसे** चेत्, यदि यावन्मोक्षं जीवस्य जन्ममरणे नियते इति स्वयमेव मन्यसे, **तथाऽपि** तावन्मात्रज्ञानेनापि **एनं** जीवं **शोचितुं नार्हसि** । जन्ममरणयोरवर्जनीयतया नियमेन प्राप्नुवतोस्त्वयैव ज्ञातत्वात् । अवर्जनीये कथं शोक इति भावः । एवं चास्मिन्नेव श्लोके शोकाभावे जनिमृतिनियमरूपो हेतुः स्पष्टमेवावगम्यत इति पुनः तत्र हेत्वाकाङ्क्षाभावादेतद्विवरणपरे 'जातस्य' इत्यादि श्लोकद्वये जीवस्य जनिमृतिनैयत्याऽनुवादः प्रागभिप्रेतजीवास्वातन्त्र्ये च हेतुत्वेनेति, का तव परिदेवना इत्यनन्तरं तस्माज्जीवस्य जनिमृतिनियमत्वाज्जीवे शोको यथा न कार्यः तथा स्वातन्त्र्यबुद्धिश्च न कार्येति श्लोकद्वयतात्पर्यार्थो ज्ञेयः ॥ २८ ॥

*अ०प्र०*— किञ्च देहानां स्वभावं पर्यालोच्य तदुपाधिके आत्मनो जन्ममरणे तयोः शोको न कार्य इत्याह **अव्यक्तादीनीति** ।

हे भारत ![१], भूतानि[२], अव्यक्तादीनि[३], तथा व्यक्तमध्यानि[४], तथैव अव्यक्तनिधनान्येव[५], तत्र[६], परिदेवना का ?[७] ।

हे भारत !, अव्यक्तादीनि = अव्यक्तं प्रधानं तदेव आदिः उत्पत्तेः पूर्वरूपं येषां तानि[२], तथा व्यक्तमध्यानि = व्यक्तं अभिव्यक्तं मध्यं जन्ममरणान्तरालावस्थितिलक्षणं येषां तानि[३], तथैव अव्यक्तनिधनान्येव = अव्यक्ते निधनं लयो येषां तानि इमानि एवं भूतान्येव[४], भूतानि = शरीराणि[५], तत्र = तेषु[६], का परिवेदना = कः शोकनिमित्तो विलापः[७], प्रतिबुद्धस्य स्वप्नदृष्टबन्धुष्विव शोको न युज्यत इत्यर्थः ॥ २८ ॥

**भाष्यम्**

**तदेव स्पष्टयति— अव्यक्तादीनीति ॥ २८ ॥**

*प्र०दी०*— स्पष्टनं च जन्ममरणस्वरूपनिरूपणेन ॥ २८ ॥

*भा०दी०*— **जन्ममरणस्वरूपनिरूपणेति** । अव्यक्तं प्रधानमादिरुत्पत्तेः पूर्वरूपमेषां तानि अव्यक्तादीनि भूतानि शरीराणि अव्यक्ते निधनं लयो एषां तान्यव्यक्तनिधनानीत्येवंरूपेणेत्यर्थः । तदुत्तरश्चतुर्थपादः ॥ २८ ॥

*भा०र०*— **जन्ममरणेति**। अव्यक्तं कारणीभूतं शरीरमादिर्येषां तानि तथा। व्यक्तं कार्यं शरीरं मध्यं मध्यप्राप्तं येषां तानि तथा। पूर्वं कारणीभूतलिङ्गशरीरविशिष्टान्येव भूतानि सृष्ट्यादौ कार्य-देहयुक्तानि भवन्तीति यावत्। अनेन देहयोग एव जन्मेति निरूपितम्। अव्यक्ते कारणीभूतशरीर एव निधनं कार्यदेहलयो येषामिति मृत्युशब्दितदेहवियोगलक्षणमरणस्वरूपं निरूपितमिति विवेकः ॥२८॥

*तथा चायं गीताश्लोकत्रयाक्षरार्थः*— अस्तूक्तरीत्या आत्मनो नित्यत्वम्। तथाऽपि देह-योगवियोगरूपजन्ममृती तस्य स्त एव। युद्धे च मृतिर्नियता। जनिमृतिनिमित्तं च दुःखं मदीयानां भविष्यतीति मे शोक इति शङ्कित्वा परिह्रियते **अथ चेति**॥ शङ्कान्तरद्योतको निपातसमुदायः। "नित्यं नियतमेव च" इति वचनान्नित्यशब्दो नियमशब्दितावधारणार्थः। एनं प्रस्तुतं जीवं देह-योगरूपजनिमन्तमेव नित्यं मृतं देहवियोगरूपमृतिमन्तमेव मन्यसे जानासि चेत्, "तथाऽपि हे महा-बाहो, त्वं, हन्ताऽहमेतेषां मयेमे हन्यन्त इति एनं जीवम् अनुशोचितुं नार्हसि ॥ २६ ॥

कुतो हेतोरशोक इति चेन्नियतत्वादित्युच्यते **जातस्येति**। **हि** यस्माद् **ध्रुवो** नियतः मृत्युर्मृतिः, **तस्माद्** जन्ममृत्योर्नियतत्वाद् **अपरिहार्येऽर्थे** मया युद्धाकरणमात्रेण तन्निमित्तशोकाभाव इति परिहर्तुमनर्हेऽर्थे ॥ २७ ॥

जन्ममरणस्वरूपनिरूपणेन नियतत्वमेव विशदीक्रियते **अव्यक्तादीनीति**। अव्यक्तं प्रधानमादि-र्देहकारणं येषां तानि तथा। व्यक्तं प्राकृतं कार्यं शरीरं मध्यं मध्यमिव येषां तानि तथा। अनेन पूर्वं कारणीभूतलिङ्गशरीरविशिष्टानां भूतानां सृष्ट्यादौ कार्यदेहयोगरूपजन्माभिहितम्। अव्यक्ते निधनं लयो येषामिति व्यधिकरणबहुव्रीहिः। एवेति नियतत्वम्। **तत्र** नियतजन्ममरणग्रस्तेषु **का परि-वेदना**? को वा प्रलापः? शोको न कार्य इति यावदिति ॥ २८ ॥

**गीता**

**आश्चर्यवत् पश्यति कश्चिदेन-**
**माश्चर्यवद्वदति तथैव चान्यः।**
**आश्चर्यवच्चैनमन्यः शृणोति**
**श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥**

*वि०वि०*— देहयोगवियोगयोर्नित्यत्वादात्मनश्चेश्वरप्रतिबिम्बत्वात् सर्वथा नाशाभावान्न शोकः कार्य इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति **आश्चर्यवदिति**। एनं जीवं यः कश्चित्पश्यति सः

आश्चर्यवत् दुर्लभ इत्यर्थः । एवमाश्चर्यवद्वदतीत्यादि योज्यम् । **सर्वेषामप्यात्मदर्शनादिमत्वात्कथमस्य दर्शनादिमान्दुर्लभ इत्यत उक्तं श्रुत्वेति** । उक्त्वा, दृष्ट्वा चेत्यपि ग्राह्यम् । तथा च सर्वेषां सामान्यतो दर्शनादौ सत्यपि सम्यग्ज्ञानाभावात्तद्दर्शनादिमान्दुर्लभ इति भावः ॥ २९ ॥

***बा०ल०*****—** 'आश्चर्यवत् पश्यति कश्चिदेनम्' इत्यत्र आश्चर्यवत् पश्यतीत्यादिकं ब्रह्मादिमहानुभावजीवानपेक्ष्य ॥ २९ ॥

***सा०सं०*****—** तर्हि कुत्र सा कार्या 'नैनम्' इत्यादौ सा बुद्धिर्भगवति कार्येति उक्तावपि सा किं भगवत्येव कार्या, अथ ततोऽन्यत्रापि क्वचिदित्याशङ्कां वतिप्रत्ययप्रयोगबलेन परिहरन् भगवत्स्वातन्त्र्यं प्रागुक्तमुपसंहरति **आश्चर्यवदिति । कश्चित्** सात्त्विकप्रकृतिः एनम् 'अव्यक्तः' इत्यत्र प्रकृतमेनम् ईश्वरम् **आश्चर्यवत् पश्यति** । आश्चर्यत्वेन सर्वस्वतन्त्रत्वेन सन्तमेव तमाश्चर्यवत् स्वतन्त्रवद्यथा भवति तथा **पश्यति** इति क्रियाविशेषणम् । 'गगनं गगनाकारम्' इत्यादिवत् । आश्चर्यभूतस्य हरेरेवाश्चर्यवदिति स्वोपमामुखेन हरेरितरस्य स्वातन्त्र्याभावज्ञापनाय **आश्चर्यवदिति** वत्यन्तोक्तिः । **अन्यश्च** तथैव द्रष्टृवदेव आश्चर्यत्वेन सन्तमेन**माश्चर्यवत्** यथा भवति तथा **वदति** 'सागरं सागरोपमम्' इति वदन् आश्चर्यवस्तु नेति ज्ञापनाय स्वोपमत्वेन वक्तीत्यर्थः । **अन्यश्च** सात्त्विकः आश्चर्यत्वेन सन्तम् **एनं** हरिम् **आश्चर्यवत्** यथा भवति तथा 'रामरावणयोर्युद्धं रामरावणयोरिव' इतिवत्, अन्यदाश्चर्यतया श्रोतव्यं वस्तु नेति ज्ञापनाय स्वोपमत्वेन **शृणोति** । **कश्चिच्च** सात्त्विकः **एनम्** आश्चर्यतया सन्तं हरिं **श्रुत्वाऽपि नैव वेद** । अत्यद्भुतवस्तुत्वादिति भावः । ईश्वरस्य सर्वान् प्रति आश्चर्यत्वेऽपि विपरीतदर्शिनामसुरादीनां बहूनां भावात्, यथावद्दर्शी यथावद्वादी च कश्चित् कश्चिदेवेति ज्ञापनाय कश्चिदित्याद्युक्तिः ।

यद्वा, उपसंहारपरोत्तरश्लोकोपयुक्तत्वेन 'अप्रमेयस्य' इत्यादिना प्राग्महिमोक्तावपि पुनर्महिमा-न्तरमाह **आश्चर्यवदिति** । वतिरत्र एवकारार्थ । **एनं** पूर्वत्र प्रकृतं जीवम्, **यः** कश्चिदजादिलक्षणे-श्वरसरूपत्वतदधीनत्वादिना **पश्यति** स पुमान् **आश्चर्यवत्** आश्चर्य एव । उक्तरूपेणैनं जीवं वदन् शृण्वंश्चाश्चर्य एव दुर्लभ एवेत्यर्थः । सर्वेषामपि अहमित्यात्मदर्शनादिभावाद्दर्शनादिमान् कथं दुर्लभ इत्यत उक्तमुपपादयति **श्रुत्वेति** । दृष्ट्वा, उक्त्वेत्यपि ग्राह्यम् । सामान्यतो दर्शनादौ सत्यप्युक्तरूपेण सम्यक् **न वेदे**ति सम्यग्ज्ञानी दुर्लभ इत्यर्थः । प्रतिबिम्बभूतजीवस्यापि सम्यग्ज्ञानी दुर्लभः । किमीश्वरसामर्थ्यं वर्णनीयमिति ईश्वरसामर्थ्योक्तिर्ज्ञेया ॥ २९ ॥

***अ०प्र०*****—** देहसंयोगवियोगयोः नियतत्वादात्मनश्चेश्वरप्रतिबिम्बत्वेन सर्वथा नाशाभावान्न शोकः कार्य इति उत्तरश्लोकेनोपसंहर्तुं ईश्वरप्रतिबिम्बत्वेऽपि नाशः किं न स्यादित्याशङ्कां परिहर्तुं

अप्रमेयस्येत्यादिनोक्तत्वेऽपि यत्प्रतिबिम्बत्वेन जीवद्रष्टापि दुर्लभः किमुत ईश्वरद्रष्टेति । पुनरैश्वरं सामर्थ्यं दर्शयति । यद्वा कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति आत्मज्ञानाभावादेवेत्याशयेनात्मनो दुर्विज्ञेयतामाह **आश्चर्येति** ।

कश्चित्[१], एवमेनं[२], आश्चर्यवत्[४], पश्यति तथा[५], अन्यः[६], आश्चर्यवत् वदति[८], अन्यश्च[९], एनं[१०], आश्चर्यवत्[११], शृणोति[१२], कश्चित्[१३], एनं[४], श्रुत्वापि[१५], न चैव[१६], वेद[१७] इत्यन्वयः ।

कश्चित्पुरुषः[१], एवं = पूर्वोक्तगुणविशिष्टं एनं = जीवं[२], पश्यति = शास्त्राचार्योपदेशाभ्यां जानाति[३], आश्चर्यवत् स दुर्लभ एवेत्यर्थः[४], अन्यो यो जीवं[६], तथा वदति = पूर्वोक्तगुणं प्रतिपादयति[७], सोऽप्याश्चर्यः = सोऽपि दुर्लभः[८], अन्यश्च = यः[९], एनं = जीवं[१०], शृणोति = तादृक्जीवविषयवाक्यं शृणोति[११], आश्चर्यवत् सोऽपि दुर्लभः[१२], सर्वेषां आत्मदर्शनादिमत्वात् कथमस्य दर्शनादिमान् दुर्लभ इत्यत आह **श्रुत्वेति**, श्रुत्वा दृष्ट्वा उक्त्वा चेत्यपि ग्राह्यम्[१२], कश्चित् = पुनर्विपरीतभावनाभिभूतः[१३], एनं[१४], आत्मानं शास्त्राचार्योपदेशैः उक्त्वा च शब्दादुक्तोऽपि श्रुत्वापि = द्रष्टा च[१५], एवं गुण-विशिष्टमात्मानं न चैवं वेद = न चैवं सम्यक् जानाति अनेन सर्वेषां सामान्यतो दर्शनादौ सत्यपि पूर्वोक्तगुणयुक्ततया सम्यक् ज्ञानाभावात् तद्दर्शनादिमान् दुर्लभ इति विशिष्टविशेषणन्यायेन तज्ज्ञानं दुर्लभमिति भावः । अनेन यत्प्रतिबिम्बदर्शनमपि दुर्लभं किं तदीश्वरसामर्थ्यं वर्णनीयमिति ईश्वरसामर्थ्यं दर्शितं भवति ॥ २९ ॥

**गीता**

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥**

***वि०वि०—*** यदेतज्जीवनित्यत्वमुक्तं तदपीश्वराधीनम्, यत्प्रतिबिम्बदर्शनादिमान्दुर्लभः किं तत्सामर्थ्यं वर्णनीयमिति ईश्वरसामर्थ्यं दर्शितम् । इदानीमुपसंहरति **देहीति** ।

अथवा— 'अथ चैनम्' इत्यादिना जीवस्यास्वातन्त्र्यमुपपादयितुं जननियमवत्वमुच्यते । तस्मान्न जीव आश्चर्यभूतः किं तर्हि भगवानेवेत्याह **आश्चर्यवदिति** । आश्चर्यमेव सन्तमेनमाश्चर्यवत्पश्यति । न पुनरनाश्चर्यम् । 'गगनं गगनाकारं सागरः सागरोपमः' इत्यादिवत् । उक्तं च—

'आश्चर्यो भगवान् विष्णुर्यस्मान्नैतादृशः क्वचित् ।
तस्मात्तद्गोचरं ज्ञानं तद्गोचरवदेव तु ॥'

इति । अनाश्चर्यवदसुरादयः पश्यन्तीति कश्चिदिति विशेषणम् । न स्वसामर्थ्यायत्तमित्याह **देहीति** । देही नित्यमवध्यः यतोऽयमीश्वरः सर्वस्य जीवस्य सूक्ष्मे स्थूले च देहे रक्षकत्वेनावस्थितः । तदुक्तं भागवते—

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥' इति ॥ ३० ॥

***सा०सं०***— यदेतज्जीवस्य 'न त्वं नेमे' इत्यादिना नित्यत्वमुक्तम्, तत् स्वाभाविकत्वात् न ईशाधीनम् । तथा च सर्वं परमेश्वराधीनम्, स एव सर्वस्वतन्त्र इत्युक्तम् । अतस्तद्विरोध इत्यतः तदपि "द्रव्यं कर्म च" इत्यादेरीश्वरायत्तमित्याह **देहीति** । **सर्वस्य देहिनः**, देहे स्थूलदेहे सूक्ष्मलिङ्गदेहे चिद्रूपस्वरूपदेहे च, **अयं** पूर्वप्रकृतो हरिः रक्षकत्वेन तिष्ठति । अतो **देही** जीवो **नित्यमवध्यः** । हे **भारत** ! तस्माद्रक्षकतया स्थितत्वेन नित्यमवध्यत्वात् **सर्वाणि भूतानि त्वं शोचितुं नार्हसि** इत्यर्थः ।

(यद्वा) देहयोगवियोगयोः नियतत्वात् आत्मनश्चेश्वरसरूपत्वात् बिम्बनाशादिनिमित्तनाशाभावान्न शोकः कार्य इत्युपसंहरति **देहीति** । प्राग्वदेव पूर्वार्धस्यार्थः । **तस्मादि**त्यस्य तु देहयोगवियोगयोः अवर्जनीयत्वात्, आत्मनश्चेश्वरसरूपत्वेन सर्वथैवानाशादित्यर्थः । भगवत्सरूपत्वेऽप्यनाशः कुतः इत्यतोऽतिसमर्थो भगवानिति तत्सामर्थ्यं प्रागुक्तमिति तस्य तदुपसंहारोपयुक्तता ध्येयेति ॥ ३० ॥

***अ०प्र०***—तदेव दुर्बोधं आत्मतत्त्वं संक्षेपेण उपदिशन् अशोच्यत्वं उपसंहरति **देहि इति** ।

हे भारत ![१], यस्मात् अयं[२], देही[३], सर्वस्य[४], देहे[५], नित्यं[६], अवध्यः[७], तस्मात्[८], त्वं[९], सर्वाणि[१०], भूतानि[११], शोचितुं[१२], नार्हसि[१३] इत्यन्वयः ।

हे भारत ! यस्मात् अयं देही = चेतनः[३], सर्वस्य जीवस्य हरेर्वा अधीने देहे वर्तमानः[५], नित्यं = नियमेन[६], अवध्यः[७], तस्मात्[८], त्वं[९], सर्वाणि भूतानि = चेतनानि प्रति[११], शोचितुं[१२], नार्हसि[१३] इत्यर्थः ॥ ३० ॥

**भाष्यम्**

**देहयोगवियोगस्य नियतत्वादात्मनश्चेश्वरसरूपत्वात् सर्वथा अनाशान्न शोकः कार्य इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति— आश्चर्यवदिति । दुर्लभ-**

अप्रमेयस्येत्यादिनोक्तत्वेऽपि यत्प्रतिबिम्बत्वेन जीवद्रष्टापि दुर्लभः किमुत ईश्वरद्रष्टेति । पुनरैश्वरं सामर्थ्यं दर्शयति । यद्वा कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति आत्मज्ञानाभावादेवेत्याशयेनात्मनो दुर्विज्ञेयतामाह **आश्चर्येति** ।

कश्चित्[१], एवमेनं[२], आश्चर्यवत्[४], पश्यति तथा[५], अन्यः[६], आश्चर्यवत् वदति[८], अन्यश्च[९], एनं[१०], आश्चर्यवत्[११], शृणोति[१२], कश्चित्[१३], एनं[४], श्रुत्वापि[१५], न चैव[१६], वेद[१७] इत्यन्वयः ।

कश्चित्पुरुषः[१], एवं = पूर्वोक्तगुणविशिष्टं एनं = जीवं[२], पश्यति = शास्त्राचार्योपदेशाभ्यां जानाति[३], आश्चर्यवत् स दुर्लभ एवेत्यर्थः[४], अन्यो यो जीवं[६], तथा वदति = पूर्वोक्तगुणं प्रतिपादयति[७], सोऽप्याश्चर्यः = सोऽपि दुर्लभः[८], अन्यश्च = यः[९], एनं = जीवं[१०], शृणोति = तादृक्जीवविषयवाक्यं शृणोति[११], आश्चर्यवत् सोऽपि दुर्लभः[१२], सर्वेषां आत्मदर्शनादिमत्वात् कथमस्य दर्शनादिमान् दुर्लभ इत्यत आह **श्रुत्वेति**, श्रुत्वा दृष्ट्वा उक्त्वा चेत्यपि ग्राह्यम्[१२], कश्चित् = पुनर्विपरीतभावनाभिभूतः[१३], एनं[१४], आत्मानं शास्त्राचार्योपदेशैः उक्त्वा च शब्दादुक्तोऽपि श्रुत्वापि = द्रष्टा च[१५], एवं गुण-विशिष्टमात्मानं न चैवं वेद = न चैवं सम्यक् जानाति अनेन सर्वेषां सामान्यतो दर्शनादौ सत्यपि पूर्वोक्तगुणयुक्ततया सम्यक् ज्ञानाभावात् तद्दर्शनादिमान् दुर्लभ इति विशिष्टविशेषणन्यायेन तज्ज्ञानं दुर्लभमिति भावः । अनेन यत्प्रतिबिम्बदर्शनमपि दुर्लभं किं तदीश्वरसामर्थ्यं वर्णनीयमिति ईश्वरसामर्थ्यं दर्शितं भवति ॥ २९ ॥

**गीता**

## देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
## तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

***वि०वि०—*** यदेतज्जीवनित्यत्वमुक्तं तदपीश्वराधीनम्, यत्प्रतिबिम्बदर्शनादिमान्दुर्लभः किं तत्सामर्थ्यं वर्णनीयमिति ईश्वरसामर्थ्यं दर्शितम् । इदानीमुपसंहरति **देहीति** ।

अथवा— 'अथ चैनम्' इत्यादिना जीवस्यास्वातन्त्र्यमुपपादयितुं जनननियमवत्वमुच्यते । तस्मान्न जीव आश्चर्यभूतः किं तर्हि भगवानेवेत्याह **आश्चर्यवदिति** । आश्चर्यमेव सन्तमेनमाश्चर्यवत्पश्यति । न पुनरनाश्चर्यम् । 'गगनं गगनाकारं सागरः सागरोपमः' इत्यादिवत् । उक्तं च—

'आश्चर्यो भगवान् विष्णुर्यस्मान्नैतादृशः क्वचित् ।
तस्मात्तद्गोचरं ज्ञानं तद्गोचरवदेव तु ॥'

इति । अनाश्चर्यवदसुरादयः पश्यन्तीति कश्चिदिति विशेषणम् । न स्वसामर्थ्यायत्तमित्याह **देहीति** । देही नित्यमवध्यः यतोऽयमीश्वरः सर्वस्य जीवस्य सूक्ष्मे स्थूले च देहे रक्षकत्वेनावस्थितः । तदुक्तं भागवते—

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥' इति ॥ ३० ॥

***सा०सं०***— यदेतज्जीवस्य 'न त्वं नेमे' इत्यादिना नित्यत्वमुक्तम्, तत् स्वाभाविकत्वात् न ईशाधीनम् । तथा च सर्वं परमेश्वराधीनम्, स एव सर्वस्वतन्त्र इत्युक्तम् । अतस्तद्विरोध इत्यतः तदपि "द्रव्यं कर्म च" इत्यादेरीश्वरायत्तमित्याह **देहीति** । **सर्वस्य देहिनः**, देहे स्थूलदेहे सूक्ष्मलिङ्गदेहे चिद्रूपस्वरूपदेहे च, **अयं** पूर्वप्रकृतो हरिः रक्षकत्वेन तिष्ठति । अतो **देही** जीवो **नित्यमवध्यः** । हे **भारत** ! तस्माद्रक्षकतया स्थितत्वेन नित्यमवध्यत्वात् **सर्वाणि भूतानि त्वं शोचितुं नार्हसि** इत्यर्थः ।

(यद्वा) देहयोगवियोगयोः नियतत्वात् आत्मनश्चेश्वरसरूपत्वात् बिम्बनाशादिनिमित्तनाशाभावान्न शोकः कार्य इत्युपसंहरति **देहीति** । प्राग्वदेव पूर्वार्धस्यार्थः । **तस्मादि**त्यस्य तु देहयोगवियोगयोः अवर्जनीयत्वात्, आत्मनश्चेश्वरसरूपत्वेन सर्वथैवानाशादित्यर्थः । भगवत्सरूपत्वेऽप्यनाशः कुतः इत्यतोऽतिसमर्थो भगवानिति तत्सामर्थ्यं प्रागुक्तमिति तस्य तदुपसंहारोपयुक्तता ध्येयेति ॥ ३० ॥

***अ०प्र०***—तदेव दुर्बोधं आत्मतत्त्वं संक्षेपेण उपदिशन् अशोच्यत्वं उपसंहरति **देहि इति** ।

हे भारत ![१], यस्मात् अयं[२], देही[३], सर्वस्य[४], देहे[५], नित्यं[६], अवध्यः[७], तस्मात्[८], त्वं[९], सर्वाणि[१०], भूतानि[११], शोचितुं[१२], नार्हसि[१३] इत्यन्वयः ।

हे भारत ! यस्मात् अयं देही = चेतनः[३], सर्वस्य जीवस्य हरेर्वा अधीने देहे वर्तमानः[५], नित्यं = नियमेन[६], अवध्यः[७], तस्मात्[८], त्वं[९], सर्वाणि भूतानि = चेतनानि प्रति[११], शोचितुं[१२], नार्हसि[१३] इत्यर्थः ॥ ३० ॥

**भाष्यम्**

**देहयोगवियोगस्य नियतत्वादात्मनश्चेश्वरसरूपत्वात् सर्वथा अनाशान्न शोकः कार्य इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति— आश्चर्यवदिति । दुर्लभ-**

**त्वेनेत्यर्थः । तद्धि आश्चर्यं लोके । दुर्लभोऽपीश्वरसरूपत्वात् सूक्ष्मत्वाच्च आत्मनः तद्द्रष्टा ॥ २९-३० ॥**

***प०टी०***— उत्तरश्लोकद्वयमवतार्य व्याचष्टे **देहेति** । द्वितीयश्लोकेन उपसंहर्तुम् । 'अप्रमेयस्य' इत्याद्युक्तत्वात् **पुनरिति** । यः कश्चिदेनं जीवं पश्यति स आश्चर्यवत् केन प्रकारेण ? इत्यत आह **दुर्लभत्वेनेति** । दुर्लभत्वेऽपि कुतो आश्चर्यता ? इत्यत आह **तद्धीति** । सर्वैः 'अहम्' इति स्वात्मनो दृष्टत्वात् कथमात्मद्रष्टा दुर्लभोऽपि येन तस्याश्चर्यता ? इत्यत आह **दुर्लभोऽपीति** । ईश्वरस्वरूपत्वादिनाऽऽत्मद्रष्टा दुर्लभ इत्यर्थः । जीवस्यैवं सामर्थ्ये तद्बिम्बेश्वरस्यातिशयितं सामर्थ्यमुक्तं भवति ॥ २९-३० ॥

***न०टी०***— पुनरीश्वरसारूप्याभिधानस्योपसंहारार्थत्वान्न पुनरुक्तिर्दोषायेति दर्शयन् उत्तरश्लोकद्वयमवतार्य व्याचष्टे **देहयोगवियोगस्येत्यादिना । सर्वथाऽनाशादिति** ॥ स्वरूपेण वा, बिम्बवियोगाख्यनिमित्ताद्वा, शस्त्रपावकाम्ब्वादिनिमित्तविशेषाद्वा नाशाभावात् । 'देही' इत्यनेनोपसंहर्तुमाश्चर्यवदित्यनेनैश्वरं सामर्थ्यं दर्शयति । 'अप्रमेयस्य', 'अजो नित्यः शाश्वतः', 'नित्यः सर्वगतस्थाणुः' इत्यादिना दर्शितत्वात् पुनरित्यर्थः । ननु जीवस्यैवाल्पत्वात् कथं तद्द्रष्टुराश्चर्यता ? इत्यत आह **दुर्लभत्वेनेति** । दुर्लभत्वस्याश्चर्यत्वे हेतुत्वं च लोकतः सिद्धमित्याह **तद्धीति** । ननु स्वं स्वमात्मानं सर्वेऽपि पश्यन्ति । अतः कथं तद्द्रष्टा दुर्लभः ? येनाश्चर्यतेत्यत आह **दुर्लभोऽपीति** । न हि यः कश्चिदात्मानम् 'अप्रमेयत्वादिलक्षणेश्वरस्य सरूपत्वान्नित्योऽहम्' इति पश्यति । अतस्तादृशात्मद्रष्टाऽऽश्चर्यो दुर्लभश्च । एवंविधात्मद्रष्ट्राश्चर्यत्वकथनेनैश्वरमेव सामर्थ्यमभिहितं भवतीत्यर्थः । यद्वा तद्द्रष्टाऽपि दुर्लभ इत्यन्वयः । ईश्वरज्ञातृवक्तृवत् 'आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्योऽस्य ज्ञाता' इति तस्याश्चर्यत्वश्रुतेः । ईश्वरप्रतिबिम्बत्वात् जीवस्येत्यर्थः ॥ २९-३० ॥

***प्र०दी०***— आश्चर्यवदिति श्लोकस्य न प्रकृतसङ्गतिर्दृश्यते । तदुत्तरश्लोकश्च पुनरुक्त इत्यत आह— **देहयोगेति** । द्वन्द्वैकवद्भावोऽयम् । **सर्वथेति** । बिम्बनाशाभावादिभिः सर्वैः प्रकारैः । इत्युपसंहर्तुमुत्तरेण श्लोकेन । ईश्वरसरूपत्वेऽपि कथमनाश इत्याशङ्कापरिहारहेतुत्वादुपसंहर्तुमित्युक्तम् । 'अप्रमेयस्य' इत्यादिना प्रागुक्तत्वात् पुनरिति । एनं यः कश्चित् पश्यति स आश्चर्यवदित्याद्युक्त्वा चतुर्थपादेन तदुपपादनं क्रियते । तं व्याचष्टे— **दुर्लभत्वेनेति** । दुर्लभत्वमाश्चर्यशब्दप्रवृत्तौ निमित्तमित्यर्थः । तत्कथमित्यत आह— **तद्धीति** । 'आश्चर्यमनित्ये' इत्यादिस्मृतिं हिशब्देन सूचयति । सर्वेषामात्मद्रष्टृत्वात् कथमात्मद्रष्टा दुर्लभोऽपि येनाश्चर्य इत्युच्यत इत्यत आह— **दुर्लभोऽपीति** ।

ईश्वरसरूपत्वादिनाऽत्मद्रष्टा दुर्लभ इति भावः । अनेनाश्चर्य एवाश्चर्यवदित्युच्यत इत्युक्तं भवति । यत्प्रतिबिम्बस्य जीवस्य द्रष्टाऽपि दुर्लभः किं तत्सामर्थ्यं वर्णनीयमिति ईश्वरसामर्थ्यप्रदर्शनम् । 'देहयोगवियोगस्य' इत्यादिना 'देही नित्यं' इति श्लोको व्याख्यातः । 'स्वधर्मं' इत्यादयः श्लोका अतिरोहितार्थत्वान्न व्याख्याताः । एवमुत्तरत्रापि ॥

*भा०दी०*— ननु सर्वथा नाशाभावान्न शोकः कार्य इत्युपसंहारे ईश्वरसरूपत्वाख्यप्रतिबिम्बमात्रमेव वाच्यमीश्वरसामर्थ्योक्तेः । क्वोपयोग इत्यतः । शङ्कानिवर्तकत्वेन उपयोगमाह **ईश्वरसरूपत्वेऽपीति** । इति शङ्कापरिहारहेतुत्वादीश्वरसामर्थ्योक्तिरिति योज्यम् । आश्चर्यमनित्य इत्यादि स्मृतिमिति पूर्वमदृष्टत्वेनोत्तरत्र भावित्वेन हेतुना नित्यशब्दलक्षिते भूतेऽर्थे आश्चर्यशब्दो निपात्यत इति षष्ठाद्यपादीयपाणिनिसूत्रस्यार्थः । आण्पूर्वाच्चरेर्यत्प्रत्ययः सुडागमश्चेत्युक्तं वृत्तौ । **अनेनेति** । श्रुत्वाप्येनमित्युपपादनेनेत्यर्थः । एनं जीव ईश्वरसरूपत्वादिना पश्यति । वदति श्रुणोति स आश्चर्यवदाश्चर्य एव दुर्लभ इत्यर्थ इत्युक्तं भवति । कथमनेनेश्वरसामर्थ्यं दर्शितमित्यत आह **यत्प्रतिबिम्बस्येति** । द्रष्टापीत्युपलक्षणं वक्ता श्रोता चेत्यपि ध्येयम् । **एवमुत्तरत्रापीति** । स्पष्टार्थो न व्याख्यायत इत्यर्थः ॥

*भा०र०*— **प्रकृतेति** । आत्मनित्यत्वं हि प्रकृतमशोच्यत्वं वा । तत्राऽश्चर्यवद् दर्शनवन्दनश्रवणकर्मत्वादेरनाकाङ्क्षितत्वादसङ्गतिरित्यर्थः । तदुत्तरः "देही नित्यः" इति श्लोकः । अवध्यत्वस्य अशोच्यत्वस्य च बहुशः प्रागुक्तत्वात् पुनरुक्त इत्यर्थः । 'देहयोगवियोगस्य' इति कथम् ? यावता योगश्च वियोगश्चेतीतरेतरयोगद्वन्द्वे द्विवचनापत्तिरित्यत आह **द्वन्द्वैकेति** । इतरेतरयोगद्वन्द्वे "सर्वो द्वन्द्वो विभाषयैकवद् भवति" इति समस्यमानयोरेकवद्भावादेकवचनं युक्तमित्यर्थः । "प्रकारवचने थाल्" इति स्मरणादाह **बिम्बनाशाभावादिभिः सर्वैः प्रकारैरिति** । आदिपदेन बिम्बोपाधिसन्निधिनाशाभावः शस्त्रपावकाबादिनिमित्तकनाशाभावश्च ग्राह्यः । उत्तरश्लोक एव तस्मादिति श्रवणादुक्तम् **उत्तरेणेति** । ननु सर्वथा नाशाभावान्न शोकः कार्य इत्युपसंहारे कर्तव्ये ईश्वरसरूपत्वाख्यतत्प्रतिबिम्बत्वमेव वक्तव्यम् । ईश्वरसामर्थ्यवचनस्य क्वोपयोगः । भाष्ये च सामर्थ्यवर्णनस्योपसंहारं प्रति प्रयोजकत्वं वक्तुमुपसंहर्तुमिति तुमुन्प्रत्ययः । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति क्रियाफलकक्रियावाचिशब्द उपपदेऽनुशिष्ट उपात्तः । तत् कथं भगवत्सामर्थ्याभिधानमुपसंहारे प्रयोजकमित्यत आह **ईश्वरसरूपत्वेऽपीति** । परिहारहेतुत्वाद् ईश्वरसामर्थ्योक्तेरिति शेषः । अनेन पूर्वोक्तेश्वरसरूपत्वहेतोरन्यथासिद्धिशङ्कापरिहाराय तस्मादिति गीतापदस्य एतादृशसामर्थ्योपेतेश्वरप्रतिबिम्बत्वादित्यप्यर्थो द्रष्टव्य इत्युक्तं भवति । पश्यति वदति शृणोति चेति वक्तव्ये श्रवणवचनयोर्दर्शनार्थ-

तया दर्शनस्य प्राधान्याभिप्रायेण पश्यतीत्येवोक्तम् । भाष्ये च **द्रष्टेति** । **आश्चर्यशब्दप्रवृत्तौ निमित्तमिति** । दुर्लभत्वेन आश्चर्यवदुच्यत इति गीतार्थ इति भाष्यार्थ इत्यर्थः ।

इदमुक्तं भवति । एनं जीवं यः कश्चित् पश्यति वदति शृणोति स आश्चर्य एवेत्युक्ते तत्र आश्चर्यशब्दप्रवृत्तौ किं निमित्तमित्याकाङ्क्षायामीश्वरप्रतिबिम्बत्वादिप्रकारेण जीवद्रष्ट्रादेर्दुर्लभत्वेन दुर्लभत्वमाश्चर्यशब्दप्रवृत्तौ निमित्तमिति वक्तुम् एनं जीवं कश्चिच्छ्रुत्वाऽपि न वेदेति ईश्वरप्रतिबिम्बत्वलक्षणधर्मावच्छिन्नजीवद्रष्टृदुर्लभत्वप्रतिपादनाभिप्रायेण निषिध्यते । दुर्लभं हि निषेधमर्हति विद्यमानमपीति । ''तद्धयाश्चर्यं लोके'' इति भाष्ये यद् दुर्लभमिति योज्यम् । **आश्चर्यमनित्य इतीति** । पूर्वमदृष्टत्वेनोत्तरत्राभावित्वेन हेतुनाऽनित्यशब्दलक्षितेऽद्भुतेऽर्थे आश्चर्यशब्दो निपात्यत इति पाणिनिसूत्रार्थः । ''चरेराङि चागुरौ'' इति यत्प्रत्यये निपातनात् सुडिति वृत्तिविकारः । अनित्यशब्दार्थाद्भुतत्वमेव आकस्मिकत्वापरपर्यायं दुर्लभत्वमत्र विवक्षितमिति न प्रकृतासङ्गतिशङ्केत्याहुः । आदिशब्देन ''विस्मयोऽद्भुतमाश्चर्यम्'' इत्यादिकोशसङ्ग्रहः । **सर्वेषामिति** । स्वं स्वमात्मानं सर्वेऽपि पश्यन्तीति तद्दर्शनस्य विश्वजनीनत्वादिति भावः । **दुर्लभोऽपीति** । आश्चर्यशब्दप्रवृत्तिनिमित्तदुर्लभत्ववानपि कथमित्यर्थः । ''ईश्वरसरूपत्वादिना'' इत्यत्र आदिशब्देनाणुत्वरूपसूक्ष्मत्वग्रहः । आत्मद्रष्टा दुर्लभ इति व्याख्यानं गीताक्षराननुगुणम् । तत्र आश्चर्यवदिति दुर्लभसाम्याभिधानादित्यत आह **अनेनेति** । ''दुर्लभः'' इति भाष्येणेत्यर्थः । **एवेति** । ''विचित्रा हि तद्धितगतिः'' इति वचनात् स्वार्थिकोऽत्र वतिर्व्याख्येय इति भावः । एतेनाकस्माद् दृश्यमानमाश्चर्यम् । तेन तुल्यमाश्चर्यवदिति परभाष्यं निरस्तम् । ''आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्योऽस्य ज्ञाता'' इति काठकश्रुतौ भगवज्ज्ञानिनो दुर्लभत्वोक्तिवदिहापि भगवदीयत्वज्ञानिनो दुर्लभत्वोक्तेरुचितत्वात् । जीवस्य दुर्विज्ञेयत्वमत्रोच्यत इति त्वयाऽवतारितत्वाच्चेति । ईश्वरसामर्थ्यं दर्शयतीति भाषितम् । कथमत्र श्लोके ईश्वरसामर्थ्यप्रदर्शनं दृश्यत इत्यत आह **यत्प्रतिबिम्बस्येति** । **द्रष्टाऽपीति** । अनेनापिशब्दस्य स्वस्थान एवान्वय इत्युपेत्य कथमात्मद्रष्टा दुर्लभोऽपीत्युक्तं प्राक् । इदानीं तद्द्रष्टाऽपि दुर्लभ इत्यन्वय इति प्राक् टीकारीत्या द्रष्टेत्यनेनाऽप्यन्वय इत्युक्तं भवति ॥ २९ ॥

*गीताक्षरार्थस्तु*— एवं पूर्वप्रकृतं जीवं यः कश्चिदीश्वराधीनत्वसूक्ष्मत्वादिना पश्यति स द्रष्टा पुमानाश्चर्यवद् आश्चर्य एव । अन्यो यः कोऽपि तथैव उक्तप्रकारेणैव वदति । अन्योः यः कोऽपि उक्तरूपेणैव शृणोति च । स आश्चयो दुर्लभ एव । सर्वेषामात्मदर्शनादिसद्भावात् कथमात्मदर्शनादिमान् दुर्लभ इत्यत उक्तमुपपाद्यते **श्रुत्वाऽपीति** । दृष्ट्वा उक्त्वाऽपीतिं ग्राह्यम् । सामान्यतो दर्शनादिसद्भावेऽपि ईश्वराधीनत्वादिना कोऽपि जीवं सम्यङ् न वेत्तीति हेतोरुक्तमुपपन्नम् । यत्प्रति-

बिम्बस्य जीवस्य द्रष्टापि दुर्लभः किं तत्सामर्थ्यं वर्णनीयमितीश्वरसामर्थ्यमनेन दर्शितं भवति । तेन चेश्वरसरूपत्वेऽपि कथमनाश इत्याशङ्का परिहृता वेदितव्येति ॥ २९ ॥

**व्याख्यात इति** । देहयोगवियोगयोर्नियतत्वादात्मनश्चेश्वरसरूपतया सर्वथा नाशाभावान्न शोकः कार्य इत्युपसंह्रियते **देहीति** । हे भारत, यस्मादयं जीवः देहे बाध्यमानेऽपीति शेषः । देही देह-योगवान् इत्येतत् नित्यं नियतम् । तथाऽपि सर्वस्य - षष्ठी तृतीयार्थे - बिम्बनाशाभावादिना सर्वेण प्रकारेणावध्यश्च । तस्मात् त्वं सर्वाणि भूतानि प्रति जनिमृतिनिमित्तं दुःखं मदीयानां भविष्यतीति बुद्ध्या शोचितुं नार्हसीत्येवं व्याख्यात इत्यर्थः । अनेनैव यत् परैः कैश्चिच्च सर्वस्य देवादिदेहिनः प्राणिजातस्येति भाषितं तदयुक्तम् । देहिन इति व्याख्याने प्रयोजनाभावात् । देह इत्यनेनैव देहिन इति लाभादिति । भाष्ये सर्वस्य सर्वथा इति व्याख्यातमित्युक्तं भवति । "एषा तेऽभिहिता साङ्ख्ये" इत्यत्र साङ्ख्यशब्दार्थो भाष्यते **ज्ञानमिति** । ततः प्राक्तनाः 'स्वधर्मम्' इत्यादयः कतिचन श्लोकाः कुतो न व्याख्यायन्त इत्यत आह **स्वधर्ममित्यादय इति** । **अतिरोहितार्थत्वात्** अगूढार्थत्वात् । ॥ ३० ॥

### गीतातात्पर्यनिर्णयः

**किं तर्ह्याश्चर्यो भगवानेवेत्याह आश्चर्यवदिति । आश्चर्यमेव सन्तमेनमाश्चर्य-वत्पश्यति न पुनरनाश्चर्यम् ।**

**"गगनं गगनाकारं सागरं सागरोपमम् ॥" इत्यादिवत् ।**

*न्या०दी०*— यदि जीवे नाश्चर्यबुद्धिः कार्या तर्हि कुत्रासौ कार्या ? ईश्वर इत्युक्तमिति चेत् सत्यम् । किं ततोऽन्यत्रापि क्वचिदित्याशङ्क्य तत्परिहारत्वेनोक्तोपसंहाररूपं श्लोकमवतारयति **किं तर्हीति** ॥ नन्वत्राश्चर्योऽन्य एव, ईश्वरस्तु तत्सदृश एव, न स्वयमाश्चर्य इति प्रतीतेः कथमाश्चर्यो भगवानेवेत्युच्यत इत्यत आह **आश्चर्यमिति** ॥ आश्चर्यवदित्यनेन नेश्वरस्यानाश्चर्यत्वमभिप्रेयते किन्त्वाश्चर्यस्यैव सत आश्चर्योपमत्वमुच्यत इति भावः । एवमपि भगवदितरस्य स्वातन्त्र्यमङ्गी-कार्यम् । तस्यैव स्वतन्त्रतायामाश्चर्यवदित्युक्त्यसम्भवात् । स्वोपमायाः क्वाप्यदर्शनात् । तथा च भगवानेवेत्यवधारणायोग इत्यत आह **गगनमिति** ॥ इतिवत्स्वोपमाभिधानमुखेन भगवदितरस्य स्वातन्त्र्याभावे तात्पर्यमात्रेति भावः । **सागरं** सागरसमूहः ।

*भा०दी०*— **इत्युक्तमिति** । नैनमिति श्लोके ईश्वरस्य तु देहस्यापि छेदादेरभावात् स्वातन्त्र्यमित्युक्तमित्यर्थः ॥ **क्वचिदिति** । स्वातन्त्र्यबुद्धिः कार्येत्यनुषङ्गः ॥ **उक्तेति** । ईश्वरेति विहितस्वातन्त्र्योपसंहाररूपं इत्यर्थः । तेन नैनमित्यादिना न पौनरुक्त्यमिति भावः ॥ **प्रतीतेरिति** । वतिप्रत्ययेनेति भावः ॥ **सागरसमूह इति** । वृद्धाच्छ इति छप्रत्ययो नाश्रितोऽण्प्रत्यय एवाश्रित इति भावः ॥

### गीतातात्पर्यनिर्णयः

**"आश्चर्यो भगवान्विष्णुर्यस्मान्नैतादृशः क्वचित् ।**
**तस्मात्तद्गोचरं ज्ञानं तद्गोचरवदेव तु ॥" —इति ब्रह्मतर्के ।**

**अनाश्चर्यवदप्यसुरादयः पश्यन्तीति कश्चिदिति विशेषणम् ॥ २९ ॥**

*न्या०दी०*— प्रतीत एवार्थः किं न स्यादित्यतः स्वोक्तार्थे स्मृतिसम्मतिमाह **आश्चर्य इति** । तद्गोचरमित्यनेन "आश्चर्यवत्" इत्येतत्क्रियाविशेषणमित्युक्तं भवति । ननु भगवानाश्चर्य एव चेत् तर्हि सर्वेषामप्याश्चर्यत्वात् 'कश्चित्' इति विशेषणं व्यर्थम् । न हि स्तम्भः कस्यचिदेव स्तम्भ इत्यत आह **अनाश्चर्यवदिति** ॥ यद्यपीश्वरः सर्वेषामाश्चर्य एव तथापि विपरीतदर्शिनां बहूनां भावाद्यथावद्दर्शिनः कस्यचिदेव भावादाश्चर्यतया दर्शनं विवक्ष्य कश्चिदिति विशेषणं युक्तमिति भावः ॥

### गीतातात्पर्यनिर्णयः

**देही कुतोऽवध्यः ? यस्मादयमीश्वरः सर्वस्य जीवस्य सूक्ष्मे स्थूले च देहे रक्षकत्वेनावस्थितः अत एवावध्यः । न स्वसामर्थ्यं कस्यापि ।**

*न्या०दी०*— आक्षिपति **देहीति** ॥ जीवो नित्य इत्युक्तम् । तत्र किं स्वत एव नित्योऽथेश्वरसामर्थ्येन ? नाद्यः । सर्वं परमेश्वराधीनमित्यभिमतविरोधात् । न द्वितीयः । नित्यस्य स्वाभाविकत्वेनेश्वराधीनत्वानुपपत्तेरिति भावः । एतत्परिहाराय देहीति श्लोकं व्याचष्टे **यस्मादिति** ॥ देहे रक्षकत्वेन स्थितश्चेत् प्रलयादौ नाशः स्यादित्यत उक्तम् **सूक्ष्म इति** ॥ सूक्ष्मदेहपदेन लिङ्गशरीरं चैतन्यशरीरं चोच्यते ।

**गीतातात्पर्यनिर्णयः**

"द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥"

—इति हि भागवते ।

*न्या०दी०*— नित्यत्वादेः स्वाभाविकत्वात् कथमीश्वराधीनत्वमित्यत आह **द्रव्यमिति** ॥ स्वाभाविकत्वेऽपि नित्यत्वादेरीश्वराधीनत्वं युज्यते । स्वभावस्यापि भगवदधीनतया स्मृतिसिद्ध-त्वादिति भावः ।

**गीतातात्पर्यनिर्णयः**

"तत्र तत्र स्थितो विष्णुर्नित्यं रक्षति नित्यदा ।
अनित्यदैवानित्यं च नित्यानित्ये ततस्ततः ।
भावाभावनियन्ता हि तदेकः पुरुषोत्तमः ॥"

—इति पाद्मे ॥ ३० ॥

*प्रका०*— देहिन इत्येतद्व्याचष्टे **देहीति** ॥

*न्या०दी०*— जीवसत्ताया भगवदधीनत्वे चेयं स्मृतिः प्रमाणम् । तथापि जीवे स्थित्वा तद्रक्षक ईश्वर इति विशेषः कुत इत्यत आह **तत्रेति** ॥ **ततः** तदधीने । **ततः** तस्मात् तन्निय-न्तृत्वात् । भावाभावयोरपि नित्यानित्याबहिर्भावात् ॥

*भा०दी०*— ततस्तत इत्यत्र ततः कारणात् ततो हरेरित्युपेत्याह **ततस्तदधीन इति** ॥

**गीता**

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥ ३१ ॥**

*वि०वि०*— न केवलमात्मनो नित्यत्वादशोकः किं तर्हि इत्यत आह **स्वधर्ममिति** । धर्मादनपेतात् न्यायप्रवृत्ताद्युद्धादन्यच्छ्रेयः क्षत्रियस्य नास्ति ॥ ३१ ॥

*सा०सं०*— यदुक्तं प्राक् 'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति तत्राह **स्वधर्ममिति** । यद्वा, न केवलमात्मनित्यत्वादशोकः । किं तर्हीत्यत आह **स्वधर्ममिति** । न केवलमात्मनोऽविनाशादेवाविकम्पः । **स्वधर्ममपि अवेक्ष्य विकम्पितुं** शरीरे कम्पं सर्वावयवचेष्टां कर्तुं **नार्हसीत्यर्थः** । यच्चोक्तं "न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे" इति तत्राह **धर्म्यादिति** । परलोकहेतुर्धर्मः, तत्सम्बन्धि तज्जनकमिति यावत् । यद्वा, धारकत्वाद्धर्मो हरिः । तत्पूजारूपं यत् तत् **धर्म्यम्** । **तस्मात् युद्धादन्यत् श्रेयः क्षत्रियस्य न विद्यते** । **हि** प्रसिद्धमेतत् ॥ ३१ ॥

*अ०प्र०*— आत्मनो नाशाभावादेव एतेषां हनने विकम्पितुं नार्हसि । किञ्च स्वधर्ममपि चावेक्ष्य विकम्पितुं नार्हसीति सम्बन्धः । यच्चोक्तं न च श्रेयोऽनुपश्यामीति तत्राह **धर्म्यादिति** । तदेवाह **स्वधर्ममिति** ।

हे भारत !, हि = यस्मात्[१], क्षत्रियस्य[२], धर्म्यात्[३], युद्धात्[४], अन्यत्[५], श्रेयः[६], न विद्यते[७], स्वधर्ममपि च[८], अवेक्ष्य[९], विकम्पितुं[१०], नार्हसि[११] इत्यन्वयः ।

हे भारत ! हि = यस्मात् क्षत्रियस्य[२], धर्म्यात् = धर्म्यादनपेतं धर्म्यं तस्मात् न्यायात्[३], युद्धात्[४], अन्यत्, श्रेयसाधनं[६], न विद्यते[७], शेषं स्पष्टम् ॥ ३१ ॥

**गीता**

## यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
## सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२॥

*वि०वि०*— किञ्च स्वयमेव महति श्रेयसि प्राप्ते विलम्बोऽनुचित इत्याह **यदृच्छयेति** । अयत्नोपपन्नमिदं निरतिशयसुखोपायभूतमपगताविद्यावरणमीदृशं युद्धं सुखिनः पुण्यवन्तः क्षत्रिया लभन्ते ॥ ३२ ॥

*सा०सं०*— किञ्च स्वयमेव महति श्रेयसि प्राप्ते विकम्पोऽनुचित इत्याह **यदृच्छयेति** । **यदृच्छया** अप्रयत्नेन **उपपन्नं** प्राप्तं "यदृच्छा हि तदिच्छा स्यात्" इत्युक्तेः ईश्वरेच्छाप्राप्तमिति वा **अपावृतम**पगतावरणं **स्वर्गद्वारं** च पारत्रिकसुखसाधनमिति यावत् । **ईदृशं** भगवत्पूजात्वेन स्वधर्मत्वेन स्थितं **युद्धं सुखिनः** सुखहेतुपुण्यवन्तः **क्षत्रियाः**, हे **पार्थ, लभन्ते** प्राप्नुवन्ति । यद्वा, ईदृशं युद्धं ये क्षत्रियाः लभन्ते ते सुखिन इत्यर्थः । तेन 'स्वजनं हि कथं हत्वा सुखिनः स्याम' इति निरस्तम् ॥ ३२ ॥

*अ०प्र०*— किञ्च महति श्रेयसि स्वयमेवोपगते सति कुतो विकम्पसे विलम्बोऽनुचित इत्याह **यदृच्छया चेति** ।

हे पार्थ ![1], सुखिनः एव क्षत्रियाः[2], यदृच्छया[3], उपपन्नम्[4], यतः अपावृतम्[5], स्वर्गद्वारम्[6], ईदृशं[7], युद्धं[8], लभन्ते[9], यद्वा एवंविधं युद्ध ये क्षत्रियाः लभन्ते ते एव सुखिनः इत्यन्वयः ।

हे पार्थ ! सुखिनः सभाग्या एव क्षत्रियाः[3], यदृच्छया चोपपन्नं = अप्रार्थितमेव प्राप्तं यत अपावृतं = निरावरणं अपगतावरणं वा स्वर्गद्वारं ईदृशं प्राणिहिंसारूपं युद्धं लभन्ते प्राप्नुवन्ति[10], यद्वा एवं युद्धं ये क्षत्रियाः लभन्ते ते एव सुखिनः सभाग्याः । एतेन यत् 'स्वजनं हि कथं हत्वे'त्युक्तं तन्निरस्तं भवति ॥ ३२ ॥

**गीता**

## अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।
## ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

*वि०वि०*— युद्धाकरणे दोषमाह **अथ चेदिति** ॥ ३३ ॥

*सा०सं०*— युद्धाकरणेऽनर्थप्राप्त्युक्त्या च तत्कर्तव्यतामाह अथ चेदित्यादिचतुर्भिः । **अथ चेत्** यदृच्छया पारत्रिकसुखहेतुत्वेन च प्राप्तमपि । **धर्म्यं** प्राग्वत् । **इमं सङ्ग्रामं** युद्धं **न करिष्यसि** न कुर्याः तर्हि ततः स्वधर्मभूतयुद्धाकरणात् न केवलं धर्मकीर्त्योर्हानिः, स्वविहितधर्मत्यागात् **पापं चावाप्स्यसि** ॥ ३३ ॥

*अ०प्र०*— विपक्षे दोषमाह **अथ चेत्त्वमिति** ।

अन्वयः स्पष्टः ॥ हे पार्थ ! अथ = अतःपरम्[1], त्वं[2], इमं = पुरोवर्तिनम्[3], धर्म्यं = धर्मादपनेतम्[4], सङ्ग्रामं = युद्धम्[5], न करिष्यसि चेत्[6], ततःपरम् = युद्धत्यागानन्तरम्[7], स्वधर्मं[8], कीर्तिं च[9], हित्वा[10], पापं[11], अवाप्स्यसि[12] इत्यर्थः ॥ ३३ ॥

**गीता**

## अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
## सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

***सा०सं०***— यदुक्तं प्राक् 'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति तत्राह **स्वधर्ममिति** । यद्वा, न केवलमात्मनित्यत्वादशोकः । किं तर्हीत्यत आह **स्वधर्ममिति** । न केवलमात्मनोऽविनाशादेवाविकम्पः । **स्वधर्ममपि अवेक्ष्य विकम्पितुं** शरीरे कम्पं सर्वावयवचेष्टां कर्तुं **नार्हसी**त्यर्थः । यच्चोक्तं "न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे" इति तत्राह **धर्म्यादिति** । परलोकहेतुर्धर्मः, तत्सम्बन्धि तज्जनकमिति यावत् । यद्वा, धारकत्वाद्धर्मो हरिः । तत्पूजारूपं यत् तत् **धर्म्यम्** । **तस्मात् युद्धादन्यत् श्रेयः क्षत्रियस्य न विद्यते** । **हि** प्रसिद्धमेतत् ॥ ३१ ॥

***अ०प्र०***— आत्मनो नाशाभावादेव एतेषां हनने विकम्पितुं नार्हसि । किञ्च स्वधर्ममपि चावेक्ष्य विकम्पितुं नार्हसीति सम्बन्धः । यच्चोक्तं न च श्रेयोऽनुपश्यामीति तत्राह **धर्म्यादिति** । तदेवाह **स्वधर्ममिति** ।

हे भारत !, हि = यस्मात्[१], क्षत्रियस्य[२], धर्म्यात्[३], युद्धात्[४], अन्यत्[५], श्रेयः[६], न विद्यते[७], स्वधर्ममपि च[८], अवेक्ष्य[९], विकम्पितुं[१०], नार्हसि[११] इत्यन्वयः ।

हे भारत ! हि = यस्मात् क्षत्रियस्य[२], धर्म्यात् = धर्म्यादनपेतं धर्म्यं तस्मात् न्यायात्[३], युद्धात्[४], अन्यत्, श्रेयसाधनं[६], न विद्यते[७], शेषं स्पष्टम् ॥ ३१ ॥

**गीता**

## यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
## सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२॥

***वि०वि०***— किञ्च स्वयमेव महति श्रेयसि प्राप्ते विलम्बोऽनुचित इत्याह **यदृच्छयेति** । अयत्नोपपन्नमिदं निरतिशयसुखोपायभूतमपगताविद्यावरणमीदृशं युद्धं सुखिनः पुण्यवन्तः क्षत्रिया लभन्ते ॥ ३२ ॥

***सा०सं०***— किञ्च स्वयमेव महति श्रेयसि प्राप्ते विकम्पोऽनुचित इत्याह **यदृच्छयेति** । **यदृच्छया** अप्रयत्नेन **उपपन्नं** प्राप्तं "यदृच्छा हि तदिच्छा स्यात्" इत्युक्तेः ईश्वरेच्छाप्राप्तमिति वा **अपावृतम**पगतावरणं **स्वर्गद्वारं** च पारत्रिकसुखसाधनमिति यावत् । **ईदृशं** भगवत्पूजात्वेन स्वधर्मत्वेन स्थितं **युद्धं सुखिनः** सुखहेतुपुण्यवन्तः **क्षत्रियाः**, हे **पार्थ, लभन्ते** प्राप्नुवन्ति । यद्वा, ईदृशं युद्धं ये क्षत्रियाः लभन्ते ते सुखिन इत्यर्थः । तेन 'स्वजनं हि कथं हत्वा सुखिनः स्याम' इति निरस्तम् ॥ ३२ ॥

*अ०प्र०*— किञ्च महति श्रेयसि स्वयमेवोपगते सति कुतो विकम्पसे विलम्बोऽनुचित इत्याह **यदृच्छया चेति** ।

हे पार्थ ![१], सुखिनः एव क्षत्रियाः[२], यदृच्छया[३], उपपन्नम्[४], यतः अपावृतम्[५], स्वर्गद्वारम्[६], ईदृशं[७], युद्धं[८], लभन्ते[९], यद्वा एवंविधं युद्ध ये क्षत्रियाः लभन्ते ते एव सुखिनः इत्यन्वयः ।

हे पार्थ ! सुखिनः सभाग्या एव क्षत्रियाः[३], यदृच्छया चोपपन्नं = अप्रार्थितमेव प्राप्तं यत अपावृतं = निरावरणं अपगतावरणं वा स्वर्गद्वारं ईदृशं प्राणिहिंसारूपं युद्धं लभन्ते प्राप्नुवन्ति[१०], यद्वा एवं युद्धं ये क्षत्रियाः लभन्ते ते एव सुखिनः सभाग्याः । एतेन यत् 'स्वजनं हि कथं हत्वे'त्युक्तं तन्निरस्तं भवति ॥ ३२ ॥

**गीता**

## अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।
## ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

*वि०वि०*— युद्धाकरणे दोषमाह **अथ चेदिति** ॥ ३३ ॥

*सा०सं०*— युद्धाकरणेऽनर्थप्राप्त्युक्त्या च तत्कर्तव्यतामाह अथ चेदित्यादिचतुर्भिः । **अथ चेत्** यदृच्छया पारत्रिकसुखहेतुत्वेन च प्राप्तमपि । **धर्म्यं** प्राग्वत् । **इमं सङ्ग्रामं** युद्धं **न करिष्यसि** न कुर्याः तर्हि ततः स्वधर्मभूतयुद्धाकरणात् न केवलं धर्मकीर्त्योर्हानिः, स्वविहितधर्मत्यागात् **पापं चावाप्स्यसि** ॥ ३३ ॥

*अ०प्र०*— विपक्षे दोषमाह **अथ चेत्त्वमिति** ।

अन्वयः स्पष्टः ॥ हे पार्थ ! अथ = अतःपरम्[१], त्वं[२], इमं = पुरोवर्तिनम्[३], धर्म्यं = धर्मादपनेतम्[४], सङ्ग्रामं = युद्धम्[५], न करिष्यसि चेत्[६], ततःपरम् = युद्धत्यागानन्तरम्[७], स्वधर्मं[८], कीर्तिं च[९], हित्वा[१०], पापं[११], अवाप्स्यसि[१२] इत्यर्थः ॥ ३३ ॥

**गीता**

## अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
## सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

***सा०सं०***— यदुक्तं प्राक् 'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति तत्राह **स्वधर्ममिति** । यद्वा, न केवलमात्मनित्यत्वादशोकः । किं तर्हीत्यत आह **स्वधर्ममिति** । न केवलमात्मनोऽविनाशादेवाविकम्पः । **स्वधर्ममपि अवेक्ष्य विकम्पितुं** शरीरे कम्पं सर्वावयवचेष्टां कर्तुं **नार्हसी**त्यर्थः । यच्चोक्तं "न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे" इति तत्राह **धर्म्यादिति** । परलोकहेतुर्धर्मः, तत्सम्बन्धि तज्जनकमिति यावत् । यद्वा, धारकत्वाद्धर्मो हरिः । तत्पूजारूपं यत् तत् **धर्म्यम् । तस्मात् युद्धादन्यत् श्रेयः क्षत्रियस्य न विद्यते** । **हि** प्रसिद्धमेतत् ॥ ३१ ॥

***अ०प्र०***— आत्मनो नाशाभावादेव एतेषां हनने विकम्पितुं नार्हसि । किञ्च स्वधर्ममपि चावेक्ष्य विकम्पितुं नार्हसीति सम्बन्धः । यच्चोक्तं न च श्रेयोऽनुपश्यामीति तत्राह **धर्म्यादिति** । तदेवाह **स्वधर्ममिति** ।

हे भारत !, हि = यस्मात्[१], क्षत्रियस्य[२], धर्म्यात्[३], युद्धात्[४], अन्यत्[५], श्रेयः[६], न विद्यते[७], स्वधर्ममपि च[८], अवेक्ष्य[९], विकम्पितुं[१०], नार्हसि[११] इत्यन्वयः ।

हे भारत ! हि = यस्मात् क्षत्रियस्य[२], धर्म्यात् = धर्म्यादनपेतं धर्म्यं तस्मात् न्यायात्[३], युद्धात्[४], अन्यत्, श्रेयसाधनं[६], न विद्यते[७], शेषं स्पष्टम् ॥ ३१ ॥

**गीता**

## यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
## सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२॥

***वि०वि०***— किञ्च स्वयमेव महति श्रेयसि प्राप्ते विलम्बोऽनुचित इत्याह **यदृच्छयेति** । अयत्नोपपन्नमिदं निरतिशयसुखोपायभूतमपगताविद्यावरणमीदृशं युद्धं सुखिनः पुण्यवन्तः क्षत्रिया लभन्ते ॥ ३२ ॥

***सा०सं०***— किञ्च स्वयमेव महति श्रेयसि प्राप्ते विकम्पोऽनुचित इत्याह **यदृच्छयेति** । **यदृच्छया** अप्रयत्नेन **उपपन्नं** प्राप्तं "यदृच्छा हि तदिच्छा स्यात्" इत्युक्तेः ईश्वरेच्छाप्राप्तमिति वा **अपावृतम**पगतावरणं **स्वर्गद्वारं** च पारत्रिकसुखसाधनमिति यावत् । **ईदृशं** भगवत्पूजात्वेन स्वधर्मत्वेन स्थितं **युद्धं सुखिनः** सुखहेतुपुण्यवन्तः **क्षत्रियाः**, हे **पार्थ, लभन्ते** प्राप्नुवन्ति । यद्वा, ईदृशं युद्धं ये क्षत्रियाः लभन्ते ते सुखिन इत्यर्थः । तेन 'स्वजनं हि कथं हत्वा सुखिनः स्याम' इति निरस्तम् ॥ ३२ ॥

***अ०प्र०***— किञ्च महति श्रेयसि स्वयमेवोपगते सति कुतो विकम्पसे विलम्बोऽनुचित इत्याह **यदृच्छया चेति** ।

हे पार्थ ![१], सुखिनः एव क्षत्रियाः[२], यदृच्छया[३], उपपन्नम्[४], यतः अपावृतम्[५], स्वर्गद्वारम्[६], ईदृशं[७], युद्धं[८], लभन्ते[९], यद्वा एवंविधं युद्ध ये क्षत्रियाः लभन्ते ते एव सुखिनः इत्यन्वयः ।

हे पार्थ ! सुखिनः सभाग्या एव क्षत्रियाः[३], यदृच्छया चोपपन्नं = अप्रार्थितमेव प्राप्तं यत अपावृतं = निरावरणं अपगतावरणं वा स्वर्गद्वारं ईदृशं प्राणिहिंसारूपं युद्धं लभन्ते प्राप्नुवन्ति[१०], यद्वा एवं युद्धं ये क्षत्रियाः लभन्ते ते एव सुखिनः सभाग्याः । एतेन यत् 'स्वजनं हि कथं हत्वे'त्युक्तं तन्निरस्तं भवति ॥ ३२ ॥

**गीता**

**अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥**

***वि०वि०***— युद्धाकरणे दोषमाह **अथ चेदिति** ॥ ३३ ॥

***सा०सं०***— युद्धाकरणेऽनर्थप्राप्त्युक्त्या च तत्कर्तव्यतामाह अथ चेदित्यादिचतुर्भिः । **अथ चेत्** यदृच्छया पारत्रिकसुखहेतुत्वेन च प्राप्तमपि । **धर्म्यं** प्राग्वत् । **इमं सङ्ग्रामं** युद्धं **न करिष्यसि** न कुर्याः तर्हि ततः स्वधर्मभूतयुद्धाकरणात् न केवलं धर्मकीर्त्योर्हानिः, स्वविहितधर्मत्यागात् **पापं** **चावाप्स्यसि** ॥ ३३ ॥

***अ०प्र०***— विपक्षे दोषमाह **अथ चेत्त्वमिति** ।

अन्वयः स्पष्टः ॥ हे पार्थ ! अथ = अतःपरम्[१], त्वं[२], इमं = पुरोवर्तिनम्[३], धर्म्यं = धर्मादपनेतम्[४], सङ्ग्रामं = युद्धम्[५], न करिष्यसि चेत्[६], ततःपरम् = युद्धत्यागानन्तरम्[७], स्वधर्मं[८], कीर्तिं च[९], हित्वा[१०], पापं[११], अवाप्स्यसि[१२] इत्यर्थः ॥ ३३ ॥

**गीता**

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

*वि०वि०*— न केवलं धर्मादिहानिः पापावाप्तिश्च किं तर्हीत्यत आह **अकीर्तिं चेति** । अव्ययां शाश्वतीम् । ततः किमित्यत आह **सम्भावितस्येति** । बहुमतस्य अधिका भवति । ॥ ३४ ॥

*सा०सं०*— अपकीर्तिं च अवाप्स्यसीत्याह **अकीर्तिं चेति । अपि चाकीर्तिम्** अपकीर्तिम् । **अव्ययां** शाश्वतीम् । अस्तु को दोष इत्यत आह **सम्भावितस्येति** । लोके बहुमतस्य, **अतिरिच्यते** अधिका भवति ॥ ३४ ॥

*अ०प्र०*— किञ्च, **अकीर्तिमिति** ।

भूतानि[१], ते[२], अव्ययां[३], अकीर्तिं चापि[४], कथयिष्यन्ति[५], सम्भा-वितस्य[६], तव अकीर्तिश्च[७], मरणात्[८], अतिरिच्यते[९] इत्यन्वयः ।

अव्ययां = शाश्वतीं[३], सम्भावितस्य = बहुमतस्य बहुमानितस्येति वा[६], अतिरिच्यते = अधिकतरा भवति ॥ ३४ ॥

**गीता**

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥**

*वि०वि०*— बन्धुस्नेहात्कारुण्याच्च युद्धान्निवृत्तस्य शूरस्याकीर्तिः कथमागमिष्यतीत्यत आह **भयादिति** । येषां पूर्वं बहुगुणत्वेन सम्मतोऽभूः त एव सङ्ग्रामात् त्वां भयान्निवृत्तं मन्येरन् । ततश्च पूर्वं बहुमतो भूत्वा लाघवं यास्यसि ॥ ३५ ॥

*सा०सं०*— दयालुत्वान्निवृत्तोऽयमिति कीर्तिमेव कथयिष्यन्तीत्यत आह **भयादिति । मंस्यन्ते** ज्ञास्यन्ते । महारथस्वरूपमुक्तं पूर्वाध्याये । मन्यन्तां ते, ततः का हानिरित्यत आह **येषामिति । येषां** महारथानां **त्वं बहुमतो भूत्वा** आसीः तेषां पुरत एव **लाघवं यास्यसि** इत्यर्थः ॥ ३५ ॥

*अ०प्र०*— किञ्च, महारथाः त्वाम्[१], भयात्[२], रणात्[३], उपरतम्[४], मन्यन्ते[५], च[६], येषां च मध्ये[७], त्वं बहुमतो भूत्वा[८], लाघवं[९], यास्यसि[१०] इत्यन्वयः ।

उपरतं = निवृत्तम्, मन्येरन्[५], बहुमतो भूत्वा = स्थितः अधुना[८], शेषं स्पष्टम् ॥ ३५ ॥

**गीता**

**अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहितः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

***वि०वि०***— किञ्च, अवाच्यवादान् वचनानर्हान् । अहिताः शत्रवो वदिष्यन्ति ॥ ३६ ॥

***सा०सं०***— न केवलं लाघवप्राप्तिः । **तवाहिताः** शत्रवः **अवाच्यवादान्** वचनानर्हशब्दान् **बहून् वदिष्यन्ति** । **ततः** शत्रुकृतनिन्दादिश्रवणात् **दुःखतरम्** अतिशयितदुःखं **किं नु** ? न किमपीत्यर्थः ॥ ३६ ॥

***अ०प्र०***— किञ्च, **अवाच्यवादांश्चेति** ।

हे पार्थ ! तवाहिताः[१], तव सामर्थ्यं[२], निन्दन्तस्सन्तः[३], बहून्[४], अवाच्य-वादांश्च[५], वदिष्यन्ति[६], ततः[७], दुःखतरं नु किं[८] इत्यन्वयः ।

तवाहिताः = त्वच्छत्रवो दुर्योधनादयः बहून् = बहुतरान्[४], अवाच्य-वादान् = अवाच्यान् अवादान् वचनान् अनर्हान् शब्दान्, यद्वा तव विषये वक्तुमयोग्यानि वाक्यानि च[५], वदिष्यन्ति[६], ततः शत्रुभिर्निन्दाकृतजनित-दुःखात् परम्[७], दुःखतरं नु किं = अतिशयेन दुःखतरं किं[८], इत्यर्थः ॥ ३६ ॥

**गीता**

**हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

***वि०वि०***— यच्चोक्तं जयश्च सन्दिग्ध इति तत्र पक्षद्वयेऽपि न हानिरित्याह **हत इति** । जित्वा महीं स्वर्गं च भोक्ष्यसे । 'ये युध्यन्ते प्रधनेषु' इति ऋग्वेदे ॥ ३७ ॥

***सा०सं०***— यच्चोक्तं "न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः" इति जयः सन्दिग्ध इति, पक्षद्वयेऽप्यहानिरित्याह **हतो वेति** । **जित्वा वा भोक्ष्यसे महीमि**त्यत्र **स्वर्गं च** पश्चात् **प्राप्स्यसी**त्यपि ध्येयम् ।

"ये युद्ध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः ।
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात् ॥"

इति श्रुतौ ये शूराः प्रधनेषु युद्धेषु युद्ध्यन्ते । य च तत्र म्रियन्ते, ये च सहस्रसङ्ख्याक-दक्षिणादातारस्तानेवायं प्रेतोऽपि गच्छतादिति यमं प्रति प्रेतस्य स्वर्गप्रार्थनात् । तत्र च ये युद्ध्यन्ते तान् प्रेतो गच्छतादिति युद्धशूराणां जयेऽपि स्वर्गप्राप्तेरत्र श्रुतावक्गमात् । **तस्मात्** पक्षद्वयेऽपि फलभावाद्युद्धाय **कृतनिश्चयः सन्नुत्तिष्ठ** सन्नद्धो भवेत्यर्थः ॥ ३७ ॥

*अ०प्र०*— न चैतद्विद्मः कतरन्नो गरीयो इत्युक्तम्, तत्राह **हतो वेति** ।

हे कौन्तेय ![1], त्वं हतः[2], स्वर्गम्[3], प्राप्स्यसे[4], जित्वा वा[5], महीं[6], वा शब्देन स्वर्गं च भोक्ष्स्ये[7], यतः = तस्मात्[8], युद्धाय कृतनिश्चयः सन्[9], उत्तिष्ठ[10] इत्यर्थः ॥ ३७ ॥

**गीतातात्पर्यनिर्णयः**

**जित्वा स्वर्गं महीं च ।**

**"ये युद्ध्यन्ते प्रधनेषु शूरासः" इति श्रुतेः ॥ ३७ ॥**

*प्रका०*— हतो वेत्येतद्व्याचष्टे **जित्वेति** । शत्रून् जित्वा स्वर्गं महीं च प्राप्येते पुरुषेणेत्यत्र श्रुतिमुदाहरति— "ये युद्ध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः । ये वा सहस्रदक्षिणास्तांश्चिदेषाभि गच्छतात्" इत्यत्र युध्यमानानां शत्रून् जयतां युध्येषु तनूः त्यजतां च सहस्रदक्षिणानां यजमानानां च स्वर्गप्राप्तिः प्रतीयते । "तांश्चिदयं प्रेतो गच्छतात्" इति प्रार्थनात् ॥ "तपसा स्वर्ययुः" इति स्वर्गप्रस्तावाच्च ॥

*न्या०दी०*— "यद्वा जयेम" इत्युक्तस्य पक्षद्वयेऽप्यहानिः परिहार उच्यते "हतो वेति" । तत्र "हतो वा प्राप्स्यसि स्वर्गम्" इत्यत्रेव "जित्वा वा भोक्ष्यसे महीम्" इत्यत्रापि महीमात्रं न स्वर्ग इत्यन्यथाप्रतीतिनिरासायाऽऽह **जित्वेति** ॥ "युद्धे मृत एव स्वर्गं प्राप्स्यसि, जित्वा महीमेव भोक्ष्यसे" इति प्रतीत एवार्थः किं न स्यादित्यत आह **य इति** ॥ ये शूराः युद्धेषु प्रयुद्ध्यन्ति, ये च तत्र म्रियते, ये च सहस्रसङ्ख्यातधनदक्षिणादातारः तानेवायं प्रेतोऽपि गच्छतादिति यमं प्रति प्रेतस्य स्वर्गप्रार्थनात् जयेऽपि स्वर्गप्राप्तिः श्रूयते । अतो न प्रतीत एवार्थ इति भावः ॥

*भा०दी०*— **इत्युक्तस्येति** । इत्यर्जुनेनोक्तस्य जयसन्देहस्येत्यर्थः । आज्जसेरसुगिति भावेनाह **शूरा इति** । प्रधानेषु युद्धेषु ये तनुत्यजः । "ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात्" इति

श्रुतिशेषार्थमाह **ये च तत्रेत्यादिना** ॥ जयेऽपीति । ''ये युध्यन्ते तानयं गच्छतात्'' इति श्रवणादिति भावः ॥

**गीता**

## सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
## ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥

***वि०वि०***— मुमुक्षोर्युद्धानुष्ठानप्रकारमाह **सुखदुःखे इति** । द्वन्द्वसहिष्णुः सन् युद्धाय यतस्व । एवं सति पापं पापफलं संसारदुःखं नावाप्स्यसि ॥ ३८ ॥

***सा०सं०***— यच्चोक्तं ''पापमेवाश्रयेदस्मान्'' इति तत्राह **सुखेति** । यथा दुःखमनुपादेयं तथा वैषयिकसुखमप्यनुपादेयमित्यनुपादेयत्वेन दुःखसमं सुखं कृत्वा इत्यर्थः । **लाभालाभावित्यादावपि** समावित्यनुषङ्गः । अनुपादेयत्वेनालाभसमं लाभं कृत्वेत्यर्थः । **जयाजयावित्यत्राप्येवमर्थो** ध्येयः । सुखाद्यभिलाषं हित्वा भगवत्पूजारूपोऽयं स्वधर्म इति बुद्ध्वेति यावत् । **युद्धाय युज्यस्व** युङ्क्ष्व । ततो भगवद्भक्तिपूर्वकं स्वधर्मतयाऽनुष्ठानात् पापं **नैवाप्स्यसि** । प्रत्युत पुण्यमेवाप्स्यसीत्यर्थः ॥३८॥

***अ०प्र०***— यद्युक्तं पापमेवाश्रयेदिति, तत्राह **सुखदुःखेति** ।

सुखदुःखे समे कृत्वा[१], तथा तयोः कारणभूतौ लाभालाभौ[२], तयोरपि कारणभूतौ जयाजयावपि समौ कृत्वा[३], युद्धाय[४], युज्यस्व[५], तत[६], एवं[७], पापं[८], न अवाप्स्यसि[९] इत्यन्वयः ।

हे पार्थ ! त्वं, सुखदुःखे समे कृत्वा = सुखदुःखयोः समीकरणं कृत्वा सुखदुःखानां समीकरणं नाम यथादुःखमनुपादेयं तथा वैषयिकसुखमिति मत्वा तज्जन्यहर्षविषादराहित्यम्[१], युद्धाय श्रीहरिप्रेरितः अहं तत्प्रीत्यर्थं स्वविहितं कर्म करिष्ये इति बुद्ध्या युद्धाय[४], युज्यस्व = सन्नद्धो भव[५], ततः[६], एवं निष्कामज्ञानपूर्वककृतं कर्म श्रीमहाविष्णोः समर्प्य[७], पापं = संसारदुःखं[८], न अवाप्स्यसीत्यर्थः ॥ ३८ ॥

***भा०र०***— ***तथा चाष्टश्लोक्या अयमक्षरार्थः***— यदुक्तं ''सीदन्ति मम गात्राणि'', ''वेपथुश्च शरीरे मे'' इत्यादि तत्रोच्यते **स्वधर्ममिति** । अपि च हे भारत स्वधर्मं विष्णुद्विट्तदनुबन्धि-निग्रहरूपमलौकिकश्रेयस्साधनम् अवेक्ष्य अवलम्ब्य विकम्पितुं प्रचलितुं नार्हसि । यच्च ''न च श्रेयोऽनुपश्यामि'' इत्युक्तं तत्रोच्यते **धर्म्याद्धीति** । धर्मादनपेतात् न्याय्याद् युद्धाद् अन्यत् श्रेयः क्षत्रियस्य न विद्यते । हिशब्देन शास्त्रेषु कर्तव्यतया प्रसिद्धत्वमाह ॥ ३१ ॥

किञ्च महति श्रेयसि स्वयमेवोपनते तत्र विकम्पोऽनुचित इत्युच्यते **यदृच्छयेति** । भगवदिच्छया उपपन्नं प्राप्तम् अपावृतम् अपगतावरणं स्वर्गद्वारम् उद्घाटितपारलौकिकसुखद्वारम् ईदृशं धर्म्यम् युद्धं ये लभन्ते ते क्षत्रियाः सुखिनः । अतिशायिनिक इनिः । अतिशयितसुखशालिनः । एतेन "स्वजनं हि कथं हत्वा सुखिनः स्याम" इति यदुक्तं तन्निरस्तम् ॥ ३२ ॥

युद्धाकरणे अनर्थप्राप्तिप्रतिपादनमुखेनापि तत्कर्तव्यतोपदिश्यते **अथ चेत् इत्यादि** । इमं यदृच्छया पारलौकिकश्रेयस्साधनत्वेनोपपन्नं धर्म्यं धर्मादनपेतं सङ्ग्रामं युद्धं न करिष्यसि चेत् ततः स्वधर्माकरणात् न केवलमुभयोर्हानिः पापमवाप्स्यसि च ॥ ३३ ॥

अपि च अकीर्तिं भूतानि कथयिष्यन्ति । **अव्ययां** सर्वदेशकालव्यापिनीम् । कथयन्तु नामेत्यत उक्तम् । **सम्भावितस्य** शौर्यधैर्यादिगुणशालीत्येवं बहुमतस्य । **अतिरिच्यते** अधिका भवति । सम्भावितस्य पुरुषस्य अकीर्तेर्मरणमेव वरमिति ॥ ३४ ॥

दयालुत्वादुपरतोऽयं युद्धादिति कीर्तिमेव किं न वदेयुरित्यत उच्यते **भयादिति** । भयात् कर्णदुर्योधनादिभ्यः रणाद् युद्धादुपरतं निवृत्तं मंस्यन्ति चिन्तयिष्यन्ति । महारथाः कर्णदुर्योधनप्रभृतयः । के मंस्यन्ते ? येषां च त्वं दुर्योधनादीनां बहुमतः बहुभिः शौर्यवीर्यादिगुणैः मतः "मतिबुद्धिपूजार्थेभ्यश्च" इति षष्ठी । बहुमतः सम्भावितो वा भूत्वा पुनर्यास्यसि लाघवं लघुभावम् । शूराणां हि वैरिणां शत्रुभयाद् ऋते बन्धुस्नेहादयो वा युद्धादुपरतौ न निमित्तमिति तत उपरतस्य लाघवमेव वदेयुरिति ॥ ३५ ॥

किञ्च तवाहिताः शत्रवः अनेकप्रकारान् अवाच्यवादान् अवक्तव्यशब्दान् वदिष्यन्ति । कीदृशाः ? तव सामर्थ्यं पराक्रमं निन्दन्तः कुत्सयन्तः । ततो निन्दाश्रवणात् दुःखतरं नु किम् ? न किमपि अतिशयितं कष्टम् ॥ ३६ ॥

यच्चोक्तं "न चैतद् विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः" इति । तत्र पक्षद्वयेऽप्यहानिरित्युच्यते **हतो वेति** । शत्रुभिर्हितश्चेत् स्वर्गं प्राप्स्यसि । शत्रून् जित्वा वा महीं भोक्ष्यसे । उभयथाऽपि तव लाभ एव । यत एवं तस्मात् कृतनिश्चयः अवश्यानुष्ठेयमिदं स्वधर्मरूपं युद्धमिति निश्चयवान् युद्धायोत्तिष्ठ सन्नद्धो भव । स्वधर्मरतायाः कुन्त्याः पुत्रस्य तवेदं युक्तमिति कौन्तेयेति सम्बुद्धिः ॥ ३७ ॥

यच्चोक्तं "पापमेवाश्रयेदस्मान्", "मित्रद्रोहे च पातकम्" इत्यादि तत्रोच्यते **सुखदुःख इति** । यथा दुःखमनुपादेयं तथा वैषयिकं सुखमप्यनुपादेयमिति सुखदुःखे तुल्ये कृत्वा तथा लाभालाभौ

जयाजयौ समौ कृत्वा तत्र आस्थामविधाय भगवत्पूजारूपोऽयं स्वधर्म इति बुद्ध्या युज्यस्व युद्ध घटस्व । एवं भगवद्भक्तिपूर्वं युद्धाचरणे पापं नावाप्स्यसीति स्वामिन इति । **उत्तरत्रापि** । ये श्लोका भाष्यकृता न व्याख्याता तत्रापि इति योज्यम् ॥ ३८ ॥

**गीता**

## एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
## बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९॥

***वि०वि०***— उपदिष्टज्ञानयोगोपसंहारपूर्वकं तदुपायं फलवत्कर्मसमाधियोगं वक्तुं प्रतिजानीते **एषेति** । सम्यक् ख्यातिर्ज्ञानं साङ्ख्यम् । युज्यतेऽनेनेति योगस्तदुपायः । 'सम्यक्तत्वदृशिः साङ्ख्यं योगस्तत्साधनं स्मृतम्' इत्यभिधानात् ।

अथवा परमसाङ्ख्ययोगशास्त्रे गृह्येते नेतरे वेदबाह्ये तयोर्हेयत्वात् । साङ्ख्यस्य निरीश्वरत्वात् । अत्र च ईश्वरस्य उक्तत्वात् । साङ्ख्ययोगैश्च विहितहिंसाया अप्यनर्थहेतुत्वाङ्गीकारात् । अत्र च 'कर्मबन्धं प्रहास्यसि' इति मोक्षार्थत्वेनैव युद्धविधानात् । तदुक्तम्—

'उक्तं च परमं साङ्ख्यं कपिलाख्येन विष्णुना ।
सेश्वरं वैदिकं साक्षात् हेयमन्यदवैदिकम् ॥'

इति । बुद्ध्यतेऽनयेति बुद्धिः । आत्मतत्वज्ञानविषये यथा बोधो भवति तथैवैषा वागभिहिता । योगे त्विमां वक्ष्यमाणां श्रुणु । यया बुद्ध्या युक्तोऽनभिसन्धितफलेश्वरार्पितधर्मानुष्ठानादन्तःकरणशुद्धिः परमात्मसाक्षात्कारेण कर्मबन्धं संसारं प्रकर्षेण हास्यसि त्यक्ष्यसीति ॥ ३९ ॥

***वा०ल०***— 'एषा तेऽभिहिता साङ्ख्ये' भगवन्महिमाप्रतिपादकपञ्चरात्रादिशास्त्रे । योगे कर्मकौशलशास्त्रे ॥ ३९ ॥

***सा०सं०***— 'न त्वेव' इत्यादि ग्रन्थोक्तार्थोपसंहारपूर्वकं तत्सङ्गतत्वेनोत्तरप्रकरणारम्भं प्रतिजानीते **एषेति** । अत्र **साङ्ख्यशब्दो** जीवेश्वरज्ञानपरः । 'न त्वं नेमे' इत्यादिना जीवस्य प्राधान्येन, तादर्थ्येन 'न त्वेवाहम्' इत्यादिना ईश्वरस्येति द्वयोरपि प्रकृतत्वात् । **बुद्धिशब्दश्च** बुद्ध्यते अनयेति करणव्युत्पत्त्या बोधजनकवाक्यपरः । **योगशब्दश्च** युज्यते प्राप्यते फलमनेनेति करणव्युत्पत्त्या उपायपरः ।

अयमर्थः— हे पार्थ ! **साङ्ख्ये** जीवेश्वरस्वरूपज्ञानविषये । तज्जननार्थमिति यावत् । **एषा** 'न त्वेवाहम्' इत्यारभ्य 'देही नित्यमवध्यः' इत्यन्ता । **बुद्धिः** तदुभयस्वरूपबोधजनिका **वाक्** वाक्यानीति यावत् । **ते** तुभ्यम् **अभिहिता** उक्ता । **योगे** तज्ज्ञानहेतूपायविषये **तु**, उपायज्ञानार्थमिति यावत् । **इमां** 'त्रैगुण्यविषयाः' इत्यादिनाऽऽषष्ठसमाप्ति वक्ष्यमाणां बुद्धिम् उपायबोधजनिकां **वाचं** वाक्यानीति यावत् । **शृणु** । श्रवणमात्रस्य विधिना विनापि सम्भवात् श्रुत्वा तत्र निष्ठां कुरु इत्यर्थः । अत्र **वागभिहिता** इति यौगिकबुद्धिपदेन तदुक्तिर्नाविशदं वाङ्मात्रमुक्तम् । किन्तु तदवबोधो यथोत्पद्येत तथोक्तमिति ज्ञापनायेति ध्येयम् । आदरजननाय योगं प्रशंसनि **बुद्ध्या** इत्यादि सार्ध-श्लोकेन । **यया** मद्वाक्जन्यया **बुद्ध्या** ज्ञानोपायबुद्ध्या **युक्तः** सन् तदनुष्ठानद्वारा ब्रह्मसाक्षात्कारा-तिशयं **प्राप्य कर्मबन्धं** संसारम् । निःशेषतः **प्रहास्यसि** मुक्तो भविष्यसि ॥ ३९ ॥

*अ०प्र०*— उपदिष्टं ज्ञानयोगं उपसंहरंस्तत्साधनं कर्मयोगं प्रस्तौति **एषेति** ।

एषा[१], ते[२], बुद्धिः[३], साङ्ख्ये[४], अभिहिता[५], योगे तु[६], इमां बुद्धिं शृणु[८], यया[९], बुद्ध्या[१०], युक्तः सन्[११], कर्मबन्धं[१२], प्रहास्यसि[१३] इत्यन्वयः ।

हे पार्थ !, एषा = करणीया[१], ते = तव[२] बुद्धिः[३], साङ्ख्ये सम्यक् ख्यायते प्रकाश्यते वस्तुतत्वमनयेति, सङ्ख्या सम्यग्ज्ञानं तस्मिन्प्रकाशमानमात्मतत्त्वं साङ्ख्यं तस्मिन् साङ्ख्ये[४], अभिहिता, योगे तु अभिहितायामपि साङ्ख्यबुद्धौ तव चेदात्मतत्त्वं अपरोक्षं न भवति तर्हि अतः अन्तःकरणशुद्धिद्वारा आत्मतत्त्वापरोक्षार्थं कर्मयोगे तु युज्यतेऽनेनेति श्रीहरिः सर्वोत्तमः जयाजयादि तदधीनौ अहं जीवस्तस्यैवाधीनः मया विहितकर्म कर्तव्यमिति ज्ञानानन्तरं[५], योगः तस्मिन् योगे तु[६], इमां वक्ष्यमाणां बुद्धिवाचं[७], शृणु[८], यया[९], बुद्ध्या बुद्ध्यते अनयेति बुद्धिः वाक् तया बुद्ध्या युक्तः सन् परमेश्वरार्पितकर्मयोगेन शुद्धान्तःकरणः सन्[१०], कर्मबन्धं = शुद्धान्तःकरणद्वारा श्रीपरमेश्व-रप्रसादमाप्त्वा परोक्षज्ञानेन कर्मात्मकबन्धम्[१२], प्रहास्यसि = प्रकर्षेण त्यक्ष्यसीत्यर्थः ॥ ३९ ॥

**गीतातात्पर्यनिर्णयः**

**सम्यक् ख्यातिर्ज्ञानं साङ्ख्यम् । युज्यतेऽनेनेति योगस्तदुपायः ।**

**"सम्यक्तत्त्वदृशिः साङ्ख्यं योगस्तत्साधनं स्मृतम्" इति शब्दनिर्णये ।**

*प्रका०*— एषा त इत्येतद्व्याचष्टे **सम्यगिति** ।

***न्या०दी०*—** उक्तमुपसंहृत्य प्रकरणान्तरमारभ्यते "एषेति" । तत्र साङ्ख्ययोगशब्दौ दर्शनविशेषपराविति प्रतीतिनिरासाय तदर्थं सप्रमाणकमाह **सम्यगिति** ॥ अत्रोक्तयोः साङ्ख्ययोगयोर्बुद्ध्या युक्त इति प्रशस्तत्वादितरयोर्निन्दितत्वान्न तावत्रोक्ताविति भावः ।

***भा०दी०*—** **उक्तमिति** । "न त्वं नेमे" इत्यादिना यत् जीवतत्त्वस्वरूपमुक्तं तत् एषेति प्रथमपादेनोपसंहृत्य ज्ञानोपायनिरूपणप्रकारान्तरं आरभ्यते । आरम्भप्रतिज्ञा क्रियते द्वितीयपादेन इत्यर्थः । अनयोरपि निन्दितत्वे को विशेष इत्यत आह **अत्रोक्तयोरिति** ॥

**गीतातात्पर्यनिर्णयः**

**"ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितम् ।**
**अक्षपादकणादौ च साङ्ख्ययोगौ च हैतुकाः ॥**
**बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः ।**
**मीमांसा त्रिविधा प्रोक्ता ब्राह्मी दैवी च कार्मिकी ॥**
**ब्रह्मतर्कं च मीमांसां सेवेत ज्ञानसिद्धये ।**
**वैदिकज्ञानवैरूप्यान्नान्यत्सेवेत पण्डितः ॥"**

**इत्यन्यसाङ्ख्ययोगयोर्निषिद्धत्वान्नारदीये ।**

***प्रका०*—** अत्र साङ्ख्ययोगशब्दाभ्यां न वैदिकाभासभूतसाङ्ख्यदर्शनं योगदर्शनं चोपादेयमित्येतदर्थं पुराणवचनमाह **ब्रह्मतर्क इति** ।

**गीतातात्पर्यनिर्णयः**

**साङ्ख्यस्य निरीश्वरत्वादुक्तत्वाच्चेश्वरस्य । साङ्ख्यैर्योगैश्च विहितहिंसाया अप्यनर्थहेतुत्वाङ्गीकारात् । अत्र तु युद्धविधानाच्च । मोक्षार्थत्वेनैव "कर्मबन्धं प्रहास्यसी"ति । परमसाङ्ख्ययोगयोश्चोक्तार्थत्वेनैव न विरोधः ॥ ३९ ॥**

***प्रका०*—** इतोऽप्यत्र साङ्ख्ययोगशब्दौ न वैदिकाभासदर्शनपरावित्याह **साङ्ख्यस्येत्यादिना** । साङ्ख्ययोगशब्दाभ्यामत्र परयोः साङ्ख्ययोगयोर्भगवदवताराभ्यां कपिलदत्तात्रेयाभ्यां कृतयोः स्वीकारे न विरोधः । भगवद्गीतार्थप्रतिपादकत्वादित्याह **परमेति** ।

अयमर्थः— हे पार्थ ! **साङ्ख्ये** जीवेश्वरस्वरूपज्ञानविषये । तज्जननार्थमिति यावत् । **एषा** 'न त्वेवाहम्' इत्यारभ्य 'देही नित्यमवध्यः' इत्यन्ता । **बुद्धिः** तदुभयस्वरूपबोधजनिका **वाक्** वाक्यानीति यावत् । **ते** तुभ्यम् **अभिहिता** उक्ता । **योगे** तज्ज्ञानहेतूपायविषये **तु**, उपायज्ञानार्थमिति यावत् । **इमां** 'त्रैगुण्यविषयाः' इत्यादिनाऽऽषष्ठसमाप्ति वक्ष्यमाणां बुद्धिम् उपायबोधजनिकां **वाचं** वाक्यानीति यावत् । **शृणु** । श्रवणमात्रस्य विधिना विनापि सम्भवात् श्रुत्वा तत्र निष्ठां कुरु इत्यर्थः । अत्र **वागभिहिता** इति यौगिकबुद्धिपदेन तदुक्तिर्नाविशदं वाङ्मात्रमुक्तम् । किन्तु तदवबोधो यथोत्पद्येत तथोक्तमिति ज्ञापनायेति ध्येयम् । आदरजननाय योगं प्रशंसनि **बुद्ध्या** इत्यादि सार्ध-श्लोकेन । **यया** मद्वाक्जन्यया **बुद्ध्या** ज्ञानोपायबुद्ध्या **युक्तः** सन् तदनुष्ठानद्वारा ब्रह्मसाक्षात्कारा-तिशयं **प्राप्य कर्मबन्धं** संसारम् । निःशेषतः **प्रहास्यसि** मुक्तो भविष्यसि ॥ ३९ ॥

*अ०प्र०*— उपदिष्टं ज्ञानयोगं उपसंहरंस्तत्साधनं कर्मयोगं प्रस्तौति **एषेति** ।

एषा[१], ते[२], बुद्धिः[३], साङ्ख्ये[४], अभिहिता[५], योगे तु[६], इमां बुद्धिं शृणु[७], यया[८], बुद्ध्या[१०], युक्तः सन्[११], कर्मबन्धं[१२], प्रहास्यसि[१३] इत्यन्वयः ।

हे पार्थ !, एषा = करणीया[१], ते = तव[२] बुद्धिः[३], साङ्ख्ये सम्यक् ख्यायते प्रकाश्यते वस्तुतत्वमनयेति, सङ्ख्या सम्यग्ज्ञानं तस्मिन्प्रकाशमानमात्मतत्त्वं साङ्ख्यं तस्मिन् साङ्ख्ये[४], अभिहिता, योगे तु अभिहितायामपि साङ्ख्यबुद्धौ तव चेदात्मतत्त्वं अपरोक्षं न भवति तर्हि अतः अन्तःकरणशुद्धिद्वारा आत्मतत्त्वापरोक्षार्थं कर्मयोगे तु युज्यतेऽनेनेति श्रीहरिः सर्वोत्तमः जयाजयादि तदधीनौ अहं जीवस्तस्यैवाधीनः मया विहितकर्म कर्तव्यमिति ज्ञानानन्तरं[५], योगः तस्मिन् योगे तु[६], इमां वक्ष्यमाणां बुद्धिवाचं[७], शृणु[८], यया[९], बुद्ध्या बुद्ध्यते अनयेति बुद्धिः वाक् तया बुद्ध्या युक्तः सन् परमेश्वरार्पितकर्मयोगेन शुद्धान्तःकरणः सन्[१०], कर्मबन्धं = शुद्धान्तःकरणद्वारा श्रीपरमेश्व-रप्रसादमात्वा परोक्षज्ञानेन कर्मात्मकबन्धम्[१२], प्रहास्यसि = प्रकर्षेण त्यक्ष्यसीत्यर्थः ॥ ३९ ॥

**गीतातात्पर्यनिर्णयः**

**सम्यक् ख्यातिर्ज्ञानं साङ्ख्यम् । युज्यतेऽनेनेति योगस्तदुपायः ।**

**"सम्यक्तत्त्वदृशिः साङ्ख्यं योगस्तत्साधनं स्मृतम्" इति शब्दनिर्णये ।**

*प्रका०*— एषा त इत्येतद्व्याचष्टे **सम्यगिति** ।

*न्या०दी०*— उक्तमुपसंहृत्य प्रकरणान्तरमारभ्यते "एषेति" । तत्र साङ्ख्ययोगशब्दौ दर्शन-विशेषपराविति प्रतीतिनिरासाय तदर्थं सप्रमाणकमाह **सम्यगिति** ॥ अत्रोक्तयोः साङ्ख्ययोगयोर्बुद्ध्या युक्त इति प्रशस्तत्वादितरयोर्निन्दितत्वान्न तावत्रोक्ताविति भावः ।

*भा०दी०*— **उक्तमिति** । "न त्वं नेमे" इत्यादिना यत् जीवतत्त्वस्वरूपमुक्तं तत् एषेति प्रथमपादेनोपसंहृत्य ज्ञानोपायनिरूपणप्रकारान्तरं आरभ्यते । आरम्भप्रतिज्ञा क्रियते द्वितीयपादेन इत्यर्थः । अनयोरपि निन्दितत्वे को विशेष इत्यत आह **अत्रोक्तयोरिति** ॥

**गीतातात्पर्यनिर्णयः**

**"ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितम् ।**
**अक्षपादकणादौ च साङ्ख्ययोगौ च हैतुकाः ॥**
**बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः ।**
**मीमांसा त्रिविधा प्रोक्ता ब्राह्मी दैवी च कार्मिकी ॥**
**ब्रह्मतर्कं च मीमांसां सेवेत ज्ञानसिद्धये ।**
**वैदिकज्ञानवैरूप्यान्नान्यत्सेवेत पण्डितः ॥"**

**इत्यन्यसाङ्ख्ययोगयोर्निषिद्धत्वान्नारदीये ।**

*प्रका०*— अत्र साङ्ख्ययोगशब्दाभ्यां न वैदिकाभासभूतसाङ्ख्यदर्शनं योगदर्शनं चोपादेय-मित्येतदर्थं पुराणवचनमाह **ब्रह्मतर्क इति** ।

**गीतातात्पर्यनिर्णयः**

**साङ्ख्यस्य निरीश्वरत्वादुक्तत्वाच्चेश्वरस्य । साङ्ख्यैर्योगैश्च विहितहिंसाया अप्यनर्थहेतुत्वाङ्गीकारात् । अत्र तु युद्धविधानाच्च । मोक्षार्थत्वेनैव "कर्मबन्धं प्रहास्यसी"ति । परमसाङ्ख्ययोगयोश्चोक्तार्थत्वेनैव न विरोधः ॥ ३९ ॥**

*प्रका०*— इतोऽप्यत्र साङ्ख्ययोगशब्दौ न वैदिकाभासदर्शनपरावित्याह **साङ्ख्यस्येत्यादिना** । साङ्ख्ययोगशब्दाभ्यामत्र परयोः साङ्ख्ययोगयोर्भगवदवताराभ्यां कपिलदत्तात्रेयाभ्यां कृतयोः स्वीकारे न विरोधः । भगवद्गीतार्थप्रतिपादकत्वादित्याह **परमेति** ।

*न्या०दी०*— इतोऽपि न साङ्ख्यपदेनात्र प्रसिद्धसाङ्ख्यं विवक्षितमित्याह साङ्ख्यस्येति ॥ अत्र साङ्ख्यपदेन प्रसिद्धसाङ्ख्यग्रहणे साङ्ख्योक्तमभिहितमित्युक्तं स्यात् । न च तद्युक्तम् । अत्र "न जायते" इत्यादावीश्वरस्योक्तत्वात्, साङ्ख्यस्य निरीश्वरत्वात् । अतश्च नात्र साङ्ख्यं शास्त्रविशेष इत्यर्थः । इतोऽपि नात्र साङ्ख्ययोगशब्दौ प्रसिद्धशास्त्रपरावित्याह **साङ्ख्यैरिति** ॥ अत्र पूर्वोत्तर-प्रकरणयोः । साङ्ख्यादिभिः पारत्रिकानर्थहेतुत्वमेव हिंसाया अङ्गीक्रियते । न त्वैहिके । अत्र पुना राज्यार्थमेव हिंसा विधीयते । अतो न विरोध इत्यत आह **मोक्षेति** ॥ साङ्ख्ययोगशब्दयोः सोपपत्तिकमर्थान्तरं चाह **परमेति** ॥ पूर्वोक्तप्रकरणोक्तार्थप्रतिपादकत्वादित्यर्थः । न विरोधोऽत्र तदुक्तग्रहण इति शेषः ॥

*भा०दी०*— **न त्वैहिक इति** । ऐहिकफले न हेतुत्वमङ्गीक्रियत इत्यर्थः ॥ **अत्र पुनरिति** । राज्यार्थमिति पदविभागः । **सोपपत्तिकमिति** । विरोधाभावलक्षणोपपत्तिसहितं पूर्वोत्तर-प्रकरणोक्तार्थप्रतिपादकत्वरूपं धर्मान्तरमित्यर्थः । तेन ज्ञानोपायायेव साङ्ख्ययोगशब्दार्थौ नान्यौ पूर्वोत्तरोक्तार्थविरोधादिति भावः ॥

**गीता**

## नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
## स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

*वि०वि०*— तदेवोपपादयति **नेहेति** । इह निष्कामविष्णवर्पणार्थे वैष्णवकर्मयोगोऽभिक्रमस्य नाशो निष्फलत्वं नास्ति । उपक्रान्तस्य विच्छेदे तदन्यधर्माकरणे वा प्रत्यवायो न गम्यते । अस्य वैष्णवधर्मस्य स्वल्पांशोऽपि संसाराद्रक्षति । उक्तं च—

"प्रारंभमात्रमिच्छा वा विष्णुधर्मे न निष्फला ।
नचान्यधर्माकरणाद्दोषवान् विष्णुधर्मकृत् ॥"

"स्वोचितेनैव धर्मेण विष्णुपूजामृते क्वचित् ।
नाप्रवृत्तिः प्रवृत्तिर्वा यत्र धर्मः स वैष्णवः ॥" इति ॥ ४० ॥

*सा०सं०*— किञ्च **इह** वक्ष्यमाणे योगशब्दितज्ञानोपायभूतनिष्कामविष्णवाराधनरूपकर्मविषये **अभिक्रमस्योपक्रमस्य नाशो नास्ति** । उपक्रममात्रस्यापि निष्फलता नास्तीत्यर्थः । "प्रारम्भ-मात्रमिच्छा वा" इत्यादेः उपक्रान्तविष्णुधर्मविच्छेदे वा विष्णुधर्मवतोऽन्यधर्माकरणे वा **प्रत्यवायो**

**न विद्यते । अस्य धर्मस्य** विष्णुपूजात्मकनिष्कामकर्मणः **स्वल्पमपि** एकांशोऽपि **महतो भयात्** संसारभयात् **त्रायते** रक्षति । तस्मात् तत्र निष्ठां कुर्विति भावः ।

ननु "ज्ञानं हि जैवमुक्तम्" इति भाष्योक्तेः जीवतत्त्वं प्रागुक्तम् । ब्रह्मज्ञानोपायश्च वक्ष्यते । न हि निवृत्तकर्मानुष्ठानादिरूपो योगो जीवज्ञानहेतुः । अतः कथं पूर्वोत्तरप्रकरणयोः साध्यसाधन-विषयतया सङ्गतत्वम् । मैवम् । "श्रुत्वाऽप्येनम्" इत्यत्र भगवत्प्रतिबिम्बत्वादिना जीवचैतन्यवेदी दुर्लभ इत्युक्त्या तादृशत्वेन तज्ज्ञानोपायस्याप्याकाङ्क्षितत्वेन वक्ष्यमाणनिवृत्तकर्मानुष्ठानाराधित-भगवत्प्रीतेरेव ईश्वरतत्त्वज्ञानस्योपायत्वात् । तादर्थ्येन प्रकृतस्यापीश्वरस्य 'तस्मादेवं विदित्वैनम्' इत्यत्र स्वातन्त्र्यादिना ज्ञानस्य मोक्षादिसर्वपुमर्थहेतुत्वोक्त्या तज्ज्ञानोपायस्याप्याकाङ्क्षितत्वात् । वक्ष्यमाणसाधनस्य च यथावत्तया परापरतत्त्वज्ञानोपायत्वान्न पूर्वोत्तरप्रकरणयोरसङ्गतिः । अत्र योगस्यानेकाध्यायप्रतिपाद्यत्वात् श्रोतृमनःसमाधानाय पूर्वसङ्गतत्वेन प्रतिज्ञाकरणसार्थक्यं ज्ञेयम् । ॥ ४० ॥

*अ०प्र०*— ननु कृष्यादिवत् कर्मणां कदाचिद्विघ्नबाहुल्येन फले व्यभिचारात् मन्त्राद्यङ्गवैगुण्येन च प्रत्यवायसम्भवात् कुतः कर्मयोगेन कर्मबन्धप्रहाणम्, तत्राह **नेति** ।

हे पार्थ !, इह[१], अभिक्रमनाशः[२], नास्ति[३], प्रत्यवायश्च[४], न विद्यते[५], अस्य[६], धर्मस्य[७], स्वल्पमपि कृतं[८], महतो भयात्[९], त्रायतेत्यन्वयः ।

इह निष्कामतया विष्णवर्पणार्थे स्वविहिते कर्मणि अभिक्रमनाशः अभिक्रमस्य = उपक्रमस्य प्रारम्भस्य वा नाशः, निष्फलत्वम्[२], नास्ति[३], प्रत्यवायश्च न विद्यते[४], ईश्वरोद्देशेनैव विघ्नवैगुण्याद्य-सम्भवात्[५], अस्य वैष्णवधर्मस्य[७], स्वल्पमपि उपक्रममात्रमपि वा कृतं[८], महतो भयात् संसारात्[९], त्रायते रक्षति[१०], न तु काम्यकर्मवद्वैगुण्यादिना नैष्फल्यादित्यर्थः ॥ ४० ॥

### भाष्यम्

**साङ्ख्यं ज्ञानम् । 'शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयते' इति भगवद्-वचनात् व्याससमृतौ । योगः उपायः ।**

**'दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयः प्रसिद्धये' इति प्रयोगात् भागवते । न इतरौ साङ्ख्ययोगौ उपादेयत्वेन विवक्षितौ कुत्रचित् सामस्त्येन । 'कर्मयोगः' इत्यादिप्रयोगाच्च । निन्दितत्वाच्च इतरयोः मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पञ्चरात्र-**

**स्तुत्या । वेदानां तु ऐकार्थत्वात् न विरोधः । पार्थक्यं तु साङ्ख्याद्यपेक्षया युक्तम् । तत्रैव चित्रशिखण्डिशास्त्रे पञ्चरात्रमूले वेदैक्योक्तेश्च । एवमेव सर्वत्र साङ्ख्ययोगशब्दार्थ उपादेयवाचको वर्णनीयः । युक्तेश्च । ज्ञानं हि जैवमुक्तम् । उपायश्च वक्ष्यते । बुद्ध्यतेऽनयेति बुद्धिः । साङ्ख्यविषयो यया वाचा बुद्ध्यते सा वागभिहितेत्यर्थः ॥ ३९-४० ॥**

***प०टी०***— 'साङ्ख्य' 'योग' शब्दयोरर्थान्तरं किं न स्यात् ? इत्यत आह **नेतराविति** । अत्रोक्तसाङ्ख्यादेरुपादेयत्वमुच्यते 'बुद्ध्या युक्तः' इति । न च तदितरयोः । क्वापि शास्त्रे विवक्षित-मित्यर्थः । 'योग'शब्दस्योपायवाचित्वेऽपि साङ्ख्येन सहोक्तयोगोऽन्य एवेत्यत आह **कर्मयोगेति** । 'साङ्ख्ययोगौ पृथग्बालाः' इति साङ्ख्येन सहोक्तयोगोऽपि 'संन्यासः कर्मयोगः' इति उपायतयैव श्रूयत इत्यर्थः । न केवलमितरयोरुपादेयत्वं क्वापि नोक्तम् । किन्तु निन्दितौ च तावित्याह **निन्दितत्वाच्चेति** । तर्हि वेदारण्यकस्यापि निन्दितत्वं स्यादित्यत आह **वेदानामिति** । 'ज्ञानान्येतानि भिन्नानि' इति वेदादीनां परस्परं पार्थक्योक्तेः कथं वेदपञ्चरात्रैक्यम् ? इत्यत आह **पार्थक्यं त्विति** । अन्यथाऽपृष्टोत्तरत्वप्रसङ्ग इत्यर्थः । इतश्च तदैक्यमित्याह **तत्रैवेति** । **तत्रैव** मोक्षधर्मे । चित्रशिखण्डिशास्त्रे इति षष्ठ्यर्थे सप्तमी । तस्य वेदैक्ये किं पञ्चरात्रस्य ? इत्यत उक्तम् **पञ्च-रात्रेति** । 'ये हि ते यतयः ख्याता सप्तचित्रशिखण्डिनः । तैः कृतम्' इत्युक्त्वा 'ऋग्यजुः-सामभिर्जुष्टम्' इत्यादि मोक्षधर्मे । उपादेयवाचकोऽपि साङ्ख्यादिशब्दोऽन्यपरः पुराणादौ दृश्यत इत्यत आह **एवमेवेति** । साङ्ख्यादिशब्दस्य ज्ञानाद्यर्थत्वे 'अभिहिता साङ्ख्ये योगे शृणु' इति वाक्यार्थोपपत्तेरन्यथानुपपत्तेश्चोक्तार्थतेत्याह **युक्तेश्चेति** । 'साङ्ख्य' शब्दस्य ज्ञानार्थत्वे 'बुद्धि' शब्दान्वयो दुर्घट इत्यत आह **बुद्ध्यत इति** । 'वाक्' इति दोषः । तथाऽपि ज्ञाने वागित्यस्य कोऽर्थः ? इत्यत आह **साङ्ख्येति** ॥ ३९-४० ॥

***न०टी०***— 'साङ्ख्य'-'योग'-शब्दयोरन्यत्र प्रसिद्धेः, तत्परिहाराय सम्यगर्थं सप्रमाणकमाह **साङ्ख्यमिति** । ननु 'साङ्ख्य'-'योग'-शब्दयोरन्यत्र प्रयोगमात्रेण कथमत्र प्रसिद्धार्थपरित्यागः ? इत्यत आह **नेतराविति** । अत्र साङ्ख्ययोगयोरुपादेयत्वमवगम्यते । 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' इति । न चेतरौ साङ्ख्ययोगावुपादेयत्वेन विवक्षितौ कुत्रचित् । अपि तु हेयत्वेनैव तत्र तत्र । 'अक्षपादकणादौ च साङ्ख्ययोगौ चे हैतुकाः' इति । 'सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह' इति च । 'ज्ञानं कर्म च' इत्यारभ्य 'प्रोच्यते गुणसङ्ख्याने' इत्युक्त्वा 'तज्ज्ञानं विद्धि, सात्त्विकम्' इति साङ्ख्योक्तत्रैगुण्यकथनात् कथं तस्यानुपादेयत्वमित्याशङ्क्योक्तम् **सामस्त्येनेति** । यद्यपि तदुक्ता-

वविरुद्धार्थैकदेशप्रत्यभिज्ञास्मिन् शास्त्रे । तथाऽपि न तदुपादेयत्वेन विवक्षितं गुणसङ्ख्यानशब्देन किन्तु परमसाङ्ख्यशास्त्रम् । इतरसाङ्ख्ययोगयोः निरीश्वरत्वाद्विहितहिंसाया अप्यनर्थहेतुत्वाङ्गीकाराच्च । अस्य त्वीश्वरप्रतिपादकत्वात् 'कर्मबन्धं प्रहास्यसि' इति मोक्षार्थत्वेन युद्धविधानाच्चेति भावः । 'साङ्ख्ययोगौ पृथक् बालाः' इत्यत्र वक्ष्यमाणयोगेऽपि च 'कर्मयोगः विशिष्यते' इति प्रयोगाच्च योगशब्दोऽत्रोपायवाचीत्याह **कर्मयोग इति** । भारत एवोपरि निन्दितत्वान्नेतरावत्र विवक्षितावित्याह **निन्दितत्वादिति** । निन्दितानामन्यतमस्तुत्या द्वेषान्निन्दा भवत्येवेति भावः । तर्हि वेदानामपि निन्दा स्यादित्यत आह **वेदानामिति** । वेदैक्येऽपि पञ्चरात्रस्य यत् पृथक्त्वं तत्र निर्दिष्टेभ्यः 'ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते' इति, तत् तु साङ्ख्याद्यपेक्षया घटत इत्याह **पार्थक्यमिति** । इतो न वेदपञ्चरात्रयोः पृथक्त्वशङ्का इत्याह **तत्रेति** ॥

'ये हि ते यतयः ख्याता सप्त चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत् प्रोक्तं शास्त्रमुत्तमम् ॥
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ॥' इत्यारभ्य,

'प्रवृत्तौ च निवृत्तौ च योनिरेतद्भविष्यति ।
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥' इति ।

**तत्रैव** मोक्षधर्म एवेत्यर्थः । एवं हेयवाचिसाङ्ख्ययोगशब्दस्यान्यपरत्वेऽप्युपादेयवाचिनः क्वचिदन्यथा वर्णनीय इत्याह **एवमेवेति** । उक्तवक्ष्यमाणपर्यालोचनयाऽपि ज्ञानतदुपायवाचित्वमेव 'साङ्ख्य' 'योग' शब्दयोरित्याह **युक्तश्चेति** । साङ्ख्ययोगशब्दयोः ज्ञानतदुपायवाचित्वे बुद्धिशब्दान्वयो दुर्घटः स्यात् । तस्यापि ज्ञानवाचित्वात् । अतः शास्त्रोदिता बुद्धिर्योगशास्त्रोदिता बुद्धिरित्येव स्यादित्यत आह **बुध्यत इति** । बुध्यतेऽनयेति बुद्धिशब्देनात्र करणव्युत्पत्त्या वागुच्यते । 'साङ्ख्ये' 'योगे' इति च विषयसप्तमी । अतोऽस्मत्पक्षे अन्वयः सुघट इत्यर्थः ॥ ३९-४० ॥

***प्र०दी०***— पूर्वप्रकारेणोपसंहारपूर्वकं तत्सङ्गतत्वेनोत्तरप्रकरणारम्भप्रतिज्ञार्थं 'एषा तेऽभिहिता' इत्युक्तम् । तत्र साङ्ख्ययोगशब्दौ कापिलपातञ्जलवचनाविति प्रतीतिनिरासाय व्याचष्टे– **साङ्ख्यमिति** । प्रतीतार्थाविव किं न स्यातामित्यत आह— **नेतराविति** । इतरौ शास्त्रलक्षणौ । कुत्रचिदागमे । एतौ तूपादेयौ । 'बुद्ध्या युक्तः' इत्यादिवचनात् । अतो न तावत्र विवक्षिताविति वाक्यशेषः । प्रकृतिपुरुष-विवेकादेस्तदुक्तस्योपादेयत्वात् कथमेतदित्यत उक्तम्— **सामस्त्येनेति** । एकदेशस्योपादेयतया तदुपादेयत्वे सौगतादेरपि तत्प्रसङ्ग इति भावः । इतोऽपि न योगः पातञ्जलं शास्त्रमित्याह– **कर्मेति** ।

अस्मिन्नेव योगे 'कर्मयोगो विशिष्यते' इत्यादिप्रयोगाच्च । न हि शास्त्रे कर्मयोगशब्दोऽस्तीति । न केवलमुपादेयत्वाभावान्नेतराविह विवक्षितौ । किं त्वित्यत आह— **निन्दितत्वाच्चेति** । कथं निन्दितत्वमित्यत आह— **भिन्नेति** ।

"साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ॥"

इति साङ्ख्यादीनां (विरुद्ध)भिन्नमतत्वमुक्त्वा,

"पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते ॥"

इति पञ्चरात्रस्तुत्या । विरुद्धानां एकस्तुतिरपरनिन्दां गमयतीति प्रसिद्धमेवेति भावः । एवं तर्हि वेदारण्यकस्यापि निन्दा स्यादित्यत आह— **वेदानां त्विति** । एकार्थत्वात् पञ्चरात्रेण । 'ज्ञानान्येतानि भिन्नानि' इति पार्थक्योक्तेः कथमेकार्थत्वमित्यत आह— **पार्थक्यं त्विति** । युक्तमित्यनेन तेषामेव प्रकृतत्वादित्यभिप्रैति । तथा चाद्यवाक्ये वेदारण्यकपदेन पञ्चरात्रमुत्तरवाक्ये च पञ्चरात्रपदेन वेदारण्यकमुपलक्ष्यत इति भावः । वेदपञ्चरात्रयोरेकार्थत्वं कुत इति चेत् । उदाहृतमोक्षधर्मवाक्यार्थान्यथानुपपत्त्या तावत् । अपरं च प्रमाणमाह— **तत्रैवेति** । मोक्षधर्म एव ।

"ये हि ते यतयः ख्याताः सप्तचित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ।
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ॥"

इत्यादिना चित्रशिखण्डिशास्त्रस्य वेदैक्योक्तेश्च । असङ्गतमेतदित्यत आह— **पञ्चरात्रेति** । पञ्चरात्रमूलकस्येत्यर्थः । एतच्च वैखानससंहितोपक्रम एव प्रसिद्धम् । एतद्व्याख्यानं 'ज्ञानयोगेन साङ्ख्यानां', 'साङ्ख्ययोगौ पृथग्बालाः' इत्यादावप्यतिदिशति— **एवमेवेति** । शब्द इति जात्यभिप्रायमेकवचनम् । इतोऽप्यत्र साङ्ख्ययोगशब्दौ ज्ञानोपायवाचिनावित्याह— **युक्तेश्चेति** । तामेव युक्तिं दर्शयति— **ज्ञानं हीति** । अत्रोक्तवक्ष्यमाणयोरर्थयोः साङ्ख्ययोगशब्दौ प्रयुक्तौ । उक्तवक्ष्यमाणार्थौ च ज्ञानोपायावेवेति तदर्थावेतौ युक्ताविति । **जैवं ज्ञानमिति** । जीवस्य तत्त्वमित्यर्थः । यद्यपीश्वरतत्त्वं चोक्तम् । तथापि तादर्थ्येनेत्यदोषः । ननु बुद्धिर्ज्ञानं, तदुत्पाद्यत एव । न त्वभिहितम् । नापि श्राव्यते । तत्कथमुच्यते 'साङ्ख्ये बुद्धिरभिहिता, योगे त्विमां शृणु' इति । तत्राह— **बुध्यत इति** । वागिति शेषः । ननु साङ्ख्यं न वाचोऽधिकरणम् । तत् कथं सप्तमी । किमर्थं च

प्रसिद्धवाक्छब्दपरित्यागेन अप्रसिद्धबुद्धिशब्दोपादानमित्यत आह— **साङ्ख्येति** । साङ्ख्यं च असौ विषयश्च । अनेन विषयसप्तमीयमित्याह । नाविशदं वाङ्मात्रमुक्तम् । किन्तु तव बोधो यथोत्पद्यते तथेत्यप्रसिद्धपदोपादानप्रयोजनमित्युक्तं भवति ॥ ३९ ॥

***भा०दी०***— साङ्ख्यशब्दादिजीवतत्वोक्तिः **एतौ त्विति** । ज्ञानोपायशब्दितौ साङ्ख्ययोगौ बुद्ध्या युक्तो ययेति वाक्यशेषे कर्मबन्धहानिहेतुत्वोक्तेरुपादेयावित्यर्थः । **ज्ञानान्येतानीति** । करणे ल्युट् ज्ञानसाधनानि इत्यर्थः । **ज्ञानेषु** ज्ञानसाधनेषु । **एतत्** पञ्चरात्रमित्यर्थः । **आद्यवाक्ये** वेदारण्यकमेव चेति वाक्ये । **उत्तरेति** । पञ्चरात्रस्येति वाक्ये । **वाक्यार्थान्यथानुपपत्त्येति** । साङ्ख्ययोग इति वाक्येऽनिर्दिष्टपञ्चरात्रस्य ज्ञानेष्वेतद्विशिष्यत इत्याधिक्यकथनं साङ्ख्यादित्रयेण एकार्थ्येन वा वेदारण्यकेनैकार्थ्येन वा निर्वाह्यमन्यथाऽसङ्गतेः तत्राद्ये साङ्ख्यादेः वेदाधिक्यमुक्तं स्यान्न च तद्युक्तं, वेदविरोधेनालब्धप्रामाण्यस्य तस्य वेदाधिक्यासिद्धेः । वेदारण्यकैकार्थ्यपक्षे तु तदाधिक्य-कथनं सङ्गतमिति पञ्चरात्राधिक्यरूपवाक्यार्थान्यथानुपपत्त्येत्यर्थः । सप्तम्यन्तं षष्ठ्यर्थता व्याचष्टे **चित्रशिखण्डिशास्त्रस्येति** । इति श्लोक इति विभागः । **तादर्थ्येनेति** । जीवनित्यत्वनिर्वाहकप्रति-बिम्बत्वसिद्ध्यर्थत्वेनेत्यर्थः ॥ ३९ ॥

***भा०र०***— भाष्यस्य सङ्गतत्वाय गीतामवतारयति **पूर्वेति** । **तत्र** गीतायाम् । **प्रतीतिनिरासाय** सप्रमाणकमिति शेषः । भागवते चतुर्थस्कन्धे पृथुं प्रति भूमिवचने प्रयोगाद् योगशब्देनोपाय उच्यत इति भाष्यार्थः । "तानातिष्ठति यः सम्यगुपायान् पूर्वदर्शितान्" इत्यनन्तरोपरितनार्धे तानिति पूर्व-प्रकृतयोगान् परामृश्य तत्रोपायशब्दप्रयोगादिति भाष्यकृतो हृदयम् । **शास्त्रलक्षणौ** कापिलपातञ्जल-शास्त्रलक्षणौ । 'कुत्रचिदागमः' इत्यनन्तरम् अपि तु हेयत्वेनैव "अक्षपादकणादौ च साङ्ख्ययोगौ च हेतुकाः" इति सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह" इति तत्र तत्रेति प्राचीनटीकायां भाष्यं व्याख्यातम् । **एतौ तु** गीतोक्तौ साङ्ख्ययोगशब्दितौ ज्ञानतदुपायौ तु । तुशब्दसूचितवैशेष्ये युक्तिमाह **बुद्ध्या युक्त इत्यादीति** । यया साङ्ख्ययोगविषयिण्या बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसीति कर्म-बन्धशब्दितसंसारनिवृत्तिसाधनत्वप्रतिपादनात् तावेवोपादेयाविति भावः । सम्प्रतिपन्नभागदृष्टान्तेन तदितरभागस्याप्यस्तूपादेयत्वानुमानमित्यतो भाष्यभावमाह **एकदेशस्येति** । सौगतादेः बुद्धजिनादि-शास्त्रस्य प्रत्यक्षानुमानप्रामाण्यस्याकाशस्थायित्वस्य "अहिंसा परमो धर्मः" इत्यादेस्तदुक्तस्योपा-देयत्वादिति भावः । **अस्मिन्नेव** प्रस्तुते ज्ञानोपायरूपे । **न हीति** । किन्तु योगशब्द एवेति भावः । 'इतरयोः' इति भाष्यस्य शास्त्रलक्षणयोरित्यर्थः । 'वेदारण्यकम्' इत्यत्र वेदाश्चारण्यकानि च तत्समाहारो वेदारण्यकम् । आरण्यकपदेनारण्येऽधीयमानो वेदभाग उच्यते । कुरुपाण्डववदयं

निर्देशः । प्रमाणे ज्ञानानि ज्ञानसाधनानि । उक्त्वेत्यस्य स्तुत्येत्यनेनान्वयः । तस्य च निन्दितत्वाच्चेत्यनेनान्वयः । अयं हि मोक्षधर्मे क्रमः "साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यताम् । साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा । साङ्ख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते । प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन । हिरण्यगर्भो योगस्य वक्ता चैव चतुर्मुखः । उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः । पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते" इति तत्त्वप्रदीपोक्तः । **ज्ञानेषु** ज्ञानसाधनेषु । तथाऽपि कथं निन्दितत्वमितरयोरित्यत आह **विरुद्धानामिति** । धर्मबहुत्वान्मोक्षधर्मेष्विति बहुवचनम् । उक्तशङ्कां निरसितुमेकार्थत्वादित्यत्र शेषमाह **पञ्चरात्रेणेति** । 'पञ्चरात्रस्य' इत्यत्र वक्ष्यमाणरीत्या वेदानामप्युपलक्षणीयत्वाद् विशिष्यत इत्युक्तवैशिष्ट्यमेव लभ्यत इति न निन्दितत्वप्रसङ्ग इति भावः । **भिन्नानि** विरुद्धार्थानि ।

ननु कुतः साङ्ख्ययोगपाशुपतापेक्षया विरुद्धार्थप्रतिपादकत्वरूपं पार्थक्यम् ? पञ्चरात्रापेक्षयैव तत्त्वं किं न स्यादित्यत आह **युक्तमित्यनेनेति** । **प्रकृतत्वात्** "साङ्ख्यं योगः पाशुपतम्" इति प्रश्नवाक्ये साङ्ख्ययोगपाशुपतानामेव प्रकृतत्वादित्यर्थः । ननु तर्हि "पञ्चरात्रस्य कृत्स्नस्य" इत्यत्र प्रकृतपञ्चरात्रस्य "एतद् विशिष्यते" इति वैशिष्ट्यकथनमयुक्तम् । प्रश्नवाक्ये तस्याप्रकृतत्वादित्यत आह **तथा चेति** । **आद्यवाक्ये** प्रश्नवाक्ये । **उत्तरवाक्ये** 'पञ्चरात्रस्य' इति वाक्ये ॥ **उपलक्ष्यत इति** । एकार्थत्वमुपलक्षणे सम्बन्ध इति भावः । अनेन प्रश्नवाक्ये वेदारण्यकपञ्चरात्रयोर्विवक्षितत्वात् परिहारवाक्ये पञ्चरात्रवेदारण्यकयोर्विवक्षितत्वाच्च न प्रश्नप्रतिवचनयोर्व्यधिकरणतेति चोद्यावकाश इति विभावितं भवति । **वाक्यार्थान्यथानुपपत्त्येति** । "पञ्चरात्रस्य कृत्स्नस्य" इति वाक्ये "एतद् विशिष्यते" इति पञ्चरात्रं स्तूयते । अयं चार्थो नोपपद्यते । "साङ्ख्यं योगः" इति पूर्वश्लोके पञ्चरात्रस्याप्रकृतत्वात् । पञ्चरात्रस्येति सिद्धवन्निर्देशेन स्तवनेन च तस्यापि प्रकृतत्वमेष्टव्यमिति वेदारण्यकपदेन पञ्चरात्रमपि ग्राह्यम् । तद्ग्रहणं च लक्षणया । वेदारण्यकपदमुख्यार्थत्वाभावात् । लक्षणा चैकार्थत्वरूपसम्बन्धाभावेऽनुपपन्नेति तदर्थं वेदारण्यकपञ्चरात्रयोरेकार्थत्वमुक्तान्यथानुपपत्त्या स्वीकर्तव्यमित्यर्थः । विभावितश्चायमर्थः शास्त्रयोनिसूत्रभाष्यटीकाचन्द्रिकयोः । यतयः प्रयत्नशीलाः । हिशब्देन "सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः" इति कोषप्रसिद्धिप्रकाशनादत्र मरीच्याद्या ग्राह्याः । **भूत्वा** मिलित्वा । **मेरौ** महामेरौ । यत् प्रोक्तं शास्त्रं तदुत्तमम् । कुतः ? यतो वेदैश्चतुर्भिस्समितमित्यन्वयः । मोक्षधर्मस्यैव वेदैक्योक्तिं प्रत्यधिकरणात् तत्र सप्तमी युक्ता । चित्र-

शिखण्डिशास्त्रं तु वेदैक्ये प्रतिसम्बन्धिमात्रमिति सम्बन्धसामान्ये षष्ठीप्रयोगे प्रतिपत्तिसौकर्यमिति टीकायां चित्रशिखण्डिशास्त्रस्येति षष्ठी । प्रतिसम्बन्धिनोऽप्यधिकरणत्वविवक्षया भाष्ये सप्तमी । स्वयं षष्ठ्यन्ततया व्याख्यानात् पञ्चरात्रमूलकस्येत्युक्तम् । **एतच्च** चित्रशिखण्डिशास्त्रस्य पञ्चरात्र-मूलकत्वम् । शब्दव्यक्तिबाहुल्याच्छब्दा इति साङ्ख्यं च योगश्च तयोश्शब्दाविति वा भाषणीयम् । 'साङ्ख्ययोगशब्दः' इति तु कथं भाष्ये प्रयोग इत्यत आह **शब्द इतीति** । जात्यभिप्रायमिति परमतेन । स्वमतेन तु जातेरप्यनेकत्वात् समुदायाभिप्रायमिति व्याख्येयम् । **ज्ञानोपायवाचिनौ** ज्ञानं चोपायश्च तद्वाचिनावित्यर्थः । **अत्र** "एषा तेऽभिहिता" इत्यत्र । **ज्ञानोपायौ** ज्ञानं चोपायश्च । **तदर्थौ** साङ्ख्ययोगार्थौ । जीवविषयज्ञानस्य प्रागनिरूपणात् कथं जीवसम्बन्धिज्ञानमुक्तमित्यत आह **जीवस्य तत्त्वमिति** । ज्ञायत इति ज्ञानम् । तत्त्वम् अनारोपितस्वरूपमित्यर्थः । तादर्थ्येन तत्प्रमितिशेषत्वेन । जीवनित्यत्वादिनिर्वाहकतया तत्र दृष्टान्ततया प्रतिबिम्बत्वसिद्ध्यर्थतया च प्रागीश्वरतत्त्वस्याप्यभिधानादिति भावः । न तु नापीति वदन् शब्दस्यैवाभिलापकर्मत्वाच्छ्रोतव्य-त्वाच्चेत्यभिप्रैति । तेन बुद्धिर्ज्ञानम् अभिहिता उक्तम् । इमाम् अनन्तरमेवोच्यमानां बुद्धिं शृण्विति परेषां भाष्यमयुक्तमित्युक्तं भवति । करणव्युत्पत्त्या बुद्धिशब्देनात्र वागुच्यत इति प्राचीनटीकां "यया वाचा" इति भाविभाष्यं च हृदि कृत्वाऽऽह **वागिति शेष इति** । **विषयसप्तमीति** । "आधारोऽधिकरणम्" इत्यत्र औपश्लेषिकः सामीपिको विषयो व्याप्तिश्चेत्याधारश्चतुर्धेति औप-श्लेषिको वैषयिकोऽभिव्यापकश्चे-त्याधारस्त्रिधेति वा वैयाकरणोक्तेर्विषयरूपाधारे च "सप्तम्यधिकरणे च" इति विहितसप्तमीविभक्तिरित्यर्थः ।

***गीताक्षरार्थस्तु***— पूर्वप्रकरणोपसंहारपूर्वकं तत्सङ्गतत्वेनोत्तरप्रकरणारम्भः प्रतिज्ञायते **एषा तेऽभिहिता साङ्ख्ये इति** । हे पार्थ ते साङ्ख्ये शुद्धात्मतत्त्वविज्ञानविषये । तदुत्पादयितुमिति यावत् । एषा "न त्वेवाहं जातु नाऽसं न त्वं नेमे जनाधिपाः" इत्यादिरूपा बुद्धिः बुद्ध्यतेऽनयेति व्युत्पत्त्या बोधजनिका वाक् अभिहिता उक्ता । योगे युज्यते फलमनेनेति व्युत्पत्त्या उपाये उपाय-ज्ञानार्थम् इमां 'त्रैगुण्यविषयाः' इत्यारभ्य आषष्ठसमाप्तेर्वक्ष्यमाणां वाचं शृणु । विनाऽपि विधिना श्रवणमात्रस्य सम्भवाच्छ्रुत्वा तत्र निष्ठां कुरु । आदरजननाय योगः प्रशस्यते 'बुद्ध्या' इति सार्ध-श्लोकेन । यया बुद्ध्या वाग्जन्यया युक्तः तदनुष्ठानद्वारा प्राप्तब्रह्मसाक्षात्कारः सन् कर्मबन्धं संसारं प्रकर्षेण हास्यसि मुक्तो भविष्यसि । किञ्च इह वक्ष्यमाणे योगशब्दिते ज्ञानोपाये विष्णवाराधनरूप-निवृत्तकर्मविषये अभिक्रमस्य उपक्रमस्य नाशः निष्फलता नास्ति । निवृत्तधर्मानुष्ठानोपक्रममात्रमपि न निष्फलम् । उपक्रान्तविष्णुधर्माचरणवतस्ततोऽन्यधर्माकरणे प्रत्यवायो न विद्यते । अस्य धर्मस्य

विष्णुपूजात्मकस्य स्वल्पमप्याचरणं महतो भयात् संसारात् त्रायते । तस्मात् तत्र निष्ठां कुर्विति । ॥ ३९-४० ॥

**गीता**

## व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
## बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१॥

***वि०वि०***— 'योगे त्विमां बुद्धिं श्रुणु' इत्यनेन विष्णुनिष्ठाभावे श्रवणमात्रस्य वैयर्थ्याच्छ्रुत्वा तत्र निष्ठां कुर्वित्यभिप्रेतम् । तत्र बह्व्यो हि बुद्धयो मतभेदात् तत्कथमेकत्र निष्ठां करोमीत्यत आह **व्यवसायात्मिकेति** । प्रमाणनिर्णीतार्थविषया विष्णुपरायणा बुद्धिरेकैव । अव्यवसायिनां प्रमाणैर्निर्णेतुमशक्तानां बुद्धयो बहुशाखा ह्यनन्ताश्च । अतः प्रामाणिकेर्थे विश्वासो युज्यते । अप्रामाणिके सत्यपि विप्रतिपत्तिः किमपि न करोतीति भावः ॥ ४१ ॥

***वा०ल०***— 'व्यवसायात्मिका बुद्धिः' इत्यत्र व्यवसायात्मिका पुण्यं करोम्येवेति निश्चयात्मिका । व्यवसायिनाम् एतादृशव्यवसायवतां भिन्नभिन्नस्वभावानां पुंसां बुद्धयः पुनर्बहुशाखा अनन्ताश्च, यज्ञं करोमि दानं करोमि तपः करोमीत्याद्याकारेण बहुशाखाः, अन्ततोऽनन्ताश्च भवन्ति । अथवा अव्यवसायिनाम् एकत्र निश्चयरहितानाम् । अन्यत् स्पष्टम् ॥ ४१ ॥

***सा०सं०***— ननु ज्ञानोपायविषया वाचोऽन्योन्यविरुद्धा बह्व्यो मतभेदेन सन्ति । अतः कथमेकत्र त्वदीयायामेव उपायविषयवाचिनिष्ठाशब्दितं विश्वासं करोमीत्यत आह **व्यवसायेति** । **व्यवसायात्मिका** प्रमाणनिर्णीतार्थनिश्चयात्मिका निश्चयजनिका । **बुद्धिः** करणव्युत्पत्त्या वाक् । **एकैव** एकोपायविषयैव **इह** लोके वेदे च । न तत्र विप्रतिपत्तिरस्ति । स एव वैष्णवधर्मानुष्ठानहेतुः । **अव्यवसायिनां** प्रमाणनिर्णीतार्थनिश्चयहीनानां **बुद्धयः** उपायविषया वाचः **बहुशाखाः** बहुमुखाः विरुद्धनानार्थविषयाः अनन्ताश्च । तथा च— कथम् अप्रामाणिकमतविवादेन प्रामाणिकेऽर्थे अविश्वासः । मया वक्ष्यमाणोपायस्तु प्रामाणिक इति तत्र तत्र व्यक्तीभविष्यतीति भावः ॥ ४१ ॥

***अ०प्र०***— कुत इत्यपेक्षायां उभयोर्वैषम्यमाह **व्यवसायेति** ।

हे कुरुनन्दन ![१], इह[२], व्यवसायात्मिका[३], बुद्धिः[४], एका एव भवति[५], अव्यवसायिनां च बुद्धयः[७], बहुशाखाः[८], अनन्ताश्च भवन्ति[९] ।

हे कुरुनन्दन ![1], इह = ईश्वराराधनलक्षणे कर्मयोगे[2], व्यवसायात्मिका = परमेश्वरभक्त्यैव दृढं करिष्यामीति निश्चयात्मिका[3], बुद्धिः = प्रमाणनिर्णीतार्थविषया विष्णुपरायणा बुद्धिः[4], एका एव भवति = एकविधैव एकनिष्ठैव भवति[5], अव्यवसायिनां च प्रमाणैर्निर्णेतुमशक्तानां बहिर्मुखानां कामिनां वा[6], बुद्धयः वाचा बहुशाखाः कामानामानन्त्यात् तत्रापि कर्मफलगुणफलादि-प्रकारभेदात् बहुशाखाः[8], अनन्ताश्च भवन्ति बहुवेदवाक्यमूलका वा भवन्ति, इत्यर्थः ॥ ४१ ॥

**भाष्यम्**

**'योग इमां बुद्धिं शृणु' इत्युक्तम् । बह्वयो हि बुद्धयो मतभेदात् । तत् कथमेकत्र निष्ठां करोमीत्यत आह— व्यवसायात्मिकेति । सम्यग्युक्तिनिर्णीतानां मतानामैक्यमेवेत्यर्थः ॥ ४१ ॥**

*प०टी०*— उत्तरश्लोकमवतार्य व्याचष्टे **योग इति** ॥ ४१ ॥

*न०टी०*—नन्वत्र योगशब्देन करणव्युत्पत्या ज्ञानोपायभूतं कर्म विवक्षितम् । बुद्धिशब्देन तद्धीविषया वाक् । सा च मतभेदाद्वादिभिरन्यथाऽन्यथोच्यते । अतः कथं भगवदुक्तायामेव वाचि परिनिष्ठा ? इति भावेनाशङ्क्य, उत्तरश्लोकमवतारयति **योग इमामिति** । यद्यपि सम्यग्युक्तिनिर्णयरहितानि तान्यनन्तानि । साङ्ख्यादिमतानां परिगणितत्वेऽपि प्रत्येकं प्रतिपुरुषमतिवैचित्र्येणानन्तशाखत्वात् । तथाऽपि सम्यग्युक्तिनिर्णीतं भगवन्मतमेवेति तत्रैव निष्ठा कार्येति भावेन तं व्याचष्टे **सम्यगिति** ॥ ४१ ॥

*प्र०दी०*— ननु व्यवसायात्मिकेति श्लोके न प्रतिज्ञातो योग उच्यते । नापि 'बुद्ध्या युक्त' इत्यादिवत्तत्प्रशंसा । तत् किमर्थोऽयमित्यत आह— **योग इति** । ज्ञानोपायविषयामिमां वक्ष्यमाणां वाचं शृणु । श्रुत्वा तत्र निष्ठां कुर्वित्युक्तमित्यर्थः । श्रवणमात्रस्य विधिना विनाऽपि सम्भवात् । बह्वयो बुद्धयः ज्ञानोपायविषया वाचः परस्परविरुद्धाः सन्ति । कथम् । मतभेदात् । एकं मतमवलम्बमानाः किञ्चिज्ज्ञानसाधनमाचक्षते । अपरं मतमाश्रिताः तत्प्रतिषेधेनान्यदाहुः । तत्र चेदमेव तत्त्वं नेदमिति विनिगमकं नास्ति । तत्तस्मात् कथमेकत्र त्वदीयायामेव वाचि निष्ठां विश्वासं करोमि । ननु सर्वाण्यपि मतानि व्यवसायात्मकान्येव । स्वे स्वेऽर्थे सर्वेषां सन्देहाभावात् । अतः कथमुच्यते ''व्यवसायात्मिका एकाऽव्यवसायिनां बुद्धय'' इति । तत्राह— **सम्यगिति** । युक्तिरिति प्रमाणसामान्यमुच्यते । प्रमाणेन निर्णीतत्वमेवात्र व्यवसायशब्दार्थो न निश्चयमात्रमित्यर्थः । प्रामा-

णिकमेव मतं ग्राह्यम् । तत्र च न काचित् विप्रतिपत्तिः । यतस्तवैकत्र निष्ठाऽभावः । अप्रामाणिकेषु विद्यमानाऽपि विप्रतिपत्तिः किं करिष्यतीति भावः ॥ ४१ ॥

*भा०दी०*— गीतायां भाष्ये च शृण्वेत्येवोक्तावपि तात्पर्यार्थमाह **श्रुत्वा तत्र निष्ठां कुर्वित्युक्तमिति** । एवमर्थोक्तौ हेतुमाह **श्रवणमात्रस्येति** । निष्ठाहीनश्रवणस्य शृणु श्रवणं कुरु इति विधिं प्रेरणां विनापि सम्भवाच्छृण्विति विधिबलादेवमर्थो ज्ञाप्यत इति भावः । **बह्व्य** इत्यादिरनुवादः । **ज्ञाने**त्यादि व्याख्या । **इत्यभिप्रेतीति** । बुद्ध्या युक्तो ययेत्यर्थे कर्मयोगस्य ज्ञानद्वारा सकर्मबन्धहानिरूपमोक्षहेतुत्वोक्तेरिति भावः ॥ ४१ ॥

*भा०र०*— **अयं** 'व्यवसाय' इति श्लोकः । ''योग इमां बुद्धिम्'' इति भाष्यपदानामर्थानाह **ज्ञानोपायविषयामिमां वक्ष्यमाणां वाचमिति** । शृण्वित्येतत् श्रुत्वा तत्र निष्ठां कुर्विति कुतो व्याख्यातव्यमित्यत आह **श्रवणमात्रस्येति** । भाष्यमनूद्यार्थमाह **बह्व्य इति** । ज्ञानोपायविषयत्वे सर्वास्ताः श्रोतव्या एवेत्यतो भाष्यभावमाह **परस्परेति** । मतभेदमुपपादयति **एकमिति** । ''तत् कथमेकत्र'' इत्यादिभाष्यं विवृणोति **तत् तस्मादिति** । प्रत्यक्षागमाभ्यामपि निर्णीततत्त्वस्य निश्चये सम्भवाद् भाष्ये कथं युक्तिमात्रग्रहणमित्यत आह **युक्तिरिति प्रमाणसामान्यमिति** । त्वदीयायामेव वाचि कथं निष्ठेति कृतचोद्यं व्युदसितुं भाष्यभावमाह **प्रामाणिकमिति** । **तत्र च** प्रामाणिके सिद्धान्ते । **यतः** यया । प्रमाणनिर्णीते विप्रतिपत्त्यभावेऽपि अप्रामाणिकेऽर्थे एकं मतमवलम्बमानाः किञ्चिद्विज्ञानसाधनमाचक्षते, अपरं मतमाश्रितास्तत्प्रतिषेधेनान्यदाहुरिति स्यादेव विप्रतिपत्तिरित्यतः प्रामाणिकसिद्धान्तग्रहणाविरोधित्वादकिञ्चित्करी सेत्याह **अप्रामाणिकेष्विति** ।

*गीताक्षरार्थस्तु*— ननु ज्ञानोपायविषयवाचः परस्परं विरुद्धा बह्व्यः सन्ति । तत् कथं त्वदीयायामेव वाचि विश्वासं करोमीत्यत उच्यते **व्यवसायात्मिकेति** । प्रमाणनिर्णीतार्थतत्त्वनिश्चयजनिका बुद्धिर्वाक् एकोपायविषयैव । इह वेदे वैदिके च । अव्यवसायिनां तु प्रमाणनिर्णीतार्थनिश्चयरहितानां बुद्धयः उपायविषया वाचः बहुशाखाः विरुद्धनानार्थविषयाः बहुभेदाः पुरुषभेदादनन्ताश्च । मदीया बुद्धिः व्यवसायात्मिकेति तत्रैव निष्ठा तव युक्तेति ॥ ४१ ॥

**गीतातात्पर्यनिर्णयः**

**''प्रारम्भमात्रमिच्छा वा विष्णुधर्मे न निष्फला ।**
**न चान्यधर्माकरणाद्दोषवान्विष्णुधर्मकृत् ॥''** इत्याग्नेये ।

***न्या०दी०***— योगः स्तूयते **नेहेति** । तत्र योगातिक्रमे नाशः प्रत्यवायश्च नास्तीत्यन्यथा-प्रतीतिनिरासाय पूर्वार्धे स्मृत्यैव व्याचष्टे **प्रारम्भेति** ॥

**गीतातात्पर्यनिर्णयः**

**"स्वोचितेनैव धर्मेण विष्णुपूजामृते क्वचित् ।**
**नाप्रवृत्तिः प्रवृत्तिर्वा यत्र धर्मः स वैष्णवः ॥**

***प्रका०***— "नेहाभिक्रमनाश" इत्येतद्व्याचष्टे **प्रारम्भेति** । नेहाभिक्रमेत्यत्रेहशब्दनिर्दिष्टस्तु योगाख्योऽत्र विष्णुधर्मो ज्ञातव्यः । तं धर्मं तदन्यच्च पुराणवचनेन स्पष्टयति **स्वोचितेन इत्यादिना** ॥

***न्या०दी०***— तमेव विष्णुधर्मं स्मृत्या दर्शयति **स्वोचितेति** ॥ प्रवृत्तिर्हितकरणमप्रवृत्ति-र्निषिद्धपरित्यागश्चान्यविषये नानुष्ठीयत इत्यर्थः ।

***भा०दी०***— निषिद्धपरित्यागशब्दार्थमाह **अन्यविषय इति** । देवतान्तरविषयतया नानुष्ठीयत इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**एनं धर्मं च देवाद्या वर्तन्ते सात्त्विका जनाः ।**
**एष कार्तयुगो धर्मः पाञ्चरात्रश्च वैदिकः ॥**

***न्या०दी०***— तस्मिन् धर्मेऽधिकारिकालप्रमाणान्याह **एनमिति** ॥

**गीतातात्पर्यनिर्णयः**

**तत्प्रीत्यर्थं विनाऽन्यस्मै नोदबिन्दुं न तण्डुलम् ।**
**दद्यान्निराशीश्च सदा भवेद्भक्तश्च केशवे ।**
**न तत्समेऽधिके वाऽपि कुर्याच्छङ्कामपि क्वचित् ।**
**जानीयात् तदधीनं च सर्वं तत्तत्त्ववित् सदा ।**
**यथाक्रमं तु देवानां तारतम्यविदेव च ।**
**एष भागवतो मुख्यस्त्रेतादिषु विशेषतः ।**
**एष धर्मोऽतिफलदो विशेषेण पुनः कलौ ।**

णिकमेव मतं ग्राह्यम् । तत्र च न काचित् विप्रतिपत्तिः । यतस्तवैकत्र निष्ठाऽभावः । अप्रामाणिकेषु विद्यमानाऽपि विप्रतिपत्तिः किं करिष्यतीति भावः ॥ ४१ ॥

*भा०दी०*— गीतायां भाष्ये च शृण्वेत्येवोक्तावपि तात्पर्यार्थमाह **श्रुत्वा तत्र निष्ठां कुर्विन्त्युक्तमिति** । एवमर्थोक्तौ हेतुमाह **श्रवणमात्रस्येति** । निष्ठाहीनश्रवणस्य शृणु श्रवणं कुरु इति विधिं प्रेरणां विनापि सम्भवाच्छ्रुण्विति विधिबलादेवमर्थो ज्ञाप्यत इति भावः । **बह्व्य** इत्यादिरनुवादः । **ज्ञानेत्यादि** व्याख्या । **इत्यभिप्रेतीति** । बुद्ध्या युक्तो ययेत्यर्थे कर्मयोगस्य ज्ञानद्वारा सकर्मबन्धहानिरूपमोक्षहेतुत्वोक्तेरिति भावः ॥ ४१ ॥

*भा०र०*— **अयं** 'व्यवसाय' इति श्लोकः । "योग इमां बुद्धिम्" इति भाष्यपदानामर्थानाह **ज्ञानोपायविषयामिमां वक्ष्यमाणां वाचमिति** । शृण्वित्येतत् श्रुत्वा तत्र निष्ठां कुर्विति कुतो व्याख्यातव्यमित्यत आह **श्रवणमात्रस्येति** । भाष्यमनूद्यार्थमाह **बह्व्य इति** । ज्ञानोपायविषयत्वे सर्वास्ताः श्रोतव्या एवेत्यतो भाष्यभावमाह **परस्परेति** । मतभेदमुपपादयति **एकमिति** । "तत् कथमेकत्र" इत्यादिभाष्यं विवृणोति **तत् तस्मादिति** । प्रत्यक्षागमाभ्यामपि निर्णीतत्वस्य निश्चये सम्भवाद् भाष्ये कथं युक्तिमात्रग्रहणमित्यत आह **युक्तिरिति प्रमाणसामान्यमिति** । त्वदीयायामेव वाचि कथं निष्ठेति कृतचोद्यं व्युदसितुं भाष्यभावमाह **प्रामाणिकमिति** । **तत्र च** प्रामाणिके सिद्धान्ते । **यतः** यया । प्रमाणनिर्णीते विप्रतिपत्त्यभावेऽपि अप्रामाणिकेऽर्थे एकं मतमवलम्बमानाः किञ्चिद्विज्ञानसाधनमाचक्षते, अपरं मतमाश्रितास्तत्प्रतिषेधेनान्यदाहुरिति स्यादेव विप्रतिपत्तिरित्यतः प्रामाणिकसिद्धान्तग्रहणाविरोधित्वादकिञ्चित्करी सेत्याह **अप्रामाणिकेष्विति** ।

*गीताक्षरार्थस्तु*— ननु ज्ञानोपायविषयवाचः परस्परं विरुद्धा बह्व्यः सन्ति । तत् कथं त्वदीयायामेव वाचि विश्वासं करोमीत्यत उच्यते **व्यवसायात्मिकेति** । प्रमाणनिर्णीतार्थतत्त्वनिश्चयजनिका बुद्धिर्वाक् एकोपायविषयैव । इह वेदे वैदिके च । अव्यवसायिनां तु प्रमाणनिर्णीतार्थनिश्चयरहितानां बुद्धयः उपायविषया वाचः बहुशाखाः विरुद्धनानार्थविषयाः बहुभेदाः पुरुषभेदादनन्ताश्च । मदीया बुद्धिः व्यवसायात्मिकेति तत्रैव निष्ठा तव युक्तेति ॥ ४१ ॥

**गीतातात्पर्यनिर्णयः**

**"प्रारम्भमात्रमिच्छा वा विष्णुधर्मे न निष्फला ।**
**न चान्यधर्माकरणाद्दोषवान्विष्णुधर्मकृत् ॥" इत्याग्नेये ।**

***न्या०दी०***— योगः स्तूयते **नेहेति** । तत्र योगातिक्रमे नाशः प्रत्यवायश्च नास्तीत्यन्यथा-प्रतीतिनिरासाय पूर्वार्धे स्मृत्यैव व्याचष्टे **प्रारम्भेति** ॥

**गीतातात्पर्यनिर्णयः**

**''स्वोचितेनैव धर्मेण विष्णुपूजामृते क्वचित् ।**
**नाप्रवृत्तिः प्रवृत्तिर्वा यत्र धर्मः स वैष्णवः ॥**

***प्रका०***— ''नेहाभिक्रमनाश'' इत्येतद्व्याचष्टे **प्रारम्भेति** । नेहाभिक्रमेत्यत्रेहशब्दनिर्दिष्टस्तु योगाख्योऽत्र विष्णुधर्मो ज्ञातव्यः । तं धर्मं तदन्यच्च पुराणवचनेन स्पष्टयति **स्वोचितेन इत्यादिना** ॥

***न्या०दी०***— तमेव विष्णुधर्मं स्मृत्या दर्शयति **स्वोचितेति** ॥ प्रवृत्तिर्हितकरणमप्रवृत्ति-र्निषिद्धपरित्यागश्चान्यविषये नानुष्ठीयत इत्यर्थः ।

***भा०दी०***— निषिद्धपरित्यागशब्दार्थमाह **अन्यविषय इति** । देवतान्तरविषयतया नानुष्ठीयत इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**एनं धर्मं च देवाद्या वर्तन्ते सात्त्विका जनाः ।**
**एष कार्तयुगो धर्मः पाञ्चरात्रश्च वैदिकः ॥**

***न्या०दी०***— तस्मिन् धर्मेऽधिकारिकालप्रमाणान्याह **एनमिति** ॥

**गीतातात्पर्यनिर्णयः**

**तत्प्रीत्यर्थं विनाऽन्यस्मै नोदबिन्दुं न तण्डुलम् ।**
**दद्यान्निराशीश्च सदा भवेद्भक्तश्च केशवे ।**
**न तत्समेऽधिके वाऽपि कुर्याच्छङ्कामपि क्वचित् ।**
**जानीयात् तदधीनं च सर्वं तत्तत्त्ववित् सदा ।**
**यथाक्रमं तु देवानां तारतम्यविदेव च ।**
**एष भागवतो मुख्यस्त्रेतादिषु विशेषतः ।**
**एष धर्मोऽतिफलदो विशेषेण पुनः कलौ ।**

*न्या०दी०*— तमेव विवृणोति **तदिति** ॥ कार्तयुगत्वे त्रेतादिषु न फलप्रदोऽनध्यायाधीत-वेदवदित्यत आह त्रेतेति ॥ कार्तयुगत्वोक्तिस्तत्र प्राचुर्येण संभवाभिप्रायेण इति भावः ।

**गीतातात्पर्यनिर्णयः**

**एवं भागवतो यस्तु स एव हि विमुच्यते ।**
**त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।**
**तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽभ्यधिको गुणैः ।**
**समर्पयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।**

*न्या०दी०*— किमस्य फलं यत्त्रेतादिष्वधिकं स्यादित्यत आह **एवमिति** ॥

**गीतातात्पर्यनिर्णयः**

**त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ।**
**पुनः कुर्यात् पुनः स्वर्गं याति यावद्धरेर्वशे ।**
**सर्वान् देवान् प्रविज्ञाय तत्कर्मैव सदा भवेत् ।**

*प्रका०*— त्रैविद्यस्यापि मोक्षाभावमाह **त्रैविद्य इति** ।

*न्या०दी०*— कथं स एव मुच्यते ? त्रैविद्यस्यापि मोक्षसद्भावादित्यतः त्रैविद्यधर्मस्वरूप-मुक्त्वा तद्वतो मोक्षाभावमाह **त्रैविद्य इति** ॥

*भा०दी०*— **तद्वत इति** । त्रैविध्यधर्मवतः ॥

**गीतातात्पर्यनिर्णयः**

**सम्यक्तत्त्वापरिज्ञानादन्यकर्मकृतेरपि ।**
**स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ।**
**सदा विष्णोरस्मरणात्त्रैविद्यो नाप्नुयात् परम् ॥**

**न्या०दी०**— त्रैविद्यस्यापि भगवज्ज्ञानादिसद्भावात् तस्यैव मोक्षहेतुत्वात् कथमसौ स्वर्गं भुक्त्वा निवर्तत इत्यत आह **सम्यगिति** ॥

**गीतातात्पर्यनिर्णयः**

**क्रमेण मुच्यते विष्णौ कर्माण्यन्ते समर्पयन् ।**
**यदि सर्वाणि नियमाज्जन्मभिर्बहुभिः शुभैः ॥**

*न्या०दी०*— किं तस्य कदापि न मोक्ष इत्यतः स्वर्गगमनावधिकथनेनैवार्थतः सिद्धमर्थं स्फुटमाह **क्रमेणेति** ॥ अन्ते समर्पयन् त्रैविद्यो यदि नियमात् प्रत्येकं सर्वाणि समर्पयतीत्यर्थः ।

*भा०दी०*— **अर्थतः सिद्धमिति** । स्वर्गगमनावधिरेव न नित्यनिरयप्राप्तिरित्युक्त्यार्थात् क्रमेण मोक्षं प्रतिपद्यत इति सिद्धमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**परं विष्णुं न यो वेत्ति कुर्वाणोऽपि त्रयीक्रियाः ।**
**नासौ त्रैविद्य इत्युक्तो वेदवादी स उच्यते ॥**

*न्या०दी०*— त्रय्युक्तकर्मकरणमात्रेण त्रैविद्यो भवेत्किं भगवत्सर्वोत्तमत्वज्ञानादिनेत्यत आह **परमिति** ॥

**गीतातात्पर्यनिर्णयः**

**वादो विवादः सम्प्रोक्तो वादो वचनमेव च ।**
**वेदोक्ते विष्णुमाहात्म्ये विवादात्पठनादपि ।**
**अथवा निरर्थकात्पाठाद्वेदवादी स उच्यते ॥**

*न्या०दी०*— वेदवादित्वस्य भागवतत्रैविद्ययोरपि साम्यादस्यैव किमुच्यत इत्यतो न वेदानुसारित्वं वेदवादित्वमत्राभिप्रेतमिति भावेनाह **वाद इति** ॥ **विवादात्पठनादिति** । विवादपूर्वकपठनादित्यर्थः ।

*भा०दी०*— **अस्यैव** भागवतस्यैव मोक्ष इति त्रैविद्यस्यैव स्वर्गगमनावधित्वं किमुच्यत इति वाऽर्थः । यद्वा **अस्यैव** त्रय्युक्तकर्मकारिण एव वेदवादित्वम् "वेदंवादी स उच्यते" इत्यनेन किमुच्यत इत्यर्थः । **अभिप्रेतमि**त्यनन्तरं येन भागवतत्रैविद्ययोरेव वेदवादित्वापात इति योज्यम् ।

*न्या०दी०*— तमेव विवृणोति **तदिति** ॥ कार्तयुगत्वे त्रेतादिषु न फलप्रदोऽनध्यायाधीत-वेदवदित्यत आह त्रेतेति ॥ कार्तयुगत्वोक्तिस्तत्र प्राचुर्येण संभवाभिप्रायेण इति भावः ।

**गीतातात्पर्यनिर्णयः**

**एवं भागवतो यस्तु स एव हि विमुच्यते ।**
**त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।**
**तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽभ्यधिको गुणैः ।**
**समर्पयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।**

*न्या०दी०*— किमस्य फलं यत्त्रेतादिष्वधिकं स्यादित्यत आह **एवमिति** ॥

**गीतातात्पर्यनिर्णयः**

**त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ।**
**पुनः कुर्यात् पुनः स्वर्गं याति यावद्धरेर्वशे ।**
**सर्वान् देवान् प्रविज्ञाय तत्कर्मैव सदा भवेत् ।**

*प्रका०*— त्रैविद्यस्यापि मोक्षाभावमाह **त्रैविद्य इति** ।

*न्या०दी०*— कथं स एव मुच्यते ? त्रैविद्यस्यापि मोक्षसद्भावादित्यतः त्रैविद्यधर्मस्वरूप-मुक्त्वा तद्वतो मोक्षाभावमाह **त्रैविद्य इति** ॥

*भा०दी०*— **तद्वत इति** । त्रैविध्यधर्मवतः ॥

**गीतातात्पर्यनिर्णयः**

**सम्यक्तत्त्वापरिज्ञानादन्यकर्मकृतेरपि ।**
**स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ।**
**सदा विष्णोरस्मरणात्त्रैविद्यो नाप्नुयात् परम् ॥**

**न्या०दी०**— त्रैविद्यस्यापि भगवज्ज्ञानादिसद्भावात् तस्यैव मोक्षहेतुत्वात् कथमसौ स्वर्गं भुक्त्वा निवर्तत इत्यत आह **सम्यगिति** ॥

**गीतातात्पर्यनिर्णयः**

**क्रमेण मुच्यते विष्णौ कर्माण्यन्ते समर्पयन् ।**
**यदि सर्वाणि नियमाज्जन्मभिर्बहुभिः शुभैः ॥**

*न्या०दी०*— किं तस्य कदापि न मोक्ष इत्यतः स्वर्गगमनावधिकथनेनैवार्थतः सिद्धमर्थं स्फुटमाह **क्रमेणेति** ॥ अन्ते समर्पयन् त्रैविद्यो यदि नियमात् प्रत्येकं सर्वाणि समर्पयतीत्यर्थः ।

*भा०दी०*— **अर्थतः सिद्धमिति** । स्वर्गगमनावधिरेव न नित्यनिरयप्राप्तिरित्युक्त्यार्थात् क्रमेण मोक्षं प्रतिपद्यत इति सिद्धमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**परं विष्णुं न यो वेत्ति कुर्वाणोऽपि त्रयीक्रियाः ।**
**नासौ त्रैविद्य इत्युक्तो वेदवादी स उच्यते ॥**

*न्या०दी०*— त्रय्युक्तकर्मकरणमात्रेण त्रैविद्यो भवेत्किं भगवत्सर्वोत्तमत्वज्ञानादिनेत्यत आह **परमिति** ॥

**गीतातात्पर्यनिर्णयः**

**वादो विवादः सम्प्रोक्तो वादो वचनमेव च ।**
**वेदोक्ते विष्णुमाहात्म्ये विवादात्पठनादपि ।**
**अथवा निरर्थकात्पाठाद्वेदवादी स उच्यते ॥**

*न्या०दी०*— वेदवादित्वस्य भागवतत्रैविद्ययोरपि साम्यादस्यैव किमुच्यत इत्यतो न वेदानुसारित्वं वेदवादित्वमत्राभिप्रेतमिति भावेनाह **वाद इति** ॥ **विवादात्पठनादिति** । विवादपूर्वकपठनादित्यर्थः ।

*भा०दी०*— **अस्यैव** भागवतस्यैव मोक्ष इति त्रैविद्यस्यैव स्वर्गगमनावधित्वं किमुच्यत इति वाऽर्थः । यद्वा **अस्यैव** त्रय्युक्तकर्मकारिण एव वेदवादित्वम् "वेदवादी स उच्यते" इत्यनेन किमुच्यत इत्यर्थः । **अभिप्रेत**मित्यनन्तरं येन भागवतत्रैविद्ययोरेव वेदवादित्वापात इति योज्यम् ।

*न्या०दी०*— तमेव विवृणोति **तदिति** ॥ कार्तयुगत्वे त्रेतादिषु न फलप्रदोऽनध्यायाधीतवेदवदित्यत आह त्रेतेति ॥ कार्तयुगत्वोक्तिस्तत्र प्राचुर्येण संभवाभिप्रायेण इति भावः ।

**गीतातात्पर्यनिर्णयः**

**एवं भागवतो यस्तु स एव हि विमुच्यते ।**
**त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।**
**तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽभ्यधिको गुणैः ।**
**समर्पयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।**

*न्या०दी०*— किमस्य फलं यत्त्रेतादिष्वधिकं स्यादित्यत आह **एवमिति** ॥

**गीतातात्पर्यनिर्णयः**

**त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ।**
**पुनः कुर्यात् पुनः स्वर्गं याति यावद्धरेर्वशे ।**
**सर्वान् देवान् प्रविज्ञाय तत्कर्मैव सदा भवेत् ।**

*प्रका०*— त्रैविद्यस्यापि मोक्षाभावमाह **त्रैविद्य इति** ।

*न्या०दी०*— कथं स एव मुच्यते ? त्रैविद्यस्यापि मोक्षसद्भावादित्यतः त्रैविद्यधर्मस्वरूपमुक्त्वा तद्वतो मोक्षाभावमाह **त्रैविद्य इति** ॥

*भा०दी०*— **तद्वत इति** । त्रैविध्यधर्मवतः ॥

**गीतातात्पर्यनिर्णयः**

**सम्यक्तत्त्वापरिज्ञानादन्यकर्मकृतेरपि ।**
**स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ।**
**सदा विष्णोरस्मरणात्त्रैविद्यो नाप्नुयात् परम् ॥**

**न्या०दी०**— त्रैविद्यस्यापि भगवज्ज्ञानादिसद्भावात् तस्यैव मोक्षहेतुत्वात् कथमसौ स्वर्गं भुक्त्वा निवर्तत इत्यत आह **सम्यगिति** ॥

**गीतातात्पर्यनिर्णयः**

**क्रमेण मुच्यते विष्णौ कर्माण्यन्ते समर्पयन् ।**
**यदि सर्वाणि नियमाज्जन्मभिर्बहुभिः शुभैः ॥**

***न्या०दी०***— किं तस्य कदापि न मोक्ष इत्यतः स्वर्गगमनावधिकथनेनैवार्थतः सिद्धमर्थं स्फुटमाह **क्रमेणेति** ॥ अन्ते समर्पयन् त्रैविद्यो यदि नियमात् प्रत्येकं सर्वाणि समर्पयतीत्यर्थः ।

***भा०दी०***— **अर्थतः सिद्धमिति** । स्वर्गगमनावधिरेव न नित्यनिरयप्राप्तिरित्युक्त्यार्थात् क्रमेण मोक्षं प्रतिपद्यत इति सिद्धमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**परं विष्णुं न यो वेत्ति कुर्वाणोऽपि त्रयीक्रियाः ।**
**नासौ त्रैविद्य इत्युक्तो वेदवादी स उच्यते ॥**

***न्या०दी०***— त्रय्युक्तकर्मकरणमात्रेण त्रैविद्यो भवेत्किं भगवत्सर्वोत्तमत्वज्ञानादिनेत्यत आह **परमिति** ॥

**गीतातात्पर्यनिर्णयः**

**वादो विवादः सम्प्रोक्तो वादो वचनमेव च ।**
**वेदोक्ते विष्णुमाहात्म्ये विवादात्पठनादपि ।**
**अथवा निरर्थकात्पाठाद्वेदवादी स उच्यते ॥**

***न्या०दी०***— वेदवादित्वस्य भागवतत्रैविद्ययोरपि साम्यादस्यैव किमुच्यत इत्यतो न वेदानुसारित्वं वेदवादित्वमत्राभिप्रेतमिति भावेनाह **वाद इति** ॥ **विवादात्पठनादिति** । विवादपूर्वकपठनादित्यर्थः ।

***भा०दी०***— **अस्यैव** भागवतस्यैव मोक्ष इति त्रैविद्यस्यैव स्वर्गगमनावधित्वं किमुच्यत इति वाऽर्थः । यद्वा **अस्यैव** त्रय्युक्तकर्मकारिण एव वेदवादित्वम् "वेदवादी स उच्यते" इत्यनेन किमुच्यत इत्यर्थः । **अभिप्रेत**मित्यनन्तरं येन भागवतत्रैविद्ययोरेव वेदवादित्वापात इति योज्यम् ।

**गीतातात्पर्यनिर्णयः**

**वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ।**
**तेभ्यो याति तमो घोरमन्धं यस्मान्न चोत्थितिः ॥**

*न्या०दी०*— अस्त्वेवं वेदवादित्वं तथापि तेन मोक्षादिसिद्धेः कथं भागवतस्यैव मोक्ष उक्त इत्यतः पाषण्डादिवत् तस्य निषिद्धत्वात् न मोक्षसाधनत्वमिति भावेनाह **वेदेति** ॥ न केवलं मोक्षसाधनत्वाभावोऽपि तु तमःसाधनत्वं चास्तीत्याह **तेभ्य इति** ॥

**गीतातात्पर्यनिर्णयः**

**अनारम्भमनन्तञ्च नित्यदुःखं सुखोज्झितम् ।**
**वव्रं यद्वेदगदितं यत्र यान्त्यसुरादयः ॥ ४० ॥**

*न्या०दी०*— "अनारम्भमनन्तं च" इति तमसि दुःखानुभावानुवृत्तेराद्यन्तशून्यत्वमुच्यते । "यस्मान्नैवोत्थितिः" इति तत्प्राप्तानामपुनरावृत्तिरुच्यते । तमसः पुनरावृत्तिराहित्यं कुत इत्यत आह **वव्रमिति** ॥ स्वगतानां गमनं वारयतीति वा, सदा वृणोतीति वा वरमानन्दं वारयतीति वा वव्रम् । "वव्रमनन्तम्" इत्यादिवेदगदितम् ॥

*भा०दी०*— अपौनरुक्त्यायार्थभेदमाह **अनारम्भमित्यादिना** ॥

**गीतातात्पर्यनिर्णयः**

**बुद्धिर्निर्णीततत्त्वानामेका विष्णुपरायणा ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥"**

**—इति ब्रह्मवैवर्ते ॥ ४१ ॥**

*प्रका०*— व्यवसायेत्येतद्व्याचष्टे **बुद्धिरिति** ॥

*न्या०दी०*— एवंविधश्चेदयं वैष्णवो धर्मः तर्हि किमिति कैश्चिदेवैकमत्येनानुष्ठीयते, परस्परविरुद्धतया बहुभिर्नानुष्ठीयत इत्यत आह **बुद्धिरिति** ॥ केषाञ्चिदेव बुद्धेर्निर्णीतत्वात् तावन्त एवैकमत्येन विष्णुपरायणाः । बहूनामनिर्णीतबुद्धित्वात् परस्परविरोधेन न विष्णुपरत्वमिति भावः । अनेन व्यवसायेति श्लोकोऽपि व्याख्यातो भवति ॥

**गीता**

## यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
## वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥

***वि०वि०—*** ननु अवैदिकमतानामप्रामाणिकत्वात् मा भूतेषु विश्वासः । वैदिकेषु निष्ठा कथं स्यात् । यतो वैदिका अपि केचित्कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह **यामिमामिति** । यां प्रवदन्ति तयेत्यन्वयः वेदवादरताः वेदैर्यन्मुखत उच्यते कर्मादिकं तत्रैव रताः ।

"वादो विवादः सम्प्रोक्तो वादो वचनमेव च ।
वेदोक्ते विष्णुमाहात्म्ये विवादात् पठनादपि ॥

अथवा निरर्थकात्पाठाद्वेदवादी स उच्यते ।
वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ॥"

इत्यादिलक्षणाः । अन्यद्विष्णुसामीप्यादिरूपं मोक्षाख्यं फलं फलप्रदं विष्ण्वाख्यं ब्रह्म च नास्तीति वादिनः ॥ ४२ ॥

***वा०ल०—*** 'यामिमां पुष्पितां वाचम्' इत्यत्र पुष्पितां पुष्पस्थानीयस्वर्गप्रतिपादिकां, स्वर्गमेवापाततः फलत्वेन प्रतिपादयन्तीमित्यर्थः । 'नान्यदस्तीति वादिनः' इत्यत्र अन्यत् मोक्षाख्यं महाफलं नास्तीति वादिनः ॥ ४२ ॥

***अ०प्र०—*** ननु कामिनोऽपि कष्टान् कामान् अर्थान् विहाय व्यवसायात्मिकामेव बुद्धिं किं न कुर्वन्ति ? तत्राह **यामिति** ।

हे पार्थ ![१], नान्यदस्तीति वादिनः[२], अत एव अविपश्चितः वेदवादरताः[४], पुष्पिताम्[५], यां[६], इमां[७], वाचं[८], वदन्तीत्यन्वयः ।

हे पार्थ ! नान्यदस्तीतिवादिनः अतःपरमन्यदीश्वरतत्त्वं प्राप्यं नास्तीति वदनशीलाः[२], अत एव = अविपश्चितः मूढाः[३], वेदवादरताः = वेदे ये वादाः अर्थवादाः तेष्वेव रताः प्रीताः[४], पुष्पितां विषलतावदापातरमणीयां[५], यां[६], इमां वाचं[८], प्रवदन्ति = प्रकृष्टं परमार्थफलपरामेव वदन्ति[९], यद्वा वेदवादरताः वेदैर्यन्मुख्यतः उच्यते कर्मादिकं तत्रैव रताः, नान्यदस्तीतिवादिनः स्वर्गादि-रन्यैर्ज्ञानमोक्षादिलक्षणं फलं फलप्रदं विष्ण्वाख्यं ब्रह्म च नास्तीति वदनशीलाः ॥ ४२ ॥

**गीतातात्पर्यनिर्णयः**

**वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ।**
**तेभ्यो याति तमो घोरमन्धं यस्मान्न चोत्थितिः ॥**

***न्या०दी०***— अरस्त्वेवं वेदवादित्वं तथापि तेन मोक्षादिसिद्धेः कथं भागवतस्यैव मोक्ष उक्त इत्यतः पाषण्डादिवत् तस्य निषिद्धत्वात् न मोक्षसाधनत्वमिति भावेनाह **वेदेति** ॥ न केवलं मोक्षसाधनत्वाभावोऽपि तु तमःसाधनत्वं चास्तीत्याह **तेभ्य इति** ॥

**गीतातात्पर्यनिर्णयः**

**अनारम्भमनन्तञ्च नित्यदुःखं सुखोज्झितम् ।**
**वव्रं यद्वेदगदितं यत्र यान्त्यसुरादयः ॥ ४० ॥**

***न्या०दी०***— ''अनारम्भमनन्तं च'' इति तमसि दुःखानुभावानुवृत्तेराद्यन्तशून्यत्वमुच्यते । ''यस्मान्नैवोत्थितिः'' इति तत्प्राप्तानामपुनरावृत्तिरुच्यते । तमसः पुनरावृत्तिराहित्यं कुत इत्यत आह **वव्रमिति** ॥ स्वगतानां गमनं वारयतीति वा, सदा वृणोतीति वा वरमानन्दं वारयतीति वा वव्रम् । ''वव्रमनन्तम्'' इत्यादिवेदगदितम् ॥

***भा०दी०***— अपौनरुक्त्यायार्थभेदमाह **अनारम्भमित्यादिना** ॥

**गीतातात्पर्यनिर्णयः**

**बुद्धिर्निर्णीततत्त्वानामेका विष्णुपरायणा ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥''**

**—इति ब्रह्मवैवर्ते ॥ ४१ ॥**

***प्रका०***— व्यवसायेत्येतद्व्याचष्टे **बुद्धिरिति** ॥

***न्या०दी०***— एवंविधश्चेदयं वैष्णवो धर्मः तर्हि किमिति कैश्चिदेवैकमत्येनानुष्ठीयते, परस्पर-विरुद्धतया बहुभिर्नानुष्ठीयत इत्यत आह **बुद्धिरिति** ॥ केषाञ्चिदेव बुद्धेर्निर्णीतत्वात् तावन्त एवैकमत्येन विष्णुपरायणाः । बहूनामनिर्णीतबुद्धित्वात् परस्परविरोधेन न विष्णुपरत्वमिति भावः । अनेन व्यवसायेति श्लोकोऽपि व्याख्यातो भवति ॥

**गीता**

## यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
## वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥

***वि०वि०***— ननु अवैदिकमतानामप्रामाणिकत्वात् मा भूतेषु विश्वासः । वैदिकेषु निष्ठा कथं स्यात् । यतो वैदिका अपि केचित्कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह **यामिमामिति** । यां प्रवदन्ति तयेत्यन्वयः वेदवादरताः वेदैर्यन्मुखत उच्यते कर्मादिकं तत्रैव रताः ।

"वादो विवादः सम्प्रोक्तो वादो वचनमेव च ।
वेदोक्ते विष्णुमाहात्म्ये विवादात् पठनादपि ॥

अथवा निरर्थकात्पाठाद्वेदवादी स उच्यते ।
वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ॥"

इत्यादिलक्षणाः । अन्यद्विष्णुसामीप्यादिरूपं मोक्षाख्यं फलं फलप्रदं विष्णवाख्यं ब्रह्म च नास्तीति वादिनः ॥ ४२ ॥

***वा०ल०***— 'यामिमां पुष्पितां वाचम्' इत्यत्र पुष्पितां पुष्पस्थानीयस्वर्गप्रतिपादिकां, स्वर्गमेवापाततः फलत्वेन प्रतिपादयन्तीमित्यर्थः । 'नान्यदस्तीति वादिनः' इत्यत्र अन्यत् मोक्षाख्यं महाफलं नास्तीति वादिनः ॥ ४२ ॥

***अ०प्र०***— ननु कामिनोऽपि कष्टान् कामान् अर्थान् विहाय व्यवसायात्मिकामेव बुद्धिं किं न कुर्वन्ति ? तत्राह **यामिति** ।

हे पार्थ ![१], नान्यदस्तीति वादिनः[२], अत एव अविपश्चितः वेदवादरताः[४], पुष्पिताम्[५], यां[६], इमां[७], वाचं[८], वदन्तीत्यन्वयः ।

हे पार्थ ! नान्यदस्तीतिवादिनः अतःपरमन्यदीश्वरतत्त्वं प्राप्यं नास्तीति वदनशीलाः[२], अत एव = अविपश्चितः मूढाः[३], वेदवादरताः = वेदे ये वादाः अर्थवादाः तेष्वेव रताः प्रीताः[४], पुष्पितां विषलतावदापातरमणीयां[५], यां[६], इमां वाचं[८], प्रवदन्ति = प्रकृष्टं परमार्थफलपरामेव वदन्ति[९], यद्वा वेदवादरताः वेदैर्यन्मुख्यतः उच्यते कर्मादिकं तत्रैव रताः, नान्यदस्तीतिवादिनः स्वर्गादि-रन्यैर्ज्ञानमोक्षादिलक्षणं फलं फलप्रदं विष्णवाख्यं ब्रह्म च नास्तीति वदनशीलाः ॥ ४२ ॥

**गीता**

## कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
## क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

***वि०वि०***— कामात्मानो भोगचित्ताः स्वर्गपराः स्वर्ग एव परः पुरुषार्थ इति मन्यमानाः न विपश्चितः । पुष्पितां मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां जन्मादिबहुसंसारफलप्रदां सन्ततकर्मविशेषबहुलां यामिमां वाचं वेदात्मिकां भोगैश्वर्यगतिं तत्प्राप्तिं प्रति वदन्ति भोगैश्वर्यप्राप्त्यर्था एव वेदा इति वदन्तीत्यर्थः ॥ ४३ ॥

***वा०ल०***— 'भोगैश्वर्यगतिं प्रति' इत्यत्र भोगैश्वर्यगतिं प्रति आसक्ता भवन्तीति योग्यक्रियाध्याहारः ॥ ४३ ॥

***अ०प्र०***— अत एव **कामात्मान इति** ।

अत एव कामात्मानः[१], स्वर्गपराः मूढाः[२], जन्मकर्मफलप्रदां[३], भोगैश्वर्यगतिं प्रति[४], क्रियाविशेषबहुलां प्रवदन्ति ।

कामात्मानः = कामाकुलितचित्ताः[१], स्वर्गपराः स्वर्ग एव परः पुरुषार्थ इति ज्ञानं येषां ते तथा । अविपश्चितः = मूढाः[२], जन्मकर्मफलप्रदां = आदौ जन्म च तत्र च कर्माणि च तत्फलानि च प्रददातीति तथा तां[३], भोगैश्वर्यगतिं प्रति = भौगैश्वर्ययोः गतिं प्राप्तिं प्रति[४], क्रियाविशेषबहुलां साधनभूता ये क्रियाविशेषाः ते बहुलाः यास्यां तां क्रियाविशेषबहुलां प्रवदन्ति = प्रकृष्टां वदन्तीत्यनुषङ्गः । भोगैश्वर्यप्राप्तिप्रयोजनको वेद इति वदन्तीत्यर्थः भोगैश्वर्यगतिं प्रति साधनभूतक्रियाविशेषबाहुल्यप्रतिपादकां वाचं प्रवदन्तीति वा सम्बन्धः ॥ ४३ ॥

**गीता**

## भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
## व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

***वि०वि०***— तया वाचाऽप्यपहतचित्तानां भोगैश्वर्ययोरासक्तानां सम्यक् प्रमाणनिर्णीता बुद्धिः समाधौ समाध्यर्थे न विधीयते । सम्यक् निर्णीतार्थानां हीश्वरे मोक्षसाधनं मनःसमाधानं सम्यग्भवति नान्येषामित्यर्थः ।

अथवा अव्यवसायिबुद्धयो बहुविधा इत्युक्तम् । ताश्च कथं केषां भवन्तीत्यत आह **यामिति** । यां वाचं प्रवदन्ति तयाऽपहृतचेतसां मोहितज्ञानानां बुद्धिर्व्यवसायात्मकत्वेन समाधौ न विधीयते । समाधिः समाधानं समस्थितिरिति ॥ ४४ ॥

*वा०ल०*— 'समाधौ न विधीयते' इत्यत्र समाधौ चित्तसमाधानार्थम् । तादर्थ्ये सप्तमी । ॥ ४४ ॥

*सा०सं०*— नन्ववैदिकमतानामप्रामाणिकत्वेन तत्राविश्वासेऽपि वैदिकेष्वपि केचित् कर्माणि स्वर्गफलान्येवाहुः । त्वया तु काम्यार्थान्येव स्वर्गादिफलानि, निष्कामानीश्वरार्पणबुद्ध्या अनुष्ठितानि तु ज्ञानार्थानीत्यभिप्रेयते । तथा च कथं त्वद्वचने निष्ठा स्यादित्यतस्तेषां वैदिकाभासताप्रदर्शनाय निन्दामाह **यामित्यादि** त्रयेण । **वेदवादरताः** वेदैर्यदापातत उच्यते कर्मादि, तत्रैव रताः । वेदोक्तविष्णुमहिमविवादपूर्वकं वेदपाठका वा निरर्थकवेदपाठका वा अत एव **अविपश्चितः** । वेदतात्पर्यार्थापरिज्ञानिनः । **अन्यत्** मोक्षाख्यफलं वा ब्रह्मस्वरूपं वा **नास्तीति वादिनः कामात्मानः** काम्यफलमनस्काः, भोगचित्ता इति वा । **स्वर्गपराः** स्वर्गतात्पर्यकाः स्वर्गमेव परमपुमर्थं मन्यमाना इति यावत् । जन्म च कर्म च तत्फलं च प्रददातीति तथाविधां **क्रियाविशेषबहुलां** बहुकर्मविशेष-प्रतिपादिकां **यामिमां वाचं पुष्पितां** सञ्जातपुष्पां मोक्षफलमपेक्ष्य पुष्पस्थानीयस्वर्गादिफलकां भोगैश्वर्यप्राप्तिं **प्रति प्रवदन्ति** । **तया** वाचा **अपहृतचेतसां** भोगैश्वर्ययोरासक्तचित्तानां **व्यवसाया-त्मिका** सम्यक् प्रमाणनिर्णीतार्थनिश्चयरूपा **बुद्धिः समाधौ** भगवति मनःसमाधानार्थं **न विधीयते** । तस्यैव परमपुमर्थहेतुत्वादिति भावः ।

यद्वा, अव्यवसायबुद्धिः केन कारणेन भवति ? यत्परित्यागात् सा बुद्धिर्न भवति इत्यतो-ऽव्यवसायबुद्धेः कारणमाह **यामिति** । योजना तु पूर्ववदेव । वेदतात्पर्यविषयीभूतभगवत्स्वरूप-मोक्षस्वरूपयोरज्ञानिनाम् आपातप्रतीतार्थमादाय स्वर्गादिफलका वेदा इति वादिनां भोगैश्वर्यसक्ताना-मसद्वादिनां वाक्यानि अव्यवसायबुद्धिकारणम् । तत्त्यागे च सा बुद्धिर्न भवतीति भावः । अत्र पक्षे समाधावित्यस्य तत्त्वविषयतया दार्ढ्यार्थमित्यर्थः । तस्यैव विष्णुधर्मानुष्ठानहेतुत्वादिति ॥ ४२ ॥ ॥ ४३ ॥ ४४ ॥

*अ०प्र०*— ततश्च **भोगैश्वर्यप्रसक्तानामिति** ।

भोगैश्वर्यप्रसक्तानां[१], तयापहृतचेतसां तेषां[२], बुद्धिः[३], समाधौ[४], व्यवसायात्मिका[५], न विधीयते इत्यन्वयः ।

**गीता**

## कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
## क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

***वि०वि०***— कामात्मानो भोगचित्ताः स्वर्गपराः स्वर्ग एव परः पुरुषार्थ इति मन्यमानाः न विपश्चितः । पुष्पितां मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां जन्मादिबहुसंसारफलप्रदां सन्ततकर्मविशेषबहुलां यामिमां वाचं वेदात्मिकां भोगैश्वर्यगतिं तत्प्राप्तिं प्रति वदन्ति भोगैश्वर्यप्राप्त्यर्था एव वेदा इति वदन्तीत्यर्थः ॥ ४३ ॥

***वा०ल०***— 'भोगैश्वर्यगतिं प्रति' इत्यत्र भोगैश्वर्यगतिं प्रति आसक्ता भवन्तीति योग्यक्रियाध्याहारः ॥ ४३ ॥

***अ०प्र०***— अत एव **कामात्मान इति** ।

अत एव कामात्मानः[१], स्वर्गपराः मूढाः[२], जन्मकर्मफलप्रदां[३], भोगैश्वर्यगतिं प्रति[४], क्रियाविशेषबहुलां प्रवदन्ति ।

कामात्मानः = कामाकुलितचित्ताः[१], स्वर्गपराः स्वर्ग एव परः पुरुषार्थ इति ज्ञानं येषां ते तथा । अविपश्चितः = मूढाः[२], जन्मकर्मफलप्रदां = आदौ जन्म च तत्र च कर्माणि च तत्फलानि च प्रददातीति तथा तां[३], भोगैश्वर्यगतिं प्रति = भौगैश्वर्ययोः गतिं प्राप्तिं प्रति[४], क्रियाविशेषबहुलां साधनभूता ये क्रियाविशेषाः ते बहुलाः यास्यां तां क्रियाविशेषबहुलां प्रवदन्ति = प्रकृष्टां वदन्तीत्यनुषङ्गः । भोगैश्वर्यप्राप्तिप्रयोजनको वेद इति वदन्तीत्यर्थः भोगैश्वर्यगतिं प्रति साधनभूतक्रियाविशेषबाहुल्यप्रतिपादकां वाचं प्रवदन्तीति वा सम्बन्धः ॥ ४३ ॥

**गीता**

## भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
## व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

***वि०वि०***— तया वाचाऽप्यपहृतचित्तानां भोगैश्वर्ययोरासक्तानां सम्यक् प्रमाणनिर्णीता बुद्धिः समाधौ समाध्यर्थे न विधीयते । सम्यक् निर्णीतार्थानां हीश्वरे मोक्षसाधनं मनःसमाधानं सम्यग्भवति नान्येषामित्यर्थः ।

अथवा अव्यवसायिबुद्धयो बहुविधा इत्युक्तम् । ताश्च कथं केषां भवन्तीत्यत आह **यामिति** । यां वाचं प्रवदन्ति तयाऽपहृतचेतसां मोहितज्ञानानां बुद्धिर्व्यवसायात्मकत्वेन समाधौ न विधीयते । समाधिः समाधानं समस्थितिरिति ॥ ४४ ॥

*बा०ल०*— 'समाधौ न विधीयते' इत्यत्र समाधौ चित्तसमाधानार्थम् । तादर्थ्ये सप्तमी । ॥ ४४ ॥

*सा०सं०*— नन्ववैदिकमतानामप्रामाणिकत्वेन तत्राविश्वासेऽपि वैदिकेष्वपि केचित् कर्माणि स्वर्गफलान्येवाहुः । त्वया तु काम्यार्थान्येव स्वर्गादिफलानि, निष्कामानीश्वरार्पणबुद्ध्या अनुष्ठितानि तु ज्ञानार्थानीत्यभिप्रेयते । तथा च कथं त्वद्वचने निष्ठा स्यादित्यतस्तेषां वैदिकाभासताप्रदर्शनाय निन्दामाह **यामित्यादि** त्रयेण । **वेदवादरताः** वेदैर्यदापातत उच्यते कर्मादि, तत्रैव रताः । वेदोक्तविष्णुमहिमविवादपूर्वकं वेदपाठका वा निरर्थकवेदपाठका वा अत एव **अविपश्चितः** । वेदतात्पर्यार्थापरिज्ञानिनः । **अन्यत्** मोक्षाख्यफलं वा ब्रह्मस्वरूपं वा **नास्तीति वादिनः कामात्मानः** काम्यफलमनस्काः, भोगचित्ता इति वा । **स्वर्गपराः** स्वर्गतात्पर्यकाः स्वर्गमेव परमपुमर्थं मन्यमाना इति यावत् । जन्म च कर्म च तत्फलं च प्रददातीति तथाविधां **क्रियाविशेषबहुलां** बहुकर्मविशेष-प्रतिपादिकां **यामिमां वाचं पुष्पितां** सञ्जातपुष्पां मोक्षफलमपेक्ष्य पुष्पस्थानीयस्वर्गादिफलकां भोगैश्वर्यप्राप्तिं **प्रति प्रवदन्ति । तया** वाचा **अपहृतचेतसां** भोगैश्वर्ययोरासक्तचित्तानां **व्यवसाया-त्मिका** सम्यक् प्रमाणनिर्णीतार्थनिश्चयरूपा **बुद्धिः समाधौ** भगवति मनःसमाधानार्थं **न विधीयते** । तस्यैव परमपुमर्थहेतुत्वादिति भावः ।

यद्वा, अव्यवसायबुद्धिः केन कारणेन भवति ? यत्परित्यागात् सा बुद्धिर्न भवति इत्यतो-ऽव्यवसायबुद्धेः कारणमाह **यामिति** । योजना तु पूर्ववदेव । वेदतात्पर्यविषयीभूतभगवत्स्वरूप-मोक्षस्वरूपयोरज्ञानिनाम् आपातप्रतीतार्थमादाय स्वर्गादिफलका वेदा इति वादिनां भोगैश्वर्यसक्ताना-मसद्वादिनां वाक्यानि अव्यवसायबुद्धिकारणम् । तत्त्यागे च सा बुद्धिर्न भवतीति भावः । अत्र पक्षे समाधावित्यस्य तत्त्वविषयतया दार्ढ्यार्थमित्यर्थः । तस्यैव विष्णुधर्मानुष्ठानहेतुत्वादिति ॥ ४२ ॥ ॥ ४३ ॥ ४४ ॥

*अ०प्र०*— ततश्च **भोगैश्वर्यप्रसक्तानामिति** ।

भोगैश्वर्यप्रसक्तानां[१], तयापहृतचेतसां तेषां[२], बुद्धिः[३], समाधौ[४], व्यवसायात्मिका[५], न विधीयते इत्यन्वयः ।

भोगैश्वर्यप्रसक्तानां = भोगैश्वर्ययोः अभिनिविष्टानां[१], तयापहृतचेतसां = तया पुष्पितया वेदवाचा अपहृतं आकृष्टं चेतो येषां तेषां[२], बुद्धिः[३], समाधौ = समाधिश्चित्तैकाग्र्यं परमेश्वरैकाभिमुखत्वं तस्मिन्समाधौ[४], व्यवसायात्मिका = विष्णुभक्त्येव ध्रुवं करिष्यामीति निश्चयात्मिका[५], न विधीयते = नोत्पद्यते[६], सम्यग्निर्णयात्मकत्वेन विष्णौ मनस्समाधानं न प्राप्नोतीत्यर्थः ॥ ४४ ॥

**भाष्यम्**

**स्युरवैदिकानि मतान्यव्यवसायात्मकानि, न तु वैदिकानि । तेऽपि हि केचित् कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह— यामिमामिति । यामाहुस्तयेत्यन्वयः । मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां वाचं प्रवदन्ति । वेदवादरताः = कर्मादिवाचकवेदवादरताः । वेदैर्यन्मुखत उच्यते तत्रैव रताः । नान्यदस्तीति वादिनः । 'परोक्षविषया वेदाः', 'परोक्षप्रिया इव हि देवाः', 'मां विधत्तेऽभिधत्ते माम्' इत्यादिभिः पारोक्ष्येण प्रायो भगवन्तं वदन्ति । भोगैश्वर्यगतिं प्रति तत्प्राप्तिं प्रति । तत्प्राप्तिफला एव वेदा इति वदन्तीत्यर्थः । तेषां सम्यग् युक्तिनिर्णयात्मिका बुद्धिः समाधौ समाध्यर्थे न विधीयते । सम्यङ्निर्णीतार्थानां हीश्वरे मनस्समाधानं सम्यग्भवति । तद्धि मोक्षसाधनम् । उक्तं चैतदन्यत्र । 'न तस्य तत्त्वग्रहणाय साक्षात् वरीयसीरपि वाचः समासन् । स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात् ॥' इति ॥ ४२ ॥ ४३ ॥ ४४ ॥**

*प०टी०*— व्यवसायात्मिका वागेकेत्येतदाक्षिप्य समाधातुं श्लोकमवतार्य व्याचष्टे **स्युरिति** । भोगैश्वर्यगतेरपि स्त्रीलिङ्गेन प्रकृतत्वादन्यथाप्रतीतिं पराकर्तुं बोधान्वयमाह **यामिति** । वाचः पुष्पितत्वं कथम् ? इत्यत आह **स्वर्गादीति** । वेदवादरतत्वं कथं दूषणम् ? इत्यत आह **वेदेति** । 'वेदवाद'-पदस्य कर्मवाचकतेत्याद्यर्थः कथम् ? इत्यत आह **वेदैरिति** । वेदप्रातीतिकोऽर्थो भवद्भिरप्यङ्गीकार्योऽतः कथमियं निन्दा ? इत्यत आह **नान्यदिति** । प्रातीतिकेत्यत्रार्थस्यैव भावात् कथमेवं निन्दा ? इत्यत आह **परोक्षेति** । इवेत्युक्तत्वात् **प्राय** इत्युक्तम् । तत्र विष्णुसूक्तादिव्यावृत्तये । 'भोगैश्वर्यगतिम्' इत्यत्रावगतिशङ्का मा भूदित्याह **भोगेति** । कथमयं दोषः इत्यत आह **तत्प्राप्तीति** । 'व्यवसायात्मिका' इति योजयति **तेषामिति** । सम्यग्युक्तिनिर्णयात्मिकाऽपि न भवति । तत एव न समाध्यर्थे विधीयते । सम्यग्युक्तिनिर्णयाभावे कुतो न समाधिः ? इत्याशङ्कां

'समाधि'पदार्थं वदन्नेव परिहरति **सम्यगिति**। माऽस्त्वीश्वरे मनःसमाधानं, किं तेन ? इत्यत आह **तद्धीति**। सम्यग्युक्तिनिर्णयाभावे न समाधिरित्यत्र प्रमाणमाह **उक्तं चेति**॥ ४२-४४ ॥

***न०टी०***—न तु वैदिकानां स्वमतानामित्यनेन सम्बन्धः। मतानामनन्तानां सम्यग्युक्तिनिर्णयराहित्यशङ्काभावात् तत्रैव विप्रतिपत्तौ पुनः कथमेकत्र परिनिष्ठा ? इति भावेनाशङ्क्य, उत्तरश्लोकमवतारयति **स्युरिति**। तेऽपि केचित् वैदिकाः कर्माणि स्वर्गादिफलान्येवाहुः। न तु 'ज्ञानात् पूर्वाणि कर्माणि शुभानि ज्ञानसिद्धये' इत्याद्युक्तव्यवस्थामङ्गीकुर्वन्तीति भावः। 'तया' भोगैश्वर्यगत्येत्यपि शङ्का स्यात्। सा मा भूदित्याह **यामाहुरिति**। 'ननु स्वर्ग एव परः पुरुषार्थस्तदन्यं मोक्षाख्यं फलं नास्ति' इति वादिनः ते पुष्पयुक्तामेव वाचं प्रवदन्ति। वस्तुतो मोक्षापेक्षया स्वर्गादिः पुष्पतुल्यत्वादिति भावेन तृतीयपदं व्याचष्टे **मोक्षफलमिति**। अविपश्चित्त्वाविरोधेन तदुत्तरपदमनूद्य व्याचष्टे **वेदवादरता इति**। ननु ज्ञानोपायत्वेन कर्मणामपि वेदोक्तत्वाङ्गीकारात् कथं तद्रतानामविपश्चित्वम् ? इत्यत आह **वेदैरिति**। मुखत इत्यसम्यक्पर्यालोचनयेत्यर्थः। उत्तरपदावतारणेनैवैतत्प्रकटयति **नान्यदिति**। अन्यत् मोक्षफलं विष्णुसामीप्यरूपम्, तद्दाता च विष्णुर्जगत्पतिर्नास्तीति वादिन इत्यर्थः। कथं वेदवादरतानां भगवदभावबुद्धिः ? इत्याकाङ्क्षायां तस्यापरोक्षेण वेदैरुच्यमानत्वादित्याद्येतत्सप्रमाणकमाह **परोक्षविषया इत्यादि**। इवशब्दस्योभयार्थत्वात् क्वचिदपरोक्षप्रियाश्च। अन्यथा योग्यानामप्यज्ञानप्रसङ्गात्। अत एवाह **परोक्षेण हि प्राय इति**। मां प्रति सर्वाणि कर्माणि विधत्ते। यत इन्द्रादिसर्वनामभिर्मामभिधत्ते। अनेन कर्मादिवाचकसर्वदेवानां परोक्षेण भगवद्वाचकत्वप्रकारो दर्शितः। भोगैश्वर्यावगतिरित्यपि प्रतीतिः स्यात्, सा मा भूदित्याह **तत्प्राप्तिमिति**। ननु वेदोक्तानुष्ठानात् भोगैश्वर्यस्यापि सम्भवात्, कोऽयमेवंवादिनां दोषः ? इत्याशङ्क्य, ते तु तदेकार्थत्वं वदन्ति, अतो दोषिण इति भावेनाह **तत्प्राप्तिफला इति**। एवमवैदिकत्वात् तेषां सम्यग्युक्तिनिर्णयात्मिका बुद्धिर्भगवता न क्रियत इत्याह **तेषामिति**। सम्यङ्निर्णयस्य समाधानकारणत्वं प्रसिद्धमित्याह **सम्यङ्निर्णीतार्थानां हीति**। भगवत्प्रसाद एव सर्वपुरुषार्थदः, अन्यत् सर्वं तदर्थमिति निर्णये, तत्रैव मनः समाहितं भवति, अन्यथाऽन्यत्र धावतीति प्रसिद्धमिति भावः। तत्समाधानमेव मोक्षसाधनमित्येतदपि प्रसिद्धमित्याह **तद्धीति**। अन्यथाऽन्यकरणात् पुनर्बन्धवृद्धेरिति भावः। न केवलं युक्तिप्रसिद्धमेव तदुभयमित्याह **उक्तं चेति**। गृहमेधसौख्यमित्युपलक्षणम्। यस्य पुंसो भगवतोऽन्यद्यत्किञ्चिदपि तत्सेवाङ्गत्वं विनोपादेयत्वबुद्धिगोचरः तस्य वरीयस्यो वेदादिवाचोऽपि तत्त्वं न ग्राहयन्ति, अतोऽसावन्यत्र धावति। कुरुते च तदर्थानि कर्माणि बन्धायेत्यर्थः॥ ४२-४४ ॥

भोगैश्वर्यप्रसक्तानां = भोगैश्वर्ययोः अभिनिविष्टानां[१], तयापहृतचेतसां = तया पुष्पितया वेदवाचा अपहृतं आकृष्टं चेतो येषां तेषां[२], बुद्धिः[३], समाधौ = समाधिश्चित्तैकाग्र्यं परमेश्वरैकाभिमुखत्वं तस्मिन्समाधौ[४], व्यवसायात्मिका = विष्णुभक्त्येव ध्रुवं करिष्यामीति निश्चयात्मिका[५], न विधीयते = नोत्पद्यते[६], सम्यग्निर्णयात्मकत्वेन विष्णौ मनस्समाधानं न प्राप्नोतीत्यर्थः ॥ ४४ ॥

**भाष्यम्**

**स्युरवैदिकानि मतान्यव्यवसायात्मकानि, न तु वैदिकानि । तेऽपि हि केचित् कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह— यामिमामिति । यामाहुस्तयेत्यन्वयः । मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां वाचं प्रवदन्ति । वेदवादरताः = कर्मादिवाचकवेदवादरताः । वेदैर्यन्मुखत उच्यते तत्रैव रताः । नान्यदस्तीति वादिनः । 'परोक्षविषया वेदाः', 'परोक्षप्रिया इव हि देवाः', 'मां विधत्तेऽभिधत्ते माम्' इत्यादिभिः पारोक्ष्येण प्रायो भगवन्तं वदन्ति । भोगैश्वर्यगतिं प्रति तत्प्राप्तिं प्रति । तत्प्राप्तिफला एव वेदा इति वदन्तीत्यर्थः । तेषां सम्यग् युक्तिनिर्णयात्मिका बुद्धिः समाधौ समाध्यर्थे न विधीयते । सम्यङ्निर्णीतार्थानां हीश्वरे मनस्समाधानं सम्यग्भवति । तद्धि मोक्षसाधनम् । उक्तं चैतदन्यत्र । 'न तस्य तत्त्वग्रहणाय साक्षात् वरीयसीरपि वाचः समासन् । स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात् ॥' इति ॥ ४२ ॥ ४३ ॥ ४४ ॥**

***प०टी०***— व्यवसायात्मिका वागेकेत्येतदाक्षिप्य समाधातुं श्लोकमवतार्य व्याचष्टे **स्युरिति** । भोगैश्वर्यगतेरपि स्त्रीलिङ्गेन प्रकृतत्वादन्यथाप्रतीतिं पराकर्तुं बोधान्वयमाह **यामिति** । वाचः पुष्पितत्वं कथम् ? इत्यत आह **स्वर्गादीति** । वेदवादरतत्वं कथं दूषणम् ? इत्यत आह **वेदेति** । 'वेदवाद'-पदस्य कर्मवाचकतेत्याद्यर्थः कथम् ? इत्यत आह **वेदैरिति** । वेदप्रातीतिकोऽर्थो भवद्भिरप्यङ्गीकार्योऽतः कथमियं निन्दा ? इत्यत आह **नान्यदिति** । प्रातीतिकेत्यत्रार्थस्यैव भावात् कथमेवं निन्दा ? इत्यत आह **परोक्षेति** । इवेत्युक्तत्वात् **प्राय** इत्युक्तम् । तत्र विष्णुसूक्तादिव्यावृत्तये । 'भोगैश्वर्यगतिम्' इत्यत्रावगतिशङ्का मा भूदित्याह **भोगेति** । कथमयं दोषः इत्यत आह **तत्प्राप्तीति** । 'व्यवसायात्मिका' इति योजयति **तेषामिति** । सम्यग्युक्तिनिर्णयात्मिकाऽपि न भवति । तत एव न समाध्यर्थे विधीयते । सम्यग्युक्तिनिर्णयाभावे कुतो न समाधिः ? इत्याशङ्कां

'समाधि'पदार्थं वदन्नेव परिहरति **सम्यगिति** । माऽस्त्वीश्वरे मनःसमाधानं, किं तेन ? इत्यत आह **तद्धीति** । सम्यग्युक्तिनिर्णयाभावे न समाधिरित्यत्र प्रमाणमाह **उक्तं चेति** ॥ ४२-४४ ॥

***न०टी०***—न तु वैदिकानां स्वमतग्नामित्यनेन सम्बन्धः । मतानामनन्तानां सम्यग्युक्तिनिर्णयराहित्यशङ्काभावात् तत्रैव विप्रतिपत्तौ पुनः कथमेकत्र परिनिष्ठा ? इति भावेनाशङ्क्य, उत्तरश्लोकमवतारयति **स्युरिति** । तेऽपि केचित् वैदिकाः कर्माणि स्वर्गादिफलान्येवाहुः । न तु 'ज्ञानात् पूर्वाणि कर्माणि शुभानि ज्ञानसिद्धये' इत्याद्युक्तव्यवस्थामङ्गीकुर्वन्तीति भावः । 'तया' भोगैश्वर्यगत्येत्यपि शङ्का स्यात् । सा मा भूदित्याह **यामाहुरिति** । 'ननु स्वर्ग एव परः पुरुषार्थस्तदन्यं मोक्षाख्यं फलं नास्ति' इति वादिनः ते पुष्पयुक्तामेव वाचं प्रवदन्ति । वस्तुतो मोक्षापेक्षया स्वर्गादिः पुष्पतुल्यत्वादिति भावेन तृतीयपदं व्याचष्टे **मोक्षफलमिति** । अविपश्चित्वाविरोधेन तदुत्तरपदमनूद्य व्याचष्टे **वेदवादरता इति** । ननु ज्ञानोपायत्वेन कर्मणामपि वेदोक्तत्वाङ्गीकारात् कथं तद्रतानामविपश्चित्वम् ? इत्यत आह **वेदैरिति** । मुखत इत्यसम्यक्पर्यालोचनयेत्यर्थः । उत्तरपदावतारणेनैवैतत्प्रकटयति **नान्यदिति** । अन्यत् मोक्षफलं विष्णुसामीप्यरूपम्, तद्दाता च विष्णुर्जगत्पतिर्नास्तीति वादिन इत्यर्थः । कथं वेदवादरतानां भगवदभावबुद्धिः ? इत्याकाङ्क्षायां तस्यापरोक्षेण वेदैरुच्यमानत्वादित्याद्येतत्सप्रमाणकमाह **परोक्षविषया इत्यादि** । इवशब्दस्योभयार्थत्वात् क्वचिदपरोक्षप्रियाश्च । अन्यथा योग्यानामप्यज्ञानप्रसङ्गात् । अत एवाह **परोक्षेण हि प्राय इति** । मां प्रति सर्वाणि कर्माणि विधत्ते । यत इन्द्रादिसर्वनामभिर्मामभिधत्ते । अनेन कर्मादिवाचकसर्वदेवानां परोक्षेण भगवद्वाचकत्वप्रकारो दर्शितः । भोगैश्वर्यावगतिरित्यपि प्रतीतिः स्यात्, सा मा भूदित्याह **तत्प्राप्तिमिति** । ननु वेदोक्तानुष्ठानात् भोगैश्वर्यस्यापि सम्भवात्, कोऽयमेवंवादिनां दोषः ? इत्याशङ्क्य, ते तु तदेकार्थत्वं वदन्ति, अतो दोषिण इति भावेनाह **तत्प्राप्तिफला इति** । एवमवैदिकत्वात् तेषां सम्यग्युक्तिनिर्णयात्मिका बुद्धिर्भगवता न क्रियत इत्याह **तेषामिति** । सम्यङ्निर्णयस्य समाधानकारणत्वं प्रसिद्धमित्याह **सम्यङ्निर्णीतार्थानां हीति** । भगवत्प्रसाद एव सर्वपुरुषार्थदः, अन्यत् सर्वं तदर्थमिति निर्णये, तत्रैव मनः समाहितं भवति, अन्यथाऽन्यत्र धावतीति प्रसिद्धमिति भावः । तत्समाधानमेव मोक्षसाधनमित्येतदपि प्रसिद्धमित्याह **तद्धीति** । अन्यथाऽन्यकरणात् पुनर्बन्धवृद्धेरिति भावः । न केवलं युक्तिप्रसिद्धमेव तदुभयमित्याह **उक्तं चेति** । गृहमेधसौख्यमित्युपलक्षणम् । यस्य पुंसो भगवतोऽन्यद्यत्किञ्चिदपि तत्सेवाङ्गत्वं विनोपादेयत्वबुद्धिगोचरः तस्य वरीयस्यो वेदादिवाचोऽपि तत्त्वं न ग्राहयन्ति, अतोऽसावन्यत्र धावति । कुरुते च तदर्थानि कर्माणि बन्धायेत्यर्थः ॥ ४२-४४ ॥

*प्र०दी०*— 'यामिमां' इति श्लोकत्रयस्य प्रकृतोपयोगादर्शनात् सङ्गतिमाह— **स्युरिति**। न तु वैदिकान्यव्यवसायात्मकानि। ततः किं प्रकृत इत्यत उक्तम्— **तेऽपीति**। व्यवसायात्मकं मतं वैदिकमवलम्बमाना अपि केचित् वैदिकान्यपि सर्वाण्येव कर्माणि स्वर्गादिफलान्याहुः। भवांस्तु काम्यार्थान्येव कर्माणि स्वर्गादिफलानि। निष्कामानीश्वरार्पणबुद्ध्याऽनुष्ठितानि तु ज्ञानार्थानी-त्यभिप्रैति। तथा च त्वद्वचने निष्ठाऽनुपपत्तिस्तदवस्थेति भावः। **आह** तेषां वैदिकाभासताप्रदर्शनाय निन्दामिति शेषः। भोगैश्वर्यगतेरपि प्रकृतत्वात् 'तया' इति तत्परामर्शभ्रान्तिं वारयति— **यामिति**। अन्यथा यच्छब्दः साकाङ्क्षोऽनन्वितः स्यादिति भावः। वाचः पुष्पितत्वं कथमित्यत आह– **मोक्षेति**। अत्यल्पत्वेनोपमा। 'वेदवादरताः' इत्येतत् कथं निन्दावचनमित्यत आह— **वेदेति**। कथमेतदस्मात् पदाल्लभ्यते। कथं चैषाऽपि निन्देत्यत आह— **वेदैरिति**। वादशब्दोऽत्रापाततः प्रतिपादने वर्तते। वक्ष्यते चात्राभिधानम्। आपाततः प्रतिपाद्यं च कर्मादि। सावधारणं च तत्। अब्भक्षो वायुभक्ष इति यथेत्यर्थः। सावधारणत्वं कुत इति चेदुत्तरपदबलादिति तानि पठति— **नान्यदिति**। आपाततः प्रतीतार्थादन्यस्य सद्भावे भवेदेषा निन्दा। कोऽसौ कुतश्चेत्यत आह— **परोक्षेति**। क्वचित् प्रकटवचनात् 'इव' इत्युक्तम्। अत एव 'प्रायः' इत्याह। देवा वेदाभिमानिनः तत्प्रकारसूचनार्थं 'मां विधत्ते' इत्याद्युदाहृतम्। वदन्ति वेदाः। गतिशब्दस्यावगतिरप्यर्थः प्रतीयते। अत आह— **भोगेति**। अन्यथाऽसदनुवादत्वप्रसङ्गादिति भावः। एषाऽपि कथं निन्देत्यत आह— **तत्प्राप्तीति**। मोक्षं वेदफलं न मन्यन्त इत्यर्थः। 'तयाऽपहृत' इत्यादेरप्रतीतिनिरासायार्थमाह— **तेषामिति**। तेषां बुद्धिः मनोवृत्तिः व्यवसायात्मिका सम्यग्युक्तिनिर्णयात्मिका न भवति। तत एवेश्वरे सम्यक्समाधानार्थे न विधीयत इत्यर्थः। सम्यग्युक्तिनिर्णयात्मकत्वाभावे कुतः समाध्यभाव इत्यत आह— **सम्यगिति**। अनेन समाधिशब्दार्थोऽपि विवृतो भवति। किमीश्वरे मनस्समाधानेन। येन तदभावो निन्दा स्यादित्यत आह— **तद्धीति**। मोक्षाभावश्च महानिन्देति वक्ष्यति। 'सम्यङ्निर्णीतार्थानां' इत्युक्तं न केवलमानुभाविकम्। किन्तु पुराणेऽप्युक्तमित्याह— **उक्तञ्चेति**। वरीयसीः वरीयस्यः। 'सुपां सुलुक्' (७-१-३९) इत्यादिना जसः पूर्वसवर्णः। वाचो वेदवाचः। स्वप्ने निरुक्त्या स्वप्नप्रती-तार्थदृष्टान्तेन। हेयानुमितं हेयत्वेनानुमितम्। इदमेव हि सम्यङ्निर्णीतार्थत्वं यत् हेयोपदेयविवेकेन हेयहानं उपादेयोपादानं च। तद्धि मोक्षसाधनमित्येतच्छ्रुत्यादिप्रसिद्धमेव ॥ ४२ ॥ ४३ ॥ ४४ ॥

*भा०दी०*— स्वर्गादिः पुष्पत्वोक्तिं घटयति **अत्यल्पत्वेनेति**। फलापेक्षया पुष्पस्यात्यल्प-त्वादिति भावः। वक्ष्यत इति वादो विषयकत्वं चेत्यादिना समीप एव वक्ष्यत इत्यर्थः। **सावधारणं चेति**। वेदवाद एव रता इत्येवमर्थ इत्यर्थः। **तत्प्रकारेति**। वेदानां परोक्षार्थोक्तिप्रकारसूचनार्थ-

मित्यर्थः । **मां विधत्त** इत्यस्यार्थस्तु समन्वयसूत्रटीकायां व्यक्तः । वदन्तीत्यनूद्य शेषमाह **वेदा इति** । **अन्यथेति** । ज्ञानार्थत्वमित्यर्थः । तैस्तथानुक्तेरिति भावः । **वक्ष्यतीति** । मोक्षस्य सर्वातिशयितसुखरूपत्वोक्त्या मनस्य हि परे ज्ञान इत्याद्युक्त्या शान्तस्य कुतः सुखमित्यनेन चेति भावः । सम्यक्निर्णीतार्थानां हीत्याद्यर्थे प्रमाणोक्तिरिव तद्धि मोक्षसाधनमित्युक्तेऽर्थे कुतो न प्रमाणोक्तिरित्यत आह **तद्धि मोक्षेत्यादि** । ईश्वरे मनः समाधानं तच्छब्दार्थः तस्याभिध्यानाद्योजनादित्यादिश्रुतिस्मृतिप्रसिद्धमेवातो न तत्र प्रमाणोक्तिरिति भावः ॥ ४२-४४ ॥

*भा०र०-* -- **प्रकृतेति** । योगेत्यर्थः । अवैदिकानि प्रमाणानिर्णीततत्त्वार्थकानीति भाष्यार्थः । न तु वैदिकानीत्यनूद्य तत्रानुवर्त्यमाह **अव्यवसायात्मकानीति** । **प्रकृते** एकत्र निष्ठायाः कर्तव्यत्वे । **अभिप्रैतीति** । कर्मबन्धं प्रहास्यसीति कर्मयोगस्य मोक्षसाधनत्वोक्त्या मोक्षसाधनज्ञानजनकत्वमभिप्रैतीत्यर्थः । **प्रकृतत्वात्,** अव्यवधानेनेति शेषः । वाचः प्रकृतत्वेऽपि व्यवधानाद् बुद्धिविपरितवृत्तिभङ्ग इति भावः । **अन्यथेति** । 'तयाऽपहृतचेतसाम्' इत्यत्रत्यतच्छब्देन 'आनन्तर्यमचोदना' इति न्यायेन भोगैश्वर्यगतैरेव परामर्शाङ्गीकार इत्यर्थः । **यच्छब्दः** 'यामिमाम्' इति यच्छब्दः । 'यामाहुः' इति भाष्ये प्रवदन्तीति पदमाहुरिति व्याख्यातम् । **कथमिति** । "तदस्य सञ्जातं तारकादिभ्य इतच्" इति पुष्पशब्दादितच्प्रत्यये पुष्पितशब्दो निर्व्यूढः । पुष्पं च वृक्षादेः न तु वाच इति तत्र पुष्पितत्वोक्तिः कथं युज्यत इत्यर्थः । "परत्र परशब्दः प्रयुज्यमानोऽन्तरेणापि वतिं वत्यर्थं गमयति" इति न्यायेनापुष्पे स्वर्गादौ पुष्पशब्दः पुष्पमिवेत्यर्थकः । तत्रेवशब्दबोध्योपमा केन गुणेनेति तत्राऽह **अत्यल्पत्वेनेति** । यथा फलापेक्षया पुष्पस्यात्यल्पत्वं तथा मोक्षापेक्षया स्वर्गादेरत्यल्पत्वेन गुणेन सादृशं द्रष्टव्यमित्यर्थः । तेषां वैदिकाभासताप्रदर्शनाय निन्दामाहेत्युक्तम् । तदाक्षिपति **वेदेति** । **इत्यत आहेति** । इत्यतो 'वेदवादरताः' इत्यनूद्य 'कर्मादिवाचकवेदवादरताः' इति व्याख्याति इत्यर्थः । **एतत्** 'कर्मदेवतादिप्रतिपादकवेदवादरताः' इत्येतत् । **अस्मात्** 'वेदवादरताः' इत्यस्मात् । आपाततः प्रतिपादनमुपक्रमादितात्पर्यलिङ्गाननुगृहीतप्रतिपत्तिर्वाद इति कुत इत्यत आह **वक्ष्यते चेति** । "वादो विषयकत्वं च मुखतो वचनं स्मृतम्" इत्यत्र मुखतो वचनमापाततः प्रतिपादनं वाद इति वक्ष्यत इत्यर्थः । कथं चैषा निन्देति कृतचोद्यपरिहारायाह **सावधारणं चैतदिति** । अश्रुतमप्यवधारणं क्व नामान्वयप्रतियोगिसमर्पकं दृष्टमित्यतो निदर्शनमाह **अब्भक्ष इति** । प्राणंभृन्मात्रस्याब्भक्षणे समानेऽपि तापसे अम्मात्रभक्षणेनाब्भक्ष इति यथा व्यवहारः, यथा चोरगे वायुमात्राहारेण वायुभक्ष इति प्रवादः तथात्रावधारणमभिप्रेतमित्यर्थः । उदकेतराभक्षणस्य प्रत्यक्षादिप्रमाणसिद्धत्वादब्भक्ष इत्यादाववधारणतात्पर्यकत्वेऽपि प्रकृते कस्माद्धेतोस्तत्तात्पर्यकत्वावसाय

इत्याक्षिपत्युत्तरभाष्यमवतारयितुम् **सावधारणत्वमिति** । वेदवादरता इत्यस्यानन्तरपादमुत्तरश्लोकान्त्यपादं त गृह्णत आचार्यस्य ''कामात्मानः स्वर्गपराः'' इत्येते अपि विशेषणे अवधारणतात्पर्यं गमयत इत्यभिसंहितमिति भावेनोक्तं **तानि पठतीति** । कोऽसौ आपातप्रतीतादन्योऽर्थः कः । कुतः कस्माच्च प्रमाणादधिगन्तव्य इत्यर्थः । **परोक्षविषयाः** परोक्षः अत्यन्तगूढः विषयो भगवल्लक्षणो येषां ते तथा । अत एव भाष्ये 'भगवन्तम्' इत्युक्तिः । **अत एव** श्रौतेवशब्द उक्तविधया व्याख्येय इत्यभिसन्धानादेव । वेदानां परोक्षार्थरुचित्वे प्रस्तुतप्रमेये कथमिदं वचनं प्रमाणम् ? असङ्गतेरित्यत आह **देवाः वेदाभिमानिन इति** । तथा च प्रकृतोपयोग इति भावः । ननु श्रुतेः परोक्षार्थत्वमित्यत्र ''मां विधत्ते'' इति वाक्यं न प्रमाणम् । तत्र श्रुतिः मां भगवन्तमभिधत्त इत्युक्त्या परोक्षार्था वेदा इत्यप्रतिपादनादित्यत आह **तत्प्रकारेति** । वेदानां परोक्षार्थप्रतिपादकत्वप्रकारेत्यर्थः । भगवानेव हि परोक्षोऽर्थ इति भावः । ''मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् । इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन'' इति भागवतवचनार्थः । कर्मविधात्री श्रुतिः मां प्रत्येव तद् विधत्ते । इन्द्राद्यभिधात्री मामभिधत्ते । ''चत्वारि वाक्'' इत्यादिश्रुत्या अहं विविधरूपत्वेन कल्प्यः । ''न सुरां पिबेत्'' इत्यादिश्रुत्या अहमेव अप्रियादपोह्यः । एवम्भूताया अस्याः श्रुतेरित्यभिप्रायमहमेव वेद । न मत्तोऽन्य इति समन्वयसूत्रटीकातोऽवगन्तव्यः । मूले प्रतीता अप्यविपश्चितो न कर्तृत्वेनात्रान्विता इति भावेन 'वदन्ति' इति भाष्यमनूद्य तत्र शेषमाह **वदन्ति वेदा इति** । प्रातीतिकावगत्यर्थत्वे दोषमाह **अन्यथेति** । ''कामात्मानः स्वर्गपराः'' इति भोगाकुलचित्तत्वस्य स्वर्गे परपुरुषार्थत्वाभिमानस्य च प्रतीत्या तन्मात्रस्यैव तैरुक्त्या भोगैश्वर्यावगतिसाधनत्वस्यावादेन तदुक्तौ असदनुवादत्वापातादित्यर्थः । ''भोगैश्वर्यप्रसक्तानाम्'' इति तत्प्राप्तिरेवोच्यत इत्यनुवादेनात्रावगत्यर्थत्वोक्तावसदनुवादत्वप्रसङ्गादिति वाऽर्थः । निन्दात्वस्फोरणाय भाष्यावधारणतात्पर्यमाह **मोक्षं वेदफलमिति** । आपाततोऽर्थानवबोधादाह **अप्रतीतीति** ॥ ''बुध्यतेऽनयेति बुद्धिर्वाक्'' इति प्राग् भाष्ये व्याख्यानादत्र तत्परत्वं न मन्तव्यमिति व्याख्याति **बुद्धिर्मनोवृत्तिरिति** । भाष्ये व्याख्येयं समर्पयति **व्यवसायात्मिकेति** । युक्तिशब्देन प्रमाणसामान्यमुच्यत इत्युक्तत्वात् परीक्षितप्रमाणनिर्णीतार्थविषयिणीति । भाष्ये नञाकर्षणेन वाक्यान्तरत्वं ज्ञातव्यमिति भावेनाऽह **सम्यग्युक्तीति** । **तत एवेति** । अव्यवसायात्मकत्वादेव । **अनेन** 'मनस्समाधानम्' इति भाष्येण । 'समाधौ' इति गीतास्थसमाधिशब्दः समाधानार्थक इति व्याख्यात इत्यर्थः । उक्तशङ्कानिराससमुच्चयार्थोऽपिशब्दः । **तदभावः** मनस्समाधानाभावः । तदभावे कथं निन्देत्यत आह **मोक्षाभावश्चेति** । ईश्वरे मनस्समाधानं तावन्मोक्षसाधनम् । ''मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः'' इति मनस्समाधानस्य ''शान्तिं

निर्वाणपरमाम्'' इति मोक्षसाधनत्वस्य वक्ष्यमाणत्वात् । साधनाभावे च साध्याभावो नियतः । मोक्षाभावश्च ''आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्'' इति षोडशे निन्दित इति मोक्षाभावो निन्देति वक्ष्यतीत्यर्थः । ''प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः'' इत्यादिना बहुप्रकारेण निन्दनान्महानिन्देत्युक्तम् । ''कृपणाः फलहेतवः'' इत्यत्र वक्ष्यतीत्यन्ये । सर्वातिशयितसुखरूपस्य मोक्षस्याभावाङ्गीकारे परे अज्ञाने मग्नस्य तस्य चेतनस्य दुःखतरं दुःखातिशयो न भवेत् किम् ? भवेदेवेति । ''मग्नस्य हि परेऽज्ञाने किं नु दुःखतरं भवेत्'' इति भाष्यकारो निन्दां वक्ष्यत्यस्मिन्नेवाध्याय इति तु स्वामिनः । ''उक्तं चैतत्'' इति भाष्ये एतच्छब्देन मोक्षसाधनपरामर्शो पुराणे तदनुक्तेर्व्यवहितवाक्योपात्तस्य मनस्समाधानं सम्यग् भवतीत्यस्य परामश इति भावेनाऽह **सम्यगिति** । न केवलमिति चशब्दार्थः । आसन्निति क्रियां प्रति कर्तृसमर्पकं वाच इति पदम् । अन्यस्यादर्शनात् । वरीयसीरिति तु द्वितीयाबहुवचनान्तं कथं तद्विशेषणमिति तत्राऽह **वरीयसीरिति** । अपौरुषेयतया निर्दोषतया प्रशस्ता इत्यर्थः । अलाक्षणिकमिति शङ्कां परिहरति **सुपामिति** । ''सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः'' इति सूत्रस्य सुपां स्थाने एते आदेशाः स्युरित्यर्थः । तथा च वाच इति प्रथमान्तविशेषणत्वमुपपद्यत इति भावः । **हेयत्वेनानुमानमिति** । गृहमेधिसौख्यं हेयम् । आशुतरविनाशित्वात् । स्वप्नप्रतीतार्थवदित्यनुमितमित्यर्थः । पुराणे सम्यङ्निर्णयस्य मोक्षसाधनत्वमित्यर्थो न प्रतीयत इत्यतस्तदुपदर्शनार्थमाह **इदमेव हीति** । **तद्धि** हेयहानमुपादेयोपादानं च । हिशब्दार्थविवरणं **श्रुत्यादिप्रसिद्धमिति** । ''तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ । अमृतस्यैष सेतुः'' इत्यादिप्रमाणप्रसिद्धमेवेत्यर्थः । **तद्धि** ईश्वरे मनस्समाधानं ''तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः'' इत्यादिप्रमाणे मोक्षसाधनं प्रसिद्धमेवेत्यर्थः । तथा च सम्यग् युक्तिनिर्णीतार्थानां हीश्वर इत्याद्यर्थे ''न तस्य तत्त्वग्रहणाय'' इति प्रमाणोपन्यास इव ईश्वरे मनस्समाधानं मोक्षसाधनमित्यत्र किमिति न प्रमाणोपन्यास इति चोद्यानवकाश इति भाव इति तु स्वामिनः ।

***गीताक्षरार्थस्तु***— नन्वस्त्ववैदिकमतानामप्रामाणिकत्वेन तत्राश्वासायोगः । व्यवसायात्मकं मतं वैदिकमवलम्बमाना अपि केचिद् वैदिकानि सर्वाण्येव कर्माणि स्वर्गादिफलान्याहुः । भवांस्तु कामार्थान्येव स्वर्गादिफलानि निष्कामानीश्वरार्पणबुद्ध्याऽनुष्ठितानि तु ज्ञानार्थानीत्यभिप्रैति । तथा च त्वद्वचने निष्ठानुपपत्तिस्तदवस्थेति शङ्कित्वा तेषां वैदिकाभासताप्रदर्शनाय निन्दा क्रियते **यामिमामित्यादिश्लोकत्रयेण** । **वेदवादरताः** वेदैः यन्मुखत उच्यते आपाततः प्रतिपाद्यते कर्मादि तत्रैव रताः नान्यदस्तीति वादिनः आपाततः प्रतीतार्थादन्यार्थो मोक्षब्रह्मस्वरूपादिरूपोऽर्थो नास्तीति वादन-

शीलाः । कुतः ? अविपश्चितः वेदतात्पर्यार्थानभिज्ञानिनः । **कामात्मानः** काम्यफलासक्तमनस्काः । स्वर्गः परः परमपुरुषार्थो येषां ते तथा । जन्मकर्मफलप्रदां बहुसंसारफलदामित्यर्थः । क्रियाविशेषबहुलां सन्ततकर्मविशेषप्रतिपादिकाम्, यामिमां पुष्पितां सञ्जातपुष्पाम्, मोक्षापेक्षयाऽल्पत्वेन पुष्पोपमस्वर्गादिफलप्रतिपादिकां वाचं वेदात्मिकां भोगैश्वर्यगतिं तत्प्राप्तिं प्रति प्रवदन्ति । भोगानामैश्वर्याणां च प्राप्तिमुद्दिश्यैव वेदाः प्रवर्तन्त इति वदन्तीत्यर्थः । तया वाचा अपहृतचेतसां भोगैश्वर्यप्रसक्तानां तत्रासक्तचित्तानां व्यवसायात्मिका सम्यक्प्रमाणनिर्णीतार्थनिश्चयरूपा बुद्धिः समाधौ समाध्यर्थे न विधीयते । सम्यङ्निर्णीतार्थानां हीश्वरे मनस्समाधानं मोक्षसाधनं सम्यग् भवति । नान्येषामिति ॥ ४२-४४ ॥

**गीतातात्पर्यनिर्णयः**

**अव्यवसायबुद्धिः केषाम् ? यां वाचमविपश्चितः प्रवदन्ति । तयाऽपहृतचेतसाम् । बुद्धिर्व्यवसायात्मकत्वेन समाधाने न वर्तते ।**

*प्रका०*— अव्यवसायबुद्धिः केषामित्याशङ्कापरिहारत्वेन यामिमामित्येतद्व्याचष्टे **यां वाचमित्यादिना** ।

*न्या०दी०*— यद्यव्यवसायात्मकबुद्धित्वमेव वैष्णवधर्मराहित्ये निमित्तं तर्ह्यव्यवसायबुद्धिस्त्याज्या स्यात् । त्यागश्च कारणपरित्यागेन स्यात् । केन कारणेनाव्यवसायबुद्धिर्भवतीति पृच्छति **अव्यवसायेति** ॥ तत्परिहाराय 'याम्' इति श्लोकान् योजयति **यामिति** ॥ समाधान इति निश्चयस्य तत्त्वविषयतया दार्ढ्यमुच्यते । समाधानाभावे च न विष्णुधर्मानुष्ठानमिति वाक्यशेषः ।

*भा०दी०*— **कारणपरित्यागेनेति** । अव्यवसायबुद्धेः यत् कारणं तत्परित्यागेनेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"यथावस्तु तथा ज्ञानं तत्साम्यात् सममीरितम् ।**
**विषमं त्वन्यथा ज्ञानं समाधानं समस्थितिः ।**
**न तद्भवत्यसद्वाक्यैर्विषमीकृतचेतसाम् ।**
**स्वर्गादिपुष्पवाद्येव वचनं यदचेतसाम् ॥**

*न्या०दी०*— स्मृत्यैव श्लोकान् व्याचष्टे **यथेति** ॥ तथा तथाविषयीकारि । **तत्साम्यादिति** । वस्तुसाम्यादित्यर्थः । असतां वाक्यं कुतो वैषम्यहेतुरित्यत आह **स्वर्गेति** ॥ **यत्** यस्मात् ।

*भा०दी०*— तथेत्यनन्तरं शेषमाह **विषयीकारीति** ।

**गीतातात्पर्यनिर्णयः**

**न मन्यन्ते फलं मोक्षं विष्णुसामीप्यरूपकम् ।**
**फलदं च न मन्यन्ते तं विष्णुं जगतः पतिम् ॥**

*न्या०दी०*— नान्यदस्तीत्यस्यार्थद्वयमाह **न मन्यन्त इति** ॥

**गीतातात्पर्यनिर्णयः**

**भोगैश्वर्यानुगत्यर्थं क्रियाबाहुल्यसन्तताम् ।**
**बहुसंसारफलदामन्ते तमसि पातिनीम् ।**
**यां वदन्ति दुरात्मानो वेदवाक्यविवादिनः ।**
**तया सम्मोहितधियां कथं तत्त्वज्ञता भवेत् ॥" इति च ।**

*न्या०दी०*— अनुगतिः प्राप्तिः । **क्रियाबाहुल्यसन्तताम्** एतत्प्रतिपादिकाम् । जन्मेत्यस्यार्थो बह्विति । **अन्त** इत्यभिप्रायमात्रम् ।

*भा०दी०*— अन्त इति कस्य पदस्यार्थ इत्यत आह **अन्त इतीति** ॥

**गीतातात्पर्यनिर्णयः**

**"इष्टापूर्तं मन्यमाना वरिष्ठं**
**नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।**
**नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा**
**इमं लोकं हीनतरं वा विशन्ति ॥"**

**—इति चाथर्वणी श्रुतिः ।**

*प्रका०*— एतदर्थं श्रुत्यादिना दृढीकरोति **इष्टापूर्तमित्यादिना** ।

*न्या०दी०*— नान्यदस्तीत्याद्यर्थे श्रुतिं चाह **इष्टेति** ॥ **अन्यच्छ्रेयो** भगवज्ज्ञानादि । **सुकृते** सुकृतप्राप्ये । **अनुभूत्वा** भोगानिति शेषः ।

**गीतातात्पर्यनिर्णयः**

**"वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ॥"**

**—इति हि भागवते ।**

*न्या०दी०*— वेदवादरतत्वमुक्तार्थतया निषिद्धमित्यत्र प्रमाणान्तरं चाह **वेदेति** ॥

*भा०दी०*— **उक्तार्थेति** । भगवदर्पणबुद्ध्या निष्कामकर्मानुष्ठानरूपोक्तविरुद्धतया "यामिमामि"त्यादिना निषिद्धमित्यर्थः । इमं भूतलं हीनतरं नरकं वेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"ये न जानन्ति तं विष्णुं याथातथ्येन संशयात् ।**
**जिज्ञासवश्च नितरां श्रद्धावन्तः सुसाधवः ॥**

*प्रका०*— एतदर्थं पुराणवचनेन दर्शयति **ये न जानन्तीत्यादिना** ॥

*न्या०दी०*— इष्टापूर्तं वरिष्ठं मन्यमानाः केचन स्वर्गभोगानन्तरम् इमं लोकं विशन्ति । केचन हीनतरं विशन्तीत्युक्तम् । तत्स्मृत्या विवृणोति **य इति** ॥ संशयात् संशयेन । विषयीकुर्वन्तीति शेषः । श्रद्धादिसद्भावे कथं तत्त्वज्ञानाभावः ?

**गीतातात्पर्यनिर्णयः**

**निर्णेतॄणामभावेन केवलं ज्ञानवर्जिताः ।**
**ते याज्ञिकाः स्वर्गभोगक्षये यान्ति मनुष्यताम् ॥**

*न्या०दी०*— "श्रद्धावान् लभते ज्ञानम्" इत्यादेरित्यत आह **निर्णेतॄणामिति** ॥

**गीतातात्पर्यनिर्णयः**

**यैर्निश्चितं परत्वं तु विष्णोः प्रायो न यातनाम् ।**
**ब्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं न तु ॥**

*न्या०दी०*— तत्त्वज्ञानरहितश्रद्धादिकमेवैतत्फलप्रदं चेत् तर्हि कियान् विशेषस्तत्त्वज्ञानिनां भवतीत्यत आह **यैरिति** ॥ आधिक्ये चिरं **नेति** ॥ ब्रह्महत्यादेरप्यधिकपापाचरणेऽप्यल्पकालं यातनां यान्ति । न तु चिरमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**विशेष एव तेषां तु तदन्येषां विपर्ययः ।**
**ये तु भागवताचार्यैः सम्यग्यज्ञादि कुर्वते ॥**

*न्या०दी०*— यज्ञादिमात्रेण भगवद्द्वेषिणामपि स्वर्गसिद्धेः किं जिज्ञासादिनेत्यत आह **तदन्येषामिति** ॥ विपरीतनिश्चयानामश्वमेधादिभिरपि न स्वर्ग इत्यर्थः । दुर्योधनादीनां द्वेषिणामेव स्वर्गादिदर्शनात् कथमेतदित्यत आह **ये त्विति** ॥

**गीतातात्पर्यनिर्णयः**

**बहिर्मुखा भगवतोऽनिवृत्ताश्च विकर्मणः ।**
**दक्षिणातर्पितानां तु ह्याचार्याणां तु तेजसा ।**
**यान्ति स्वर्गं ततः क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च ।**
**तदन्ये नैव च स्वर्गं यान्ति विष्णुबहिर्मुखाः ॥"**

**—इति नारदीये ॥ ४२-४४ ॥**

*न्या०दी०*— तथापि द्वेषिणां स्वर्गप्राप्तिसद्भावात् कथं तदन्येषां विपर्यय इत्युक्तमित्यत आह **तदन्य इति** ॥ भागवताचार्यवर्जिततद्द्वेष्यभिप्रायेण तदुक्तमिति भावः । अनेन "इमं लोकम्" इत्यज्ञविषयम् । प्रमूढत्वमज्ञत्वमेव । हीनतरमिति तु अवैष्णवाचार्यवत् भगवद्द्वेषिविषयम् । तेषां प्रमूढत्वं मिथ्याज्ञानित्वमित्युक्तं भवति ॥ ४२-४४ ॥

*भा०दी०*— तदुक्तमिति । तदन्येषां विषय इत्युक्तमित्यर्थः ॥

**गीता**

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

*न्या०दी०*— नान्यदस्तीत्याद्यर्थे श्रुतिं चाह **इष्टेति** ॥ **अन्यच्छ्रेयो** भगवज्ज्ञानादि । **सुकृते** सुकृतप्राप्ये । **अनुभूत्वा** भोगानिति शेषः ।

**गीतातात्पर्यनिर्णयः**

**"वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ॥"**

**—इति हि भागवते ।**

*न्या०दी०*— वेदवादरतत्वमुक्तार्थतया निषिद्धमित्यत्र प्रमाणान्तरं चाह **वेदेति** ॥

*भा०दी०*— **उक्तार्थेति** । भगवदर्पणबुद्ध्या निष्कामकर्मानुष्ठानरूपोक्तविरुद्धतया "यामिमामि"त्यादिना निषिद्धमित्यर्थः । इमं भूतलं हीनतरं नरकं वेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"ये न जानन्ति तं विष्णुं याथातथ्येन संशयात् ।**
**जिज्ञासवश्च नितरां श्रद्धावन्तः सुसाधवः ॥**

*प्रका०*— एतदर्थं पुराणवचनेन दर्शयति **ये न जानन्तीत्यादिना** ॥

*न्या०दी०*— इष्टापूर्तं वरिष्ठं मन्यमानाः केचन स्वर्गभोगानन्तरम् इमं लोकं विशन्ति । केचन हीनतरं विशन्तीत्युक्तम् । तत्स्मृत्या विवृणोति **य इति** ॥ संशयात् संशयेन । विषयीकुर्वन्तीति शेषः । श्रद्धादिसद्भावे कथं तत्त्वज्ञानाभावः ?

**गीतातात्पर्यनिर्णयः**

**निर्णेतॄणामभावेन केवलं ज्ञानवर्जिताः ।**
**ते याज्ञिकाः स्वर्गभोगक्षये यान्ति मनुष्यताम् ॥**

*न्या०दी०*— "श्रद्धावान् लभते ज्ञानम्" इत्यादेरित्यत आह **निर्णेतॄणामिति** ॥

**गीतातात्पर्यनिर्णयः**

**यैर्निश्चितं परत्वं तु विष्णोः प्रायो न यातनाम् ।**
**ब्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं न तु ॥**

*न्या०दी०*— तत्त्वज्ञानरहितश्रद्धादिकमेवैतत्फलप्रदं चेत् तर्हि कियान् विशेषस्तत्त्वज्ञानिनां भवतीत्यत आह **यैरिति** ॥ आधिक्ये चिरं **नेति** ॥ ब्रह्महत्यादेरप्यधिकपापाचरणेऽप्यल्पकालं यातनां यान्ति । न तु चिरमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**विशेष एव तेषां तु तदन्येषां विपर्ययः ।**
**ये तु भागवताचार्यैः सम्यग्यज्ञादि कुर्वते ॥**

*न्या०दी०*— यज्ञादिमात्रेण भगवद्द्वेषिणामपि स्वर्गसिद्धेः किं जिज्ञासादिनेत्यत आह **तदन्येषामिति** ॥ विपरीतनिश्चयानामश्वमेधादिभिरपि न स्वर्ग इत्यर्थः । दुर्योधनादीनां द्वेषिणामेव स्वर्गादिदर्शनात् कथमेतदित्यत आह **ये त्विति** ॥

**गीतातात्पर्यनिर्णयः**

**बहिर्मुखा भगवतोऽनिवृत्ताश्च विकर्मणः ।**
**दक्षिणातर्पितानां तु ह्याचार्याणां तु तेजसा ।**
**यान्ति स्वर्गं ततः क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च ।**
**तदन्ये नैव च स्वर्गं यान्ति विष्णुबहिर्मुखाः ॥"**

**—इति नारदीये ॥ ४२-४४ ॥**

*न्या०दी०*— तथापि द्वेषिणां स्वर्गप्राप्तिसद्भावात् कथं तदन्येषां विपर्यय इत्युक्तमित्यत आह **तदन्य इति** ॥ भागवताचार्यवर्जिततद्द्वेष्यभिप्रायेण तदुक्तमिति भावः । अनेन "इमं लोकम्" इत्यज्ञविषयम् । प्रमूढत्वमज्ञत्वमेव । हीनतरमिति तु अवैष्णवाचार्यवत् भगवद्द्वेषिविषयम् । तेषां प्रमूढत्वं मिथ्याज्ञानित्वमित्युक्तं भवति ॥ ४२-४४ ॥

*भा०दी०*— **तदुक्तमिति** । तदन्येषां विषय इत्युक्तमित्यर्थः ॥

**गीता**

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

*न्या०दी०*— नान्यदस्तीत्याद्यर्थे श्रुतिं चाह **इष्टेति** ॥ **अन्यच्छ्रेयो** भगवज्ज्ञानादि । **सुकृते** सुकृतप्राप्ये । **अनुभूत्वा** भोगानिति शेषः ।

**गीतातात्पर्यनिर्णयः**

**"वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ॥"**

**—इति हि भागवते ।**

*न्या०दी०*— वेदवादरतत्वमुक्तार्थतया निषिद्धमित्यत्र प्रमाणान्तरं चाह **वेदेति** ॥

*भा०दी०*— **उक्तार्थेति** । भगवदर्पणबुद्ध्या निष्कामकर्मानुष्ठानरूपोक्तविरुद्धतया "यामिमामि"त्यादिना निषिद्धमित्यर्थः । इमं भूतलं हीनतरं नरकं वेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"ये न जानन्ति तं विष्णुं याथातथ्येन संशयात् ।**
**जिज्ञासवश्च नितरां श्रद्धावन्तः सुसाधवः ॥**

*प्रका०*— एतदर्थं पुराणवचनेन दर्शयति **ये न जानन्तीत्यादिना** ॥

*न्या०दी०*— इष्टापूर्तं वरिष्ठं मन्यमानाः केचन स्वर्गभोगानन्तरम् इमं लोकं विशन्ति । केचन हीनतरं विशन्तीत्युक्तम् । तत्स्मृत्या विवृणोति **य इति** ॥ संशयात् संशयेन । विषयीकुर्वन्तीति शेषः । श्रद्धादिसद्भावे कथं तत्त्वज्ञानाभावः ?

**गीतातात्पर्यनिर्णयः**

**निर्णेतॄणामभावेन केवलं ज्ञानवर्जिताः ।**
**ते याज्ञिकाः स्वर्गभोगक्षये यान्ति मनुष्यताम् ॥**

*न्या०दी०*— "श्रद्धावान् लभते ज्ञानम्" इत्यादेरित्यत आह **निर्णेतॄणामिति** ॥

**गीतातात्पर्यनिर्णयः**

**यैर्निश्चितं परत्वं तु विष्णोः प्रायो न यातनाम् ।**
**ब्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं न तु ॥**

*न्या०दी०*— तत्त्वज्ञानरहितश्रद्धादिकमेवैतत्फलप्रदं चेत् तर्हि कियान् विशेषस्तत्त्वज्ञानिनां भवतीत्यत आह **यैरिति** ॥ आधिक्ये चिरं **नेति** ॥ ब्रह्महत्यादेरप्यधिकपापाचरणेऽप्यल्पकालं यातनां यान्ति । न तु चिरमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**विशेष एव तेषां तु तदन्येषां विपर्ययः ।**
**ये तु भागवताचार्यैः सम्यग्यज्ञादि कुर्वते ॥**

*न्या०दी०*— यज्ञादिमात्रेण भगवद्वेषिणामपि स्वर्गसिद्धेः किं जिज्ञासादिनेत्यत आह **तदन्येषामिति** ॥ विपरीतनिश्चयानामश्वमेधादिभिरपि न स्वर्ग इत्यर्थः । दुर्योधनादीनां द्वेषिणामेव स्वर्गादिदर्शनात् कथमेतदित्यत आह **ये त्विति** ॥

**गीतातात्पर्यनिर्णयः**

**बहिर्मुखा भगवतोऽनिवृत्ताश्च विकर्मणः ।**
**दक्षिणातर्पितानां तु ह्याचार्याणां तु तेजसा ।**
**यान्ति स्वर्गं ततः क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च ।**
**तदन्ये नैव च स्वर्गं यान्ति विष्णुबहिर्मुखाः ॥"**

**—इति नारदीये ॥ ४२-४४ ॥**

*न्या०दी०*— तथापि द्वेषिणां स्वर्गप्राप्तिसद्भावात् कथं तदन्येषां विपर्यय इत्युक्तमित्यत आह **तदन्य इति** ॥ भागवताचार्यवर्जिततद्वेष्यभिप्रायेण तदुक्तमिति भावः । अनेन "इमं लोकम्" इत्यज्ञविषयम् । प्रमूढत्वमज्ञत्वमेव । हीनतरमिति तु अवैष्णवाचार्यवत् भगवद्वेषिविषयम् । तेषां प्रमूढत्वं मिथ्याज्ञानित्वमित्युक्तं भवति ॥ ४२-४४ ॥

*भा०दी०*— तदुक्तमिति । तदन्येषां विषय इत्युक्तमित्यर्थः ॥

**गीता**

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

*वि०वि०*— प्रतिज्ञातां योगबुद्धिमाह **त्रैगुण्यविषया वेदा इत्यादिना** । वेदाः परोक्षार्थत्वादापाततस्त्रिगुणसम्बन्धिस्वर्गादिप्रतिपादका इव प्रतीयन्ते । 'वादो विषयकृत्वं च मुखतो वचनं स्मृतम्' इत्यभिधानात् । अतो निस्त्रैगुण्यो भव । प्रातीतिकार्थे भ्रान्तिं मा कार्षीरिति व्याख्येयम् । न तु वेदपक्षो निषिध्यते । सर्वे वेदा यत्पदमामनन्ति इत्यादिना वेदानां सर्वात्मना विष्णुपरत्वोक्तेः । 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्यय' इत्यादिना भागवते वेदविहिताविहितस्य धर्माधर्मत्वोक्तेश्च ।

अथवा, त्रैगुण्याख्यं विषं यापयन्त्यपगमयन्तीति त्रैगुण्यविषया वेदाः, अतस्तानाश्रित्य निस्त्रैगुण्यो भवेति । तदुक्तम्—

"आश्रित्य वेदांस्तु पुमांस्त्रैगुण्यविषहारिणः ।
निस्त्रैगुण्यो भवेन्नित्यं वासुदेवैकसंश्रयः ॥"

इति । निर्द्वन्द्वो द्वन्द्वसहिष्णुः भवेति सर्वत्रान्वयः। सत्वं विष्णुः । भावभवित्रोरभेदात् । 'सत्वं साधुगुणाद्विष्णुरात्मा सन्ततिहेतुतः' इत्युक्तेः । नित्यं सत्त्वे स्थितः सततं विष्णुस्मरणवान् । अलब्धस्य लाभो योगः, लब्धस्य रक्षणं क्षेमः । तौ देहनिर्वाहाविरोधेन नेच्छतीति निर्योगक्षेमः । आत्मवान् परमात्मा मम स्वामीति ज्ञानवान् । तेनैक्यज्ञानं निवारयति ॥ ४५ ॥

*वा०ल०*— त्रैगुण्यविषया वेदाः' इत्यत्र त्रैगुण्यं सत्वादिगुणमयस्वर्गादिकं विषयः आपाततः प्रतिपाद्यमानोऽर्थो येषां ते । त्रैगुण्याख्यविषं यापयन्ति त्याजयन्तीति वा त्रैगुण्यविषयाः । यथास्थितार्थवेदप्रतिपाद्यत्रैगुण्यस्य निषेधायोगात् निस्त्रैगुण्यो भवेत्यस्य विरोधः । निस्त्रैगुण्यः त्रिगुणात्मकस्वर्गादिफले आकाङ्क्षारहितः । निर्योगक्षेमः योगक्षेमार्थं प्रयत्नमकुर्वन् ॥ ४५ ॥

*सा०सं०*— एवं "योगे त्विमां शृणु" इति योगोक्तिं प्रतिज्ञाय, तत्रादरजननाय सार्धश्लोकेन तं प्रशस्य, स्वोक्तौ निष्ठाभावे कारणीभूतमतान्तरविधानं च श्लोकत्रयेण तन्निन्दोक्त्या निरस्य, इदानीं प्रतिज्ञातं योगं प्राधान्येनाह **त्रैगुण्येत्यादिना** आषष्ठाध्यायसमाप्ति । "बहूनि मे व्यतीतानि" इत्यादेः प्रासङ्गिकत्वेनाप्रधानत्वात् । त्रयाणां सत्त्वरजस्तमसामिदं त्रैगुण्यम् । त्रिगुणसम्बन्धि, "सम्बन्धार्थे विचित्रा हि तद्धितगतिः" इति वचनात् ष्यङ्प्रत्ययः । त्रिगुणजन्यं यत् स्वर्गादि, तद्विषयाः आपाततः स्वर्गादिफलककर्मादिप्रतिपादकाः प्रतीयन्ते वेदाः । "वादो विषयकत्वं च मुखतो वचनं तथा" इत्युक्तेः । हे **अर्जुन** ! त्वं तु **निस्त्रैगुण्यः** निष्क्रान्तः त्रैगुण्यात् त्रिगुणसम्बन्धिस्वर्गादितो निस्त्रैगुण्यः । त्रैगुण्यबुद्धितो निर्गतो भव । आपाततः प्रतीतार्थे भ्रान्तिं मा कार्षीरित्यर्थः ।

यद्वा, त्रैगुण्यं त्रिगुणसम्बन्धि स्वर्गाद्यस्थिरफलम्, संसारबन्धनं वा । तदेव विषं त्रैगुण्यविषम्, यापयन्ति अपगमयन्तीति **त्रैगुण्यविषयाः** । यातेरन्तर्णीतण्यर्थात् "आतोऽनुपसर्गे कः" (३-२-३) इति कः । नित्यपुमर्थहेतु भगवत्स्वरूपविषया इति यावत् । तानाश्रित्येति शेषः । निस्त्रैगुण्यो भव प्राग्वदेवार्थः । वेदतात्पर्यविषयीभूतार्थं बुद्ध्वा क्षुद्रफलककर्मादिरूपापातप्रतीतार्थे भ्रान्तिं मा कार्षीरिति भावः ।

किञ्च— निर्द्वन्द्वः "सुखदुःखे समे कृत्वा" इत्यत्रोक्तदिशा समदुःखसुखादिरिति वा, सुखदुःखादिप्राप्तावुत्सेकानुत्सेकहीन इति वाऽर्थः । नित्यं सत्वे साधुगुणोपेते हरौ तिष्ठतीति नित्यसत्वस्थः । नित्यं हरिस्मृतिमान् भवेति सर्वत्रान्वेतिं । कथं नित्यं हरिस्मृतिरित्यत **आत्मवान्** परमात्मवान् तथा स्मृतिमानिति । "ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च" ( ४-१-३) इति सूत्रोक्तदिशा 'मम स्वामी हरिः' इति स्मृतिमानिति यावत् । अप्राप्तप्राप्तिर्योगः, प्राप्तपरिरक्षणं क्षेमः । शास्त्रविरुद्धविषये योगक्षेमाभ्यां निष्क्रान्तो **निर्योगक्षेमः** । शास्त्रविरुद्धविषये योगक्षेमहीनो भवेत्यर्थः । उपलक्षणमेतत् । तादृशयोगक्षेमेच्छाहीनोऽपि भवेत्यर्थः । निर्द्वन्द्वत्वादिविशेषणयुक्तस्य नित्यपुमर्थहेतुर्भगवानेव वेदतात्पर्यविषयो न काम्यकर्मेति ज्ञात्वा काम्यकर्मत्यागेन सर्वत्र सन्ततः साधुगुणो हरिः मम स्वामीति नित्यस्मरणमेव ज्ञानोपायो न त्वैक्यस्मृतिरित्युक्तं भवति ॥ ४५ ॥

*अ०प्र०*— ननु च यदि स्वर्गादिकं परमं फलं न भवति तर्हि किमिति वेदैः तत्साधनतया कर्माणि विधीयन्ते । तत्राह **त्रैगुण्यविषया इति** ।

हे अर्जुन ![१], वेदाः[२], त्रैगुण्यविषयाः[३], त्वं तु निर्द्वन्द्वो भूत्वा[४], नित्यसत्त्वस्थः सन्[५], तथा निर्योगक्षेमः[६], आत्मवान् सन्[७], निस्त्रैगुण्यो भव[८] ।

हे अर्जुन ![१], वेदाः[२], त्रैगुण्यविषयाः = त्रिगुणानां सम्बन्धि त्रैगुण्यं त्रिगुणाः सत्त्वादयः तेषां सम्बन्धि इत्यनेन त्रिगुणात्मकाः सकामा ये अधिकारिणः तद्विषयाः कर्मफलसम्बन्धप्रतिपादकाः[३], त्वं तु निर्द्वन्द्वो भूत्वा = शीतोष्णसुखदुःखादिद्वन्द्वशून्यो भूत्वा[४], तानि सहस्वेत्यर्थः ।

तत्र हेतुः । नित्यसत्त्वस्थः सन् नित्यं विष्णुनिष्ठः तन्निष्ठमना इति यावत् । यद्वा नित्यं धैर्यमवलम्ब्येत्यर्थः[५], तथा निर्योगक्षेमः अप्राप्तलाभो योगः प्राप्तपरिपालनं क्षेमः तच्छून्यः देहनिर्वाहो यावता भवति ततोऽधिकं योगक्षेमार्थं यत्नं न कुर्यादित्यर्थः[६], आत्मवान् अप्रमत्तः स्वामित्वेन परमात्मा ममास्तीति ज्ञानवान् सन्[७], निस्त्रैगुण्यो भव = त्रैगुण्यात् स्वर्गादिः निर्गतः निष्कामो भव ॥ ४५ ॥

**भाष्यम्**

**तां योगबुद्धिमाह 'त्रैगुण्यविषयाः' इत्यादिनेतरदपोह्य । वेदानां परोक्षार्थत्वात् त्रिगुणसम्बन्धि स्वर्गादि प्रतीतितोऽर्थ इव भाति । परोक्षवादी वेदोऽयं इति ह्युक्तम् । अतः प्रातीतिकेऽर्थे भ्रान्तिं मा कुर्वित्यर्थः । 'वादो विषयकृत्वं च मुखतो वचनं स्मृतम्' इत्यभिधानम् । न तु वेदपक्षो निषिध्यते ।**

**'वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥'**

**'सर्वे वेदा यत्पदमामनन्ति'**

**'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।'**

**'आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।'**

**'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।'**

**इति वेदानां सर्वात्मना विष्णुपरत्वोक्तेः । तद्विहितस्य तद्विरुद्धस्य च धर्माधर्मत्वोक्तेश्च ॥ ४५ ॥**

***प०टी०***— प्रतिज्ञातार्थकथनपरतयोत्तरं 'तदा योगमवाप्स्यसि' इत्यन्तं प्रघट्टकमवतारयति **तामिति** । इतरत् इत्ययोगबुद्धिः । त्रैगुण्य इति श्लोकं व्याचष्टे **वेदानामिति** । नन्वत्र विषयीकरणपदेन कुतः प्रातीतिकार्थ उच्यते ? इत्यत आह **वादेति** । अत एव 'वेदवादरताः' इत्येतत् वेदैर्यन्मुखत उच्यते इति व्याख्यातम् । विरुद्धार्थप्रतीतिमपाकरोति **न त्विति** । वेदानां ब्रह्मधर्मपरत्वाद्वेदनिषेधे तदभावः स्यादित्यर्थः ॥ ४५ ॥

***न०टी०***— 'त्रैगुण्यविषया वेदाः' इत्यादि 'योगमवाप्स्यसि' इत्यन्तं प्रघट्टकमवतारयति **तामिति** । या सम्यग्युक्तिनिर्णयात्मिका बुद्धिरेकैवासद्वाक्यैः सम्मोहितधियां न लभ्यत इत्युक्ता, **तामाह** निर्णयात्मिकां बुद्धिमापाद्येत्यर्थः । ननु वेदेश्वरः कथं वेदार्थपरत्यागमाचष्टे ? इत्यत आह **वेदानामिति** । प्रातीतिके अविचारप्रतीते इत्यर्थः । ननु 'त्रैगुण्यविषयाः' इति त्रैगुण्यविषयीकरणं वेदानां प्रतीयते । तत्कथं त्रिगुणसम्बन्धिस्वर्गादिः प्रातीतिकार्थत्वम् ? इत्यत आह **वादो**

**विषयकत्वमिति** । एतदेवाभिधानं मनसि निधाय 'वेदवादरताः' इत्यत्र वेदैर्यन्मुखत उच्यते तत्रैव रताः इति व्याख्यातम् । 'वेदवादरताः' 'त्रैगुण्यविषयाः' इत्यनयोरुक्तव्याख्यानाङ्गीकारे वेदपक्षस्यैव निषेधः स्यात् । न चासौ वेदेश्वरेण क्रियत इत्याह **नन्विति** । नापि वेदांशो निषिध्यत इत्याह **वेद इत्यादिना** । 'वेदे रामायणे' इत्यादिना सर्ववेदानां काण्डत्रयरूपेणापि परब्रह्मपरत्वोक्तेः, तज्ज्ञानाङ्गत्वेन तद्विहितनिषिद्धयोर्धर्माधर्मत्वोक्तेश्च कथं त्रैगुण्यविषयत्वमंशतोऽपि । एवमपि वेदपक्षनिषेधे धर्मब्रह्माद्यभावेन चार्वाकतापत्तिरिति भावः ॥ ४५ ॥

***प्र०दी०*— यथैषा** चतुःश्लोकी न प्रतिज्ञातं योगमाह तथा 'त्रैगुण्य' इत्येतदपीति प्रतीति-निरासायाह— **तामिति** । प्रतिज्ञाताम् । आदिग्रहणेनाषष्ठपरिसमाप्तेरिति सूचयति । सप्तमोपक्रमे पुनः प्रतिज्ञानात् । तर्हि प्रतिज्ञानन्तरमेव कुतो नावोचदिति मन्दाशङ्कानिरासायोक्तम्— **इतरदिति** । स्वोक्तौ निष्ठाऽभावे कारणमेवमपोद्येदानीं प्रतिज्ञातमाह । अन्यथा तत्प्रतिबन्धेनास्यावसराभावादिति भावः । अथवा वक्ष्यमाणानां वाक्यानां द्वेधा वृत्तिमनेनाचष्टे ''कैश्चित् वाक्यैरितरद्योगविरुद्धमपोद्य कैश्चिद्योगमाह'' इति । यद्वा 'बहूनि मे व्यतीतानि' इत्यादि प्रासङ्गिकं विहायान्यद्योगविषयं ज्ञात-व्यम् । तथा च वक्ष्यति 'साधनं प्राधान्येनोक्तं' इति । 'वेदाः त्रैगुण्यविषयाः त्वं तु निस्त्रैगुण्यो भव' इत्यनेन वेदपरित्यागो विधीयत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे— **वेदानामिति** । 'त्रिगुणसम्बन्धि' इत्यनेन तस्येदम् (४-३-१२०) इत्यर्थे तद्धितोऽयं (ष्यञ्) । 'विचित्रा हि तद्धितगतिः' इति वचनादिति सूचयति । सम्बन्धि कार्यम् । प्रतीतितः आपातप्रतीतितः । अर्थः प्रतिपाद्यं प्रयोजनं च । वेदानां परोक्षार्थत्वं कुत इत्यत आह— **परोक्षेति** । यत एवं भ्रान्तिरतः प्राप्तिसद्भावात् प्रसक्तां भ्रान्तिं मा कार्षीः । कथमेतदनेन लभ्यत इत्यत आह— **वाद इति** । 'वेदवादरताः' इत्यत्राप्येतदेवाभि-धानम् । प्रतीत एवार्थोऽस्त्वित्यत आह— **न त्विति** । पक्षः परमसिद्धान्तः । उत्तानार्थो वेदो निषिध्यत एव योगविरुद्धत्वादित्यतः 'पक्षः' इत्युक्तम् । कुत इत्यत आह— **वेद इति** । धर्ममूलं धर्मज्ञप्तेः कारणम् । तद्विदां वेदविदां मन्वादीनाम् । स्मृतिर्ग्रन्थः । शीलं मनोगतिः । आचारो धर्मबुद्ध्याऽनुष्ठानम् । आत्मनो मनसो रुचिर्विकल्पविषये । प्रणिहितो विहितः । तद्विपर्ययः प्रति षिद्धः । विवक्षितयोगविरोधे हि वेदसिद्धान्तो निषेध्यः स्यात् । न चैवम् । प्रत्युत तदनुगुण एवेति भावः । धर्मशब्दोऽत्र निवृत्तिधर्मपरः ॥ ४५ ॥

***भा०दी०*— चतुःश्लोकीति** । भाष्यकृद्व्याख्यातव्यवसायात्मिकेत्यादि चतुःश्लोकीत्यर्थः । अन्यथा नेहेत्यारभ्य पञ्चश्लोकीति वाच्यं स्यात् । **इति मन्दाशङ्केति** । योगे हि मां ऋग्विति-प्रतिज्ञातनिवृत्तकर्माख्यज्ञानोपायनिष्ठाजननाय नेहेति श्लोकेन तत्प्रशंसाकरणस्य व्यवसायेत्यादि-

श्लोकचतुष्टयेन मतान्तरनिन्दाकरणस्य व्यवसायेत्यादिश्लोकचतुष्टयेन मतान्तरनिन्दाकरणस्य निष्ठा-हेतोः पूर्वभावितावश्यंभावस्य स्फुटत्वान्मन्दाशङ्केत्युक्तम् । तदेवाह **स्वोक्ताविति** । योगे त्विमां शृण्विति स्वोक्तावित्यर्थः । एवं व्यवसायेत्यादिश्लोकोक्तप्रकारेणेत्यर्थः । **योगविरुद्धमिति** । निवृत्त-कर्माख्यज्ञानोपायविरुद्धमित्यर्थः । **वक्ष्यतीति** । सप्तमाद्य इति योज्यम् । प्राधान्येनेत्युक्त्या अन्य-स्याप्यप्राधान्यस्योक्तेः सूचनादिति भावः तद्धितोऽयमिति ष्यन्प्रत्ययरूप इत्यर्थः । ननु तस्येद-मित्यर्थेऽण्प्रत्ययेन भाव्यमित्यत आह **विचित्रा हीति** । सम्बन्धीत्यनूद्यार्थमाह **सम्बन्धि कार्य-मिति** । अर्थ इत्यनूद्य तस्यार्थद्वयमाह **प्रतिपाद्यं प्रयोजनं चेति** । प्रतीत एवार्थोऽस्त्विति प्रागवतारिकोक्तरीत्या प्रतीत एवेत्यर्थः । **पक्ष इत्युक्तमिति** । परमसिद्धान्त इत्युक्तमित्यर्थः । **विकल्पविषय इति** । 'आसूर्यदर्शनात्तिष्ठेत् ततस्तूपविशेत वे'त्यादावुपवेशनोत्थानादिवैकल्पिकाचार-विषय इत्यर्थः । एतावता वेदपक्षः कुतो निषिध्यत इत्यस्य किमुत्तरमित्यत आह **विवक्षितेति** । भगवदाराधनार्थकर्मरूपत्वज्ञानोपायविरोधे हीत्यर्थः ॥ ४५ ॥

*भा०र०*— **एषा** भाष्यकृद्व्याख्याता । **चतुःश्लोकीति** । यद्यपि "योगे त्विमां शृणु" इत्यनन्तरं "नेहाभिक्रमनाशोऽस्ति" इत्यादयः पञ्च श्लोका लक्ष्यन्ते । तथाऽपि "बुद्ध्या युक्तः" इत्यर्ध इव "नेहाभिक्रम" इति श्लोकोऽपि योगप्रशंसार्थत्वात् पूर्वशेष इति भावेन "व्यवसाया-त्मिका" इत्येकः श्लोकः "यामिमाम्" इत्यादिश्लोकत्रयं चेति चतुःश्लोकीत्युक्तम् । व्यवसायेत्यादि-श्लोकचतुष्टयेन मतान्तरनिन्दाकरणस्य निष्ठाहेतोः पूर्वभावित्वावश्यम्भावान्मन्दाशङ्केत्युक्तम् । इतर-दित्यस्यार्थः **स्वोक्तौ निष्ठाभावे कारणमिति** । **एवं** चतुःश्लोकीगमनिकाभाष्यक्रमेण । **तत्प्रतिबन्धेन अस्य** योगनिरूपणस्य । **द्वेधा वृत्तिं** द्वेधा व्याख्यानम् । **अनेन** इतरदपोद्येति भाषणेन । तदेवाऽह **कैश्चिदिति** । **अन्यद्** वाक्यजातम् । **वक्ष्यति** सप्तमोपक्रमे । प्राधान्येनेति भाषणस्य प्रासङ्गिकार्थ-वर्णनमस्तीत्यभिसंहितमिति भावः । **तद्धितोऽयमिति** । ष्यञ्प्रत्ययः तद्धितसञ्ज्ञ इत्यर्थः ।

ननु "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति भावे कर्मणि च ष्यञ्प्रत्ययो विहितः । न चात्र भावः कर्म वाऽभिप्रेतम् । प्रत्युत "तस्येदम्" इति सूत्रेणोक्तार्थे अणेव विहितः । तत् कथमत्र ष्यञ्प्राप्तिरित्यत उक्तम् **विचित्रेति** । तद्धितप्रत्ययवृत्तिरभिमतेऽर्थे भवतीति वैयाकरणवचनस्यार्थः । अत एव तद्धितेत्यन्वर्थसञ्ज्ञेति भावः । 'सम्बन्धि' इति भाष्ये कार्यकारणभावः सम्बन्धोऽभिप्रेत इति भावेनोक्तं **कार्यमिति** । गुणत्रयजन्यं स्वर्गपशुपुत्रादीत्यर्थः । स्वर्गादिफलसाधनीभूतो धर्म आदिपदार्थः । अवमर्शप्रतीतावपि स्वर्गादेः प्राप्तौ "तेषां दुःखप्रहाणाय श्रुतिरेषा" इति मोक्षार्थत्व-वचनविरोध इत्यतो भाष्यं व्याचष्टे **आपातप्रतीतित इति** । आदिशब्देन विषयस्याप्यभिप्रेतत्वात्

तदानुकूल्यायाऽह **प्रतिपाद्यं प्रयोजनं चेति** । इवेति भगवतो मुख्यप्रतिपाद्यत्वं मोक्षस्य महाप्रयोजनत्वं च भाष्यकृदभिप्रैति । भाष्ये इति ह्युक्तं "परोक्षविषया वेदाः" इत्यादौ । **भ्रान्तिः** भगवति मुख्यप्रतिपाद्यत्वस्य, मोक्षे महापुरुषार्थत्वस्य च साधनाद् धर्मस्वर्गादौ प्रतिपाद्यत्वादिप्रतीतिर्मिथ्याध्यवसायरूपेत्यर्थः । 'अतः' इति भाष्यस्य प्रतियोगि समर्प्य तदर्थमाह **यत इति** । "मा कुरु" इति भाष्ये निषेधार्थकमाशब्दोऽयम् । न माङ् । तेन लोडुपपत्तिरिति भावेन तदर्थमाह **मा कार्षीरिति लुङा** । **कथमेतदनेनेति** । त्रैगुण्यं त्रिगुणकार्यं स्वर्गादि विषयो येषामिति बहुव्रीहिणा तद्विषयकत्वमात्रलाभेऽपि आपाततः प्रतिपादनं कथं लभ्यत इत्यर्थः । विषयकत्वमापाततः प्रतिपादनम् । स्वार्थे कन्प्रत्ययः । केचित्तु, विषयकृत्त्वमिति पाठमभ्युपगम्य विषयकृत्त्वं विषयीकरणमित्यर्थ इत्याहुः । "वक्ष्यते चात्राभिधानम्" इत्युक्तम् । तदिदानीमाह **वेदवादरता इत्यत्राप्येतदेवेति** । **अभिधानम्** अनुसन्धातव्यमिति योज्यम् । **प्रतीत एव** वेदपरित्यागविधिरूप एव । पक्षपदप्रयोगस्वारस्यमाह **उत्तानेति** । अविचारप्रतीतार्थ इत्यर्थः । वेदार्थः कथं निषेधार्ह इत्यत उक्तं **योगेति** । योगाविरोधिन एव मुख्यतो वेदपरिग्राह्यत्वादिति भावः । वेदादेः कः परमसिद्धान्त इत्यत उक्तं भाष्ये **वेद इति** । **पुराणे** पुराणेषु । वेदादौ सर्वत्र विष्णुरेव गीयत इत्यस्य विवरणम् **आदावन्ते च मध्ये चेति** । आमनन्ति परममुख्यया वृत्त्या प्रतिपादयन्ति । "तपांसि च यत् प्रतिवदन्ति । तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये" इति वाक्यशेषेणान्वयः । धर्मं प्रति कारणत्वाभावादाह **धर्मज्ञप्तेरिति** । धर्मशब्देन तज्ज्ञप्तिर्लक्ष्येति भावः । अतीतज्ञानं स्मृतिरिति प्रतीतिवारणायार्थमाह **स्मृतिर्ग्रन्थ इति** । "शुचौ तु चरिते शीलम्" इत्यमरोक्तेराचार इत्यनेनापौनरुक्त्यायाह **शीलं मनोगतिरिति** ॥ शील समाधान इत्यतो भावे घञ् । समाधानं च मनोवृत्तिविशेष एवेत्युक्तार्थलाभ इति हृदयम् । तथा च आहुः "धर्मस्वरूपचित्रत्वाद् यो यो देवमनोगतः । स एव धर्मो विज्ञेयो न ह्येते लोकसम्मिताः" इति । देहरक्षणाद्यर्थं महद्भिरनुष्ठितस्याभक्ष्यभक्षणस्य धर्मत्वाभावाद् धर्मबुद्ध्येत्युक्तम् । निषिद्धविषये रुचिव्यावृत्त्यर्थमुक्तं **विकल्पेति** । "आसूर्यदर्शनात् तिष्ठेत् ततस्तूपविशेत वा" इत्युक्तोत्थानोपवेशादिवैकल्पिकाचारविषय इत्यर्थः । धर्मज्ञप्तिकारणमिति सर्वत्रान्वयः । वेदेन प्रकर्षेण निहित इत्यन्यथाप्रतीतिनिरासायाह **विहित इति** ॥ अत एव 'तद्विहितस्य' इति भाष्यमिति भावः । एतावता वेदपक्षः कुतो न निषिध्यत इत्यस्य किमुत्तरमित्यत आह **विवक्षितेति** । भगवदाराधनार्थं कर्मानुष्ठानरूपज्ञानोपायविरोधे हीत्यर्थः । **तदनुगुण एव** वेदसिद्धान्त इति वर्तते । ननु वेदविहितस्य वेदपरमसिद्धान्तत्वे प्रवृत्तधर्मस्यापि तद्विहितत्वात् तथात्वं स्यादित्यत आह **धर्मशब्दोऽत्रेति** । फलाभिसन्धिरहितो भगवत्तोषायानुष्ठीयमानो धर्मो निवृत्तधर्मः । प्रवृत्तधर्मस्तु न योगानुकूलः । प्रत्युत बन्धक इति न तस्य वेदपक्षत्वमिति भावः ।

***गीताक्षरार्थस्तु***— "योगे त्विमां शृणु" इति योगोपदेशं प्रतिज्ञाय तत्राऽदरजननाय "बुद्ध्या युक्तः" इत्यादिसार्धश्लोकेन योगं प्रशस्य "व्यवसायात्मिका बुद्धिः" इति स्वोक्तौ निष्ठापादनाय 'बहुशाखाः' इत्यवैदिकमतानामग्राह्यत्वमुक्त्वा वैदिकमतेष्वप्यापातप्रतीतार्थानां मतानां 'यामिमाम्' इत्यादिश्लोकत्रयेण विनिन्दनं विधाय चेदानीं प्रतिज्ञातो योगशब्दित उपाय उपदिश्यते 'त्रैगुण्यविषयाः' इत्यादिना आषष्ठाध्यायसमाप्तेः। त्रैगुण्यविषयाः त्रैगुण्यं त्रयाणां गुणानां सत्त्वरजस्तमसामिदमिति सम्बन्धार्थे तद्धितः ष्यञ्प्रत्ययः। त्रिगुणसम्बन्धि त्रिगुणकार्यम्। विषयः आपाततः प्रतीतोऽर्थो येषां ते तथोक्ताः। आपातप्रतीतस्वर्गादिफलकर्मादिप्रतिपादका वेदा इत्यर्थः। यत एवं ततो हे अर्जुन त्वं तु निस्त्रैगुण्यः निष्क्रान्तः त्रैगुण्याद् अल्पफलस्वर्गादिबुद्धितो निर्गतो भव। आपातप्रतीतार्थे भ्रान्तिं मा कार्षीरित्यर्थः। किञ्च निर्द्वन्द्वः सुखदुःखयोरुत्सेकानुत्सेकहीनः द्वन्द्वसहिष्णुरिति वा नित्यं साधुगुणोपेतत्वात् सत्त्वे विष्णौ तिष्ठतीति नित्यसत्त्वस्थः सन्ततविष्णुस्मरणवान्। अप्राप्तप्राप्तिर्योगः। प्राप्तपरिरक्षणं क्षेमः। ततो निर्गतो निर्योगक्षेमः। विरुद्धयोगक्षेमेच्छावर्जितः आत्मवान् परमात्मा मम स्वामीति ज्ञानवान्। सत्त्वस्थपदेनैवास्यार्थतः प्राप्तत्वात् किं पुनरुक्त्येति चेन्न। सन्ततविष्णुस्मरणविधावैक्येनापि तत्स्मरणं प्राप्यते। अत आत्मवत्त्वकथनेन तन्निवार्य यथावत्स्मरणप्रकार उच्यत इति तात्पर्यात्। भवेति सर्वत्रान्वय इति ॥ ४५ ॥

**गीतातात्पर्यनिर्णयः**

**त्रैगुण्याख्यं विषं यापयन्ति अपगमयन्तीति त्रैगुण्यविषयाः ।**

***न्या०दी०***— प्रतिज्ञातो ज्ञानोपाय उच्यते 'त्रैगुण्येति' ॥ तत्र वेदानां त्रैगुण्यविषयत्वात् तान् परित्यज्य निस्त्रैगुण्यो भवेत्यन्यथाप्रतीतिनिरासायाह **त्रैगुण्येति** ॥ यापयन्तीत्यस्य प्रापयन्तीत्यन्यथाप्रतीतिनिरासायाह **अपगमयन्तीति** ॥

**गीतातात्पर्यनिर्णयः**

**"आश्रित्यं वेदांस्तु पुमांस्त्रैगुण्यविषहारिणः ।**
**निस्त्रैगुण्यो भवेन्नित्यं वासुदेवैकसंश्रयः ॥" इति च ।**

***न्या०दी०***— प्रतीत एवार्थः किं न स्यादित्यतः स्वोक्तार्थे स्मृतिसम्मतिमाह **आश्रित्येति** ॥

**गीतातात्पर्यनिर्णयः**

"सत्त्वं साधुगणाद्विष्णुरात्मा सन्ततिहेतुतः ॥" इति च ।

*न्या०दी०*— सत्त्वस्थत्वं सात्त्विकत्वं, आत्मवत्त्वं मनस्वित्वमित्यन्यथाप्रतीति-निरासाय सत्त्वात्मशब्दार्थं स्मृत्यैवाऽऽह **सत्त्वमिति** ॥ **सन्ततिः** सम्यग्व्याप्तिः ।

**गीतातात्पर्यनिर्णयः**

**सन्ततविष्णुस्मरणं नित्यसत्त्वस्थत्वम् । परमात्मा मम स्वामीति ज्ञान-मात्मवत्त्वम् । तेनैक्यज्ञानं निवारयति । विरुद्धयोगक्षेमेच्छावर्जितः अन्यथो-त्थानादेरप्ययोगात् ॥ ४५ ॥**

*न्या०दी०*— सत्त्वं विष्णुश्चेत् तत्स्थत्वं स्वाभाविकं किं विधीयत इत्यत आह **सन्ततेति** ॥ न तदाधारतयाऽवस्थानमात्रमत्र विवक्षितमिति भावः । आत्मा विष्णुश्चेत् तद्वत्त्वं स्वाभाविकं न विधेयमित्यत आह **परमात्मेति** ॥ न तु तत्सम्बन्धमात्रमिति भावः । सत्त्वस्थपदेनैवास्यार्थतः प्राप्तत्वात्किं पुनरुच्यत इत्यत आह **तेनेति** ॥ सततं विष्णुस्मरणमात्रविधावैक्येनापि तत्स्मरणं प्राप्यते । अत आत्मवत्त्वकथनेन तन्निवार्य यथावत्स्मरणप्रकार उच्यत इति भावः । अप्राप्त-प्राप्तिर्योगः । प्राप्तपरिरक्षणं क्षेमः । तदुभयं सर्वथा त्याज्यमित्यन्यथाप्रतीतिनिरासाय आह **विरुद्धेति** ॥ न केवलं शास्त्रविरुद्धविषययोगक्षेमपरित्यागमात्रमत्र विवक्षितम् । अपि तु तदिच्छा-त्यागोऽपीति भावेनेच्छेत्युक्तम् । प्रतीत एवार्थः किं न स्यादित्यत आह **अन्यथेति** ॥ उत्थानादीनामप्यप्राप्तप्राप्तिरूपत्वेन योगत्वात् । ततश्च "योगमातिष्ठोत्तिष्ठ" इत्यादिविरोध इति भावः ॥

*भा०दी०*— **स्वाभाविकं विधीयत** इति । तच्च अयुक्तमित्यत आहेति योज्यम् । किं विधीयत इति पाठे तु यथाश्रुतमेव ॥ **अस्येति** । तद्वशत्वस्येत्यर्थः । **योगमातिष्ठोत्तिष्ठेत्यादि-विरोध इति** । चतुर्थाध्यायोक्तगीतावाक्यविरोध इत्यर्थः ॥

**गीता**

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

***वि०वि०***— ननु यथा सकामानां समाध्यभावेन ज्ञानाभावान्मोक्षो न भवति । तथा निष्कामानां ज्ञानिनां स्वर्गफलं न भवतीति साम्यमेवेत्यत आह **यावानिति** । यथातथाशब्दावध्याहार्यौ । यावांस्तावानित्येतयोरावृत्तिः । यथा यावानर्थः प्रयोजनमुदपाने कूपे भवति तावान्सर्वतः सम्प्लुतोदके भवत्येव तथा सर्वेषु वेदेषु काम्यकर्मिणां यत्फलं तद्विजानतो ज्ञानिनो ब्राह्मणस्य फलेऽन्तर्भवति । ब्रह्म अणतीति ब्राह्मणः अपरोक्षज्ञानी । स हि ब्रह्म गच्छति । अपरोक्षज्ञानसाधनं दर्शयति **विजानत इति** ।

अथवा, त्रैगुण्यनिवृत्यर्थं वेदाश्रयणं कार्यमित्यत्र हेतुमाह **यावानिति** । सर्वतः सम्प्लुतं व्याप्तमुदकं यस्मिन् प्रलये स सर्वतः सम्प्लुप्तोदकः—

"प्रकृतिर्ह्युदरूपेण सर्वमावृत्य तिष्ठति ।
प्रलयेऽतो लयं प्राहुः सर्वतः सम्प्लुतोदकम् ॥"

इति वचनात् । तस्मिन् प्रलयेऽप्युद्रिक्तत्वात्, पालकवर्जितत्वात् । कालाद्यखिलचेष्टकत्वात् उदपानो विष्णुः—

"उद्रेकात्पातृराहित्यादनत्वाच्चाखिलस्य च ।
प्रलयेऽप्युदपानोऽसौ भगवान्हरिरीश्वरः ॥"

इति वचनात् । तस्मिन् प्रलये यावत् फलं तावत् सर्ववेदेषु विशेषज्ञानी यः तस्यैव भवतीत्यर्थः । उक्तं च—

"यावत्प्रयोजनं विष्णोः सकाशात् साधकस्य तु ।
धर्ममोक्षादिकं तावत्सर्ववेदविदो भवेत् ॥
वेदार्थनिर्णयो यस्माद्विष्णोर्ज्ञानं प्रकीर्तितम् ।
ज्ञानात् प्रसन्नश्च हरिर्यतोऽखिलफलप्रदः ॥" इति ॥ ४६ ॥

***वा०ल०***— 'यावानर्थः' इत्यत्र सर्वतः सम्प्लुतोदके समुद्रे उदपाने स्वस्य तृषापरिहारायोदकपाने यावानर्थः, विजानतो ब्राह्मणस्य सर्वेषु वेदेषु तावान् अर्थः प्रयोजनम् । स्वस्य यावती योग्यता तावदेवोपास्यं, न त्वधिकमिति भावः ॥ ४६ ॥

***सा०सं०***— ननु 'यामिमाम्' इति त्रयेण काम्यकर्मिणां समाध्यभावेन ज्ञानाभावान्न मोक्ष इति निन्दां कृत्वा 'निस्त्रैगुण्यो भव' ति काम्यकर्मत्यागेन योगानुष्ठाननियम उक्तः । स त्वयुक्तः । ज्ञानफलं कर्मिणामिव कर्मफलं स्वर्गादिकं ज्ञानिनां नास्तीति ज्ञानकर्ममार्गयोः साम्यादित्यत आह **यावानिति** । सामर्थ्याद्यथैवं पदयोरध्याहारः । यावान् तावानित्यनयोरावृत्तिः ।

अयमर्थः— यथा **यावानर्थः** प्रयोजनम् **उदपाने** उदकं पीयते अस्मिन्निति व्युत्पत्त्या कूपे भवति, **तावान्** स्नानपानादिरूपोऽर्थः **सर्वतः सम्प्लुतोदके** महासमुद्रे अन्तर्भवति । एवं **सर्वेषु वेदेषु** सर्ववेदोक्तकाम्यकर्मिणां यावानर्थः स्वर्गादिरूपं फलं **तावानित्यर्थः** । तावत्फलं **विजानतः** परोक्षतो भगवन्तं जानतः **ब्राह्मणस्य** ब्रह्मापरोक्षज्ञानिनः भवत्येवेत्यर्थः । ज्ञानिकर्मिणोरन्योन्यफलाभावेऽपि ज्ञानिफलं महासमुद्रोदकमिव महत् । कर्मिफलं तु कूपोदकमिव अत्यल्पम् अतः कुतः तयोः साम्यम् । तथा च अल्पास्थिरफलककर्मनिन्दया महानन्तफलज्ञानसाधने योगे प्रेरणं पूर्वश्लोकोक्तं युक्तमिति भावः । अत्र 'विजानतः' इति परोक्षज्ञानस्य ब्राह्मणपदोक्तापरोक्षज्ञानस्य च हेतुहेतुमद्भावेन द्वयोरुक्तिः । पूर्वत्र स्वामित्वेन हरिस्मरणस्य योगशब्दितज्ञानोपायत्वप्रकटनाय स्वरूपकथनमिति **टीकोक्तिरत्वभ्युपगमवादेनेति** ज्ञेयम् ।

यद्वा, पूर्वत्र 'निस्त्रैगुण्यो भव' इति स्वर्गादिक्षयिष्णुफलककाम्यकर्मरूपे आपाततः प्रतीते वेदार्थे भ्रान्तिं मा कार्षीरित्युक्तकाम्यकर्मनिवृत्तौ त्रैगुण्यविषहारिवेदाश्रयणं कार्यमित्युक्तेऽर्थे वेदतात्पर्यार्थं निवृत्तकर्माराध्यं विष्णुं सम्यग्जानतोऽतिशयितफलावाप्तिरूपयुक्तिमाह **यावानिति** । **सर्वतः सम्प्लुतोदके** प्रकृत्यात्मके महाप्रलयोदके । अधिकरणसप्तमी । तत्र स्थित इत्यर्थः । **उदपाने** परमात्मनि । उत् उद्रेकात्, अपः पालकराहित्यात्, अनः चेष्टकत्वाद्धेतोः, उच्चासावपश्च अनश्च इत्युदपानः, तस्मिन् प्रलयेऽप्युद्रिक्तगुणतया पालकवर्जिते कालादिचेष्टकतया स्थिते हरौ प्रसन्ने सति **यावानर्थः** धर्ममोक्षादिर्भवति **तावान् सर्वेषु वेदेषु विजानतो** विशेषज्ञस्य, कर्माणि भगवज्ज्ञानार्थानि, भगवानेव वेदमुख्यार्थः, स्वर्गादिफलश्रवणं रुच्यर्थमित्यादि जानतो ब्राह्मणस्य तावानर्थो भवति । अतः प्रतीतार्थे त्रैगुण्ये भ्रान्तिं मा कार्षीरिति ॥ ४६ ॥

***अ०प्र०***— ननु वेदोक्तनानाफलपरित्यागेन निष्कामतयेश्वराराधनविषया व्यवसाया-त्मिका बुद्धिः कुबुद्धिरेवेत्याशङ्क्याह **यावानर्थ इति** ।

उदपाने[१], यावानर्थो भवति[२], सर्वतः सम्प्लुतोदके[३], तावानर्थो यथा भवत्येव[४], तथा सर्वेषु वेदेषु यावानर्थो भवति[५], विजानतः[६], ब्राह्मणस्य तावानर्थो भवत्येव[७] इत्यन्वयः ।

उदपाने यावानर्थो भवति = उदकं पीयतेऽस्मिन्निति उदपानं वापी-कूपादि तस्मिन् स्वल्पोदके[१], एकत्र कृत्स्नस्यार्थस्यासम्भवात् तत्र तत्र भ्रमणेन यावानर्थो भवति स्नानपानादिप्रयोजनं भवति[२], सर्वतः सम्प्लुतोदके = सर्व-स्मिन् पूर्णे बहूदके महाह्रदादौ तावानर्थो यथा भवत्येव एकत्रैव यथास्नान-पानादि सर्वोऽप्यर्थो भवति एव[४], तथा सर्वेषु वेदेषु यावानर्थो भवति = तथा सर्वेषु वेदेषु

तत्तत्कर्मफलरूपार्थः भवति[५], यद्वा तदुक्तकाम्यकर्मिणां यावत्फलं भवति तावत्फलं ज्ञानिनः भवति विजानतः व्यवसायात्मकबुद्धियुक्तस्य अपरोक्षज्ञानिनः[६], ततश्च तज्ज्ञानात् ब्राह्मणस्य ब्रह्मनिष्ठस्य ब्रह्म अणतीति ब्राह्मणः एतादृशब्राह्मणस्य तावानर्थो भवत्येव[७], न हि राज्यलाभे क्षेत्राद्य-प्राप्तिदुःखमस्तीति भावः । ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात् ॥ ४६ ॥

**भाष्यम्**

**तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्यत आह— यावानर्थ इति । यथा यावानर्थः प्रयोजनमुदपाने कूपे भवति, तावान् सर्वतः सम्प्लुतोदकेऽन्तर्भवत्येव, एवं सर्वेषु वेदेषु यत् फलं तत् विजानतोऽपि ज्ञानिनो ब्राह्मणस्य फलेऽन्तर्भवति । ब्रह्म अणतीति ब्राह्मणः अपरोक्षज्ञानी । स हि ब्रह्म गच्छति । 'विजानतः' इति ज्ञानफलत्वं तस्य दर्शयति ॥ ४६ ॥**

***प०टी०***— ननु कामात्मनां समाध्यभावेन मोक्षाभावेऽपि न कर्मपरित्यागेन ज्ञानसेवनं वरम् । ज्ञानिनामपि कर्मफलाभावेन मार्गद्वयस्य साम्यादित्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **तथापीति** । **सर्वेषु वेदेषु** इति तदुक्तकाम्यकर्मसु । क्षत्रियादिव्यावृत्त्यर्थं न 'ब्राह्मण'-पदमित्याह **ब्रह्मेति** । तर्हि 'विजानतः' इति पुनरुक्तिरित्यत आह **विजानत इति** । **अस्य** अपरोक्षज्ञानस्य परोक्षज्ञानफलत्वम् ॥ ४६ ॥

***न०टी०***— ननु यद्यपि त्रिगुणसम्बन्धिस्वर्गादौ भ्रमतां काम्यकर्मिणां ज्ञानाभावेन तत्फलस्य मुक्तेरभावात्, न कामना कार्येत्युच्यते । तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्य-मेवेत्याशङ्कापरिहारत्वेनोत्तरश्लोकमवतारयति **तथाऽपीति** । **सर्वेषु वेदेष्विति** ॥ सर्ववेदोक्तकाम्य-कर्मस्वित्यर्थः । ज्ञानिक्षत्रियव्यावृत्तिर्मा भूदित्याह **ब्रह्माणतीति** । तर्हि ब्राह्मणपदेनालं किमुत्तरपदेन ? इत्यत आह **विजानत इतीति** । परोक्षज्ञानफलत्वमपरोक्षज्ञानस्येत्यर्थः ॥ ४६ ॥

***प्र०दी०***— योगोपदेशप्रसङ्गे ज्ञानफलकथनस्य क उपयोग इत्यत आह— **तथापीति** । 'यामिमां' इत्यत्र काम्यकर्मिणां निन्दा कृता । 'निस्त्रैगुण्यो भव' इति च तत्त्यागो विहितः । तत्र प्रष्टव्यं किन्निमित्तमेतदिति । ननूक्तं काम्यकर्मिणां समाध्यभावेन ज्ञानाभावात् मोक्षो न भवतीति । अत्रेदमुच्यते । यद्यपि ज्ञानफलं काम्यकर्मिणां न भवति । तथाऽपि तन्निन्दादि नोपपद्यते । यतः काम्यकर्मिणां फलं स्वर्गादिकं ज्ञानिनां न भवतीति ज्ञानकर्ममार्गयोः साम्यमेवेति योगानुष्ठान-

नियमाक्षेपे सत्याहेत्यर्थः । केचिदस्य श्लोकस्य कर्ममात्रत्यागे तात्पर्यमाहुः । अपरे तु यत्कर्मसमुच्चितं ज्ञानं मोक्षसाधनं तत्कर्मपर एव वेदभागोऽधिगन्तव्यः । न तु समस्तवेदाभ्यासेनायुः समापनीय-मित्यत्र । तन्निरासाय व्याचष्टे— **यथेति** । सामर्थ्यात् यथैवंशब्दयोरध्याहारः । 'यावान्', 'तावान्' इत्येतयोरावृत्तिश्च । **सर्वेषु वेदेष्वेति** । तदुक्तकाम्यकर्मिणामित्यर्थः । 'ब्राह्मणस्य' इति न क्षत्रि-यादिव्यावृत्तिः शङ्क्येति भावेनाह— **ब्रह्मेति** । वर्णविपर्ययो निरुक्तत्वात् । एवं तर्हि ब्राह्मणशब्दो मुक्तवाची स्यात् । न च मुक्तस्य फलमस्तीत्यत आह— **अपरोक्षेति** । तदुपपादयति— **स हि इति** । तर्हि 'विजानतः' इति पुनरुक्तिरिति चेन्न । तस्य परोक्षज्ञानिवाचित्वात् । उभयग्रहणमनुप-पन्नमित्यत आह— **विजानत इति** । तस्यापरोक्षज्ञानस्य परोक्षज्ञानफलत्वम् । एतच्च स्वरूप-कथनम् । यद्यपि ज्ञानिनः कर्मिणश्चान्योन्यफलाभावः । तथाऽपि ज्ञानिनः फलं महासमुद्रोदकमिव महत् । कर्मिफलं तु कूपोदकमिवात्यन्ताल्पम् । अतः कुतस्तयोः साम्यम् । तथा चाल्पास्थिरफल-कर्मनिन्दया महानन्तफलज्ञानसाधने योगे प्रेरणं युक्तमेवेति भावः । अपव्याख्यानं तूक्तवक्ष्यमाण-न्यायनिरस्तम् ॥ ४६ ॥

*भा०दी०*— **किं निमित्तमेतदिति** । निन्दाकरणं त्यागविधानं चेत्येतदुभयमित्यर्थः । **इत्यत्र इति** । तात्पर्यमित्याहुरित्यनुषङ्गः । **सामर्थ्यादिति** । अन्वययोग्यताबलादित्यर्थः । अन्यथा अन-न्वयापत्तेरित्यर्थः । वर्णविपर्ययोर्दीर्घव्यत्यासः । **उभयग्रहणमनुपपन्नमिति** । परोक्षापरोक्षयोर्द्वयोरपि समकक्ष्यतया साक्षान्महाफलहेतुत्वायोगादिति भावः । ज्ञानकर्ममार्गयोः साम्यमेवेति कृतचोद्यस्य यावानित्यनेनोक्तपरिहारं व्यनक्ति **यद्यपि ज्ञानिन इत्यादिना** । **अपव्याख्यानं त्विति** । केचिदि-त्यादिनोक्तमिति भावः । तत्राद्यं 'अथ चेत्वं धर्म्यमिमं' इत्यादिना 'ततो युद्धाय युज्यस्वे'त्यन्ते-नोक्तयुद्धकर्मप्रेरणरूपन्यायेन कर्मण्येवाधिकारस्त इत्यादि वक्ष्यमाणन्यायेन द्वितीयं त्रैगुण्यविषय इत्येतद्भाष्ये सर्वस्य ब्रह्मपरत्वोक्तन्यायेन तथा सति धर्मः । सुपर्याप्त इति समुच्चयनिरासकभाष्योक्त-न्यायेन 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानी'त्यष्टादशेऽध्याये वक्ष्यमाण-न्यायेन निरस्तमित्यर्थः ॥ ४६ ॥

*भा०र०*— विजानत इति श्रवणादाह **ज्ञानेति** । **एतत्** काम्यकर्मनिन्दनम्, काम्यत्यागविधानं च । **उक्तम्** ''समाधौ न विधीयते'' इत्येतद्भाष्ये । तन्निष्कृष्य दर्शयति **काम्यकर्मिणामिति** । तथाऽपीत्येतत् सत्प्रतियोगिकमिति तदाह **यद्यपीति** । **ज्ञानफलं** मोक्षः । निन्दादीत्यादिपदेन काम्यत्यागविधानं ग्राह्यम् । तथाऽपीत्यनन्तरं साध्यमध्याहृत्य तत्र हेतुसमर्पकं भाष्यं साध्याहारं योजयति **यत इति** । आक्षेपे न नियमेन योगोऽनुष्ठातव्यः । सर्वफलानापादकत्वादित्याक्षेप इत्यर्थः ।

अध्याहाराभावे पूर्वार्धपादद्वयार्थस्य मिथो विप्रतिषेधः, उत्तरार्धस्य प्रकृतार्थासङ्गतिश्च स्यात् । न हि कूपादेः सर्वतः सम्प्लुतोदकत्वम् । न वा तटाकादौ भवत्स्नानपानादिव्यवहारो वेदेषु भवतीत्यतोऽध्याहारेण वाक्यार्थो वर्णनीय इति भावः । **आवृत्तिश्चेति** । अत एव भाष्ये 'फलम्' इति फलशब्दश्चार्थशब्दार्थप्रयोजनार्थः । तावच्छब्दश्च यावच्छब्दाध्याहारसापेक्षः । यावान् सर्वेषु वेदेष्वर्थः तावान् ज्ञानिनो भवतीति गीताक्षरार्थो योजनीय इति नोक्तदोष इति भावः । सर्वेषु वेदेषु ज्ञानिनो यत् फलं तत् फलं ज्ञानिनः फलेऽन्तर्भवतीत्युक्तिरयुक्तेत्यत आह **तदुक्तकाम्यकर्मिणामिति** ॥ ''ब्रह्म अणतीति ब्राम्हणः'' इति भाषणमयुक्तम् । ''अकः सवर्णे दीर्घः'' इति ब्रह्माण इति प्राप्त्या ब्राह्मण इति निर्देशायोगादित्यत आह **तदुक्तकाम्यकर्मिणामिति** । ''ब्रह्म अणतीति ब्राह्मणः'' इति भाषणमयुक्तम् । ''अकः सवर्णे दीर्घः'' इति ब्रह्माण इति ब्राह्मण इति निर्देशायोगादित्यत आह **वर्णविपर्यय इति** । दीर्घव्यत्यास इत्यर्थः । अलाक्षणिकत्वं व्युदस्यति **निरुक्तत्वादिति** । ''वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्'' इति वैयाकरणवचनादित्यर्थः । **एवं तर्हि** ब्रह्माणतीति निर्वचने । **फलमस्तीति** । अवाप्तकामत्वादिति भावः । **गच्छति** अवगच्छति अपरोक्षयतीति भाष्यार्थः । **तस्य** विजानत इति पदस्य । **उभयग्रहणमिति** । अपरोक्षज्ञानस्य मोक्षफलकत्वं न परोक्षज्ञानस्येति तयोरुभयोरपि समकक्ष्यतया ग्रहणमनुपपन्नमित्यर्थः । तस्येत्यनूद्यार्थमाह **अपरोक्षज्ञानस्येति** । योगोपदेशप्रसङ्गे ज्ञानफलकथनस्य क उपयोग इति कृतचोद्यं परिहरति **एतच्चेति** । अपरोक्षज्ञानस्य परोक्षसाध्यत्ववर्णनं, अन्तर्भावितसर्वफलकत्ववर्णनं चेत्यर्थः । तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां भवतीति साम्यमेवेति शङ्कामनूद्य भाष्यभावं वदन् परिहरति **यद्यपीत्यादिना** । **अपव्याख्यानमिति** । ज्ञानिनः कर्ममात्रत्यागतात्पर्यकत्वव्याख्यानम्, मोक्षहेतुकर्मसमुच्चितवेदभागो ज्ञातव्यो नापर इति व्याख्यानं चेत्यर्थः । **उक्तवक्ष्यमाणेति** । तत्राऽद्यं ज्ञानिनमेवार्जुनं प्रति ''तस्माद् युद्ध्यस्व भारत'' इत्युक्तेन विष्णुद्वेषिनिग्रहरूपयुद्धप्रेरणन्यायेन ''कर्मण्येवाधिकारस्ते'', ''कार्यं कर्म समाचर'', नियतं कुरु कर्म त्वम्'' इत्यादिवक्ष्यमाणन्यायेन च निरस्तम् । द्वितीयेऽपि लिङ्गभङ्गरूपमोक्षस्य ज्ञानकर्मसमुच्चयसाध्यत्वांशः ''स हि धर्मः सुपर्याप्तः'' इति समुच्चयनिरासकभाष्योक्तन्यायेन ''अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते'' इति वक्ष्यमाणन्यायेन च निरस्तः । कर्मसङ्कोचांशस्तु ''एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा'' इत्यादिवक्ष्यमाणन्यायेन निरस्त इत्यर्थः ।

*गीताक्षरार्थस्तु*— **'यामिमाम्'** इत्यत्र काम्यकर्मिणां निन्दा कृता । ''निस्त्रैगुण्यो भव'' इति च तत्त्यागो विहितः । तत्र प्रष्टव्यं किन्निमित्तमेतदिति । ननूक्तं काम्यकर्मिणां समाध्यभावेन ज्ञाना-

भावान्मोक्षो न भवतीति । अत्रेदमुच्यते । यद्यपि ज्ञानफलं काम्यकर्मिणां न भवति, तथाऽपि तन्निन्दादिकं नोपपद्यते । यतः काम्यकर्मिणां फलं स्वर्गादिकं ज्ञानिनां न भवतीति ज्ञानकर्ममार्गयोः साम्यमेवेति योगो न नियमेनानुष्ठातव्य इत्याक्षेपे सत्युच्यते **यावानर्थ इति** । उदकं पीयतेऽस्मिन्नित्युदपानं कूपादि । तस्मिन् यावानर्थः स्नानादिरूपं प्रयोजनं यथा भवति तावानर्थः सर्वतः सम्प्लुतोदके समुद्रेऽन्तर्भवति । एवं सर्वेषु वेदेषु सर्ववेदोक्तकाम्यकर्मिणामिति यावत् । यावानर्थः स्वर्गादिरूपं फलं तावानर्थो विजानतः परोक्षज्ञानिनो ब्राह्मणस्य ब्रह्मापरोक्षज्ञानिनो भवत्येव । तस्य मोक्षफले महानन्दरूपे क्षुद्रानन्दरूपफलमन्तर्भवति । अत्र 'विजानतः' इति पदोक्तपरोक्षज्ञानस्यापरोक्षज्ञानं प्रति साधनत्ववर्णनं स्वरूपकथनमिति ॥ ४६ ॥

**गीतातात्पर्यनिर्णयः**

**"उद्रेकात् पातृराहित्यादनत्वाच्चाखिलस्य च ।**
**प्रलयेऽप्युदपानोऽसौ भगवान् हरिरीश्वरः ।**
**प्रकृतिर्ह्युदरूपेण सर्वमावृत्य तिष्ठति ।**
**प्रलयेऽतो लयं प्राहुः सर्वतः सम्प्लुतोदकम् ॥" इति च ।**

*न्या०दी०*— त्रैगुण्यनिवृत्त्यर्थं वेदाश्रयणं कार्यमित्यत्र युक्तिरुच्यते **यावानिति** । तत्रोदपानशब्दं, सर्वतः सम्प्लुतोदकशब्दं च स्मृत्यैव व्याचष्टे उद्रेकादिति ॥ सर्वकार्याणां प्रलये लीनत्वात् कथं सर्वतः सम्प्लुतोदकशब्दार्थतया प्रलयो गृह्यत इत्यत आह **प्रकृतिरिति** ॥

**गीतातात्पर्यनिर्णयः**

**"यावत्प्रयोजनं विष्णोः सकाशात् साधकस्य च ।**
**धर्ममोक्षादिकं तावत्सर्ववेदविदो भवेत् ।**
**वेदार्थनिर्णयो यस्माद्विष्णोर्ज्ञानं प्रकीर्तितम् ।**
**ज्ञानात् प्रसन्नश्च हरिर्यतोऽखिलफलप्रदः ॥" इति च ।**

*न्या०दी०*— समस्तश्लोकं स्मृत्या व्याचष्टे **यावदिति** ॥ साधकस्य सम्भवतीति शेषः । वेदज्ञानेन कुतो विष्णुः फलं ददातीत्यत आह **वेदेति** ॥ अस्तु वेदार्थज्ञानं नाम विष्णुज्ञानम् । तथापि कुतो भगवान् फलं ददातीत्यत आह **ज्ञानादिति** ॥

**गीतातात्पर्यनिर्णयः**

सर्वतः सम्प्लुतोदकेऽप्युद्रिक्तः पालकवर्जितः । कालाद्यनश्च यो विष्णुः तस्माद्यावत्फलं तावत्सर्ववेदेषु विशेषज्ञस्यैव भवतीत्यर्थः । सर्वे हि विष्णोरन्ये प्रलयकाले नोद्रिक्ताः । ये चोद्रिक्ता मुक्ता रमा च तेऽपि न पालकवर्जिताः, विष्णुपाल्यत्वात् । न च मुक्ताः कालादिचेष्टकाः । न चोद्रिक्तत्वं तेषां तद्वत् । अत उदपानो विष्णुरेव । प्रलये विशेषतोऽपि ।

*प्रका०*— त्रैगुण्येत्येतद्व्याचष्टे **उद्रेकेत्यादिना** ।

*न्या०दी०*— वाक्यद्वयसिद्धं श्लोकार्थमेकीकृत्य दर्शयति **सर्वत इति** ॥ नन्वत्र कश्चिदुद्रिक्तत्वादिगुणः श्रूयते । स विष्णुरिति कुतः ? अन्योऽपि किं न स्यादित्यत आह **सर्वे हीति** ॥ मुक्तानां रमायाश्चोद्रिक्तत्वात् कथमुद्रिक्तत्वेन विष्णुत्वनिश्चय इत्यत आह **ये चेति** ॥ मुक्तानामुद्रिक्तत्वेऽपि पालकवर्जितत्वाभावेनोदपानत्वासम्भव इति भावः । मुक्तानामुदपानत्वासम्भवे हेत्वन्तरं चाह **न चेति** ॥ रमायाः सर्वाभिमानित्वेन कालादिचेष्टकत्वादसङ्ग्रहः । किञ्चोद्रिक्तत्वं तेषामङ्गीकृतमेव न तु मुख्यतोऽस्त्यतो न तेषामुदपानत्वमित्याह **न चेति** ॥ अनेन रमाया अपि चेष्टकत्वमनुमतमेवेति ज्ञायते । उद्रिक्तत्वादे-रन्यत्रासम्भवेऽपि किमित्यत आह **अत इति** ॥ किञ्चोद्रिक्तत्वाद्येवान्यत्र न सम्भवति । किमुत सर्वतः सम्प्लुतोदके । अतोऽप्युदपानो विष्णुरेवेत्याह **प्रलय इति** ॥

*भा०दी०*— **असङ्ग्रह इति** । न च मुक्ता इति वाक्य इति योज्यम् ।

**गीतातात्पर्यनिर्णयः**

"आनीदवातं स्वधया तदेकं
तस्माद्धान्यन्न परः किञ्चनास ।
तम आसीत्तमसा गूळ्हमग्रे-
ऽप्रकेतं सलिलं सर्वमा इदम् ॥"
"आपो वा इदमग्रे सलिल आसीत्
सलिल एको द्रष्टाऽद्वैतो भवति ॥"

—इत्यादि श्रुतिभ्यश्च ॥ ४६ ॥

*प्रका०*— उक्तप्रकारेण प्रलये विशेषतोऽपि उदपानो विष्णुरित्येतच्छ्रुत्या साधयति **आनीदिति** । **अप्रकेतम्** अप्रज्ञातमलक्षणमित्यर्थान्तरम् । अत्र **आप** इति प्रकृतिरुच्यते ॥

*न्या०दी०*— मास्त्वन्येषामसम्भवात् सर्वतः सम्प्लुतादकेऽप्युदपानत्वम् । विष्णोरपि तत्सम्भवः कुत इति चेत् परिशेषादिति ब्रूमः । श्रुतिभ्यश्चेत्याह **आनीदिति** ॥ तदेकं ब्रह्म वायुप्रेरणां विना स्वसामर्थ्येनैव कालादिकं प्रेरयति स्म । तस्मादन्यदुत्तमं वस्तु किञ्चन नाऽऽस । अपि तु तदेवोद्रिक्तमास । अपरं तमः प्रकृतिरस्मिन् सर्वस्मिन् देशेऽविज्ञातं सलिलं भूत्वाऽऽसीत् । तेन सलिलेन प्रलये सर्वं गूढमासीदित्यर्थः । अस्याग्रे सलिले समन्तात्पालकवर्जितो भगवानासीदित्यर्थः । अद्वैतः सर्वोद्रिक्तः ॥

*भा०दी०*— पर इति श्रवणादुक्तं **अपरमिति** । सर्वमिदमित्यस्य वचनव्यत्ययेनार्थोक्तिः **अस्मिन् सर्वस्मिन्निति** । अप्रकेतमविज्ञातम् । आः इत्यस्यार्थ **आसीदिति** । इदमग्र इत्यस्यार्थः **अस्याग्र इति** । प्रपञ्चस्याग्र इत्यर्थः । आप इत्यस्यार्थः **पालकवर्जित इति** । बहुवचनं शब्दस्वाभाव्यात् । आकारदैर्घ्यं छान्दसम् । आङ्पूर्वको वा । प्रकृतानुगुणतयाऽर्थमाह **सर्वोद्रिक्त इति** । सवपिक्षयोद्रिक्त इत्यर्थः ॥

**गीता**

## कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
## मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥

*वि०वि०*— यामिमामिति कामात्मनां निन्दा कृता, सा नोपपद्यते । 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामं प्रत्येव यागादेर्विहितत्वादित्यत आह **कर्मणीति** । ते इत्युपलक्षणार्थं तव ज्ञानिनोऽपि कर्मण्येवाधिकारः, न तु फलेषु । फलकामनायां मोक्षविलम्बप्रसङ्गात् । किमुतान्येषां । फलश्रुतिस्तु रोचनार्थमितिभावः । अतो मा कर्मफलहेतुर्भूः । कर्मफलं तत्कृतौ हेतुर्यस्य स मा भूः । तर्हि क्लेशरूपं कर्म न करोमीत्यत आह **त इति** । कर्मणोऽकरणे स्नेहो माऽस्तु अन्यफलाभावेऽपि मत्प्रसादाख्याफलभावादिति भावः ।

अथवा, आत्मवानित्यैक्यभावनं न कर्तव्यमित्युक्तम् । तद्धेत्वभिधानेनोपपादयति **कर्मणीति** । कर्माधिकारिणस्त्वदादयो जीवाः, फलं तु मदायत्तमिति भावः । अतः कर्मफलस्य हेतुरीश्वरस्त्वं मा भूः । नेश्वरोऽहमिति भावं कुरु ॥ ४७ ॥

**गीतातात्पर्यनिर्णयः**

सर्वतः सम्प्लुतोदकेऽप्युद्रिक्तः पालकवर्जितः । कालाद्यनश्च यो विष्णुः तस्माद्यावत्फलं तावत्सर्ववेदेषु विशेषज्ञस्यैव भवतीत्यर्थः । सर्वे हि विष्णोरन्ये प्रलयकाले नोद्रिक्ताः । ये चोद्रिक्ता मुक्ता रमा च तेऽपि न पालकवर्जिताः, विष्णुपाल्यत्वात् । न च मुक्ताः कालादिचेष्टकाः । न चोद्रिक्तत्वं तेषां तद्वत् । अत उदपानो विष्णुरेव । प्रलये विशेषतोऽपि ।

*प्रका०*— त्रैगुण्येत्येतद्व्याचष्टे **उद्रेकेत्यादिना** ।

*न्या०दी०*— वाक्यद्वयसिद्धं श्लोकार्थमेकीकृत्य दर्शयति **सर्वत इति** ॥ नन्वत्र कश्चिदुद्रिक्तत्वादिगुणः श्रूयते । स विष्णुरिति कुतः ? अन्योऽपि किं न स्यादित्यत आह **सर्वे हीति** ॥ मुक्तानां रमायाश्चोद्रिक्तत्वात् कथमुद्रिक्तत्वेन विष्णुत्वनिश्चय इत्यत आह **ये चेति** ॥ मुक्तानामुद्रिक्तत्वेऽपि पालकवर्जितत्वाभावेनोदपानत्वासम्भव इति भावः । मुक्तानामुदपानत्वासम्भवे हेत्वन्तरं चाह **न चेति** ॥ रमायाः सर्वाभिमानित्वेन कालादिचेष्टकत्वादसङ्ग्रहः । किञ्चोद्रिक्तत्वं तेषामङ्गीकृतमेव न तु मुख्यतोस्त्यतो न तेषामुदपानत्वमित्याह **न चेति** ॥ अनेन रमाया अपि चेष्टकत्वमनुमतमेवेति ज्ञायते । उद्रिक्तत्वादे-रन्यत्रासम्भवेऽपि किमित्यत आह **अत इति** ॥ किञ्चोद्रिक्तत्वाद्येवान्यत्र न सम्भवति । किमुत सर्वतः सम्प्लुतोदके । अतोऽप्युदपानो विष्णुरेवेत्याह **प्रलय इति** ॥

*भा०दी०*— **असङ्ग्रह इति** । न च मुक्ता इति वाक्य इति योज्यम् ।

**गीतातात्पर्यनिर्णयः**

"आनीदवातं स्वधया तदेकं
तस्माद्धान्यन्न परः किञ्चनास ।
तम आसीत्तमसा गूळ्हमग्रे-
ऽप्रकेतं सलिलं सर्वमा इदम् ॥"

"आपो वा इदमग्रे सलिल आसीत्
सलिल एको द्रष्टाऽद्वैतो भवति ॥"

—इत्यादि श्रुतिभ्यश्च ॥ ४६ ॥

***प्रका०***— उक्तप्रकारेण प्रलये विशेषतोऽपि उदपानो विष्णुरित्येतच्छ्रुत्या साधयति **आनीदिति** । **अप्रकेतम्** अप्रज्ञातमलक्षणमित्यर्थान्तरम् । अत्र **आप** इति प्रकृतिरुच्यते ॥

***न्या०दी०***— मास्त्वन्येषामसम्भवात् सर्वतः सम्प्लुतादकेऽप्युदपानत्वम् । विष्णोरपि तत्सम्भवः कुत इति चेत् परिशेषादिति ब्रूमः । श्रुतिभ्यश्चेत्याह **आनीदिति** ॥ तदेकं ब्रह्म वायुप्रेरणां विना स्वसामर्थ्येनैव कालादिकं प्रेरयति स्म । तस्मादन्यदुत्तमं वस्तु किञ्चन नाऽऽस । अपि तु तदेवोद्रिक्तमास । अपरं तमः प्रकृतिरस्मिन् सर्वस्मिन् देशेऽविज्ञातं सलिलं भूत्वाऽऽसीत् । तेन सलिलेन प्रलये सर्वं गूढमासीदित्यर्थः । अस्याग्रे सलिले समन्तात्पालकवर्जितो भगवानासीदित्यर्थः । अद्वैतः सर्वोद्रिक्तः ॥

***भा०दी०***— पर इति श्रवणादुक्तं **अपरमिति** । सर्वमिदमित्यस्य वचनव्यत्ययेनार्थोक्तिः **अस्मिन् सर्वस्मिन्निति** । अप्रकेतमविज्ञातम् । आः इत्यस्यार्थ **आसीदिति** । इदमग्र इत्यस्यार्थः **अस्याग्र इति** । प्रपञ्चस्याग्र इत्यर्थः । आप इत्यस्यार्थः **पालकवर्जित इति** । बहुवचनं शब्दस्वाभाव्यात् । आकारदैर्घ्यं छान्दसम् । आङ्पूर्वको वा । प्रकृतानुगुणतयाऽर्थमाह **सर्वोद्रिक्त** इति । सर्वापेक्षयोद्रिक्त इत्यर्थः ॥

**गीता**

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥**

***वि०वि०***— यामिमामिति कामात्मनां निन्दा कृता, सा नोपपद्यते । 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामं प्रत्येव यागादेर्विहितत्वादित्यत आह **कर्मणीति** । ते इत्युपलक्षणार्थं तव ज्ञानिनोऽपि कर्मण्येवाधिकारः, न तु फलेषु । फलकामनायां मोक्षविलम्बप्रसङ्गात् । किमुतान्येषां । फलश्रुतिस्तु रोचनार्थमितिभावः । अतो मा कर्मफलहेतुर्भूः । कर्मफलं तत्कृतौ हेतुर्यस्य स मा भूः । तर्हि क्लेशरूपं कर्म न करोमीत्यत आह **त इति** । कर्मणोऽकरणे स्नेहो माऽस्तु अन्यफलाभावेऽपि मत्प्रसादाख्याफलभावादिति भावः ।

अथवा, आत्मवानित्यैक्यभावनं न कर्तव्यमित्युक्तम् । तद्धेत्वभिधानेनोपपादयति **कर्मणीति** । कर्माधिकारिणस्त्वदादयो जीवाः, फलं तु मदायत्तमिति भावः । अतः कर्मफलस्य हेतुरीश्वरस्त्वं मा भूः । नेश्वरोऽहमिति भावं कुरु ॥ ४७ ॥

***वा०ल०***— 'मा ते सङ्गोऽस्त्वकर्मणि' इत्यत्र अकर्मणि कर्माकरणे ते सङ्गः माऽस्तु । फलं नास्तीति कर्मापि न त्यजेति भावः ॥ ४७ ॥

***सा०सं०***— ननु सकामतया कर्म कुर्वतां 'यामिमाम्' इत्यादिनोक्ता निन्दा न युक्ता । 'स्वर्गकामो यजेत' इत्यादौ कामनाया अपि विधानात् । न हि विहितकृतां निन्दा युक्ता । न च यागकामनयोर्द्वयोरपि विधौ वाक्यभेदः । स्वर्गकामनाविशिष्टयागविध्यभ्युपगमादित्यत आह **कर्मण्येवेति** । अत्र त इति ज्ञानिभूतसर्ववर्णाश्रमोपलक्षणम् । **फलेषु** इति पदं फलकामोपलक्षणम् । अयमर्थः— हे पार्थ ! **ते** तव त्वादृशस्यान्यस्य ज्ञानिनोऽपि **कर्मण्येवाधिकारो** योग्यता । **फलेषु** स्वर्गादिफलकामनासु **मा** **नाधिकारः** । अतः कर्मैव कार्यं विधिविषय इति यावत् । न तु कामना कार्या । कुतः, 'कुर्वन्नेव' (ई.उ. २) इति श्रुतौ 'एवं त्वयि' इत्युत्तरार्धे कर्माकरणे प्रत्यवायस्येव कामनाया अकरणे प्रत्यवायाश्रवणात् । तथा च कामनानुवादेन यागविधिरेवायं न तु विशिष्टविधिरिति भावः । अतः कामनायाः विध्यविषयत्वात् **कर्मकृतौ** फलं हेतुर्यस्य स **कर्मफलहेतुः मा भूरित्यर्थः** । शाकपार्थिवादिवत् कृतिपदलोपोऽत्र ध्येयः ।

तर्हि स्वयं क्लेशरूपत्वात् कर्म न कार्यम् इत्यत आह **मा त** इति । **ते** तव त्वादृशस्य सर्वस्यापि ज्ञानिनः **अकर्मणि** कर्माकरणे **सङ्गः** स्नेहो **माऽभूत्** । स्वर्गादिरूपाल्पास्थिरफलाभावेऽपि अनल्पस्थिरमोक्षरूपमहापुमर्थहेतुभगवज्ज्ञानभक्तिप्रसादानां भावात् तत्कामनया कर्मकरणोपपत्तेः ज्ञानभक्त्यादिकामनायाश्च निन्दाभावात् । प्रत्युत 'वृणीमहे ते परितोषणाय' इत्यादिना चतुर्थस्कन्धे प्रचेतसां महतामाचाराच्च । तथा च सूत्रम् । ''ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ'' (३-४-४३) इति । न च ज्ञानिनः 'ॐ अनियमः सर्वेषाम् अविरोधाच्छब्दानुमानाभ्याम् ॐ' (३-३-३२) इत्युक्तदिशा मोक्षस्य सिद्धतया किं कर्मकरणेन साध्यमिति चेन्न । ज्ञाने मोक्षे चातिशयार्थत्वात् । यथोक्तम् 'ॐ भावं तु बादरायणोऽस्ति हि ॐ' (१-३-३३) इति ।

यद्वा, पूर्वम् 'आत्मवान्' इत्यनेनैक्यभावनं न कार्यमित्युक्तम् । तत्कुत इत्यतो जीवब्रह्मैक्यस्यैवाभावादिति ऐक्याभावरूपहेतुमाह **कर्मण्येवेति** । **त** इत्युपलक्षणम् । त्वदादिसर्वजीवानां कर्मण्येवाधिकारः । कर्मसम्पादन एव सामर्थ्यमित्यर्थः । एवकारव्यवच्छेद्यमाह **मा फलेष्विति । फलेषु कदाचनाधिकारो नास्ति ।** फलसम्पादने सामर्थ्यं नास्ति । किं त्वीश्वर एव फलदाने समर्थ इति भावः । तदाह सूत्रे ''ॐ फलमत उपपत्तेः ॐ'' (३-२-३९) इति । एवं च फलसंपादने शक्तत्वाशक्तत्वाभ्यां सर्वजीवानाम् ईश्वरेणैक्याभावादिति युक्तिरुक्ता भवति । तस्याः प्रतिज्ञामाह **मा कर्मफलहेतुर्भूरिति** । उक्तदिशा **कर्मफलहेतुरीश्वरः**, मनसा स **मा भूः** ।

तदैक्यभावना न कार्येति यावत् । मिथ्योपासनायाः "ॐ न प्रतीके न हि सः ॐ" (४-१-४) इति व्याससूत्रे, 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्' इति साङ्कर्षणसूत्रे च निषेधात् । तर्हि 'सत्वस्थः' इत्युक्तदिशा नित्यं स्वामित्वेन हरिस्मृत्यैवालम्, किं कर्मकरणेनेत्यत आह **मा त** इति । त्वदादेः सर्वस्य **अकर्मणि** कर्माकरणे **सङ्गः** स्नेहः **माऽभूत्** । तदकरणे प्रत्यवायश्रवणादिति भावः ॥ ४७ ॥

***अ०प्र०***— तर्हि सर्वकर्मफलानि परमेश्वराराधनादेव भविष्यन्तीत्यभिसन्धाय प्रवर्तेत इत्याशङ्क्य तद्वारयन्नाह **कर्मेति** ।

हे पार्थ ! ते[१], कर्मण्येव[२], अधिकारः[३], फलेषु[४], कदाचन अधिकारो[५], मास्तु[६], त्वं कर्मफलहेतुः[७], मा [८], भूः[९], ते[१०], अकर्माणि[११], सङ्गः[१२], मा[१३], अस्तु[१४] इत्यन्वयः ।

हे पार्थ ! ते = तव तत्त्वज्ञानार्थिनः यद्वा युष्माकं जीवानां कर्मण्येव अधिकारः[३], तत् फलेषु = बन्धहेतुषु[४], कदाचन अधिकारः = अधिकारकामः कदापि[५], मास्तु[६], त्वं कर्मफलहेतुः, कर्मफलं हेतुः प्रवृत्तिर्यस्य तथाभूतः मा भूः = कामितस्यैव स्वर्गादिनियोज्यविशेषणत्वेन फलत्वात् अकामितं फलं न स्यादिति भावः, अत एव फलं बन्धकं भविष्यतीति भूयात्, कर्मफले प्रवृत्तिं मा कुरु[९], अकर्मणि = कर्माकरणेऽपि तव[१०], सङ्गो मास्तु = निष्ठां मा कुरु[१४] इत्यर्थः ॥ ४७ ॥

**भाष्यम्**

**कामात्मनां निन्दा कृता कथमेषाम् ? 'स्वर्गकामो यजेत' इत्यादौ कामस्यापि विहितत्वादित्यत आह— कर्मण्येवेति । 'ते' इत्युपलक्षणार्थम् । तव ज्ञानिनोऽपि न फलकामकर्तव्यता । किम्वन्येषाम् । न त्वस्ति केषाञ्चित् न ते अस्तीति । स हि ज्ञानी नरांश इन्द्रश्च । मोहादिस्त्वभिभवादेः । यदि तेषां शुद्धसत्त्वानां न स्यात् ज्ञानं क्वान्येषाम् ? उपदेशादेश्च सिद्धं ज्ञानं तेषाम् । 'पार्थार्षिषेण' इत्यादिज्ञानिगणनाच्च ।**

***प०टी०***— ननु 'उपनीतोऽधीयीत' इतिवत् 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामस्यापि विहितत्वात् कथमेषां विहितमाचरतां काममनस्कानामविपश्चित इति निन्दा कृता ? इत्याशङ्क्य, उत्तरत्वेन श्लोकमवतार्य व्याचष्टे **कामात्मनामिति** । 'ते' इति विशेषणादन्येषां कामेऽधिकारोऽस्तीति भ्रान्तिं निवर्तयति **त इति** । उपलक्षणप्रयोजनमाह **तव इति** । त इत्युपलक्षणार्थम् इत्यस्य

व्यावर्त्यमाह **न त्विति** । **केषाञ्चिदस्ति ते नास्तीति** अर्थो न इत्यर्थः । अर्जुनस्य ज्ञानित्वमेव कुतः ? इत्यत आह **स हीति** । अर्जुनस्य ज्ञानित्वे मोहप्रश्नादिकं कथम् ? इत्यत आह **मोहादिरिति** । **आदि**पदाद्विशेषज्ञानस्थितस्थापनादि । इन्द्रादीनां ज्ञानित्वं कुतः ? इत्यत आह **यदीति** । इतश्चेन्द्रादयो ज्ञानिन इत्याह **उपदेशेति** । 'एतदु है वेन्द्रो विश्वामित्राय प्रोवाच' इत्याद्युपदेशः । इतश्चार्जुनो ज्ञानीत्याह **पार्थेति** ॥ ४७ ॥

***न०टी०***— .....................निन्दा कृता । इतरफलकामे सति ईश्वरमनःसमाधानाभावेन अमुक्तिप्रसङ्गादिति । तन्न । 'स्वर्गकामो यजेत' इत्यादौ यागवत् कामस्यापि विहितत्वाद्विहित-मनुतिष्ठता मुक्त्यभावोऽपि गुण एव स्यात् । किं तया सुखादिहान्या ? इति भावेनाशङ्क्य, तत्परिहारायोत्तरश्लोकमवतार्य व्याचष्टे **कामात्मनामिति** । ननु **एषां कामात्मनां कथम्** 'अविप-श्चितः' इत्यादेः निन्दा कृता इत्यनेन सम्बन्धः । ज्ञानिनोऽप्यकाम्यशुभकर्मभिर्मुक्तावानन्दवृद्ध्युक्तेः तस्यापि न फलकामकर्तव्यता किम्वज्ञानिनां ज्ञानाभावेन मुक्तेरेवाभावप्रसङ्गादिति कैमुत्यन्यायेना-न्येषामपि फलकामनिषेधोपलक्षणार्थः 'ते' इतिशब्दः । न केषाञ्चिदस्ति फलकामकर्तव्यता ते नास्तीति विशेषप्रतिषेधनार्थः । नरांशयुक्तेन्द्रत्वेन ज्ञानित्वावगमात् तस्य विशेषप्रतिषेधानुपपत्ते-रिति भावः । नन्विन्द्रत्वादर्जुनोऽपि ज्ञानी चेत् अर्जुनस्यैव कथं मोहादिर्महाधर्मादौ ? इत्यत आह **मोहादिरिति** । नन्विन्द्रादीनां ज्ञानसिद्धौ पश्चान्मोहादेर्गतिर्वक्तव्या । तदेव कुतः ? इत्यत आह **यदीति** । इतोऽपि तेषां ज्ञानं सिद्धमित्याह **उपदेशादेरिति** । 'एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच' इत्यादिरुपदेशः । न केवलं इन्द्रावतारत्वादर्जुनो ज्ञानी, किन्तु ज्ञानिषु गणनाच्च इत्याह **पार्थेति** । ॥ ४७ ॥

***प्र०दी०***— ज्ञानिनां कर्माभावमुक्त्वा इदानीमज्ञानिनः कर्म चोच्यत इत्यन्यथाव्याख्यान-निरासायाह— **कामात्मनामिति** । एषां कर्मिणाम् । सकामतया कर्म कुर्वतां या निन्दा कृता 'यामिमां' इत्यादिना सा न युक्तेत्यर्थः । कुतः । 'स्वर्गकामो यजेत' इत्यादौ यजनवत् स्वर्गकामस्यापि विहितत्वात् । न हि विहितं कुर्वतां निन्द्यत्वम् । तथात्वे यजनस्यापि निन्द्यत्वप्रसङ्गादिति वदन् विशिष्टविधित्वं मन्यते पूर्वपक्षी । 'ते' इत्येतदर्जुनमात्रविषयमित्यन्यथाप्रतीतिनिरासायाह— **त इति** । सर्ववर्णाश्रमोपलक्षणमर्थः प्रयोजनमस्येति तथोक्तम् । वक्तर्यायत्ते शब्दप्रयोगे वाचकमेव प्रयुज्यताम् । किं लक्षणयेत्यत आह— **तवेति** । फलकामः कर्तव्यो यस्यासौ तथोक्तः । तस्य भावः तत्ता । फलकामस्य कर्तव्यता तव कर्तुरिति वा । कृतोऽपि फलकामो न ज्ञानिनोऽत्यन्तबाधकः । तत्प्रति-बन्धनीयस्य ज्ञानस्याप्तत्वात् । मोक्षस्य च नियतत्वात् । तथापि मोक्षविलम्बहेतुत्वात् तस्यापि न

कर्तव्यः । किम्वन्येषामज्ञानिनामिति प्रदर्शनायोपलक्षकपदप्रयोग इति भावः । ननु 'कर्मण्येवाधिकारो मा फलेषु' इति द्वयमुक्तम् । तत्कथं न फलकामकर्तव्यतेत्येकस्यैव ग्रहणम् । उच्यते । फलकामकर्तव्यतानिषेधस्यैवात्र प्राधान्यात् । 'कर्मण्यधिकारः' इति हि तदर्थोऽनुवादः । तथापि न फलकामाधिकार इति वक्तव्यम् । मैवम् । अधिकारभावाभावयोः कर्तव्यत्वाकर्तव्यत्वसमर्थनार्थमुक्तत्वेन साध्यस्यैवोपादानात् । तथा च वक्ष्यति । 'ते' इत्युपलक्षणार्थमित्युक्तस्य व्यावर्त्यमाह— **न तु इति** । केषाञ्चित् फलकामकर्तव्यताऽस्ति, केवलं ते नास्तीत्यर्थस्तु नेत्यर्थः । 'कामान् यः कामयते' इत्यादौ सर्वेषां निषेधादिति भावः । नन्वर्जुनस्य ज्ञानित्वे स्यादिदम् । तदेव कुत इत्यत आह— **स हीति** । हिशब्दसूचितां प्रमाणप्रसिद्धिमेव दर्शयति **नरांश इति** । कथं तर्हि 'यज्ज्ञात्वा न पुनर्मोहं' इत्यर्जुनस्य मोह उच्यते । कथं च प्रश्नकरणमित्यत आह **मोहादिस्त्विति** । बलवता प्रारब्धकर्मादिना ज्ञानस्याभिभवान्मोहः, विशेषज्ञानाद्यर्थः प्रश्न इति भावः । नन्विन्द्रादीनामेव कुतो ज्ञानित्वमित्यत आह— **यदीति** । सत्त्वं हि ज्ञानकारणम् । ''सत्त्वात् सञ्जायते ज्ञानं'' इति वचनात् । देवाश्च शुद्धसत्त्वाः । अतः कारणसद्भावाद्युक्तं तेषां ज्ञानम् । अन्यथा न कस्यापि स्यात् । इतश्चेन्द्रादयो ज्ञानिन इत्याह— **उपदेशेति** । ''एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच'' इत्यादिरुपदेशः । आदिपदेन प्रजापतौ ब्रह्मचर्यम् । अर्जुनस्य ज्ञानित्वे प्रमाणान्तरमाह— **पार्थेति** । ज्ञानिषु गणनात् । एतेन अपव्याख्यानमपि निरस्तम् ।

***भा०दी०***— ननु यागकामयोर्द्वयोरपि विधौ वाक्यभेद इत्यत आह **विशिष्टविधित्वमिति** । स्वर्गकामविशिष्टो यागः कार्य इति विशिष्टविधित्वमित्यर्थः । तत्पुरुषमुपेत्याह **फलकामस्येति** । तवेतिपदं कर्तृमात्रपरमिति मत्वाह **तव कर्तुरिति** । कर्मानुष्ठातुरित्यर्थः । एतावता लाक्षणिकोक्तेः किं प्रयोजनमुक्तं स्यादित्यत आह **कृतोऽपीति** । **नियतत्वादिति** । अनियमः सर्वेषामित्युक्तेरिति भावः । **व इति वक्तव्यमिति** । अधिकार इति प्रक्रमात् । फलेष्वित्यस्य फलकामोपलक्षकत्वेऽपि फलकामेष्वधिकारो नेति वक्तव्यं न त्वकर्तव्यत्वमित्यर्थः । **तथा च वक्ष्यतीति** । अधिकारभावाभावौ कर्तव्यत्वाकर्तव्यत्वहेतू । इत्येतस्मादुक्तदिशा वक्ष्यति चातः कर्मण्ये वाधिकारोऽतस्तदेव कार्यमित्यादिनानुपदमेवेति भावः । **इत्यादाविति** । सकर्मभिर्जायते तत्र तत्रेति वाक्यविशेषे जन्माख्यक्लेशोक्त्या सर्वेषां कामनिषेधावगमादित्यर्थः । **ब्रह्मचर्यमिति** । ब्रह्मज्ञानाय चरणं ग्राह्यमित्यर्थः । एतच्छान्दोग्याष्टमाध्याये व्यक्तम् । **ज्ञानिषु गणनादिति** । द्वितीयस्कन्धे सप्तमेऽध्याये वेदाहमङ्गेत्युपक्रम्य पार्थार्ष्णिषेणविदुरश्रुतसेनभूषा तेन तत् विदन्तीति ग्रन्थेन गणज्ञानादित्यर्थः । **अपव्याख्यानमिति** । यावानर्थ इति श्लोके ज्ञानिनः कर्माभावमुक्त्वेदानीमज्ञानिनः कर्मोच्यत इत्येतदप-

व्याख्यानमेतेन उत इत्युक्ता अर्जुनस्य ज्ञानित्वकथनेन निरस्तमित्यर्थः । न केवलं कैमुत्यवचनमित्यपेरर्थः ।

*भा०र०*— कथमित्याक्षेपार्थः । **सा नेति** । कामस्यापीत्यपिपदेन यजनस्यापि ग्रहणे कामस्य यजनस्य च विधौ वाक्यभेद इत्यत उक्तं **विशिष्टेति** । स्वर्गकामविशिष्टो यागः कार्य इति विशिष्टविधित्वमित्यभिमान इत्यर्थः । ''वायव्यं श्वेतमालभेत'' इत्यादौ विशिष्टविधिदर्शनादिति हृदयम् । कस्योपलक्षणमिति न ज्ञायते । अत आह **सर्ववर्णेति** । लक्षणया सर्ववर्णाश्रमप्रतिपादकमित्यर्थः । उपलक्षणायेदमिति चतुर्थीसमासोऽपि शक्यो वक्तुम् । ब्राह्मणार्थं पय इति यथा । सत्यम् । प्रकारान्तरमेतत् । भाष्ये ''त इति'' इत्यनन्तरपदमिति शेषः । ''वाक्यं वक्तर्यधीनं हि'' इति महाभाष्यप्रयोगात् ''वक्तरि'' इति सप्तम्युपपन्ना । **किं लक्षणयेति** । लाक्षणिकपदप्रयोगे किं प्रयोजनमित्यर्थः । फलकामे हि कर्तव्यता प्रसक्ता । न च तत्र तव ज्ञानिन इत्यन्वितमित्यतो व्याचष्टे **फलकाम इति** । फलकाम एव कर्तव्यतान्वयमङ्गीकृत्यापि तवेत्येतत् घटयितुं प्रकारान्तरमाह **फलकामस्येति** । तवेत्यनूद्यार्थमाह **कर्तुरिति** । कर्मानुष्ठातुरित्यर्थः । कर्मकर्तुर्ज्ञानिनस्तव फलकामस्य कर्तव्यता नास्ति । किमुक्तं भवति । कर्ममात्रकरणेऽधिकारिणा ज्ञानिना त्वयाऽपि फलकामो न कर्तव्य इति । लाक्षणिकपदप्रयोगे किं प्रयोजनमिति चोद्यपरिहाराय भाष्यभावमाह **कृतोऽपीति** । **तत्प्रतिबन्धनीयस्य** फलकामप्रतिबन्धनीयस्य । **नियतत्वादिति** । ''अनियमः सर्वेषां ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु'' इत्यादौ तथा स्थितत्वादिति भावः । **तस्यापि** ज्ञानिनोऽपि । ''कर्तृकर्मणोः कृति'' इति कर्तरि षष्ठी । **न कर्तव्यः** फलकामः । **तदर्थः** निषेधार्थः । **अनुवादः** कथनम्, अनुकूलो वादो हेतुकथनमिति वा । ननु ''मा फलेषु कदाचन'' इत्यत्राधिकार इत्यनुवृत्तेस्तदनुवादपरे भाष्ये न फलकामनाधिकार इत्येव वक्तव्यम् । तत् कथं फलकामकर्तव्यतेति भाषितमिति शङ्कते **तथाऽपीति** । एकस्यैव ग्रहणं कथमिति चोद्यपरिहारेऽपीत्यर्थः । फलकामेति वदन् फलशब्दः फलकामोपलक्षणमित्यभिप्रैति **समर्थनार्थमुक्तत्वेनेति** । त्वया कर्म कर्तव्यम् । तत्राधिकारित्वात् । फलकामो न कर्तव्यः । तत्रानधिकारित्वादिति साधनार्थमुक्तत्वेनेत्यर्थः । **साध्यस्यैव** फलकामो न कर्तव्य इति साध्यस्यैव । तत्कुत इत्यतस्तत्रोपष्टम्भकमाह **तथा चेति** । अतस्तदेव कार्यमित्यत्रेति शेषः । **केषाञ्चित्** अज्ञानां ते ज्ञानिनस्तव । **निषेधादिति** । ''स कामभिर्जायते तत्र तत्र'' इति वाक्यशेषे जन्मोपलक्षितक्लेशोक्त्या कामनिन्दनेन सर्वेषां कामनिषेधावगमादित्यर्थः । ''विष्णोर्वीर्योरनन्तस्य त्रिभिरंशैर्नरः स्मृतः'' इति शास्त्रसिद्धनरांशवत्त्वादिन्द्रावतारत्वाच्चार्जुनो ज्ञानीति भाष्यार्थ इति भावेन तदवतारयति **हिशब्देनेति** । ''नरांशयुक्तेन्द्रत्वेन ज्ञानित्वावगमः'' इति तु

प्राचीनटीका । **प्रश्नकरणं** "बुद्धिं मोहयसीव मे । तदेकं वद निश्चित्य" इत्यादिप्रश्नकरणम् । "बलवता प्रारब्धकर्मादिना" इत्यत्र आदिशब्देन प्रबलविकर्मग्रहः । सुधायां प्रबलविकर्मणो ज्ञानाभिभावकत्वोक्तेः । विशेषज्ञानाद्यर्थ इत्यत्र आदिपदेन प्राप्तज्ञानस्थिरीकरणं गृह्यते । "जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा । पृच्छन्ति' इत्यादेः । इन्द्रादयो ज्ञानिनो भवितुमर्हन्ति । ज्ञानसामग्रीसम्पन्नत्वादिति भाष्याभिप्रेतानुमानेऽसिद्धिमुद्धर्तुमाह **सत्त्वं हीति** । अत्र विपक्षे बाधकतर्कमाह **अन्यथेति** । अत एव भाष्ये यदिस्याच्छब्दौ तर्कलिङ्गे इति भावः । भाष्ये चशब्दादाह **इतश्चेति** । **एतदु हैवेन्द्र इति** । पादान्त्यप्राणाधिकरणन्यायेनेन्द्रशब्दस्य भगवत्परत्वेऽपि मुख्यवृत्त्या शचीपतिरपि प्रतिपिपादयिषित इति भवत्येवायमिन्द्रोपदेशः । **ब्रह्मचर्यमिति** । ब्रह्मज्ञानाय चरणम् । ग्राह्यमिति शेषः । "इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम्" इत्यारभ्य "तौ हा संविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः । तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः" इतीन्द्रस्य चतुर्मुखे ब्रह्मचर्ये श्रूयते । समापादितब्रह्मचर्याणां ज्ञानिनामेव चतुर्मुखोपदेशयोग्यत्वं नाज्ञानिनामितीन्द्रस्यैतदन्यथानुपपत्त्याऽपि ज्ञानित्वं निश्चीयते । विरोचने ब्रह्मचर्ये विरिञ्चोपदेश्यत्वे च सत्यपि तत्त्वज्ञानानुकूलब्रह्मचर्यं योग्यत्वं च विवक्षितमिति न तत्र व्यभिचार इति भावः । **अर्जुनस्येति** । पूर्वं नरांशत्वेनेन्द्रावतारत्वेन चार्जुनस्य ज्ञानित्वमित्युक्तम् । इदानीमर्जुनमधिकृत्यैव ज्ञानित्वमित्यत्र प्रमाणमाहेत्यर्थः । उक्तानुमानमपेक्ष्योक्तं **प्रमाणान्तरमिति** । ज्ञानिभिर्गणनादित्यन्यथाप्रतीतिनिरासाय व्याचष्टे **ज्ञानिष्विति** । "येऽन्ये विभीषणहनूमदुपेन्द्रदत्ताः पार्थार्ष्टिषेणविदुरश्रुतसेनभूपाः । ते वै विदन्त्यतिरन्ति च देवमायाम्" इति द्वितीयस्कन्धे ब्रह्मणा नारदं प्रति ज्ञानिगणनावसरेऽर्जुनस्य ज्ञानिषु गणितत्वादित्यर्थः । सप्तमीति योगविभागात् समास इति भावः । **एतेनेति** । ज्ञानिन एवार्जुनस्य "कर्मण्येवाधिकारस्ते" इति कर्माभिधानेनात्र अज्ञानिनः कर्मोच्यत इत्यन्यथाव्याख्यानं निरस्तमित्यर्थः ।

**भाष्यम्**

**कामनिषेध एवात्र । फलानि ह्यस्वातन्त्र्येण भवन्ति । न हि कर्मफलानि कर्माभावे यत्नतो अपि भवन्ति । भवन्ति च काम्यकर्मिणो विपर्ययत्नेऽप्यविरोधे विपरीतकरण एव ।**

*प०टी०*— ननु 'मा फलेषु' इति फलाधिकारात् प्रतिषिध्यते । ततः कथमियं व्याख्या ? इत्यत आह **कामेति** । 'क्रियते' इति शेषः । यो यत्कर्तुं स्वतन्त्रः स तत्र विधिनिषेधगोचरः ।

न च फलोपादानहानयोः पुरुषः स्वतन्त्रः । अतः **कामनिषेध एव** न फलनिषेध इत्यर्थः । तदेव प्रपञ्चयति **न हीति** । **अविरोधे** भगवदपरोक्षादिविरोधाभावे ।

***न०टी०***— यद्यप्यस्मिन् श्लोके मा फलेष्वधिकार इत्येवोच्यते न तु कामेष्विति । तथाऽपि अत्र कामनिषेध एव क्रियते 'तस्मान्नेष्टियाजुकः स्यात्' इति श्रुतेः, फलस्य स्वप्रयत्नानधीनत्वेन निषेधायोगादिति भावेनाह **कामनिषेध इति** । स्वप्रयत्नानधीनत्वमेव फलस्यान्वयव्यतिरेकाभ्यां दर्शयति **न हीति** । **अविरोधे** विरोधिभगवदपरोक्षाद्यभावे । अपरोक्षज्ञानिनिरस्त्वनिष्टपुण्यस्यास्पर्शादिति भावः ।

***प्र०दी०***— नन्वत्र 'मा फलेषु' इति फलविषयो निषेधः कृतः । तत्कथमुक्तं फलकामेति । तत्राह— **कामेति** । फलशब्देन तद्विषयकं काममुपलक्ष्य तद्विषयो निषेधोऽत्र क्रियते । न फलविषय इत्यर्थः । कुतो लक्षणाश्रयणमित्यत आह— **फलानि हीति** । यत्र हि पुरुषस्य कर्तुमकर्तुं वा स्वातन्त्र्यं तत्रैव निषेधो नान्यत्र । प्रसक्तेरभावात् । न च फलेषु स्वातन्त्र्यमस्ति । अतो मुख्ये बाधकाल्लक्षणाश्रयणमित्यर्थः । कथमस्वातन्त्र्यमित्यतः करणे तावदाह— **न हीति** । अकरणेऽपि तदाह— **भवन्ति चेति** । चोऽवधारणे । अविरोधे ब्रह्मदर्शनादितद्विरोध्यभावे । तदनेन 'ते' इति 'फलेषु' इति च पदद्वयं व्याख्यातम् ।

***भा०दी०***— **न च फलेषु स्वातन्त्र्यमिति** । कर्तुमकर्तुं वेत्यनुषङ्गकथनस्वातन्त्र्यमित्यत्रापि फलेषु कर्तुमकर्तुं चेत्यनुषङ्गः । **करण इति** । फलनिष्पादन इत्यर्थः । **अकरणेऽपीति** । फला-निष्पादनेऽपि इत्यर्थः । **तदनेनेति** । त इत्युपलक्षणमित्यादिना विरोध इत्यन्तेनेत्यर्थः ।

***भा०र०***— तथा च शङ्करः "प्राग् ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन त्वया कर्म कर्त-व्यम्" इति । सप्तम्यर्थो विषय इति । **फलकामेतीति** । न फलकामकर्तव्यतेत्यनेन कामनिषेधः कृत इति कथं भाषितमित्यर्थः । भाष्योक्तमुपपादयितुमाह **यत्र हीति** । **प्रसक्तेरिति** । अप्रसक्तस्य प्रतिषेधो न युक्तः । "नान्तरिक्षे न दिव्यग्निश्चेतव्यः" इत्यादि तु मीमांसकैर्व्याख्यातमिति न कापि अनुपपत्तिरिति भावः ॥ **न च फलेषु स्वातन्त्र्यमिति** । कर्तुमकर्तुं वेत्यनुषङ्गः । कथमस्वातन्त्र्य-मित्यत्रापि फलेषु कर्तुमकर्तुं वेत्यनुषङ्गः । **करणे** फलसम्पादने । **आह** अस्वातन्त्र्यम् । **तद्विरो-धीति** । काम्यफलप्राप्तिविरोधीत्यर्थः । काम्यकर्मानुष्ठाय न ममैतत् कर्मफलमस्त्विति वैराग्ये यत्नतः कृतेऽपि भगवदपरोक्षज्ञानाभावे काम्यकर्मफलमैश्वर्यादिकमनुष्ठातुर्भवत्येवेति फलानापादनेऽपि पुरुषस्य न सामर्थ्यमिति भाष्यार्थ इति भावः । अनेन "ते इत्युपलक्षणार्थम्" इत्यादिना "अविरोधः" इत्य-

न्तेन । अर्जुनस्य ज्ञानित्वोपपादनाय फलशब्देन फलकामो लक्षणीय इत्युपपादनाय चेतरद् भाष्यमिति भावेनोक्तं **पदद्वयमिति** । यद्यपि "कामनिषेध एवात्र" इति भाष्येण माशब्दोऽपि व्याख्यात इति पदत्रयमिति वक्तव्यम् । तथाऽपि पदद्वयव्याख्यान इव न माशब्दव्याख्याने भाष्यकारस्य अतिप्रयत्न इति भावेनैवमुक्तम् ।

**भाष्यम्**

**अतः कर्माकरण एव प्रत्यवायः, न तु ज्ञानादिना वाऽकामनया फलाप्राप्तौ । अतः कर्मण्येवाधिकारः । अतस्तदेव कार्यम् । न तु कामेन ज्ञानादिनिषेधेन वा फलप्राप्तिः । कामवचनानां तु तात्पर्यं भगवतैवोक्तं 'रोचनार्थं फलश्रुतिः', 'यथा भैषज्यरोचनम्' इत्यादौ भागवते । अत एव कामी यजेतेत्यर्थः । न तु कामी भूत्वेत्यर्थः । 'निष्कामं ज्ञानपूर्वं च' इति वचनात् । वक्ष्यमाणेभ्यश्च । 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिभ्यश्च । अतो मा कर्मफलहेतुर्भूः । कर्मफलं तत्कृतौ हेतुर्यस्य स कर्मफलहेतुः । स मा भूः । तर्हि न करोमीत्यत आह— मा त इति । कर्माकरणे च स्नेहो मास्त्वित्यर्थः । अन्यफलाभावेऽपि मत्प्रसादाख्यफलभावात् । इच्छा च तस्य युक्ता । 'वृणीमहे ते परितोषणाय' इत्यादि महदाचारात् । अनिन्दनाद्, विशेषत इतरनिन्दनाच्च । सामान्यं विशेषो बाधत इति च प्रसिद्धं 'सर्वान् आनय, नैकं मैत्रं' इत्यादौ । अतो 'नैकात्मतां मे स्पृहयन्ति केचित्', भक्तिमन्विच्छन्तः', 'ब्रह्मजिज्ञासा', 'विज्ञाय प्रज्ञां' 'द्रष्टव्यः' इत्यादिवचनेभ्यः । स्वार्थसेवकं प्रति न तथा स्नेहः, किं ददामीत्युक्ते सेवादियाचकं प्रति बहुतरस्नेह इति लोकन्यायाच्च भक्तिज्ञानादिप्रार्थना कार्येति सिद्धम् ॥ ४७ ॥**

*प०टी०*— ततश्च कोऽर्थो वाक्यस्य ? इत्यत आह **अत इत्यादि** । **अकामनया फलाप्राप्तिः** इति पलाप्राप्तिनिमित्तेन कामनाभावेन प्रत्यवाय इत्यर्थः । **कामेन फलप्राप्तिः** इति फलप्राप्त्यर्थं काम इत्यर्थः । **ज्ञानादिना ज्ञानादिनिषेधेन** इति दृष्टान्तौ । कामस्याकर्तव्यत्वे किमिति फलश्रुतिः ? इत्यत आह **कामेति** । तर्हि 'स्वर्गकामो यजेत' इत्यादेः कोऽर्थः ? इत्यत आह **अत एवेति** । ननु निष्कामकर्म न श्रुतम् । अतो व्यर्थं कामवचनानां गतिकथनमित्यत आह **निष्काममिति** । 'कुरु

कर्माणि सङ्गं त्यक्त्वा' इत्यादिवक्ष्यमाणवचनानि । सर्वविध्यन्वयादन्यत्र कामविधिरित्याह **वसन्त इति** । तृतीयपादं व्याचष्टे **अत इति** । ननु कामस्याकर्तव्यत्वे किमिति स्वयं क्लेशरूपं कर्म करिष्यामि ? इत्याशङ्क्य परिहर्तुं साभिप्रायं चतुर्थपादमवतार्य व्याचष्टे **तर्हीति** । तदभिप्रायमाह **अन्येति** । ननु कामस्याकर्तव्यत्वात् कथं प्रसादकामना युक्ता ? इत्यत आह **इच्छेति** । निषिद्धकर्तॄणां महत्त्वमेव कथम् ? इत्यत आह **अनिन्दनाद्विशेषत इति** । तर्हि प्रसादवत् स्वर्गाद्यपि काम्यं स्यादित्यत आह **विशेषत इति** । कथं कर्मणो ज्ञानादत्यवरत्वम् ? इत्यत आह **विशेषत इति** । कामनिषेधप्रसादेच्छावचनयोः साम्यात् कथमेकेनान्यबाधः ? इत्यत आह **सामान्यमिति** ॥ ४७ ॥

***न०टी०***—यत एवं प्राप्तस्य निषेधः, अतः कर्माकरण एव प्रत्यवायोक्तिः, तदभावोक्तिश्च कामाकरणे । न त्वकाम्यफलाप्तौ घटते, यथा भगवदपरोक्षज्ञानादिनेत्याह **अत इति** । यदकरणे प्रत्यवायः तत्रैवाधिकारो नेतरत्रेत्याह **अतः कर्मण्येवेति** । यत्राधिकारः तदेव कार्यं नेतरदित्याह **अतस्तदेवेति** । अत्रापि **ज्ञानादिनिषेधेन** इत्येतद्दृष्टान्तत्वेन । ननु यदि कामनिषेधः तर्हि 'स्वर्गकामः' इत्यादीनां का गतिः ? इत्यत आह **कामवचनानामिति** । 'गुडकामः पिबौषधम्' इत्यादिवद्यागादिप्ररोचनार्थं स्वर्गकामादिकम् । उत्पन्नरुचिस्तु 'निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' इत्यादिवाक्यपर्यालोचनया स्वयमेवान्यकामं त्यजतीत्यभिप्रायः । यत एवं भैषज्यरोचनवदन्यार्थयागादिरुच्यर्थमुच्यते स्वर्गकामादिपदम् । न तु यागादिकं प्रति स्वर्गादेरेवोद्देश्यत्वेन । अतो यः स्वर्गादिकामः सोऽपि यजेतेति यागोऽस्यैव विधिरयम्, न तु कामी भूत्वेति मा कामस्यापीत्याह **अत एवेति** । ननु यदि वेदादावकाम्यत्वेनापि कर्मणा मुक्तिः स्यात्, तर्ह्येव कामवचनानां प्ररोचनार्थत्वम्, न तद्दृष्टान्तमात्रेणेत्यत आह **निष्काममित्यादिना** । 'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा', 'कृपणाः फलहेतवः' 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा' इत्यादिवक्ष्यमाणवचनेभ्यश्च निष्कामं कर्मावगम्यत इत्याह **वक्ष्यमाणेभ्यश्च इति** । सर्वविधिवाक्यान्वयाभावाच्च कामवचनानाम्, क्वचित्कामानां प्ररोचनार्थत्वसिद्धिरिति भावेनाह **वसन्ते वसन्त इति** । यत एवं फलेऽनधिकारः, अतो न तदुद्देशेन कर्म कुर्वन्तीति भावेन तृतीयांशमवतारयति **अत इति** । ननु तर्हीष्टसाधनत्वाभावात् स्वयमनिष्टत्वाच्च कथं कार्यं कर्मेति भावेनाशङ्क्य, साभिप्रायं चतुर्थांशमवतार्य व्याचष्टे **तर्हीति** । तदभिप्रायं कथयति **अन्यफलाभावेऽपीति** । ननु 'मा कर्मफलहेतुर्भूः' इति निषिद्ध्यमानत्वात् कथं भगवत्प्रसादोद्देशेनापि कर्मकरणम् ? इत्यत आह **इच्छेति** । स्वकृतं सुकृतजातमनूद्य 'तत् सर्वं तव परितोषणाय वृणीमहे' इति महापुरुषाणामाचारदर्शनात् । ननु 'कृपणाः फलहेतवः'

इति निन्द्यमानत्वात्, कथं प्रसादाख्यफलकामानां महत्त्वम् ? इत्यत आह **अनिन्दनाद्विशेषत इति** । नेयं भगवत्कामानां निन्दा, तद्विशेषशब्दाभावादिति भावः । इतरफलकामानां तु विशेषतोऽपि निन्दाऽस्तीत्याह **विशेषत इति** । इदं पदमुभयतः सम्बद्ध्यते । 'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।' 'कामात्मानः स्वर्गपराः' इति प्रमूढानां 'नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति' इत्यादि निन्दा । ननु फलमात्रनिषेधकभगवत्प्रसादाख्यफलकामविधायकयोः प्रामाण्याविशेषात् केनचिद्बाध्यत इत्यत आह **सामान्यमिति** । यत एवं सामान्यतः फलकामनिषेधेऽपि 'वृणीमहे' इति महदाचारेण भगवत्प्रसादाख्यफलकामनायामविरोधः, अतो 'नैकात्मताम्' इत्यादिवचनेभ्यो, लोकसिद्धन्यायाच्च, भक्तिज्ञानवैराग्यकामनायाः कर्तव्यत्वमेव सिद्ध्यतीत्याह **अत इति** । 'नैकात्मताम्' इत्यारभ्य 'भक्तिमन्विच्छन्तो गतिमण्वीं प्रयुङ्क्ते' इति भक्तेरेष्टव्यत्वमतिसूक्ष्मगतिप्रदानात् प्रतीयते । 'ब्रह्मजिज्ञासा' इत्यादिवचनत्रयेण ज्ञानस्येष्टव्यत्वं विधीयते । ज्ञातुमिच्छा हि जिज्ञासेति ॥ ४७ ॥

*प्र०दी०*— स्यादेतत् । 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कर्तव्यतयोच्यते । अतो न कामात्मनां निन्दोचितेति शङ्कायां किमेतत् 'कर्मण्येवाधिकारः' इत्यसङ्गतमुच्यते । यश्च कर्मवत् कामनाया अपि कार्यतां मन्यते, कुतस्तस्य फलकामनायामधिकाराभावः सिद्धः । 'फलेषु' इति लाक्षणिकपदप्रयोगे च किं निमित्तमित्याशङ्क्य पूर्वार्धं व्याचष्टे— **अत इति** । अत इत्यस्य वक्ष्यमाणेन 'भूत्वा' इत्यतः परेण 'इत्यर्थः' इत्यनेनान्वयः । अत उक्तन्यायेन पदद्वयस्य लाक्षणिकत्वे सतीत्यर्थः श्लोकार्धस्य सम्पद्यत इति शेषः । तत्र तावत् कर्मण्येवाधिकारः सर्ववर्णाश्रमिणां, न फलकामनायां इत्युक्तेऽर्थद्वये हेतुद्वयमाह— **कर्माकरण एवेति** । 'कुर्वन्नेवेह कर्माणि' इत्युक्त्वा ''एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'' इत्युक्तत्वात् कर्माकरण एव प्रत्यवायोऽनिष्टप्राप्तीष्टाप्राप्तिलक्षणः । न त्वकामनया प्रत्यवायः । प्रमाणाभावात् । ननु कामाभावे तत्फलानवाप्तेः कथं प्रत्यवायाभाव इत्यत उक्तम्— **फलाप्राप्ताविति** । काम्यफलाप्राप्तावपि न प्रत्यवाय इत्येतदुपपादनायोक्तं— **ज्ञानादिना वेति** । वाशब्द उपमायाम् । यथा ज्ञानादिना साधनेन मोक्षं गच्छतः स्वर्गाद्यलाभो न खेदहेतुः । महाफललाभेऽल्पहानेरकिञ्चित्करत्वात् । तथाऽकामनया फलाप्राप्तावपि न खेदः । निष्कामेन कर्मणा महाफलस्य ज्ञानादेर्लाभादिति भावः । ततः किमित्यत उक्तस्य हेतुद्वयस्य गीतोक्तं साध्यद्वयमाह— **अत इति** । 'न तु फलकामनायां' इति च वक्तव्यम् । यत एवं कर्माकरणे प्रत्यवायोऽतः कर्मण्येवाधिकारः । यतः कामाकरणे न प्रत्यवायोऽतो न कामेऽधिकार इत्यर्थः । ततः किं प्रकृत इत्यतः परमसाध्यद्वयमाह— **अत इति** । यतः कर्मण्ये-

वाधिकारोऽतस्तदेव कार्यम् । विधिविषय इत्यर्थः । यतः कामे नाधिकारोऽतः कामेन फलप्राप्तिः, फलप्राप्तये काम इति यावत्, न कार्यः । तत्र दृष्टान्तो ज्ञानादिनिषेधेन वेति । अत्रापि वाशब्द उपमायाम् । यथा प्रेक्षावता ज्ञानादिकं परित्यज्य फलप्राप्तिर्न क्रियते तथेत्यर्थः । पूर्वोक्त एवाभिप्रायः । यदि कर्मैव विधिविषयो न कामः तर्हि 'स्वर्गकामो यजेत' इत्यादिवाक्यानां किं तात्पर्यमित्यत आह— **कामवचनानां त्विति** । अनादिविषयवासनावासितान्तःकरणा न सहसा ज्ञानसाधने कर्मणि प्रवर्तयितुं शक्यन्ते । अतस्तेषां कर्मण्यभिरुचिजननार्थं 'स्वर्गकामः' इत्यादिफलश्रुतिः प्रवृत्ता । कर्मणि प्रवृत्तांस्तु शनैः कामं त्याजयिष्यामीत्यभिप्रायवती । यथा फलेन प्रलोभ्य बालानां भैषज्यरोचनं क्रियते तथेत्यर्थः । अस्त्वेवं तात्पर्ये, योजना तु कथमित्यत आह— **अत एवेति** । यत एवं न्यायेन कर्मण एव कार्यत्वं न कामस्येति प्राप्तमतः 'कामी यजेत' इत्येव श्रुतेरर्थः । कामानुवादेन यजनं विधीयत इति यावत् । एवशब्दव्यावर्त्यमाह— **न तु इति** । कामविशिष्टयजनविधानं तु नेत्यर्थः । एतदुक्तं भवति । विशिष्टविधानशङ्कायां नेदं विशिष्टविधानं किन्तु कामानुवादेन यजनस्यैवेति परमसाध्यमत्राध्याहार्यम् । तत्कुत इत्यपेक्षायां कर्मण एव कार्यत्वात् कामस्य तदभावादिति हेतुवचनं चोपस्कर्तव्यम् । तदपि कुत इत्यपेक्षायां कर्मण्ये-वाधिकारो न फलकाम इति गीतोक्तयोः हेत्वोरुपस्थानम् । एतदपि कुत इत्यपेक्षायां कर्मकामाकरणयोः प्रत्यवायभावाभावयोः हेत्वोरध्याहारः । एतदुपपादनाय लाक्षणिकफलशब्दोपादानमिति ।

भास्करस्त्वाह— नित्यनैमित्तिकान्येव कर्माणि मुमुक्षुणा निष्कामतया कर्तव्यानि । न तु ज्योतिष्टोमादीनि कामाधिकारे विहितानि । तेषां निष्कामतया करणे प्रमाणाभावात् । अतोऽसदिदं व्याख्यानमिति । तत्राह— **निष्काममिति** । यज्ञादिकमेव प्रक्रम्य तस्य निष्कामतयाऽनुष्ठानवचनाद्युक्तमिदं व्याख्यानम् । ''एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा'' इत्यादिवक्ष्यमाणवचनेभ्यश्च । न चैतानि नित्यनैमित्तिकविषयाणि । तत्र कामप्रसक्त्यभावेन तत्प्रतिषेधानुपपत्तेः । किं च नित्यनैमित्तिकातिरिक्तस्य ज्योतिर्नामकस्य यज्ञस्य फलकामनया विना विधानाच्च । ज्योतिष्टोमस्यैवायं गुणविधानायानुवाद इति तु न सम्मतम् । आदिपदेन 'विश्वजिता यजेत' इत्यादेर्ग्रहणम् । तत्रापि स्वर्गकामपदाध्याहारो निर्णीत इति चेत्सत्यम् । कामिनां तु तथा । स्ववचनेनानुक्तौ तु कारणमिहोक्तमिति ।

ननु पूर्वार्धेनैव शङ्काया निरस्तत्वात् किमुत्तरार्धेनेत्यतः क्रमेण पादद्वयोपयोगमाह— **अत इति** । फलकामस्याकर्तव्यत्वात् । कर्मफलहेतुत्वमप्रसक्तं किमिति निषिध्यत इत्यत आह— **कर्मफलमिति** । शाकपार्थिवादिवत् तत्कृतिपदलोपोऽत्रेति भावः । **तर्हीति** । यदि फलं नाकाङ्क्ष्य-

मित्यर्थः । न करोमि स्वयं क्लेशरूपत्वादिति भावः । अकर्मशब्दस्य निषिद्धेऽपि प्रवृत्तेः सङ्गशब्दस्य चानेकार्थत्वात् प्रकृतोपयुक्ततया व्याचष्टे— **कर्मेति** । सोपपत्तिकमाक्षिप्ते कथमिदमुत्तरमित्यतो भगवदभिप्रायमाह— **अन्येति** । प्रसादशब्देन भक्तिज्ञानादिकमुपलक्ष्यते । एवं तर्हि भगवत्प्रसादादीच्छया कर्म कर्तव्यमित्युक्तं स्यात् । न च तद्युक्तम् । कामस्य निन्दितत्वात् । अन्यथा स्वर्गादिकामनाया अप्यनिषिद्धत्वप्रसङ्गात् । अतो नेदं भगवदभिप्रायवर्णनं युक्तमित्यत आह— **इच्छा चेति** । ते तव परितोषणाय सकलं कर्म वृणीमह इति महदाचारेण भगवत्परितोषणस्य कर्तव्यतावगमात् । नन्वकर्तव्यतायामपि कामनिन्दावचनं प्रमाणमस्तीत्युक्तमित्यत आह— **अनिन्दनाद्विशेषत इति** । यथा महदाचारो विशेषविषयो न तथा कामनिन्दावचनम् । किन्तु सामान्यविषयमेव । अतो महदाचारेण बाध्यत इति भावः । तर्हि तद्वत्स्वर्गादिकामनाऽपि कार्येति यदुक्तं तत्राह— **विशेषत इति** । चशब्देन प्रमाणाभावं समुच्चिनोति । अस्त्वाचारो विशेषविषयः । कामनिन्दावचनं च सामान्यविषयम् । तथापि कुतो बाध्य-बाधकभाव इत्यत आह— **सामान्यमिति** । सामान्यविशेषशब्दौ तद्विषयप्रमाणपरौ । चशब्दाद्विरोधे सति । उक्तं प्रमाणमुपसंहरन् प्रमाणान्तरा-ण्यप्यत्राह— **अत इति** । एकात्मतां सायुज्यम् । अस्यैव विशेषोऽयं भक्तिमन्विच्छन्त इति । ननु ब्रह्मजिज्ञासाशब्दो न ज्ञानेच्छापरः । किन्तु विचारस्योपलक्षकः । सत्यम् । तथापि तत्पूर्वको विचारो लक्ष्यते । अन्यथा सम्बन्धाभावात् । लोकसिद्धन्यायाल्लोकसिद्धव्याप्तिकानुमानात् । ॥ ४७ ॥

*भा०दी०*— **हेतुद्वयमिति** । प्रत्यवाय इत्यन्तेन को हेतुः । न त्वकामनया फलाप्राप्तावित्यनेनापर इति क्रमेणार्थद्वये हेतुद्वयमिति भावेनाद्यं तावत् व्यनक्ति **कुर्वन्नेवेति** । **इह** मानुषादिजन्मनि । **इत्युक्त्येति** ईशावास्ये । एवं कर्मणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्मपापं न लिप्यते इतोऽन्यथा कर्माकरणे पापं कर्म न लिप्यत इति नास्तीति भगवत्पूजात्मककर्माकरणेन अर्थस्योक्तत्वादित्यर्थः । प्रत्यवायपदानुषङ्गेणान्तिमहेतुं व्यनक्ति **न त्विति** । वापदं भिन्नक्रममुपेत्याह **ज्ञानादिना वेति** । **तावता नन्वित्यादिना** । कृतचोद्यस्य कः परिहार इत्यतोऽभिप्रायं व्यनक्ति **यथेति** । साध्यद्वयमयुक्तं भाष्ये द्वितीयसाध्याप्रतीतेरित्यत आह **न तु फलकामनायामिति** । **वक्तव्यमिति** । अधिकारपदानन्तरमिति भावः । अतः पदस्योभयत्रान्वयमुपेत्य यथायोगमर्थमाह **यत एवमिति** । स्वर्गकामो यजेतेति वाक्यस्य विशिष्टविधित्वभ्रान्तिनिरासेन यथावदर्थकत्वोक्तिर्बाधस्य तदनुगुणतया कार्यपदस्यार्थमाह **विधिविषय इत्यर्थ इति** । **यतः काम इति** । नाधिकार इति पदविभागः । **न कार्य इति** । यजेतेति विधिविषयः स्वर्गकामेनेत्यर्थः । **फलप्राप्तिः** स्वर्गाद्यल्प-

फलप्राप्तिरित्यर्थः । **पूर्वोक्त एवेति** । महाफलज्ञानादिलाभेऽल्पफलस्वर्गादिहानेरकिञ्चित्करत्वादियुक्त एवेत्यर्थः । **इत्यभिप्रायवतीति** । श्रुतिरिति योज्यम् । **तात्पर्यमिति** । स्वर्गकामो यजेतेति वाक्यस्येति योज्यम् । **यत एवं न्यायेनेति** । कर्मकामविषयकारेण प्रत्यवायभावाभावाहेतुभ्यां कर्मकामयोरधिकारभावाभाव इत्युक्तन्यायेनेत्यर्थः । कार्यत्वं विधिविषयत्वमित्यर्थः । **कर्मण्येवेति** । पूर्वार्धस्वर्गकामवाक्यस्य व्याख्यानपरमित्येतत् । अतः कर्मेत्यादिना स्वर्गकाम श्रुतेरित्यर्थः इति पूर्वार्धस्यार्थः । सम्पद्यत इत्यन्तेन भाष्येणोक्तमर्थं हृद्यारोहाय स्पष्टमाह **एतदुक्तमित्यादिना अध्याहार्यमित्यन्तेन** । **अत्रेति** । कर्मण्येवेत्यर्धश्लोके फले बिम्बस्य कामोपलक्षकत्वान्न फलकाम इति गीतोक्तेत्युक्तम् । **एतदुपपादनायेति** । कर्मकामविषयकाकरणयोः प्रत्यवायभावाभावहेतुककर्माधिकारकामाधिकारसाधनकर्मकामकार्यत्वाकार्यत्वनिमित्तके यजनविधानकामविधाने इत्येतदुपपादनाय इत्यर्थः । एतेन लाक्षणिकशब्दप्रयोगेन किं प्रयोजनमिति चोद्यं समाहितं ध्येयम् । कामाधिकार इति विषयसप्तमी । **वक्ष्यमाणेति** । अष्टादशे वक्ष्यमाणेत्यर्थः । **तत्प्रतिषेधे** सङ्गं त्यक्त्वा फलानि चेति प्रतिषेधस्य नित्यनैमित्तकयोः कामप्रसक्त्यभावेन अनुपपत्तेरित्यर्थः । वसन्त इत्यादिभाष्यार्थमाह **किञ्चेति** । **ज्योतिष्टोमस्यैवेति** । ज्योतिषा ज्योतिष्टोमेनेति यत् तत् वसन्ते इति गुणशब्दितवसन्तकालाख्याङ्गविधिरेवायम् । तथा च कामाधिकारकमेवेदमपि कर्मेति भावः । **न सम्मतमिति** । तथात्वे वीप्सा न स्यादिति भावः । **निर्णीत इति** । पूर्वतन्त्रीयचतुर्थाध्यायतृतीयपादे स स्वर्गः सर्वान्प्रत्यविशिष्टत्वादिति जैमिनिसूत्रे निर्णीतमित्यर्थः । **तथेति** । अध्याहारेण कामाधिकारत्वनिर्णय इत्यर्थः । **स्ववचनेनेति** । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादाविव 'विश्वजिता स्वर्गकामो यजेते'ति साक्षादनुक्तौ निष्कामनया भगवत्पूजात्वेन अनुष्ठानरूपं कारणमिह ग्रन्थे उक्तमित्यर्थः । **शाकपार्थिवादिवदिति** । शाकप्रियः पार्थिवः शाकपार्थिव इत्यादौ यथा मध्यमपदलोपस्तथेत्यर्थः । **सोपपत्तिकमिति** । क्लेशरूपत्वाख्योपपत्तिसहितं यथा भवति तथेत्यर्थः । केचिद्भक्तिमन्विच्छन्त इति वक्ष्यमाणानुरोधात् । ज्ञानं भक्तिं हरेस्तृप्तिं विना विष्णोरपि क्वचित् । नाकाङ्क्ष्यमित्युक्त्यनुरोधाच्चाह **भक्तिज्ञानादिकमपीति** । वैराग्यमादिपदार्थः । **इति महदाचारेणेति** । यं नः स्वधीतं गुरवः प्रसादिताः विप्राश्च वृद्धाश्च सदानुवृत्त्या । अर्या अनाथा सुहृदो भ्रातरश्च सर्वाणि भूतान्यनुयैव । 'यं नः स्वधीतं तप एतदीशनिरन्धसां काल यदभ्रमप्सु । सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे' इति चतुर्थस्कन्धे एकोनविंशेऽध्याये महता प्रचेतसामाचारादित्यर्थः । नैकात्मनामित्यस्य प्रकृतोपयोगमाह **अस्यैव विशेषोऽयमिति** । तथा च विशेषेण न स्पृहयन्तीति सामान्यं बाध्यत इति भावः । नेदं ज्ञानकामकर्तव्यतार्था प्रमाणमित्याशङ्क्य समाधत्ते **नन्वित्यादिना** । **अन्यथेति** । ज्ञानेच्छारूपमुख्यार्थाप्रतीतौ मुख्यार्थसम्बन्धाभावात् ज्ञानहेतुविचारलक्षणैव न स्यादित्यर्थः ॥ ४७ ॥

*भा०र०*— विशिष्टविधित्वं मन्यते पूर्वपक्षीति प्रागुक्तं विवृण्वन्नुत्तरभाष्यमवतारयति **स्यादेतदिति**। पूर्वमेतद्वाक्यार्थस्यानुक्तत्वान्न तदुपसंहारार्थातःशब्दो युक्त इत्याशङ्क्य सप्तम्यन्तादेतच्छब्दात् "आद्यादिभ्य उपसङ्ख्यानम्" इति तसिप्रत्यय इति भावेन भाष्यमनूद्य व्याचष्टे **अत उक्तन्यायेन इति**। **पदद्वयस्य** अत इति पदस्य, फलपदस्य च सर्ववर्णाश्रमोपलक्षणत्वेन, फलकामोपलक्षणत्वेन च लक्षणया प्रतिपादकत्वे सतीत्यर्थः। 'इत्यर्थः' इति भाष्यानन्तरं पूरणीयमाह **श्लोकार्धस्येति**। त इत्यस्योपलक्षितार्थोक्तिः **सर्ववर्णाश्रमिणामिति**। "मा फलेषु" इत्यस्य लक्षितार्थोक्तिः **न फलकामनायामिति**। अर्जुनादिसर्ववर्णाश्रमिणां कर्मण्येवाधिकारः कर्माकरणे प्रत्यवाय इत्यर्थो हि विवक्षितः। न चासौ युक्तः। ज्ञानिनां पापलेपाभावात्। ज्योतिष्टोमाद्यननुष्ठाने प्रत्यवायायोगाच्चेत्यत आह **अनिष्टप्राप्तीष्टाप्राप्तीति**। अज्ञानिनः स्वोचितकर्माकरणे प्रागुत्तरपापबाधरूपानिष्टप्राप्तिः, ज्ञानलक्षणेष्टाप्राप्तिश्च। तथा चोक्तमीशावास्यटीकायाम्— "शतं समाः शतवर्षाणि इह मानुषादिजन्मनि यज्जिजीविषेत् जीवितुमिच्छेत् तत् कर्माणि स्वोचितानि कुर्वन्नेव आमरणं भगवत्पूजात्मकान्यसङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत्। एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि प्रागुत्तराणि पापानि न बाधन्ते। ततश्च ज्ञानाधिकारी स भवतीति यावत्। इतः कर्मकरणादन्यथा स्वोचितकर्माकरणे कर्म न लिप्यत इति नास्ति। भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव। ततश्चासौ ज्ञाने नाधिक्रियते। अतः कर्माणि कार्याणि" इति। ज्ञानिनोऽपि मौक्तानन्दह्रासरूपानिष्टप्राप्तिः, यावत्स्वरूपाविर्भावरूपेष्टाप्राप्तिश्चास्ति। तथा च तत्त्वप्रकाशिकायां "एवं कर्मकरणे त्वयि कर्म न लिप्यते। इतोऽन्यथा अकरणे नरे ज्ञानिन्यपि त्वयि पापकर्म न लिप्यत इति नास्ति" इति। एवं च ज्ञान्यज्ञान्युभयपरत्वमस्य मन्त्रस्येति भावेन अस्योदाहरणमुपपन्नमिति ज्ञेयम्। एतेन ज्ञानिनां पापलेपाभावादिति प्रत्युक्तम्। फलाप्राप्तावित्यत्रोपस्कर्तव्यमाह **काम्यफलेति**। **प्रत्यवायः** इष्टाप्राप्तिलक्षणः। "वा विकल्पोपमानयोः" इत्यभिधानादाह **वाशब्द** इति। 'उपमायाम्' इत्येतद् विवृणोति **यथेति**। **खेदहेतुः** अनलम्बुद्धिहेतुः। **उक्तहेतुद्वयस्य** प्रत्यवायभावाभावरूपहेतुद्वयस्य। भाष्येऽनुक्तेर्गीतोक्तस्य "मा फलेषु" इति साध्याभिधानस्य तात्पर्यं वदन् शेषमाह **न त्विति**॥ 'अतः' इति भाष्यमावर्तयन् तत्प्रतियोग्याह **यत एवमिति**। प्रकृते स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कार्यतयोच्यत इति कृतचोद्ये। **तदेव** कर्मैव। कार्यं करणीयमिति व्याख्याने कृतिकर्मत्वस्य कामनायामपि साम्येन प्रकृतासामञ्जस्यादाह विधिविषय इति। लिङ्लोट्तव्यप्रत्ययपञ्चमलकारैर्विहितहेतुतया बोधनीय इत्यर्थः। **यतः कामे नाधिकार इति**। कामे कामनायां यतोऽधिकारो नेत्यन्वयः। कामाकर्तव्ये हेतोरुक्तत्वात् कामो न कार्य इति

फलप्राप्तिरित्यर्थः । **पूर्वोक्त एवेति** । महाफलज्ञानादिलाभेऽल्पफलस्वर्गादिहानेरकिञ्चित्करत्वादियुक्त एवेत्यर्थः । **इत्यभिप्रायवतीति** । श्रुतिरिति योज्यम् । **तात्पर्यमिति** । स्वर्गकामो यजेतेति वाक्यस्येति योज्यम् । **यत एवं न्यायेनेति** । कर्मकामविषयकारेण प्रत्यवायभावाभावाहेतुभ्यां कर्मकामयोरधिकारभावाभाव इत्युक्तन्यायेनेत्यर्थः । कार्यत्वं विधिविषयत्वमित्यर्थः । **कर्मण्येवेति** । पूर्वार्धस्वर्गकामवाक्यस्य व्याख्यानपरमित्येतत् । अतः कर्मेत्यादिना स्वर्गकाम श्रुतेरित्यर्थः इति पूर्वार्धस्यार्थः । सम्पद्यत इत्यन्तेन भाष्येणोक्तमर्थं हृद्यारोहाय स्पष्टमाह **एतदुक्तमित्यादिना अध्याहार्यमित्यन्तेन** । **अत्रेति** । कर्मण्येवेत्यर्धश्लोके फले बिम्बस्य कामोपलक्षकत्वान्न फलकाम इति गीतोक्तेत्युक्तम् । **एतदुपपादनायेति** । कर्मकामविषयकाकरणयोः प्रत्यवायभावाभावहेतुककर्माधिकारकामाधिकारसाधनकर्मकामकार्यत्वाकार्यत्वनिमित्तके यजनविधानकामविधाने इत्येतदुपपादनाय इत्यर्थः । एतेन लाक्षणिकशब्दप्रयोगेन किं प्रयोजनमिति चोद्यं समाहितं ध्येयम् । कामाधिकार इति विषयसप्तमी । **वक्ष्यमाणेति** । अष्टादशे वक्ष्यमाणेत्यर्थः । **तत्प्रतिषेधे** सङ्गं त्यक्त्वा फलानि चेति प्रतिषेधस्य नित्यनैमित्तकयोः कामप्रसक्त्यभावेन अनुपपत्तेरित्यर्थः । वसन्त इत्यादिभाष्यार्थमाह **किञ्चेति** । **ज्योतिष्टोमस्यैवेति** । ज्योतिषा ज्योतिष्टोमेनेति यत् तत् वसन्ते इति गुणशब्दितवसन्तकालाख्याङ्गविधिरेवायम् । तथा च कामाधिकारकमेवेदमपि कर्मेति भावः । **न सम्मतमिति** । तथात्वे वीप्सा न स्यादिति भावः । **निर्णीत इति** । पूर्वतन्त्रीयचतुर्थाध्यायतृतीयपादे स स्वर्गः सर्वान्प्रत्यविशिष्टत्वादिति जैमिनिसूत्रे निर्णीतमित्यर्थः । **तथेति** । अध्याहारेण कामाधिकारत्वनिर्णय इत्यर्थः । **स्ववचनेनेति** । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादाविव 'विश्वजिता स्वर्गकामो यजेते'ति साक्षादनुक्तौ निष्कामनया भगवत्पूजात्वेन अनुष्ठानरूपं कारणमिह ग्रन्थे उक्तमित्यर्थः । **शाकपार्थिवादिवदिति** । शाकप्रियः पार्थिवः शाकपार्थिव इत्यादौ यथा मध्यमपदलोपस्तथेत्यर्थः । **सोपपत्तिकमिति** । क्लेशरूपत्वाख्योपपत्तिसहितं यथा भवति तथेत्यर्थः । केचिद्भक्तिमन्विच्छन्त इति वक्ष्यमाणानुरोधात् । ज्ञानं भक्तिं हरेस्तृप्तिं विना विष्णोरपि क्वचित् । नाकाङ्क्षमित्युक्त्यनुरोधाच्चाह **भक्तिज्ञानादिकमपीति** । वैराग्यमादिपदार्थः । **इति महदाचारेणेति** । यं नः स्वधीतं गुरवः प्रसादिताः विप्राश्च वृद्धाश्च सदानुवृत्त्या । अर्या अनाथा सुहृदो भ्रातरश्च सर्वाणि भूतान्यनुयैव । 'यं नः स्वधीतं तप एतदीशनिरन्धसां काल यदभ्रमप्सु । सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे' इति चतुर्थस्कन्धे एकोनविंशेऽध्याये महता प्रचेतसामाचारादित्यर्थः । नैकात्मनामित्यस्य प्रकृतोपयोगमाह **अस्यैव विशेषोऽयमिति** । तथा च विशेषेण न स्पृहयन्तीति सामान्यं बाध्यत इति भावः । नेदं ज्ञानकामकर्तव्यतार्थां प्रमाणमित्याशङ्क्य समाधत्ते **नन्वित्यादिना** । **अन्यथेति** । ज्ञानेच्छारूपमुख्यार्थाप्रतीतौ मुख्यार्थसम्बन्धाभावात् ज्ञानहेतुविचारलक्षणैव न स्यादित्यर्थः ॥ ४७ ॥

*भा०र०*— विशिष्टविधित्वं मन्यते पूर्वपक्षीति प्रागुक्तं विवृण्वन्नुत्तरभाष्यमवतारयति **स्यादेतदिति**। पूर्वमेतद्वाक्यार्थस्यानुक्तत्वान्न तदुपसंहारार्थातःशब्दो युक्त इत्याशङ्क्य सप्तम्यन्तादेतच्छब्दात् "आद्यादिभ्य उपसङ्ख्यानम्" इति तसिप्रत्यय इति भावेन भाष्यमनूद्य व्याचष्टे **अत उक्तन्यायेन इति**। **पदद्वयस्य** अत इति पदस्य, फलपदस्य च सर्ववर्णाश्रमोपलक्षणत्वेन, फलकामोपलक्षणत्वेन च लक्षणया प्रतिपादकत्वे सतीत्यर्थः। 'इत्यर्थः' इति भाष्यानन्तरं पूरणीयमाह **श्लोकार्धस्येति**। त इत्यस्योपलक्षितार्थोक्तिः **सर्ववर्णाश्रमिणामिति**। "मा फलेषु" इत्यस्य लक्षितार्थोक्तिः **न फलकामनायामिति**। अर्जुनादिसर्ववर्णाश्रमिणां कर्मण्येवाधिकारः कर्माकरणे प्रत्यवाय इत्यर्थो हि विवक्षितः। न चासौ युक्तः। ज्ञानिनां पापलेपाभावात्। ज्योतिष्टोमाद्यननुष्ठाने प्रत्यवायायोगाच्चेत्यत आह **अनिष्टप्राप्तीष्टाप्राप्तीति**। अज्ञानिनः स्वोचितकर्माकरणे प्रागुत्तरपापबाधरूपानिष्टप्राप्तिः, ज्ञानलक्षणेष्टाप्राप्तिश्च। तथा चोक्तमीशावास्यटीकायाम्— "शतं समाः शतवर्षाणि इह मानुषादिजन्मनि यज्जिजीविषेत् जीवितुमिच्छेत् तत् कर्माणि स्वोचितानि कुर्वन्नेव आमरणं भगवत्पूजात्मकान्यसङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत्। एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि प्रागुत्तराणि पापानि न बाधन्ते। ततश्च ज्ञानाधिकारी स भवतीति यावत्। इतः कर्मकरणादन्यथा स्वोचितकर्माकरणे कर्म न लिप्यत इति नास्ति। भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव। ततश्चासौ ज्ञाने नाधिक्रियते। अतः कर्माणि कार्याणि" इति। ज्ञानिनोऽपि मौक्तानन्दह्रासरूपानिष्टप्राप्तिः, यावत्स्वरूपाविर्भावरूपेष्टाप्राप्तिश्चास्ति। तथा च तत्त्वप्रकाशिकायां "एवं कर्मकरणे त्वयि कर्म न लिप्यते। इतोऽन्यथा अकरणे नरे ज्ञानिन्यपि त्वयि पापकर्म न लिप्यत इति नास्ति" इति। एवं च ज्ञान्यज्ञान्युभयपरत्वमस्य मन्त्रस्येति भावेन अस्योदाहरणमुपपन्नमिति ज्ञेयम्। एतेन ज्ञानिनां पापलेपाभावादिति प्रत्युक्तम्। फलाप्राप्तावित्यत्रोपस्कर्तव्यमाह **काम्यफलेति**। **प्रत्यवायः** इष्टाप्राप्तिलक्षणः। "वा विकल्पोपमानयोः" इत्यभिधानादाह **वाशब्द** इति। 'उपमायाम्' इत्येतद् विवृणोति **यथेति**। **खेदहेतुः** अनलम्बुद्धिहेतुः। **उक्तहेतुद्वयस्य** प्रत्यवायभावाभावरूपहेतुद्वयस्य। भाष्येऽनुक्तेर्गीतोक्तस्य "मा फलेषु" इति साध्याभिधानस्य तात्पर्यं वदन् शेषमाह **न त्विति**॥ 'अतः' इति भाष्यमावर्तयन् तत्प्रतियोग्याह **यत एवमिति**। प्रकृते स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कार्यतयोच्यत इति कृतचोद्ये। **तदेव** कर्मैव। कार्यं करणीयमिति व्याख्याने कृतिकर्मत्वस्य कामनायामपि साम्येन प्रकृतासामञ्जस्यादाह विधिविषय इति। लिङ्लोट्तव्यप्रत्ययपञ्चमलकारैर्विहितहेतुतया बोधनीय इत्यर्थः। **यतः कामे नाधिकार इति**। कामे कामनायां यतोऽधिकारो नेत्यन्वयः। कामाकर्तव्ये हेतोरुक्तत्वात् कामो न कार्य इति

भाषणीये कामेन फलप्राप्तिरिति कथं साध्यनिर्देश इत्यत आह **फलप्राप्तये काम इति यावदिति**। स्वर्गप्राप्तये यागो यथा साधनत्वेनेष्यते न तथा फलप्राप्तये काम एष्टव्य इत्यर्थः। **ज्ञानादिकमिति**। ज्ञानादिसाधनीभूतं निष्कामकर्माकृत्वेत्यर्थः। निवृत्तकर्माण्यननुष्ठाय केवलकाम्यकर्मकरणेन स्वर्गादिसम्पादनं यथाऽप्रेक्षापूर्वकारिणा क्रियते तथा प्रेक्षावता ज्ञानादिसाधननिष्कामकर्माकृत्वा काम्यकर्मकरणेन स्वर्गादिफलं न सम्पाद्यमिति भावः। कर्मैव कार्यं कामना तु न कार्येति यदि तर्हि कामितफलाप्राप्त्या खेदः स्यादित्यत आह **पूर्वोक्त एवेति**। कामनया स्वर्गाद्यलाभो न खेदहेतुः। महाफललाभेऽल्पफलहानेरकिञ्चित्करत्वादिति पूर्वोक्त एवाभिप्राय इत्यर्थः। **इत्यादिवाक्यानामिति**। तैः स्वर्गकामनाविशिष्टं यजनादिकं कर्म कार्यतयोच्यत इति वचनव्यक्त्यभ्युपगमादिति भावः। **अनादीति**। अनादिकालतो वृत्ता या विषयवासना तया वासितमनुषक्तमन्तःकरणं येषां पुंसां ते तथा। कर्मणि अनभिसंहितफले निवृत्तलक्षणे। रोचनार्थमित्यस्यार्थः **कर्मण्यभिरुचिजननार्थमिति**॥ 'फलश्रुतिः' इत्यत्र सोपस्कारं शेषमाह **स्वर्गकाम इत्यादिफलश्रुतिः प्रवृत्तेति**। श्रुतितात्पर्यं विशदयति **कर्माणीति**। अभिप्रायवती सा श्रुतिः प्रवृत्तेति वर्तते। **भैषज्यरोचनम्** औषधेऽभिरुचिजननम्। **न्यायेनेति**। यत एवं कर्माकरणे प्रत्यवायः अतः कर्मण्येवाधिकारः। यतः कामाकरणे न प्रत्यवायः अतो न कामेऽधिकार इति प्रागुक्तन्यायेनेत्यर्थः। कार्यत्वं विधिविषयत्वम्। विशिष्टविधित्वभ्रान्तिनिरासाय भाष्यभावमाह **कामानुवादेनेति**। **एवशब्देति**। एतेन "अत एव" इति भाष्यस्थैवशब्दो यजेतेत्येवार्थ इति सम्बद्ध्यत इत्युक्तं भवति। स्यादेतदित्यादिना कृतचोद्यत्रयस्य निरासं गीतारूढं दर्शयितुं भाष्यभावमाह **एतदुक्तमिति**। **कामानुवादेन यजनस्यैवेति**। विधानमित्युपस्कर्तव्यम्। फलकामस्य रागशब्दितस्य विषयसौन्दर्यलभ्यस्य पुरुषेषु स्वतस्सिद्धस्य न विधिविषयत्वम्। "अप्राप्ते शास्त्रमर्थवत्" इति न्यायात्। तथा च यः कामी स यजेतेति कामस्य अनुवाद्यत्वमेव। अनुवाद्यत्वविधेयत्वे च विरुद्धे अतः कामस्यानुवादेन यजनस्यैवाप्राप्तस्य विधिविषयत्वमित्यर्थः।

ननु "सोमेन यजेत" इत्यत्र मत्वर्थलक्षणया "सोमवता यागेन भावयेत्" इति वचनव्यक्तिः। तत्र "किं भावयेत्" इति भाव्याकाङ्क्षायां "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्येन उत्पत्तिवाक्यप्राप्तसोमयागानुवादेन स्वर्गलक्षणफलसम्बन्धमात्रं विधीयते। "ज्योतिष्टोमनामकेन यागेन स्वर्गं भावयेत्" इति हि मीमांसकप्रक्रिया। तत्कथं यजनस्यैव विधानमित्युक्तमिति चेत्, उच्यते। क्रिययैव सह विधेरन्वय इति नियमात् क्रियोपरक्ता भावना विधेया। एवञ्च प्रतीतितो विशिष्टविधिः, फलतस्तु फलविधिरिति न मीमांसकप्रक्रियाविरोधः। कामस्यानुवाद्यत्वमनन्तरमेवोक्त-

मिति । तत् कुतः ? न कामो विधेयः, किन्तु यजनादिकर्मैव विधेयमिति कस्माद् हेतोरवगन्तव्यमित्यर्थः । **तदपि** कर्मण एव कार्यत्वं कामस्य तदभाव इत्येतदपि । **कर्मकामाकरणयोः** कर्माकरणकामाकरणयोः । **प्रत्यवायभावाभावयोः** कर्माकरणे प्रत्यवायभावात् कामाकरणे प्रत्यवायाभावादिति हेत्वोरित्यर्थः । **एतदुपपादनायेति** । काम्यफलाख्येष्टानवाप्तिरूपप्रत्यवायाभावलक्षणप्रयोजनोपपादनाय 'फलेषु' इति गीतायां लाक्षणिकफलशब्द उपात्त इत्यर्थः । उपपादनप्रकारस्तु फलेष्वित्यनुक्त्वा कामनायामित्येवोक्तौ फलानुपस्थित्या कामनायामधिकाराभावे हेतुतयाऽकरणे प्रत्यवायाभावोक्तौ काम्यफलरूपेष्टानवाप्तिलक्षणप्रत्यवायसद्भावशङ्कानुदयेन तदभावप्रतिपादनानवकाशः । फलेष्वित्युक्तौ फलोपस्थित्योक्तशङ्कोदयेन "फलाप्राप्तौ ज्ञानादिना वा" इति भाष्येण तदभावप्रतिपादनसम्भव इति । कर्मकामसम्बन्ध्यकरणकरणनिमित्तप्रत्यवायभावाभावहेतुककर्माधिकारकामनाधिकारसाधनकर्मकार्यत्वाकार्यत्वकारणकयजनविधानाकामाविधाने इत्येवं प्रणाड्युपपादनायेत्यर्थ इति तु स्वामिनः । **नित्यनैमित्तिकानीति** । यदकरणे प्रत्यवायो ब्राह्मण्यादिकमेव निमित्तीकृत्य विहितं तन्नित्यम् । यथा सन्ध्यावन्दनादि । यदकरणे प्रत्यवाय आगन्तुकं निमित्तीकृत्य विहितं तन्नैमित्तिकम् । यथोपरागस्नानादीति नित्यनैमित्तिकानि विविच्य ज्ञातव्यानीति । कामाधिकारे विहितानि कामिनमधिकारिणं प्रति विहितानीति हेत्वर्थगर्भं विशेषणम् । यज्ञादिकमेव कामाधिकारविहितज्योतिष्टोमादिकमेवेत्युक्तम् । अस्य वचनस्य "एतान्यपि तु कर्माणि" इत्यादिवचनानां च नित्यादिविषयत्वोपपत्तेरित्याशङ्क्य निषेधति **न चैतानि नित्येति** । **तत्र** कामपदरहितनित्यनैमित्तिककर्मसु । फलश्रवणाभावस्य तत्त्वेनैव सिद्धत्वादिति भावः । 'वसन्ते' इत्यादिभाष्ये चशब्दादाह **किञ्चेति** । अयं च निपातसमुदायो युक्त्यन्तरद्योतकः । तस्य विवरणम् **नित्यनैमित्तिकातिरिक्तस्य ज्योतिर्नामकस्य यज्ञस्य फलकामनया विनाऽभिधानाच्चेति** । मुमुक्षुणा निष्कामतयाऽनुष्ठेयं ज्योतिरादिकर्मास्तीति विज्ञायत इति युक्तमिदं व्याख्यानमिति सम्बन्धः । न चेदं सन्ध्यावन्दनादिवदवश्यानुष्ठेयम् । प्रत्यवायाश्रवणादिति भावः । कामाधिकारविहितज्योतिष्टोमवाक्यैकवाक्यत्वादस्य कामनया विना विहितत्वमेव नास्तीति शङ्कते **ज्योतिष्टोमस्येति** । एवशब्देन नात्र यज्ञान्तरं विधित्सितमित्यभिप्रैति । ज्योतिषा ज्योतिष्टोमेन यजेतेति यत् तद्वसन्त इति वसन्तकाललक्षणगुणविधानाय । अयं ज्योतिःशब्दः अनुवादः । तथा चैतदपि कामाधिकारविहितमेवेति भावः । **न सम्मतमिति** । अन्यथा वीप्सा न स्यादिति भावः ।

नन्वानन्दमयाधिकरणसुधायां "ज्योतिष्टोमाधिकारे 'वसन्ते वसन्ते ज्योतिषा यजेत' इति कालविशेषविधिपरे वाक्ये ज्योतिःशब्दो ज्योतिष्टोमस्याभिधायकः" इत्यादिनैकदेशोत्कीर्तनेन

ज्योतिःशब्देन ज्योतिष्टोमानुवादमङ्गीकृत्य वसन्तकाललक्षणगुणविधानाभ्युपगमेन तद्विरोध इति चेन्न । कामिनः प्रति ज्योतिष्टोमवाक्यैकवाक्यतया वसन्तवाक्यं योजनीयमिति सुधाभिप्रायः । मुमुक्षून् प्रति तु ज्योतिष्टोमवाक्यैकवाक्यतया न योजनीयम् । किन्तु विशिष्टक्रियान्तरविधायकमिति व्याख्येयमित्येतट्टीकाभिप्राय इत्यविरोधेन सुधाप्रमेयदीपिकयोर्नेतव्यत्वात् । तथा च वक्ष्यति ''कामिनां तु तथा'' इति । अत एव ''न सम्मतम्'' इति प्रतितन्त्रसिद्धान्तत्वाभ्युपगमं सूचयति **निर्णीत इति** । पूर्वतन्त्रे ''विश्वजिता यजेत'' इत्यादौ यत्र फलाश्रवणं तत्र कामिनियोज्यान्वयाय स्वर्गकामपदाध्याहारः । ''स स्वर्गः सर्वान् प्रत्यविशिष्टत्वात्'' इत्यधिकरणे जैमिनिना सिद्धान्तित इत्यर्थः । तथा अध्याहारेण कामाधिकारनिर्णयः मुमुक्षूणां तु न कामपदाध्याहार इति तुशब्दः ।

ननु यदि स्वर्गकामपदाध्याहारो वेदाभिप्रेतः स्यात् तर्हि गीतायां ''मा फलेषु'' इति फलकामनिषेधोऽनुपपन्नः स्यात् । वेदाभिप्रायस्य निषेधानर्हत्वादित्यत आह **स्ववचनेनेति** । ''ज्योतिष्टोमेन स्वर्गकामो यजेत'' इतिवत् ''विश्वजिता स्वर्गकामो यजेत'' इति वेदेन अध्याहारमन्तरा स्ववचनेन साक्षात् फलाकथने निष्कामतया भगवत्पूजात्मकत्वेन कर्मकर्तव्यत्वलक्षणं कारणमिह ''कर्मण्येव अधिकारः'' इति गीतायां भगवतोक्तमित्यर्थः ।

शङ्कायाः ''कामात्मनां निन्दा कृता कथमेषाम्'' इति शङ्कायाः । अत इत्यस्यार्थोक्तिः **फलेति** । **अप्रसक्तमिति** । न हि कर्मफलं स्वर्गादिकं प्रति कर्ता साधनमित्यप्रसक्तप्रतिषेधोऽनुपयुक्त इति भावः । नन्वेवं समासाभिप्राये तत्कृतिपदमपि श्रूयेतेत्यत आह **शाकपार्थिवादिति** । शाकप्रियः पार्थिवः शाकपार्थिव इत्यत्र यथा प्रियपदलोपस्तथाऽत्र समासे तत्कृतिपदलोप इत्यर्थः । यद्यपि समानाधिकरणाधिकारे ''शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च'' इति वार्तिके तत्पुरुष एवोत्तरपदलोप उक्तो न बहुव्रीहौ । प्रकृतश्च बहुव्रीहिः । तथाऽपि शरणदेवेन ''साक्षतपात्रहस्ता'' इत्यत्र साक्षतपात्रयुक्तो हस्तो यस्या इति विगृह्य ''शाकपार्थिवादित्वान्मध्यमपदलोपः'' इत्युक्तत्वेन तत्पुरुष एवेति नियमस्य त्याजितत्वादिहापि तदुपपत्तिः ।

केचित्तु, ''शाकपार्थिवादिवत्'' इति लोपमात्रे दृष्टान्तः । अत्र लोपश्च ''पृषोदरादीनि यथोपदिष्टम्'' इति शास्त्रेण । न चेदं वर्णलोपशास्त्रं न समुदायलोपशास्त्रम्, ''वर्णागमो वर्णविपर्ययश्च'' इत्याद्युक्तेरिति वाच्यम् । जीवनं जलं मूतं बद्धं येन स जीमूत इत्यत्र वनमिति समुदायलोपस्य वैयाकरणैरभ्युपगमादित्याहुः । बहुलग्रहणाद् बहुव्रीहावप्युत्तरपदलोप इत्यन्ये । तत्कृतौ कर्मानुष्ठान इति भाष्यार्थः । तेनाप्रसक्तप्रतिषेध इति शङ्का निरस्तेति ज्ञातव्यम् । **सोपपत्तिकं** स्वयं क्लेशरूपत्वा-

दित्युपपत्तिसहितं यथा भवति तथेत्यर्थः । "भक्तिमन्विच्छन्तः" इत्युपरिभाष्ये, "भक्तिज्ञानादि-प्रार्थना कार्या" इत्युपसंहारभाष्ये, "ज्ञानभक्ती हरेस्तृप्तिं विना विष्णोरपि क्वचित् । नाऽकाङ्क्ष्यम्" इत्यन्यत्र च ज्ञानादेरपि प्रार्थनीयत्वोक्तेश्चाह **प्रसादशब्देनेति** । आदिपदेन वैराग्यग्रहः । **कामस्य** इच्छायाः । **निन्दितत्वात्** "मा फलेषु" इत्यादौ । **तस्य** भगवत्प्रसादादेः । **इच्छा** तत्कर्मकेच्छेति भाष्यार्थः स्फुट इति प्रमाणार्थमाह **तवेति** । "स्वकृतसुकृतजातमनूद्य तत्सर्वं तव परितोषणाय वृणीमहे" इति प्राचीनटीकामनुरुन्धान आह **सकलं कर्मेति** । **महदाचारेणेति** । "यन्न स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदाऽनुवृत्त्या । आर्या ह्यनार्याः सुहृदो भ्रातरश्च सर्वाणि भूता-न्य(नुकम्पयैव)नसूययैव ॥ यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु । सर्वं तदेतत् पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय" इति चतुर्थस्कन्धे निरन्धसां निरन्नानाम् अप्सु अनल्पं कालं "कालाध्वनोरत्यन्तसंयोगे" द्वितीया । यत् तपस्सुतप्तं तप आदिकमाचीर्णं तत् सर्वं भगवत्परि-तोषणायेति महतां प्रचेतसां भगवत्परितोषणप्रार्थनरूपाचारप्रतिपादकवचनेनेत्यर्थः । **अकर्तव्य-तायामपि** भगवत्परितोषणस्येति वर्तते । **कामनिन्दावचनं** 'यामिमाम्' इत्यादिकम् ।

भगवत्परितोषणं न कर्तव्यमिति विशेषतो निन्दावचनाभावादिति भाष्याक्षरार्थ इति भावेन तदभिप्रायमाह **यथेति** । **तद्वत्** भगवत्परितोषणकामनावत् । **विशेषत इतीति** । अनेन विशेषत इति पदमुभयत्र सम्बध्यत इत्युक्तं भवति । "स्वर्गपराः", "नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति" इति विशिष्य स्वर्गादिनिन्दावचनादिति भाष्यार्थ इति भावः । **प्रमाणाभावं** स्वर्गादिकामनायाः कर्तव्यत्व इति शेषः । ननु सङ्कोचार्हार्थत्वं बाध्यत्वं, सङ्कोचकत्वं बाधकत्वं प्रसिद्धम् । तद् द्वयं शब्दनिष्ठम् । नार्थगतम् । किञ्च यत्र विरुद्धयोर्मध्येऽन्यतरस्याप्रामाण्यं तत्रार्थ-सङ्कोचोऽपि नास्तीत्यत आह **सामान्यविशेषशब्दाविति** । **प्रमाणेति** । प्रमाणभूतशब्दधर्मविवात्र बाध्यत्वबाधकत्वे विवक्षिते इति नोक्तदोष इति भावः ।

ननु सामान्यविशेषविषयकशब्दयोर्बाध्यबाधकभावे "इयं पृथिवी", "घटोऽयम्" इति शब्द-योरपि बाध्यबाधकभावापत्तिरित्यत आह **विरोधे सतीति** । इति समुच्चीयत इति शेषः । **अत्र** भगवत्परितोषणकामनाकर्तव्यत्वे । ऐक्यार्थत्वभ्रमं निरस्यन्नर्थमाह **सायुज्यमिति** । एक आत्मा देहो ययोः परमात्मसायुज्यभाजोस्तावेकात्मानौ । तयोर्भाव एकात्मतेति विग्रहे सायुज्यमेव लभ्यत इति भावः । तथा च तात्पर्यं "नेच्छन्ति सायुज्यमपि" इति । "नैकात्मताम्" इति सामान्यतः काम-निषेधवचनोदाहरणस्य प्रकृतोपयोगसिद्ध्यर्थं भाष्ये "भक्तिमन्विच्छन्तः" इत्युक्तमिति भावेन आह **अस्यैव विशेषोऽयमिति** । तथा च अनेन "भक्तिमन्विच्छन्तः" इति विशेषशास्त्रेण "न स्पृह-

यन्ति'' इति कामनानिषेधसामान्यशास्त्रस्य बाध इति भावः । यद्यपि ''नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः । येऽन्योन्यतो भागवताः प्रसज्य सम्भाजयन्ते मम पौरुषाणि । पश्यन्ति मे ते रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि । रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति । तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः । हृतात्मनो हृतप्राणस्य भक्तिमन्विच्छतो मे गतिमण्वीं प्रयुङ्क्ते'' इति तृतीयस्कन्धे कपिलवचने उक्तलक्षणैः स्वरूपैर्हृतमनसस्तद्विषयकसर्वेन्द्रियचेष्टस्य भक्तिमेवान्विच्छतोऽपि पुंसःप्रसन्नोऽहमण्वीमतिसूक्ष्मां गतिं सायुज्यलक्षणां ददामीति षष्ठ्येकवचनान्त एव पाठः स्पष्टमालक्ष्यते । व्याख्यातंश्चायमेव पाठो विजयध्वजतीर्थश्रीचरणैः । तथाऽपि ''नैकात्मताम्'' इत्यत्रापि भक्तिमन्विच्छत इति पदं विभक्तिवचनविपरिणामेनाऽकृष्य योजनीयमिति भावेन भाष्यटीकयोरेवमुक्तम् ।

यद्वा, ''अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तये'' इत्यादौ सेवाशब्दस्य भक्त्यर्थकत्वदृष्टेरभिरतिशब्दस्य चाभिलाषापरपर्यायेच्छावाचकत्वान्मत्पादसेवाभिरता इति पदमेव भाष्यटीकयोरर्थतोऽनूदितं ''भक्तिमन्विच्छन्तः'' इतीत्यभियुक्ताः ।

केचित्तु ''हृतात्मनो हृतप्राणाश्च भक्तिमन्विच्छन्तः'' इत्येव मूलकोशपाठः । य एवंविधस्तेषां गतिमण्वीं प्रयुङ्क्त इत्यन्वयस्वारस्यात् । एकवचनान्तपाठपक्षे बहुवचनान्तशब्देन प्रकृतानामेकवचनान्तेन परामर्शः कर्तव्य इति वैरूप्यप्रसङ्ग इति भावेनैवमुक्तमित्याहुः ।

अन्ये तु ''तस्यैव शेषोऽयम्'' इत्येव टीकापाठः । न तु विशेषोऽयमिति । भक्तिमन्विच्छन्तो महानुभावाः सायुज्यमपि नेच्छन्तीति भागवते प्रकृतोपयोगाय शेषं पूरितवान् भाष्यकार इत्यर्थ इति व्याकुर्वते ।

नेदं सूत्रं ज्ञानकामनाकर्तव्यतायां प्रमाणमित्याशङ्कते **ननु ब्रह्मजिज्ञासेति** । ज्ञातुमिच्छा हि जिज्ञासा । ''धातोः कर्मणः समानकर्तृकादिच्छायां वा'' इति स्मरणात् । सा च न कर्तव्येति युज्यते । इच्छायाः स्वातन्त्र्याविषयत्वेन विधातुमशक्यत्वादिति भावः । **विचारस्येति** । युक्त्यनुसन्धानात्मकस्य मननापरनामकस्येत्यर्थः । **सत्यमिति** । अयं चाभ्युपगमवादः । सुधायां ''जिज्ञासाशब्दो मीमांसाशब्दवत् विचार एवोपसङ्ख्यायते'' इति स्वमताभिधानेन जिज्ञासाशब्दस्योक्तविधविचाराभिधायकत्वावगमात् । जिज्ञासाशब्दस्य विचारेऽभिधावृत्तिश्च ''जिज्ञासाशब्दतो हीच्छामज्ञात्वैव विजानते । विचारं लौकिकास्तेन तत्रायं रूढ इष्यते । अन्यथा मण्टपादीनां गृह्यादौ स्यान्न रूढता । गङ्गाशब्दात् तु तीरादि तद्धीपूर्वं प्रकाशते'' इति चन्द्रिकायां विभाविता । **तत्पूर्वकः** इच्छापूर्वकः ।

ननु केवलविचारस्यैव लक्ष्यत्वमस्तु । किमिच्छापूर्वकस्य तस्य लक्ष्यत्ववचनेनेत्यत आह **अन्यथेति** । इच्छोपस्थित्यभावे लक्षणाबीजस्य शक्यसम्बन्धस्यैवाभावात् तत्पूर्वकत्वं वक्तव्यमित्यर्थः । ''आत्मा वा अरे द्रष्टव्यः'' इति परमात्मदर्शनानुवादेन तत्साधनतया ''श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'' इति श्रवणमनननिदिध्यासनानि विधीयन्त इति ज्ञानस्यैष्टव्यत्वमिव विचारस्यैष्टव्यत्वं वक्तुं सूत्रमुदाहृतम् । 'स्वार्थसेवकम्' इत्यदिना व्याप्तिरेव लोकसिद्धाऽनूद्यते । न तु न्यायः अत आह **लोकसिद्धव्याप्तिकेति** । विष्णुभक्त्यादिकं वैष्णवैः प्रार्थनीयम् । तत्परमप्रीतिसाधनत्वात् । यद्यत्परमप्रीतिसाधनं तत्तदीयैः प्रार्थनीयम् । यथा राजभृत्यै राजसेवादिकमित्यनुमानादित्यर्थः । स्वप्रयोजनमुद्दिश्य राजानं सेवमाने भृत्ये राज्ञो न तादृशी प्रीतिः यादृशी त्वत्सेवातस्त्वत्प्रीतिरेव ममास्त्विति निरुपाधिकसेवाकारिणि पुरुष इति भाष्यार्थः । यदाहुः ''यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् । स वै भृत्यः स वै स्वामी गुणलुब्धौ न कामुकौ'' इतीति स्फुटत्वान्नोक्तः ।

***गीताक्षरार्थस्तु***— सकामतया कर्म कुर्वतां 'यामिमाम्' इत्यादिना या निन्दा कृता सा न युक्ता । कुतः ? ''स्वर्गकामो यजेत'' इत्यादौ यजनवत् स्वर्गकामस्यापि विहितत्वात् । न विहितं कुर्वतां निन्द्यत्वम् । तथात्वे यजनस्यापि निन्द्यत्वप्रसङ्गात् । न च यजनकामनयोर्द्वयोरपि विधौ वाक्यभेदप्रसङ्ग इति वाच्यम् । स्वर्गकामविशिष्टयागविधिरिति पूर्वपक्ष्यभिमानात् । दृश्यते हि ''वायव्यं श्वेतमालभेत'' इत्यादौ विशिष्टविधित्वमित्यत उच्यते **कर्मण्येवेति** । त इति श्रवणाद्धे पार्थ ते त्वदादिरूपस्य ब्राह्मणादिसर्ववर्णाश्रमयुक्तस्य ज्ञानिनोऽपि कर्मण्येवाधिकारः योग्यता । फलेषु फलकामनासु माऽधिकारः कदाचनेति मुमुक्षोः सर्वथा फलकामो मोक्षविलम्बहेतुत्वादकर्तव्य इत्याह । ननु त इति सर्ववर्णाश्रमोपलक्षणमिति किमर्थमुच्यते ? वक्त्रधीनत्ते शब्दप्रयोगे वाचकमेव प्रयुज्यताम् । किं लक्षणयेति चेदुच्यते । कृतोऽपि कामो न ज्ञानिनोऽत्यन्तबाधकः । तत्प्रतिबन्धनीयस्य ज्ञानस्य प्राप्तत्वात् । मोक्षस्य नियतत्वात् । तथाऽपि मोक्षविलम्बहेतुत्वाज्ज्ञानिनाऽपि न कर्तव्यः, किम्वन्येषामज्ञानिनाम् ? इति प्रदर्शनायोपलक्षकपदप्रयोग इति । एवमेव फलपदे लक्षणाश्रयणे प्रयोजनं टीकायामुक्तमनुसन्धेयम् । अतः कर्मैव कार्यम् । तदकरणे ''कुर्वन्नेवेह कर्माणि'' इत्युक्त्वा ''एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'' इति प्रत्यवाय इव कामनाया अकरणे प्रत्यवायो न श्रूयत इति नासौ कर्तव्या । न च वाच्यं ''स्वर्गकामो यजेत'' इत्यादौ स्वर्गादिकामनाविशिष्टं कर्म कार्यतयोच्यत इति कथमकर्तव्यत्वं तस्या इति । कामानुवादेन यागविधेरेव तत्राङ्गीकारेण विशिष्टविधेरनभ्युपगमात् । अत एवं कामनाया विध्यविषयत्वात् कर्म-

फलहेतुः कर्मफलं कर्मफलाभिसन्धानं तत्कृतौ कर्मानुष्ठाने हेतुर्यस्य पुरुषस्य स मा भूः । तर्हि स्वयं क्लेशरूपत्वात् कर्मैव न करोमीत्यत उक्तम् **मा त इति** । ते तव त्वादृशस्य सर्वस्यापि ज्ञानिनः अकर्मणि फलाभावेऽपि कर्माकरणे सङ्गः स्नेहः माऽस्तु न कार्यः । स्वर्गादिरूपाल्पास्थिरफलाभावेऽपि मोक्षरूपस्थिरमहापुरुषार्थसाधनज्ञानभक्तिवैराग्यभगवत्प्रसादाख्यफलभावात् । ज्ञानभक्त्यादिकामनाया अनिन्दितत्वात् । प्रत्युत "वृणीमहे ते परितोषणाय" इति विहितत्वाच्च तस्या एव कर्तव्यत्वं न फलकामस्येति तात्पर्यादिति ॥ ४७ ॥

**गीतातात्पर्यनिर्णयः**

**कर्माधिकारिण एव त्वदादयो जीवाः । फलं तु मदायत्तमिति भावः । मा कर्मफलहेतुर्भूः नेश्वरोऽहमिति भावं कुरु । "एष उ एव शुभाशुभैः कर्मफलैरेनं संयोजयति स्वयं संयुक्तो भवति । यदेनं कर्मफलैः संयोजयति न स्वयं संयुक्तो भवति तस्मादन्य एवासौ भगवान् वेदितव्यः" इति पैङ्गिश्रुतिः ॥ ४७ ॥**

*प्रका०*— कर्मण्येवेत्येतद् व्याचष्टे **कर्मेत्यादिना** ॥

*न्या०दी०*— ऐक्यभावनं न कार्यमित्यत्र हेतुरुच्यते **कर्मणीति** । तत्रार्जुनस्य कर्मकरणे किञ्चित्सामर्थ्यमस्ति, न तु फलापादन इत्येवोच्यते । तत्कथमनेन सर्वजीवानामीश्वराभेदाभावः साध्यत इत्यत आह **कर्मेति** ॥ नात्र त इत्यर्जुन एव गृह्यते । अपि तु सर्वजीवाः । तेषां फलापादनासामर्थ्यमुक्त्वा ईश्वरे तत्सामर्थ्यमभिप्रेयते । तेनात्रोक्तैव अभेदाभावे युक्तिरिति भावः । नन्वत्रास्त्वेतावदभिप्रेतम् । तथापि प्रतिज्ञाया अभावादभेदाभावे युक्तिरियमुक्तेति कथं ज्ञायत इत्यत आह **मा कर्मेति** ॥ फलहेतुरीश्वरः स मा भूर्मनसेत्यर्थः । अत्र श्रुतिं चाह **एष इति** ॥ **स्वयं** जीवः ॥

*भा०दी०*— त इत्युपलक्षणमिति भावेनाह **सर्वे जीवा इति** ॥ **प्रतिज्ञाया अभावादिति** । ऐक्यभावना न कार्येति प्रतिज्ञाया अभावादित्यर्थः । तदविनाभावाद्युक्तेरिति भावः । भावनाभाव-प्रतिज्ञालाभार्थमाह **मनसेत्यर्थ इति** ॥

**गीता**

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥**

*वि०वि०*— कर्माकरणे स्नेहो माऽस्त्वित्युक्तं स्पष्टयन्नाह **योगस्थ इति**। उपायस्थः ज्ञान-साधनमनुतिष्ठन्। सङ्गं फलस्नेहं त्यक्त्वा, तत एव सिध्यसिध्योः समो भूत्वा कर्माणि कुरु। कोऽसौ योग इत्यत आह **समत्वमिति**। सङ्गत्यागविशिष्टं समत्वमेव योग इत्यर्थः ॥ ४८ ॥

*वा०ल०*— 'योगस्थः कुरु कर्माणि' इत्यत्र समत्वं योग उच्यते इति वचनात्, सिद्ध्य-सिद्ध्योः कर्मणः समाप्त्यसमाप्त्योः समत्वं यगः। सङ्गं फलाकाङ्क्षाम् ॥ ४८ ॥

*सा०सं०*— 'मा ते सङ्गोऽस्त्वकर्मणि इत्युक्तम्। तर्हि किं कार्यमित्यत आह **योगस्थ इति**। योगो ज्ञानोपायः तत्र तिष्ठतीति **योगस्थः**। ज्ञानोपायमनुतिष्ठन् **सङ्गं** फलस्नेहं **त्यक्त्वा** तत एव फलरागत्यागादेव। **सिद्ध्यसिद्ध्योः समो भूत्वा कर्माणि कुरु** ईश्वरप्रसत्त्यै कर्माणि कुर्वि-त्यर्थः। योगस्थ इत्युक्तयोगः क इत्यतः 'सङ्गं त्यक्त्वा' इत्यादिना योगशब्दार्थो व्याख्यातः। तत्र त्यागसमत्वयोः प्रत्येकं योगत्वभ्रान्तिनिरासायाह **समत्वमिति**। सङ्गत्यागस्याप्युपलक्षणम्। त्यागोपेतं **समत्वं योग** इत्यर्थः ॥ ४८ ॥

*अ०प्र०*— किं तर्हि, **योगस्थ इति**।

हे धनञ्जय ![१], सिद्ध्यसिद्ध्योः[२], समः[३], भूत्वा[४], सङ्गं च[५], त्यक्त्वा[६], योगस्थः सन्[७], कर्माणि[८], कुरु[९], सद्भिः चित्तसमाधानरूपत्वात् एवं भूतं, समत्वमेव[१०], योगः[११], उच्यते[१२]।

हे धनञ्जय ! त्वं सिद्ध्यसिद्ध्योः = फलप्राप्त्यप्राप्त्योः[२], समो भूत्वा = केवलमीश्वरार्पणेनैव[४], सङ्गं त्यक्त्वा केवलमीश्वराश्रयेणैव कृतत्वाभिनिवेशं त्यक्त्वा, यद्वा फलस्नेहं त्यक्त्वा[६], योगस्थः सन् = योगः परमेश्वरैकपरता तत्र स्थितः सन्, यद्वा ज्ञानसाधनं कर्तुमिच्छन्[७], कर्माणि कुरु[९], समत्वमेव, चित्तसमाधानरूपत्वात् सद्भिरेवंभूतं समत्वमेव[१०], योगः[११], उच्यते इत्यर्थः ॥ ४८ ॥

**भाष्यम्**

**पूर्वश्लोकोक्तं स्पष्टयति— योगस्थ इति। योगस्थः उपायस्थः। सङ्गं फलस्नेहं त्यक्त्वा। तत एव सिद्ध्यसिद्ध्योः समो भूत्वा। स एव च मयोक्तो योगः ॥ ४८ ॥**

*न०टी०*— ननु मा भूद् विधितः फलेच्छा। तथाऽपि स्नेहादेव तदिच्छति। तत्कथमसौ कर्मफलहेतुर्न स्यात् ? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **पूर्वश्लोकोक्तमिति**। फलेच्छाविध्ययोगादितरफलोद्देशं विनैव कर्म कुर्वन्नेव मत्प्रसादायेत्युक्तं पूर्वत्र। तदेवमधुना

स्पष्टयति । यदि फलस्नेहो न स्यात् तर्हि तत्सिद्धावसिद्धौ च समः पुमान् । समत्वमेव भगवत्प्रसादद्वारा ज्ञानोपायः । अतस्तस्मिन्नुपाये मनःकृत्वा विहितानि कर्माणि कुर्वन्नेव फलस्नेहं त्यक्त्वेति ॥ ४८ ॥

*प्र०दी०*— 'कर्मण्येव' इत्यनेन 'योगस्थः' इत्यस्य गतार्थतापरिहारार्थमाह— **पूर्वेति** । निष्कामतादिविशिष्टानि कर्माण्येव योगः । अतो 'योगस्थः' इत्यनेनैव लब्धं पुनः 'कुरु कर्माणि' इति किमर्थमुच्यत इत्यत आह— **योगस्थ इति** । ज्ञानोपायमनुतिष्ठन्नित्यर्थः । ''कर्मसम्बन्धं त्यक्त्वा कर्माणि कुरु'' इत्येतद्व्याहतमित्यत आह— **सङ्गमिति** । 'ईश्वरो मे प्रसीदतु' इत्यभिसन्धिमपि त्यक्त्वेति व्याख्यानं पूर्वमेव निरस्तम् । 'तत एव' इति परामर्शसौकर्याय त्यक्त्वेत्यनुवादः कृतः । 'सङ्गं त्यक्त्वा,' 'सिद्ध्यसिद्ध्योः समो भूत्वा' इति द्वयमुक्त्वा 'समत्वं योग उच्यते' इत्येकस्यैव ग्रहणमयुक्तम् । तथा सति सङ्गत्यागस्यायोगत्वप्रसङ्गादित्यत आह— **तत एवेति** । सङ्गत्यागादेव । एतयोः कार्यकारणभावात् कार्ये गृहीते कारणमर्थाद्गृहीतमेवेति भावः । ननु समत्वयोगयोर्भेदः केन शङ्कितो येन 'समत्वं योग उच्यते' इति तयोरैक्यमुच्यत इत्यत आह— **स एव चेति** । 'योगस्थः' इत्युक्ते को योग इत्यपेक्षायां भगवता 'सङ्गं त्यक्त्वा', ''सिद्ध्यसिद्ध्योः समो भूत्वा'' इति योगो व्याख्यातः । मन्दास्तु पृथगेव ते विशेषणे कल्पयिष्यन्तीति तदनुजिघृक्षयेदमुदितमिति भावः । स एव यत्समत्वमिति शेषः । योगैकदेशे योगशब्दः ॥ ४८ ॥

*भा०दी०*— **पूर्वेणैवेति** । इच्छा च तस्य युक्तेत्यादिग्रन्थेनैवेत्यर्थः । यत इत्यागमसत्त्वेऽपि तस्य विशेषण एव न तु योगशब्दार्थोक्तिपर इति कल्पयिष्यन्ति इति मन्दानुग्रहेच्छयेदमुक्तमित्यर्थः । तर्हि सङ्गत्यागविशिष्टं समत्वं वाच्यमित्यत आह **योगैकदेशे इति** । यद्वा निवृत्तकर्मण एव ज्ञानोपायत्वेन योगत्वात् सङ्गत्यागसमत्वयोस्तदेकदेशत्वात् कथं समत्वमर्थाद्गृहीतसङ्गत्यागश्च योग इत्युक्तिरित्येतावता भगवद्धक्तेरपि योगत्वाद्वा आह **योगैकदेश इति** । योगाय युज्यस्वेत्युक्तमिति ज्ञानोपायाय प्रयतस्वेत्युक्तमित्यर्थः । अत्र तु दूरेणेति श्लोके तत्रैव ज्ञानोपायाय प्रयतस्वेत्युक्तार्थ एव काम्यकर्मतो वा श्रेष्ठरूपकाम्यस्य निन्दारूपं वा हेत्वन्तरमित्यर्थः ॥ ४८ ॥

*भा०र०*— **गतार्थतेति** । उपायस्थः ज्ञानोपायभूतं कर्माधिकुर्वन् इत्यस्य ''कर्मण्येव अधिकारः'' इत्यनेन अर्थातिशयाभावादिति भावः । ''परिहारायार्थमाह'' इति पाठे परिहारायेत्यनन्तरमवतारं वदन्निति शेषः । फलाभिसन्धिं विना मत्प्रसादाद्युद्देशेनैव कर्म कुर्विति 'कर्मण्येव' इति पूर्वश्लोके तदुक्तं तदेवानेन 'योगस्थः' इति श्लोकेन स्पष्टयतीति भाष्यार्थः स्पष्टत्वान्नोक्तः । ''निष्कामतादि'' इत्यादिशब्देन फलसिद्ध्यसिद्ध्योः समत्वस्येश्वरार्पणस्य च ग्रहः । योगस्य पुरुषं

प्रत्यधिकरणत्वाभावात् तात्पर्यमाह— **ज्ञानोपायमिति** । योगशब्दस्योपायमात्रार्थत्वेऽपि ज्ञानस्य योग्यतया सम्बन्ध इति भावेन ज्ञानोपायमित्युक्तम् । "कुरु कर्माणि" इति "सङ्गं त्यक्त्वा" इति कर्मणां सन्निधानात् सङ्गशब्दितसम्बन्धप्रतियोगित्वमिति मन्यमान आह **कर्मसम्बन्धमिति** । "त्यक्त्वा कर्मफलासङ्गम्" इत्यादौ फलसङ्गस्यैव त्याज्यत्वावेदनादत्रापि सङ्गशब्देन फलग्रेह एव ग्राह्य इति भाष्ये फलेत्युक्तमिति भावः । तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वेति शङ्करभाष्यमनुवदति **ईश्वर इति** । पूर्वेणैव "इच्छा च तस्य युक्ता" इति भगवत्प्रसादकामनायाः कर्तव्यताप्रतिपादनेनैवेत्यर्थः । त्यक्त्वेति गीतापदं भाष्ये किमित्यव्याख्यायानूद्यत इत्यतस्तत्तात्पर्यमाह **तत एवेति** । **एकस्यैव** समत्वस्यैव । **तथा सति** समत्वस्यैकस्यैव ग्रहणे सति । **एतयोः** समत्वसङ्गत्यागयोः । **कार्ये** समत्वे । **कारणं** सङ्गत्यागः । **को योगः** ज्ञानोपायः क इत्यपेक्षायामित्यर्थः । मयेत्यस्यार्थो **भगवतेति** । **मन्दास्त्विति** । "योगस्थः" इति व्याख्येयं पदम् । "सङ्गं त्यक्त्वा", "सिद्ध्यसिद्ध्योस्समो भूत्वा" इति पदद्वयं तद्व्याख्यानमिति वक्तव्यम् । अन्यथा सङ्गत्यागसमभवनयोर्योगत्वेन पुनरुक्त्यापत्तेरिति पर्यालोचने सङ्गत्यागसमभवनयोर्योगत्वं प्रेक्षावतां सिद्धमेव इत्यतो 'मन्दाः' इत्युक्तम् । **पृथगेवेति** । योगस्थत्वं कर्म कुर्वतो यद् विशेषणं तस्मादिति शेषः । एते सङ्गत्यागसमभवने योगस्थत्वादन्ये एव विशेषणे कर्म कुर्वत इति कल्पयिष्यन्तीत्यर्थः । **इदं** "समत्वं योग उच्यते" इत्येतत् । **यत् समत्वमिति** । "सा वैश्वदेव्यामिक्षा" इतिवदिदं ज्ञातव्यम् ।

ननु निष्कामतादिविशिष्टकर्माण्येव योगः । सङ्गत्यागसमभवने तु तदेकदेशभूते । अतः कथं "समत्वं योग उच्यते" इत्यत्र यत् समत्वमिति स एव योग इत्युक्तिरित्यत आह **योगैकदेश इति** । 'योगस्थः' इत्यत्र योगो नाम क इत्यपेक्षायां सङ्गत्यागसमभवने एव योगशब्दार्थत्वेनात्र विवक्षिते । न तु विशेष्यभूतकर्माण्यपि । तथा च "योगस्थः योगैकदेशसङ्गत्यागसमभवननिष्ठस्सन् कर्माणि कुरु" इति भगवतोऽभिसन्धिरिति भाष्याभिप्राय इति भावः । अनेन "योगस्थः कुरु कर्माणि" इति किमर्थमुच्यत इति कृतचोद्यं परिहृतं भवति । यत्तु "योगो हि सङ्गत्यागसमभवनरूपतया भगवतैव व्याख्यात इत्युक्तम् । तत्र द्वयं योग उच्यत इति वक्तव्ये समत्वं योग इति कथमुच्यत इत्यत आह **योगैकदेश इति**" इत्यवतारणं, तत्तु "कार्ये गृहीते कारणमर्थाद् गृहीतम्" इति टीकाननुगुणम् ।

***गीताक्षरार्थस्तु***— कर्मण्येवेत्यनेनोक्तं स्पष्टीक्रियते **योगस्थ इति** । **योग** उपायः । ज्ञानोपायमनुतिष्ठन् सङ्गं फलग्रेहं त्यक्त्वा तत एव फलरागत्यागत एव सिद्ध्यसिद्ध्योः स्वर्गादिफलप्राप्त्यप्राप्त्योः समः उन्नाहमनुन्नाहं चाप्राप्नुवन् केवलमीश्वरप्रसादाय कर्माणि स्वविहितधर्मान् कुरु ।

स्पष्टयति । यदि फलस्नेहो न स्यात् तर्हि तत्सिद्धावसिद्धौ च समः पुमान् । समत्वमेव भगवत्प्रसादद्वारा ज्ञानोपायः । अतस्तस्मिन्नुपाये मनःकृत्वा विहितानि कर्माणि कुर्वन्नेव फलस्नेहं त्यक्त्वेति ॥ ४८ ॥

*प्र०दी०*— 'कर्मण्येव' इत्यनेन 'योगस्थः' इत्यस्य गतार्थतापरिहारार्थमाह— **पूर्वेति** । निष्कामतादिविशिष्टानि कर्माण्येव योगः । अतो 'योगस्थः' इत्यनेनैव लब्धं पुनः 'कुरु कर्माणि' इति किमर्थमुच्यत इत्यत आह— **योगस्थ इति** । ज्ञानोपायमनुतिष्ठन्नित्यर्थः । ''कर्मसम्बन्धं त्यक्त्वा कर्माणि कुरु'' इत्येतद्व्याहतमित्यत आह— **सङ्गमिति** । 'ईश्वरो मे प्रसीदतु' इत्यभिसन्धिमपि त्यक्त्वेति व्याख्यानं पूर्वमेव निरस्तम् । 'तत एव' इति परामर्शसौकर्याय त्यक्त्वेत्यनुवादः कृतः । 'सङ्गं त्यक्त्वा,' 'सिद्ध्यसिद्ध्योः समो भूत्वा' इति द्वयमुक्त्वा 'समत्वं योग उच्यते' इत्येकस्यैव ग्रहणमयुक्तम् । तथा सति सङ्गत्यागस्यायोगत्वप्रसङ्गादित्यत आह— **तत एवेति** । सङ्गत्यागादेव । एतयोः कार्यकारणभावात् कार्ये गृहीते कारणमर्थाद्गृहीतमेवेति भावः । ननु समत्वयोगयोर्भेदः केन शङ्कितो येन 'समत्वं योग उच्यते' इति तयोरैक्यमुच्यत इत्यत आह— **स एव चेति** । 'योगस्थः' इत्युक्ते को योग इत्यपेक्षायां भगवता 'सङ्गं त्यक्त्वा', ''सिद्ध्यसिद्ध्योः समो भूत्वा'' इति योगो व्याख्यातः । मन्दास्तु पृथगेव ते विशेषणे कल्पयिष्यन्तीति तदनुजिघृक्षयेदमुदितमिति भावः । स एव यत्समत्वमिति शेषः । योगैकदेशे योगशब्दः ॥ ४८ ॥

*भा०दी०*— **पूर्वेणैवेति** । इच्छा च तस्य युक्तेत्यादिग्रन्थेनैवेत्यर्थः । यत इत्यागमसत्त्वेऽपि तस्य विशेषण एव न तु योगशब्दार्थोक्तिपर इति कल्पयिष्यन्ति इति मन्दानुग्रहेच्छयेदमुक्तमित्यर्थः । तर्हि सङ्गत्यागविशिष्टं समत्वं वाच्यमित्यत आह **योगैकदेशे इति** । यद्वा निवृत्तकर्मण एव ज्ञानोपायत्वेन योगत्वात् सङ्गत्यागसमत्वयोस्तदेकदेशत्वात् कथं समत्वमर्थाद्गृहीतसङ्गत्यागश्च योग इत्युक्तिरित्येतावता भगवद्भक्तेरपि योगत्वाद्वा आह **योगैकदेश इति** । योगाय युज्यस्वेत्युक्तमिति ज्ञानोपायाय प्रयतस्वेत्युक्तमित्यर्थः । अत्र तु दूरेणेति श्लोके तत्रैव ज्ञानोपायाय प्रयतस्वेत्युक्तार्थ एव काम्यकर्मतो वा श्रेष्ठरूपकाम्यस्य निन्दारूपं वा हेत्वन्तरमित्यर्थः ॥ ४८ ॥

*भा०र०*— **गतार्थतेति** । उपायस्थः ज्ञानोपायभूतं कर्माधिकुर्वन् इत्यस्य ''कर्मण्येव अधिकारः'' इत्यनेन अर्थातिशयाभावादिति भावः । ''परिहारायार्थमाह'' इति पाठे परिहारायेत्यनन्तरमवतारं वदन्निति शेषः । फलाभिसन्धिं विना मत्प्रसादाद्युद्देशेनैव कर्म कुर्विति 'कर्मण्येव' इति पूर्वश्लोके तदुक्तं तदेवानेन 'योगस्थः' इति श्लोकेन स्पष्टयतीति भाष्यार्थः स्पष्टत्वान्नोक्तः । ''निष्कामतादि'' इत्यादिशब्देन फलसिद्ध्यसिद्ध्योः समत्वस्येश्वरार्पणस्य च ग्रहः । योगस्य पुरुषं

प्रत्यधिकरणत्वाभावात् तात्पर्यमाह— **ज्ञानोपायमिति** । योगशब्दस्योपायमात्रार्थत्वेऽपि ज्ञानस्य योग्यतया सम्बन्ध इति भावेन ज्ञानोपायमित्युक्तम् । "कुरु कर्माणि" इति "सङ्गं त्यक्त्वा" इति कर्मणां सन्निधानात् सङ्गशब्दितसम्बन्धप्रतियोगित्वमिति मन्यमान आह **कर्मसम्बन्धमिति** । "त्यक्त्वा कर्मफलासङ्गम्" इत्यादौ फलसङ्गस्यैव त्याज्यत्वावेदनादत्रापि सङ्गशब्देन फलस्नेह एव ग्राह्य इति भाष्ये फलेत्युक्तमिति भावः । तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वेति शङ्करभाष्यमनुवदति **ईश्वर इति** । पूर्वेणैव "इच्छा च तस्य युक्ता" इति भगवत्प्रसादकामनायाः कर्तव्यताप्रतिपादनेनैवेत्यर्थः । त्यक्त्वेति गीतापदं भाष्ये किमित्यव्याख्यायानूद्यत इत्यतस्तत्तात्पर्यमाह **तत एवेति** । **एकस्यैव** समत्वस्यैव । **तथा सति** समत्वस्यैकस्यैव ग्रहणे सति । **एतयोः** समत्वसङ्गत्यागयोः । **कार्ये** समत्वे । **कारणं** सङ्गत्यागः । **को योगः** ज्ञानोपायः क इत्यपेक्षायामित्यर्थः । मयेत्यस्यार्थो **भगवतेति** । **मन्दास्त्विति** । "योगस्थः" इति व्याख्येयं पदम् । "सङ्गं त्यक्त्वा", "सिद्ध्यसिद्ध्योस्समो भूत्वा" इति पदद्वयं तद्व्याख्यानमिति वक्तव्यम् । अन्यथा सङ्गत्यागसमभवनयोर्योगत्वेन पुनरुक्त्यापत्तेरिति पर्यालोचने सङ्गत्यागसमभवनयोर्योगत्वं प्रेक्षावतां सिद्धमेव इत्यतो 'मन्दाः' इत्युक्तम् । **पृथगेवेति** । योगस्थत्वं कर्म कुर्वतो यद् विशेषणं तस्मादिति शेषः । एते सङ्गत्यागसमभवने योगस्थत्वादन्ये एव विशेषणे कर्म कुर्वत इति कल्पयिष्यन्तीत्यर्थः । **इदं** "समत्वं योग उच्यते" इत्येतत् । **यत् समत्वमिति** । "सा वैश्वदेव्यामिक्षा" इतिवदिदं ज्ञातव्यम् ।

ननु निष्कामतादिविशिष्टकर्माण्येव योगः । सङ्गत्यागसमभवने तु तदेकदेशभूते । अतः कथं "समत्वं योग उच्यते" इत्यत्र यत् समत्वमिति स एव योग इत्युक्तिरित्यत आह **योगैकदेश इति** । 'योगस्थः' इत्यत्र योगो नाम क इत्यपेक्षायां सङ्गत्यागसमभवने एव योगशब्दार्थत्वेनात्र विवक्षिते । न तु विशेष्यभूतकर्माण्यपि । तथा च "योगस्थः योगैकदेशसङ्गत्यागसमभवननिष्ठस्सन् कर्माणि कुरु" इति भगवतोऽभिसन्धिरिति भाष्याभिप्राय इति भावः । अनेन "योगस्थः कुरु कर्माणि" इति किमर्थमुच्यत इति कृतचोद्यं परिहृतं भवति । यत्तु "योगो हि सङ्गत्यागसमभवनरूपतया भगवतैव व्याख्यात इत्युक्तम् । तत्र द्वयं योग उच्यत इति वक्तव्ये समत्वं योग इति कथमुच्यत इत्यत आह **योगैकदेश इति**" इत्यवतारणं, तत्तु "कार्ये गृहीते कारणमर्थाद् गृहीतम्" इति टीकाननुगुणम् ।

*गीताक्षरार्थस्तु*— कर्मण्येवेत्यनेनोक्तं स्पष्टीक्रियते **योगस्थ इति** । **योग** उपायः । ज्ञानोपायमनुतिष्ठन् सङ्गं फलस्नेहं त्यक्त्वा तत एव फलरागत्यागत एव सिद्ध्यसिद्ध्योः स्वर्गादिफलप्राप्त्यप्राप्त्योः समः उन्नाहमनुन्नाहं चाप्राप्नुवन् केवलमीश्वरप्रसादाय कर्माणि स्वविहितधर्मान् कुरु ।

''योगस्थः'' इत्युक्ते को योग इत्यपेक्षायां भगवता ''सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योस्समो भूत्वा'' इति योगो व्याख्यातः । मन्दास्तु पृथगेवैते विशेषणे कल्पयिष्यन्तीति तदनुजिघृक्षयेदमुच्यते **समत्वमिति** । कार्ये गृहीते कारणमर्थाद् गृहीतमेवेति त्यागहेतुकसमभवनमेव योग उच्यते **ज्ञानिभिरिति** । ॥ ४८ ॥

**गीतातात्पर्यनिर्णयः**

**सङ्गं फलस्नेहम् ॥ ४८ ॥**

*न्या०दी०*— कर्माकरणे स्नेहो माऽस्त्वित्युक्तम् । किं तर्हीत्यत उच्यते 'योगस्थ' इति । तत्र कर्मसङ्गं त्यक्त्वा कर्माणि कुर्विति व्याहतमित्यत आह **सङ्गमिति** ॥ न सङ्गपदेन कर्मसम्बन्धोऽभिधीयते । येन व्याहतिः । अपि तु फलस्नेह एवेति भावः ॥

*भा०दी०*— **इत्युक्तमिति** । दूरेणेति पूर्वार्ध इति योज्यम् ॥

**गीता**

**दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

*वि०वि०*— इतश्च योगाय युज्यस्वेत्याह **दूरेणेति** । बुद्धियोगाज्ज्ञानलक्षणादुपायात् दूरेणातीवावरं कर्म । अतो बुद्धौ शरणं ज्ञानोपायानुष्ठानलक्षणम् । ज्ञाने स्थितिमन्विच्छ । कथं कर्म ज्ञानादतीवावरमित्यत आह **कृपणा इति** । फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः कृपणा दीना इत्यर्थः । यद्वा, ज्ञानस्योत्तमावस्थायामीश्वरैक्यभावनं न युक्तमित्याह **बुद्धाविति** । बुद्धौ जातायामपि विष्णुमेव शरणमन्विच्छ । फलहेतवः 'ईश्वरोऽहम्' इति मन्यमानाः कृपणाः शोच्याः । तदुक्तम्—

'अज्ञानां ज्ञानिनां चैव मुक्तानां शरणं हरिः ।
तं ये स्वैक्येन मन्यन्ते सर्वभिन्नं गुणोच्छ्रयात् ॥
कृपणास्ते तमस्यन्धे निपतन्ति न संशयः ।
न तेषामुत्थितिः क्वापि नित्यातिशयदुःखिनाम् ॥' इति ॥ ४९ ॥

*वा०ल०*— 'दूरेण ह्यवरं कर्म' इत्यत्र अवरं नीचं कर्म बुद्धियोगात् दूरेण त्यज । फलहेतवः कृपणाः ॥ ४९ ॥

*सा०सं०*— किञ्च कर्मफलस्य ज्ञानफलादल्पत्वात् ज्ञानोपायानुष्ठानाय प्रयतस्वेति 'यावानर्थः' इत्यत्र उक्तेऽर्थे कर्मरूपस्य पुमर्थोपायस्य ज्ञानरूपोपायादधमत्वरूपं हेत्वन्तरमुच्यते **दूरेण ह्यवरम्** **इति** । **बुद्धियोगात्** ज्ञानलक्षणपुमर्थसाधनात् **कर्म दूरेण** अतीव **अवरम्** अधमम् अतो **बुद्धौ** ज्ञाने **शरणमन्विच्छ** ज्ञानस्योपायभूतयोगानुष्ठानलक्षणां ज्ञाने स्थितिम् अन्विच्छेत्यर्थः । कथं कर्म ज्ञानादवरमित्याह **कृपणा इति** । फलं कर्मकृतौ हेतुर्येषां ते **फलहेतवः** । "ते **कृपणाः** दीनाः इमं लोकं हीनतरं लोकं वा विशन्ति" इत्यर्थः ।

यद्वा, उत्तरार्धस्यैवमर्थः । ज्ञानस्य कर्मत उत्तमत्वे सत्युत्तमायां ज्ञानावस्थायाम् ईश्वरैक्य-भावनं युक्तमित्यत आह **बुद्धाविति** । **बुद्धौ** ज्ञाने जातेऽपि विष्णुमेव **शरणमन्विच्छ** । कुतः, **फलहेतवः** । फलहेतुरीश्वरः फलहेतवः ईश्वरैक्यभाविनो ये ते **कृपणाः** कृपाविषयाः । तमःप्राप्तिमन्त इत्यर्थः ॥ ४९ ॥

*अ०प्र०*— काम्यं कर्म तु अतिनिकृष्टमित्याह **दूरेणेति** ।

हे धनञ्जय ![१], बुद्धियोगात् अन्यत्[२], कर्म[३], हि यस्मात्[४], दूरेण[५], अवरं[६], तस्मात् बुद्धौ[७], शरणं[८], अन्विच्छ[९], फलहेतवस्तु[१०], कृपणाः किलेत्यर्थः ।

हे धनञ्जय ! बुद्धियोगात् = बुद्ध्या व्यवसायात्मिकया कृतः कर्मयोगः बुद्धियोगः, बुद्धिसाधनभूतो वा तस्मात्सकाशादन्यत् यद्वा ज्ञानलक्षणादुपायादन्यत्[२] कर्म = काम्यं[३] हि = यस्मात्[४] दूरेण = अतीव[५], अवरं = निकृष्टं अत्यन्तमपकृष्टं वा तस्मात्[६], बुद्धौ शरणं ज्ञाने स्थितिर्ज्ञानोपायानुष्ठानलक्षणां यद्वा त्रातारमीश्वरमाश्रयेत्यर्थः[८], अन्विच्छ = अनुतिष्ठ[९], फलहेतवस्तु फले कर्मकृतौ हेतुर्येषां ते तथा काम्यकर्मिणः ते तु सकामनराः[१०], कृपणाः दीनाः किलेत्यर्थः । यो वा एतदक्षरमविदित्वा गार्ग्य अस्माल्लोकात्प्रैति स कृपण इति श्रुतेः ॥ ४९ ॥

**भाष्यम्**

**इतश्च योगाय युज्यस्वेत्याह– दूरेणेति । बुद्धियोगाज्ज्ञानलक्षणादुपायात् । दूरेण अतीव । अतो बुद्धौ शरणं ज्ञाने स्थितिम् । फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः ॥ ४९ ॥**

*प०टी०*— उत्तरश्लोकद्वयमवतार्य व्याचष्टे **पूर्वेति** ॥ ४८-४९ ॥

''योगस्थः'' इत्युक्ते को योग इत्यपेक्षायां भगवता ''सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योस्समो भूत्वा'' इति योगो व्याख्यातः। मन्दास्तु पृथगेवैते विशेषणे कल्पयिष्यन्तीति तदनुजिघृक्षयेदमुच्यते **समत्वमिति**। कार्ये गृहीते कारणमर्थाद् गृहीतमेवेति त्यागहेतुकसमभवनमेव योग उच्यते **ज्ञानिभिरिति**। ॥ ४८ ॥

**गीतातात्पर्यनिर्णयः**

**सङ्गं फलस्नेहम् ॥ ४८ ॥**

*न्या०दी०*— कर्माकरणे स्नेहो माऽस्त्वित्युक्तम्। किं तर्हीत्यत उच्यते 'योगस्थ' इति। तत्र कर्मसङ्गं त्यक्त्वा कर्माणि कुर्विति व्याहतमित्यत आह **सङ्गमिति** ॥ न सङ्गपदेन कर्मसम्बन्धोऽभिधीयते। येन व्याहतिः। अपि तु फलस्नेह एवेति भावः ॥

*भा०दी०*— **इत्युक्तमिति**। दूरेणेति पूर्वार्ध इति योज्यम् ॥

**गीता**

**दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

*वि०वि०*— इतश्च योगाय युज्यस्वेत्याह **दूरेणेति**। बुद्धियोगाज्ज्ञानलक्षणादुपायात् दूरेणातीवावरं कर्म। अतो बुद्धौ शरणं ज्ञानोपायानुष्ठानलक्षणम्। ज्ञाने स्थितिमन्विच्छ। कथं कर्म ज्ञानादतीवावरमित्यत आह **कृपणा इति**। फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः कृपणा दीना इत्यर्थः। यद्वा, ज्ञानस्योत्तमावस्थायामीश्वरैक्यभावनं न युक्तमित्याह **बुद्धाविति**। बुद्धौ जातायामपि विष्णुमेव शरणमन्विच्छ। फलहेतवः 'ईश्वरोऽहम्' इति मन्यमानाः कृपणाः शोच्याः। तदुक्तम्—

'अज्ञानां ज्ञानिनां चैव मुक्तानां शरणं हरिः।
तं ये स्वैक्येन मन्यन्ते सर्वभिन्नं गुणोच्छ्रयात् ॥
कृपणास्ते तमस्यन्धे निपतन्ति न संशयः।
न तेषामुत्थितिः क्वापि नित्यातिशयदुःखिनाम् ॥' इति ॥ ४९ ॥

*वा०ल०*— 'दूरेण ह्यवरं कर्म' इत्यत्र अवरं नीचं कर्म बुद्धियोगात् दूरेण त्यज। फलहेतवः कृपणाः ॥ ४९ ॥

*सा०सं०*— किञ्च कर्मफलस्य ज्ञानफलादल्पत्वात् ज्ञानोपायानुष्ठानाय प्रयतस्वेति 'यावानर्थः' इत्यत्र उक्तेऽर्थे कर्मरूपस्य पुमर्थोपायस्य ज्ञानरूपोपायादधमत्वरूपं हेत्वन्तरमुच्यते **दूरेण ह्यवरम् इति** । **बुद्धियोगात्** ज्ञानलक्षणपुमर्थसाधनात् **कर्म दूरेण** अतीव **अवरम्** अधमम् अतो **बुद्धौ** ज्ञाने **शरणमन्विच्छ** ज्ञानस्योपायभूतयोगानुष्ठानलक्षणां ज्ञाने स्थितिम् अन्विच्छेत्यर्थः । कथं कर्म ज्ञानादवरमित्याह **कृपणा इति** । फलं कर्मकृतौ हेतुर्येषां ते **फलहेतवः** । "ते **कृपणाः** दीनाः इमं लोकं हीनतरं लोकं वा विशन्ति" इत्यर्थः ।

यद्वा, उत्तरार्धस्यैवमर्थः । ज्ञानस्य कर्मत उत्तमत्वे सत्युत्तमायां ज्ञानावस्थायाम् ईश्वरैक्य-भावनं युक्तमित्यत आह **बुद्धाविति** । **बुद्धौ** ज्ञाने जातेऽपि विष्णुमेव **शरणमन्विच्छ** । कुतः, **फलहेतवः** । फलहेतुरीश्वरः फलहेतवः ईश्वरैक्यभाविनो ये ते **कृपणाः** कृपावियाः । तमःप्राप्तिमन्त इत्यर्थः ॥ ४९ ॥

*अ०प्र०*— काम्यं कर्म तु अतिनिकृष्टमित्याह **दूरेणेति** ।

हे धनञ्जय ![१], बुद्धियोगात् अन्यत्[२], कर्म[३], हि यस्मात्[४], दूरेण[५], अवरं[६], तस्मात् बुद्धौ[७], शरणं[८], अन्विच्छ[९], फलहेतवस्तु[१०], कृपणाः किलेत्यर्थः ।

हे धनञ्जय ! बुद्धियोगात् = बुद्ध्या व्यवसायात्मिकया कृतः कर्मयोगः बुद्धियोगः, बुद्धिसाधनभूतो वा तस्मात्सकाशादन्यत् यद्वा ज्ञानलक्षणादुपायादन्यत्[२] कर्म = काम्यं[३] हि = यस्मात्[४] दूरेण = अतीव[५], अवरं = निकृष्टं अत्यन्तमपकृष्टं वा तस्मात्[६], बुद्धौ शरणं ज्ञाने स्थितिज्ञानोपायानुष्ठानलक्षणां यद्वा त्रातारमीश्वरमाश्रयेत्यर्थः[८], अन्विच्छ = अनुतिष्ठ[९], फलहेतवस्तु फले कर्मकृतौ हेतुर्येषां ते तथा काम्यकर्मिणः ते तु सकामनराः[१०], कृपणाः दीनाः किलेत्यर्थः । यो वा एतदक्षरमविदित्वा गार्ग्य अस्माल्लोकात्प्रैति स कृपण इति श्रुतेः ॥ ४९ ॥

### भाष्यम्

**इतश्च योगाय युज्यस्वेत्याह– दूरेणेति । बुद्धियोगाज्ज्ञानलक्षणादुपायात् । दूरेण अतीव । अतो बुद्धौ शरणं ज्ञाने स्थितिम् । फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः ॥ ४९ ॥**

*प०टी०*— उत्तरश्लोकद्वयमवतार्य व्याचष्टे **पूर्वेति** ॥ ४८-४९ ॥

***न०टी०***— ननु फलत्वाविशेषात् स्वर्गमोक्षयोः, फलोपायज्ञानोद्देशेन कर्मकरणाद्वरं फलोद्देशेन कर्मकरणमिति मन्दाशङ्कां परिहर्तुमुत्तरश्लोकमवतार्य व्याचष्टे **इतश्चेति** । न केवलं फलेच्छाविध्य-योगात् ज्ञानेच्छया कर्मकरणम् । किन्तु ज्ञानलक्षणात् मोक्षोपायात् स्वर्गादिसाधनस्य कर्मणः फलतोऽतीव नीचत्वादपीतरफलकार्पण्यं हित्वा ज्ञाने स्थितिं मनसः कुर्वित्यर्थः ॥ ४९ ॥

***प्र०दी०***— ननु योगोपदेशमुपक्रम्य कर्मणो बुद्धियोगादवरत्वं किमर्थमुच्यत इत्यत आह— **इतश्चेति** । युज्यस्व प्रयतस्व । 'यावानर्थः' इति कर्मफलस्य ज्ञानफलापेक्षयाऽल्पत्वात् 'योगाय युज्यस्व' इत्युक्तम् । अत्र तु तत्रैव हेत्वन्तरमुच्यते । बुद्धियोगादिति षष्ठीसमासप्रतीतिनिरासायाह— **बुद्धियोगादिति** । लक्षणशब्दः स्वरूपार्थः । पुरुषार्थसम्बन्धिना कर्मणा सह निर्देशे तथाभूतस्य ज्ञानस्यैव ग्रहणं युक्तमिति भावः । उपायात्पुरुषार्थस्य । दूरशब्दो विप्रकर्षवाची । तस्यात्र कथमन्वय इत्यत आह— **दूरेणेति** । उक्तं ज्ञानात् कर्मणोऽतीवावरत्वमिदानीमुपपादनीयम् । तद्विहाय किमिदं तृतीयपादेनोच्यत इत्यतः साध्यनिर्देशोऽयमिति सूचयन् व्याचष्टे— **अत इति** । ज्ञाने स्थितिं तदुपाय-योगानुष्ठानलक्षणाम् । फलहेतूनां कृपणत्ववर्णनमनुपयुक्तमित्यत आह— **फलमिति** ॥ ४९ ॥

***भा०दी०***— षष्ठीसमास एव कुतो नेत्यत आह **पुरुषार्थसम्बन्धि(त्वे)नेति** । उपायादित्यत्र आकाङ्क्षां पूरयति **पुरुषार्थस्येति** । **तदुपाययोगेति** । निष्कामकर्मानुष्ठानेत्यर्थः ॥ ४९ ॥

***भा०र०***— **उपक्रम्य** "योगे त्विमां शृणु" इत्यनेन । अवरत्वमित्यनन्तरं प्रकृतासङ्गतमिति शेषः । युज्यस्वेति युज समाधावित्यस्य रूपम् । श्यन्प्रयोगात् । समाधिश्च चित्तवृत्तिनिरोधः । ततश्च समाधेर्योगरूपत्वाद् योगाय युज्यस्वेत्ययुक्तमित्यतो व्याचष्टे **प्रयतस्वेति** । अस्मादपीत्यर्थकेन 'इतश्च' इत्यनेन प्रागेको हेतुरुक्त इति सूचितम् । तं हेतुं विवृण्वन्नाह **यावानर्थ इतीति** । श्लोक इति शेषः । **योगाय युज्यस्व** ज्ञानोपायाय प्रयतस्व । **अत्र तु** 'दूरेण' इति श्लोके । **हेत्वन्तरं** कर्मरूपस्य पुमर्थोपायस्य ज्ञानरूपोपायादधमत्वरूपं हेत्वन्तरम् । **प्रतीतिनिरासायेति** । उक्तसमासाश्रयणे योगशब्दस्योपायोऽर्थः । बुद्धेर्योऽयमुपायः कर्मलक्षणः । "कर्मणा ज्ञानमातनोति" इति श्रुतेः । तस्मात् कर्मणः कर्मणोऽवरत्ववर्णनमयुक्तमिति भ्रान्तिं निरस्यन् कर्मधारयमाह भाष्यकार इत्यर्थः । भाष्ये ज्ञानस्य यल्लक्षणमसाधारणो धर्म इति प्रतीतिनिरासायाऽऽह **लक्षणशब्द इति** । षष्ठीसमास-पक्षेऽपि ज्ञानोपायरूपनिवृत्तकर्मापेक्षया काम्यकर्मणोऽतीवावरत्वरूपप्रकृतसिद्धेः किं कर्मधारया-श्रयणेनेत्यतोऽभिप्रायमाह **पुरुषार्थेति** । पुरुषैरर्थ्यमानो हि पुरुषार्थः । स च द्विविधः । स्वर्गो मोक्षश्चेति । तत्र बुद्धियोगादवरं कर्मेति सहनिर्देशात् स्वर्गरूपपुरुषार्थसाधनप्रवृत्तकर्मापेक्षया मोक्षरूप-

पुरुषार्थसाधनज्ञानस्यैव बुद्धियोगशब्देन ग्रहणं युक्तम् । तच्च कर्मधारयसमास एव घटते । न षष्ठीसमासपक्षे । यदि च स्वर्गमोक्षाविव ज्ञानमपि स्वतः पुरुषार्थः स्यात् तदा षष्ठीसमासः स्यादपि । न चैवमिति भावः । **विप्रकर्षवाची** देशाव्यवधानवाची । **तस्य** देशतो व्यवधानरूपदूरत्वस्य । **अत्र** कर्मणोऽवरत्वरूपेऽर्थे । नात्र दूरशब्दो देशव्यवधानार्थोऽभिप्रेतः । येनानन्वयशङ्का । किन्त्वतिशयेन आत्यन्तिकत्वलक्षणेनेत्यर्थ इति 'अतीव' इति भाष्यार्थ इति भावः । ज्ञानस्य ज्ञानिस्थितिं प्रत्यनधिकरणत्वादाह **तदुपायेति** । ज्ञानोपायभूतनिवृत्तकर्मेत्यर्थः । बुद्धौ 'शरणमन्विच्छ' इति प्रकृतार्थासङ्गतत्वादाह **अनुपयुक्तमिति** । **फलमितीति** । फलं फलाभिसन्धानं कर्मनिर्वर्तने हेतुः कारणं येषां पुरुषाणां ते फलहेतवः पुरुषाः कृपणाः दीना यतः अतो ज्ञानादतीवावरं कर्मेति कर्मणो ज्ञानादतीवावरत्ववर्णने तुरीयपादो हेतुसमर्पक इति भाष्याभिप्राय इति न प्रकृतासङ्गतिरिति भावः ।

***गीताक्षरार्थस्तु***— ज्ञानोपायाय यतस्वेत्युक्तार्थे कर्मफलस्य ज्ञानफलादल्पत्वादित्येको हेतुः 'यावानर्थः' इत्यत्रोक्तः । अत्र तु कर्मरूपस्य पुरुषार्थोपायस्य ज्ञानरूपपुमर्थोपायादधमत्वरूपं हेत्वन्तरमुच्यते **दूरेणेति** । बुद्धियोगाद् ज्ञानलक्षणात् पुमर्थोपायात् कर्म दूरेणावरम् अतीव निकृष्टं हि यतः अतो बुद्धौ ज्ञानलक्षणोपाये शरणं तदुपयोगानुष्ठानलक्षणां स्थितिम् अन्विच्छ कुर्विति यावत् । कथं कर्मणो ज्ञानादतीवावरत्वमित्यत उक्तं **कृपणा इति** । फलं कर्मकृतौ हेतुर्येषां ते तथा । काम्यकर्मिणः कृपणाः दीनाः । "इमं लोकं हीनतरं वा विशन्ति" इति हि श्रुतिः । अतो दूरेणावरमिति ॥ ४९ ॥

**गीतातात्पर्यनिर्णयः**

**बुद्धौ जातायामपि विष्णुमेव शरणमन्विच्छ ।**

***प्रका०***— बुद्धौ शरणमित्येतद्व्याचष्टे **बुद्धावित्यादिना** ॥

***न्या०दी०***— ज्ञानात्कर्माधममित्युक्तम् । तर्हि ज्ञानस्योत्तमत्वात् ज्ञानावस्थायामीश्वरैक्यभावनं युक्तमित्याशङ्कापरिहारायोच्यते 'बुद्धाविति' । तत्रैतच्छङ्कापरिहारः कथमुक्त इत्यत आह **बुद्धाविति** ॥

**गीतातात्पर्यनिर्णयः**

**"अज्ञानां ज्ञानिनां चैव मुक्तानां शरणं हरिः ।**
**तं ये स्वैक्येन मन्यन्ते सर्वभिन्नं गुणोच्छ्रयात् ।**
**कृपणास्ते तमस्यन्धे निपतन्ति न संशयः ।**

न तेषामुत्थितिः क्वापि नित्यातिशयदुःखिनाम् ।
गुणभेदविदां विष्णोर्भेदाभेदविदामपि ।
देहकर्मादिषु तथा प्रादुर्भावादिकेऽपि वा ।
स्वोद्रिक्तानां तदीयानां निन्दां कुर्वन्ति येऽपि च ।
सर्वेषामपि चैतेषां गतिरेषा न संशयः ॥''

—इति नारदीये ॥ ४९ ॥

*न्या०दी०*— अस्मिन्नेवार्थे स्मृतिसम्मतिं दर्शयंस्तयैवोत्तरपादमपि व्याचष्टे **अज्ञानामिति** ॥ फलहेतुपदव्याख्यानं ''तं ये स्वैक्येन'' इत्यादि पूर्ववत् । कृपणाः कृपाविषयाः । तत्र हेतुमाह **तमसीति** ॥

*भा०दी०*— **पूर्ववदिति** । मा कर्मफलहेतुर्भूरित्यत्रेव मन्यन्त इति योज्यमित्यर्थः । तथा च ऐक्यभावानां ये कुर्वन्तीत्यर्थलाभ इति भावः । यद्वा फलहेतुपदेन कथमैक्यभावनालाभः । येन तस्येदं व्याख्यानमित्यत आह **पूर्ववदिति** । मा कर्मफलहेतुर्भूरितिवदित्यर्थः । फलहेतुरीश्वरः । ये मनसा फलहेतवो भवन्तीत्यर्थः । फलहेतुरीश्वरोऽहमिति मन्यमाना इति पूर्ववदित्यर्थः । कृपाया अविषयास्त इत्यर्थः । यद्वा कृपां प्रति विषयाः शोच्या इत्यर्थः ॥

**गीता**

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥**

*वि०वि०*— काम्यकर्मिणां कृपणत्वेऽपि कथं कर्म दूरेणावरमित्यपेक्षायां कर्मफलाद्विलक्षणं ज्ञानफलमाह **बुद्धियुक्त इति** । ज्ञानस्य महाफलत्वात् । योगाय ज्ञानोपायाय युज्यस्व प्रयतस्व । योगं स्तौति ।

अथवा, अस्तु योगे प्रयत्नः । किं फलस्नेहरहितकर्मणेत्याशङ्क्य यथावत् विष्णुं ज्ञात्वा तदर्थत्वेन कर्मकरणमित्येतत्कौशलमेव योग इत्याह **योग इति** ॥ ५० ॥

*वा०ल०*— 'बुद्धियुक्तो' इत्यत्र सुकृतं काम्यकर्म ॥ ५० ॥

***सा०सं०***— ज्ञानात् कर्म अवरम् इत्येतत् काम्यकर्मिकाणां कृपणत्वोक्त्योपपाद्य, इदानीं कर्मफलात् ज्ञानफलस्य विलक्षणत्वोक्त्याऽप्युपपादयति **बुद्धियुक्त इति । बुद्धियुक्तो** भगवज्ज्ञान-युक्तः । **उभे सुकृतदुष्कृते** पुण्यपापे **जहाति** त्यजति । पुण्यमध्ये यदनिष्टं मानुष्यादिफलकं तज्जहाति । यत्तु उपासनादिजन्यं ज्ञानवृद्धिकरं मुक्तावानन्दवृद्धिकरं च तत्पुण्यं नैव जहाति । दुष्कृतं तु सर्वात्मना जहाति । **तस्मात्** ज्ञानस्य सर्वानिष्टनिवृत्तिविशिष्टोभयवृद्धिरूपमहाफलत्वात्, **योगाय** ज्ञानोपायाय **युज्यस्व** सन्नद्धो भव, प्रयतस्वेति वा । योगं स्तौति **योग इति । योगो** ज्ञानोपायः । **कर्मसु कौशलं** श्रेष्ठमित्यर्थः ।

यद्वा, अस्तु ज्ञानोपायाय प्रयत्नः । किं फलस्नेहरहितकर्मणेत्यत आह **योग इति । कर्मसु** मध्ये भगवज्ज्ञानपूर्वं फलस्नेहरहितं भगवदर्थत्वेन क्रियमाणं कर्म **कौशलमुच्यते** । स एव **योगो** नाम । अतः फलस्नेहहीनं कर्मैव ज्ञानोपाय इत्यर्थः ॥ ५० ॥

***अ०प्र०***— बुद्धियोगयुक्तस्तु श्रेष्ठ इत्याह **बुद्धीति** ।

इह[१], बुद्धियुक्तः[२], उभे सुकृतदुष्कृते[३], यस्माज्जहाति[४], तस्मात्[५], योगाय[६], युज्यस्व[७], योगस्तु[८], कर्मसु = विषये[९], कौशलमेवेत्यन्वयः[१०] ॥

इह = इहैव जन्मनि[१], बुद्धियुक्तः = सदसद्वर्गापरोक्षज्ञानी[२], उभे सुकृत-दुष्कृते = उभे पूर्वोक्ते पुण्यपापे सुकृतं स्वर्गादिप्रापकं दुष्कृतं निरयप्रापकं ते उभे[३], जहाति = यस्मात्परमेश्वरप्रसादेन जहाति त्यजति[४], तस्माद्योगाय ज्ञानोपायाय तस्मात् ज्ञानस्य महाफलत्वात्, यद्वा तदर्थाय कर्मयोगायेति वा[६], युज्यस्व घटस्व कुतोऽयं मम पुत्रकलत्रादीनां संसारः कथं वा निवर्त्यते इति मत्वा श्रीकृष्णचरणारविन्दैकध्याने मनःसङ्घट्टनां कुरु इति भावः[७], योगस्तु कर्मसु विषये[९], कौशलमेव[११], यं तत्कर्मसु यत्कौशलं बन्धकानामपि तेषां कर्मणां ईश्वराराधनेन मोक्षपरत्व-सम्पादनचातुर्यं स एव योगः अथवा अस्तुयोगे प्रयत्नः किं फलस्नेहरहितकर्मणेत्याशङ्क्य यथावे-द्विष्णुर्ज्ञात्वा तदर्थत्वेन कर्मकरणमित्येतत्कौशलमेवेत्याह **योगेति** ॥ ५० ॥

**भाष्यम्**

**ज्ञानफलमाह बुद्धियुक्त इति । सुकृतमप्यप्रियं मानुष्यादिफलं जहाति । न बृहत्फलमप्युपासनादिनिमित्तम् । 'न हास्य कर्म क्षीयते', 'अविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवति' इत्यादि-**

**श्रुतिस्मृतिभ्यः । अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र । उभयक्षयश्रुतिरपि अनिष्टविषया । न हीष्टपुण्यक्षये किञ्चित् प्रयोजनम् । न चेष्टनाशो ज्ञानिनो युक्तः । इष्टाश्च केचिद्विषयाः । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति,' 'प्रजापतेस्सभां वेश्म प्रपद्ये', 'यशोऽहं भवामि ब्राह्मणानां', 'स्त्रीभिर्वा यानैर्वा', 'अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत् सृजते', 'कामान्नी कामरूप्यनुसञ्चरन्', 'स एकधा भवति' इत्यादिश्रुतिभ्यः । बहुत्वेऽप्यात्मसुखस्य पुनरिष्टत्वात् कर्मसुखे न विरोधः । अनुभवशक्तिश्चेश्वरप्रसादात् । श्रुतेश्च । न च शरीरपातात् पूर्वमेव तत् । 'स तत्र पर्येति', 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' इत्याद्युत्तरत्र श्रवणात् ।**

***प०टी०***— यतो न विशेषतो फलमिति नरकादिप्राप्त्येककर्मणां काम्यकर्मणां कृपणत्वेऽपि कुतो ज्ञानादत्यवरत्वं कर्मण इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **ज्ञानेति** । न चास्य 'यावानार्थः' इत्यनेन गतार्थता । तत्र कर्मफलात् ज्ञानफलस्याधिक्यकथनात्, अत्र कर्मनिषिद्धत्वं च ज्ञानस्यात्युत्तमत्वोक्तेरिति । सुकृतहानपदेन सर्वसुकृतहानमित्यपव्याख्यानं निराकरोति **सुकृतमपीति** । ननु 'नास्त्यकृतः कृतेन' इत्यादि श्रुतिभिः कर्मणः क्षयिष्णुत्वमुच्यते । 'पुण्यपापे विधूय' इति ज्ञानिनोऽप्युभयक्षयः श्रूयते । अतः कथमेतत् ज्ञ? इत्यत आह **अत इति** । अतः श्रुतिबलादेव । किं च ज्ञानीष्टकर्मक्षयः स्वेच्छया बलाद्वा ? नाद्य इत्याह **न हीति** । न द्वितीय इत्याह **न चेति** । मोक्षस्यापुरुषार्थत्वापत्तेरित्यर्थः । मुक्तस्य स्वानन्दातिरिक्तकर्मसाध्येष्टाभावापादानं नानिष्टमित्यत आह **इष्टाश्चेति** । ननु मुक्तस्य स्वरूपानन्द एव पूर्णः । अतः किं विषयभोगेन ? इत्यत आह **बहुत्वेऽपीति** । अनिन्द्रियस्य कथं विषयानुभवशक्तिः ? इत्यत आह **अनुभवेति** । किमनिन्द्रियस्यापि सा शक्तिः कथम् ? इत्यत आह **श्रुतेश्चेति** । भोगश्रुत्यन्यथानुपपत्त्येत्यर्थः । भोगश्रुतिः शरीरपातात् पूर्वजीवन्मुक्तविषयेत्यत आह **न चेति** । 'अस्माच्छरीरादुत्थाय', 'अस्माल्लोकात् प्रेत्य' इत्युत्तरत्र सुश्रवणम् ।

***न०टी०***— ज्ञानादत्यवरत्वात् कर्मणः फलापेक्षया ज्ञाने स्थितिं कुर्वित्युक्तम् । तत्कथम् ? इत्याकाङ्क्षायां कर्मी स्वर्गादिभोगानन्तरं निरयाद्यपि गच्छति । ज्ञानी तु तदापादकं सर्व कर्म हित्वाऽनन्तरं सुखमेवाश्नुत इति भावेनोत्तरश्लोकमवतारयति **ज्ञानफलमिति** । अत्र कश्चिज्ज्ञानिनः सर्वसुकृतहानिमाचष्टे । न त्वप्रियमानुष्यादिसुकृतहानिमात्रम् । कर्ममात्रस्य फलपाकान्तत्वश्रवणात् ।

'पुण्यपापे विधूय' इत्यविशेषणोभयक्षयश्रुतेश्चेति । तन्न युक्तमित्याह **सुकृतमपीत्यादिना** । 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' इति बहुफलस्योपासनादिनिमित्तस्याक्षयत्वश्रवणात् । 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति' इत्यादिना तत्राज्ञानिकृतहोमयागतपसामन्तवत्वोक्त्या तेषामेव ज्ञानिकृतानामनन्तत्वावगमाच्च । अविदित्वेति विशेषणवैयर्थ्यादन्यथा । आदिशब्देन 'अनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते' इत्यादेश्च । **अतः** एतत्पर्यालोचनया, 'अनेवंवित्' इत्यादिविशेषणरहिताऽपि या कर्मक्षयश्रुतिः सा सर्वाऽप्यज्ञानिविषया । 'पुण्यपापे विधूय' इत्यादिकाऽपि 'न हास्य' इत्यादिपर्यालोचनयाऽनिष्टपुण्यविषयेत्यवगम्यते । किञ्च किमसौ ज्ञानी स्वयमेवेष्टमपि पुण्यं हातुमिच्छति ? मुक्तौ बलात् तद्धीयते वा ? न तावदाद्यः । प्रयोजनाभावादित्याह **न हीति** । इष्टहानेरमुक्तित्वात् नेतर इत्याह **न चेति** । न च मुक्तौ पुण्यफलविषयभोगेच्छैव नास्तीति वाच्यम् । बहुश्रुतिविरोधादित्याह **इष्टाश्चेति** । 'प्रजापतेः' इत्यादेर्विरिञ्चोक्तेरयमर्थः । ब्रह्मेशानादीनां प्रजानां पतेर्विष्णोः सभां वेश्म सभागृहं सभां च वेश्म चेति वा प्रपद्ये प्राप्नुयामिति हि तद्भाष्ये । ब्राह्मणादिसर्ववर्णानां मध्येऽहं यशो भवेयम् । धर्मधर्म्यभेदादेवमुक्तिः । मत्तोऽन्येषां यशो भवेदिति । 'स एकधा भवति त्रिधा भवति' इत्यादिना भूमोपासकस्य फलकत्वेन यथाकामं क्रीडोच्यते मुक्तौ । नन्वात्मसुखस्यैव बहुत्वात् किं कर्मसुखेन ? इत्यत आह **बहुत्वेऽपीति** । ननु प्राकृतकरणरहितस्य कथं भोगशक्तिः ? इत्यत आह **अनुभवशक्तिरिति** । भोगश्रुतेरपि तच्छक्तिः सिद्ध्यतीत्याह **श्रुतेरिति** । ननु श्रौतविषयाद्यन्तशरीरपातात् पूर्वमेव स्यात् । किमुत्तरत्र शक्तिकल्पनया ? इत्यत आह **न चेति** । 'अस्माच्छरीरात् समुत्थाय', 'अस्माल्लोकात् प्रेत्य' इत्यादि शरीरपातोत्तरकालीनत्वश्रवणादित्यर्थः । ननु स ज्ञानी सगुणब्रह्माप्य, तद्भित्वा ततो निर्गुणमाप्नोति । तेन चैकीभूतोऽमृतः सन् अभिवर्तते । तथा हि मोक्षधर्मे 'वीतरागान् यतीन्' इत्यारभ्य,

'सत्त्वं वहति शुद्धात्मन् परं नारायणं प्रभुम् ।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ।
परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभितः ।
परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् ॥' इति ।

*प्र०दी०*— बुद्धियुक्तः प्रेक्षावान् काम्यं सुकृतं दुष्कृतं च जह्यादिति योगस्वरूपनिरूपणपरतां निराकर्तुमाह— **ज्ञानेति** । कथं कर्मणो ज्ञानादतीवावरत्वमित्यतः काम्यकर्मिणः कृपणा दीनाः, "इमं

लोकं हीनतरं वा विशन्ति'' इत्युक्तेरित्युक्तम् । तथापि कथं दूरेणावरमित्यपेक्षायां, कर्मफलाद्विलक्षणं ज्ञानफलमाहेत्यर्थः । प्रतीतार्थेऽनुपपत्तिं तूत्तरत्र दर्शयिष्यति । अत्र दुष्कृतवत्सुकृतस्यापि सर्वात्मना हानं प्रतीयते । तत्सङ्कोचेन व्याचष्टे— **सुकृतमपीति** । अप्रियं सुकृतं कीदृशमित्यत आह— **मानुष्यादीति** । व्यावर्त्यमाह— **नेति** । बृहत् प्राङ् मुक्तेः ज्ञानादिगुणविवृद्धिलक्षणं, तदनन्तरं चानन्दवृद्धिरूपं फलं यस्य तद्बृहत्फलम् । तथाभूतं सुकृतमेव नास्ति, कारणाभावादित्यत आह— **उपासनेति** । आदिपदेन निवृत्तं कर्म । कुतः सङ्कोच इत्यत आह– **न हास्येति** । यजते ददाति । तप्यतेऽनेन । अत्रापि 'अविदित्वा' इति विशेषणाज्ज्ञानिनः सुकृताक्षयः प्रतीयते । उत्तरत्र वाऽस्या श्रुतेरुपयोगः । ननु 'नास्त्यकृतः कृतेन' इति श्रवणात् सत्प्रतिपक्षा एताः श्रुतय इत्यत आह— **अत इति** । विशेषश्रुतेर्बलवत्त्वादिति भावः । श्रुतिः श्रवणम् । ''क्षीयन्ते चास्य कर्माणि'' इति ज्ञानिनोऽपि कर्मक्षयः प्रतीयत इति चेन्न । निरवकाशश्रुतिविरोधेनास्य दुष्कृतविषयत्वात् । ''तदा विद्वान् पुण्यपापे विधूय'' इति ज्ञानिनोऽप्युभयक्षयश्रुतिरस्तीत्यत आह— **उभयेति** । उक्तैव युक्तिः । युक्तिविरुद्धं च ज्ञानिनः सर्वसुकृतहानम् । तथाहि । उपासनादिजनितं सुकृतं ज्ञानिनः किमिष्टमुतानिष्टम् । आद्ये किं तत्तदिच्छया क्षीयत उत ज्ञानस्वभावात् । आद्यं दूषयति— **न हीति** । येन ज्ञानी तत्क्षयमिच्छेदिति शेषः । द्वितीयं निराकरोति— **न चेति** । ज्ञानस्यापुरुषार्थताप्रसङ्गादिति भावः । नान्त्यः । अनिष्टत्वे कारणाभावात् । निष्फलत्वादनिष्टमित्यत आह— **इष्टाश्चेति** । केचिदित्यलौकिकाः । मुक्तौ अलौकिका विषया इष्टा भवन्ति । तत्प्राप्तिः सुकृतफलमिति भावः । मुक्तो विषयानिच्छतीत्येतत्कुत इत्यत आह— **स यदीति** । यशः यशस्वी । ब्राह्मणानां सकाशात् । मुक्तो यद्यत्कामयते तत्तत्कर्माऽस्मात् परमात्मनः सृजते । इष्टविषयप्राप्तिः सुकृतफल-मित्येतदप्यनया श्रुत्योच्यते । उपासनादिकमेव ज्ञानी न करोति । कृतेन वा सुकृतं न जायत इत्येतदप्यनया निराकृतम् ।

ननु मुक्तः किमर्थं विषयानिच्छेत् । न तावत् सुखार्थम् । ज्ञानेनावरणरूपाविद्यानिवृत्तावात्मस्वरूपसुखस्य व्यक्तत्वात् । पृथक्सुखस्यानङ्गीकारात् । नापि दुःखनिवृत्त्यर्थम् । अविद्यानिवृत्त्यैव तत्सिद्धेरिति । मैवम् । नाविद्यैवात्मस्वरूपावरणम् । किन्त्वीश्वरेच्छापि । तथा च वक्ष्यति । तथा च ज्ञानेना-विद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखं च बहुतरं व्यज्यते । न तु सर्वम् । ज्ञानोत्तरमनुष्ठितेन निवृत्तकर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोति । अत्र च भाष्यकृतैव तत्र तत्र प्रमाणान्युक्तानि । अनेनैवाभिप्रायेण श्रुत्यादिषु मुक्तेर्ज्ञानमात्रसाध्यत्वं ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यते ।

ननु ज्ञानमात्रसाध्यं यत्स्वरूपसुखं तदेव बहुतरमस्ति । अतः कर्मसाध्यविषयभोगव्यङ्ग्य-सुखाङ्गीकारः किमर्थ इत्यत आह— **बहुत्वेऽपीति** । कर्मसुखे अङ्गीकृत इति शेषः । शरीरेन्द्रिय-रहितस्य मुक्तस्य कथं विषयानुभवे शक्तिरित्यत आह— **अनुभवेति** । तदुक्तं 'ब्राह्मेण जैमिनिः' इति । किं च 'कामरूप्यनुसञ्चरन्' इत्यादिलीलाविग्रहग्रहणश्रुतेश्च मुक्तस्य विषयानुभवो युज्यत इत्याह— **श्रुतेश्चेति** । ननु यदेतदुदाहृतासु श्रुतिषु विषयेच्छादिकं श्रूयते तच्चरमशरीरपातात् पूर्वकालीनं किं न स्यादित्यत आह— **न चेति** । ''अस्माच्छरीरात् समुत्थाय स तत्र पर्येति'', 'अस्माल्लोकात् प्रेत्य,' 'एतमानन्दमयं' इत्याद्युत्तरत्र श्रवणात् । इत्यादीति क्रियाविशेषणम् ।

*भा०दी०*— फलहेतव इति पदलब्धमाह **काम्यकर्मिण इति** । कृपणा इत्यनूद्य दीना इति व्याख्या कृता । तस्य तात्पर्यं **इमं लोकमित्याद्युक्तमिति** । एतेन कृपणा इति पदस्यावरतोप-पादकत्वं विवृतं ध्येयम् । 'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेन भूत्वा इमं लोकमि'ति श्रुत्यन्तरो युक्त एव । कृपण इत्यस्यार्थ इति भावेनेमं लोक-मित्याद्युक्तम् । **उत्तरत्र दर्शयिष्यतीति** । न हीष्टपुण्यक्षय इत्यादिनेति भावः । यद्वा 'अतो योगाय युज्यस्वे'ति तृतीयपादसङ्गत्युक्त्यवसरे तृतीयपादसङ्गतिरूपानुपपत्तिं दर्शयिष्यतीत्यर्थः । जुहोती-त्यनेनापौनरुक्त्यायाह । **यजतेति** । ददातीत्याह । यज देवपूजासङ्गतिकरणदानेष्विति धातोरिति भावः । तप्यत इत्यत्र कर्तारमाह **अनेनेति** । **उत्तरत्रेति** । अत इति वाक्ये उभयक्षयेति वाक्ये-ऽपीत्यर्थः । **ज्ञानिनोऽपीति** । 'यस्मिन्द्रष्टे परावर' इति वाक्यशेषादिति भावः । **निरवकाशेति** । **अविदित्वेति** । प्रागुक्तश्रुतिविरोधो नेत्यर्थः । यद्वा न हास्येति श्रुतावित्यर्थः । **युक्त्यैवेति** । निरवकाशश्रुतिविरोधरूपा युक्तिरित्यर्थः । **तथा च वक्ष्यतीति** । सप्तमे नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानातीति श्लोकव्याख्यावसरे सामर्थ्येनोपायेनेत्यादिना भाष्यकृ-द्वक्ष्यतीत्यर्थः । **तत्र तत्र प्रमाणानीति** । श्रुतिगीता-तात्पर्य-सूत्रभाष्यादौ तत्र तत्रेत्यर्थः । **अनेनैवाभिप्रायेणेति** । ज्ञानादेवाविद्याद्यशेषक्लेशनिवृत्तिविशिष्टबहुतरस्वरूपसुखाभिव्यक्तिरूपमोक्षो भवतीत्यभिप्रायेण 'तमेवं विद्वान्', 'दृष्ट्वैव तं मुच्यत' इत्यादि श्रुतिषु 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यत' इत्यादि स्मृतिषु विद्यैवेत्यादिसूत्रे च ज्ञानैकसाध्यत्वं मुक्तिगतज्ञानानभिव्यक्तसुख-विशेषस्य पूर्वकृतकर्मसाध्यत्वाभिप्रायेणैव तमात्मानमभिपश्यन्तो भवद्यतो भवेद्यनुकूलो भवेदाचार्यं परिचरेदित्यादि श्रुतिषु विहितत्वाच्च । श्रमकर्मापीत्यादिसूत्रादौ च ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यत इत्यर्थः । **तदुक्तमिति** । सूत्रकृतेत्यर्थः । सूत्रं पठति **ब्राह्मेणेति** । ब्रह्मशरीरेणानुभवति मुक्त इत्यर्थः । उत्तरत्र श्रवणादित्यत्र कस्मादित्यवध्यपेक्षायां देहत्यागादुत्तरत्रेति भावेन पूर्ववाक्योक्तिपूर्वं तद्वाक्यं आह **अस्माच्छरीरादित्यादि** ।

*भा०र०*— अन्यथाप्रतीतिं दर्शयितुमुक्तम् **प्रेक्षावानिति**। परोक्षज्ञानीत्यर्थः। ज्ञानफलकथनस्य प्रकृतोपयोगसिद्ध्ये भाष्यभावमाह **कथं कर्मण इति**। 'फलहेतवः' इत्यस्य फलितार्थः **काम्यकर्मिण इति**। ननु कार्पण्यमनौदार्यं, दृश्यते च काम्यकर्मिणामौदार्यमिति कथं ते कृपणा इत्यत आह **दीना इति**। एवमपि कथमवरत्वलाभ इत्यतो दीनशब्दतात्पर्यमाह **इममिति**। "देवेभ्य उत्तमं विष्णुं राजवद् यस्तु मन्यते। याजी स मानुषं याति साम्यहीनत्ववित्तमः" इति वचनात्। अयं वाशब्दो व्यवस्थितविकल्पार्थोऽवगन्तव्यः। तथा चोक्तविधं कृपणत्वमवरत्वे प्रयोजकमिति भावः। ज्ञानिनामपि लौकिकदुःखानुभवदर्शनेन कृपणत्वं सममिति भावेनाक्षिपति **तथाऽपि कथमिति**। अवरं कर्मेति शेषः। योगस्वरूपनिरूपणमत्रेति प्रतीतार्थे किं बाधकमित्यत आह **प्रतीतार्थ इति**॥ पूर्वार्धस्यास्मद्रीत्या ज्ञानफलप्रदर्शनपरत्व एव ज्ञानस्यैवं महाफलत्वाज्ज्ञानोपायाय युज्यस्वेति तृतीयपादः सङ्गच्छते। बुद्धियुक्तः प्रेक्षावानिति पूर्वोक्तविधया योगस्वरूपनिरूपणपरत्वे तु "बुद्धियुक्तः सुकृतदुष्कृते जह्यात्" इति योगस्य विहितत्वेन "तस्माद् योगाय युज्यस्व" इति पुनर्विधानमसङ्गतं स्यादित्यनुपपत्तिमाचार्यः "अतो योगाय युज्यस्व" इति तृतीयपादव्याख्यावसरे दर्शयिष्यतीत्यर्थः। मूले भाष्ये च सुकृतदुष्कृतशब्दौ पुण्यपापपरौ। अन्यथा तथाभूतकर्मणामाशुतरविनाशिनां ज्ञाननाश्यत्ववर्णनमयुक्तं स्यादित्याहुः। "प्रतीयते" इत्यतः परं "तदयुक्तम्। न हीष्टपुण्यक्षये" इत्यादिना "निराकरिष्यमाणत्वादित्यत" इति वाक्यशेषः। 'मानुष्यादि' इत्यादिपदेन राज्यभोगादिपरिग्रहः। व्यावर्त्यम् अप्रियमिति विशेषणव्यावर्त्यम्। ज्ञानादिगुणः ज्ञानभक्तिवैराग्यलक्षणगुणः। **तदनन्तरं** मुक्त्यनन्तरम्। **तथाभूतं** ज्ञानादिगुणवृद्धिफलकमानन्दवृद्धिफलकं च। **कारणाभावादिति**। "सुहृदः साधुकृत्यम्" इत्यादौ ज्ञानिनः सुकृतादृष्टप्रापककर्मादिकारणाभावावेदनादित्यर्थः। **सङ्कोचः** सुकृतशब्दोऽपि प्रियसुकृतपर इति सङ्कोचः। "न हास्य" इत्यतः पूर्वं "स य आत्मानमेव लोकमुपास्ते" इत्यत्र "जानाति च" इति तत्त्वप्रकाशिकोक्तेः "कारणेन कार्योपलक्षणं पश्यतीत्यर्थः" इति सुधोक्तेश्च ज्ञानिनः कर्म उपासनादिनिमित्तं सुकृतं प्राङ्मुक्तेर्ज्ञानादिगुणवृद्धिफलकं तदनन्तरं च आनन्दवृद्धिफलकमिति फलपर्यवसायित्वात् तत्फलस्य च अनन्तत्वान्न नश्यतीत्यर्थः। 'जुहोति' इत्यत्र धात्वर्थभूतहोमस्य देवतोद्देशेन द्रव्यपरित्यागात्मकत्वाद् यजिधात्वर्थोऽपि स एवेति पुनरुक्तिरित्याशङ्क्य तत्परिहाराय व्याचष्टे **यजते ददातीति**। यज देवपूजासङ्गतिकरणदानेष्विति धातोर्यजतिरत्र दानार्थो विवक्षित इति नोक्तपुनरुक्तिशङ्केति भावः। यद्यपि देवतोद्देशेन द्रव्यपरित्यागो योगः। तथा त्यक्तस्य वह्नौ प्रक्षेपो होम इति मीमांसकैर्यागहोमयोर्भेदोऽभ्युपगत इति न पुनरुक्तिः। तथाऽपि होमान्तर्गतत्वेन यागस्य लाभाद् यजतिर्दानार्थो व्याख्यात इत्यभियुक्ताः। "देवांश्च

याभिर्यजते ददाति च","यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्"," यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्" इत्यादिषु यागस्येव दानस्यापि पाठादत्रापि दानं ग्राह्यम् । एवञ्चाज्ञानिनो दातुरपि सुकृतमन्तवदेवेति ज्ञापितं भवतीति भावेन श्रुतौ शेषमाह **ददातीति** । मीमांसकैश्च शब्दान्तराधिकरणे यजति ददाति जुहोतीत्युदाहृत्य यजिधात्वर्थोपरक्तभावनया जुहोत्यर्थोपरक्तभावनया च ददातिधात्वर्थोपरक्ताभावनाऽपि भिन्नैवेत्युक्तमिति केचिद् व्याचक्षते । अन्ये तु यज देवपूजेति धातोर्यजेरत्र देवपूजार्थत्वे प्रीतिहेतुक्रियायाः पूजारूपत्वाद्धोमतपसोरपि देवताप्रीतिहेतुततया तत्पूजारूपत्वात् सङ्गतिकरणयोः प्रकृतानुपयोगेनाविवक्षितत्वाज्जुहोति तप्यत इत्येताभ्यां यजत इत्यस्य न विशेषार्थसमर्पकत्वमित्याशङ्क्य नायं धातुरुक्तार्थः, किन्तु दानार्थ इति भावेन यजत इत्येतद् ददातीति व्याख्यातमित्याहुः । तप्यत इत्यत्र कर्तुस्तिङाऽनुक्तेश्चैत्रेणौदनः पच्यत इत्यत्रेव कर्तरि तृतीयेति भावेनाह **तप्यतेऽनेनेति** ।

ननु "तपस्तपःकर्मकस्यैव" तपःकर्मकस्यैव "तप सन्तापे" इति धातोः कर्ता कर्मवद् भवति । तेन यागादि तप्यते तपस्तापस इति वैयाकरणैरभिधानात् "अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः" इति गीतायाभिधास्यमानत्वाच्च कर्मकर्तर्येवायं लकारः । तत्र च कर्तुस्तिङोक्तत्वान्नानभिहिताधिकारविहिता तृतीयोचिता । किन्तु प्रथमैवेति तापस इत्येव शेषपूरणं युक्तम् । न त्वनेनेत्यध्याहार इति चेदत्राहुः । 'तपस्तप्यते' इत्यत्र न सन्तपनरूपं तपो गृह्यते । येनोक्तसूत्रेण सन्तपनकर्तुः कर्मवद्भावविधानेन तिङाऽभिहितत्वात् तृतीया न स्यात् । किन्तु सन्तपनकारणीभूतं कृच्छ्रचान्द्रायणादिकमेव । तथा चानेन सूत्रेण सन्तपनकर्तुः कर्मवद्भावविधानेऽपि सन्तपनकारणीभूतकृच्छ्रादिकर्तुः कर्मवद्भावाविधानात् तपोरूपकर्मण एव तिङाऽभिहितत्वेन कर्तुस्तिङाऽनभिहितत्वात् तृतीया युक्तेत्यनेनेत्यध्याहृतं टीकायामिति । केचित्तु, कर्मण्येवायं लकारः । न कर्मकर्तरि । न चोक्तसूत्रेणात्र कर्मवद्भावः । आतिदेशिकमनित्यमिति तस्यानित्यत्वात् । न चाऽतिदेशिकस्यानित्यत्वे ज्ञापकाभावः । 'यत्तदेतेभ्यः' इति निर्देशस्यैव ज्ञापकत्वात् । "त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यते" इत्युक्तेः एतेभ्य इति वक्तव्ये 'यत्तदेतेभ्यः' इति निर्देशः "प्रावृट्शरत्कालदिवां जे" इति सूत्रे "अपो योनियन्मतुषु" इति वार्तिकं च प्रकृतिवदनुकरणमित्यातिदेशिककार्यस्यानित्यत्वं ज्ञापयति । तच्च ज्ञापकं सामान्यापेक्षयाऽऽश्रीयत इति आतिदेशिककार्यमात्रमनित्यमिति विज्ञायते । अत एव दुर्घटवृत्तौ उक्तपरिभाषायाः सामान्यापेक्षामाश्रित्य बहवः प्रयोगाः समर्थिता इति । तस्मादनेनेत्यध्याहारो युक्त इति समादधते । अन्ये तु शाब्दिकानां विवक्षाप्रधानत्वात् कर्तुः कर्मवद्भावाविवक्षायामुक्ताध्याहारोपपत्तिरित्याहुः ।

***भा०र०***— अन्यथाप्रतीतिं दर्शयितुमुक्तम् **प्रेक्षावानिति**। परोक्षज्ञानीत्यर्थः। ज्ञानफलकथनस्य प्रकृतोपयोगसिद्धये भाष्यभावमाह **कथं कर्मण इति**। 'फलहेतवः' इत्यस्य फलितार्थः **काम्यकर्मिण इति**। ननु कार्पण्यमनौदार्यं, दृश्यते च काम्यकर्मिणामौदार्यमिति कथं ते कृपणा इत्यत आह **दीना इति**। एवमपि कथमवरत्वलाभ इत्यतो दीनशब्दतात्पर्यमाह **इममिति**। ''देवेभ्य उत्तमं विष्णुं राजवद् यस्तु मन्यते। याजी स मानुषं याति साम्यहीनत्ववित्तमः'' इति वचनात्। अयं वाशब्दो व्यवस्थितविकल्पार्थोऽवगन्तव्यः। तथा चोक्तविधं कृपणत्वमवरत्वे प्रयोजकमिति भावः। ज्ञानिनामपि लौकिकदुःखानुभवदर्शनेन कृपणत्वं सममिति भावेनाक्षिपति **तथाऽपि कथमिति**। अवरं कर्मेति शेषः। योगस्वरूपनिरूपणमत्रेति प्रतीतार्थे किं बाधकमित्यत आह **प्रतीतार्थ इति**॥ पूर्वार्धस्यास्मद्रीत्या ज्ञानफलप्रदर्शनपरत्व एव ज्ञानस्यैवं महाफलत्वाज्ज्ञानोपायाय युज्यस्वेति तृतीयपादः सङ्गच्छते। बुद्धियुक्तः प्रेक्षावानिति पूर्वोक्तविधया योगस्वरूपनिरूपणपरत्वे तु ''बुद्धियुक्तः सुकृतदुष्कृते जह्यात्'' इति योगस्य विहितत्वेन ''तस्माद् योगाय युज्यस्व'' इति पुनर्विधानमसङ्गतं स्यादित्यनुपपत्तिमाचार्यः ''अतो योगाय युज्यस्व'' इति तृतीयपादव्याख्यावसरे दर्शयिष्यतीत्यर्थः। मूले भाष्ये च सुकृतदुष्कृतशब्दौ पुण्यपापपरौ। अन्यथा तथाभूतकर्मणामाशुतरविनाशिनां ज्ञाननाश्यत्ववर्णनमयुक्तं स्यादित्याहुः। ''प्रतीयते'' इत्यतः परं ''तदयुक्तम्। न हीष्टपुण्यक्षये'' इत्यादिना ''निराकरिष्यमाणत्वादित्यत'' इति वाक्यशेषः। 'मानुष्यादि' इत्यादिपदेन राज्यभोगादिपरिग्रहः। व्यावर्त्यम् अप्रियमिति विशेषणव्यावर्त्यम्। ज्ञानादिगुणः ज्ञानभक्तिवैराग्यलक्षणगुणः। **तदनन्तरं** मुक्त्यनन्तरम्। **तथाभूतं** ज्ञानादिगुणवृद्धिफलकमानन्दवृद्धिफलकं च। **कारणाभावादिति**। ''सुहृदः साधुकृत्यम्'' इत्यादौ ज्ञानिनः सुकृतादृष्टप्रापककर्मादिकारणाभावावेदनादित्यर्थः। **सङ्कोचः** सुकृतशब्दोऽपि प्रियसुकृतपर इति सङ्कोचः। ''न हास्य'' इत्यतः पूर्वं ''स य आत्मानमेव लोकमुपास्ते'' इत्यत्र ''जानाति च'' इति तत्त्वप्रकाशिकोक्तेः ''कारणेन कार्योपलक्षणं पश्यतीत्यर्थः'' इति सुधोक्तेश्च ज्ञानिनः कर्म उपासनादिनिमित्तं सुकृतं प्राङ्मुक्तेर्ज्ञानादिगुणवृद्धिफलकं तदनन्तरं च आनन्दवृद्धिफलकमिति फलपर्यवसायित्वात् तत्फलस्य च अनन्तत्वान्न नश्यतीत्यर्थः। 'जुहोति' इत्यत्र धात्वर्थभूतहोमस्य देवतोद्देशेन द्रव्यपरित्यागात्मकत्वाद् यजिधात्वर्थोऽपि स एवेति पुनरुक्तिरित्याशङ्क्य तत्परिहाराय व्याचष्टे **यजते ददातीति**। यज देवपूजासङ्गतिकरणदानेष्विति धातोर्यजतिरत्र दानार्थो विवक्षित इति नोक्तपुनरुक्तिशङ्केति भावः। यद्यपि देवतोद्देशेन द्रव्यपरित्यागो योगः। तथा त्यक्तस्य वह्नौ प्रक्षेपो होम इति मीमांसकैर्यागहोमयोर्भेदोऽभ्युपगत इति न पुनरुक्तिः। तथाऽपि होमान्तर्गतत्वेन यागस्य लाभाद् यजतिर्दानार्थो व्याख्यात इत्यभियुक्ताः। ''देवांश्च

याभिर्यजते ददाति च'',''यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्','' यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्'' इत्यादिषु यागस्येव दानस्यापि पाठादत्रापि दानं ग्राह्यम् । एवञ्चाज्ञानिनो दातुरपि सुकृतमन्तवदेवेति ज्ञापितं भवतीति भावेन श्रुतौ शेषमाह **ददातीति** । मीमांसकैश्च शब्दान्तराधिकरणे यजति ददाति जुहोतीत्युदाहृत्य यजिधात्वर्थोपरक्तभावनया जुहोत्यर्थोपरक्तभावनया च ददातिधात्वर्थोपरक्ताभावनाऽपि भिन्नैवेत्युक्तमिति केचिद् व्याचक्षते । अन्ये तु यज देवपूजेति धातोर्यजेरत्र देवपूजार्थत्वे प्रीतिहेतुक्रियायाः पूजारूपत्वाद्धोमतपसोरपि देवताप्रीतिहेतुततया तत्पूजारूपत्वात् सङ्गति‍करणयोः प्रकृतानुपयोगेनाविवक्षितत्वाज्जुहोति तप्यत इत्येताभ्यां यजत इत्यस्य न विशेषार्थसमर्पकत्वमित्याशङ्क्य नायं धातुरुक्तार्थः, किन्तु दानार्थ इति भावेन यजत इत्येतद् ददातीति व्याख्यातमित्याहुः । तप्यत इत्यत्र कर्तुस्तिङाऽनुक्तेश्चैत्रेणौदनः पच्यत इत्यत्रेव कर्तरि तृतीयेति भावेनाह **तप्यतेऽनेनेति** ।

ननु ''तपस्तपःकर्मकस्यैव'' तपःकर्मकस्यैव ''तप सन्तापे'' इति धातोः कर्ता कर्मवद् भवति । तेन यागादि तप्यते तपस्तापस इति वैयाकरणैरभिधानात् ''अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः'' इति गीतायाभिधास्यमानत्वाच्च कर्मकर्तर्येवायं लकारः । तत्र च कर्तुस्तिङोक्तत्वान्नानभिहिताधिकारविहिता तृतीयोचिता । किन्तु प्रथमैवेति तापस इत्येव शेषपूरणं युक्तम् । न त्वनेनेत्यध्याहार इति चेदत्राहुः । 'तपस्तप्यते' इत्यत्र न सन्तपनरूपं तपो गृह्यते । येनोक्तसूत्रेण सन्तपनकर्तुः कर्मवद्भावविधानेन तिङाऽभिहितत्वात् तृतीया न स्यात् । किन्तु सन्तपनकारणीभूतं कृच्छ्रचान्द्रायणादिकमेव । तथा चानेन सूत्रेण सन्तपनकर्तुः कर्मवद्भावविधानेऽपि सन्तपनकारणीभूतकृच्छ्रादिकर्तुः कर्मवद्भावाविधानात् तपोरूपकर्मण एव तिङाऽभिहितत्वेन कर्तुस्तिङाऽनभिहितत्वात् तृतीया युक्तेत्यनेनेत्यध्याहृतं टीकायामिति । केचित्तु, कर्मण्येवायं लकारः । न कर्मकर्तरि । न चोक्तसूत्रेणात्र कर्मवद्भावः । आतिदेशिकमनित्यमिति तस्यानित्यत्वात् । न चाऽतिदेशिकस्यानित्यत्वे ज्ञापकाभावः । 'यत्तदेतेभ्यः' इति निर्देशस्यैव ज्ञापकत्वात् । ''त्यदादीनां मिथः संहोक्तौ यत् परं तच्छिष्यते'' इत्युक्तेः एतेभ्य इति वक्तव्ये 'यत्तदेतेभ्यः' इति निर्देशः ''प्रावृट्शरत्कालदिवां जे'' इति सूत्रे ''अपो योनियन्मतुषु'' इति वार्तिकं च प्रकृतिवदनुकरणमित्यातिदेशिककार्यस्यानित्यत्वं ज्ञापयति । तच्च ज्ञापकं सामान्यापेक्षयाऽऽश्रीयत इति आतिदेशिककार्यमात्रमनित्यमिति विज्ञायते । अत एव दुर्घटवृत्तौ उक्तपरिभाषायाः सामान्यापेक्षामाश्रित्य बहवः प्रयोगाः समर्थिता इति । तस्मादनेनेत्यध्याहारो युक्त इति समादधते । अन्ये तु शाब्दिकानां विवक्षाप्रधानत्वात् कर्तुः कर्मवद्भावाविवक्षायामुक्ताध्याहारोपपत्तिरित्याहुः ।

यत्तु, सूत्रे एवकारेणेतरकर्मव्यावृत्तिर्विवक्ष्यते । प्रकृते च तपस इव बहूनि वर्षसहस्राणीति कालस्यापि कर्मत्वाभ्युपगमेन केवलतपःकर्मकत्वाभावाद् युज्यते अनेनेति शेषपूरणमिति । तन्न । अत्र सूत्रे व्यर्थ एवकार इति वैयाकरणसिद्धान्तव्याकोपापातात् । कालस्येह कर्मत्वाभावाच्च । द्वितीया तु "कालाध्वनोरत्यन्तसंयोगे" इति शास्त्रादाधारेऽपि युक्ता । "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञक इति वाच्यम्" इति वार्तिकात् कालस्य कर्मत्वमिति तु गर्भस्रावेणैव गतम् । जुहोत्यादेस्सकर्मकत्वात् । अपरे तु यजते ददाति तप्यते अनेनेत्यत्र अनेनेत्यस्य एवं यागादिसर्वकर्मप्रत्यायकवाक्योदाहरणेन सुकृताक्षयः प्रतीयते इत्यन्वय इत्याहुः । **अत्रापि** न केवलं "न हास्य" इति वाक्ये । "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति" इत्यादिना तत्र अज्ञानिकृतहोमयागतपसामन्तवत्त्वोक्त्या तेषामेव ज्ञानिकृतानामनन्तत्वमवगम्यते । अन्यथा अविदित्वेति विशेषणवैयर्थ्यादिति प्राचीनटीकामनुसृत्याह **अविदित्वेति** । **विशेषणादिति** । सुकृताक्षयः यागदानतपआदिजनितसुकृतेषु न कस्यापि सुकृतस्य क्षय इत्ययमर्थः सर्वसुकृतप्रत्यायकवाक्योदाहरणेन प्रतीयते । अन्यथा "अनेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव" इति वाक्यमेवोदाहृत्य भाष्यकारः कृती स्यात् । उदाहरच्चानेकक्रियापदघटितं वाक्यम् । तेनोक्तार्थः प्रत्येतव्य इति ज्ञायत इति व्याकुर्वन्तो व्याकरणविसंवादं पर्यहरन् ।

नन्वत्र वाक्ये ज्ञानिनः सुकृताक्षयप्रतीतिरार्थिकी, न तु श्रौतीत्यतः पक्षान्तरमाह **उत्तरत्रेति** । न केवलं "न हास्य कर्म क्षीयते" इत्युक्तेऽर्थे उक्तरीत्योपयोगः । किन्तु "अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र" इत्युत्तरवाक्ये च काऽसौ कर्मक्षयश्रुतिरित्यपेक्षायामियं श्रुतिरुदाहर्तव्येत्युपयोगो ज्ञातव्य इत्यर्थः । **नास्तीति** । अकृतो मोक्षः कृतेन कर्मणा न सिद्ध्यतीत्यर्थः । सत्प्रतिपक्षाः प्रतिरुद्धाः अबाधितार्थनिर्धारणाक्षमा इत्यर्थः । कर्मणो मोक्षप्रवेशः क्वचित्, क्वचित् तस्य तत्राप्रवेश इति प्रतिपक्षत्वमिति भावः । **विशेषश्रुतेरिति** । "क्षीयन्ते चास्य कर्माणि" इति कर्मसामान्यं क्षयिष्णु श्रुतम् । "न हास्य कर्म" इति ज्ञानिकृतं कर्माक्षयिष्णु च । न च विरुद्धं द्वयमपि प्रमाणं भवितुमर्हतीति तत्रैकेनान्यस्य बाधे वक्तव्ये ज्ञानिकृतसुकृतस्याक्षयं वदन्ती श्रुतिर्विशेषविषयत्वाद् बलवती निरवकाशा चेति तयैव "अन्तवदेवास्य तद् भवति", "तद्धास्यान्ततः क्षीयत एव" इत्यादि श्रुतिरज्ञानिकृतसुकृतपरतया योजनीयेति भावः । ननु सर्वत्रेत्यस्यार्थान्तरासम्भवाद् वाक्येष्वित्यर्थः । न च वाक्यानां श्रुतिं प्रत्यधिकरणत्वं युक्तमित्यत आह **श्रुतिः श्रवणमिति** । तत्र तत्र वाक्येषु प्रतिपाद्यमानः कर्मक्षय इति यावदिति भावः । "तस्मिन् दृष्टे" इति श्रवणाद् ज्ञानिनोऽपीत्युक्तम् । **निरवकाशेति** । "न हास्य" इत्यादिश्रुतेरन्यपरताया वक्तुमशक्यत्वेन निरवकाशत्व-

मिति भावः । अस्य ''क्षीयन्ते चास्य'' इति कर्मक्षयश्रवणस्य । **दुष्कृतेति** । अप्रारब्धदुष्कृतेत्यर्थः । कुतः सङ्कोच इत्यत आह **उक्तैवेति** । ''क्षीयन्ते चास्य'' इति दुष्कृतस्य सर्वात्मना हानावेदनात् ''न हास्य'' इति दुष्कृतस्य सर्वात्मना हानावेदनात् ''न हास्य'' इति निरवकाशश्रुतिविरोधादनिष्टस्यैव सुकृतस्य नाशो व्याख्येय इत्यत्र निरवकाशश्रुतिविरोधरूपा युक्तिरुक्तैवेति युक्तः सङ्कोच इति भावः । **तत्** सुकृतम् । **तदिच्छया** इष्टमपि सुकृतं मे हीयतामिति ज्ञानीच्छया । **द्वितीयं** ज्ञानस्वभावाद्धीयत इति द्वितीयकल्पमित्यर्थः । ज्ञानिन इत्युक्तितात्पर्यमाह **ज्ञानस्येति** । स्वतोऽपुरुषार्थस्यापि ज्ञानस्य पुरुषार्थसाधनतया पुरुषार्थतोपचारः । **अन्त्यः** उतानिष्ट इति पक्षः । कारणं शङ्कमान आह **निष्फलत्वादिति** । ''यद्यत् कामयते'' इति प्रमाणे वीप्सया प्रचुरविषयाणामिष्टत्वावगतेः कथं केचिदिष्टा इत्युक्तिरित्याह **अलौकिका इति** । 'निष्फलत्वात्' इति कृतचोद्यं भाष्यभावोक्त्या व्युदस्यति **मुक्तावलौकिका इति** । **इष्टाः** इच्छाविषयभूताः । ''पितृलोककामः'' इत्यत्र लोकशब्देनावलोकनं विवक्षितम् । स ब्रह्मज्ञानी पितृलोककामः'' पितृदर्शनेच्छावान् भवति । अस्य ज्ञानिनः सङ्कल्पादिच्छामात्रादेव पितर उपस्थापिता भवन्तीति भाष्यार्थः । ''प्रजापतेः ब्रह्मेशादीनां प्रजानां पत्युः विष्णोः सभां वेश्म सभागृहं सभां वेश्म वा प्रपद्ये प्राप्नुयाम्'' इति प्राचीनटीका । ''छन्दसि दृष्टानुविधिः'' इति विनिप्रत्ययलोप इति भावेन आह **यशःयशस्वीति** । ''धर्मधर्मिभेदाभावादेव मुक्तिः'' इति तु प्राचीनटीका । अर्शआद्यजन्तोऽयं शब्द इति भावेन आह 'यशस्वीति' इति केचित् । तन्न । यशस इति प्रयोगापत्तेः । अर्शोऽस्यास्तीत्यर्शस इति हि तत्रोदाहरणम् । यथाश्रुते ब्राह्मणानां यशसः स्वस्मिन्नाशासनानुपपत्तिं मनसि निधाय शेषं पूरयति **सकाशादिति** । ''ब्राह्मणादिसर्ववर्णानां मध्ये अहं यशो भवेयम्'' इति प्राचीनटीका । प्रपञ्चितश्च ''आकाशो ह वै नाम'' इत्येतत् खण्डार्थे । ''यशोऽहं सर्ववर्णानां मतोऽन्येषां यशो भवेत्'' इत्यादिछान्दोग्ये अष्टमाध्याये तद्भाष्यटीकादौ च ॥ **अस्मात् परमात्मन इति** । स्वसन्तोषितपरमात्मप्रसादद्वारेत्यर्थः । तथा च तत्त्वप्रकाशिका ''स मुक्तो यद्यत् कामयते तत्तत् परमात्मप्रसादद्वारा कर्म सृजति'' इति । सुधा च ''स विद्वान् मुक्तो यद्यत् कामयते तत्तत् कर्मास्माद्ध्येवाऽत्मनः अस्याऽत्मनः प्रसादेन सृजति'' इति । **इत्येतदपीति** । न केवलं मुक्तो विषयानिच्छतीत्येतत् कामयत इत्यनयोच्यत इत्यपेरर्थः । एतच्छ्रुत्युदाहरणेनान्यदपि सिद्धं प्रयोजनमित्याह **उपासनादिकमेवेति** । आदिपदेन निवृत्तं कर्म । ज्ञानीति वदन् ''स य आत्मानमेव लोकमुपास्ते'' इत्यत्र ''जानाति च'' इति तत्त्वप्रकाशिकारीत्या पूरणीयत्वेनेयं श्रुतिरपरोक्षज्ञानिविषयाऽपि भवतीति न प्रकृतासङ्गतिरित्यभिप्रैति **अनयेति** । 'अस्माद्ध्येव' इत्यतः पूर्वं ''आत्मानमेव लोकमुपासीत''

इत्युपासनां विधाय ''स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते'' इत्युपासनाजनित-सुकृतस्याक्षयवचनादिति भावः । ''स एकधा भवति स दशधा'' इत्यादिना भूमोपासकस्य फलत्वेन यथाकामं मुक्तौ क्रीडोच्यत इति प्राचीनटीका । एवं मुक्तस्य विषयकामोऽस्तीति समर्थितम् । तदाक्षिप्य तस्य विषयभोगप्रकारं समर्थयते **नन्वित्यादिना** । ज्ञानेन स्वयोग्यबिम्बापरोक्षज्ञानेन । **पृथक्सुखस्य** मनोवृत्तिरूपस्य बाह्यसुखस्य । **नापि दुःखेति** । इष्टप्राप्तेरिवानिष्टनिवृत्तेरपि पुरुषार्थ-त्वादिति भावः । आवरणनिवृत्तौ स्वरूपसुखं व्यज्यत इति । आवरणं तु नाविद्यैव, किन्त्वन्यद-प्यस्ति । तदपसरणं च न ज्ञानेन । अपितु ज्ञानान्तरभाविनिवृत्तकर्माराधितभगवत्प्रसादेनैवेति भावेन परिहरति **मैवमिति** । ईश्वरेच्छाया आत्मस्वरूपावरणत्वे प्रमाणमाह **तथा च वक्ष्यतीति** । सप्तमे ''नाहं प्रकाशस्सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति'' इति श्लोकव्याख्यानावसरे ''योगेन सामर्थ्योपायेन'' इति स्वोक्तार्थे ''आत्मनःप्रावृतिं चैव लोकचित्तस्य बन्धनम् । स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः'' इति प्रमाणमुदाहरन् भाष्यकार ईश्वरेच्छाऽप्यात्मस्वरूपावरणमिति वक्ष्यतीत्यर्थः । ज्ञानेनेत्यनन्तरं क्षीणकर्मणां कार्यात्यये तदध्यक्षेण सह गतानां गुणत्रयात् परतः स्थितायां विरजायां स्नानेनेति शेषः । **अशेषेति** । विरजास्नानेन ''प्रारब्धकर्मशेषस्तु विरजातरणा-वधिः'' इति पूर्वमेव दग्धपटायमानस्य लिङ्गशरीरस्य सर्वथा नाशे अशेषानिष्टनिवृत्तिर्भवतीत्यर्थः । भवतीत्यनन्तरं प्रलये भगवदुदरं प्रविष्टानामिति शेषः । परमेश्वर इत्यनन्तरं सृष्ट्यनन्तरं श्वेतद्वीपा-विर्भवे सति तत्रत्यभगवद्दर्शनानन्तरं स्वेच्छारूपावरणमप्यपसार्येति शेषः । **विषयानुत्पाद्येति** । ''न वर्तते यत्र रजस्तमस्तयोस्सत्त्वं च मिश्रम्'' इति शुद्धसत्त्वसद्भावावेदनात् तेन मुक्तानां भोगाय विषयानुत्पादयतीत्याहुः । **ज्ञानानभिव्यक्तमिति** । न चैवं ''अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्'' इति सूत्रविरोधः, तत्राग्निहोत्रादिव्यङ्ग्यसुखस्य तत्कार्यपदेन ज्ञानकार्यत्वाभिधानादिति वाच्यम् । ज्ञानानभिव्यक्तपदेन केवलज्ञानानभिव्यक्तत्वस्य विवक्षितत्वात् । **अत्र चेति** । ''ज्ञानेनाविद्यायां निवृत्तायाम्'' इत्याद्युक्तेऽर्थ इत्यर्थः । **तत्र** ज्ञानेनाविद्यानिवृत्तिरित्यत्र । ''भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'', ''भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि दृष्ट एवाऽत्मनीश्वरे'' इति काठकभागवतवचने अनुव्याख्यान उदाहृते प्रमाणे 'हृदयग्रन्थिरविद्या' इति सुधायां व्याख्यानात् । ''ज्ञानेनाशेषानिष्टनिवृत्तिः'' इत्यत्र अनिष्टपदेन पापानामनिष्टपुण्यानां च ग्रहणे ''क्षीयन्ते चास्य कर्माणि'' इत्युदाहृतवचनद्वयं प्रमा-णम् । सांसारिकदुःखग्रहणे तु, ''तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति'', ''सर्वदुःख-निवृत्तिश्च ज्ञानिनो निश्चितैव हि'' इति सूत्रभाष्य उदाहृतं प्रमाणम् । ''स्वरूपसुखं च बहुतरं

व्यज्यते'' इत्यत्र ''ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु । आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा तु वर्धते । ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम्'' इति वचनं प्रमाणम् । आद्ये उत्तरार्ध-पर्यालोचनायां मोक्षो भवत्येवेत्यस्य बहुतरं स्वरूपसुखं व्यज्यत इत्यावेदनात् । द्वितीये ''सुखिनः परम्'' इत्युक्तेः । ''ज्ञानोत्तरमनुष्ठितेन निवृत्तकर्मणा प्रसन्नः परमेश्वरः'' इत्यत्र ''स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते यदा । स्वधर्मो मम तुष्ट्यर्थः'' इति वचनं प्रमाणम् । ''मुक्तौ विषयानुत्पाद्य'' इत्यत्र ''अस्माद्ध्येवाऽत्मनो यद्यत् कामयते तत्तत् सृजते'' इति वाक्यं प्रमाणम् । 'तद्भोगेन' इत्याद्यवशिष्टार्थे ''ब्रह्मादिपदादप्यधिकं सुखं मोक्षः'' इत्यग्रिमभाष्योक्तरीत्या प्रमाणमुन्नेयमित्यादि विवेक्तव्यम् ।

नन्वेवं कर्मणः सम्पूर्णमोक्षसाधनत्वाङ्गीकारे कर्मैव मोक्षे प्रधानसाधनमित्युक्तं स्यात् । न च तद् युक्तम् । ''तमेवं विद्वान्'', ''नान्यः पन्था अयनाय विद्यते'', ''दृष्ट्वैव तं मुच्यते नापरेण'' इत्यादिश्रुतिषु ''विद्यया च विमुच्यते'', ''अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते'' इत्यादिस्मृतिषु ''विद्यैव तु निर्धारणात्'' इत्यादिसूत्रेषु च मोक्षस्य ज्ञानमात्रसाध्यत्वोक्तेः । ''सहकारित्वेन च'' इत्यादिसूत्रे कर्मण आरादुपकारकत्वोक्तेश्चेत्यत आह **अनेनैवेति** । ज्ञानादेवाविद्याद्यशेषानिष्टनिवृत्ति-विशिष्टबहुतरस्वरूपसुखाभिव्यक्तिर्भवतीत्यभिप्रायेणैवोक्तश्रुत्यादिप्रवृत्तिः । ज्ञानानभिव्यङ्ग्यमुक्तिगत-विषयभोगव्यङ्ग्यस्वरूपसुखवैचित्र्यस्य ज्ञानोत्तरकालसमनुष्ठेयवैचित्र्यानुकूलभगवत्प्रसादसम्पादकशुद्ध-भागवतधर्मसाध्यत्वमित्यभिप्रायेणैव च । ''सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्म-चर्येण चेति'', ''एतमात्मानमभिपश्यञ्छान्तो भवेद् दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेत्'', ''तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्'', ''विहितत्वाच्चाऽश्रमकर्मापि'' इत्यादिश्रुतिस्मृति-सूत्रादिप्रवृत्तिरिति ज्ञानमेव मोक्षहेतुः कर्म तु तत्रातिशयाधायकमिति न कोऽपि विरोध इति भावः । 'ज्ञानकर्मसमुच्चयसाध्यत्वम्' इत्यत्र समुच्चयशब्दोऽपि सम्पूर्णमोक्षसिद्ध्यर्थमवश्यं कर्मानुष्ठेय-मित्येवमभिप्रायको व्याख्येयः । न पुनर्ज्ञानकर्मणी स्वर्गं दर्शपूर्णमासाविव समप्रधानतया समुच्चि-त्यापवर्गं साधयत इत्यभिप्रायेण प्रयुक्तः । ''सहकारित्वेन च'' इति सूत्रभाष्यटीकादौ समुच्चयवादस्य निरस्तत्वेन ज्ञानमेव मोक्षे प्रधानसाधनं, कर्म तु तत्रातिशयमादधानं प्रयाजादिकमिवाऽरादुपकार-काङ्गमित्यर्थस्य स्थितत्वात् । कर्मसाध्यं विषयभोगव्यङ्ग्यसुखमिति विग्रहः । ज्ञानोत्तरमनुष्ठितेन निवृत्तकर्मणा साध्यं विषयभोगव्यङ्ग्यसुखं कर्मसुखमिति प्रकरणेन सुज्ञानमिति तदनूद्यानन्तरं शेषमाह **कर्मसुख इति** । किमर्थमिति चोद्यं तु ''पुनरिष्टत्वात्'' इति भाष्य एव परिहृतमिति भावः । **कथमिति** । लोके तद्वत एव विषयानुभवसामर्थ्यानुभवादिति भावः । शरीरेन्द्रियपरित्यागेन

मुक्तस्य देहाभावेऽपि परमात्मानं प्रविष्टस्य तद्देहेनैव ग्रहवद् भोगशक्त्युपपत्तिरिति भाष्याभिप्राय इति । तत्र सूत्रं प्रमाणयति **तदुक्तं ब्राह्मेणेति** ॥ ब्राह्मेण ब्रह्मसम्बन्धिना देहेन मुक्तस्य ग्रहवद् भोगोऽस्तीति जैमिनिराचार्यो मन्यते । कुतः ? "ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनुभवति" इति श्रुतौ तथोपन्यासात् । आदिपदस्य "आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति" इत्यादिस्मृतेः "गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम्" इत्यादिपूर्वस्मरणात् "मुक्तस्यैतद् भविष्यति" इति स्मृत्युक्तयुक्तेश्चेत्यर्थः । श्रुतौ ब्राह्मदेहानुक्तेः स्मृत्युक्तिः । स्वयं देहहीनस्य कथमन्यदेहेन भोग इत्यतो युक्त्युक्तिरिति सूत्रार्थः । यद्यप्यत्र सूत्रे मुक्तो ब्रह्मसम्बन्धिना देहेन भोगान् भुङ्क्त इत्येव उच्यते, न पुनरीश्वरप्रसादादनुभवशक्तिरिति । तथाऽप्येतदधिकरणीयभाष्योदाहृते "ब्राह्मेणैवेदं सर्वमनुभवति", "यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः" इत्यादिप्रमाणे ईश्वरानुग्रहस्य भोगकारणत्वोक्तेः ब्राह्मेण ब्रह्मसम्बन्धिप्रसादेन भोगान् भुङ्क्त इत्यपि सूत्राभिप्रेतत्वादत्रैतत्सूत्रोदाहरणं युक्तमित्याहुः । अत्रैतत्सूत्रोदाहरणेन "ईश्वरप्रसादात्" इति भाष्यस्य ईश्वरप्रसादलब्धेश्वरदेहप्राप्तेरित्यर्थो व्याख्येय इत्याहुः । सायुज्यभाजामेवं भोगशक्तिसमर्थनेऽपि तदितरमुक्तानां कथं भोगशक्तिरित्यतः 'श्रुतेश्च' इति भाष्यं प्रवृत्तमिति भावेन तत्र चशब्दश्रुती विवृणोति **किञ्च कामेति** । श्रुतिगतकामरूपशब्दार्थो **लीलाविग्रहेति** । **पूर्वकालीनं** जीवन्मुक्तिदशापन्नम् । भाष्योदाहृतश्रुतिद्वयस्यापि परममुक्तिविषयत्वं यथा स्यात् तथा तत्पूर्ववाक्यद्वयं पठति **अस्माच्छरीरात् अस्माल्लोकादिति** । उत्तरत्र चरमशरीरपातादुत्तरत्र । परममुक्तिदशायामित्यर्थः । क्रियाविशेषणं श्रवणक्रियाविशेषणम् । धात्वर्थमात्रविशेषणमित्यर्थः ।

भाष्यम्

**न च एकीभूत एव ब्रह्मणा सः । 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्' इत्यादिनिन्दनात् मोक्षधर्मे । परिहारे पृथग् भोगाभिधानाच्च । शुकादीनां पृथग् दृष्टेश्च । 'जगद्व्यापारवर्जम्' इत्यैश्वर्यमर्यादोक्तेश्च । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति च । उपाधिनाशे नाशाच्च प्रतिबिम्बस्य । न च एकीभूतस्य पृथग्ज्ञाने मानं पश्यामः । 'आसं दुःखी, नाऽसम्' इति ज्ञानविरोधाच्चेश्वरस्य । अनेन रूपेणेति च । भेदाभावात् ।**

***प०टी०***— नन्वज्ञानी सगुणब्रह्मातीत्य निर्गुणेनैकीभवति । अतः कथं विषयभोगः ? तथा च मोक्षधर्मे 'प्रभुर्वहति शुद्धात्मा परमात्मानम्' इति, 'परमात्मानमासाद्य तद्भूता यतयः' इति

निर्गुणैक्यमुच्यत इत्यत आह **न चेति**। 'तस्य निन्दितत्वादेतद्युक्तम्' इत्यर्थः। तथा हि युधिष्ठिरः 'स्थानमुत्तममासाद्य' इत्यनूद्य, 'आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ' इति विकल्प्य, आद्यं दूषयति 'प्रवृत्तिलक्षणं धर्मं पश्यामि परमम्' इति। द्वितीयं दूषयति **मग्नस्येति**। परेऽज्ञाने यदि मग्नो न स्मरति तर्हि जलमग्नस्येव दुःखाद्यतिशयः स्यादिति। ननु श्रोत्रा निन्दितत्वेऽपि कुतो भीष्मोक्तं निन्दितम्। इत्यत आह **परिहार इति**। 'इन्द्रियाणि च बुद्ध्यन्ते स्वदेहम्' इत्यादिपृथक्त्वेन भोगाभिधानम्। इतश्च न ज्ञानिनां परमात्मैक्यमित्याह **शुकादीनामिति**। ननु चैतन्यैक्येऽप्युपाधितो भेदप्रतीतिः शुकादीनां तन्निवृत्तौ निवर्तत इत्यत आह **उपाधीति**। स्वरूपेणैकीभूतस्योपाधिनाऽपि न भेदप्रतीतिरित्यत आह **न चेति**। आकाशादावपि विद्यमानभेदस्यैवोपाधिर्ज्ञापकः। भ्रान्तभेदप्रतीतिरुपाधिमात्राद्युज्यते, चन्द्रभेदप्रतीतिवदित्यत आह **आसमिति**। यदि भेदो भ्रान्तस्तर्हि हस्तादिगतसुखादिभोक्तुरेकत्ववदीश्वरस्यांशिनो देवदत्तादिगतदुःखाद्यनुभवः स्यात्। स च युगपद्विरुद्ध इत्यर्थः। देवदत्तरूपेणासं दुःखी यज्ञदत्तरूपेण नासमित्यनुभवे न विरोध इत्यत आह **अनेनेति**। **इति च** 'विरुद्धम्' इति शेषः।

***न०टी०***— निर्गुणेनचैकीभूतस्य कथं भोगः ? इत्याशङ्क्य युधिष्ठिरेण निन्दितत्वात् तदयुक्तमित्याह **न चेति**। तथाहि तद्वाक्यम्—

'स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः।
आजन्ममरणं वा ते स्मरन्त्युत न वा न च' इत्यारभ्य
'मोक्षदोषो महानेष प्राप्य सिद्धिं गतानृषीन्।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे।
प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप।
मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्॥' इति।

यदि मुक्तौ न भोगः, तर्हि स्थीयतेऽत्रेति स्थानं परमात्मानमासाद्य, मरणादुपरि, पुनरत्र जन्मपर्यन्तं, जन्मप्रभृति पुनर्मरणपर्यन्तं, स्वर्गनरकादौ यत्सुखं दुःखमनुभूतं तत्स्मरन्ति न चास्मरन्ति चेत्, तदा सुखलेशहीनानां नष्टं महत्सुखं स्मरतां वृथा नो मुक्तिरभूदित्यनुतापः स्यात्। न चातीतदुःखं स्मरतां तदा दुःखाभावग्रहणेन पुरुषार्थबुद्धिर्मुक्तौ, दुःखाभावेन पुरुषार्थत्वात् सुखाभावेनापुरुषार्थत्वस्याधिकत्वादिति प्रपञ्चितं श्रीमदनुव्याख्याने।

अथ न स्मरन्ति तर्हि प्रतियोग्यस्मरणेन दुःखाभावाग्रहणात्, सुखस्यापि स्वभिन्नत्वे मिथ्यात्वात्, स्वाभिन्नत्वे कर्तृकर्मविरोधतोऽग्रहणाच्चापुरुषार्थता मुक्तेः। एवमनिष्टत्वान्मुक्तेः, यदि

विज्ञानाख्ये निर्गुणे पूर्वसिद्धानृषीन् परेऽपि मुनयः प्राप्य न निवर्तन्ते, तर्हि महानेषः मोक्षदोषो वा गतिदोषादपि । अत एवं नित्यानिष्टसाधनात् निवृत्तिधर्मादनित्येष्टसाधनं प्रवृत्तिसाधनं प्रवृत्तिधर्मं परं पश्यामि ।

न केवलं सुखाग्रहणात् दुःखाभावाग्रहणाच्चानिष्टत्वं मुक्तेः । किन्तु दुःखमेव महत् तत्र किं न भवेदभीष्टस्वपरविषयानुभवाभावेन महदज्ञानार्णवे मग्नस्य चेतनस्य दुःखानुभवरूपेण सदाऽवतिष्ठेतेत्यर्थः ।

ननु श्रोतृत्वाद्धर्मजस्य कथं तच्चोद्यमात्रेण तदाचार्योक्तनिर्गुणैक्यनिन्दा ? इत्यत आह **परिहार इति** । यं प्राप्यामृताः सन्तो न निवर्तन्ते यतयः स परमात्मा न नारायणादन्यो निर्गुणः । न च तेषां तदैक्यम् । तस्य तेषां च पृथक् पृथक् भोगाभिधानात् परिहारवाक्ये । न हि निर्गुणस्य भोगः । अतस्तद्भूता इति तत्र भूतास्तदाधारा इत्येव स्यात् ।

तथाहि भीष्मवाक्यं 'यथान्याय्यम्' इत्यादि युक्तमुक्तम् । तत्त्वज्ञानिनो वयमिति मन्यमाना अप्यत्र भ्रमन्तीति । तथाऽपि न मेऽत्र भ्रम इत्याह ।

'तथाऽपि तत्त्वं परमं शृणु सम्यङ्मयेरितम् ।
बुद्धिं च परमां यत्र कापिलानां महात्मनाम् ।
इन्द्रियाण्यपि बुद्ध्यन्ते स्वदेहं देहिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ।'

इति श्रीमत्कपिलप्रोक्तविदामुपास्यं परमं तत्त्वं वासुदेवाख्यं तद्बुद्धिं च परमां शृणु । यत्र परमतत्त्वे स्थितस्य तस्य मुक्तस्य देहिन इन्द्रियाण्यपि बुध्यन्ते पश्यन्ति । तेषामपि चिन्मात्रत्वात् । न तु संसार इव तैरात्मैव बुध्यते । कम् ? स्वदेहं स्वात्मकं देहम् । देहस्यापि चिन्मात्रत्वात् । स्वशब्दवैयर्थ्यादन्यथा । स्वदेहं विष्णुमपि बुध्यत इति चापिशब्दान्वयः । सुतरामभौतिकदेहत्वात्, स्वतन्त्रदेहत्वात् स्वरूपप्रदेच्छायुक्तत्वात्, स्वरूपप्रदचेष्टायुक्तत्वाच्च स्वदेहो विष्णुः । तानि इन्द्रियाणि तस्य करणानि तैः स सूक्ष्म आत्मा स्वयं च पूर्वोक्तं पश्यतीति चापिशब्दान्वयः । यैरन्यत् पश्यति तैस्तान्यपि पश्यतीति चापिशब्दान्वयः । नत्विन्द्रियाणामतीन्द्रियत्वं संसार इव । सर्वमेतत् तुशब्देनावधार्यते । न च मुक्तभोगः प्राकृतेन्द्रियापेक्ष इति ज्ञापयितुं तेषां विनाशमाह ।

'आत्मना विप्रहीणानि काष्ठरूप्यसमानि तु ।
विनश्यति न सन्देहः फेना इव महार्णवे ॥' इति ।

प्राकृतेन्द्रियाण्येव भोगसाधनानीति नियमाभावं दर्शयितुं तद्धीनयोरेव प्राणपरमात्मनोर्जीवस्य सुषुप्तौ दर्शनादिसर्वभोगं दर्शयति ।

इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन ।
सूक्ष्मश्चरति सर्वत्र नभसीव समीरिणः ।
स पश्यति यथान्यायं स्पर्शात् स्पृशति चाभि भोः ।
बुध्यमानो यथा पूर्वमखिलेनेह भारत' इति ।
इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि ।
अनीशत्वात् प्रलीयन्ते सर्पाहतविषा इव ॥

इन्द्रियाणां हि सर्वेषां स्वस्थानेष्वेव सर्वशः ।
आक्रम्य गतयः सूक्ष्मश्चरंत्यात्मा न संशयः ।
सत्वस्य च गुणान् कृत्स्नान् रजसश्च गुणान् पुनः ।
गुणांश्च तमसः सर्वान् गुणान् बुद्देश्च भारत ।
गुणांश्च मनसस्तद्वन्नभसश्च गुणांस्तथा ।
गुणान् वायोस्तु धर्मात्मन् तेजसश्च गुणान् पुनः ।
अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि ।
सर्वात्मना गुणैर्व्याप्य क्षेत्रज्ञः स युधिष्ठिर ॥' इति ।

इन्द्रियैः सह सुप्तस्य देहिनः सर्वत्र देहेन्द्रियादौ समीरणश्चरति यथाकाशे स यथा स्वयोग्यं सम्यगेव रूपादीन् पश्यत्यभितः सर्वतः । चशब्दाद्वचनादिकं च करोति । 'विष्णुं तं भूर्भुवरित्येव शंसति' इत्यादेः । बुध्यमानो यथा पूर्वमखिलेनेति ॥ सुप्तेः प्रागिव सर्वं साकल्येन जानन् ।

न च सुप्तौ जीवेन्द्रियकृतः प्राणव्यापार इति भावेनाह **इन्द्रियाणीति** ॥

'यथाविधि यथोत्पत्तिः यथा सर्पविषाहताः ।
पुरुषा इव प्राणाग्न्य एवं तस्मिन् पुरे जाग्रति ॥' इति श्रुतेः ।

क्षेत्रज्ञात्मा तु भगवान् सर्वेषामिन्द्रियाणामतिगतिराक्रम्य, आ समन्तात् तत्र स्थानेषु निरुध्य, सत्वादिपृथिव्यन्तानां जडानां तदभिमानिचेतनानां च गुणान् सुरगुणैर्ज्ञानादिभिर्व्याप्य साकल्येन सूक्ष्मं यथा भवति तथा चरति भुङ्क्ते अनुभवतीति यावत् । जीवस्यापीषत्क्षेत्रज्ञानात् स एवायं 'क्षेत्रज्ञः' इतिशब्दोक्त इति भ्रमो मा भूदिति भावेन तयोर्भेदमाह—

'आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानमिन्द्रियाणि च तं विभो ॥' इति ।

जीवात्मा च परमात्मानं क्षेत्रज्ञसञ्ज्ञं याति सुप्तौ, तं जीवात्मानं तदिन्द्रियाणि तद्धर्माधर्मौ च यान्ति । शिष्या इव महात्मानं गुरुमित्यर्थः । यथाऽयं प्राकृतेन्द्रियपुण्यपापादिसहितो हृदयस्थं क्षेत्रज्ञसञ्ज्ञं याति सुप्तौ, तथा तद्रहितश्च तमेव परमात्मसञ्ज्ञं प्रकृतेः परतः स्थितं याति मुक्तावित्याह-

'प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वंद्वं प्रकृतेः परम् ॥' इति ।

'आत्मानं' 'अव्ययं' 'परं' 'नारायणात्मानं' इति परमात्मनो नारायणात्मकत्वोक्त्या नारायणगत्यनन्तरं परमाप्तगत्युक्तिप्राप्तां तयोर्भेदशङ्कामपाकरोति । अतस्तत्र नारायणशब्देन नराणां देहेन्द्रियप्राणानामनयत्वाद्धृद्गतः क्षेत्रज्ञ उच्यते । स देवः स्वप्रतिष्ठितं जीवं मुक्तिकाले स्वयं सर्वगतेन परमात्मनैकीभूतभावं तं प्रापयतीत्यर्थः ।

तमेवं प्राकृतगुणरहितं परमात्मानं स्वयं विशेषतः पुण्यपापमुक्तत्वेन प्ररिष्टत्वान्न पुनः संसाराय निवर्तत इत्याह—

'विमुक्तः पुण्यपापेभ्यः प्रविष्टं तमनामयम् ।
परमात्मानमगुणं न निवर्तति भारत ॥' इति ॥

एवं प्राकृतदेहेन्द्रियपुण्यपापविनाशेनावशिष्टं परमात्मनमवशिष्टमुक्तजीवस्वरूपभूतानि मनआदीन्द्रियाण्यन्वागच्छन्ति, यथाकालमपेक्षितभोगाय गुरुसन्देशकारिणः शिष्या इवेत्याह—

'शिष्टं त्वत्र मनस्तात इन्द्रियाणि च भारत ।
आगच्छन्ति यथाकालं गुरोः सन्देशकारिणः ॥' इति

तदेवं मुक्तौ जीवस्य सर्वगुणरहितवस्त्वैक्येनावस्थानस्य निन्दितत्वात् प्रष्ट्रा तदुपदेष्ट्रा च, जीवपरमात्मनोः प्राकृतदेहेन्द्रियविहीनयोः स्वरूपभूतदेहेन्द्रिययोः पृथक् पृथक् सर्वभोगोक्तेर्न मुक्तौ सर्वभोगाभावः, परमात्मैक्यं वेत्यर्थः ।

जीवन्मुक्तानां भेदद्रष्टृत्वात्, भेदेन दृश्यमानत्वाच्च न ज्ञानी ब्रह्मणैकीभूत इत्याह **शुकादीनामिति** । परमं ब्रह्म गतानामप्यैश्वर्यमर्यादोक्तेर्नामर्यादैश्वर्यब्रह्मणैकीभूतो ज्ञानीत्याह

**जगद्व्यापारवर्जमिति** । मुक्तानां ब्रह्मसारूप्योक्तेश्च न तेनैकीभाव इत्याह **इदमिति** । न हि स्वरूपयोरैक्यं निर्विशेषाभेदवादिनस्तवेति भावः । ननु निर्गुणमुक्तावेव ब्रह्मणैकीभूतो न जीवन्मुक्तौ सगुणमुक्तौ वा, तत्रोपाध्यनाशात्, अतो नोक्तविरोध इत्यत आह **उपाधिनाश इति** । प्रतिबिम्बत्वादात्मन उपाधिनाशेन नाश एव स्यात्, न तु बिम्बैक्यमित्यर्थः । अतीतज्ञानासम्भवाच्च न मुक्तो ब्रह्मणैकीभूतः । तथाहि— स ब्रह्मणः पृथगेवातीतं जानाति तद्रूपेण वा । न तावदाद्य इत्याह **न चेति** । नापि द्वितीय इत्याह **आसमिति** । एकीभूतस्यैवेशस्य 'अहं दुःख्यासम्, न क्वचिदहं दुःख्यासम्' इति ज्ञानविरोधादित्यर्थः । न च 'अनेन रूपेण दुःख्यासम्, रूपान्तरेण न' इत्यविरोध इत्यत आह **अनेनेति** ॥

*प्र०दी०*— अद्वैतवादिनस्त्वाहुः । ब्रह्मैकमेव तत्त्वम् । तदेवोपाधिभेदभिन्नं जीवभावं प्रतिपद्यते । गगनमिव घटाद्युपाधिभिन्नं घटाकाशादित्वम् । तत्र यस्य जीवस्य ज्ञानमुत्पन्नं स ब्रह्मणैकीभवति । घटनाशे घटाकाश इव महाकाशेनेति । तत्रैके जीवब्रह्मभेदस्योपाधेश्च मिथ्यात्वं मन्यन्ते । अन्ये च सत्यत्वम् । यदा च स ज्ञानी ब्रह्मणैकीभूतः तदा सकलस्य क्रियाकारकफललक्षणस्य भेदस्य प्रविलयात् कुतो विषयभोगो यदर्थं सुकृतस्यावस्थानमिति ।

तद्दूषयति— **न चेति** । एवशब्देन भेदाभेदौ निराकरोति ।

''परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभि भोः ॥''

इति भीष्मेण तस्मिन् भूताः तद्भूता इत्यभिप्रायेणोक्ते मुक्तास्तद्ब्रह्मैव भूता इत्यर्थान्तरमाशङ्क्य युधिष्ठिरेण—

'आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ'

इति विकल्प्य पृष्टं यदि ज्ञानिनो मुक्तौ ब्रह्मणैकीभवन्ति तदैवं वाच्यम् । किं ते संसारेऽनुभूतं दुःखं स्मरन्त्युत नेति । आद्यस्य दूषणमुक्तं—

''मोक्षे दोष महानेष प्राप्य सिद्धिं गतानृषीन् ।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ॥''

इति । पूर्वे सिद्धिं गतान् ऋषीन् प्राप्य परेऽपि यतयो यदि तत्र मुक्तौ, विज्ञाने विज्ञानेन, प्रागनुभूतदुःखस्य स्मरणेन युक्ता वर्तन्ते, तर्हि मोक्षे महानेष प्रसिद्धो दोषः । दोषं च भाष्यकार एव

'आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानमिन्द्रियाणि च तं विभो ॥' इति ।

जीवात्मा च परमात्मानं क्षेत्रज्ञसञ्ज्ञं याति सुप्तौ, तं जीवात्मानं तदिन्द्रियाणि तद्धर्माधर्मौ च यान्ति । शिष्या इव महात्मानं गुरुमित्यर्थः । यथाऽयं प्राकृतेन्द्रियपुण्यपापादिसहितो हृदयस्थं क्षेत्रज्ञसञ्ज्ञं याति सुप्तौ, तथा तद्रहितश्च तमेव परमात्मसञ्ज्ञं प्रकृतेः परतः स्थितं याति मुक्तावित्याह-

'प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम् ॥' इति ।

'आत्मानं' 'अव्ययं' 'परं' 'नारायणात्मानं' इति परमात्मनो नारायणात्मकत्वोक्त्या नारायणगत्यनन्तरं परमात्मगत्युक्तिप्राप्तां तयोर्भेदशङ्कामपाकरोति । अतस्तत्र नारायणशब्देन नराणां देहेन्द्रियप्राणानामनयत्वाद्धृद्गतः क्षेत्रज्ञ उच्यते । स देवः स्वप्रतिष्ठितं जीवं मुक्तिकाले स्वयं सर्वगतेन परमात्मनैकीभूतभावं तं प्रापयतीत्यर्थः ।

तमेवं प्राकृतगुणरहितं परमात्मानं स्वयं विशेषतः पुण्यपापमुक्तत्वेन प्रविष्टत्वान्न पुनः संसाराय निवर्तत इत्याह—

'विमुक्तः पुण्यपापेभ्यः प्रविष्टं तमनामयम् ।
परमात्मानमगुणं न निवर्तति भारत ॥' इति ॥

एवं प्राकृतदेहेन्द्रियपुण्यपापविनाशेनावशिष्टं परमात्मनमवशिष्टमुक्तजीवस्वरूपभूतानि मनआदीन्द्रियाण्यन्वागच्छन्ति, यथाकालमपेक्षितभोगाय गुरुसन्देशकारिणः शिष्या इवेत्याह—

'शिष्टं त्वत्र मनस्तात इन्द्रियाणि च भारत ।
आगच्छन्ति यथाकालं गुरोः सन्देशकारिणः ॥' इति

तदेवं मुक्तौ जीवस्य सर्वगुणरहितवस्त्वैक्येनावस्थानस्य निन्दितत्वात् प्रष्ट्रा तदुपदेष्ट्रा च, जीवपरमात्मनोः प्राकृतदेहेन्द्रियविहीनयोः स्वरूपभूतदेहेन्द्रिययोः पृथक् पृथक् सर्वभोगोक्तेर्न मुक्तौ सर्वभोगाभावः, परमात्मैक्यं वेत्यर्थः ।

जीवन्मुक्तानां भेदद्रष्टृत्वात्, भेदेन दृश्यमानत्वाच्च न ज्ञानी ब्रह्मणैकीभूत इत्याह **शुकादीनामिति** । परमं ब्रह्म गतानामप्यैश्वर्यमर्यादोक्तेर्नामर्यादैश्वर्यब्रह्मणैकीभूतो ज्ञानीत्याह

**जगद्व्यापारवर्जमिति** । मुक्तानां ब्रह्मसारूप्योक्तेश्च न तेनैकीभाव इत्याह **इदमिति** । न हि स्वरूपयोरैक्यं निर्विशेषाभेदवादिनस्तवेति भावः । ननु निर्गुणमुक्तावेव ब्रह्मणैकीभूतो न जीवन्मुक्तौ सगुणमुक्तौ वा, तत्रोपाध्यनाशात्, अतो नोक्तविरोध इत्यत आह **उपाधिनाश इति** । प्रतिबिम्बत्वादात्मन उपाधिनाशेन नाश एव स्यात्, न तु बिम्बैक्यमित्यर्थः । अतीतज्ञानासम्भवाच्च न मुक्तो ब्रह्मणैकीभूतः । तथाहि— स ब्रह्मणः पृथगेवातीतं जानाति तद्रूपेण वा । न तावदाद्य इत्याह **न चेति** । नापि द्वितीय इत्याह **आसमिति** । एकीभूतस्यैवेशस्य 'अहं दुःख्यासम्, न क्वचिदहं दुःख्यासम्' इति ज्ञानविरोधादित्यर्थः । न च 'अनेन रूपेण दुःख्यासम्, रूपान्तरेण न' इत्यविरोध इत्यत आह **अनेनेति** ॥

*प्र०दी०*— अद्वैतवादिनस्त्वाहुः । ब्रह्मैकमेव तत्त्वम् । तदेवोपाधिभेदभिन्नं जीवभावं प्रतिपद्यते । गगनमिव घटाद्युपाधिभिन्नं घटाकाशादित्वम् । तत्र यस्य जीवस्य ज्ञानमुत्पन्नं स ब्रह्मणैकीभवति । घटनाशे घटाकाश इव महाकाशेनेति । तत्रैके जीवब्रह्मभेदस्योपाधेश्च मिथ्यात्वं मन्यन्ते । अन्ये च सत्यत्वम् । यदा च स ज्ञानी ब्रह्मणैकीभूतः तदा सकलस्य क्रियाकारकफललक्षणस्य भेदस्य प्रविलयात् कुतो विषयभोगो यदर्थं सुकृतस्यावस्थानमिति ।

तद्दूषयति— **न चेति** । एवशब्देन भेदाभेदौ निराकरोति ।

''परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभि भोः ॥''

इति भीष्मेण तस्मिन् भूताः तद्भूता इत्यभिप्रायेणोक्ते मुक्तास्तद्ब्रह्मैव भूता इत्यर्थान्तरमाशङ्क्य युधिष्ठिरेण—

'आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ'

इति विकल्प्य पृष्टं यदि ज्ञानिनो मुक्तौ ब्रह्मणैकीभवन्ति तदैवं वाच्यम् । किं ते संसारेऽनुभूतं दुःखं स्मरन्त्युत नेति । आद्यस्य दूषणमुक्तं—

''मोक्षे दोष महानेष प्राप्य सिद्धिं गतानृषीन् ।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ॥''

इति । पूर्वे सिद्धिं गतान् ऋषीन् प्राप्य परेऽपि यतयो यदि तत्र मुक्तौ, विज्ञाने विज्ञानेन, प्रागनुभूतदुःखस्य स्मरणेन युक्ता वर्तन्ते, तर्हि मोक्षे महानेष प्रसिद्धो दोषः । दोषं च भाष्यकार एव

स्फुटीकरिष्यति । द्वितीयोऽपि दूषितः । **मग्नस्य हीति** । पूर्वानुभूतस्मरणाभावे परेऽज्ञाने मग्नस्य चेतनस्य दुःखतरं दुःखातिशयो न भवेत् किम् ? भवेदेवेति । तदेवं मोक्षधर्मेऽस्य पक्षस्य निन्दितत्वान्न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः । ननु पूर्वपक्षस्थेन युधिष्ठिरेण निन्दितत्वेऽपि कथं भीष्मेणाचार्येणोक्तमसत्स्यात् । परिहारे तदुक्तदोषस्योद्धारसम्भवादित्यत आह— **परिहार इति** । न मयैतदुक्तम् । किन्तु त्वमन्यथा गृहीत्वा दूषितवानसीत्याशयेन परिहारे, भीष्मेण परमात्मनः पृथक्त्वेन मुक्तानां भोगाभिधानाच्च न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः । तथा हि भीष्मवचनं—

''तथाऽपि तत्त्वं परमं शृणु सम्यङ् मयेरितम् ।
इन्द्रियाणि च बुद्ध्यन्ते स्वदेहं देहिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ॥''

इति । यद्यपीदं दुर्बोधं तथापि स्वः स्वरूपभूतो देहः यस्य तं स्वदेहं परमात्मानं मुक्तान् अन्यान् देहिनो विषयांश्च मुक्तस्येन्द्रियाणि बुद्ध्यन्ते । किं तानि कर्तॄणि ? नेत्याह— **करणानीति** । कस्तर्हि पूर्वार्धस्यार्थ इत्यत आह— **सूक्ष्म इति** । इतश्च न ज्ञानिनो ब्रह्मैक्यमित्याह— **शुकादीनामिति** ।

अनेन वाक्यत्रयेण मुक्तानां ब्रह्मभेदे क्रमेण प्रत्यक्षानुमानागमा उपन्यस्ताः । तत्र प्रत्यक्षं न बाधकम् । शुकादयोऽपि यद्यपि ज्ञानिनः । तथापीदानीमविनष्टोपाधित्वात्, तन्निमित्तभेदवत्तया दृश्यन्ते । प्रारब्धकर्मक्षयादुपाधिनाशे ब्रह्मैव संवृत्ता न पृथग्दृश्यन्त इत्यत आह— **उपाधीति** । जीवास्तावद्ब्रह्मणः प्रतिबिम्बा इति समर्थितम् । तत्र यदि तदीयस्योपाधेर्नाशोऽङ्गीक्रियते तदा तेषां नाशः प्रसज्यते । दर्पणाद्युपाधिनाशे मुखादिप्रतिबिम्बनाशदर्शनादित्यर्थः । यच्चोक्तं शुकादयोऽविनष्टोपाधित्वाद्ब्रह्मणः पृथग् दृश्यन्त इति । तदप्यसदित्याह— **न चेति** । वस्तुत एकीभूतस्योपाधिनापि पृथग्ज्ञाने न मानं पश्यामः । गगनादिदृष्टान्तस्यासम्मतत्वात् । सत्त्वोपाधिभेदमतस्य चेदं दूषणम् ।

किञ्चौपाधिक एव जीवब्रह्मणोर्भेदो वास्तवं त्वैक्यमिति वदन् प्रष्टव्यः । किं ब्रह्म निर्दुःखं स्वरूपमेवानुसन्धत्ते न जीवगतं दुःखम् । तत्तु जीव एव अनुसन्धत्त इति पक्षः । उत तदपीति । आद्यं दूषयति— **न चैकीभूतस्येति** । हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वदर्शनादिति भावः । द्वितीयं निराकरोति— **आसमिति** । लङत्र सर्वकालोपलक्षणार्थः । जीवरूपेण दुःख्यासं स्वरूपेण तु नेति व्यवस्थयाऽनुसन्धानान्न विरोध इत्यत आह— **अनेनेति** । इति च न युक्तमिति शेषः । कुत इत्यत आह— **भेदेति** । उपाधेरभेदकत्वस्योक्तत्वादिति भावः ।

अपरे तु ब्रह्मणैक्यमापन्नस्य मुक्तस्य पूर्वदुःखानुस्मरणमस्ति न वा । नेति पक्षे 'मग्नस्य हि' इत्युक्तो दोषः । आद्ये किमसौ पृथक् स्मरत्युत ब्रह्मात्मक एव । प्रथमस्य दूषणम्— **न चैकी-**

**भूतस्येति** । द्वितीयस्य **आसम्** इत्यादीति व्याचक्षते । अनेन 'मोक्षे दोषो महानेषः' इत्युक्तो दोषः प्रदर्शितो भवति ।

*भा०दी०*— **उपाधिभेदेति** । अविद्याभेदेति वान्तःकरणभेदेति वार्थः । इति पृष्टमित्युक्त-प्रश्नवाक्यार्थं व्यनक्ति **यदीति** । मोक्ष इत्यादिश्लोकार्थमाह **पूर्वे सिद्धिमित्यादिना** । **दोषं च भाष्यकार इति** । आसं दुःखी नासमित्यादिना अनुपदमेव स्फुटीकरिष्यतीत्यर्थः । तथापीति श्लोकार्थमाह **यद्यपीत्यादिना** । इदं तद्भूताय तप इति मयोक्तमित्यर्थः । स्वदेहमित्युपलक्षणं मत्वाह **मुक्ता-नन्यानिति** । देहिन इत्युपलक्षणामुपेत्योक्तं **विषयांश्चेति** । **कस्तर्हीति** । इन्द्रियाणामात्मन करणत्वे इन्द्रियाणि चेति पूर्वार्धस्य कोऽर्थ इत्यत उक्तमित्यर्थः । ससूक्ष्म आत्मा तैरिन्द्रियैः पश्यती-त्यर्थः । **वाक्यत्रयेणेति** । शुकादीनामित्याद्युपरितनवाक्यत्रयेणेत्यर्थः । जगद्व्यापारवर्जमिति सूत्रेण ऐश्वर्यमर्यादोत्त्या मुक्तानां निर्मर्यादैश्वर्येणैश्वरेणेकीभाव इत्यर्थः । विरुद्धधर्मवत्त्वरूपमानं अनेनोक्तं भवति । **संवृत्ता इति** । सम्पन्ना इत्यर्थः । **समर्थितमिति** । युक्ताश्च बिम्बधर्माः प्रतिबिम्बेऽविरोधे तत्र च रूपंरूपमित्यादिग्रन्थेनेति भावः । **असम्मतत्वादिति** । तत्राप्युपाधिज्ञाप्यस्वाभाविकांशा-नामङ्गीकारादिति भावः । वक्ष्यमाणदूषणघटनायाह **सत्योपाधीति** । **तदपीति** । अनुसन्धत्त इत्यनुषङ्गः । **उक्तत्वादिति** । न चैकीभूतस्य पृथग्ज्ञाने मानमित्यत्रोक्तत्वादित्यर्थः । **अनेनेति** । आसं दुःखी नासमित्यनेनेत्यर्थः ।

*भा०र०*— "न चैकीभूत एव" इत्याद्युत्तरभाष्यं प्रकृतार्थेन सङ्गमयितुमाह **अद्वैतेति** । तत्त्व-स्यैकत्वे कथं जीवावभास इत्यत उक्तं **तदेवेति** । उपाधिः अविद्यान्तःकरणादिः । घटाकाशादित्वं प्रतिपद्यत इति वर्तते । 'उत्पन्नम्' इत्यनन्तरं तेनैवोपाधिनाश इत्युपस्कर्तव्यम् । एवं परमतानुवादस्य फलमाह **यदा चेति** । **प्रविलयात्** प्रविलयाङ्गीकारात् । **विषयभोगः** मुक्ताविति शेषः । भाष्यस्यो-द्गीतत्वं परिहर्तुमाह **यदर्थं सुकृतस्येति** । अभिभवति सर्वानतिक्रम्य वर्तत इत्यभिभूः सर्वोत्तमः । "मितद्र्वादिभ्य उपसङ्ख्यानम्" इति डुप्रत्ययः । तस्मान्न निवर्तन्ति । छान्दसं परस्मैपदम् । न निवर्तन्ते । विकल्पं विशदयति **यदीति** । 'आजन्ममरणम्' इत्येतत् संसारेऽनुभूतमिति व्याख्या-तम् । श्लोकं व्याख्याति **पूर्वमिति** । 'विज्ञाने' इति सप्तमी तृतीयार्थेति तदर्थं वदंस्तद्विवक्षितार्थमाह **विज्ञान इत्यादि** । **दोष इति** । आद्यस्य दूषणमुक्तमिति सम्बन्धः । कोऽसावनेन प्रसिद्धो दोष उक्त इत्यत आह **दोषं चेति** । "न चैकीभूतस्य पृथग्ज्ञाने मानं पश्यामः" इत्यत्र एकीभावव्याहृते-र्दुःखादिस्मरणवत्तया जीवस्य ब्रह्मपार्थक्येन स्वज्ञानमस्तीत्यत्र न प्रमाणमिति स्फुटीकरिष्यतीत्यर्थः । तथाच वक्ष्यति— अनेन "मोक्षे दोषो महानेषः" इत्युक्तदोषः प्रदर्शित इति । **द्वितीयोऽपि**

स्फुटीकरिष्यति । द्वितीयोऽपि दूषितः । **मग्नस्य हीति** । पूर्वानुभूतस्मरणाभावे परेऽज्ञाने मग्नस्य चेतनस्य दुःखतरं दुःखातिशयो न भवेत् किम् ? भवेदेवेति । तदेवं मोक्षधर्मेऽस्य पक्षस्य निन्दितत्वान्न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः । ननु पूर्वपक्षस्थेन युधिष्ठिरेण निन्दितत्वेऽपि कथं भीष्मेणाचार्येणोक्तमसत्स्यात् । परिहारे तदुक्तदोषस्योद्धारसम्भवादित्यत आह— **परिहार इति** । न मयैतदुक्तम् । किन्तु त्वमन्यथा गृहीत्वा दूषितवानसीत्याशयेन परिहारे, भीष्मेण परमात्मनः पृथक्त्वेन मुक्तानां भोगाभिधानाच्च न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः । तथा हि भीष्मवचनं—

"तथाऽपि तत्त्वं परमं शृणु सम्यङ् मयेरितम् ।
इन्द्रियाणि च बुद्ध्यन्ते स्वदेहं देहिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ॥"

इति । यद्यपीदं दुर्बोधं तथापि स्वः स्वरूपभूतो देहः यस्य तं स्वदेहं परमात्मानं मुक्तान् अन्यान् देहिनो विषयांश्च मुक्तस्येन्द्रियाणि बुद्ध्यन्ते । किं तानि कर्तॄणि ? नेत्याह— **करणानीति** । कस्तर्हि पूर्वार्धस्यार्थ इत्यत आह— **सूक्ष्म इति** । इतश्च न ज्ञानिनो ब्रह्मैक्यमित्याह— **शुकादीनामिति** ।

अनेन वाक्यत्रयेण मुक्तानां ब्रह्मभेदे क्रमेण प्रत्यक्षानुमानागमा उपन्यस्ताः । तत्र प्रत्यक्षं न बाधकम् । शुकादयोऽपि यद्यपि ज्ञानिनः । तथापीदानीमविनष्टोपाधित्वात्, तन्निमित्तभेदवत्तया दृश्यन्ते । प्रारब्धकर्मक्षयादुपाधिनाशे ब्रह्मैव संवृत्ता न पृथग्दृश्यन्त इत्यत आह— **उपाधीति** । जीवास्तावद्ब्रह्मणः प्रतिबिम्बा इति समर्थितम् । तत्र यदि तदीयस्योपाधेर्नाशोऽङ्गीक्रियते तदा तेषां नाशः प्रसज्यते । दर्पणाद्युपाधिनाशे मुखादिप्रतिबिम्बनाशदर्शनादित्यर्थः । यच्चोक्तं शुकादयोऽविनष्टोपाधित्वाद्ब्रह्मणः पृथग् दृश्यन्त इति । तदप्यसदित्याह— **न चेति** । वस्तुत एकीभूतस्योपाधिनापि पृथग्ज्ञाने न मानं पश्यामः । गगनादिदृष्टान्तस्यासम्मतत्वात् । सत्त्वोपाधिभेदमतस्य चेदं दूषणम् ।

किञ्चौपाधिक एव जीवब्रह्मणोर्भेदो वास्तवं त्वैक्यमिति वदन् प्रष्टव्यः । किं ब्रह्म निर्दुःखं स्वरूपमेवानुसन्धत्ते न जीवगतं दुःखम् । तत्तु जीव एव अनुसन्धत्त इति पक्षः । उत तदपीति । आद्यं दूषयति— **न चैकीभूतस्येति** । हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वदर्शनादिति भावः । द्वितीयं निराकरोति— **आसमिति** । लङत्र सर्वकालोपलक्षणार्थः । जीवरूपेण दुःख्यासं स्वरूपेण तु नेति व्यवस्थयाऽनुसन्धानान्न विरोध इत्यत आह— **अनेनेति** । इति च न युक्तमिति शेषः । कुत इत्यत आह— **भेदेति** । उपाधेरभेदकत्वस्योक्तत्वादिति भावः ।

अपरे तु ब्रह्मणैक्यमापन्नस्य मुक्तस्य पूर्वदुःखानुस्मरणमस्ति न वा । नेति पक्षे 'मग्नस्य हि' इत्युक्तो दोषः । आद्ये किमसौ पृथक् स्मरत्युत ब्रह्मात्मक एव । प्रथमस्य दूषणम्— **न चैकी-**

**भूतस्येति** । द्वितीयस्य **आसम्** इत्यादीति व्याचक्षते । अनेन 'मोक्षे दोषो महानेषः' इत्युक्तो दोषः प्रदर्शितो भवति ।

*भा०दी०*— **उपाधिभेदेति** । अविद्याभेदेति वान्तःकरणभेदेति वार्थः । इति पृष्टमित्युक्त-प्रश्नवाक्यार्थं व्यनक्ति **यदीति** । मोक्ष इत्यादिश्लोकार्थमाह **पूर्वे सिद्धिमित्यादिना** । **दोषं च भाष्यकार इति** । आसं दुःखी नासमित्यादिना अनुपदमेव स्फुटीकरिष्यतीत्यर्थः । तथापीति श्लोकार्थमाह **यद्यपीत्यादिना** । इदं तद्भूताय तप इति मयोक्तमित्यर्थः । स्वदेहमित्युपलक्षणं मत्वाह **मुक्ता-नन्यानिति** । देहिन इत्युपलक्षणामुपेत्योक्तं **विषयांश्चेति** । **कस्तर्हीति** । इन्द्रियाणामात्मन करणत्वे इन्द्रियाणि चेति पूर्वार्धस्य कोऽर्थ इत्यत उक्तमित्यर्थः । ससूक्ष्म आत्मा तैरिन्द्रियैः पश्यती-त्यर्थः । **वाक्यत्रयेणेति** । शुकादीनामित्याद्युपरितनवाक्यत्रयेणेत्यर्थः । जगद्व्यापारवर्जमिति सूत्रेण ऐश्वर्यमर्यादोक्त्या मुक्तानां निर्मर्यादैश्वर्येणैश्वरेणैकीभाव इत्यर्थः । विरुद्धधर्मवत्त्वरूपमानं अनेनोक्तं भवति । **संवृत्ता इति** । सम्पन्ना इत्यर्थः । **समर्थितमिति** । युक्ताश्च बिम्बधर्माः प्रतिबिम्बेऽविरोधे तत्र च रूपंरूपमित्यादिग्रन्थेनेति भावः । **असम्मतत्वादिति** । तत्राप्युपाधिज्ञाप्यस्वाभाविकांशा-नामङ्गीकारादिति भावः । वक्ष्यमाणदूषणघटनायाह **सत्योपाधीति** । **तदपीति** । अनुसन्धत्त इत्यनुषङ्गः । **उक्तत्वादिति** । न चैकीभूतस्य पृथग्ज्ञाने मानमित्यत्रोक्तत्वादित्यर्थः । **अनेनेति** । आसं दुःखी नासमित्यनेनेत्यर्थः ।

*भा०र०*— "न चैकीभूत एव" इत्याद्युत्तरभाष्यं प्रकृतार्थेन सङ्गमयितुमाह **अद्वैतेति** । तत्त्व-स्यैकत्वे कथं जीवावभास इत्यत उक्तं **तदेवेति** । उपाधिः अविद्यान्तःकरणादिः । घटाकाशादित्वं प्रतिपद्यत इति वर्तते । 'उत्पन्नम्' इत्यनन्तरं तेनैवोपाधिनाश इत्युपस्कर्तव्यम् । एवं परमतानुवादस्य फलमाह **यदा चेति** । **प्रविलयात्** प्रविलयाङ्गीकारात् । **विषयभोगः** मुक्ताविति शेषः । भाष्यस्यो-द्गीतत्वं परिहर्तुमाह **यदर्थं सुकृतस्येति** । अभिभवति सर्वानतिक्रम्य वर्तत इत्यभिभूः सर्वोत्तमः । "मितद्र्वादिभ्य उपसङ्ख्यानम्" इति डुप्रत्ययः । तस्मान्न निवर्तन्ति । छान्दसं परस्मैपदम् । न निवर्तन्ते । विकल्पं विशदयति **यदीति** । 'आजन्ममरणम्' इत्येतत् संसारेऽनुभूतमिति व्याख्या-तम् । श्लोकं व्याख्याति **पूर्वमिति** । 'विज्ञाने' इति सप्तमी तृतीयार्थेति तदर्थं वदंस्तद्विवक्षितार्थमाह **विज्ञान इत्यादि** । **दोष इति** । आद्यस्य दूषणमुक्तमिति सम्बन्धः । कोऽसावनेन प्रसिद्धो दोष उक्त इत्यत आह **दोषं चेति** । "न चैकीभूतस्य पृथग्ज्ञाने मानं पश्यामः" इत्यत्र एकीभावव्याहते-र्दुःखादिस्मरणवत्तया जीवस्य ब्रह्मपार्थक्येन स्वज्ञानमस्तीत्यत्र न प्रमाणमिति स्फुटीकरिष्यतीत्यर्थः । तथाच वक्ष्यति— अनेन "मोक्षे दोषो महानेषः" इत्युक्तदोषः प्रदर्शित इति । **द्वितीयोऽपि**

सांसारिकदुःखं न स्मरन्तीति पक्षोऽपि । "परेऽज्ञाने मग्नस्य सर्वथा ज्ञानशून्यस्य" इत्युक्त्या जडस्यापि प्राप्तावाह **चेतनस्येति** । **भवेदेवेति** । अन्धादौ दर्शनात् । न च दुःखं युक्तम् । अतोऽस्त्येव पूर्वानुभूतस्मरणरूपज्ञानमिति भाव इति दूषित इत्यन्वयः । **पूर्वपक्षस्थेनेति** । निन्दितत्वमात्रस्यासत्त्वप्रयोजकत्वे शून्यवादिदूषितस्य ब्रह्मणोऽप्यसत्त्वं स्यात् । सिद्धान्तनिन्दितत्वं तु न प्रकृतेऽस्तीति भावः । **एतदुक्तम्** ऐक्यमुक्तम् । **अन्यथा गृहीत्वा** ब्रह्मैव भूता इत्यर्थान्तरमाशङ्क्य । **पृथक्त्वेनेति** । अनेन 'पृथग्भोग' इति भाष्यं पृथगिति भिन्नं पदं स्वीकृत्य अनुसंहितपरमात्मपृथग्भावानां मुक्तानां भोगस्याभिधानादिति व्याख्यातं भवति । 'मयेरितम्' इत्यनन्तरं "बुद्धिं च परमां यत्र कापिलानां महात्मनाम्" इत्यर्धः प्राचीनटीकारीत्या पठितव्योऽपि पृथग्भोगाभिधानादिलक्षणप्रकृतप्रमेये नात्यन्तमुपयोगमावहतीति न पठितः । तत्र 'तथाऽपि' इत्येतस्य साकाङ्क्षत्वात् तत्पूरणायाह **यद्यपीति** । इदं "परमात्मानमासाद्य तद्भूताः" इत्येतत् । श्रीमत्कपिलोक्तविदां महात्मनामुपास्यं परमं तत्त्वं वासुदेवाख्यं तद्बुद्धिं च परमां शृणु । यत्र परमे तत्त्वे स्थितस्य मुक्तस्य इन्द्रियाणि बुध्यन्ते पश्यन्ति । कं बुध्यन्ते ? स्वदेहम् । अस्यार्थद्वयमाह **परमात्मानं मुक्तमिति** । मुक्तानिति क्वचित् पाठः । देहिन इत्येतद् विशिनष्टि **अन्यानिति** । देहिनश्चेति चशब्दान्वयमुपेत्य तस्य प्रकृतोपयोग्यर्थमाह **विषयांश्चेति** । आख्यातेन कर्तुरभिधानात् प्राप्ताशङ्कामाह **किं तानीति** । **करणानीतीति** । अवान्तरक्रियाविवक्षया चाख्यात इति भावः । **पूर्वार्धस्य** "इन्द्रियाणि च" इति पूर्वार्धस्य । **सूक्ष्मः** स्थूलदेहरहितः । प्राचीनटीकायां तु, यत्र परमतत्त्वे स्थितस्य मुक्तस्य देहिन इन्द्रियाण्यपि बुध्यन्ते । तेषामपि चिन्मात्रत्वात्, न तु संसार इव तैरात्मैव बुध्यते । कं स्वदेहं स्वात्माकं देहम् । देहस्यापि चिन्मात्रत्वात् स्वरूपभूतदेहत्वात् सुतरामभौतिकदेहत्वात् स्वतन्त्रदेहत्वाच्च । स्वदेहं स्वःस्वात्मा तं ददातीति स्वदा तादृशी ईहा यस्य तं स्वदेहं विष्णुमपि बुध्यन्त इति व्याख्यातम् । अत्र परमात्मनः पृथक्त्वेनानुसन्धीयमानस्वरूपदेहस्य मुक्तस्येन्द्रियैर्विषयभोगाभिधानान्न तस्य ब्रह्मैक्यमिति प्रतीयत इति विभावितं भवति । **क्रमेण प्रत्यक्षेति** । जीवन्मुक्ताः शुकादयः स्वात्मनः परमात्मनो भेदेन पश्यन्ति । दृश्यन्ते चेतरैर्भेदेनेति महतां प्रत्यक्षं "शुकादीनां पृथग्दृष्टेश्च" इति वाक्येनोपन्यस्तम् । सृष्ट्यादिजगद्व्यापारवर्जं कामं मुक्त आप्नोति । न तु सर्वान् कामानिति सूत्रे मुक्तस्यैश्वर्यमर्यादाभिधानान्न निर्मर्यादैश्वर्येण मुक्त एकीभवितुमर्हतीति विरुद्धधर्माधिकरणत्वरूपमनुमानं 'जगद्व्यापार' इति वाक्य उपन्यस्तम् । "इदं ज्ञानम्" इति भगवद्वाक्यलक्षण आगम उपन्यस्तः । अत्राऽऽगमे मुक्तस्य ब्रह्मसारूप्यमुक्तम् । न हि सरूपयोरैक्यं निर्विशेषाभेदवादिनस्तव मतेऽस्तीति प्रत्यक्षानुमानागमैर्न मुक्तस्य ब्रह्मणैक्यमित्यर्थः । इति भगवद्वचनाच्चेति

शेषः। तत्र प्रत्यक्षमुपपादयन्नेव दूषयति **तत्रेति**। प्रमाणत्रय इत्यर्थः। **संवृत्ताः** सम्पन्नाः। ब्रह्मभूता इत्यर्थः। **समर्थितमिति**। युक्ताश्च बिम्बधर्माः प्रतिबिम्बेऽविरोधे। तत्ता च। ''रूपं रूपं प्रतिरूपो बभूव'', इत्यादिना प्रागेवेति शेषः। **नाशादर्शनादिति**। तथा च आत्मनाशे मुक्तेरपुरुषार्थत्वप्रसङ्गा-दुपाधिनाशवादो न युक्त इति भावः।

ननु वस्तुत एकमेव गगनं घटाद्युपाधिभिन्नं सद् घटाकाशो मठाकाश इति ज्ञायते। तद्दृष्टान्तेन चैकमेव ब्रह्मोपाधिवशाच्छुकादिभावेन ज्ञायते। तथा च प्रयोगः— ब्रह्म उपाधिकृतभेदवत्। एकत्वात्। यथा गगनमिति। तथा च अनुमानसद्भावान्मानं न पश्याम इत्यसदित्यत आह **गगनादीति**। तत्रापि स्वाभाविकप्रदेशाङ्गीकारेण भेदस्य तत्प्रतिनिधिविशेषस्य चोपाधिज्ञाप्यत्वेऽपि तत्कृतत्वमसम्मतम्। तथा चोक्तम् ''खेऽपि देशान्तरस्य सः। ज्ञापको विद्यमानस्य'' इति। तथा च अनुमाने दृष्टान्तस्य साध्यवैकल्यमिति भावः। ननु नेदं मायावादिनो दूषणं, तेनाङ्गुल्यवष्टम्भादिना मिथ्याभूतचन्द्रभेदाध्यासाङ्गीकारेण चन्द्रदृष्टान्तेन ब्रह्मण्यपि उपाधिना मिथ्याभेदावभासानुमान-सम्भवात्। यदाहुः ''भ्रान्तिभेदप्रतीतिरूपाधिमात्राद् युज्येत चन्द्रभेदप्रतीतिवत्'' इतीत्यत आह **सत्योपाधीति**। चशब्द एवार्थे। सत्यं, मिथ्योपाधिभेदवादिमते वस्तुत एकीभूतस्याप्युपाधिवशाद् भेददर्शनं सम्भवतीति। तथाऽपि सत्योपाधिकृतसत्यभेदवादिमते वस्तुत एकीभूते उपाधिकृतभेदस्य ज्ञानमस्तीत्यत्र मानं न पश्याम इत्युक्तेनोक्तशङ्कावसर इति भावः।

केचित्तु, मायावादिमतेऽविनिष्टोपाधित्वाच्छुकादयो ब्रह्मणः पृथग् दृश्यन्त इति न शङ्कितुं युक्तम्। तन्मते ज्ञानेन विश्वबाधाङ्गीकारात्। ''तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण नासीदस्ति भविष्यति'' इत्युक्तेः। तथा च शुकादीनामैक्यसाक्षात्कारेणैवोपाधेर्बाधात् प्रविलयात् कथमविनष्टोपाधित्वम्? भिक्षाटनादिकं च तेषां वासनावशादित्यभ्युपगतम्। अतः कथमिदं दूषणं तन्मते? इत्यत आह **सत्येति**। इदं च दूषणमिति चशब्दसम्बन्ध इति व्याच-क्षते। अन्ये तु, भाष्ये नाशशब्दप्रयोगान्मिथ्योपाधिभेदमते भेदासत्त्वेऽपि भेदज्ञानसम्भवान्न तन्मते इदं दूषणमित्यत आह **सत्येति**। इत्यवतारयन्ति। एवं यस्य ज्ञानमुत्पन्नं स ब्रह्मणैकीभवती-त्ययमंशो दूषितः। इदानीं ब्रह्मैक्यमेव तत्त्वम्। तदेवोपाधिना जीवभावमापन्नमिति यदुक्तं तदपि दूषयितुमिदमेव भाष्यमिति भावेनाह **किञ्चेति**। **तदपि** जीवगतं दुःखम्। अनुसन्धत्त इति वर्तते। **पृथग्ज्ञाने** जीवात् पृथक्त्वेन दुःखानुसन्धान इति भाष्यार्थः। उपाधिभेदोऽप्यननुसन्धानप्रयोजको न भवतीत्येतदुपादयति **हस्तपादादीति**। यदि भेद औपाधिकः अभेदस्तु वास्तव इत्यभिमानः तर्हि हस्तपादादिगतसुखाद्यनुसन्धातुरेकत्वानुभवाद् ईश्वरस्य जीवैक्यवतो जीवगतदुःखाद्यनुभवः स्यात्।

स च युगपद् विरुद्ध इति भाष्यार्थ इति भावः । "आसं ब्रह्मभावेन न पुनर्जातु दुःखासम्" इतीश्वरानुभवविरोधाज्जीवगतं दुःखमपीश्वरोऽनुसन्धत्त इति पक्षो न युक्त इति भाष्ये परोक्तस्य वास्तवैक्यस्य सदातनत्वात् तदनङ्गीकारे अनुसन्धानमपि सदातनमेष्टव्यम् । अतः कथं भूतार्थलङ्प्रयोग इत्यत आह **लङत्रेति** । भूतवर्तमानभविष्यत्कालोपलक्षणार्थः । "छन्दसि लुङ्लङ्लिटः" इत्यनुशासनादित्यर्थः । सर्वलकारोपलक्षणार्थ इति क्वचित् पाठः । तत्र लकारार्थोऽनद्यतनत्वादिः । जीवरूपब्रह्मरूपयोर्भेदाभावादिति भाष्यार्थः । तत्रौपाधिकभेदभावाद् भेदाभावोऽसिद्ध इत्याशङ्क्याऽह **उपाधेरभेदकत्वस्येति** । **उक्तत्वात्** "न चैकीभूतस्य पृथग्ज्ञाने" इत्यत्र । **अपरे** नरहरितीर्थश्रीमच्चरणाः । **नेति पक्ष इति** । तथा चोक्तम् "अथ न स्मरति पूर्वानुभूतं दुःखं तर्हि दुःखमेव महत्तरं किं न भवेत् । अभीष्टस्वपरविषयानुभवाद्यभावात्" इति । मुक्तो ब्रह्मणः पृथगेवातीतं जानाति तद्रूपेण वा । न तावदाद्य इत्याह **न चेति** । नापि द्वितीय इत्याह **आसमिति** । "एकीभूतस्यैवेशस्याहं दुःख्यासं न कदाचिद् दुःख्यासमिति ज्ञानविरोधादित्यर्थः" इति प्राचीनटीकां निष्कृष्यानुवदति **आसमित्यादि** । अत्र पक्षे आसमिति लङो नोपलक्षकत्वम् । प्रतीतार्थ एव सामञ्जस्यादिति ज्ञातव्यम् । अस्मिन् व्याख्याने अन्यदप्यनुकूलमित्याह **अनेनेति** । "न चैकीभूतस्य" इत्यादिभाष्येणेत्यर्थः । **प्रदर्शित इति** । प्रदर्शनप्रकारस्तु प्रागेवोक्तोऽस्माभिः ।

**भाष्यम्**

**न च प्रतिबिम्बस्य बिम्बैक्यं लोके पश्यामः । उपाधिनाशे मानं वा । 'मग्नस्य हि परेऽज्ञाने' इति दुःखात्मकत्वोक्तेश्च । 'यावदात्मभावित्वात्' इत्युपाधिनित्यताभिधानाच्च । अतोऽन्यवचनं प्रतीयमानमप्यौपचारिकम् ।**

*प०टी०*— उपाधिनाशे जीवनाशाभावेऽपि नैक्यं बिम्बेनेत्यत आह (नेत्याह ?) **न चेति** । उपाधिनाशमभ्युपगम्यैतदुक्तम् । सोऽपि नास्तीत्याह **उपाधीति** । **वाशब्दात्** परं **पश्यामः** इत्यनुकर्षः । प्रकृतबिम्बप्रतिबिम्बयोरैक्ये बाधकं चास्तीत्याह **मग्नस्येति** । न केवलमुपाधिनाशे मानाभावः किन्त्वस्ति तदनाशे मानमित्याह **यावदिति** । बिम्बप्रतिबिम्बयोरैक्याभावे कथं 'नेक्षेत' इति वचनम् ? इत्यत आह **अत इति** ।

*न०टी०*— नन्वौपाधिकत्वात् स्वपरभेदस्योपाधिनाशे तज्ज्ञानाभावे नानिष्ट इत्यत आह **न चेति** । न च कस्यचित् प्रतिबिम्बस्योपाधिनाशेऽपि बिम्बैक्यं पश्यामः । जीवोपाधिनाशे प्रमाणं चेत्यर्थः । एवमपि स्वपरविषयज्ञानाभावश्चेत् दोषोऽपि तत्रोक्त इति भावेनाह **मग्नस्येति** । न केवलं

जीवोपाधिनाशे मानाभावः । किन्तु नित्यत्वं च तस्योच्यत इत्याह **यावदिति** । यावत्परमाभावित्वात् जीवोपाधेः, न तद्विनाशोर्ध्वं जीवस्य बिम्बैक्यं पृथज्ज्ञानाभावो वा नाशङ्कनीय इत्यर्थः । ननु,

'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥'

इत्यत्रोद्यदादाविवोदकस्थेऽप्यादित्यादिशब्दोक्तेः सत्यप्युपाधौ बिम्बप्रतिबिम्बैक्यावगमात् न जीवोपाधिनित्यत्वेऽपि बिम्बैक्यविरोध इत्यत आह **अत इति** । यतो यावदुपाधि प्रतिबिम्बस्य बिम्बत्वं न प्रतीयते तदूर्ध्वं च नश्यत्येवादित्यादिप्रतिबिम्बः । अतस्तस्य बिम्बत्वं प्रतीयमानमपि प्रतिमास्विवौपचारिकमित्यर्थः ।

***प्र०दी०*—** ननु 'उपाधिनाशे नाशाच्च प्रतिबिम्बस्य' इति यदुक्तं तदसत् । भेदे हि बिम्बप्रतिबिम्बयोरेतत्स्यात् । न चैवम् । किन्तु बिम्बमेव प्रतिबिम्बम् । तदेवेदमिति प्रत्यभिज्ञानात् ।

''नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥''

इति स्मृतावुद्यदादाविव वारिस्थप्रतिबिम्बेऽप्यादित्यशब्दप्रयोगात् । भेदस्तु दर्पणाद्युपाधिकृतः । तथा चोपाधिनाशे भेद एव नश्यति । प्रतिबिम्बस्य कुतो नाशः । एवं जीवस्यापीत्याशङ्क्य प्रत्यभिज्ञानं तावदसिद्धमित्याह— **न च इति** । न पश्यामो न प्रत्यभिजानीमः । प्रत्युत प्रत्यक्पराग्भावादिना तयोर्भेदमेव पश्याम इति चार्थः । यच्चोक्तं जीवब्रह्मणोर्बिम्बप्रतिबिम्बयोरौपाधिको भेद इति तन्नास्माकमनिष्टम् । किन्तु परस्यैव । जीवोपाधिनाशे प्रमाणाभावेन नित्यत्वात् । तन्निमित्तस्यापि भेदस्य मुक्तौ स्थितेरित्याशयवानाह— **उपाधीति** । 'न पश्यामः'इत्यनुवर्तते । न केवलमुपाधिनाशे प्रमाणाभावः । किन्तु तन्नाशाङ्गीकारे बाधकं चास्तीत्याह— **मग्नस्येति** । उपाध्यभावे स्मरणादिविलोपात् । न केवलमेतावत् । उपाधिनित्यत्वे प्रमाणं चास्तीत्याह— **यावदिति** । अस्तु तर्ह्युदाहृतं स्मृतिवाक्यं बिम्बप्रतिबिम्बयोरैक्ये प्रमाणमित्यत आह— **अत इति** । प्रत्यक्षेण भेदस्य प्रतीयमानत्वात् । प्रतीयमानमपीत्यनेन प्रत्यभिज्ञायामिव वचनस्वरूपे न विवादोऽस्तीत्याह वारिस्थमिति च न परस्य मुख्यं सम्भवति । अनौपचारिकैः सहपाठेऽपि बाधकवशादौपचारिकत्वं ''ब्रह्मज्ञानेन वा मुक्तिः'' इत्यादौ दृष्टमिति ।

*भा०दी०*— **स्मृतिवाक्यमिति** । नेक्षतेति स्मृतिवाक्यमित्यर्थः । अतःशब्दार्थः प्रत्यक्षेत्यादि अपिपदं भिन्नक्रममुपेत्योक्तं **प्रतीयमानमपीति । न परस्य मुख्यमिति** । बिम्बभूतादित्यस्य साक्षाद्वारिस्थत्वाभावादिति भावः । वारिस्थत्वस्यौपचारिकत्वोक्तावुद्यदादित्याद्यनौपचारिकादित्येन सह पाठविरोध इत्यत आह **अनौपचारिकैरिति** । भेदप्रत्यक्षरूपबाधकवशादित्यर्थः । **इत्यादाविति** । प्रयागमरणेन वा अथवा स्नानमात्रेण गोमत्यां कृष्णसन्नि-धावित्यत्रेत्यर्थः । विवरिष्यते चैतत् उत्तराध्याये ।

*भा०र०*— **एतत्** उपाधिनाशे प्रतिबिम्बनाश इत्येतत् । **तदेवेदमिति** । यल्लक्षणं ग्रीवास्थं मुखं तल्लक्षणमेव दर्पणस्थं प्रतिमुखमित्यभेदावगाहिप्रत्यभिज्ञानादित्यर्थः । प्रत्यक्षे विवदमानं प्रत्यागमं बिम्बप्रतिबिम्बयोरैक्ये प्रमाणयति **नेक्षेतेति** । अतश्चशब्दाभावः । **उपरक्तं** स्वर्भानुग्रस्तम् । नभसो मध्यं गतमादित्यमित्यन्वयः । तर्हि बिम्बप्रतिबिम्बयोर्विच्छेदप्रतीतिः कथमित्यत आह **भेदस्त्विति** । नश्यति इत्यस्त्विति शेषः । प्रत्यभिज्ञायाः शङ्कितत्वादाह **न प्रत्यभिजानीम इति** । 'पश्यामः' इत्यस्य यथाश्रुतार्थत्वमपीति भावेन आह **प्रत्युतेति** । 'प्रत्यक्पराग्भावादिना' इत्यादिपदेन न्यूनाधिकपरिमाणत्वचलत्वाचलत्वोपाधिसंयुक्तत्वासंयुक्तत्वत्वगादिग्राह्यत्वादिधर्मग्रहः । **जीवब्रह्मणोः** जीवब्रह्मरूपयोः । **जीवोपाधिनाशे** जीवघटोपाधिनाशे । **नित्यत्वात्** उपाधेः । **मुक्तौ स्थितेरिति** । स्वरूपस्यैव जीवोपाधितया तन्निमित्तस्य भेदस्य स्वाभाविकस्यावस्थितेरित्यर्थः । सत्त्वादिति वाच्ये यत् 'स्थितेः' इत्याह तत् ''जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः'' इति प्रमाणं सूचयितुम् । **स्मरणादीति** । देहेन्द्रियाद्यभावे पूर्वानुभूतस्मरणादौ कारणान्तरानिरूपणात् तदभावे ''किं न दुःखतरं भवेत्'' इति मानोक्तदुःखात्मकत्वमेव चेतनस्य स्यादिति भावः । एतावत् जीवोपाधिनाशे प्रमाणाभावमात्रम् । इत्यनन्तरं किन्त्विति पदाध्याहारः । **यावदितीति** । ज्ञस्येत्यनुवर्तते । ज्ञस्य जीवस्य तदुपाधेश्च यावत्परमात्मावस्थायित्वात् । सोऽनादिना पुण्येनाऽबद्ध इत्यनादिकर्मसम्बन्धबोधकश्रुत्यप्रामाण्यदोषो न । कुतः ? तद्दर्शनात् । ''नित्यः परो नित्यो जीवः'' इति श्रुतेः । ''जीवो नित्यो धातुरस्य त्वनित्यः'' इति स्मृतेश्च । ''उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम्'' इति वचनाच्च । अनाद्यनन्तत्वाज्ज्ञस्य न दोष इति वाच्ये यावदित्याद्युक्तिः बिम्बोपाधितत्सन्निधीनां त्रयाणामप्यन्तवत्त्वं नास्ति । येन ज्ञस्य तथात्वं स्यादिति सूचयितुमिति ''यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्'' इति सूत्रार्थः । अत्र जीवप्रतिबिम्बत्वघटकोपाधेर्नित्यत्वं व्यवस्थापितमिति भावः । **तर्हीति** । यदि प्रत्यभिज्ञानमुक्तरीत्या दूषितमित्यर्थः । **स्मृतिवाक्यं**

''नेक्षेतोद्यन्तमादित्यम्'' इति स्मृतिवाक्यम् । अव्यवहितप्रकृतोपाधिनित्यत्वपरामर्शोऽनन्वयाद् व्यवहितस्य प्रत्युत भेदमेव पश्याम इत्यस्य परामर्श इति भावेन 'अतः' इति भाष्यार्थमाह **प्रत्यक्षेण भेदस्य प्रतीयमानत्वादिति** । इमे चैत्रतच्छाये भिन्ने इतिवदिमे चैत्रतत्प्रतिबिम्बे भिन्ने इत्येव पार्श्वस्थेन ग्रहणात् स्वेनापि स्वकरतलप्रतिबिम्बे भिन्ने इत्येव ग्रहणाच्चेत्यर्थः । अपिशब्दं संयोजयन् भाष्यस्वारस्यमाह **प्रतीयमानमिति** । सम्मतमित्यर्थः । **मुख्यं सम्भवतीति** । वारिणि सूर्यान्तराभावाद् गगनस्थस्य च वारिस्थत्वायोगादिति भावः । अनेन औपचारिकत्ववर्णनं परस्यापि समानं नास्माकमेवेति भावितं भवति ।

ननु वारिस्थप्रतिबिम्बस्य बिम्बभूतादित्याभेदाभावे मुख्यत आदित्यशब्दवाच्योद्यदादिभिस्सहपाठोऽनुपपन्नः स्यात् । संस्कारकर्मप्रायपाठाद्धि गोदोहनं संस्कारकर्मैवेत्युक्तं पूर्वतन्त्र इत्यत आह **अनौपचारिकैरिति** । ''ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा । अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ'' इत्यत्र साक्षान्मुक्तिजनकब्रह्मज्ञानसहपाठेऽपि प्रयागमरणादेः प्रशस्तत्वेन ब्रह्मज्ञानसादृशात् ''प्रयागमरणेन वा'' इत्यादेरौपचारिकत्वस्य वक्ष्यमाणत्वादौपचारिकत्वमेव । आदिशब्देन ''चित्रितः सिंहः'' इति लोकव्यवहारे ''यथा दारुमयी योषा यथा चर्ममयो मृगः'' इत्यादिस्मार्तव्यवहारे चेति गृह्यते । गोदोहनादौ तु नैवं बाधकमिति भावः । प्राचीनटीकायां तु 'नेक्षेत' इति स्मृतावुद्यदादाविवोदकस्थेऽप्यादित्यशब्दप्रयोगदर्शनेन सत्यप्युपाधौ बिम्बप्रतिबिम्बैक्यावगमान्न जीवोपाधिनित्यत्वेऽपि बिम्बैक्यविरोध इत्यत आह **अत इति** । यतो यावदुपाधिप्रतिबिम्बस्य बिम्बत्वं प्रतीयते अत ऊर्ध्वं नश्यत्येव आदित्यादिप्रतिबिम्बम् । अतस्तस्य प्रतिबिम्बस्य स्मृत्या प्रतीयमानमपि बिम्बत्वं प्रतिमादाविवौपचारिकं व्याख्येयमिति 'अतः' इत्यादिभाष्यं व्याख्यातम् ।

**भाष्यम्**

**दृष्टाश्च ते भगवतो भिन्ना नारदेन । प्रतिशाखं च 'स एकधा' इत्यादिषु भेदेन प्रतीयन्ते । विरोधे तु युक्तिमतामेव बलवत्त्वम् । युक्तयश्चात्रोक्ताः 'मग्नस्य हि' इत्यादयः । अतो जले जलैकीभाववदेकीभावः । उक्तं च 'यथोदकं शुद्धे शुद्धं', 'यथा नद्यः', इत्यादौ । तत्राप्यन्योन्यात्मकत्वे वृद्ध्यसम्भवः । अस्ति चेषत् समुद्रेऽपि द्वारि । महत्त्वादन्यत्रादृष्टिः ।**

**'ता एवापो ददौ तस्य स ऋषिः शंसितव्रतः' इति महाकौर्मे समर्थानां भेदज्ञानाच्च ।**

**'नैव तत् प्राप्नुवन्त्येते ब्रह्मेशानादयः सुराः । यत् ते पदं हि कैवल्यम् ।' इति निषेधाच्च नारदीये ।**

**सविचारश्च निर्णयः कृतो मोक्षधर्मेषु । बलवांश्च सविचारो निर्णयो वाक्य-मात्रात् । अतो 'यत्र नान्यत् पश्यति' इत्याद्यपि तदधीनसत्तादिवाचि । अन्यथा कथमैश्वर्यादि स्यात् । न च तन्मायामयमित्युक्तम् । अन्यथा कथं तत्रैव 'स एकधा' इत्यादि ब्रूयात् ।**

***प०टी०***— इतोऽपि न मुक्तानां भगवदैक्यमित्याह **दृष्टाश्चेत्यादिना** । ननु भेदश्रुतिवदभेदेऽपि 'ब्रह्म वेद' इत्यादिश्रुतिसत्त्वात् कथं निर्णयः ? इत्यत आह **विरोधे त्विति** । युक्तिमत्त्वं च कुतः ? इत्यत आह **युक्तयश्चेति** । तर्ह्यद्वैतश्रुतेः का गतिः ? इत्यत आह **अत इति** । श्रौती चेयं व्यवस्थेत्याह **उक्तं चेति** । जलेऽप्यभेद एवेत्यत आह **तत्रापीति** । नास्त्येव वृद्धिरीशदृष्टान्ते समुद्र इत्यत आह **अस्तीति** । न केवलं वृद्धिसम्भवाज्जलभेदः, किन्तु विभागाच्चेत्याह **ता एवेति** । संश्लेषकाले भेदेन प्रतीतत्वान्न च जलैक्यमित्याह **समर्थानामिति** । न केवलं मुक्तिभेदवचनादभेद-वाचामन्यार्थता । किन्त्वभेदनिषेधाच्चेत्याह **नैवेति** । इतश्चान्यार्थत्वमभेदवाचामित्याह **सविचार-श्चेति** । सविचारनिर्णयात् कुतोऽन्येषामन्यार्थता ? इत्यत आह **बलवांश्चेति** । ननु मुक्तौ भेदसत्वे कथमद्वितीयत्वं भूमलक्षणमुच्यते ? इत्यत आह **अत इति** । साक्षदद्वैतस्य बाधितत्वादित्यर्थः । साक्षादद्वैतार्थत्वे बाधकमाह **अन्यथेति** । सर्वाभावे सर्वेशत्वादि न स्यादित्यर्थः । सर्वेशत्वादे-र्मायिकत्वान्न विरोध इत्यत आह **न चेति** । इतश्च नात्राद्वितीयतोच्यत इत्याह **अन्यथेति** । द्वितीयाभावे कथं तदुपासकस्य भेदेन भोगं ब्रूयाच्छ्रुतिरित्यर्थः ।

***न०टी०***—ननु यदि मुक्तावपि केनचिदुपहितास्तर्हि प्रागिव ते किमिति पृथङ्न दृश्यन्त इत्यत आह **दृष्टाश्चेति** ॥

तथाहि मोक्षधर्मे श्रीभीष्मः—

'प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
ददर्श तानेव राजन् श्वेतांश्चन्द्रप्रभान् शुभान् ॥' इति ।

मुक्तान् दृष्ट्वा स्तुत्वा देवं तं च ददर्शेत्याह—

''एवं स्तुतः सन् भगवान् गुह्यैस्तस्योच्चनामभिः ।

तं मुनिं दर्शयामास नारदं विश्वरूपधृक् ।
किञ्चिच्चन्द्राद्विशुद्धात्मा किञ्चिच्चन्द्राद्विशेषवान् ॥'' इत्यादि ।

न केवलं पृथग्दृष्टास्ते, किन्तु श्रुता अपि प्रतिशाखं पृथगित्याह **प्रतिशाखं चेति** । 'स एकधा भवति, त्रिधा भवति' इत्यादि भूमोपासकानां मुक्तावैश्वर्यम् । **आदिशब्देन** 'सर्वान् कामानास्वाऽमृतः समभवत्', 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादि । ननु **कथमेषां** भेदसाधकत्वम् ? 'परेऽव्यये सर्व एकीभवन्ति' ब्रह्म वेद ब्रह्मैव भवति' इत्यादिविरोधादित्यत आह **विरोध इति** । युक्तिमन्ति च भेदवाक्यान्येवेत्याह **युक्तयश्चेति** । जीवन्मुक्तानां पृथग्दर्शनात्, मुक्तानां जगद्व्यापाराहित्यम्, ब्रह्मसारूप्यम्, 'आसं दुःखी' इति ज्ञानान्यथानुपपत्तिश्च, लौकिकप्रतिबिम्बानामुपाधिनाशेऽपि ब्रह्मैक्यादर्शनं, स्वरूपनाशश्च, नित्योपाधिश्च जीवानाम् इत्याद्यभेदबाधका भेदसाधका **आदिशब्दोक्ताः** । न चैतावतैक्यश्रुतिर्निर्विषया, सारूप्यविषयत्वादित्याह **अत इति** । न केवलं न्यायाप्तेयं व्यवस्था, किन्तु श्रौताऽपीत्याह **उक्तं चेति** । ननु उदकस्योदकान्तरेण तादात्म्यमेव न सारूप्यमित्यत आह **तत्रापीति** । नन्वल्पोदक एव वृद्धिर्दृश्यते न तु ब्रह्मदृष्टान्ते समुद्र इत्यत आह **अस्तीति** । यद्यपि महत्वेनान्यत्र समृद्धवृद्धिर्न दृश्यते स्थूलदृष्टिभिः, तथाऽपि द्वारदेशे दृश्यत एवेत्यर्थः । न केवलं वृद्ध्यन्यथानुपपत्त्या संश्लिष्टानामपां भेदानुमानम्, किन्तु पुनर्विश्लेषदर्शनाच्चेत्याह **ता एवेति** । या इन्द्रकमण्डलुस्था आपः, स्वकमण्डलौ निक्षिप्तास्ता एव तस्य ददौ वसिष्ठ इत्यर्थः । महानद्योऽपि हि परस्परमेकीभूय पुनर्वियुज्य समुद्रं गच्छन्ति । न केवलं पुनर्विश्लेषात् पूर्वभेदानुमानम् । किन्तु तदाऽपि भेदं पश्यन्ति केचिदित्याह **समर्थानामिति** । सममेतद्ब्रह्मसंयुक्तेश्वपि । ब्रह्मेशादिसुराणामपि मुक्तौ विष्णुत्वनिषेधादप्यैक्यवाक्यानामियमेव गतिरित्याह **नैवेति** । 'बहवः' इत्यादिविचारपूर्वं भेदस्यैव निर्णीतत्वाच्च न स्वरूपैक्यमैक्यवाक्यार्थ इत्याह **सविचारश्चेति** । ननु 'बहवः' इत्यादिवाक्यमप्यैक्यवाक्येन बाधितं किं न स्यात् ? इत्यत आह **बलवानिति** । यतः सर्वजगदुत्पत्त्यादिकारणस्वतन्त्रपुरुषैक्यं सविचारान्निर्णयादवसीयते । अतस्तदनुसारेण स्वतन्त्रान्यनिषेध एवान्येनापि वाक्येन । न त्वन्यमात्रनिषेध इत्याह **अत इति** । तदन्यस्यैव निषेधे कथं सर्वविदोक्तं सर्वैश्वर्यसर्वज्ञत्वादिकं स्यात् ? ईशितव्यज्ञेयाद्यभावादिति भावेनाह **अन्यथेति** । नन्वन्योपाधिकत्वान्मायामयं तदित्याशङ्क्य, तन्निरस्तं पुरस्तादित्याह **न चेति** । इतोऽपि नित्यवशीकृताशेषचेतनाचेतनत्वमेव भूमलक्षणत्वेनोच्यते 'यत्र नान्यत् पश्यति' इत्यादिना । न तु तदन्यचेतनाचेतनाभावः । तथा सति तज्ज्ञानेन विमुक्तानां तत्प्रकरण एव 'स एकधा भवति त्रिधा भवति' इत्यादि पृथगैश्वर्यवचनानुपपत्तेरित्याह **अन्यथा कथं तत्रैवेति** ।

***प्र०दी०***— एवं शुकादीनामित्युक्तं प्रत्यक्षमुपपादितम् । अधुनाऽस्तां तावदुपपादनसापेक्षं प्रत्यक्षम् । तन्निरपेक्षं चास्तीत्याह— **दृष्टाश्चेति** । ते निवृत्तसकलकर्माणो मुक्ताः । एतच्च मोक्षधर्मे स्पष्टमुक्तम् । प्राङ्मुक्तेश्वरभेदे स्मृतिरुदाहृता । श्रुतिं चोदाहरति— **प्रतिशाखं चेति** । ननु भेद इवाभेदेऽपि ''परेऽव्यये सर्व एकीभवन्ति'' इत्यादिवाक्यानि सन्ति । तत्कथं निर्णय इत्यतः सामान्यन्यायं तावदाह— **विरोधे त्विति** । बलवद्विरोधेन दुर्बलं बाध्यत इति भावः । ततः किं प्रकृत इत्यत आह— **युक्तयश्चेति** । अत्र भेदपक्षे । उपलक्षणमेतत् । प्रत्यक्षानुकूल्यं च भेदवाक्यानां प्राबल्याय ग्राह्यम् । तर्हि 'एकीभवन्ति' इत्यस्य का गतिरित्यत आह— **अत इति** । उभयत्र एकीभावशब्देन तद्वादिवाक्यं गृह्यते । स्थानैक्यविषयमैक्यवाक्यमित्यर्थः । इयं च रूढलक्षणेति न प्रयोजनमन्वेषणीयमिति दृष्टान्तोक्तिः । न केवलमियं गतिर्न्यायप्राप्ता । किन्तु श्रौती चेत्याह— **उक्तं चेति** । उदकेऽप्यैक्यादसम्मतो दृष्टान्त इत्यत आह— **तत्रापीति** । नास्त्येव समुद्रे वृद्धिरनुपलम्भादित्यत आह— **अस्ति चेति** । समुद्रेऽपि वृद्धिरिति शेषः । अनुपलम्भस्यासिद्धिमाह— **द्वारीति** । नदीनां द्वारि । दृश्यते चेति शेषः । अन्यत्र कुतो न दृश्यत इत्यत आह— **महत्त्वादिति** । सामुद्रोदकस्य महत्त्वात् । न केवलं वृद्धि-लिङ्गकादनुमानादुदके भेदसिद्धिः । किं तर्हि प्रत्यक्षादपीत्याह— **ता एवेति** । ''या इन्द्रकमण्डलोरादाय स्वकमण्डलूदके क्षिप्तास्ता एवापस्तस्येन्द्रस्य ददौ वसिष्ठ'' इति महाकौर्मवचनात् समर्थानां वसिष्ठादीनां जलभेददर्शनाच्च । भेदादर्शने विभज्य कथं दद्यादिति । इतश्च मुक्तभेदवाक्यमेव प्रबलम् । अभेद-निषेधात्मकत्वादित्याह— **नैवेति** । कैवल्यं सर्वोत्तमत्त्वम् । इतोऽपि भेदपक्षो बलवानिति वक्तुमाह— **सविचारश्चेति** । पूर्वोत्तरपक्षबलाबलचिन्ता विचारः । निर्णयो जीवेशभेदावधारणम् । ''बहवः पुरुषा ब्रह्मन्'' इत्यादिनेति शेषः । न हि भिन्नयोर्मुक्तावभेदः सम्भवतीति भावः । ततः किमित्यत आह— **बलवांश्च इति** । निर्णयश्चेति सम्बन्धः । वाक्यमात्रादेकीभवन्तीत्यादेः । कथं तर्हि 'यत्र' इत्यादि भूमलक्षणमुच्यत इत्यत आह— **अत इति** । सविचार-निर्णयविरोधादेव विद्यमानस्याप्यन्यस्य भगवदधीनसत्तादिवाचि । इतश्चैवमित्याह— **अन्यथेति** । यद्यन्यदेव न स्यात्, तर्हि कथमीश्वरस्य सर्वेश्वरत्व-सार्वज्ञादिकं श्रुत्यादिसिद्धं स्यात् । मायामयमेव तच्छ्रुत्यादावुच्यत इत्यत आह— **न चेति** । बाधकान्तरमाह— **अन्यथेति** । यदि भूमाऽद्वितीयः स्यात् तर्हि कथं तज्ज्ञानान्मुक्तस्य, ''स एकधा'' इत्यादि भेदेनावस्थानं श्रुतिर्ब्रूयात् । न तद्भूमज्ञानफलम् । किन्तु सगुणविद्योपासनफलमित्यत उक्तम्— **तत्रैवेति** । भूमप्रकरण एव ।

*भा०दी०*— **उपपादनेति** । उपाधिनाशो नाशाच्चेत्यादिनोक्तरीत्येति भावः । **स्मृतिरिति** । इदं ज्ञानमिति श्रुतिरुदाहृतेत्यर्थः । **उभयत्रेति** । दृष्टान्ते दार्ष्टान्तिके चेत्यर्थः । 'एवं मुनेर्विजानत आत्मा भवति गौतमे'ति तादृगेवेति भाष्योक्तवाक्यस्य शेषः । यथा नद्य इत्यस्य तु समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति समुद्र एव भवतीति शेषः । बहवः पुरुषा इति सविचारनिर्णयेन संसारे भेद-सिद्धावपि मुक्तौ किमायातमित्यत आह **न हि भिन्नयोरिति** । यो वै भूमा तत्सुखमिति पूर्वशेषे प्रकृतत्वादाह **यत्रेत्यादिभूमलक्षणमिति** ।

*भा०र०*— **उपपादनसापेक्षमिति** । "उपाधिनाशः" इत्यादिना उपपादितत्वं व्याख्याना-नुसारेण द्रष्टव्यमिति भावः । ननु नारददृष्टानां मुक्तत्वमेव कुतः ? येन त इति तेषां परामर्शो युक्तः स्यादित्याशङ्क्य मोक्षधर्मे तद्दृष्टेषु "गतसर्वपापाः" इति विशेषणप्रयोगादिति भावेन त इत्यनूद्य तदर्थमाह **ते निवृत्तेति** । ननु नारदस्य मुक्तौ भेदप्रत्यक्षमस्तीत्येतत् कुतोऽवगन्तव्यमित्यत आह **एतच्चेति** । तथा हि मोक्षधर्मे श्रीभीष्मः "प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः । ददर्श तानेव नराञ्श्वेतांश्चन्द्रप्रभाञ्शुभान्" इति मुक्तान् दृष्ट्वा स्तुत्वा देवं च ददर्शेत्याह । "एवं स्तुतस्स भगवान् गुह्यैस्तस्योच्चनामभिः । तं मुनिं दर्शयामास नारदं विश्वरूपधृक्" इत्यादि । तथा तत्रैव "अनि-न्द्रियाश्चानशनाश्च तत्र निष्पन्दहीनाः सुसुगन्धिनस्ते । श्वेताः पुमांसो गतसर्वपापाश्चक्षुर्मुषः पापकृतां नराणाम्", "जिह्वाभिर्ये विश्वं वक्त्रं लेलिह्यन्ते सूर्यप्रख्यम् । भक्त्या देवम्" इति । अत्र नारदः श्वेतद्वीपदर्शनानन्तरं तत्र परमात्मानं भक्त्या श्रद्धादिभिः स्तुवतोऽनेकविशेषणयुक्तान्मुक्तांश्च ददर्शे-त्युच्यते । तेन मुक्ता भगवद्भिन्नत्वेन नारदेन दृष्टा इति गम्यते । न हि भेदाभावे देवं भक्त्या लेलिह्यन्त इत्युक्तस्तुतिरुपपन्नेति भावः । स्मृतिः "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" इति स्मृतिः । "स एकधा भवति स त्रिधा भवति" इत्यादिभूमोपासकस्य मुक्तावैश्वर्यम् । आदिशब्देन "सर्वान् कामानाप्त्वाऽमृतः समभवत् । कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिश्रुतिपरिग्रह इति प्राचीनटीका । निर्णयः मुक्तौ भगवतो भिन्ना मुक्ता इति निर्णयः । किं बलवत्त्वेनेत्यत आह **बलवद्विरोधेनेति** । बलवत्त्वादेः प्रकृतस्य परामर्शे प्रकृतानन्वयाद् बुद्धिस्थमुक्तभेदपरामर्श इत्याह **अत्र भेदपक्ष इति** । ननु 'युक्तिमताम्' इति बहुवचनाद् भेदश्रुतीनां बहुत्वेन प्राबल्यमभिप्रेतम् । तच्च न वाक्यबाहुल्येन । भेदश्रुतीनामपि बाहुल्येनाप्राबल्यनिर्णयायोगात् । किन्तु भेदग्राहिप्रमाणान्तरसाहित्येन । न च युक्ति-साहित्यमात्रोक्तौ बहुत्वं सिद्ध्यतीत्यत आह **उपलक्षणमेतदिति** । युक्तिसाहित्यवर्णनमित्यर्थः । प्राबल्यं युक्तिसाहित्येनेव प्रत्यक्षसाहित्येनापि ज्ञातव्यमिति भावेनाह **उपलक्षणमिति** । इति वा । मुक्तानां जगद्व्यापाराराहित्यं ब्रह्मसारूप्यम् "आसं दुःखी नाऽसम्" इतीश्वरज्ञानान्यथानुपपत्तिः प्रति-

बिम्बानामुपाधिनाशेऽपि ब्रह्मैक्यादर्शनं स्वरूपानाशश्च उपाधिनित्यत्वमित्याद्या अभेदबाधिका भेद-साधिकाश्च आदिशब्दोक्ता युक्तय इति प्राचीनटीका । **इत्यस्य** एकीभावप्रतिपादकवाक्यस्य । वाक्यगतिकथनप्रस्तावे अर्थयोस्साम्यकथनमसङ्गतमित्यत आह **उभयत्रेति** । भाष्ये ''जलैकीभाव-वदेकीभावः'' इति दृष्टान्ते दार्ष्टान्तिके चेत्यर्थः । अनेन का गतिरुक्तेत्यत आह **स्थानैक्येति** । यथा जलं जलेनैकीभूतमिति वाक्यम् एकस्थानस्थितत्वनिमित्तकम् एवं ''परेऽव्यये सर्व एकीभवन्ति'' इति मुक्तानां भगवदैक्यमपि क्षीराब्ध्यादिरूपैकस्थानस्थितिनिबन्धनम् । ''सायं गोष्ठे गाव एकीभवन्ति'' इत्यत्र स्थानैक्यस्य स्थानिषु प्रयोगदर्शनादिति भावः । लौकिकदृष्टान्तोक्तितात्पर्यमाह **इयं चेति** । **गतिः** गमनिका । ''तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम'' इति काठके । ''यथा नद्यः स्यन्दमानाः समुद्रायणास्समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय । तथा विद्वान्नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्'' इत्यादावैक्यवाक्यस्यान्यार्थत्वमेवेत्येतद् ''उक्तं च'' इति भाष्यार्थः । **अनुपलम्भस्येति** । ''नास्त्येव समुद्रे वृद्धिरनुपलम्भात्'' इति पूर्ववाद्युक्तहेतोरित्यर्थः । ''कौर्मे च'' इत्यनन्तरं शेषोक्तिः **वचनादिति** ॥ जलभेददर्शनमसिद्धमित्याशङ्क्य आह **भेदादर्शन इति** । प्राचीनटीकायां तु ''महापोऽपि परस्परमेकीभूय पुनर्वियुज्य समुद्रं गच्छन्ति न केवलं पुनर्विश्लेषात् पूर्वं भेदानुमानम् । किन्तु तदाऽपि भेदं पश्यन्ति केचिदित्याह **समर्थानामिति** । इति वाक्यभेदेन व्याख्यातम् । **इतश्च** अपवादरूपत्वाच्च । निषेधस्य प्राप्त्यपेक्षया बलवत्त्वादिति भावः । लिङ्गशरीरादिविनिर्मुक्तत्वं प्रतीयमानं प्रकृतासङ्गतमित्यतस्तद् व्याचष्टे **सर्वोत्तमत्वमिति** । अभेदे कैवल्यस्यापि प्राप्तव्यत्वेन ''नैव प्राप्नुवन्ति'' इति निषेधायोग इति भावः । केचित्तु, ''मुक्तिः कैवल्यनिर्वाण'' इत्यमरोक्तेः कैवल्यं मोक्षः । न च ब्रह्मादयो मोक्षं न प्राप्नुवन्तीति युक्तम् । तन्मोक्षस्य प्रमितत्वात् । न च ''ते पदम्'' इति विशेषणादीश्वरस्वरूपभूतं मोक्षं न प्राप्नुवन्तीत्यर्थ इति वाच्यम् । न प्राप्नुवन्तीत्यत्र पदं हीत्यस्य हेतुत्वेन विशेषणत्वाभावादित्यत आह **सर्वोत्तम-त्वमिति** । तथाऽपि कथमभेदनिषेधात्मकत्वलाभः । इत्थम् । भेदो नाम तादात्म्यम् । तच्च प्रति-योगितावच्छेदको धर्म इति पदार्थविदः । तथा च ब्रह्मादय ईश्वरो नेति प्रतीयमाने भेदे सर्वोत्तमत्व-रूपेश्वरत्वस्य प्रतियोगितावच्छेदकत्वात् तन्निषेधे अभेदनिषेध एव कृतो भवतीति व्याचक्षते । **इतोऽपि** निरवकाशत्वादपि । विचारशब्दस्य जिज्ञासासूत्रादौ निर्णयार्थत्वाभ्युपगमात्, ''सनिर्णयो निर्णयः'' इत्यनन्वितमित्यतो विचारनिर्णयशब्दार्थौ विवक्षितावाह **पूर्वोत्तरेति** । निर्णयोऽत्रावधारण-मिति वक्तव्येऽपि प्रकृताभिप्रायेण जीवेशभेदेत्युक्तम् । मननापरनामकयुक्त्यनुसन्धानजनितार्थनिर्धा-रणमित्यर्थः । 'इत्यादिना' इत्यादिशब्देन ''उताहो एक एव तु । को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तु-

मर्हति । वैशम्पायन उवाच— नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह । बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्" इति वचनं गृह्यते । तत्र हि "बहवः पुरुषाः ब्रह्मन्नुताहो एक एव तु" । यदि बहवस्तर्हि "को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति" इति जनमेजयप्रश्ने "नैतदिच्छन्ति पुरुषमेकम्" इति पुरुषैक्यपक्षं प्रतिक्षिप्य बहुत्वपक्षमङ्गीकृत्य सकल-पुरुषकारणस्य पूर्णस्य गुणाधिकस्य श्रेष्ठपुरुषस्य वैशम्पायनेन प्रतिज्ञापूर्वं भेदो निर्धारित इति भावः । ननु "बहवः पुरुषाः" इत्यादेः संसार एव भेदप्रतिपादकत्वान्मुक्तौ किमायातमित्यत आह **न हि भिन्नयोरिति** । **किमिति** भेद इवाभेदेऽपि "परेऽव्यये" इत्यादिवाक्यसत्त्वात् कथं निर्णय इति चोद्ये किमुत्तरमित्यर्थः । **इति सम्बन्ध इति** । "सविचारो निर्णयश्च वाक्यमात्राद् बलवान्" इति भाष्यं योजनीयमित्यर्थः ।

यद्येवं भेदपक्षस्य बलवत्त्वान्मुक्तस्य ब्रह्मभेद इष्यते तर्हि "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा" इति छान्दोग्ये तुरीयावस्थायां स्वभिन्नस्याभावादेव खल्वन्यदर्शन-श्रवणाद्यभाव आवेद्यते ब्रह्मभावमापन्नस्य मुक्तस्य । तदिदमद्वितीयत्वं यन्निर्गुणब्रह्मलक्षणं तत् कथमुपपन्नम् ? मुक्तजीवेन सद्वितीयत्वप्राप्त्याऽसम्भवप्रसङ्गादिति भावेन शङ्कते **कथं तर्हीति** । भाष्यगतातश्शब्दार्थमाह **सविचारेति** । अन्यस्यैवाभावात् कस्य भगवदधीनसत्तादि स्यादित्यत उक्तं **विद्यमानस्यापीति** । सविचारनिर्णयावसरे ब्रह्मभिन्नबहुजीवानां सद्भावावेदनेन "यदधीनं विना नान्यत् किञ्चिदस्ति कथञ्चन । स भूमोक्तोऽभिपूर्णत्वात्" इति प्रमाणेनैवं श्रुतिर्व्याख्यातेति । यत्र यस्मिन् वस्तुनि ज्ञाते अन्यत् स्वातन्त्र्येण न पश्यति । किन्तु भगवदधीनमेव विद्यमानं चेतनजातमिति पश्यतीत्यादिरूपेण भगवदधीनसत्त्वादियोगित्वं "यत्र नान्यत्" इति वाक्यं वक्तीत्येव व्याख्यानं युक्तमित्यर्थः । 'इतश्च' इति चशब्दो 'अतः' इति पूर्वहेतुसमुच्चयार्थः । एवं स्वतन्त्रमन्यन्नास्तीत्येत-दर्थकमित्येवं वाक्यं व्याख्येयमिति योज्यम् । **अन्यदेव** ईशितव्यज्ञेयादिकमेव । **तर्हि कथमिति** । ईशितव्याभावे ईश्वरत्वस्य ज्ञेयाद्यभावे ज्ञातृत्वादेश्चायोगादिति भावः । **तत्** सर्वेश्वरत्वादि । 'इत्युक्तम्' इति भाष्ये "न च माययैकम्" इत्यादाविति शेषः । अन्यथेत्येतद् विवृणोति **यदीति** । **स एकधे-त्यादीति** । "स एकधा भवति स त्रिधा भवति" इत्यादौ मुक्तस्य नानाभावेन भोग उच्यते । स च न ब्रह्माभेदेन निर्वाह्यः । भूमज्ञानी भूमैव संवृत इति श्रवणापातात् । नापि विशेषबलेन । निर्विशेषब्रह्मवादिमते विशेषेण तन्निर्वाह इत्यस्य व्याहतत्वात् । किन्तु ब्रह्मभेदमङ्गीकृत्य ब्रह्मप्रसादा-यत्तविचित्रशक्तिशब्दितविशेषबलेन नानाभावेन भोगनिर्वाहः कर्तव्य इति भेदेनावस्थानं श्रुति-स्तात्पर्यतः कथं ब्रूयादित्यर्थः । **तत्** भेदेनावस्थानम् । **भूमप्रकरण एवेति** । "यत्र नान्यत् पश्यति"

इत्यादिखण्डद्वयेन भग्नो महिमानमुक्त्वा तज्ज्ञानिनः "तस्य ह वा एतस्य एवंविदः" इति प्राणादि-प्राप्तिरूपं फलमुक्त्वा तत्र "तदेष श्लोकः" इति सम्मतिं चोक्त्वा पुनर्भूमज्ञानिन एव "स एकधा" इत्यादिफलम् उच्यते । न ह्यत्र प्रकरणे सगुणवार्ताऽस्तीति भावः ।

भाष्यम्

**न च 'न ह वै सशरीरस्य' इत्यादिविरोधः । वैलक्षण्यात् तच्छरीराणाम् । अभौतिकानि हि तानि नित्योपाधिविनिर्मितानीश्वरशक्त्या । तथा चोक्तम्— 'शरीरं जायते तेषां षोडश्या कलयैव तु ।' इत्यादि नारायणाष्टाक्षरकल्पे । वदन्ति च लौकिकाद्वैलक्षण्येऽभावशब्दं 'अप्रहर्षमनानन्दं' 'सुखदुःखबाह्यः' इत्यादिषु । निरुक्त्यभावाच्च न तानि शरीराणि । तथाहि श्रुतिः 'अशारीर्तीं' तच्छरीरमभवत् इति । न हि तानि शीर्णानि भवन्ति । 'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इत्यादिवचनात् । साम्यात् प्रयोगः । प्रयोगाच्च— 'अनिन्द्रिया अनाहारा अनि-ष्पन्दास्सुगन्धिनः' 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्' इत्यादि दृष्टदेहेष्वेव ।**

***प०टी०***— ननु कथं नारदादिदृष्टाः सशरीरा मुक्ताः ? 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति इति श्रुतिविरोधापातादित्यत आह **न चेति** । प्रियाद्यप्रायिकशरीरत्वात् न विरोध इत्यर्थः । किं तद्वैलक्षण्यम् ? इत्यतस्तदाह **अभौतिकानीति** । ननु मुक्तानां शरीरत्वे कथं 'अशरीरं वाव सन्तम्' इति श्रुतिः ? इत्यत आह **वदन्ति चेति** । इतश्चाशरीरत्वोक्तिर्युक्तेत्याह **निरुक्तीति** । का सा शरीरशब्दनिरुक्तिः ? इत्यत आह **तथा हीति** । सा च कथं तत्र न वर्तते ? इत्यत आह **न हीति** । कथं तर्हि तच्छरीरे 'शरीरं जायते तेषाम्' इति प्रयोगः ? इत्यत आह **साम्यादिति** । करचरणादिमत्वसादृश्यादित्यर्थः । कुत एवमशरीरत्वश्रुतेरन्यार्थकल्पना ? इत्यत आह **प्रयोगाच्चेति** । अस्तु तर्हीयं श्वेतद्वीपप्राप्तिः सगुणमुक्तिः ।

***न०टी०***— ननु नारददृष्टा 'स एकधा' इत्यादि प्रतिशाखमुच्यमानाश्च सशरीराः । सशरीराणां च 'न ह वै सशरीरस्य' इत्यादिना प्रियाप्रियानपहत्युक्तेः संसारित्वम् । अतो न किञ्चिन्मुक्तभेदे प्रमाणमित्यत आह **न चेति** । किं तद्वैलक्षण्यम् ? येनाप्रियायोगः सर्वथेत्यत आह **अभौतिका-नीति** । तत्र प्रमाणमाह **तथा चेति** । चशब्दात् 'अन्यं नवतरं कल्याणतरं रूपं कुरुते' इति श्रुतावप्युक्तमिति सूचयति । अवश्यजीवरूपचिद्रूपोपाधिरेव षोडशी कलोच्यते । ननु मुक्तानामपि

देहवत्त्वे 'अशरीरं वाव सन्तम्' इति कथं तदभावोक्तिः ? इत्यत आह **वदन्ति चेति** । न केवलं लौकिकशरीरवैलक्षण्यादशरीरत्वं मुक्तशरीराणाम् । किन्तु 'शीर्यत इति शरीरम्' इति वेदोक्तनिरुक्त्यभावाच्चेत्याह **निरुक्त्यभावादिति** । 'विमतं शीर्यं स्यात् करचरणादिमत्त्वात्, सम्मतवत्' इत्यनुमानं त्वागमविरुद्धमित्याह **न हीति** । ननु मुक्तस्वरूपस्य ज्ञानानन्दादिलक्षणस्याभौतिकत्वेन लौकिकशरीरवैलक्षण्यात्, निरुक्त्यभावाच्च, कथं तत्र शरीरशब्दप्रयोगः ? इत्याशङ्क्य, करचरणादिमत्वसादृश्याद्युज्यत इत्याह **साम्यादिति** । इतोऽपि न 'शरीरं वाव' इत्यादिश्रुतिर्मुक्तानां करचरणाद्यभावमाचष्टे । नारदैकतादिभिः (?) दृष्टदेहेष्वेव तेष्वशरीरशब्दप्रयोगदर्शनादित्याह **प्रयोगाच्चेति** ।

*प्र०दी०*— ननु नारदेन ये श्वेतद्वीपे भगवतो भिन्ना दृष्टास्ते मुक्ता एव न भवन्ति । सशरीरत्वात् । सशरीराणामपि मुक्तत्वाङ्गीकारे "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इत्यादि श्रुतिविरोध इत्यत आह— **न चेति** । कुतो नेत्यत आह— **वैलक्षण्यादिति** । किं तदस्मदादिशरीरेभ्यस्तेषां वैलक्षण्यमित्यत आह— **अभौतिकानीति** । अजडानीत्यर्थः । तर्हि किमात्मकानीत्यत आह— **नित्येति** । विकारित्वाद्विनाशः स्यादित्यत उक्तम् । **ईश्वरशक्त्येति** । कुत एतदित्यत आह— **तथा चेति** । नित्योपाधिरेव षोडशी कला । एतदुक्तं भवति । यच्छ्रुतौ सशरीरस्य दुःखानपहतिवचनं तत्कर्माधीनजडशरीराभिप्रायम् । श्वेतद्वीपे नारदेन दृष्टानि तु शरीराणि चिन्मयानि । जडान्यपि न कर्माधीनानि । अतो न दुःखकारणानि । तथा च न तेषां सशरीराणामपि मुक्तत्वे श्रुतिविरोध इति । यदि मुक्ताः सशरीरास्तर्हि कथं तेषु "अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः ।" इति शरीराभाववचनमित्यत आह— **वदन्ति चेति** । लौकिकाद्वैलक्षण्ये सति । तद्वदत्रापीति शेषः । इतश्चाशरीरत्वोक्तिर्युक्तेत्याह— **निरुक्तीति** । निरुक्तिलभ्यार्थस्य तत्राभावादित्यर्थः । कोऽसौ निरुक्तिरित्यतः प्रक्रियासम्पादनगौरवपरिहाराय श्रुतिमेव तत्परां दर्शयति— **तथा हीति** । अशारि शीर्णमभवत् । इति हेतोः तच्छरीरशब्दमभवदित्यर्थः । कथं निरुक्तिलभ्योऽर्थः तेषु नास्तीत्यत आह— **न हीति** । एवं तर्हि कथं तेषु "शरीरं जायते तेषां" इति शरीरशब्दप्रयोग इत्यत आह— **साम्यादिति** । अस्मदादिशरीरैः करचरणादिमत्त्वसाम्याद्गौण इत्यर्थः । कुतोऽयमशरीरशब्दस्याभिप्रायः । सर्वथा विग्रहराहित्यमेव किं न स्यादित्यत आह— **प्रयोगाच्चेति** । नारदादिभिः दृष्टदेहेष्वेव मुक्तेषु एतद्वाक्यद्वये देहाभावप्रयोगान्यथानुपपत्त्याऽयमर्थः सिद्धो न केवलं सम्भावनामात्रेणेति चार्थः । इत्यादीति क्रियाविशेषणं 'प्रयोगात्' इत्यनेन सम्बध्यते ।

*भा०दी०*— **मुक्तत्वे श्रुतिविरोध इति** । न ह वै स शरीरस्येति श्रुतिविरोधो नेत्यर्थः । का निरुक्तिरिति निरुक्तिलक्ष्योऽर्थकः इत्यर्थः । **प्रक्रियासंवादेनेति** । श्रञ्हिंसायामित्यतः कर्मणि ईरूप्रत्यये गुणे च शरीरमिति या व्याकरणप्रक्रिया तत्संवादेन गौरवपरिहारायेत्यर्थः । तत्परां शरीर-शब्दनिर्वचनपरामित्यर्थः । श्रुत्युक्तौ तां प्रक्रियां स्वयमेवोहयिष्यतीति व्याकरणोक्तप्रक्रियासंवाद-प्रदर्शनगौरवं नाश्रयणीयमित्यर्थः । शरीरशब्दमिति बहुव्रीहिः । अनिन्द्रिया इति देहेन्द्रिये चेति भिन्न-वाक्यमिति भावेनोक्तमेतद्वाक्यद्वयं प्रयोगाच्चेति चशब्दार्थं व्यनक्ति **देहाभावेत्यादिना** । न तदा मुच्यन्त इति पदविभाग इति ।

*भा०र०*— "दृष्टाश्च ते भागवतो भिन्ना नारदेन" इत्युक्तमाक्षिपति **नन्विति** । **सशरीर-त्वादिति** । अन्यथा दर्शनमेव न स्यादिति भावः । सशरीरत्वहेतोरप्रयोजकत्वमाशङ्क्याऽह **सशरी-राणामपीति** । **श्रुतिविरोध इति** । प्रियाप्रियोपहतस्य च मुक्तत्वं व्याहतमित्यर्थः । भौतिक-त्वाभावेऽपि प्राकृतत्वं किं न स्यादित्यत आह **अजडानीति** । **ईश्वरशक्त्येतीति** । नित्योपाधि-विनिर्मितत्वेन विकारित्वेऽपि ईश्वराचिन्त्यशक्त्या विनाशाभाव इति भाष्याभिसन्धिरिति भावः । अत्रायमभियुक्तानां पन्थाः । प्राङ्मुक्तौ चाणुस्वरूपस्यापि जीवस्य मुक्तौ महत्त्वेन निर्मितत्वं "नित्योपाधिविनिर्मितानि" इति भाष्येणोच्यते । तत्र च "शरीरं जायते तेषाम्" इति वाक्यं प्रमाणम् । निराकारस्य जीवस्य शरीराकारेण निर्माणमत्रोच्यत इत्यस्तु । महत्त्वेन निर्मितत्वं तु कुत इति चेन्न । "अकृत्रिमत्वात् तस्य देहस्यानपगमात्" इति न्यायविवरणरीत्या प्रागपि देहाकार-स्यावश्यवक्तव्यत्वात् । "अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत्तेजः करोति भगवान् महत्" इति बृहद्भाष्यस्थस्पष्टप्रमाणसद्भावाच्च । अत्र च "सुमहत्तेजः" इति तेजसा महत्त्वमुक्त्वा पुनर्महदित्युक्त्या परिमाणतोऽपि महत्त्वमगम्यत इति । ननु भाष्यप्रमाणयोर्विसंवादः । यतो मुक्तशरीरं भाष्ये नित्योपाधिना विनिर्मितमुच्यते । प्रमाणे तु षोडश्या कलया निर्मितमितीत्यत आह **नित्यो-पाधिरेवेति** । "आत्मैवास्य षोडशी कला" इति बृहदारण्योक्तेर्जीवस्वरूपमेवेत्यर्थः । कथमनेन "ननु नारदेन" इत्यादिना कृतचोद्यस्य परिहार इत्यतो भावमाह **एतदुक्तं भवतीति** । "लौकिक-वैलक्षण्ये" इति भाष्यं कर्मधारयभ्रमं वारयन् सोपस्करं व्याख्याति **लौकिकादित्यादि** । ननु शब्द-धर्मस्य निरुक्तेः प्रसिद्धशरीरेष्वप्यभावात् किं विशिष्याभिधीयते मुक्तशरीरेषु निरुक्त्यभावान्न तानि शरीराणीति ? इत्यत आह **निरुक्तीति** ॥ निरुक्तिलभ्योऽर्थः शीर्णत्वम् । **प्रक्रियेति** । शॄ हिंसाया-मिति धातोरौणादिके ईरन्प्रत्यये गुणे रपरे शरीरशब्दनिष्पत्तिरिति प्रक्रियेत्यर्थः । **तत्परां** शरीरशब्द-निरुक्तिपराम् । शरीरशब्दमिति बहुव्रीहिः । शरीरशब्दवाच्यमित्यर्थः । **अशरीरशब्दस्य** "अशरीरं

वाव सन्तम्'' इति श्रुतिगताशरीरशब्दस्य । 'दृष्टदेहेषु' इति भाष्यं दर्शनकर्तृसापेक्षमिति तानाह **नारदादिभिरिति** । **एतद्वाक्यद्वये** 'अनिन्द्रियाः', 'देहेन्द्रियासु' इति वाक्यद्वये । प्रथमवाक्येऽपि इन्द्रियाद्यभावस्य देहाभावव्याप्तत्वात् तदभावेन देहाभावानुमानाद् देहाभावप्रतिपादकता ज्ञेया । **अन्यथानुपपत्त्येति** । अनेन 'दृष्टदेहेषु' इति देहविषयकप्रत्यक्षमुक्त्वा 'प्रयोगात्' इत्यनेन देहाभाव-प्रमाणोक्तेर्व्याघात इति न शङ्कनीयम् । प्रमाणद्वयविरोधरूपार्थापत्त्यभिधाने तात्पर्यादित्युक्तं भवति । चशब्दार्थः **न केवलमिति** । क्रियाविशेषणमित्युक्तक्रियां दर्शयन्नाह **प्रयोगादित्यनेनेति** ।

**भाष्यम्**

**न चैषाऽन्या गौणी मुक्तिः ।**

**'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।**
**योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः'**

**इत्यादित्यपुराणे तदन्यमुक्तिनिषेधात् । ये त्वत्रैव भगवन्तं प्रविशन्ति तेऽपि पश्चात् तत्रैव यान्ति । योग्यत्वं चात्र विवक्षितम् । युधिष्ठिरप्रश्न इतरनिन्दनात् च । सायुज्यं च ग्रहवत् । तदुक्तेश्च—**

**'भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः ।**
**तथा मुक्तावुत्तमायां बाह्यान् भोगांस्तु भुञ्जते ॥'**

**इति नारायणाष्टाक्षरकल्पे । अतोऽनिष्टस्यैव मोक्षः ।**

***प०टी०***— निर्गुणमुक्तौ न देहादीत्यत आह **न चेति** । केषाञ्चिदत्रैव भगवत्प्रवेशोक्तेः कथम् ? इत्यत आह **ये त्विति** । 'केचिदत्रैव मुच्यन्ते' इति स्मृतिविरोधो 'बहुनाऽत्र' इत्यस्येत्यत आह **योग्यत्वं चेति** । सर्वेषां श्वेतद्वीपगमनमस्त्येव । तत्र स्थित्यादौ योग्यताभेदो विवक्षित इत्यविरोधः । इतश्च न निर्गुणमुक्तिर्नामास्तीत्याह **युधिष्ठिरेति** । ननु सायुज्यमुक्तौ भेदाभावात् सैव निर्गुणेत्यतः सप्रमाणं दूषयति **सायुज्यं चेति** । सुकृतमपि इत्याद्युक्तमुपसंहरति **अत इति** ।

***न०टी०***— ननु या श्वेतद्वीपवासिनां भिन्नत्वेन दृष्टानां मुक्तिः सा गौणी मुख्यमुक्तेरन्या । मुख्यायां तु मुक्तौ सायुज्यलक्षणायां न भेद इत्याशङ्क्य, आदित्यपुराणे तदन्यमुक्तिनिषेधात् सैव सायुज्यलक्षणमुक्तिरिति भावेनाह **न चेति** । ननु जयादीनामत्रैव भगवत्प्रवेशोक्तेः, कथं श्वेतद्वीपगमनं

विना न मुक्तिः ? इत्यत आह **ये त्विति**। ननु तथाऽपि केचिदत्रैव मुच्यन्ते' इत्याद्युक्तेः कथं सर्वेषां तद्गमनं विना न मुक्तिरित्यत आह **योग्यत्वं चेति**। महाज्ञाना हि तद्योग्याः। तेषामेव तद्गमनं विना न मुक्तिरिति भावः। न च ब्रह्मणैकत्वमेव सायुज्यम्। विरुद्धगुणयोरेकत्वायोगात्। न च तदर्थत्वेन ज्ञानादिसर्वगुणाभावो ब्रह्मणः कल्प्यः। तथाविधैक्यस्य युधिष्ठिरकृतप्रश्ने 'मग्नस्य हि' इत्यादिना निन्दितत्वादित्याह **युधिष्ठिरेति**। ननु 'सारूप्यैकत्वमित्युत' इत्यादावेकत्वशब्देन सायुज्योक्तेः कथं भेदसायुज्यम् ? इत्याशङ्क्य भेद एव सायुज्यं सदृष्टान्तं सप्रमाणकमाह **सायुज्यं चेति**। अतः स्वरूपभेदे विद्यमानेऽप्येकत्वशब्दो न विरुद्धः। बाह्यानपि कांश्चिद्विनेत्यभिप्रायः। उभयथा श्रुतिरप्यनिष्टविषया इत्याद्युक्तमुपसंहरति **अत इति**।

*प्र०दी०*— सन्तु नारदेन दृष्टाः श्वेतद्वीपवासिनो मुक्ताः। तथाऽपि नास्माकं प्रत्यक्षविरोधः। यत एषा श्वेतद्वीपप्राप्तिरूपा निर्गुणमुक्तेरन्या गौणी मुक्तिः। निर्गुणायामेव तु मुक्तौ वयमैक्यं ब्रूम इत्यत आह— **न चेति**। श्वेतद्वीपप्राप्तिव्यतिरिक्तमुक्तिनिषेधादियमेव मुक्तिरित्यर्थः। ननु शिशुपालादयः श्वेतद्वीपगमनेन विनाऽत्रैव भगवन्तं प्रविश्य मुच्यन्ते। तत्कथमेतदित्यत आह— **ये त्विति**। ते न तदा मुच्यन्त इति शेषः। तर्हि कदेत्यत आह— **तेऽपीति**। ततो मुच्यन्त इति शेषः। ननु 'केचिदत्रैव मुच्यन्ते' इत्याद्युक्त्वा 'महाज्ञाना गच्छन्ति क्षीरसागरं' इति महायोग्यतावतामेव श्वेतद्वीपगमनोक्तेः, कथमयं नियम इत्यत आह— **योग्यत्वं चेति**। अत्र निवास इति शेषः। अस्ति सर्वेषां श्वेतद्वीपप्राप्तिः। महाज्ञानत्वलक्षणं योग्यत्वं त्वत्र निवासे विवक्षितमित्यर्थः। नन्विदं वाक्यं श्वेतद्वीपप्राप्तिं विना सगुणमुक्तिः नास्तीत्येतत्परम्। निर्गुणमुक्तिस्त्वन्याऽस्तीत्यत आह— **युधिष्ठिरेति**। सायुज्यं तावत्प्रसिद्धम्। सैव निर्गुणमुक्तिः। तत्रात्मनो ब्रह्मणैकत्वमित्यत आह— **सायुज्यं चेति**। यथा ग्रहस्य पुरुषान्तरं प्रविश्य भोगः, तथा मुक्तस्येश्वरं प्रविश्य भोग एव सायुज्यम्। न त्वैक्यमित्यर्थः। कुत एतत्। सायुज्यशब्दसामर्थ्यादागमवाक्याच्चेत्याह— **तदुक्तेश्च इति**। उत्तमायां मुक्तौ सायुज्यलक्षणायाम्। ईश्वरं प्रविश्येति शेषः। ईश्वरानन्दादिष्वुदासाय **बाह्यानिति**। बाह्येष्वपि विभागो वचनान्तरादवसेयः। 'सुकृतमप्यप्रियं' इत्यादिनोक्तमर्थमुपसंहरति— **अत इति**।

*भा०दी०*— **क्षीरसागरमिति**। सूत्रभाष्योक्तगारुडवचन इति योज्यम्। युधिष्ठिरेतीति मग्नस्य हि परे ज्ञान इति पूर्वोक्तदिशा ब्रह्मैकीभावरूपमुक्ते निन्दनाच्चेत्यर्थ इति व्यक्तत्वान्न व्याख्या कृता। **सायुज्यशब्देति**। सयुजां भावः सायुज्यमिति भेदाक्षेपकसंयुक्तत्वार्थकशब्दशक्तिबलादित्यर्थः।

**वचनान्तरादिति** । सयुजः परमात्मानं प्रविश्य च बहिर्गताः । तद्रूपान् प्राकृतांश्चापि विना भोगांस्तु कांश्चन भुञ्जत इत्यादि वचनान्तरादित्यर्थः ।

*भा०र०*— "दृष्टाश्च ते भगवतो भिन्ना नारदेन" इति योऽयं भेदग्राहिनारदप्रत्यक्षविरोध प्रागभिहितस्तमाक्षेप्तुं शङ्कते **सन्त्विति** । एषेत्यनूद्यार्थमाह **एषेति** । अन्येत्यत्र प्रतियोग्याकाङ्क्षां पूरयति **निर्गुणमुक्तेरिति** । तदन्यशब्दार्थमाह **श्वेतद्वीपप्राप्तिव्यतिरिक्तेति** । **इयमेव** श्वेतद्वीपप्राप्तिरेव । **अत्रैव** राजसूययागादावेव । "चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत्" इति भागवतवचनादाह **भगवन्तं प्रविश्येति** । "दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः" इति वचनादुक्तं **मुच्यन्त इति** । **एतत्** श्वेतद्वीपप्राप्तिरेव मुक्तिरित्येतत् । त इति भाष्यपदमत्रापि संयोज्य तत्र प्रकृतोपयोगाय शेषमाह **मुच्यन्त इति शेष इति** । **तर्हि** तदा न मुच्यन्ते चेत् । ततः श्वेतद्वीपप्राप्त्यनन्तरम् । श्वेतद्वीपप्राप्त्यनन्तरमेव लिङ्गशरीरभङ्गलक्षणो मोक्षः । तत्पूर्वं तु शिशुपालादीनां भगवद्देहप्रवेशमात्रमिति भावेन मुच्यन्त इत्युक्तमित्यभियुक्ताः ।

अन्ये तु, सर्वेऽपि लिङ्गभङ्गानन्तरं प्रलये भगवदुदरे स्थित्वा सृष्टिकाले श्वेतद्वीपाविर्भावे सति तत्रत्यं नारायणं दृष्ट्वा अनन्तरं मुच्यन्ते । इच्छारूपावरणान्मुक्ताः सन्तः सम्पूर्णानन्दात्मकतां प्राप्नुवन्ति । भगवद्देहप्रवेशसमनन्तरमेव लिङ्गभङ्गो भवति । श्वेतद्वीपप्राप्त्या तु आनन्दविशेषाभिव्यक्तिरिति "ततो मुच्यन्ते" इत्यस्यार्थ इत्याहुः । अत्र भगवद्देहप्रवेशसमनन्तरमेव लिङ्गभङ्गाङ्गीकारे "न तदा मुच्यन्ते" इति टीका "अन्येषामपि साक्षात्तु मुक्तिं प्राप्यापि तं हरिम् । सहैव ब्रह्मणा भूयादिति शास्त्रस्य निर्णयः" इत्यनुव्याख्यानं, तट्टीका "ब्रह्मणैव सह गतानां लिङ्गभङ्गलक्षणमुक्तिः" इति सुधा च कथमिति चिन्त्यम् । **केचिदत्रैवेति** । "आत्मेत्येव परं देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन । अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचन । केचित् स्वर्गे महर्लोके जने तपसि चापरे । केचित् सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम्" इति सूत्रभाष्ये महाज्ञानित्वलक्षणयोग्यताविशेषशालिनामेव श्वेतद्वीपगमनोक्तेः श्वेतद्वीपगमनं विना न मुक्तिरिति नियमो न युक्त इत्यर्थः । यदि "बहुनाऽत्र किमुक्तेन" इति वचनबलाच्छ्वेतद्वीपप्राप्तिरेव मुक्तिस्तदन्या तु मुक्तिरेव नेत्यभ्युपगमस्तर्हि 'केचिदत्रैव' इत्यादिना "इमामारभ्य सर्वत्र यावत् सुक्षीरसागरे । पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः" इति पृथ्वीमारभ्योक्तक्रमेण यावन्नारायणस्तावत् सर्वस्थानेष्वपि सालोक्यादिरूपो मोक्षोऽस्त्येव । ईश्वरस्य सर्वत्रावस्थितेरिति तद्वचन एव श्वेतद्वीपप्राप्तिव्यतिरिक्तमुक्तिकथनमयुक्तं स्यादिति दोषमुद्घाटयितुम् इत्याद्युक्तेत्युक्तम् । **अत्र** श्वेतद्वीपे । **निवास इतीति** ।

"अत्रैव च स्थितिस्तेषाम्" इति तत्र तत्र निवासस्यैव प्रस्तुतत्वादिति भावः । कथमयं नियम इति कृतचोद्यस्य कथमनेन परिहार इत्यतस्तं वक्तुमाह **अस्ति सर्वेषामिति** । पृथिव्यन्तरिक्षादिस्थानेषु सालोक्यादिमोक्षभाजामपीत्यर्थः । तथा च छान्दोग्यभाष्यम् "श्वेतद्वीपं ततो गत्वा दृष्ट्वा विष्णुं च ते ततः । अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु" इति । उक्तं च तत्त्वप्रकाशिकायां "सकृच्छ्वेतद्वीपगमनाभ्युपगमात्" इति । **महाज्ञानत्वलक्षणमिति** । किञ्चिदधिकमुहूर्तकाले यद्भगवद्रूपापरोक्षज्ञानं तद्वत्त्वरूपमित्यर्थः । तथा च एकादशस्कन्धतात्पर्ये "नित्यशो भगवद्रूपस्यापरोक्षेण दर्शनम् । मुहूर्तमात्रं ज्ञानं स्यान्महाज्ञानं ततोऽधिकम् । ज्ञानेन ब्रह्मलोकः स्यान्महाज्ञानाद्धरेर्गतिः" इति । हरेर्गतिः श्वेतद्वीपप्राप्तिरूपेत्यर्थः । चशब्दस्तुशब्दार्थ इति भावेन "योग्यत्वं तु" इत्युक्तम् । निवासकारणमिति शेषः । प्राचीनटीकायां तु "ननु जयादीनामत्रैव भगवत्प्रवेश उक्तः, कथं श्वेतद्वीपगमनं विना न मुक्तिरित्यत आह **ये त्विति** ॥ ननु तथाऽपि "केचिदत्रैव मुच्यन्ते" इत्याद्युक्तेः कथं सर्वेषां तद्गमनं विना न मुक्तिरित्यत आह **योग्यत्वं चेति** । महाज्ञाना हि तद्योग्याः । तेषामेव तद्गमनं विना न मुक्तिरिति भाव इति "ये तु" इत्यादिभाष्यं महाज्ञानानामेव श्वेतद्वीपगमनं नेतरेषाम्" इति व्याख्यातम् । "बहुनाऽत्र" इति वचने योगीति पदं च महाज्ञानपरमित्यभिसंहितमिति प्रतीयते । तत्रायं भावः । महाज्ञानानामेव श्वेतद्वीपगमनेन तत्र सायुज्यादिलक्षणमुक्तिः । इतरेषाम् "केचिदत्रैव मुच्यन्ते", "निर्दुःखास्तु धरादिषु" इत्यादिशास्त्रप्रतिपाद्यानां तु सकृच्छ्वेतद्वीपगमनं तद्गतभगवद्दर्शनं चानुमतमेवेति । तथा च तत्त्वप्रदीपिका 'केचिदत्रैव' इति श्लोकव्याख्यावसरे "सृष्टौ सकृच्छ्वेतद्वीपगमनात् परस्ताद् देशान्नोत्क्रामन्तीत्यर्थः । अन्यथा 'बहुनाऽत्र किमुक्तेन' इत्यादिवचनविरोधात्" इति । **इदं वाक्यं** 'बहुनाऽत्र' इति वाक्यम् । **विना** अन्यथा । 'युधिष्ठिरप्रश्ने' इति भाष्यस्य "आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ" इति विकल्प्य प्रश्नः कृतः । तत्र ज्ञानिनो यदि निर्गुणैकत्वलक्षणा मुक्तिरिष्यते तदैवं वाच्यम् । किं ते संसारेऽनुभूतं दुःखं स्मरन्त्युत नेति । तत्र आद्यं "मोक्षो दोषो महानेषः" इति दूषयित्वा द्वितीयोऽपि पूर्वानुभूतस्मरणाद्यभावे परे अज्ञाने मग्नस्य चेतनस्य दुःखतरं दुःखातिशयो न भवेत् किम् ? भवेदेवेति "मग्नस्य हि परेऽज्ञाने" इति दूषितः । तदेवं युधिष्ठिरेण प्रश्नसमये निर्गुणमुक्तिं प्रहस्य निन्दितत्वान्निर्गुणमुक्तिर्नास्तीत्यर्थ इति व्याख्यानं "मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेदित्यादिनिन्दनान्मोक्षधर्मे" इति पूर्वभाष्यव्याख्यानेन कृतप्रायत्वान्न कृतम् । प्रसिद्धं "नैकात्मतां मे" इत्यादौ । **सैव** सायुज्यमेव । विधेयापेक्षया स्त्रीलिङ्गम् । **तत्र** सायुज्ये । **आत्मनः** मुक्तजातस्य । **ब्रह्मणैकत्वं** निर्गुणब्रह्मैकीभावः । इति कथं निर्गुणमुक्त्यभाव इतीति शेषः । "तत्र तस्येव" इति वतिरिति भावेन तदर्थमाह **यथेति** ।

प्रमाणानुसारेणोत्तममुक्तिशब्देन योगशब्देन वा ग्रहणे सम्भवति यद् भाष्यकारः सायुज्यशब्देनैव तुरीयमुक्तिग्रहणं करोति तत्तात्पर्यं **सायुज्यशब्दसामर्थ्यादिति** । सह युञ्जन्तीति सयुजः । ''युजिर् योग'' इत्यस्मात् 'सत्सूद्विष' इत्यादिना क्विप् । सञ्ज्ञायां सहशब्दस्य सादेशः । सयुजां भावः सायुज्यमिति सायुज्यशब्दबलादीश्वरेण मुक्तस्य योगाविनाभूतभेद एव लभ्यते । न पुनरैक्यमिति भाव इत्याशयः । ननु जीवन्मुक्त्यपेक्षया सालोक्यादिमुक्तेरप्युत्तमत्वात् तत्र च ग्रहवद् भोगाभावादनन्वय इत्यतो व्याचष्टे **सायुज्यलक्षणायामिति** । निरुपचरितस्यैवोत्तममुक्तिशब्देन ग्रहणमुचितमिति भावः । **ईश्वरेति** । ईश्वरं प्रविश्य भोगान् भुञ्जत इत्युक्ते सन्निधानादीश्वरीयानन्दादिभोगः प्रतीयेत । सा च ''न तु विष्णुगुणान् सर्वे भुञ्जते ते कदाचन'' इत्यादिबहुमानविरुद्धेति 'बाह्यान्' इति भोगविशेषणमित्यर्थः । ननु जगद्व्यापारस्यापि बाह्यत्वान्मुक्तानां च 'जगद्व्यापारवर्जम्' इत्यधिकरणे तद्भोगाभावाभिधानाद् बाह्यानित्यनुपपन्नमित्यत आह **बाह्येष्वपीति** । ''सयुजः परमात्मानं प्रविश्य च बहिर्गताः । चिद्रूपान् प्राकृतांश्चापि विना भोगांस्तु बाह्यकान् । बाह्यभोगान् भुञ्जते च तारतम्येन कांश्चन'' इति सूत्रैतरेयभाष्योदाहृतवचनेन कांश्चन जगद्व्यापारादीन् विनेतरबाह्यभोगान् भुञ्जत इत्यर्थात् तद्बलाद् 'बाह्यान्' इत्यत्र न मुक्तस्य सर्वबाह्यार्थभोगः । किन्तु जगद्व्यापारादिव्यतिरिक्तबाह्यभोगः, जीवानां सर्वेषां नैकप्रकारेण बाह्यभोगः । किन्तु तरतमभावेनेति च विभागो निश्चेतव्य इत्यर्थः । उक्तं चैतत् 'जगद्व्यापारवर्जम्' इत्यधिकरणभाष्यादौ । व्यवहितत्वादेतच्छब्दपरामर्शविषयं दर्शयति **सुकृतमपीति** । उभयक्षयश्रुतिरनिष्टविषयेत्युक्तमर्थमुपसंहरति । अत इतीति तु प्राचीनटीकासङ्कोचः । सुकृतत्यागवचनमनिष्टसुकृतत्यागपरमिति सङ्कोचः । अत्र 'सुकृतमप्यप्रियम्' इत्यादिनोक्तं ज्ञानेनाप्रियसुकृतहानं हिरण्यगर्भेतरज्ञानिनामेव । तस्य तु तादृशाप्रियस्यानिष्टस्य सर्वथाऽभाव एव । अत एव भाष्ये 'मानुष्यादिहेयफलसाधनम्' इत्युक्तमिति ज्ञातव्यम् ।

भाष्यम्

**सोऽस्त्येव सर्वात्मना । 'अदुःखम्', 'सर्वदुःखविवर्जिताः' 'अशोकमहिमम्', 'यत्र गत्वा न शोचति', इत्यादिश्रुतिभ्यः । विशेषवचनाभावाच्च । येषां त्वीषद् दृश्यते ते न सायुज्यं प्राप्ताः । सामीप्याद्येवं तेषाम् । अतः प्रारब्धकर्मशेषभावात् तद्भुक्त्वा सायुज्यं गच्छन्ति । तच्चोक्तम्—**

**'सङ्कर्षणादयस्सर्वे स्वाधिकारादनन्तरम् ।**
**प्रविशन्ति परं देवं विष्णुं नास्त्यत्र संशयः ॥'**

**इति व्यासयोगे । अतोऽनिष्टस्य सर्वात्मना वियोगः । 'परब्रह्मत्वमिच्छामि परब्रह्मन् जनार्दन' इत्यादिना ब्रह्मादिभिरपि प्रार्थितत्वात् ।**

**'न मोक्षसदृशं किञ्चिदधिकं वा सुखं क्वचित् ।**
**ऋते वैष्णवमानन्दं वाङ्मनोऽगोचरं महत् ॥'**

**इत्यादेश्च ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धम् । अतो योगाय युज्यस्व । ज्ञानोपायाय । तद्धि कर्मकौशलम् ॥ ५० ॥**

*प०टी०*— ननु यथा श्रुतौ सुकृतनाशे विभागस्तथाऽनिष्टनाशेऽपि स्यादित्यत आह **सोऽस्तीति** । प्राचुर्यार्थान्येव तद्वचनानि किं न स्युः ? इत्यत आह **विशेषेति** । बललक्ष्मणादिमुक्तानां दुःखदर्शनमेव विशेषप्रमाणमित्यत आह **येषामिति** । तर्हि सामीप्यादौ दुःखापत्तिरित्यत आह **अत इति** । यतः सायुज्ययोग्यानां न सायुज्यम्, अतस्तेषामस्ति कर्मेति न मुक्ततया सामीप्यं तेषामित्यर्थः । सोऽस्ति इत्युक्तमुपसंहरति **अत इति** । न केवलमनिष्टनिवृत्तिर्मोक्षः, किन्तु पूर्णसुखं चेति साधयति **परब्रह्मत्वमिति** । **महद्** इति सुखविशेषणम् । ब्रह्मादिपदादधिकं ब्रह्मादीनां यतो ज्ञानादेव भूतमोक्षो निश्चितोऽतो ज्ञानोपायाय प्रयत्नं कुर्वित्यत आह **अत इति** ॥ ५० ॥

*न०टी०*—यथा 'जहातीह उभे सुकृतदुष्कृते' इत्युक्तेऽपि कस्यचित्सुकृतस्यावशेषः, तद्वदनिष्टस्यापि कस्यचित् कथञ्चिदवशेषः किं न स्यात् ? इत्याशङ्क्य, बहुश्रुतिविरोधान्नेत्याह **सोऽपीति** । नन्वासां वाचां प्राचुर्याभिप्रायेण सङ्कोचः किं न स्यात् ? इत्याशङ्क्य, अल्पदुःखप्रतिपादकविशेषवचनाभावेन तत्सङ्कोचायोगादिति भावेनाह **विशेषेति** । ननु भगवत्प्राप्तावपि सङ्कर्षणादीनां बललक्ष्मणादिस्वरूपेष्वीषदनिष्टं श्रूयते । अतस्तदेव सङ्कोचे मानमित्याशङ्क्य प्रारब्धफलमेव तत् तेषाम् । तद्धानौ न किञ्चिदनिष्टमित्येतत् सप्रमाणकमाह **येषामिति** । पूर्वार्धतात्पर्यार्थमुपसंहरति **अत इति** । उक्तहेतोर्न किञ्चिदनिष्टं मुक्तौ । सुखं च ब्रह्मादिपदादप्युत्तममुच्यमानोपपत्तिवचोभ्यो यथायोग्यमिति भावः । यस्मादेवं महाफलं ज्ञानम्, तस्मादुपायाय युज्यस्वेत्युत्तरार्धं व्याचष्टे **अत इति** । येन ज्ञानं युज्यते तदेव हि कर्मसु कुशलत्वं नान्यदित्यर्थः ॥ ५० ॥

*प्र०दी०*— यथा सुकृतत्यागे सङ्कोचस्तथाऽनिष्टत्यागेऽप्यस्ति किमिति जिज्ञासायामाह— **सोऽस्त्येवेति** । प्राचुर्याभिप्रायाण्येतानि वाक्यानि किं न स्युरित्यत आह— **विशेषेति** । सङ्कर्षणादयः

समष्टिजीवाः तावन्मुक्ताः । तेषां च बललक्ष्मणादिरूपेषु दुःखं दृश्यते । तदेव विशेषप्रमाणमित्यत आह— **येषां त्विति** । न सायुज्यं प्राप्ताः न मुक्ता इत्यर्थः । सायुज्ययोग्यानां तदभावे मुक्त्यभावात् । तेषां मुक्तत्वोक्तेस्तर्हि का गतिरित्यत आह— **सामीप्यादीति** । मुक्तत्वोक्तौ बीजमिति शेषः । कुतस्ते न मुक्ता इत्यत आह— **अत इति** । दुःखदर्शनात्तद्धेतुभूतप्रारब्धकर्मभावान्न ते मुक्ताः । कदा तर्हि ते मुच्यन्त इत्यत आह— **तद्भुक्त्वेति** । अत्रागमसम्मतिं चाह— **तच्चेति** । 'सोऽस्त्येव' इत्याद्युक्तमुपसंहरति— **अत इति** । तत्किमनिष्टनिवृत्तिमात्रं मुक्तिरित्यतोऽनुमानागमाभ्यां परमसुखं चेत्याह— **परब्रह्मत्वमिति** । मुक्तत्वम् । ब्रह्मादिभिः दुःखहीनैरपि । मोक्षे सक्तिः स्तुत्यर्थमेतदित्यतो न ब्रह्मण एकान्तित्व-विरोधः । समासान्तविधेरनित्यत्वात् वाङ्मनोऽगोचरमित्युक्तम् । महदित्येतत् सुखमित्यनेन सम्बध्यते । **ब्रह्मादिपदादप्यधिकतममिति** । ब्रह्मणो ब्रह्मपदादप्यधिकं शेषस्य शेषपदादप्यधिकमित्यादि ज्ञेयम् । एवं ज्ञानफलप्रदर्शनपरत्वेन पूर्वार्धो व्याख्यातः । उक्तविधया योगस्वरूपनिरूपणपरः किं न स्यादित्यतो अस्मदुक्तेऽर्थे तृतीयपादसङ्गतेरन्यथा तदसङ्गतेरित्यभिप्रेत्य तं पठति— **अत इति** । न दूरस्थहेतुपरामर्शोऽयमिति ज्ञापयितुं तस्मादिति पठितव्ये 'अतः' इत्युक्तम् । ज्ञानस्य महाफलत्वात् 'योगाय युज्यस्व' इति कथं हेतुहेतुमद्भाव इत्यतः 'योगाय' इत्येतद्व्याचष्टे— **ज्ञानेति** । ननु ''समत्वं योग उच्यते'' इति योगो व्याख्यातः । 'योगः कर्मसु कौशलं' इत्यादि किमिति पुनर्व्याख्यायत इत्यतः स्तुतिरियं योगस्य क्रियत इति भावेनाह **तद्धीति** । तत् योग इति शेषः ॥ ५० ॥

***भा०दी०***— **अनुमानेति** । निर्दुःखैरपि ब्रह्मादिभिः प्रार्थिततत्त्वरूपानुमानेनातिशयितसुखरूपत्वसिद्धेरिति भावः । अपिपदार्थो दुःखहीनैरपि मोक्षे सक्तिस्तुत्यर्थमिति । एकान्तिकेतरेषामिति योज्यम् । नन्वचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसेत्यादि सूत्रेण समासान्तेन निपातनाद्वाङ्मनसगोचरमिति भाव्यमित्यत आह **समासान्तेति** । द्वित्रिभ्यां पक्षात् मूर्ध्नस्वेति निर्देशेन अनित्यत्वज्ञापनात् । अन्यथा 'द्वित्रिभ्यां षमूर्ध्नः' इत्युक्तेर्द्वित्रिभ्यां पद्दन् मूर्ध्वेष्विति निर्देश्यतेति भावः । **उक्तविधयेति** । बुद्धियुक्तः प्रेक्षावानित्यादिना बुद्धियुक्तश्लोकावतारिकायामुक्तविधयेत्यर्थः । **अतः इत्युक्तमिति** । तेन पूर्वार्धोक्तस्य ज्ञानगतमहाफलकत्वहेतुतया परामर्शो लभ्यत इति भावः ॥ ५० ॥

***भा०र०***— ''सोऽस्त्येव'' इति भाष्ये दुष्कृतवियोगः सर्वात्मना । न पुनः सुकृतेषु बृहत्फलमिव न दुष्कृतं किमप्यवशिष्यत इत्यर्थः स्फुटत्वान्नोक्तः । **एतानि** 'अदुःखम्', 'अशोकमहिमम्' इत्यादीनि प्राचुर्येण दुःखं नास्तीत्यभिप्रायेण प्रवृत्तानि । न पुनः सर्वथा दुखाभावपराणीति

कुतो न व्याख्येयानीत्यर्थः । **विशेषेतीति** । अल्पानिष्टसद्भावप्रतिपादकविशेषवचनाभावात् सर्वात्मना अनिष्टहानमेव युक्तमित्यर्थः । मुक्तत्वमुपपादयितुमुक्तं **समष्टिजीवा इति** । सम्यक् प्राप्तभगवत्सामीप्या इत्यर्थः । हेत्वर्थगर्भमिदं विशेषणम् । अशू व्याप्तौ सङ्घाते चेति धातोः स्त्रियां क्तिनि "क्तिच्क्तौ च सञ्ज्ञायाम्" इति सूत्रेण सञ्ज्ञायां वा क्तिच्प्रत्यये 'तितुत्र' इत्यादिनेण्निषेधे शकारान्तत्वात् 'व्रश्च' इत्यादिना षत्वे ष्टुत्वे चाष्टिशब्दनिष्पत्तौ सङ्गता अष्टिर्येषां ते समष्टय इति प्रक्रिया । समष्टिशब्दस्यायमर्थश्च प्राचीनटीकाद्वयपर्यालोचनयाऽवगम्यते । "तस्माद् वायुरेव व्यष्टिर्वायुस्समष्टिः" इति बृहदारण्यकभाष्ये एकादशस्कन्धतात्पर्ये च "तस्मात् सर्वोत्तमो वायुर्विविधं तु यदष्टकम् । देवानृषीन् पितॄन् यक्षान् गन्धर्वान् मानुषोरगान् । असुरांश्च वशे नित्यं नयत्यमितपौरुषः । सम्पूर्णांश्च सुपर्णेशशेषेन्द्रांस्तत्स्त्रियोऽपि च । अष्टौ नयत्युन्नयति वशीकृत्य स्वयं प्रभुः । अतो व्यष्टिस्समष्टिश्च वायुरेवाभिधीयते" इति । "पञ्चभूतमनोबुद्धिरुद्राणां प्रतिदेहकम् । बाह्यतश्चापि नेतृत्वाद् वायुर्व्यष्टि समष्टिकः" इति च व्यष्टिशब्दः समष्टिशब्दश्चाष्टजीवनियमननिमित्तकतया वायौ व्याख्यातः । तत्र विपूर्वात् सम्पूर्वाच्चाष्टशब्दात् "प्रातिपदिकाद् धात्वर्थे बहुलमिष्टवच्च" इति णिचि कृते "णाविष्टवत् प्रातिपदिकस्य" इति टिलोपे व्यष्टयतेः समष्टयतेश्च "इन् सर्वधातुभ्यः" इति कर्तरीन्प्रत्यये च व्यष्टिः समष्टिरिति प्रक्रिया । तथा च वायौ माहात्म्यविशेषपर्यवसानायान्यत्र तथा व्याख्यानेऽपि न प्रकृते तद्विसंवादशङ्केति वेदितव्यम् । "समष्टिदृष्ट्या त्वेकत्वं व्यष्टिदृष्ट्या त्वनेकता" इति शङ्करवचनादत्र समष्टिजीवा इत्यस्यैकत्वापरोक्षज्ञानिन इत्याहुः । तेनेति पदविभागभ्रमं वारयिष्यन् प्रकृतोपयोगाय भाष्यमनूद्यार्थमाह **नेति** । कुतो न मुक्ता इत्यतः सायुज्यपदसूचितं हेतुमाह **सायुज्ययोग्यानामिति** । विशेषनिषेधे सामान्याभावलाभः कथमित्यतो वा आह **सायुज्येति** । **मुक्तत्वेति** । तेषां बललक्ष्मणादीनां सामीप्यादि मुक्तत्वव्यवहारे मूलमित्यर्थः । सायुज्यार्हाणां तदभावान्न मुक्तिरित्युक्तम् । तत्र सायुज्यमेव कुतो न तेषामिति पृच्छति **कुत इति** । **न मुक्ताः** न सायुज्यं प्राप्ताः । अत इत्यस्यार्थः **दुःखदर्शनादिति** । कार्येण तत्कारणं प्रारब्धसद्भावमनुमाय तेन तात्कालिकसायुज्याभावानुमानमिति भावः । **तद् भुक्त्वा** प्रारब्धकर्मशेषं भुक्त्वा । अत्र प्रारब्धमूलस्वभोगाव्यवहितकाले सायुज्यमित्यत्र । "सम्मतिं च" इति वदन् "तदुक्तं च" इति भाष्ययोजनेत्यभिप्रैति । पूर्वत्र 'अतः' इत्यस्य दुःखदर्शनादित्यर्थकत्ववदत्रापि 'अतः' इत्यस्य आगमसम्मतिसत्त्वादित्यर्थकत्वे आगमेऽनिष्टवियोगाकथनादनन्वय इत्युपसंहारार्थकत्वम् । तत्रापि बहूनामर्थानां प्रकृतत्वात् कस्यायमुपसंहार इति जिज्ञासां व्युदस्यन्नाह **सोऽस्तीति** । **अनुमानेति** । अस्ति तावद् ब्रह्मादीनामपि मुमुक्षा । 'परब्रह्मत्वम्' इत्यादिशास्त्रात् । सा च न दुःखाभावमात्रोद्देश्यिका । "ब्रह्मा

निरभिमानत्वाच्छरीर्यप्यशरीरवान् । दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यते" इत्यादिशास्त्रेण ब्रह्मादेर्दुःखाभावस्याऽऽजानसिद्धत्वात् । प्राप्तपदानां च ब्रह्मादीनां स्वस्वपदप्राप्तये मुमुक्षादिसाधन-सम्पत्तिरिति तु न युक्तम् । मुमुक्षयाः स्वपदेच्छारूपत्वाभावात् । प्राप्ते पदे तत्प्राप्तीच्छाया अयोगाच्च । किन्तु इतोऽधिकसुखोद्देश्यिकेति वक्तव्यम् । तथा चैवं प्रयोगः । ब्रह्मादिमोक्षो ब्रह्मादिपदादप्यधिकसुखरूपो भवितुमर्हति । प्राप्तपदैर्ब्रह्मादिभिः प्रार्थ्यमानत्वात् । यद् यत्प्राप्तौ सत्यामपि प्रार्थ्यते तत् ततोऽप्यधिकसुखरूपम् । यथा प्राप्तखण्डाधिपत्यसुखेन प्रार्थ्यमानमखण्डा-धिपत्यसुखम् । अत्र स्वस्वपदे व्यभिचारपरिहाराय प्राप्तपदैरिति विशेषणमिति । केचित्तु, उक्त एव प्रयोगे व्यतिरेकेण ब्रह्मादिपदवद् दुःखाभाववद्वेति व्यतिरेक्यनुमानशब्दार्थ इत्याहुः ।

ननु "परब्रह्मत्वमिच्छामि" इत्ययुक्तं प्रार्थनम् । "अयोग्यमिच्छन् पुरुषः पतति" इत्यनर्थहेतु-त्वावगमादित्यतः परब्रह्मत्वशब्दविवक्षितमर्थमाह **मुक्तत्वमिति** । "ब्रह्माणि जीवास्सर्वेऽपि परब्रह्माणि मुक्तिगाः" इति वचने परब्रह्मशब्दस्य मुक्तार्थकतया व्याख्यानादिति भावः । उक्तहेतोरप्रयोजकत्वं परिहर्तुमपि शब्दाभिप्रायमाह **दुःखहीनैरपीति** । न त्विदं पुनर्हेतुशरीरान्तर्गतं व्यर्थत्वादिति केचिद् व्याचक्षते । भावबोधे तु "मोक्षो न दुःखनिवृत्तिमात्ररूपः दुःखहीनैरपि ब्रह्मादिभिः प्रार्थ्यमानत्वात् । यद् यस्य सिद्धं न तत् तेन प्रार्थ्यते । यथा सम्मतमित्यनुमानम् । न चाप्रयोजकत्वम् । सिद्धस्य प्रार्थनीयत्वशङ्कायोगात् । नापि विशेषणासिद्धिः । "ब्रह्मा निरभिमानत्वात्" इत्याद्युक्तप्रमाणेन तस्य दुःखाभावसिद्धेः । न च विवक्षितार्थासिद्धिः । दुःखनिवृत्तिमात्रत्वाभावे सिद्धेऽर्थात् सुखरूपत्वस्यैव सिद्धेः" इति व्याख्यानम् ।

ननु दुःखहीनैरित्ययुक्तम् । "ब्रह्मणोऽप्यल्पदुःखं स्यात्" इति बृहद्भाष्ये "नैव रमे बिभेद् ब्रह्मा नाऽसीदित्यादिकानामपि । दोषान्" इति ऋग्भाष्यव्याख्यानावसरे "दुःखभयादिकान् दोषानपि ब्रह्मणः श्रुतिराह" इति टीकायां "द्विवारं भयमेव च । शोकोऽपि तावान् ब्रह्मणः" इति भागवत-तात्पर्ये च ब्रह्मणो दुःखोक्तेः, रुद्रस्य "दोषान् रुद्रे च तानेव न मिनन्तीति पूर्वकान्" इत्यादिना दुःखभयादिदोषावगमात् पुराणादौ रुद्रादीनामश्वत्थामादिरूपेण दुःखावेदनाच्चेति चेन्न । भाविनी या आत्यन्तिकदुःखनिवृत्तिस्तन्निश्चयवत्त्वं दुःखहीनत्वमिति विवक्षितत्वात् । "सर्वदुःखनिवृत्तिश्च ज्ञानिनो निश्चितैव हि" इत्यपरोक्षज्ञानिमात्रे सर्वदुःखनिवृत्तिसत्त्वे सुतरां ब्रह्मादीनां तत्सिद्धेः । तथा च द्वितीयतात्पर्ये "ऋष्युत्तमा देवताश्च विमुक्तौ परिनिष्ठिताः" इति । विमुक्तिरात्यन्तिकानिष्ट-निवृत्तिः । केचित्तु, 'ब्रह्मादिभिर्दुःखहीनैः' इत्यत्र ब्रह्मणः स्वतो विलीनप्रकृतितया दुःखं नास्त्येव ।

कुतो न व्याख्येयानीत्यर्थः । **विशेषेतीति** । अल्पानिष्टसद्भावप्रतिपादकविशेषवचनाभावात् सर्वात्मना अनिष्टहानमेव युक्तमित्यर्थः । मुक्तत्वमुपपादयितुमुक्तं **समष्टिजीवा इति** । सम्यक् प्राप्तभगवत्सामीप्या इत्यर्थः । हेत्वर्थगर्भमिदं विशेषणम् । अशू व्याप्तौ सङ्घाते चेति धातोः स्त्रियां क्तिनि "क्तिच्क्तौ च सञ्ज्ञायाम्" इति सूत्रेण सञ्ज्ञायां वा क्तिच्प्रत्यये 'तितुत्र' इत्यादिनेण्निषेधे शकारान्तत्वात् 'व्रश्च' इत्यादिना षत्वे ष्टुत्वे चाष्टिशब्दनिष्पत्तौ सङ्गता अष्टिर्येषां ते समष्टय इति प्रक्रिया । समष्टिशब्दस्यायमर्थश्च प्राचीनटीकाद्वयपर्यालोचनयाऽवगम्यते । "तस्माद् वायुरेव व्यष्टिर्वायुस्समष्टिः" इति बृहदारण्यकभाष्ये एकादशस्कन्धतात्पर्ये च "तस्मात् सर्वोत्तमो वायुर्विविधं तु यदष्टकम् । देवानृषीन् पितॄन् यक्षान् गन्धर्वान् मानुषोरगान् । असुरांश्च वशे नित्यं नयत्यमितपौरुषः । सम्पूर्णांश्च सुपर्णेशशेषेन्द्रांस्तत्स्त्रियोऽपि च । अष्टौ नयत्युन्नयति वशीकृत्य स्वयं प्रभुः । अतो व्यष्टिस्समष्टिश्च वायुरेवाभिधीयते" इति । "पञ्चभूतमनोबुद्धिरुद्राणां प्रतिदेहकम् । बाह्यतश्चापि नेतृत्वाद् वायुर्व्यष्टि समष्टिकः" इति च व्यष्टिशब्दः समष्टिशब्दश्चाष्टजीवनियमननिमित्तकतया वायौ व्याख्यातः । तत्र विपूर्वात् सम्पूर्वाच्चाष्टशब्दात् "प्रातिपदिकाद् धात्वर्थे बहुलमिष्टवच्च" इति णिचि कृते "णाविष्टवत् प्रातिपदिकस्य" इति टिलोपे व्यष्टयतेः समष्टयतेश्च "इन् सर्वधातुभ्यः" इति कर्तरीन्प्रत्यये च व्यष्टिः समष्टिरिति प्रक्रिया । तथा च वायौ माहात्म्यविशेषपर्यवसानायान्यत्र तथा व्याख्यानेऽपि न प्रकृते तद्विसंवादशङ्केति वेदितव्यम् । "समष्टिदृष्ट्या त्वेकत्वं व्यष्टिदृष्ट्या त्वनेकता" इति शङ्करवचनादत्र समष्टिजीवा इत्यस्यैकत्वापरोक्षज्ञानिन इत्याहुः । तेनेति पदविभागभ्रमं वारयिष्यन् प्रकृतोपयोगाय भाष्यमनूद्यार्थमाह **नेति** । कुतो न मुक्ता इत्यतः सायुज्यपदसूचितं हेतुमाह **सायुज्ययोग्यानामिति** । विशेषनिषेधे सामान्याभावलाभः कथमित्यतो वा आह **सायुज्येति** । **मुक्तत्वेति** । तेषां बललक्ष्मणादीनां सामीप्यादि मुक्तत्वव्यवहारे मूलमित्यर्थः । सायुज्यार्हाणां तदभावान्न मुक्तिरित्युक्तम् । तत्र सायुज्यमेव कुतो न तेषामिति पृच्छति **कुत इति** । **न मुक्ताः** न सायुज्यं प्राप्ताः । अत इत्यस्यार्थः **दुःखदर्शनादिति** । कार्येण तत्कारणं प्रारब्धसद्भावमनुमाय तेन तात्कालिकसायुज्याभावानुमानमिति भावः । **तद् भुक्त्वा** प्रारब्धकर्मशेषं भुक्त्वा । अत्र प्रारब्धमूलस्वभोगाव्यवहितकाले सायुज्यमित्यत्र । "सम्मतिं च" इति वदन् "तदुक्तं च" इति भाष्ययोजनेत्यभिप्रैति । पूर्वत्र 'अतः' इत्यस्य दुःखदर्शनादित्यर्थकत्ववदत्रापि 'अतः' इत्यस्य आगमसम्मतिसत्त्वादित्यर्थकत्वे आगमेऽनिष्टवियोगाकथनादनन्वय इत्युपसंहारार्थकत्वम् । तत्रापि बहूनामर्थानां प्रकृतत्वात् कस्यायमुपसंहार इति जिज्ञासां व्युदस्यन्नाह **सोऽस्तीति** । **अनुमानेति** । अस्ति तावद् ब्रह्मादीनामपि मुमुक्षा । 'परब्रह्मत्वम्' इत्यादिशास्त्रात् । सा च न दुःखाभावमात्रोद्देश्यिका । "ब्रह्मा

निरभिमानत्वाच्छरीर्यप्यशरीरवान् । दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यते" इत्यादिशास्त्रेण ब्रह्मादेर्दुःखाभावस्याऽजानसिद्धत्वात् । प्राप्तपदानां च ब्रह्मादीनां स्वस्वपदप्राप्तये मुमुक्षादिसाधन-सम्पत्तिरिति तु न युक्तम् । मुमुक्षायाः स्वपदेच्छारूपत्वाभावात् । प्राप्ते पदे तत्प्राप्तीच्छाया अयोगाच्च । किन्तु इतोऽधिकसुखोद्देश्यिकेति वक्तव्यम् । तथा चैवं प्रयोगः । ब्रह्मादिमोक्षो ब्रह्मादिपदादप्यधिकसुखरूपो भवितुमर्हति । प्राप्तपदैर्ब्रह्मादिभिः प्रार्थ्यमानत्वात् । यद् यत्प्राप्तौ सत्यामपि प्रार्थ्यते तत् ततोऽप्यधिकसुखरूपम् । यथा प्राप्तखण्डाधिपत्यसुखेन प्रार्थ्यमानमखण्डा-धिपत्यसुखम् । अत्र स्वस्वपदे व्यभिचारपरिहाराय प्राप्तपदैरिति विशेषणमिति । केचित्तु, उक्त एव प्रयोगे व्यतिरेकेण ब्रह्मादिपदवद् दुःखाभाववद्वेति व्यतिरेक्यनुमानशब्दार्थ इत्याहुः ।

ननु "परब्रह्मत्वमिच्छामि" इत्ययुक्तं प्रार्थनम् । "अयोग्यमिच्छन् पुरुषः पतति" इत्यनर्थहेतु-त्वावगमादित्यतः परब्रह्मत्वशब्दविवक्षितमर्थमाह **मुक्तत्वमिति** । "ब्रह्माणि जीवास्सर्वेऽपि परब्रह्माणि मुक्तिगाः" इति वचने परब्रह्मशब्दस्य मुक्तार्थकतया व्याख्यानादिति भावः । उक्तहेतोरप्रयोजकत्वं परिहर्तुमपि शब्दाभिप्रायमाह **दुःखहीनैरपीति** । न त्विदं पुनर्हेतुशरीरान्तर्गतं व्यर्थत्वादिति केचिद् व्याचक्षते । भावबोधे तु "मोक्षो न दुःखनिवृत्तिमात्ररूपः दुःखहीनैरपि ब्रह्मादिभिः प्रार्थ्यमानत्वात् । यद् यस्य सिद्धं न तत् तेन प्रार्थ्यते । यथा सम्मतमित्यनुमानम् । न चाप्रयोजकत्वम् । सिद्धस्य प्रार्थनीयत्वशङ्कायोगात् । नापि विशेषणासिद्धिः । "ब्रह्मा निरभिमानत्वात्" इत्याद्युक्तप्रमाणेन तस्य दुःखाभावसिद्धेः । न च विवक्षितार्थासिद्धिः । दुःखनिवृत्तिमात्रत्वाभावे सिद्धेऽर्थात् सुखरूपत्वस्यैव सिद्धेः" इति व्याख्यानम् ।

ननु दुःखहीनैरित्ययुक्तम् । "ब्रह्मणोऽप्यल्पदुःखं स्यात्" इति बृहद्भाष्ये "नैव रमे बिभेद् ब्रह्मा नाऽसीदित्यादिकानामपि । दोषान्" इति ऋग्भाष्यव्याख्यानावसरे "दुःखभयादिकान् दोषानपि ब्रह्मणः श्रुतिराह" इति टीकायां "द्विवारं भयमेव च । शोकोऽपि तावान् ब्रह्मणः" इति भागवत-तात्पर्ये च ब्रह्मणो दुःखोक्तेः, रुद्रस्य "दोषान् रुद्रे च तानेव न मिनन्तीति पूर्वकान्" इत्यादिना दुःखभयादिदोषावगमात् पुराणादौ रुद्रादीनामश्वत्थामादिरूपेण दुःखावेदनाच्चेति चेन्न । भाविनी या आत्यन्तिकदुःखनिवृत्तिस्तन्निश्चयवत्त्वं दुःखहीनत्वमिति विवक्षितत्वात् । "सर्वदुःखनिवृत्तिश्च ज्ञानिनो निश्चितैव हि" इत्यपरोक्षज्ञानिमात्रे सर्वदुःखनिवृत्तिसत्त्वे सुतरां ब्रह्मादीनां तत्सिद्धेः । तथा च द्वितीयतात्पर्ये "ऋष्युत्तमा देवताश्च विमुक्तौ परिनिष्ठिताः" इति । विमुक्तिरात्यन्तिकानिष्ट-निवृत्तिः । केचित्तु, 'ब्रह्मादिभिर्दुःखहीनैः' इत्यत्र ब्रह्मणः स्वतो विलीनप्रकृतितया दुःखं नास्त्येव ।

यदत्र 'ब्रह्मणोऽप्यल्पदुःखम्' इत्यादिप्रमाणमुदाहृतं तत्तु "भगवत्प्रीतये नित्यं ब्रह्मणो ये भयादयः । न वृथा तस्य भावः स्यात् कश्चित् तेऽपि क्षणार्धगाः । शोकोऽपि तावान्नान्यत्र कदाचित् ब्रह्मणो भवेत् । तत्रापि भगवत्प्रीत्या उन्नत्यैवास्य तद् भवेत्" इति षष्ठतात्पर्ये भगवत्पादैरेव व्याख्यातम् । रुद्रादीनां तु "देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् । तेषां दुःखादिकं किञ्चिदसुरावेशतो भवेत्" इत्येकादशतात्पर्यवचनादन्यावेशनिमित्तकाल्पदुःखसद्भावेऽपि न स्वतो दुःखमिति दुःखहीनत्वं ज्ञातव्यम् । ब्रह्मणो नासुरावेशनिमित्तं दुःखमपि । "प्राणाख्ये नासुरावेश आखणाश्मसमो हि सः । सम्पूर्णानुग्रहाद् विष्णोः प्राणः पूर्णगुणो मतः" इति वचनादित्याहुः ।

ननु ब्रह्मणो मोक्षाकाङ्क्षाङ्गीकारे एकान्तित्वं विरुद्ध्येत । इदमेव ह्येकान्तित्वं यन्मोक्षेऽपीच्छाशून्यत्वम् । तथा च वक्ष्यति "मुक्तिमप्यनिच्छतामेकान्तिनाम्" इति । यच्चाहुः "एकान्तानां न कस्यचित् अर्थे नारायणो देवः" इतीत्यत आह **मोक्ष इति** । मध्यमभक्तानां स्वर्गादिसक्त्यपेक्षया मोक्षे सक्तिः प्रशस्तेति प्राशस्त्ये तात्पर्यं न त्वेकान्तिनामपि मोक्षेच्छाऽस्तीत्यत्र । अत उत्तमाधिकारिणां नैकान्तित्वविरोध इत्यर्थः । ब्रह्मण इत्येकवचनं प्रयुञ्जानस्य ब्रह्मव्यतिरिक्तानां देवानामसुरावेशनिमित्तं दुःखमस्ति । ब्रह्मणस्तु नासुरावेशनिमित्तं, नाप्यनौपाधिकं दुःखमस्तीति बोद्धव्यमिति भावः । उपलक्षणं चैतत् । "सर्वमन्यत् तदर्थकम्" इति "येषामपवर्गोऽपि परमपुरुषावबोधार्थमेवाभ्यर्थनीयः" इत्युक्तरीत्या विष्णवर्थत्वेनैव ब्रह्मादिभिः प्रार्थ्यमानत्वाच्च नैकान्तित्वविरोध इति समाधानमवधातव्यम् । तेन न विशेष्यासिद्धिशङ्काऽपीति बोद्धव्यम् ।

ननु "अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनस" इत्यादिसूत्रेणाच्प्रत्ययान्ततया निपातनाद् वाङ्मनसागोचरमिति वक्तव्यम् । वाङ्मनोऽगोचरमिति तु कथमित्यत आह **समासान्तेति** । अश्वादिगणे राजञ्शब्दस्य पाठः, "द्वित्रिभ्यां पाद्दन्मूर्धसु" इति निर्देश इत्याद्यनित्यत्वज्ञापकसद्भावादिति भावः । तथा हि । 'प्रतेरश्वादयस्तत्पुरुषे' इत्युक्ताश्वादिगणे राजञ्शब्दपाठः कृतः । स च प्रतिराजेति तत्पुरुषेऽन्तोदात्तार्थः । न चासौ समासान्तविधेर्नित्यत्वे युक्तः । वैयर्थ्यात् । "राजाहस्सखिभ्यष्टच्" प्रतिराजेत्यत्र टच्प्रत्यये 'चितः' इत्यनेनैवान्तोदात्तत्वसिद्धेः । अतो ज्ञायते समासान्तविधिरनित्य इति । नन्वानन्दशब्दस्तावद्धञन्तत्वात् पुल्लिङ्गः । महदित्यस्य तद्विशेषणत्वे पुल्लिङ्गत्वापत्त्या महान्तमिति निर्देशः स्यादित्यत आह **महदित्येतदिति** । मोक्षादधिकं वा महत् सुखं नास्तीति पूर्वार्धगतसुखविशेषणम् । सन्निधानादपि योग्यताया बलवत्त्वादिति भावः । अत एव भाष्ये "अधिकतमं सुखम्" इत्येवोक्तम् । ननु ज्ञानिमात्रस्य मोक्षो नियतः ।

ज्ञानिमात्रस्य मोक्षे ब्रह्मादिपदादप्यधिकं सुखमस्तीति कथं युज्यत इत्यत आह **ब्रह्मणो ब्रह्मपदादपीति**। नात्र सर्वस्यापि मोक्षे ब्रह्मादिपदादधिकं सुखमस्तीत्युच्यते। किन्तु ब्रह्मादेस्तस्य तस्य स्वस्वपदादधिकं सुखमस्तीत्युच्यत इति न कोऽपि दोष इति भावः।

ननु "या निर्वृतिः" इत्यादिनोत्तमाधिकारिश्रवणादिजनितसुखस्य स्वाधममोक्षसुखापेक्षयाऽऽधिक्योक्तेः कथं ब्रह्मादिपदादप्यधिकतममित्युच्यत इत्यत आह– ब्रह्मण इतीत्यप्यवतारयन्ति। उत्तरभाष्यं सङ्गमयितुं 'ज्ञानफलमाह' इति गमनिकाभाष्यं मनसि निधायाह **एवमिति**। ज्ञानफलम् अशेषानिष्टनिवृत्तिविशिष्टं परमसुखम्। **उक्तविधया** बुद्धियुक्तः प्रेक्षावान् काम्यं सुकृतं च जह्यादित्युक्तविधया। **अस्मदुक्तेऽर्थे** ज्ञानफलप्रदर्शनपरत्वरूपे। **अन्यथा** योगस्वरूपनिरूपणपरत्वे। यस्माज्ज्ञानेन युक्तोऽनिष्टं जहाति तस्माज्ज्ञानोपायाय प्रयतस्व। सुकृतयुक्तः स्वर्गमनुभवतीति तदुपाये यागादौ यथेति तृतीयपादस्य सङ्गतेः। योगस्वरूपनिरूपणपरत्वे तु सुकृतदुष्कृते जह्यादिति योगस्वरूपस्य विहितत्वात् "तस्माद् योगाय युज्यस्व" इति पुनर्विधाने तदसङ्गतेरित्यर्थः। **तं** तृतीयपादम्। अतःशब्दं प्रयुञ्जानस्य भाष्यकारस्य तात्पर्यमाह **न दूरस्थेति**। अतःशब्दे प्रयुक्ते सन्निकृष्टपरामर्शोऽयमिति ज्ञायते। "एतदोऽन्" इत्यनुशासनेन तस्यैतच्छब्दरूपत्वात्। एतच्छब्दस्य सन्निकृष्टवाचित्वं प्रसिद्धम्। तथा च ऐतरेयभाष्ये "एतत् सन्निहितत्वाच्च पूर्णत्वादेति कीर्तितः" इति। गीतानुसारेण तच्छब्दे प्रयुक्ते तु 'यामिमाम्' इत्यादौ क्षयिष्णुफलकत्वादिना कर्मणां निन्दितत्वं दूरस्थं तेन प्रतीयेत। तस्य विप्रकृष्टवाचित्वस्याऽनुभाविकत्वात्। नैवं दूरस्थं किमपि प्रत्येतव्यम्। किन्तु पूर्वार्धप्रकृतं ज्ञानस्य यदशेषानिष्टनिवर्तकत्वं तदेव 'तस्मात्' इत्यनेन परामृश्यमानं विवक्षितमिति ज्ञापयितुमतःशब्देन गीतास्थतच्छब्दाभिप्रेतार्थ उक्त इति भावः। तस्मादित्येतदर्थरूपस्य 'अतः' इत्यस्यार्थं वदन्नेवोत्तरभाष्यमवतारयति **ज्ञानस्य महाफलत्वादिति**। **कथमिति**। न हि ज्योतिष्टोमादेः स्वर्गसाधनत्वात् कृष्यादौ प्रयतस्वेति विधिर्युज्यत इति भावः। **ज्ञानेनेति**। ज्ञानस्य महाफलहेतुत्वाज्ज्ञानोपाये प्रयतस्वेति युज्यते हेतुहेतुमद्भाव इति भावः। **स्तुतिरिति**। कर्मसु मध्ये फलाभिसन्धिरहितो भगवदर्पणबुद्ध्या क्रियमाणो योगः साङ्गं निवृत्तं कर्म कौशलम्। पुरुषस्य कौशलरूप इति योगः स्तूयते न पुनर्व्याख्यायत इति पुनरुक्तिरित्यर्थः। 'कर्मकौशलम्' इति भाष्ये कर्मसु कौशलमिति विग्रहः। कर्मसु योगः कौशलं स्वार्थेऽण्। कुशलः प्रशस्त इत्यर्थः इत्यप्याहुः। भाष्ये स्तुतित्ववारणाय 'तद्धि' इत्युक्तम्। तत्र प्रतियोग्याह **तद्योग इति**। चतुर्थपादघटनायेदम्।

*गीताक्षरार्थस्तु*— ज्ञानात् कर्मावरमित्येतत् काम्यकर्मिणां कृपणत्वोक्त्योपपाद्य इदानीं कर्मफलाज्ज्ञानफलस्य विलक्षणत्वोक्त्याऽपि तदुपपाद्यते **बुद्धियुक्त इति** । इह मुमुक्षुवर्गे बुद्धियुक्तः भगवदपरोक्षज्ञानवान् सुकृतदुष्कृते मोक्षविलम्बहेतुत्वान्मानुष्यस्वर्गादिप्रापकपुण्यं सर्वमपि दुष्कृतमित्युभे सुकृतदुष्कृते जहाति त्यजति । तस्मात् ज्ञानस्यैवमखिलक्लेशनिवृत्तिविशिष्टपरमानन्दानुभवहेतुत्वाद् योगाय ज्ञानोपायाय युज्यस्व घटस्व । योगः स्तूयते । योगः ज्ञानोपायानुष्ठानलक्षणः कर्मसु करणीयेषु कौशलं पुरुषस्य नैपुण्यमिति ॥ ५० ॥

**गीता**

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

*वि०वि०*— ज्ञानसाधनं कर्म ज्ञानफलं च मोक्षं विवृणोति । कर्मजं फलं त्यक्त्वा अकामनयेश्वरे समर्प्य । बुद्धियुक्ता सम्यग्भगवज्ज्ञानिनः । मनीषिणः अपरोक्षज्ञानिनो भूत्वा जन्मबंधादतितरां निर्मुक्ताः । अनामयं निर्दुःखं पदं गच्छन्ति । सयोगं कर्म ज्ञानसाधनम् । ज्ञानं मोक्षसाधनमिति भावः ॥ ५१ ॥

*सा०सं०*— पूर्वोक्तं ज्ञानसाधनं ज्ञानफलं च विवृणोति **कर्मजमिति । कर्मजं फलं त्यक्त्वा** इत्युपलक्षणम् । कर्मजफलसङ्कल्पत्यागादिपूर्वकं भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपं योगमास्थाय बुद्धियुक्ताः सम्यक् शास्त्रजनितभगवज्ज्ञानिनः इत्यनेन ज्ञानसाधनं योगो विवृतः । ततश्च— **मनीषिणः**, "प्रशंसायां मतुबर्थे निप्रत्ययः", अपरोक्षज्ञानिनो भूत्वा **जन्मबन्धविनिर्मुक्ताः** सन्तः **अनामयं** निर्दुःखं **पदं** मोक्षं गच्छन्तीत्युक्त्या ज्ञानफलं विवृतं ज्ञेयम् ॥ ५१ ॥

*अ०प्र०*— कर्मणां मोक्षसाधनत्वप्रकारमाह **कर्मेति** ।

हे पार्थ ! बुद्धियुक्ताः[१], कर्मजं[२] फलं[३], त्यक्त्वा[४], मनीषिणो भूत्वा[५], जन्मबन्धविनिर्मुक्ताः सन्तः[६], अनामयं[७], पदं[८], हि इति निश्चयेन[९], गच्छन्तीत्यन्वयः ।

हे पार्थ ! बुद्धियुक्ताः = केवलमीश्वराराधनार्थं कर्म कुर्वाणाः शास्त्रजन्य-सम्यग्भगवद्ध्यानिनः, कर्मजं[२], फलं = स्वर्गादिकं[३], त्यक्त्वा विहितकर्म कृत्वा ईश्वराय समर्प्य स्वर्गादिकामनामकृत्वा मनीषिणोऽज्ञानिनो भूत्वा[५], जन्मबन्धविनिर्मुक्ताः सन्तः = जन्मरूपेण बन्धेन विनिर्मुक्ताः सन्तः यद्वा जन्म-बन्धात्संसारात् ततस्तद्वारा अपरोक्षे अतितरां निर्मुक्ताः सन्तः[६], अनामयं = सर्वोपद्रवरहितं

निर्दुखं[७], पदं मोक्षाख्यं विष्णोः पदं हरिं वा[८], गच्छन्ति = प्राप्नुवन्ति[९], सयोगं कर्मसुज्ञानसाधनं ज्ञानं च मोक्षसाधनमिति भावः ॥ ५१ ॥

**भाष्यम्**

तदुपायमाह **कर्मजमिति** । **कर्मजं फलं त्यक्त्वा, अकामनयेश्वराय समर्प्य । बुद्धियुक्ताः सम्यग्ज्ञानिनो भूत्वा पदं गच्छन्ति । सयोगकर्म ज्ञानसाधनम्, तन्मोक्षसाधनमिति भावः ॥ ५१ ॥**

***प०टी०*** — किं तत्तत्कर्मकौशलं तत्त्वज्ञानोपायः ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य व्याचष्टे **तदिति** ॥ ५१ ॥

***न०टी०***—किं तत्कर्मसु कुशलत्वम् ? इत्याकाङ्क्षोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **तदुपायमिति** । मोक्षसाधनज्ञानोपायम् । कार्याकार्यादिनिश्चयात्मिका मनीषा । भगवत्तत्त्वज्ञानं बुद्धिः । मनीषित्वादेव 'कर्मजं फलं त्यक्त्वा' इत्यादि ॥ ५१ ॥

***प्र०दी०***— ननु कर्मजमिति श्लोकः पूर्वोक्तान्न विशिष्यत इत्यत आह— **तदुपायमिति** । तस्य ज्ञानस्योपायं योगं, तज्ज्ञानमुपायो यस्य तं मोक्षं चाह विवृणोतीत्यर्थः । व्यवहितत्वादन्वयमाह— **कर्मजमिति** । अप्राप्तस्य फलस्य कथं त्याग इत्यतो व्याचष्टे— **अकामनयेति** । प्रकृत्यादिभ्य उपसङ्ख्यानात्तृतीया । एतत्प्रागुक्तमित्यतः प्रकारान्तरेण व्याचष्टे— **ईश्वरायेति** । 'बुद्धियुक्ताः मनीषिणः' इति पौनरुक्त्यपरिहारायाह— **बुद्धियुक्ता इति** । सम्यग्ज्ञानिनः शास्त्रजनिततत्त्वज्ञानिनः । अनेन 'मनीषिणः' इत्यपरोक्षज्ञानिन इति सूचितम् । प्रशंसायां मत्वर्थीयस्य विधानात् । नन्विदमेकं वाक्यं कथं वाक्यार्थद्वयस्य विवरणम् । मोक्षस्वरूपविवरणेऽपि योगो न सम्यग्विवृतः । अङ्गिनः कर्मण एवानभिधानात् । अङ्गानां च सङ्कल्पत्यागादीनामित्यत आह— **स योगेति** । समस्ताङ्गसङ्ग्रहाय योगग्रहणम् । तज्ज्ञानम् । यद्यपि योजनावशादिदमेकं वाक्यम् । तथाप्यर्थवशाद्द्वे वेदितव्ये । योगश्च 'कर्मजं फलं त्यक्त्वा' इत्यनेन समग्रो लक्षित इति भावः ॥ ५१ ॥

***भा०दी०***— **आहेत्यनुवादः** । **विवृणोतीति** व्याख्या । 'समत्वं योग उच्यत' इत्यनेन यथा पार्थकर्मबन्धं प्रहास्यतीत्यनेन चापौनरुक्त्याय पूर्वार्धेन ज्ञानोपायमुत्तरार्धेन तत्फलं विवृणोतीत्यर्थः । कर्तृत्वाद्यर्थे तृतीयानुपयोगादाह **प्रकृत्यादिभ्य इतीति** । प्रकृत्या चारुः प्रायेण समः गोत्रेण गार्ग्य इत्यादाविव तृतीयेत्यर्थः । कामनाहीनं कर्मेत्यर्थः । **एतत्प्रागुक्तमिति** । फलकामनाहीनकर्मानुष्ठानं

कर्मण्येवेति श्लोके तद्विवरणपरे योगस्थ इति श्लोके चोक्तमित्यर्थः । **प्रकारान्तरेणेति** । कर्मजं फलं त्यक्त्वेत्यस्य निष्कामकर्मकरणं नार्थः । किं त्वीश्वरसमर्पणं तस्यार्थः । अतो न पौनरुक्त्यमिति भावः । कथं मनीषिपदेनापरोक्षज्ञानिलाभ इत्यतो 'भूमनिन्दाप्रशंसासु भवन्ति मतुबादय' इत्युक्तेः प्रशंसायां मतुबर्थके मुन् प्रत्यये मनीषीति रूपसिद्धेः प्रशस्ता **मनीषिणोऽपरोक्षज्ञानिन एवेति** भावेनाह **प्रशंसायां मत्वर्थीयस्य विधानादिति । योगग्रहणमिति** । सिध्यसिध्योः समत्वरूपयोगग्रहणं सङ्कल्पत्यागेन भगवदर्पणं भगवत्पूजात्वेनानुष्ठानमित्येवमादिसमस्तां गोपादानायेत्यर्थः । तथा च पूर्वार्धे भगव-दर्पणमात्रप्रतीतावपि समस्ताङ्गोपेतकर्मोपलक्षणम् । तथा चायमर्थः । कर्मजं फलं त्यक्त्वा सर्वाङ्गोपेतकर्मानुष्ठीयशुद्धान्तःकरणाः बुद्धियुक्ताः शास्त्रजन्यज्ञानवन्तो भवन्ति । ततश्च मनीषिणोऽपरोक्षज्ञानिनो भूत्वा पदं गच्छन्तीति । **योगश्चेति** । निवृत्तं कर्म चेत्यर्थः ॥ ५१ ॥

*भा०र०*— **पूर्वोक्तान्न विशिष्यत इति** । "योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा" इत्यत्र, "बुद्धियुक्तः" इत्यत्र च यदुक्तं तावत एवात्र कथनादिति भावः । "पदं गच्छन्त्यनामयम्" इत्यधिकमत्रोच्यत इति चेन्न । पूर्वश्लोकेऽपि "सुकृतदुष्कृते जहाति तस्मात्" इत्यत्राखिलक्लेशनिवृत्ति-विशिष्टपरमानन्दावाप्तिहेतुत्वादित्यभिमतत्वेन अनामयपदप्राप्तेरप्युक्तत्वादिति । तस्मिन् श्लोके पूर्वार्धेन ज्ञानसाधनोक्तेरुत्तरार्धेन ज्ञानफलोक्तेस्तदुभयानुगुणतया 'तदुपायम्' इति भाष्यं द्वेधा व्याचष्टे **तस्य ज्ञानस्येत्यादिना** । "पूर्वोक्तान्न विशिष्यते" इति शङ्कां परिहरति **विवृणोतीति** । बुद्धियुक्ता इत्यस्य कर्मजं फलं त्यक्त्वा बुद्धियुक्ता इतीतिकर्तव्यताविशेषसमर्पणेन विवरणात्, सुकृतदुष्कृते जहातीत्यस्य "जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्" इति विवरणाच्च न पूर्वोक्ताविशेषशङ्केति भावः । अकामनयेति कथं तृतीया ? त्यागे तस्याः करणत्वाद्ययोगेन "कर्तृकरणयोस्तृतीया" इत्यादि-शास्त्रानवतारादित्यत आह **प्रकृत्यादिभ्य उपसङ्ख्यानादिति** । "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति वार्तिकादित्यर्थः । प्रकृत्यादिराकृतिगण इति भावः । न चैवमनन्वयः । अकामनारूपत्यागकर्म कृत्वेत्यन्वयोपपत्तेः । तथा च कर्मजन्यफलत्यागोऽत्र फलकामनायाः प्राप्तत्वात् तत्त्याग एव गीताभिप्रेत इति भाष्यभाव इत्युक्तं भवति । तत्र शङ्कते **एतदिति** । फले कामना त्यक्तव्येत्येतत् 'कर्मण्येव' इति श्लोके, तद्विवरणपरे 'योगस्थः' इति श्लोके चोक्तमित्यर्थः । **प्रकारान्तरेणेति** । कर्मजं फलं त्यक्त्वेत्यस्य निष्कामकर्मकरणं नार्थः । किन्तु कर्मणामीश्वरे समर्पणम् । तथा च पुनरुक्तिरिति भावः । बुद्धिमनीषाशब्दयोः पर्यायत्वादुक्तम् **पौनरुक्त्येति** । भाष्ये विवक्षितां सम्यक्तां दर्शयति **शास्त्रजनितेति** । अनेन चेतनमात्रस्य बुद्धियुक्तत्वं सिद्धमेवेति नेदं विशेषणमिति चोद्यं परिहृतम् । **अनेन** "बुद्धियुक्ताः शास्त्रजनितज्ञानयुक्ताः" इति भाषणेन । बुद्धियुक्त इत्यादौ तु मनीषिण इति

विशेषणानुपादानाद् बुद्धिशब्दो परोक्षज्ञानपरो व्याख्यात इति न तद्विसंवाद भावः । कथमनेनापरोक्षज्ञानिलाभ इत्यत आह **प्रशंसायामिति** । ''भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः'' इति वार्तिकेन प्रशंसायां मतुबर्थकेनिप्रत्ययविधानात् प्रशस्ता मनीषा एषामस्तीति मनीषिणोऽपरोक्षज्ञानिन इति युक्तं सूचनमिति भावः । यद्यपि ''अत इनिठनौ'' इति इनिरकारान्तादनुशिष्टः । तथाऽपि ''व्रीह्यादिभ्यश्च'' इति सूत्रे ''शिखादिभ्य इनिर्वक्तव्यः'' इति वार्तिककारेण शिखादेराकृतिगणत्वाङ्गीकारादत्र मनीषाशब्दादिभिर्भवत्येव । **इदं** 'कर्मजं बुद्धि' इति पद्यम् । **वाक्यार्थद्वयस्य** ''सङ्गं त्यक्त्वा'' इति वाक्यार्थस्य, ''बुद्धियुक्तः'' इति वाक्यार्थस्येत्येवं वाक्यार्थद्वयस्येत्यर्थः । यद्वा, बुद्धियुक्त इति वाक्यार्थस्य, सुकृतदुष्कृते जहातीति वाक्यार्थद्वयस्येत्यर्थः । **मोक्षस्वरूपेति** । सुकृतदुष्कृते जहातीत्युक्ताशेषानिष्टनिवृत्तिं 'जन्मबन्धविनिर्मुक्ताः' इत्यनूद्य ''पदं गच्छन्त्यनामयम्'' इत्यधिकाभिधानान्मोक्षस्वरूपं विवृतमिति भावः । ''समत्वं योग उच्यते'' इति प्राग् विवृतत्वान्न सम्यगित्युक्तम् । तदेवासम्यक्त्वं दर्शयति **अङ्गिन इति** । **कर्मणः** निवृत्तलक्षणस्य । सङ्कल्पत्यागादीनाम् अनभिधानादिति वर्तते ।

ननु योगो नाम निवृत्तकर्मैव । तस्यैव ज्ञानसाधनत्वात् । ''कर्मणा ज्ञानमातनोति'' इत्यादेः । तत् कथं ''सयोगकर्म ज्ञानसाधनम्'' इति भाषणमित्यत आह **समस्ताङ्गेति** । सङ्कल्पत्यागादिलक्षणसकलाङ्गकलापोपेतं निवृत्तं कर्म योगशब्दितं ज्ञानसाधनमित्यर्थ इति भावः । नन्विदमेकं वाक्यमिति कृतचोद्यं परिहर्तुमुक्तमनुवदति **यद्यपीत्यादि** । **अर्थवशात्** प्रमेयभेदवशात् । **द्वे वेदितव्य इति** । कर्मजं फलं त्यक्त्वा बुद्धियुक्ता भूत्वा मनीषिणो भवन्तीत्येकं वाक्यम् । तथा च मनीषया जन्मबन्धादिदोषविनिर्मुक्तास्सन्तः अनामयं पदं गच्छन्तीत्यपरमिति द्वे वाक्ये प्रमेयभेदाद् भेत्तव्ये इत्यर्थः । योगो न सम्यग् विवृत इति चोद्यं भाष्यभावोक्त्या परिहरति **योगश्चेति** । तथा च ''कर्मजं फलं त्यक्त्वा'' इत्यस्य फलसङ्कल्पत्यागपूर्वकं भगवदाराधनात्मकं कर्म कृत्वेत्यर्थोऽवगन्तव्य इति भावः ।

***गीताक्षरार्थस्तु***— पूर्वोक्तो ज्ञानसाधनभूतो योगो ज्ञानफलं मोक्षश्च विव्रियते **कर्मजमिति** । कर्मजं फलं त्यक्त्वेत्यनेन कर्मजन्यफलानभिसन्धानेन कर्मस्वातन्त्र्याभिमानत्यागपूर्वकं भगवदर्पणबुद्ध्या भगवदाराधनात्मकं कर्मानुष्ठायेति लभ्यते । बुद्धियुक्ताः शास्त्रजनितसम्यग्ज्ञानसम्पन्नाः मनीषिणः प्रशंसायां मत्वर्थीयेनिविधानादपरोक्षज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ताः संसारबन्धाददतितरां मुक्ताः अनामयं दोषरहितं पदं मोक्षं गच्छन्तीत्यखिलक्लेशनिवृत्तिविशिष्टपरमानन्दानुभवरूपो मोक्ष इति

ज्ञानफलं मोक्षस्वरूपं च विवृतं भवति । फलानभिसन्धानकर्मकर्तृकत्वस्वातन्त्र्याभिमानत्यागपूर्वक-भगवदाराधनात्मकं कर्मोभयविधज्ञानसाधनम् । ज्ञानं च मोक्षसाधनमिति भाव इति ॥ ५१ ॥

**गीतातात्पर्यनिर्णयः**

**यथावद्विष्णुं ज्ञात्वा तदर्थत्वेन कर्मकरणमित्येतत् कर्मकौशलमेव योगः । भगवज्ज्ञानमेव बुद्धिः ॥ ५०-५१ ॥**

***न्या०दी०***— नन्वस्तु ज्ञानस्याधिक्यं, ततश्च किमित्यतः 'तस्मात्' इति ज्ञानसाधन-मापाद्यमित्युक्तम् । तत्रास्तु ज्ञानसाधनापादनम् । किं फलस्नेहरहितकर्मणेत्याशङ्कायां फलस्नेहरहित-कर्मैव ज्ञानसाधनमिति वक्तव्यम् । किमर्थमत्र कर्मकौशलस्य ज्ञानसाधनत्वमुच्यत इत्यतः फल-स्नेहराहित्यादियुक्तकर्मैव कर्मकौशलपदेनोच्यत इति भावेनाह **यथावदिति** ॥ 'योगस्थः' इत्यत्र भगवज्ज्ञानस्यापरिगृहीतत्वादत्रापि न तदभिप्रेतमित्यत आह **भगवदिति** ॥ एतच्छ्लोकार्थ-विवरणात्मकोत्तरश्लोके 'बुद्धियुक्तः' इति भगवज्ज्ञानस्य अपरोक्षज्ञानसाधनत्वेन गृहीतत्वादत्र पूर्वत्रापि तदभिमतमिति भावः ॥

***भा०दी०***— भाष्यमवतारयितुं बुद्धियुक्त इति श्लोके तस्मादिति उत्तरार्धम् अवतारयति **नन्विति** । योगाय युज्यस्वेत्यस्यार्थो **ज्ञानमापाद्यमिति** । राहित्यादीत्यादिपदेन भगवज्ज्ञानादिग्रहः ॥ **इत्यत्रेति** । श्लोके त्यागसमत्वयोरेव योगशब्दार्थत्वेनोक्त्या भगवज्ज्ञानस्य योगशब्दार्थत्वेन अपरिग्रहादित्यर्थः । **अत्रापि** बुद्धियुक्त इति श्लोकेऽपीत्यर्थः । **अपरोक्षेति** । मनीषिपदोक्तापरोक्षे-त्यर्थः ॥ **पूर्वत्रेति** । एतच्छ्लोकार्थविवरणपूर्वकं बुद्धिमोहतरणपदोक्तं ज्ञानफलमुच्यते ॥

**गीता**

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

*वि०वि०*— कियत्पर्यन्तं मुमुक्षुणा निष्कामतयेश्वरप्रीत्यर्थं कर्माण्यवश्यं कर्तव्यानीत्यत आह **यदेति** । यदा ते बुद्धिः अन्तःकरणम् । मोहकलिलम् अन्यथाज्ञानलक्षणं दोषम् । व्यतितरिष्यति परित्यक्ष्यति । तदा महद्भ्यः श्रुतस्य श्रोतव्यस्य च वेदादेर्नितरां लाभं गन्ताऽसि प्राप्स्यसीत्यर्थः । तदुक्तम्—

'बुद्धिमोहो यदा न स्यादन्यथा ज्ञानलक्षणः ।
श्रोतव्यश्रुतसाफल्यं तदा प्राप्नोति मानवः ॥ इति ॥ ५२ ॥

*वा०ल०*— 'यदा ते मोहकलिलं' इत्यत्र मोहाख्यं कलिलं कर्दमम् । निर्वेदं फलम् ॥ ५२ ॥

***सा०सं०***— फलकामनादिवर्जितानि ईश्वराराधनरूपाणि कर्माणि मोक्षसाधनज्ञानार्थिना कियत्पयन्तं कर्तव्यानीत्यत आह **यदा त इति** । **यदा ते** तव । **बुद्धिः** अन्तःकरणम् । **मोहकलिलम्** अन्यथाज्ञानलक्षणं दोषं **व्यतितरिष्यति** परित्यक्ष्यति **तदा** महद्भ्यः **श्रुतस्य श्रोतव्यस्य च** । सर्वकर्मोपलक्षणमेतत् । **तस्य** सर्वस्य **निर्वेदं** नितरां लाभं **गन्ताऽसि** प्राप्स्यसि । मुक्तिहेतुज्ञानसाधनभूतो निवृत्तकर्मानुष्ठानरूपो योगः साक्षाज्ज्ञानहेतुश्रवणादिरूपप्रमाणस्यादृष्टद्वारा सत्वशुद्ध्युत्पादनेनोपकारकः सन् मिथ्याज्ञानदोषनिवृत्तिपर्यन्तं तत्त्वज्ञानोदयपर्यन्तं च कर्तव्य इति भावः ॥ ५२ ॥

***अ०प्र०***— कदा तत्पदमहं प्राप्स्यामीत्यपेक्षायां **यदेति** द्वाभ्यां आह ।

हे पार्थ ! यदा[१], ते[२], बुद्धिः[३], मोहकलिलं[४], व्यतितरिष्यति[५], तदा[६], श्रोतव्यस्य[७], श्रुतस्य च[८], निर्वेदं[९], गन्तासि[१०] इत्यन्वयः ।

हे पार्थ ! यदा परमेश्वराराधने क्रियमाणे तत्प्रसादेन यदा, ते = तव[२], बुद्धिः = अन्तःकरणं[३], मोहकलिलं अन्यथाज्ञानलक्षणदोषं यद्वा देहेष्वात्म-बुद्धिस्तदेव कलिलं देहाभिमानरूपगहनं दुर्गं[४], व्यतितरिष्यति = विशेषेण अतितरिष्यति यद्वा त्यक्ष्यति[५], तदा[६], श्रोतव्यस्य[७], श्रुतस्य च[८], सद्भिः श्रोतव्यस्य श्रुतस्य चार्थस्य[८], निर्वेदं वैराग्यं नितरां लाभो वा[९], गन्तासि = प्राप्स्यसीत्यर्थः ॥ ५२॥

**भाष्यम्**

**कियत्पर्यन्तं अवश्यं कर्तव्यानि मुमुक्षुणा एवं कर्माणीति ? आह यदेति । निर्वेदं नितरां लाभम् । प्रयोगात्— 'तस्माद् ब्रह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् ।' इत्यादि । न हि तत्र वैराग्यमुपपद्यते । तथा सति 'पाण्डित्यात्' इति स्यात् । न च ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति ।**

**'आत्मारामा हि मुनयो निर्ग्राह्या अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥'**

**इति वचनात् । अनुष्ठानाच्च शुकादीनाम् । न च तेषां फलं सुखं नास्ति । तस्यैव महत्सुखत्वात् तेषाम्—**

**'या निर्वृतिस्तनुभृतां तव पादपद्म-**
**ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।**
**सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्-**
**किम्वन्तकासिलुळितात् पततां विमानात् ॥'**

**इत्यादिवचनात् । तेषामप्युपासनादिफलस्य साधितत्वात् ।**

*प०टी०*— उत्तरश्लोकमवतार्य व्याचष्टे **कियदिति** । 'निर्वेद'शब्दस्य वैराग्ये रूढत्वेऽप्यत्र लाभार्थता प्रयोगबलादित्याह **निर्वेदमिति** । श्रुतावपि 'निर्वेद'शब्दो वैराग्यार्थः किं न स्यात् ? इत्यत आह **न चेति** । अस्तु लाभार्थता निर्वेदशब्दस्यात्र वैराग्यार्थता किं न स्यात् ? इत्यत आह **न च इति** । किं बाधकं ज्ञानिनां भगवन्महिमादौ विरक्त्यभ्युपगमे ? इत्याशङ्क्य, किं तेषां श्रवणाद्यभावादेतत् कल्प्यते ? फलाभावाद्वा ? इति विकल्प्य, आद्यं दूषयति **आत्मारामा इति** । द्वितीयं दूषयति **न चेति** । न केवलं तेषां श्रवणाद्येव सुखं, किन्त्वस्ति मोक्षे सुखातिशय इत्याह **तेषामपीति** ॥ ५२ ॥

*न०टी०*—कियत्पर्यन्तमवश्यकर्तव्यानि कर्माण्युक्तलक्षणानि मुमुक्षुणा ? अन्यथा मुक्त्यभावः । कस्मादुपरितनकर्माभावेऽपि नामुक्तिः ? किन्तु तत्रानन्दवृद्ध्या एव शुभकर्माणीत्यभिप्रायाकाङ्क्षोत्तरत्वेनोत्तरश्लोकमवतारयति **कियदिति** । निर्वेदशब्दश्च छान्दसत्त्वान्नुमागमाभावेऽपि लाभमाचष्टे प्रयोगबलादिति भावेनाह **निर्वेदमिति** । भगवदापरोक्षमेव नितरां लाभ इत्युत्तरश्लोके स्पष्टयिष्यति । 'निर्विद्य' इत्यत्रापि वैराग्यार्थता किं न स्यात् ? इत्यत आह **न हीति** । न च प्रयोगमात्रबलान्निर्वेदशब्दस्य लाभार्थता, किन्त्वितरस्यानुपपन्नत्वात्, वचनविरोधाच्चेत्याह **न चेति** । श्रवणाद्यनुष्ठानदर्शनाच्च शुकादीनामपरोक्षदृशां न श्रुतादौ विरक्तिरित्याह **अनुष्ठानाच्चेति** । ननु तेषां मुक्तेः सिद्धत्वात् किमर्थं श्रवणादिः ? इत्याशङ्क्य, न तावत् फलाभावात् तत्रापवृत्तिः । तस्यैव परमसुखरूपत्वादित्येतत् सप्रमाणकमाह **न चेति** । ब्रह्मणि स्वमहिमानि इति स्वरूपेणाविर्भूते मुक्त इत्यर्थः । न केवलं भगवच्छ्रवणादेरेव सुखरूपत्वाज्ज्ञानिनामपि तत्र प्रवृत्तिः । किन्तु तत्साध्यफलसद्भावाच्चेत्याह **तेषामिति** । 'बुद्धियुक्तः' इति श्लोकव्याख्यानावसर इति शेषः ॥ ५२ ॥

**प्र०दी०**— 'यदा ते' इति श्लोके योगसम्बन्धि न किमप्युच्यत इत्यतस्तत्सङ्गतिमाह— **कियदिति**। एवं फलकामनादिवर्जितानीश्वराराधनरूपाणि। इत्याकाङ्क्षायामाहेत्यर्थः।

नन्वियमाकाङ्क्षैवानुपपन्ना। योगो हि ज्ञानसाधनंतयोपदिष्टः। साधनं च साध्यप्राप्तिपर्यन्तमनुष्ठेयमिति प्रसिद्धमेव। नियतपूर्वक्षणवृत्ति कारणमिति हि तल्लक्षणम्। उच्यते। योगो हि न साक्षाज्ज्ञानसाधनम्। किन्तु श्रवणादिकमेव। प्रमितेः प्रमाणफलत्वात्। योगस्त्वदृष्टद्वारा सत्त्वशुद्धिमुत्पाद्य श्रवणादीनामुपकरोति। उपकारकस्य च द्वयी गतिर्दृष्टा। अतो युक्तैवेयमाकाङ्क्षेति। तथापि जिज्ञासुनेति वक्तव्यम्। सत्यम्। मोक्षसाधनज्ञानार्थिनेत्येतावतोऽर्थस्य ग्रहणाय मुमुक्षुणेत्युक्तम्।

निर्वेदं वैराग्यमित्यन्यथाप्रतीतिनिरासायाह— **निर्वेदमिति**। ननु निष्पूर्वो विदिर्वैराग्ये रूढः। तत्कुतो लाभार्थतेत्यत आह— **प्रयोगादिति**। अस्यामपि श्रुतौ वैराग्यार्थता किं न स्यादित्यत आह— **न हीति**। कुतो नोपपद्यत इत्यत आह— **तथा सतीति**। 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति कात्यायनवचनात्पाण्डित्यस्य विरामार्थधातुयोगेनापादानत्वप्राप्तावपादाने च पञ्चमी स्यान्न द्वितीयेत्यर्थः। इदमत्राभिप्रेतम्। निरुपसर्गः सत्तार्थस्यैव विदेरर्थं बाधित्वा तं वैराग्यार्थं व्यवस्थापयति। निर्विद्यत इति कर्तरि प्रयोगदर्शनात्। लाभार्थस्य विदेरर्थं तु विशिनष्टचेव। केवलं निर्विदन्ति निर्विदन्त इति वैराग्ये तत्प्रयोगदर्शनादिति। अथवाऽस्तु सर्वत्र निरोधात्वर्थबाधकत्वम्। विशेषकत्वमपि क्वचित् किं न स्यात्। 'व्याददाति' इत्यादावुभयदर्शनादिति। न केवलं गीतायां प्रयोगाल्लाभार्थता। किन्तु वैराग्यार्थानुपपत्तेश्चेत्याह— **न चेति**। अनेनान्तःकरणस्य मोहकलिलातिक्रमो नाम ज्ञानप्राप्तिरिति सूचितं भवति। आदिपदेन तदुपयुक्तं गृह्यते। कुतो न भवतीत्यत आह— **आत्मेति**। भक्तिं श्रवणादिलक्षणां "कस्य वा बृहतीमेतामात्मारामः समभ्यसत्" इत्यस्योत्तरत्वात्। अनुष्ठानाच्च श्रवणादेरिति शेषः।

ननु शुकादीनां श्रवणाद्यनुष्ठानेऽपि फलं नास्ति। तत्फलस्य ज्ञानस्य प्राप्तत्वात्। फलाभावानुसन्धानमेवात्र वैराग्यशब्देनाभिप्रेतम्। यथाऽह मायावादी— "तदा श्रोतव्यं च श्रुतं च निष्फलं प्रतिपद्यत इत्यभिप्रायः" इति। अनुष्ठानं तु लोकसङ्ग्रहार्थं संस्काराद्वेत्यत आह— **न चेति**। कुतो नेत्यत आह— **तस्यैवेति**। तस्यैव श्रवणादेरेव। स्थान्यादेशोक्तिव्यत्ययेन द्वन्द्वेऽल्पाच्तरस्य परनिपातेन च "आन्महतः समानाधिकरणजातीययोः" (६-३-४६) इत्यस्य विधेरनित्यत्वज्ञापनात्, 'महत्तत्त्वाद्विकुर्वाणात्' इत्यादिप्रयोगदर्शनाच्च महत्सुखत्वादिति युक्तम्। तथाऽपि श्रवणादिकमेव

कथं सुखम् । उत्तरक्षण एव महासुखोदयादैक्योपचार इत्यदोषः । तिष्ठतु तावत्कालान्तरभाविफलमित्येवशब्दः । नन्वस्मदादीनां श्रवणोत्तरक्षणे सुखं नोत्पद्यत इत्यत आह— **तेषामिति** । रसिकानामित्यर्थः । न हि पितृजीवनादिवार्ताश्रवणेनान्येषामिव पुत्रस्यापि न सुखेनोत्पत्तव्यमिति । अस्तु सम्भावना । निश्चयस्तु कुत इत्यत आह— **येति** । भवतो भवज्जनानां च स्वमहिमन्याविर्भूतस्वरूपे । आब्रह्मणि अल्पमुक्तेऽपि । न केवलं तात्कालिकं सुखं तत्फलम् । किन्तु मुक्तावानन्दवृद्धिश्चेत्याह— **तेषामपीति** । ज्ञानिनामपि ।

*भा०दी०*— **एवमित्यनुवादः** । **फलेत्यादिव्याख्या** । **योगो हीति** । निवृत्तं कर्म चेत्यर्थः । **उपदिष्ट इति** । 'बुद्धियोगे त्विमां शृण्वि'त्यादि ग्रन्थेनेति भावः । कार्यप्राप्त्युत्तरकालमपि कुतो नानुष्ठेयं कारणमित्यतः कारणत्वव्याघातादिति भावेनाह **नियतपूर्वेति** । **द्वयी गतिरिति** । पूर्वमनुष्ठानं पश्चादनुष्ठानं चेति द्वयी गतिरित्यर्थः । ज्योतिष्टोमादिप्रधानयागोपकारकाणां मध्ये केषाञ्चित्पूर्वमनुष्ठानस्य केषाञ्चित्पश्चादनुष्ठानस्य दृष्टेरिति भावः । **कात्यायनेति** । वार्तिककारवचनादित्यर्थः । द्वितीयस्यान्त्यपादे ध्रुवमपायेऽपादानमित्यत्र वार्तिकमेतत् । पापाज्जिगुप्सते पापाद्विरमते धामात्प्रमाद्यतीत्यादाविव पञ्चमी स्यान्न द्वितीयाविभक्तिरित्यर्थः । लाभार्थस्य कर्मणि प्रयोग इति भ्रमनिरासायाह **कर्तरि प्रयोगदर्शनादिति** । गतार्थस्योभयपदित्वादाह **निर्विदन्ति निर्विदन्ते इतीति** । **इत्यादावुभयेति** । दानार्थबाधेन मुखविदारणार्थकत्वविशेषणादानार्थत्वस्य च दर्शनादित्यर्थः । न केवलं प्रयोगाद्गीतायां लाभार्थतेति योजना । **अनेनेति** । ज्ञानिनामित्यादि कथनेनेत्यर्थः । **तदुपयुक्तमिति** । भगवन्महिमाश्रवणोपयुक्तरूपसम्पत्तिसद्धर्मानुष्ठानादिकमित्यर्थः । भगवन्महिमश्रवणे निरुक्तिर्नेत्यर्थे प्रमाणत्वे घटनायाह **भक्तिश्रवणादि-लक्षणमिति** । महिमाकीर्तनादिरादिपदार्थः । कुत एवं व्याख्येत्यत आह **कस्येति** । प्रथमस्कन्धे सप्तमेऽध्याये आत्मारामः । शुकाचार्यो महतीमेतां भागवतसंहितां कस्य वा हेतोः समभ्यसदिति शौनकप्रश्नोत्तरत्वेन सूतपौराणिकैरात्मारामा हीत्यादेरुक्तत्वात् भक्तिपदस्यायमर्थोऽवगम्यत इति भावः ।

ननु आन् महतः सामानाधिकरणजातीययोरिति षष्ठतृतीयपादे समानाधिकरणे उत्तरपदे जातीयप्रत्यये च परतः महत आकारादेशो भवती-त्युक्तेर्महासुखत्वादिति भाव्यमित्यत आह **स्थान्यादेशेति** । महतः अणिति निर्देष्टव्ये स्थान्यादेशव्यत्यासेन तथा जातीयसामानाधिकरणयोरिति निर्देष्टव्यम् । अल्पाच्तरं पूर्वं नित्वल्याच्तरस्य पूर्वनिपातोक्तेस्तथापि सामानाधिकरणजातीययोरिति निर्देशेन चात्वविधेरनित्यत्वज्ञापनात् तृतीयस्कन्धे षष्ठेऽध्याये महत्तत्त्वाद्विकुर्वाणादहंतत्त्वमजायतेति

प्रयोगाच्चेत्यर्थः । वैशेषिकनयसुधायां तु महत्तत्त्वपदस्य संज्ञात्वाद्बहुलं नमीति वाक्यांशत्वं तत्र नेत्यु-क्तम् । ब्रह्मणीत्यत्राऽप्रश्लेषं कृत्वा तस्येप्यदर्थत्वं चापिपदस्य भिन्नक्रमेणार्धमाह **आब्रह्म-ण्यल्पमुक्तेति** । जीवन्मुक्तेऽपीत्यर्थः । तत्र हेतुः **आविर्भूतस्वरूप इति** । अपरोक्षिणोऽपि बहुतर-स्वरूपाविर्भावस्य प्रागुक्तेः । चतुर्थस्कन्धनवमाध्यायटीकायां तु परब्रह्मणि स्थितस्यापि ध्यानादिकं विना भवतीति तात्पर्यानुरोधेन स्वमहिमनि स्वाधारे ब्रह्मणि स्थितस्येति शेषः । ध्यानादिकं विना सन्निवृत्तिर्न भवतीति । अतकासिलुलितात् भगवद्भ्रूविजृम्भ-नारण्यखड्गविलोडिताद्विमात्स्वर्गात्पत-नासावृत्तिमाभूत् न भवतीति । **किमु** इति व्याख्यानम् । **अल्पमुक्त** इत्यादि तु व्याख्यानान्तरम् ।

*भा०र०*— भाष्ये "एवम्" इत्यस्य एवंविधानीत्यर्थ इति भावेन व्याचष्टे **एवं फलकामने-त्यादि** । 'इति' इत्यनूद्योत्तरशङ्कोत्थापनाय तत्र शेषमाह **इत्याकाङ्क्षायामिति** । आकाङ्क्षानुपपत्ति-मुपपादयति **योगो हीति** । **तल्लक्षणं** साधनलक्षणम् । **योगः** साङ्गं कर्म । श्रवणादिकमेव साक्षा-ज्ज्ञानसाधनमिति वर्तते । योगस्यासाधनत्वं श्रवणादेस्साधनत्वं चोपपादयति **प्रमितेरिति** । तर्हि योगविधानं व्यर्थमित्यत आह **योगस्त्विति** । **सत्त्वशुद्धिम्** अन्तःकरणनैर्मल्यम् । 'श्रवणादीनाम्' इत्यत्र श्रवणमागमः, मननं युक्त्यनुसन्धानरूपानुमानम्, निदिध्यासनं प्रत्यक्षमिति त्रयाणां प्रमा-णानामित्यर्थः । **द्वयी गतिरिति** । ज्योतिष्टोमादिप्रधानयागोपकारककलापमध्ये कस्यचित् पूर्वमनु-ष्ठेयत्वं कस्यचित् पश्चादनुष्ठेयत्वमित्येवंरूपा द्वयी गतिर्दृश्यते । योगश्च श्रवणाद्युपकारकः, कां गति-मवलम्बतामिति विचाराभियुक्तस्य युक्तैव कियत्पर्यन्तमित्याकाङ्क्षेत्यर्थः । ननु योगो ज्ञानकामुकेन ज्ञानसाधनोपकारकतयाऽनुष्ठेयश्चेज्जिज्ञासुनेति भाषणीयमिति शङ्कते **तथाऽपीति** । उक्ताकाङ्क्षायाः कियदिति भाष्यतात्पर्योक्त्या समर्थनेऽपीत्यर्थः । "निर्वेदं वैराग्यम्" इति शङ्करभाष्यमनुवदति **निर्वेदमिति** । 'निष्पूर्वः' इत्यत्र "इणुपधस्य चाप्रत्ययस्य" इति षत्वम् । 'निःपूर्व' इत्यपि क्वचित् पाठः । "ब्राह्मणो निर्वेदमायात्", "निर्वेदाद् गहनं वनम्" इत्यादिप्रयोगप्राचुर्यादुक्तम् **रूढ इति** । कात्यायनवचने विरामो विरतिर्वैराग्यमित्यर्थः ।

ननु प्रचुरप्रयोगः पूर्वपक्षिहेतुः 'प्रयोगात्' इति भाष्योक्तहेतुना कथं दूषणीय इत्यतस्तदभि-प्रायमाह **इदमत्रेति** । विद सत्तायामिति धातुं पक्षीकृत्य तस्योक्तहेतुना वैराग्यार्थत्वं सिषाधयिषितम्, "विदॢ लाभ" इति लाभार्थकं वेति विकल्प्य, नाद्यः, सिद्धसाधनादित्याह **सत्तार्थस्येति** । **कर्तरि** निर्वेदकर्तरि । कर्मणि यगन्तत्वभ्रमनिरासायेदं स्वरूपकथनम् । द्वितीयपक्षे हेतोरसिद्धिमाह **तत्प्रयोगा-दर्शनादिति** । निरुपसृष्टस्य विन्दतेर्वैराग्ये न प्रयोगो दृश्यते । प्रत्युत विशिष्टलाभे प्रयोगाः अनेके

दृश्यन्त इति भावेन स्वरितेत्त्वादुभयपदी विन्दतिरुदाहृतः । सर्वत्र निर्वहति निश्चलति निर्णयति निश्चिनोतीत्यादौ प्रायेण धात्वर्थबाधकत्वं निरुपसर्गस्यास्त्वित्यर्थः । बाधकत्वे विशेषकत्वे चोदाहरणमाह **व्याददातीति** । "आङो दोऽनास्यविहरणे" इति सूत्रे विद्यामादत्ते । आस्यविदारणे तु आस्यं व्याददातीत्युदाहृतम् । तत्राङुपसर्गो ददातिधात्वर्थस्य दानस्य बाधको दृष्टः । आदत्ते गृह्णातीत्यर्थविभासात् । स एव व्याददातीत्यत्र विशब्देन ददात्यर्थे आस्यविदारणे बोधिते तत्र विशेषको दृष्टः । मुखविदारणं सम्यक् करोतीत्यर्थप्रतीतेः । निर्वेदमित्यत्र निरो धात्वर्थविशेषकत्वे युक्तं "नितरां लाभम्" इति भाषणमिति भावः । 'इत्यादौ' इत्यादिशब्देन निर्मिमीते निर्मयत इत्याद्युदाहरणं ग्राह्यम् । तत्र माङ्माने इति धात्वर्थस्य मानस्य बाधको निरुपसर्गः तं करणार्थं व्यवस्थापयति । सोऽयं निरेव मेङ् प्रणिदान इति धात्वर्थस्य प्रणिदानशब्दितविनिमयस्य विशेषकः । निर्मिमीत इति करणस्येव निर्मयत इति प्रणिदानस्यैव विशेषप्रतीतेरिति । गीतायां निर्वेदशब्दस्य **प्रयोगात्** "पाण्डित्यं निर्विद्य" इति श्रौतप्रयोगात् । **अनेन** 'ज्ञानिनाम्' इति निर्वेदगन्तॄणां ज्ञानित्वभाषणेन । **आदिपदेन** भगवन्महिमादीत्यादिपदेन । **तदुपयुक्तं** भगवन्महिमश्रवणोपयुक्तं भागवतमहिमश्रवणानुग्रहादिकं गृह्यत इत्यर्थः । **न भवति** विरक्तिः ।

ननु 'आत्मारामाः' इत्यत्र मुनयः श्रवणादिकं कुर्वन्तीत्यनुक्तेः कथमिदं ज्ञानिनां श्रवणादौ विरागो न भवतीत्यत्र प्रमाणमित्यत आह **भक्तिं श्रवणादिलक्षणामिति** । श्रवणकीर्तनस्मरणादेर्भक्तिज्ञापकत्वेनोपचारेण भक्तिशब्दार्थत्वाद् विवक्षितार्थे प्रमाणत्वमिति भावः । तथा च वक्ष्यति नवमे श्रवणादेर्भक्तिलक्षणत्वं 'श्रवणकीर्तनादिभक्तिलिङ्गरहितः' इति । भक्तिशब्देन श्रवणादिकं ग्राह्यमित्यत्रान्तरङ्गं ज्ञापकमाह **कस्य वेति** । "स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः । कस्य वा बृहतीमेतामात्मारामस्समभ्यसत्" इत्यत्र सः शुकाचार्यः मनसो विषयेभ्यो निवृत्तौ निरतः सर्वत्र चतुर्विधेषु पुरुषार्थेषु कस्य वा पुरुषार्थस्य हेतोः बृहतीं महतीम् एतां भागवतीं संहिताम् आत्मनि परमात्मनि आ सम्यग् रमत इत्यात्मारामस्समभ्यसत् । अभिपूर्वादसु क्षेपण इत्यस्माल्लुङ् । "आडजादीनाम्" इत्याडागमः । श्यन्विकरणश्च बहुलं छन्दसीति न कुतः । उक्तधातोरेव लुङि आडागमथुगागमानाश्रयणे वा असदिति रूपम् । अस गतिदीप्त्यादानेष्विति धातोर्वाऽऽडागमो लुङि नाश्रितः । समादत्त श्रवणकीर्तनादिनाऽऽवर्तितवानिति शौनकप्रश्ने समभ्यासशब्देन "यस्यां वै श्रूयमाणायाम्" इति प्रकृतश्रवणस्य "शुकमध्यापयामास" इति कीर्तनस्य, तदनुषक्तस्मरणादेश्च प्राप्तत्वेन तदुत्तररूपे "आत्मारामा हि" इत्यत्रापि भक्तिशब्देन श्रवणादिग्रहणं प्रश्नप्रतिवचनावैरूप्याय न्याय्यमिति हृदयम् । आत्मारामा मुनयस्तदितरे देवादयश्च निर्ग्रह्याः निरुपादेयाः प्रयोजनोद्देशशून्या

अपि उरुक्रमे भगवति अहैतुकीं निर्निमित्तां भक्तिमुक्तलक्षणां कुर्वन्ति । यतः इत्थंभूतगुणः निरपेक्ष-भक्तमनोवशीकरणक्षमगुणशालीति भाष्योदाहृतभागवतश्लोकार्थो नातिगूढ इति नोक्तः । भागवत-टीकायां तु "आत्मारामश्च स्वरूपसुखे रममाणा अपि अत एव निर्ग्राह्या मुनयः उत्तमाधिकारिणो मुक्ताः उरुक्रमे अहैतुकीं प्रयोजनविधुराम् आनन्दरूपां भक्तिं कुर्वते । किं पुनर्बहुजन्मापेक्षितपरतत्त्व-भक्त्यादिसाधनातिशयेन मुक्तावानन्दातिशयमाकाङ्क्षमाणाः शुकादयस्तत्र भक्तिं कुर्वन्तीति वक्तव्यम् । कुतः ? इत्थम्भूतगुणो हरिः निरपेक्षमुक्तवशीकरणक्षमगुणः । किमुतामुक्तमनोवशीकरणक्षमगुण इति वाच्यमति भावः" इति व्याख्यातम् । भाष्यमनूद्य तत्र शेषमाह **अनुष्ठानादिति** । आचारदर्शनमप्यत्र प्रमाणमिति चशब्द इति भावः । **तत्फलस्य** अनुष्ठानफलस्य । ननु शुकादिकर्तृकश्रवणाद्यनुष्ठानस्य फलाभावोपपादनं ज्ञानिनां श्रवणादौ विरक्तिर्नास्तीत्यत्र कथमुपयोगीत्यत आह **फलाभावानुसन्धान-मेवेति** । **मायावादी** शङ्करः । स्वभाष्ये **प्रतिपद्यते** अनुसन्धत्ते । एवमनुसन्दधानः किमिति तदनु-तिष्ठेदित्यत आह **अनुष्ठानं त्विति** ॥ **संस्काराद्** भावनाख्यादनादिवासनाबलात् । पूर्ववाक्ये प्रकृतस्य श्रवणादेस्तच्छब्देन परामर्शो न तु पूर्ववाक्यप्रकृतफलस्यैवेत्याह **तस्यैव श्रवणादेरेवेति** ।

ननु 'महत्सुखत्वात्' इति कथम् ? "आन्महतःसमानाधिकरणजातीययोः" इति महच्छब्दस्य समानाधिकरणसमासे आत्त्वे सति महाव्रतमित्यादिवन्महासुखत्वादिति वाच्यत्वादित्यत आह **स्थान्यादेशोक्तिव्यत्ययेनेति** । "इको यणचि", "स्तोः श्चुना श्चुः" इत्यादिवन्महत आदिति निर्देशे कर्तव्ये "आन्महतः" इति स्थान्यादेशोक्तिव्यत्ययः कृतः । तेनाऽत्त्वविधेरनित्यत्वं ज्ञायते । उक्त-व्यत्ययस्यानन्यथासिद्धस्य किञ्चिज्ज्ञापकत्वौचित्यादिति भावः । ननु यदि स्थान्यादेशयोः पौर्वापर्य-मवश्यं कर्तव्यमिति नियमः स्यात् तदा तदुक्तिव्यत्यय उक्तरीत्या ज्ञापकः स्यात् । न चैवम् । "मो राजि समः क्वौ" इत्यादौ तददर्शनात् । किञ्च स्थान्यादेशयोः पौर्वापर्यनियमे उद्देश्यविधेययोः पौर्वापर्यनियम एव मूलत्वेन वाच्यः । न च असौ अस्ति । "वृद्धिरादैच्", "आर्धधातुकं शेषः", "कृदतिङ्" इत्यादौ व्यभिचारादित्यस्वरसादाह **अल्पाच्तरस्येति** । समानाधिकरणश्च जातीयश्चेति द्वन्द्वे समानाधिकरणशब्दापेक्षया जातीयशब्दस्याल्पाच्तरत्वात् "अल्पाच्तरं पूर्वम्" इति पूर्वनिपाते कर्तव्येऽपि यत् परनिपातेनोच्चारणं तेन वाऽऽत्त्वविधिरनित्य इति ज्ञायत इत्यर्थः ।

ननु "लक्षणहेत्वोः क्रियायाः", "समुद्राभ्राद्घः" इत्यादिनिर्देशाज्ज्ञापकात् पूर्वनिपातप्रकरण-मनित्यमिति शाब्दिकसमयः । तदयं च निर्देशः पूर्वनिपातशास्त्रमनित्यमित्येव ज्ञापयेन्न पुनरात्त्व-विधेरनित्यत्वम् । अन्यथा "समुद्राभ्राद्घः" इत्यादिना विहितस्तद्धितोऽप्यनित्यः स्यात् । अतः सामर्थ्याभावान्न ज्ञापकतेत्यरुचेराह **इत्यादिप्रयोगदर्शनाच्चेति** । आदिपदेन "परममहत्परिमाणम्"

इत्यादितान्त्रिकप्रयोगसङ्ग्रहः । अयं भावः । ''पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन'' इति सूत्रेण प्रापितपूर्वनिपातस्याप्येकशब्दस्य ''दोषैकदृक् पुरोभागी'', ''ह्लादैकमयी'' इत्यादिप्रयोग-दर्शनेन सङ्ख्यार्थकस्यैवोक्तशास्त्रतः पूर्वनिपातो न केवलार्थस्येत्यर्थविशेषाभिधायकस्यैव पूर्वनिपातो यथा नियमितः तथाऽत्रापि महच्छब्दस्य ''पृषन्महद्बृहज्जगच्छतृवच्च'' इत्युणादावतिप्रत्ययान्ततया व्युत्पादितस्य ''विशालं पृथुलं महत्'' इति कोशादिषु वैपुल्यवाचितया प्रसिद्धस्यैव ग्रहणेन ''सान्त-महतः'', ''सन्महत्परमोत्तमोत्कृष्टाः'',''आन्महतः'' इत्यादौ तस्यैव ग्रहणम् । न तु मह पूजायामिति विवरणान्महतेश्शतरि निष्पन्नं यन्महत्पदं तस्य । तच्च ''विशेषणं बहुलम्'' इति समस्यते । न तु 'सन्महत्' इति सूत्रेण । आत्त्वप्रसङ्गात् । न च शत्रन्तस्याप्यात्त्वं किं न स्यादिति वाच्यम् । उक्त-शत्रन्तस्य लोकविश्रुतत्वाभावात् । लोकप्रसिद्धेष्वेव शब्देषु शास्त्रप्रवृत्तेः । न पुनस्तदकरणशब्दे-ष्वपि । यथोक्तं वैयाकरणैः ''अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु'' इति । अत एव ''यत्तदेतेभ्यः परिमाणे वतुप्'',''यद्वृत्तान्नित्यम्'' इत्यादौ ''त्यजियजितनिभ्यो डिः'' इत्युणादौ यजिप्रकृतितया निष्पन्नस्यैव यच्छब्दस्य ग्रहणम् । न तु इणः शतरि निष्पन्नस्य यच्छब्दस्येति वैयाकरणानां पन्थाः । अतः महत् महीयमानं सुखं महत्सुखमिति सुभाषितमिति । ननु महत्तत्त्वादिप्रयोगे वैशेषिकाधिकरणसुधारीत्या ''बहुलं तणि'' इति शास्त्रान्महत्तत्त्वशब्दस्य द्रव्यविशेषसञ्ज्ञात्वादात्त्वं न भवतीति वक्तुं शक्यम् । ''महत्सुख-त्वात्'' इत्यत्रासञ्ज्ञात्वाद् भवितव्यमेवाऽत्त्वेनेति चेन्न । महच्च तत् तत्त्वं च महत्तत्त्वमिति विगृह्य समासे उक्तरीतेरेवानुसर्तव्यत्वात् । सुधायां तु केवलरूढत्वाश्रवणेन समाधानान्तरमुक्तमिति न तद्विसंवाद इति स्वामिनः । केचित्तु, ''परोऽग्रतोऽग्रेषु सर्तेः'' इति शास्त्रेणाग्रेशब्दस्यैदन्तत्वे निपातितेऽपि यथा ''यूथं तदग्रसरगर्वितकृष्णसारम्'' इत्यादिप्रयोगात् क्वचित् तदभावः एवमुक्त-प्रयोगादत्राऽत्त्वाभाव इति भाव इत्याहुः । भावदीपिकायां तु ''किं बाधकं ज्ञानिनां भगवन्महिमादौ विरत्त्यभ्युपगमे'' इत्याशङ्क्य ''किं तेषां श्रवणादिसद्भावे प्रमाणाभावादेतत् कल्प्यते फलाभावाद्वेति विकल्प्य आद्यं दूषयति **आत्मारामा इति** । द्वितीयं दूषयति **न चेति** । फलान्तराभावेऽपि श्रवणादिकमेव तान् प्रति महासुखरूपमिति भावः'' इति व्याख्यातम् । **तथाऽपि** शब्दानुपपत्ति-परिहारेऽपि । **उत्तरक्षण एव** श्रवणाद्युत्तरक्षण एव । **ऐक्योपचारः** कार्यकारणयोः । कार्यशब्देन कारणस्य व्यवहारः । शुकाद्यनुष्ठितश्रवणादेर्मोक्षे सुखातिशयहेतुत्वात् कथं तस्यैवेत्युच्यत इत्यत एवकारभावमाह **तिष्ठत्विति** । **कालान्तरभाविफलं** मोक्षगतसुखातिशयः । कथमनेनोक्तशङ्कानिरास इत्यतः तदर्थमाह **रसिकानामिति** । तदनुभवारूढं कर्तुमाह **न हीति** । ऐक्योपचारोऽप्यनेन

व्याख्यातः। साक्षात्कृतं भगवन्तं प्रति ध्रुवस्य वचनं ''या निर्वृतिः'' इति। ननु हे नाथ या निर्वृतिः यत् सुखम्, तनुभृतां प्राप्ततनुभरणफलानां रसिकानां तव पादपद्मध्यानात्, भवज्जनकथाश्रवणेन वा स्यात् भवति। सा स्वमहिमनि ब्रह्मण्यपि नाभूत् न भवति। अन्तकस्य मृत्योरसिना लुलितात् लूनात् विमानात् पततां पतनयोग्यानां स्वर्गिणां न भवतीति किमु वाच्यमिति श्लोकः भगवन्महिम-श्रवणात् सुखं भवतीत्यत्र कथं प्रमाणम्? भगवद्भक्तकथाश्रवणात् सुखस्यैवात्र कथनात्। परे ब्रह्मण्यपि तत्सुखं नास्तीत्यसम्भवदुक्तिकत्वाच्चेत्यतोऽत्र भवदिति तन्त्रम्। आब्रह्मशब्देनाल्पमुक्त एवोच्यत इति भावेनाह **भवतो भवदिति**। स्वः स्वीयोऽनुभवयोग्यः स्वरूपानन्दलक्षणो महिमा यस्य तस्मिन्निति विग्रहमभिप्रेत्य फलितमाह **स्वमहिमनीति**। ब्रह्मशब्दोऽप्यत एव तत्र युक्त इति सूचितम्। इदानीं संसारदशावच्छिन्नब्रह्मादिदेवताद्यपेक्षया नीचा अपि पूर्वकल्पे लिङ्गभङ्गेन सम्य-गाविर्भूतस्वरूपाः स्वानन्दं भुञ्जाना जनाः सन्ति। तत्स्वरूपसुखापेक्षयोत्तमानां देवानां संसारे भगव-न्महिमश्रवणादिजन्यं सुखमेवाधिकम्। आविर्भूतस्वरूपत्वात् तेषामेवाधिक्यम्। अनाविर्भूतस्वरूप-त्वान्महतामपि सुखमनधिकमिति न युक्तम्। न हि निर्णिक्तं कांस्यमनिर्णिक्तात् सुवर्णादधिकमिति सम्भवतीति भावः। नन्वेतच्छ्लोकतात्पर्ये ''परे ब्रह्मणि स्थितस्यापि ध्यानादिकं विना न भवति। सुप्तौ दृष्टत्वात्'' इति ब्रह्मशब्दः परब्रह्मपरतया व्याख्यातः। अतः कथमेवं व्याख्यानमिति चेत्, स्थितपदाध्याहारेण योजनान्तरं तदित्यविरोध इत्यभियुक्ताः। **तत्फलं** श्रवणादिफलम्। **साधित-त्वात्** ''न बृहत्फलमुपासनादिनिमित्तम्'' इत्यादिना प्रागेव साधितत्वादिति भाष्यार्थः स्फुट इति नोक्तः।

### भाष्यम्

**तारतम्याधिगतेश्च। तथाहि— यदि तारतम्यं न स्यात्,**

**'नाऽत्यन्तिकं विगणयन्त्यपि ते प्रसादम्' (भाग.३-१५-४८), 'नैकात्मतां मे स्पृहयन्ति केचित्' (भाग. ३-२५-२४), 'एकत्वमप्युत दीयमानं न गृह्णन्ति' (भाग. ३-२९-१३) इति मुक्तिमप्यनिच्छतामपि मोक्ष एव फलं, तमिच्छतामपि स एव भवति सुप्रतीकादीनामिति कथमनिच्छतां स्तुतिरुपपन्ना स्यात्? वचनाच्च—**

**'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे।**
**तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने॥**

योगिनां भिन्नलिङ्गानामाविर्भूतस्वरूपिणाम् ।
प्राप्तानां परमानन्दं तारतम्यं सदैव हि ॥ इति ॥

'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन ।
मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि ॥'

इति च । साम्यवचनं तु प्राचुर्यविषयं दुःखाभावविषयं च ।

तथा चोक्तम्—

'दुखाभावः परानन्दो लिङ्गभेदस्समा मताः ।
तथाऽपि परमानन्दो ज्ञानभेदात्तु भिद्यते ॥'

—इति नारायणाष्टाक्षरकल्पे ।

अतो न वैराग्यं श्रुतादावत्र विवक्षितम् । न च सङ्कोचे मानं किञ्चित् विद्यमान इतरत्र प्रयोगे । महद्भिः श्रवणीयस्य श्रुतस्य च वेदादेः फलं प्राप्स्यसीत्यर्थः ॥ ५२ ॥

*प०टी०*— ननु ज्ञानमात्रेण मोक्षसिद्धौ ज्ञानिकृतकर्मणाऽतिशयश्चेत्, तर्हि मुक्तौ तारतम्यं स्यात्, न च तद्युक्तम्, इत्याशङ्क्य, किं तारतम्यस्याद्युक्तरीत्या प्रमाणाभावात् ? 'परमं साम्यम्' इत्यादिवचनाद्वा ? इति विकल्प्य दूषयति **तारतम्येति** । द्वितीयं दूषयति **साम्येति** । अतो ज्ञानिनां भगवन्महिमादौ विरागायोगान्न निर्वेदशब्दस्य तदर्थतेत्युपसंहरति **अत इति** । श्रोतव्यादिपदेन भगवन्महिमेतराभिधानान्न वैराग्यार्थत्वेऽपि विरोध इत्यत आह **न चेति** । ननु सङ्कोचे लाभार्थत्वेऽपि समः । अन्यथा ज्ञानिनां ग्राम्यादिफलप्राप्तिरित्यत आह **महद्भिरिति** । ग्राम्यादेः श्रोतव्यशब्द-वाच्यत्वमेव नास्तीत्यर्थः ॥ ५२ ॥

*न०टी०*—ननु सर्वज्ञानिनां मुक्तेरेकविधत्वात् कथं पुनरुपासनादौ विशेषः ? इत्यत आह **तारतम्येति** । एतदेवोपपत्त्या वचनैरपि साधयति **तथाऽपीत्यादिना** । ननु तर्हि 'परमं साम्यमुपैति' इत्यादिवचनस्य का गतिः ? इत्यत आह **साम्यवचनं त्विति** । प्राचुर्यं प्रचुरानन्दं परमानन्द इत्यर्थः । तथा ह्यत्रोदाहरति 'दुःखाभावः परानन्दः' इति । न चैतावताऽऽनन्दमयाधिकरणविरोध इत्याह **तथाऽपीति** । **ज्ञानभेदात्** भक्तिज्ञानादितारतम्यादित्यर्थः । यत एवं ज्ञानिनामपि भगव-

न्महिमादिश्रवणाद्युपपत्तिः, अतस्तत्र न वैराग्यं विवक्षितमस्मिन् श्लोक इत्युपसंहरति **अत इति** । ननु वैराग्यवाच्यपि निर्वेदशब्दो भगवन्महिमान्यविषयमिति सङ्कोचः किं न स्यात् ? इत्यत आह **न चेति** । ज्ञानिनामपि भगवन्महिमादिश्रवणाद्यनुष्ठानान्यथानुपपत्त्या तदितरविषयत्वेन सङ्कोचः क्रियतैव । निर्वेदशब्दस्य लाभार्थेऽपि प्रयोगे विद्यमाने न युज्यत इत्यर्थः । नन्वेवमसद्विषयश्रोतव्य-श्रुतसाफल्यावाप्तिरपि किं न स्यात् ? इत्यत आह **महद्भिरिति** । अनुचितत्वादेव तन्निरास इति भावः ॥ ५२ ॥

*प्र०दी०*— ज्ञानोत्तरस्याप्यनुष्ठानस्य यदि फलं स्यात् तर्ह्यनुष्ठास्यैक्यविध्यनियमा-सम्भवात् स्वर्गवदपवर्गेऽपि तारतम्यं प्रसज्येत । न च तद्युक्तम् । अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चेत्यतो नेदमनिष्टमिति भावेनाह— **तारतम्येति** । प्रमाणविरोधाभावाच्चेति चार्थः । कुतः प्रमाणान्मुक्त-तारतम्याधिगतिरित्यतोऽर्थापत्तिं तावदाह— **तथा हीति** । यदि मुक्तानां तारतम्यं न स्यात् तदा मुक्तिमप्यनिच्छतामेकान्तिनां मोक्षमात्रं फलम् । तं मोक्षमिच्छतां सुप्रतीकादीनां स मोक्षो भवती-त्यङ्गीकार्यं स्यात् । तथा च 'नात्यन्तिकं' इति मोक्षमनिच्छतां स्तुतिः कथमुपपन्ना स्यात् । निमित्ता-भावात् । अतः स्तुत्यन्यथाऽनुपपत्त्येच्छतां मुक्तेरनिच्छतां मुक्तिरधिकेति गम्यत इत्यर्थः । आत्यन्तिकं मुक्तिहेतुम् । एकात्मता सायुज्यम् । एकत्वमपि तदेव । आगमाच्च तारतम्याधिगतिरित्याह— **वचनाच्चेति** । आविर्भूतस्वरूपिणामिति कर्मधारयादतिशयार्थ इनिः । अनेन जीवन्मुक्तावैश्वर्य-तारतम्येनार्थापत्तेरन्यथोपपत्तिः परिहृता । 'लिङ्गभेदेन', 'भिन्नलिङ्गानां' इत्याद्युक्तेः । 'परमं साम्य-मुपैति' इत्यादिवचनविरुद्धं मुक्ततारतम्यमित्यत आह— **साम्येति** । प्राचुर्यं पूर्णत्वम् । कुत एतत् । उक्तप्रमाणविरोधाद्विशेषवचनाच्चेत्याह— **तथा चेति** । यद्यपि परानन्दोऽलम्बुद्धिगोचरत्वमात्रेण समस्तथापीत्यन्वयः । 'न च ज्ञानिनां' इत्यादिनोक्तमर्थमुपसंहरति— **अत इति** ।

अस्तु तर्हि भगवन्महिमादिव्यतिरिक्तश्रुतादौ वैराग्यमत्र विवक्षितमित्यत आह— **न चेति** । निर्वेदशब्दस्य वैराग्यैकार्थकत्वे निश्चिते तद्बलाच्छ्रोतव्यादिशब्दस्यार्थसङ्कोचः क्रियेतापि । इतरत्र, नितरां लाभे तस्य श्रौतप्रयोगे विद्यमाने तु निर्मूलं सङ्कोचकल्पनमित्यर्थः । ननु लाभार्थताया-मप्यसच्छास्त्रादिव्युदासाय सङ्कोचः कार्य एवेत्यत आह— **महद्भिरिति** । अयोग्यतयैव तन्निरासः प्रकरणाद्वेति भावः ॥ ५२ ॥

*भा०दी०*— मा भूदित्यत्र माङ्योगे सर्वलकारापवादतया माङि लुङिति लुङो विधानादत्र मा भूदित्यस्य न भवतीत्यर्थ उक्तस्तात्पर्ये । परब्रह्मणीत्यादितात्पर्योक्तिरभिप्रायवर्णनेन तदनुगुणमेवेदं

व्याख्यानमित्येके, न कर्मधारया मत्वर्थीय इत्युक्तेराह **अतिशये इति** । तथापीत्यस्यार्थाप्रतीतेराह **यद्यपि परानन्द इति** । यद्वा समा इति परानन्दस्य साम्यमुक्त्वा पुनर्भिद्यत इत्युक्ते प्रतीतव्याहति-निरासाय साम्यासाम्योक्तेर्भिन्नविषयत्वाभिप्रायेणाह **यद्यपीति** । निरासो सच्छास्त्रस्येति योज्यम् । **प्रकरणाद्वेति** । 'बुद्धियोगे त्विमां शृण्वि'ति ज्ञानोपायश्रवणस्य प्रकरणादित्यर्थः ॥ ५२ ॥

*भा०र०*— **प्रमाणविरुद्धत्वात्** ''परमं साम्यमुपैति'' इत्यादिवचनविरुद्धत्वादित्यर्थः । इदं मुक्तितारतम्यप्रसञ्जनम् । ''तथा मुक्तिविशेषः'' इत्यादिप्रमाणस्य मुक्तितारतम्ये वक्ष्यमाणत्वादुक्तम् **तावदिति** । के तथाविधा इत्यत उक्तम् **एकान्तिनामिति** । ''एकान्तानां न कस्यचित्'' इत्युक्त-माधिकारिणां मुमुक्षाराहित्यस्यावगमादिति भावः । **सुप्रतीको** भक्तविशेषः । स इत्यनूद्यार्थमाह **स इति** । **निमित्तेति** । उभयेषामपि मोक्षफलकत्वाविशेषेऽतिशयलक्षणस्तुतिनिमित्ताभावात् स्तुतिरनुपपन्ना स्यादित्यर्थः । ''प्रीतिर्मयि स्यात् तव वर्धमाना'' इत्यादौ भगवत्प्रसादस्यैकान्ति-भिरपि प्रार्थ्यमानत्वावगमात् कथं न गणयन्तीत्युच्यत इत्यत आत्यन्तिकशब्दस्य विवक्षितमर्थमाह आत्यन्तिकं **मुक्तिहेतुमिति** । मुक्त्युपाधिकः प्रसादो न तैरर्थ्यत इत्यर्थः । ऐक्यप्रतीतिनिरासायाह **एकात्मतां सायुज्यमिति** । ''हरौ नियतचित्तत्वात् ग्रहवत् तत्प्रवेशनात् । मोक्षं तादात्म्यमित्याहुर्न तद्रूपत्वतः क्वचित्'' इति प्रमाणे एकात्मतापरपर्यायतादात्म्यशब्देन सायुज्यलक्षणमोक्षाभिधाना-देकात्मताशब्देन सायुज्यमेव ग्राह्यमिति भावः । ''एकात्मतां सायुज्यम्'' इति प्राग् व्याख्याने-ऽप्यनुजिघृक्षयाऽत्र पुनर्व्याख्यातवानिति मन्तव्यम् । **एकत्वमपीति** । ''सालोक्यसार्ष्टिसामीप्य-सारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति'' इत्यत्रोच्यमानमेकत्वमपि न स्वरूपैक्यम् । किन्तु सायुज्यमेवेत्यर्थः । ''नाऽत्यन्तिकम्'' इत्यादीनि तृतीयस्कन्धगतवाक्यानि । तत्र ''नाऽत्यन्तिकम्'' इति हरिं प्रति सनकादीनां वचनम् । ''नैकात्मतां मे'' इति, ''सालोक्यसार्ष्टि'' इति च, देवहूतिं प्रति भगवतः कपिलस्य वाक्यम् । तत्र ''नाऽत्यन्तिकं विगणयन्त्यपि ते प्रसादं किं वाऽन्यदर्पितभयं भ्रुव उन्नयैस्ते । येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः'' इति श्लोको भागवतटीकायां ''भक्तिज्ञानपरीपाकात् किञ्चित् पूर्वं च मुच्यते । दर्शनेन हरेस्तत्र नाऽनन्दः पूर्णतां व्रजेत्'' इति तात्पर्यानुसारेण अपरिपक्वकिञ्चिद्भगवद्दर्शनमात्रेण लिङ्गशरीरात्ययसमये विद्यमान-भक्तिज्ञानपरिपाकाभावात् सम्यगनभिव्यक्तानन्दं मोक्षमपि न विगणयन्ति । विशिष्टोऽयमिति बहु मन्यन्ते । कुतः ? यतः कीर्तनीयशुद्धयशःशालिनो भवतः कथायाः रसज्ञाः कथामृतपानतृप्ताः, भ्रुव उन्नयैरुज्जृम्भणविशेषैरर्पितभयमन्यत् पारमेष्ठ्यादिपदं न गणयन्तीति, किमु वक्तव्यं कुशला इति । ''मुमुक्षोः केवलो भक्तो मुक्तावपि सुखी भवेत्'' इति वचनान्मोक्षेच्छुभ्योऽनपेक्षकाणां मुक्तावानन्दो-

द्रेकः स्यादिति भक्त्यापादनमेव साधीय इति बुद्धिपाटवं सूचयतीति आत्यन्तिकप्रसादपदं मोक्षार्थतया व्याख्यातम् । अत्र तु प्रसादस्य भगवद्गतस्य मोक्षरूपत्वायोगात् तत्पदस्वारस्यायाऽत्यन्तिकपदं तद्विशेषणं तदनुकूलं व्याख्येयमिति भावेन "मुक्तिहेतुम्" इति व्याख्यातम् । "नैकात्मतां मे" इति श्लोकः प्रागुक्तार्थः । "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" इत्यत्र "सार्ष्टिशब्देन समानैश्वर्यमुच्यते" इति टीका । "नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्णते ॥ तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यति" इति श्लोकतात्पर्यमन्यत्रोक्तं द्रष्टव्यम् । आविर्भूतं स्वरूपं येषामिति विग्रहे आविर्भूतस्वरूपशालिनामिति बहुव्रीहिणैव भावात् किं मत्वर्थीयेनिप्रत्ययेनेत्यत आह **अतिशयार्थ इति** । आविर्भूतं च तत् स्वरूपं च अतिशयेनाऽविर्भूतस्वरूपमेषामस्तीत्यातिशायनिक इनिप्रत्ययोऽत्रोत्पादित इति न वैफल्यशङ्केति भावः । अनेनोक्तवचनोदाहरणेनेत्युक्तं विवृणोति **लिङ्गभेदन इति** । आदिपदेन परमानन्दं प्राप्तानामित्यादिग्रहः । प्रकृतोपयोगाय प्राचुर्यपदार्थमाह **पूर्णत्वमिति** । स्वस्वयोग्यतापेक्षया पूर्तिरित्यर्थः । प्राचीनटीकायां तु "दुःखाभावः परानन्दः" इति वचनानुसारेण प्राचुर्यं परमानन्द इति व्याख्यातम् । प्राचुर्यं बाहुल्येन साम्यम् । असाम्यं त्वल्पमित्यन्यथाप्रतीतेर्वाऽऽह **पूर्णत्वमिति** । एतत् पूर्णत्वादिनैव साम्यं न त्वन्यगुणैरित्येतत् कुतः प्रमाणादवसेयमित्यर्थः । **उक्तेति** । "तथा मुक्तिविशेषः" इत्याद्युक्तप्रमाणमन्यथा विरुद्ध्यत इत्यर्थः ।

ननु परमानन्देऽपि कथं साम्यम् ? भगवदीयानन्दस्यानन्याधीनत्वादनवधिकत्वाच्चेत्यतः तथाऽपीत्येतदाकाङ्क्षां पूरयन् समत्वं विवक्षितमाह **यद्यपीति** । **ज्ञानभेदात्** ज्ञानभक्त्यादितारतम्यादिति भाष्यार्थः । **अत इतीति** । यत एवं ज्ञानिनामपि भगवन्महिमादिश्रवणाद्युपपत्तिरतोऽत्र श्लोके श्रुतादौ वैराग्यं न विवक्षितमिति भाष्यार्थः । क्रियेतापीत्यपिशब्दः सम्भावनायाम् । इतरत्रेत्यनूद्य **अर्थमाह इतरत्रेति** । **तस्य** निर्वेदशब्दस्य । सङ्कोचे मूलं शङ्कते **नन्विति** । **लाभार्थतायामपि** निर्वेदशब्दस्य । **अयोग्यतया** "श्रोतव्यस्य श्रुतस्य च" इत्यादावभ्यर्हितत्वान्महद्भिरिति कर्तृपदाध्याहारेऽसच्छास्त्रादौ महद्भिः श्रोतव्यत्वादेरयोग्यतापराहततया । **प्रकरणाद्वेति** । श्रोतव्यं श्रुतं च वेदाद्येव । तस्यैव "बुद्धिर्योगे त्विमां शृणु" इति मोक्षोपयोगिज्ञानत्वात् । वेदाद्येव च तादृशज्ञानजनकमिति प्रकरणबलादित्यर्थः ।

***गीताक्षरार्थस्तु***— फलकामनादिवर्जितानीश्वराराधनरूपाणि कर्माणि मोक्षसाधनज्ञानार्थिना कियत्पर्यन्तं कर्तव्यानीत्यत उच्यते **यदा त इति** । यदा ते तव बुद्धिः अन्तःकरणं मोहकलिलम् अन्यथाज्ञानलक्षणं दोषं व्यतितरिष्यति परित्यजति सम्यग्ज्ञानोदयवद् भवतीति यावत् । तदा

महद्भयः श्रोतव्यस्य श्रुतस्य स्वविहितसर्वकर्मोपलक्षणम् । वेदश्रवणादेः निर्वेदं नितरां लाभं गन्ताऽसि प्राप्स्यसीति यावत् । मुक्तिहेतुज्ञानसाधनभूतो निवृत्तधर्मानुष्ठानलक्षणो योगः साक्षाज्ज्ञानसाधन-श्रवणादिरूपप्रमाणस्यादृष्टद्वारा सत्त्वशुद्ध्युत्पादनेनोपकारकः सन् मिथ्याज्ञानलक्षणदोषनिवृत्त्यवान्तर-प्रयोजनः तत्त्वज्ञानोदयावधिकः कर्तव्य इति भावः ॥ ५२ ॥

**गीता**

## श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
## समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

***वि०वि०***— पूर्वश्लोकार्थविवरणपूर्वकं बुद्धिमोहतरणपदोक्तं सम्यग्ज्ञानफलमाह **श्रुति-विप्रतिपन्नेति** । पूर्वं श्रुतिभिर्वेदैः विप्रतिपन्ना विरुद्धा सती बुद्धिर्यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि चञ्चला न भवति । अनेन परोक्षज्ञानकाष्ठा दर्शिता । ततश्च समाधावचला ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानन्दमग्नत्वात् । एतेनापरोक्षज्ञानकाष्ठा दर्शिता । तदा योगं योगफलमवाप्यसि उपायसिद्धो भवसि इत्यर्थः ।

अथवा श्रुतिविप्रतिपन्नेति श्रुतौ विशेषेण प्रतिपन्नेत्यर्थः ।

'श्रुतिमार्गं प्रपन्ना तु तदर्थज्ञाननिश्चला ।
समाधानेन तु पुनरापरोक्ष्याच्च निश्चला ॥

विष्णौ प्राप्स्यति तद्योगं मुक्तो भूत्वा तदश्नुते ॥' इति ॥ ५३ ॥

***वा०ल०***— 'श्रुतिविप्रतिपन्ना ते' इत्यत्र श्रुतिभिः श्रवणैः वि विशेषेण प्रतिपन्ना उत्पन्ना, श्रुतीनां वि विचारेण प्रतिपन्ना उत्पन्ना वा ॥ ५३ ॥

***सा०सं०***— किं तन्मोहकलिलम्, कीदृशं च तदतितरणमित्याकाङ्क्षायां पुंसामधममध्यमो-त्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तमेव योगानुष्ठानविधिं स्पष्टयति **श्रुतीति** । परोक्षनिश्चयात् पूर्वाव-स्थायां श्रुतिभिर्वेदैः **विप्रतिपन्ना** विरुद्धा सती **बुद्धिर्यदा** वेदार्थानुकूलेन तत्त्वनिश्चयेनासच्छास्त्रैः, चालनहीना इदमदो वेति संशयानास्कन्दिता सती स्थास्यति । ततश्च समाधिर्भवति । जाते च समाधावसम्प्रज्ञातध्यानेऽपरोक्षज्ञानं भवति । तेन च ब्रह्मदर्शनेन परमानन्दमग्नतया भेरीताडना-दिनाऽपि चलनहीना बुद्धिर्मनो **यदा स्थास्यति, तदा योगं** योगफलं ज्ञानोपायानुष्ठानस्य फलम् **आप्स्यसि** इत्यर्थः । पूर्वावस्थायाम् अनुष्ठितयोगस्य परोक्षभगवन्निश्चयावधित्वमुक्तम् । परोक्ष-

निश्चयस्य काष्ठा तु असच्छास्त्रैरनेकधा परिलोड्यमानत्वेऽप्यप्रामाण्यशङ्काकलङ्कितत्वशून्यत्वम् । तद्दशायामनुष्ठितनिवृत्तकर्मरूपयोगस्य तु समाधौ भगवदपरोक्षज्ञानावधित्वम् । तस्य तु काष्ठा भेरीताडनादिनाऽप्यप्रबोधसमाधिस्थत्वम् ।

एतेन बुद्धेर्मनसः मोहकलिलं श्रुतिविरुद्धत्वरूपो दोषः । तत्तरणं नाम वेदार्थानुकूलेन निश्चयेन दृढतयाऽवस्थानम् । तदा निर्वेदं गन्ताऽसीत्यस्य विवरणम्— समाधावचला बुद्धिरित्युक्तं भवति । श्लोकद्वयस्यापि अचञ्चलसमाध्यवस्थाप्राप्तिर्योगानुष्ठानावधिरिति तात्पर्यं ध्येयम् ।

यद्वा, **बुद्धिः** मनः **श्रुतिविप्रतिपन्ना** श्रुतिविशेषेण प्रतिपन्ना श्रुत्यर्थनिर्णयं प्राप्ता सती, इदमदो वेति चञ्चलत्वहीना **यदा स्थास्यति** तदा **समाधौ** समाधिः समाधानम् । सतिसप्तमी । श्रुत्यर्थ-निश्चयेन निश्चलत्वे सति अपरोक्षज्ञानं भवतीति योज्यम् । तेन च विष्णौ **अचला भवति बुद्धिः** । ततश्च **योगं** भगवद्योगं मुक्तिम् **अवाप्स्यसि** इति ॥ ५३ ॥

*अ०प्र०*— तयोरनुपादेयत्वेन जिज्ञासां न करिष्यसीत्यर्थः । हे पार्थ ![1], श्रुतिविप्रतिपन्ना[१], ते[२], बुद्धिः अचला सती[३], यदा[४], समाधौ[५], निश्चला[६], स्थास्यति[७], तदा[८], योगं[९], अवाप्स्यसीत्यन्वयः ।

हे पार्थ ! श्रुतिविप्रतिपन्ना = श्रुतिभिः, नाना वैदिकलौकिकार्थश्रवणैः विप्रतिपन्ना इतःपूर्वं विक्षिप्ता सती यद्वा पूर्वं वेदैः विरुद्धा सती यद्वा श्रुतौ विशेषेण प्रतिपन्नेत्यर्थः, ते = तव[२], बुद्धिः = ज्ञानं[३], अचलं सत् = अभ्यास-पटुत्वेन तत्रैव विष्णौ स्थिरा सत्[४], यदा समाधौ 'समाधीयते चित्तमस्मिन्निति समाधिः परमेश्वरः तस्मिन् समाधौ[५], निश्चला वेदार्थानुकूलत्वेन तत्त्वनिश्चयरूपा विषयान्तरैरनाकृष्टा सती[६], स्थास्यति = चञ्चला न भवति[७], तदा[८], योगं = योगफलं तत्त्वज्ञानं[९], अवाप्स्यसि = ब्रह्माप्नोतीत्यर्थः[१०] ॥ ५३ ॥

**भाष्यम्**

**तदेव स्पष्टयति श्रुतिविप्रतिपन्नेति । पूर्वं श्रुतिभिर्वेदैर्विप्रतिपन्ना विरुद्धा सती यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि निश्चला भवति; ततश्च समाधावचला ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानन्दमग्नत्वात्; तदा योगमवाप्स्यसि । उपायसिद्धो भवसीत्यर्थः ॥ ५३ ॥**

*प०टी०*— उत्तरश्लोकमवतार्य व्याचष्टे **तदेवेति** ॥ ५३ ॥

***न०टी०***— कर्मणावश्यं करणीयत्वावधिनिरूपणार्थं पूर्वश्लोकोऽवतारितः । स तेन नातीव प्रतीयत इत्यत आह **तदेव चेति** । न हि वेदविरुद्धबुद्धिर्मुक्तिसाधनम् । 'वेद एव द्विजातीनां निश्रेयसकरः परः' इत्यादिविरोधात्, 'रचनानुपपत्तेः' इत्यादिसमयान्तरनिरासवैय्यर्थ्याच्च । एतदेव मनसि निधायाह **पूर्वमित्यादि** ॥ ५३ ॥

***प्र०दी०***— ननूत्तरश्लोकेऽपि योगानुष्ठानावधिरेवोच्यते । अतः पुनरुक्तिदोष इत्यत आह— **तदेवेति** । किं तन्मोहकलिलम् । कीदृशं च तदतितरणमित्याकाङ्क्षायां पुंसामधममध्यमोत्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तमेव योगानुष्ठानावधिमनेन स्पष्टं करोतीत्यर्थः ।

नन्वत्र 'श्रुतिविप्रतिपन्ना' इति श्रवणादितो वैराग्यमुच्यते । यथाह भास्करः 'वस्त्वन्तरश्रवणाद्विरक्ता' इति । ततः पूर्वत्रापि वैराग्यमर्थः स्यात् । 'निश्चलाः', 'अचलाः', इति पुनरुक्तिश्च । योगावाप्तेरुत्तरा चेयमवस्था । तत्कथमुच्यते 'तदा योगमवाप्स्यसि' इतीति शङ्कायां श्लोकं व्याचष्टे— **पूर्वमिति** । पूर्वावस्थात उत्तरावस्थायाः सामर्थ्यलब्धं वैलक्षण्यं दर्शयितुमुक्तम्— **वेदार्थेति** । चलनप्रसक्तिं दर्शयति— **विपरीतवाग्भिरिति** । असच्छास्त्रैरित्यर्थः । अनेन परोक्षज्ञानकाष्ठा दर्शिता । परोक्षतत्त्वनिश्चयानु-वृत्तिव्युदासायोक्तम्— **ब्रह्मेति** । अत्रापि चलनप्रसक्तिमाह— **भेरीति** । तत्कथमित्यत आह— **परमेति** । एतेनापरोक्षज्ञानकाष्ठा दर्शिता । उपायेन सिद्धः प्राप्तफलः । योगशब्देन तत्फलमुपलक्ष्यत इति भावः । श्लोकद्वयेऽप्येतदवस्थाप्राप्तिः योगानुष्ठानावधिरिति तात्पर्यम् ॥ ५३ ॥

***भा०दी०***— **योगेति** । ज्ञानोपायेत्यर्थः । **पुनरुक्तिरिति** । पूर्वश्लोकेनेति भावः । **श्लोकद्वयेऽपीति** । 'यदे'ति, 'शृणुते'ति श्लोकद्वयेऽपीत्यर्थः । **एतदवस्थेति** । दुःशास्त्रैरचाल्यमानपरोक्ष्यतत्त्वनिश्चयवत्त्वावस्थाप्राप्तिः भेरीताडनादिनाप्यचलसमाध्यवस्थाप्राप्तिः ज्ञानोपायरूपनिवृत्तकर्मलक्षणयोगानुष्ठानावधिरित्यर्थः ॥ ५३ ॥

***भा०र०***— यदा तदेति श्रवणादाह **योगानुष्ठानावधिरेवेति** । **तदतितरणं** मोहकलिलातितरणम् । **अधममध्यमोत्तमावस्थेति** । बुद्धेः श्रुतिविप्रतिपन्नत्वावस्था अधमा । परोक्षतत्त्वनिश्चयरूपतावस्था मध्यमा । अपरोक्षज्ञानत्वावस्था उत्तमेत्यर्थः । आदिपदेन तत्कारणग्रहः । असम्प्रज्ञातसमाधित्वावस्थाग्रह इति केचित् । **पूर्वश्लोकोक्तमेवेति** । अनेन भाष्ये 'तदेव' पूर्वोक्तप्रमेयमेवेत्यभिप्रेत्य तद्विवृतं 'योगानुष्ठानावधिम्' इतीति ज्ञेयम् । स्पष्टयतीत्यत्र स्पष्टशब्दात् 'तत्करोति' इति णिजिति भावेनोक्तम् **स्पष्टं करोतीति** । 'श्रवणादितः' इति वदता अस्मिन् मते श्रुतिशब्दः श्रवणा-

द्युपलक्षक इत्युक्तं भवति । **पूर्वत्र** "यदा ते मोह" इति श्लोके । **इयमवस्था** अचलत्वावस्था । **वेदार्थानुकूलेन** वेदार्थविमर्शजनितेनेति भाष्यार्थः । **अनेन** असच्छास्त्रश्रवणेऽप्यचलनकथनेन । **परोक्षज्ञानकाष्ठा** परोक्षज्ञानसीमा । **तत् कथं** भेरीताडनादावप्यचलनं कथम् ? **एतेन** भेरीताडनादावप्यचलत्वकथनेन । योगशब्दस्योपायार्थत्वाद् भाष्ये 'उपायसिद्धः' इत्युक्तम् । तद्विग्रहं दर्शयन्नर्थमाह **उपायेनेति** । तर्हि "योगमवाप्स्यसि" इति कथमित्यतो भाष्यतात्पर्यमाह **योगेति** । अनेन योगावाप्तेरुत्तरा चेयमवस्थेति कृतचोद्यं परिहृतं भवति । कियत्पर्यन्तं योगानुष्ठानमिति चोद्यस्य परिहारमाह **श्लोकद्वयेऽपीति** । **एतदवस्था** परमानन्दमग्नत्वानुकूलासम्प्रज्ञातसमाधित्वावस्था ।

***गीताक्षरार्थस्तु***— किं तन्मोहकलिलम् ? कीदृशं च तदतितरणम् ? इत्याकाङ्क्षायां पुंसामधममध्यमोत्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तयोगानुष्ठानावधिरेव स्पष्टीक्रियते **श्रुतिविप्रतिपन्नेति** । परोक्षतत्त्वनिश्चयात् पूर्वं श्रुतिभिः वेदैः विप्रतिपन्ना विरुद्धा सती ते बुद्धिः यदा वेदार्थानुकूलेन तत्त्वनिश्चयेनासच्छास्त्रैरपि निश्चला "इदमदो वा" इति संशयानास्कन्दिता स्थास्यति । अनेन परोक्षज्ञानकाष्ठा दर्शिता । ततश्च समाधिर्भवति । भवति च तस्मिन् ब्रह्मप्रत्यक्षदर्शनेन परमानन्दमग्नतया भेरीताडनादावप्यचला चलनहीना बुद्धिर्यदा स्थास्यति । अनेनापरोक्षज्ञानकाष्ठा दर्शिता । तदा योगं योगफलं ज्ञानोपायानुष्ठानस्य फलम् अवाप्स्यसि प्राप्तवान् भविष्यसि । एतेन बुद्धेः मनसः मोहकलिलं श्रुतिविरुद्धत्वरूपो दोषः । तत्तरणं च वेदार्थानुकूलेन परोक्षभगवत्तत्त्वनिश्चयेनाचलतयाऽवस्थानम् । तदा निर्वेदं गन्ताऽसीत्यस्य विवरणं "समाधावचला बुद्धिः" इतीत्युक्तं भवति । श्लोकद्वयेऽप्येतदवस्थावाप्तिर्योगानुष्ठानावधिरिति तात्पर्यम् ॥ ५३ ॥

**गीता**

## अर्जुन उवाच—

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

*वि०वि०*— ज्ञानिनि प्रकृते तल्लक्षणादिजिज्ञासया अर्जुनः पृच्छति **स्थितप्रज्ञस्येति** । अर्जुनस्य ज्ञानित्वेऽपि लोकोपकारार्थं प्रश्नः । उक्तं च—

'जानंति पूर्वराजानो देवर्षयस्तथैव हि ।
तथापि धर्मान्पृच्छन्ति वार्तायै गुह्यवित्तये ॥'

इति । यद्यपि समाधावचला बुद्धिरित्यनेन लक्षणमुक्तं तथाऽप्ययावल्लक्ष्यभावित्वान्न तत्सम्यग्व्यवहारोपयोगि । यावल्लक्ष्यभावि तु सार्वत्रिकव्यवहारोपयोगि ज्ञास्यामीत्याशयेनोक्तलक्षणमनुवदति **समाधिस्थस्येति** । सम्प्रज्ञातसमाधिस्थस्येति लक्षणप्रश्नः । असम्प्रज्ञातसमाधिः शुभाशुभप्राप्त्ययोगेन 'यः सर्वत्रानभिस्नेह' इत्यादि वक्ष्यमाणलक्षणायोगात् । यद्यपि सम्प्रज्ञाते प्रजहातीत्येतेन विरोधस्तथापि तत्रैव कामाद्यभावनियमो नास्ति तदुक्तम्—

'कामादयो न जायन्ते ह्यपि विक्षिप्तचेतसाम् ।
ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयात् ॥'

इति । यद्वा, समाधिस्थस्य विषमबुद्धिवर्जितस्येत्यर्थः स्थिता प्रज्ञा ज्ञानं यस्य सः स्थितप्रज्ञः । का भाषा कथं भाष्यते । किं लक्षणमित्यर्थः । स्थितधीः किं प्रभाषेत, किं वा प्रत्यासीत, किं वा व्रजेत । एवं परमानन्दतृप्तः किमर्थं प्रवृत्तिं करोतीति प्रश्नाभिप्रायः ॥ ५४ ॥

***वा०ल०***— 'स्थितप्रज्ञस्य का भाषा' इत्यत्र स्थितप्रज्ञस्य अपरोक्षज्ञानिनः का भाषा किं भाषकम् । तदेव विशदयति **स्थितधीः किं प्रभाषेत इति** ॥ ५४ ॥

***सा०सं०***— ज्ञानिनि प्रकृते सति लब्धावसरोऽर्जुनः प्रागुक्तलक्षणानुवादपूर्वकं लक्षणान्तरादिकं पृच्छति **स्थितेति** । प्रतिष्ठां प्राप्ता प्रज्ञाऽपरोक्षदृशिर्यस्य स तथा । तस्य **समाधिस्थस्य** समाध्यवस्थायां गतस्य **प्राक्** त्वदुक्तदिशाऽसम्प्रज्ञातध्यानस्थत्वलक्षणं गतस्य । **का भाषा** भाष्यतेऽनयेति भाषाशब्दो लक्षणवचनः किंलक्षणमित्यर्थः । येन लक्षणेनायं जानाति व्यवह्रियते तत्किमित्यर्थः । **केशव** ब्रह्मरुद्रप्रवर्तक । "केशाद्वोऽन्यतरस्याम्" (५-२-१०९) इति मत्वर्थे 'व'प्रत्ययोक्तेः प्रशस्तकेशवानिति वा । **स्थितधीरपरोक्षज्ञानी किं प्रभाषेत किं** प्रति **आसीत्** **किमुद्दिश्य व्रजेत** प्रवृत्तिं कुर्यादित्यर्थः । अत्र किं लक्षणमिति वक्तव्ये यौगिकभाषाशब्देन तदुक्तिः प्रागुक्तं समाधिस्थत्वलक्षणमयावद्द्रव्यभावित्वान्न सम्यग्व्यवहारोपयोगि । यावल्लक्ष्यभावि तु सम्यक् सार्वत्रिकव्यवहारोपयोगि । अतः सार्वत्रिकव्यवहारहेतुभूतं यावल्लक्ष्यभाविलक्षणं किमिति प्रष्टुमिति ज्ञेयम् । स्थितप्रज्ञस्य का भाषेत्येव पूर्तौ समाधिस्थस्येति प्राचीनलक्षणानुवादस्तु त्वदुक्तं लक्षणं ज्ञातं तन्न पृच्छ्यते । येन सिद्धार्थता प्रश्नस्य स्यात् । किन्त्वन्यदेव पृच्छ्यत इति ज्ञापयितुम् ।

यद्वा, **समाधिस्थस्य** विषमबुद्धिवर्जितस्येत्यर्थः । उत्तरार्धे **किं**शब्दः आक्षेपार्थः । भेरीताडनादिनाऽप्यप्रतिबुद्धो ब्रह्मदर्शनेन परमानन्दमग्नत्वात्, **स्थितधीः** अपरोक्षज्ञानी भाषणोपवेशनगमनादिरूपप्रवृत्तिं किमर्थं कुर्यात् । करोति च शुकादिः । अतः "समाधावचलाबुद्धिस्तदा योगमवाप्स्यसि" इत्युक्तमसदिति ॥ ५४ ॥

*अ०प्र०*— हे केशव ![१], समाधिस्थस्य[२], स्थितप्रज्ञस्य[३], भाषा[४], का[५], स्थितधीः[६], किं[७], प्रभाषेत[८], किमासीत[९], व्रजेत वा किं[१०] इत्यन्वयः ।

हे केशव ! समाधिस्थस्य स्वाभाविके समाधौ स्थितस्य विषयबुद्धि-वर्जितस्येति वा[२], अत एव स्थितप्रज्ञस्य = स्थिता निश्चला प्रज्ञा ज्ञानं यस्य सः तस्य[३], भाषा = भाष्यते भाषा[४], का = किं लक्षणं[५], केन् लक्षणेन स्थितप्रज्ञ इत्युच्यत इत्यर्थः तथा स्थितधीः[६], किं प्रभाषेत[८], स्थितप्रज्ञः किमुद्दिश्य प्रभाषेत[८], किमासीत किमुद्दिश्य आसीत्[९], व्रजेत वा किं, किमुद्दिश्य व्रजेत वा[१०], कथं भाषणमासनव्रजनं च कुर्यादित्यर्थः । किं प्रयोजनोद्देशेन भाषणादि प्रवृत्तिरिति भावः ॥ ५४ ॥

### भाष्यम्

**स्थिता प्रज्ञा ज्ञानं यस्य सः स्थितप्रज्ञः । भाष्यतेऽनयेति भाषा । लक्षणमित्यर्थः । उक्तं लक्षणमनुवदति लक्षणान्तरं पृच्छामीति ज्ञापयितुम्— समाधिस्थस्येति । कं ब्रह्माणमीशं रुद्रं च वर्तयतीति केशवः । तथाहि निरुक्तिः कृता हरिवंशेषु रुद्रेण कैलासयात्रायाम् ।**

**'हिरण्यगर्भः कः प्रोक्त ईशशङ्कर एव च ।**
**सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान् ॥'**

**(अ.८८. श्लो.४८)**

**इति वचनान्तराच्च । किमासीत ? किं प्रत्यासीत ? न चार्जुनो न जानाति तल्लक्षणादिकम् ।**

**'जानन्ति पूर्वराजानो देवर्षयस्तथैव हि ।**
**तथाऽपि धर्मान् पृच्छन्ति वार्तायै गुह्यवित्तये ।**
**न ते गुह्याः प्रतीयन्ते पुराणेष्वल्पबुद्धिनाम् ॥'**

**—इति वचनात् ॥ ५४ ॥**

*प०टी०*— प्रकृतज्ञानिलक्षणं पृच्छतीति सम्बन्धस्य स्पष्टत्वात् 'स्थितप्रज्ञस्य' इति श्लोकव्याख्यामेव करोति **स्थितेति** । 'किं प्रभाषेत' इत्यतः 'का भाषा' इत्यस्यार्थभेदमाह **भाष्यत**

**इति** । समाधिस्थज्ञानिनः किं लक्षणमिति भ्रान्तिर्मा भूदित्याह **उक्तमिति** । स्थितप्रज्ञोत्तमप्रवर्तको हरिर्जानात्येव तल्लक्षणमिति भावेनाह **कमिति** ।

'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसम्भूतौ ततः केशवनामवान्' इति हरिवंशे ।

आसाया अकर्मकत्वात् कथम् आसीत् किमिति भ्रान्तिर्मा भूदित्याह **किमिति** । स्वयमपरोक्षज्ञान्यर्जुनश्चेत् किमिति तल्लक्षणादिकं पृच्छति ? इत्यत आह **न चेति** ॥ ५४ ॥

***न०टी०***— उक्तार्थप्रश्नरूपत्वेन पूर्वसङ्गतेः प्रसिद्धत्वादुत्तरश्लोकस्य व्याख्यानमेव करोति **स्थितेति** । 'किं प्रभाषेत' इत्यतः 'का भाषा' इत्यस्यार्थभेदमाह **भाष्यत इति** । 'समाधिस्थस्य' इति समाधिं कुर्वत इति प्रतीतिः स्यात् । तां व्यावर्तयन् यथावद्व्याचष्टे **उक्तमिति** । समाधौ सत्यां ब्रह्मप्रत्यक्षदर्शनेन परमानन्दमग्नत्वात् यस्य बुद्धिरचलत्वेन स्थिता तस्येत्यर्थः । स्थितप्रज्ञमुख्यौ केशौ वर्तयति च भगवान्, तल्लक्षणं भगवतैव वक्तव्यमित्यर्जुनाभिप्रेतं केशवशब्दार्थमाह **कमिति** ।

'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिषु ।
आवां तवाङ्गे सम्भूतौ ततः केशवनामवान् ॥'

इति हरिवंशोक्तवचनाच्चेयं निरुक्तिर्ग्राह्येत्याह **तथा हीति** । आसेरकर्मकत्वात् 'किमासीत' इत्युक्तौ 'आसीत न वा' इत्यपि प्रतीतिः स्यात् । तां व्यावर्तयन् यथावद्व्याचष्टे **किमिति** । यः स्वयं स्थितप्रज्ञः स्थितप्रज्ञोत्तमप्रवर्तकं श्रीविष्णुं च जानाति स कथं तल्लक्षणादि जानाति ? अतः किमर्थं पृच्छति ? इत्यत आह **न चेति** । **आदिशब्देन** तत्प्रवृत्त्युद्देश्यम् ॥ ५४ ॥

***प्र०दी०***— ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः पृच्छतीति सङ्गतेः स्फुटत्वात् ताम् अनुक्त्वा प्रज्ञाशब्दस्य बुद्धिमात्रार्थत्वप्रतीतिनिरासाय स्थितप्रज्ञशब्दार्थमाह— **स्थितेति** । प्रतिष्ठां प्राप्ता । ज्ञानमपरोक्षम् । 'किं प्रभाषेत' इत्यतः 'का भाषा' इत्यस्यार्थान्तरमाह— **भाष्यत इति** । ज्ञानीति व्यवह्रियत इत्यर्थः । भाषाशब्दस्य स्त्रीलिङ्गत्वादनयेत्युक्तम् । व्यवहारकारणानामनेकत्वात्कस्यायं प्रश्न इति न ज्ञायते । अत आह— **लक्षणमिति** । सास्नादिमत्त्वं लक्षणं दृष्ट्वा हि गौरिति व्यवह्रियते ।

ज्ञानिमात्रव्युदासाय **'समाधिस्थस्य'** इति विशेषणमिति प्रतीयते । समाधिं कुर्वत इति । यथाह शङ्करः 'लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सयाऽर्जुन उवाच' इति । तदसदिति भावेनाह— **उक्तमिति** । ज्ञानिसामान्यलक्षणविषय एवायं प्रश्नः । किमर्थं तर्हि **'समधिस्थस्य'** इत्युक्तमिति चेत्

'समाधावचला बुद्धिः' इत्यनेनोक्तं ज्ञानिसामान्यलक्षणमनेनानुवदतीति ब्रूमः । न हीदं न लक्षणम् । ज्ञानिमात्रनिष्ठधर्मत्वात् । किमर्थोऽनुवाद इति चेत्, तज्ज्ञातं मयेति ज्ञापनार्थमिति वदामः । एतज्ज्ञापनेऽपि किं प्रयोजनमिति चेल्लक्षणान्तरं पृच्छामीति ज्ञापयितुम् । अन्यथा सिद्धप्रश्नोऽय-मित्युपेक्ष्यः प्रसज्येतेति भावः । लक्षणान्तरप्रश्नस्य चेदं प्रयोजनम् । अयावल्लक्ष्यभावित्वान्न तत्सम्य-ग्व्यवहारोपयोगि । यावल्लक्ष्यभावि तु सार्वत्रिकव्यवहारोपयोगि ज्ञास्यामीति । अत एव प्रसिद्धलक्षण-पदपरित्यागेनाप्रसिद्धभाषापदोपादानमिति ।

कश्च अश्च ईशश्च केशाः ब्रह्मविष्णुमहेश्वराः । ते यस्यावयवभूताः स केशवः परमात्मोच्यत इति भास्करो निरुक्तवान् 'एतच्छ्रुत्वा केशवस्य' इत्यत्र । तदसदिति भावेनाह— **कमिति** । कुत इयं निरुक्तिरित्यत आह— **तथा हीति** ।

''को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिषु ।
आवां तवाङ्गे सम्भूतौ ततः केशवनामवान् ॥''

इति हरिवंशवचनम् । वचनान्तराच्चेयमेव निरुक्तिः स्वीकार्येत्याह— **हिरण्य-गर्भ इति** । अत इति लभ्यते । तेनैवशब्दस्यान्वयः । हिरण्यगर्भ एव न त्वन्यः प्रजापतिः । शङ्कर एव न त्वन्यः समर्थ इति वा । अनेन केशयोः कर्मणोरुपपदयोरन्तर्णीतण्यर्थात् 'वृतु वर्तने' इत्यस्माद्धातोः 'डोऽन्यत्रापि दृश्यते' इति डप्रत्यय इत्युक्तं भवति । आसेरकर्मकत्वात्कथं कर्मप्रश्न इत्यत आह— **किमिति** । अध्याहृत-प्रतियोगनिमित्ता द्वितीया । न कर्मणीत्यर्थः ।

प्रश्नकरणादर्जुनस्याज्ञत्वं प्रतीतम् । तन्निवारयति— **न चेति** । तल्लक्षणादिकं ज्ञानिलक्षणं, तत्प्रवृत्त्यनुपपत्तिं समाधानं च । प्रश्नस्यान्यथोपपत्तेरिति भावः । कुत इत्यत आह— **जानन्तीति** । समासान्तो विधिरनित्यः । अतः 'पूर्वराजानः' इति साधु । देवर्षयश्च तथैव जानन्त्येव । धर्मा-नित्युपलक्षणम् । वार्तायै गुरोरात्मनां च ख्यात्यै । लोकस्य गुह्यार्थवित्तये च । एतेषां प्रश्नकरणं लोकानां कथं गुह्यार्थवित्तये भवतीत्यतो व्यतिरेकमुखेनोपपादयति— **न त इति** । 'छन्दस्युभयथा' इत्यतोऽल्पबुद्धीनामिति नामि दीर्घत्वाभावः । गुह्यास्तेऽर्थाः, पुराणादिषु प्रश्नोत्तरनिबन्धनेन विनोक्ति-मात्रेणाल्पबुद्धीनां व्यक्तं न प्रकाशन्ते । न च प्रश्नाकरणे तदुपनिबन्धनं सम्भवतीत्यर्थः । एतेन 'मोहादिस्त्वभिभवादेः' इत्येतत्प्रपञ्चितं भवति ॥ ५४ ॥

*भा०दी०*— स्थितपदार्थः **प्रतिष्ठां प्राप्नोति** । भेरीताडनाद्यत्वं चलतां प्राप्तेत्यर्थः । लक्षणस्य व्यवहारहेतुत्वं व्यनक्ति **सास्नेति** । **अन्यथेति** । लक्षणान्तरप्रश्नज्ञापनाभाव इत्यर्थः । **न तदिति** ।

समाधिस्थत्वम् । **अत एवेति** । अयावल्लक्ष्येत्यादिनोक्तार्थज्ञापनार्थत्वादेवेत्यर्थः । एवशब्दान्वयं दर्शयन्नेतद्व्यावर्त्यमाह **हिरण्यगर्भ एवेत्यादिना** । **डप्रत्यय इति** । डित्यभस्यापि टेर्लोप इति टिलोपे केशव इति रूपमिति भावः । **आसेरिति** । आस उपवेशन इत्यस्येत्यर्थः । **अन्यथोपपत्तेरिति** । लोकानुग्रहार्थतयोपपत्तेरित्यर्थः ।

ननु राजाहः सखिभ्यष्टजिति समासान्ते ष्टपि सति पूर्वराजा इति भाव्यमित्यत आह **समासान्त इति** । ऋक्पूरब्धूः पथामानक्ष इति निर्देशाद् ज्ञापकादनित्य इति भावः । **धर्मानित्युपलक्षणमिति** । ज्ञानिलक्षणादिकस्येति योज्यम् । तेनोक्तार्थसंवादीदमिति भावः । नन्वङ्गपादेनामीति सूत्रेण दीर्घोक्तेर्बुद्धीनामिति भाव्यमित्यत आह **छन्दस्युभयथेति** । **इत्येतत्प्रपञ्चितमिति** । मोहादिस्त्वभिभवादेरित्यत्र क्रमादादिपदद्वयार्थतया प्रश्नलोकानुग्रहयोः प्रदर्शनेन प्रपञ्चितमित्यर्थः ॥ ५४ ॥

*भा०र०*— **प्रकृते** अपरोक्षज्ञानकाष्ठाप्रदर्शनेन । "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इति कोशकारवचनादाह **बुद्धिमात्रार्थत्वेति** । स्थिताशब्दार्थः **प्रतिष्ठां प्राप्तेति** । सुदृढनिष्पन्नेत्यर्थः । स्थिता प्रज्ञा ज्ञानं यस्येति" यत्प्रसिद्धार्थकमपि प्रज्ञापदं ज्ञानार्थं व्याख्याति तेन ज्ञानमित्यपरोक्षज्ञानं मुख्यं ग्राह्यमिति भावेनाह **ज्ञानमपरोक्षमिति** । **अर्थान्तरमिति** । तथा च धात्वर्थैक्यान्न पुनरुक्तिरिति भावः । लक्षणवत् "अयं ज्ञानी" इत्याप्तोपदेशवागिन्द्रियादिरूपव्यवहारकारणबाहुल्यादुक्तम् **अनेकत्वादिति** । **कस्य** व्यवहारकारणस्य । लक्षणस्य व्यवहारहेतुत्वमुपपादयति **साप्तेति** । "प्रश्नबीजं प्रतिलभ्यार्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया" इति शङ्करभाष्यं सान्वयमनुवदति **लब्धेति** । शङ्करपक्ष्यस्यासत्त्वं भाष्याभिप्रायं वदन् दर्शयति **ज्ञानिसामान्येति** । सम्प्रज्ञातासम्प्रज्ञातसमाध्यवस्थापन्नज्ञानिमात्रेत्यर्थः । स्थितप्रज्ञस्येति ज्ञानिमात्रप्रतीतेः सङ्कोचे कारणाभावादिति हृदयम् । कारणं शङ्कते **किमर्थमिति** । **तर्हि** ज्ञानिसामान्यलक्षणविषयप्रश्ने । अनुवादस्य प्राप्तिसापेक्षत्वात् तामाह **समाधाविति** । **अनेन** 'समाधिस्थस्य' इत्यनेन । समाधिमत्त्वस्य ज्ञानिलक्षणत्वमुपपादयति **न हीति** । ज्ञानीतरावृत्तित्वे सति ज्ञानिवृत्तित्वरूपासाधारणधर्मत्वादित्यर्थः । असाधारणधर्मो हि लक्षणं परिकीर्तितमिति भावः । **ज्ञापनार्थः** ज्ञापनप्रयोजनकः । अनुवाद इति वर्तते । **लक्षणान्तरं** समाधिस्तत्त्वलक्षणादन्यत् । **अन्यथा** लक्षणान्तरप्रश्नज्ञापनाभावे । **सिद्धप्रश्न इति** । समाधिस्थस्य ज्ञानिनः समाधिस्थत्वमेव लक्षणमिति सिद्धत्वात् समाधिस्थस्य किं लक्षणमिति प्रश्नः सिद्धार्थविषयत्वेन नोत्तरार्ह इत्युपेक्षणीयः स्यादित्यर्थः । सिद्धः प्रश्नो यस्य स इति बहुव्रीहिर्वा । अत एव भगवत्पादैः "प्रश्नदोषा हि चत्वारः स्वव्याहति-

रसङ्गतिः । सिद्धार्थता च वैफल्यम्'' इति सिद्धार्थकत्वं प्रश्नदोष इति विभावितमिति भावः । **अयावल्लक्ष्यभावित्वात्** लक्ष्यसमसमयवृत्तित्वाभावात् । **तत्सम्यग्व्यवहारेति** । समाधिस्थत्वं सार्वत्रिकव्यवहारोपयोगि न भवतीत्यर्थः । 'इति' इदं प्रयोजनमिति सम्बन्धः । **अत एव** सार्वत्रिक-व्यवहारोपयोगिलक्षणज्ञानस्य प्रश्नप्रयोजनस्य सत्त्वादेव । अयावल्लक्ष्यभावित्वादित्युक्तार्थज्ञापनार्थ-त्वादेवेति तु स्वामिनः ।

केशा अस्य सन्तीत्यत्र षष्ठ्यर्थं सम्बन्धं वक्तुमुक्तम् **अवयवभूता इति** । ''केशाद्वोऽन्यतर-स्याम्'' इति वप्रत्ययो मत्वर्थीय इति भाव इति केचित् । अपरे तु प्रकृतस्य केशशब्दस्य 'आद्गुणः' इत्येकादेशेन सिद्धस्य लाक्षणिकतया ''केशाद्वोऽन्यतरस्याम्'' इति सूत्रे ग्रहीतुमशक्यत्वान्न तेन वप्रत्ययः । ''लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'' इति परिभाषाविरोधात् । किन्तु सूत्रे ''अन्येभ्योऽपि दृश्यते'' इति यद् वार्तिकं तेनात्र वप्रत्यय इति व्याचक्षते । सृष्ट्यादिना वर्तयति जगत्सृष्टिसंहारौ प्रति नियमयति । **अत इति लभ्यत इति** । यतःशब्दश्रवणादिति शेषः । **अन्यः** दक्षादिः । ''ईश ऐश्वर्ये'' इति धातोस्सामर्थ्यमीशशब्दाभिधेयमिति भावेनोक्तं **समर्थ इति** । **केशयोः कर्मणोः** कशब्देशशब्दयोः कर्मवाचिनोः । **डोऽन्यत्रापि दृश्यत इति डप्रत्यय इति** । डप्रकरणे ''अन्यत्रापि दृश्यते'' इति वार्तिकादत्र डप्रत्यय इत्यर्थः । यद्यपीदं वार्तिकमुपपदान्तरेऽपि गमे-र्डप्रत्ययविधानार्थं कृतम् । ग्राम इत्याद्युदाहरणात् । तथा च नानेन वृतेर्डप्रत्ययः शक्यो विधा-तुम् । तथाऽप्यपिशब्दस्य ''अन्येष्वपि दृश्यते'' इत्यत्रेव सर्वोपाधिव्यभिचारार्थत्वाद् ''ऋतु वर्तन'' इत्यस्मादपि डप्रत्ययो वक्तव्य इति भावेनैवमुक्तम् ।

केचित्तु, ''गमेश्च'' इत्यधिकारस्थवार्तिकमेवेदं न भवति । किन्तु ''सप्तम्यां जनेर्डः'' इति प्रकरणस्थस्य ''अन्येष्वपि दृश्यते'' इति सूत्रस्यैवायमर्थतोऽनुवादः 'डोऽन्यत्रापि' इति । तत्र चापिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि डप्रत्ययो भवति । परितः ख्यातः परिख्य इत्युदाहृतं वृत्ताविति प्रकृते वृत्तेरपि डप्रत्यय इति व्याचक्षते । केशवशब्देन भगवत्सम्बोधने प्रयोजनमुक्तं भावप्रदीपिकायां ''स्थितप्रज्ञोत्तमब्रह्मरुद्रप्रवर्तको भगवान् जानात्येव प्रश्नपरिहाराय तल्लक्षणमिति ज्ञापयितुम्'' इति । तथा च प्राचीनटीका ''स्थितप्रज्ञमुख्यौ केशौ वर्तयति भगवा-निति तल्लक्षणं भवतैव वक्तव्यमित्यर्जुनाभिप्रेतं केशवशब्दार्थमाह'' इति । **आसेः** आस उपवेशन इति धातोः । आसीत किमित्यन्वयभ्रान्तिं वारयन् यथावद् व्याचष्टे ''किं प्रतीति'' इति भावप्रदी-पिकायाम् । **प्रतियोगेति** । प्रतेः कर्मप्रवचनीयत्वात् ''कर्मप्रवचनीययुक्ते द्वितीया'' इति द्वितीया । न पुनः ''कर्मणि द्वितीया'' इति सूत्रेणेत्यर्थः । यः स्वयं स्थितप्रज्ञः स्थितप्रज्ञोत्तमप्रवर्तकं श्रीविष्णुं

समाधिस्थत्वम् । **अत एवेति** । अयावल्लक्ष्येत्यादिनोक्तार्थज्ञापनार्थत्वादेवेत्यर्थः । एवशब्दान्वयं दर्शयन्नेतद्वयावर्त्यमाह **हिरण्यगर्भ एवेत्यादिना** । **डप्रत्यय इति** । डित्यभस्यापि टेर्लोप इति टिलोपे केशव इति रूपमिति भावः । **आसेरिति** । आस उपवेशन इत्यस्येत्यर्थः । **अन्यथोपपत्तेरिति** । लोकानुग्रहार्थतयोपपत्तेरित्यर्थः ।

ननु राजाहः सखिभ्यष्टजिति समासान्ते टपि सति पूर्वराजा इति भाव्यमित्यत आह **समासान्त इति** । ऋक्पूरब्धूः पथामानक्ष इति निर्देशाद् ज्ञापकादनित्य इति भावः । **धर्मानित्युपलक्षणमिति** । ज्ञानिलक्षणादिकस्येति योज्यम् । तेनोक्तार्थसंवादीदमिति भावः । नन्वङ्गपादेनामीति सूत्रेण दीर्घोक्तेर्बुद्धीनामिति भाव्यमित्यत आह **छन्दस्युभयथेति** । **इत्येतत्प्रपश्चितमिति** । मोहादिस्त्वभिभवादेरित्यत्र क्रमादादिपदद्वयार्थतया प्रश्नलोकानुग्रहयोः प्रदर्शनेन प्रपञ्चितमित्यर्थः ॥ ५४ ॥

*भा०र०*— **प्रकृते** अपरोक्षज्ञानकाष्ठाप्रदर्शनेन । "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इति कोशकारवचनादाह **बुद्धिमात्रार्थत्वेति** । स्थिताशब्दार्थः **प्रतिष्ठां प्राप्तेति** । सुदृढनिष्पन्नेत्यर्थः । स्थिता प्रज्ञा ज्ञानं यस्येति" यत्प्रसिद्धार्थकमपि प्रज्ञापदं ज्ञानार्थं व्याख्याति तेन ज्ञानमित्यपरोक्षज्ञानं मुख्यं ग्राह्यमिति भावेनाह **ज्ञानमपरोक्षमिति** । **अर्थान्तरमिति** । तथा च धात्वर्थैक्यान्न पुनरुक्तिरिति भावः । लक्षणवत् "अयं ज्ञानी" इत्याप्तोपदेशवागिन्द्रियादिरूपव्यवहारकारणबाहुल्यादुक्तम् **अनेकत्वादिति** । **कस्य** व्यवहारकारणस्य । लक्षणस्य व्यवहारहेतुत्वमुपपादयति **साम्नेति** । "प्रश्नबीजं प्रतिलभ्यार्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया" इति शाङ्करभाष्यं सान्वयमनुवदति **लब्धेति** । शाङ्करपक्ष्यस्यासत्त्वं भाष्याभिप्रायं वदन् दर्शयति **ज्ञानिसामान्येति** । सम्प्रज्ञातासम्प्रज्ञातसमाध्यवस्थापन्नज्ञानिमात्रेत्यर्थः । स्थितप्रज्ञस्येति ज्ञानिमात्रप्रतीतेः सङ्कोचे कारणाभावादिति हृदयम् । कारणं शङ्कते **किमर्थमिति** । **तर्हि** ज्ञानिसामान्यलक्षणविषयप्रश्ने । अनुवादस्य प्राप्तिसापेक्षत्वात् तामाह **समाधाविति** । **अनेन** 'समाधिस्थस्य' इत्यनेन । समाधिमत्त्वस्य ज्ञानिलक्षणत्वमुपपादयति **न हीति** । ज्ञानीतरावृत्तित्वे सति ज्ञानिवृत्तित्वरूपासाधारणधर्मत्वादित्यर्थः । असाधारणधर्मो हि लक्षणं परिकीर्तितमिति भावः । **ज्ञापनार्थः** ज्ञापनप्रयोजनकः । अनुवाद इति वर्तते । **लक्षणान्तरं** समाधिस्तात्त्वलक्षणादन्यत् । **अन्यथा** लक्षणान्तरप्रश्नज्ञापनाभावे । **सिद्धप्रश्न इति** । समाधिस्थस्य ज्ञानिनः समाधिस्थत्वमेव लक्षणमिति सिद्धत्वात् समाधिस्थस्य किं लक्षणमिति प्रश्नः सिद्धार्थविषयत्वेन नोत्तरार्ह इत्युपेक्षणीयः स्यादित्यर्थः । सिद्धः प्रश्नो यस्य स इति बहुव्रीहिर्वा । अत एव भगवत्पादैः "प्रश्नदोषा हि चत्वारः स्वव्याहति-

रसङ्गतिः । सिद्धार्थता च वैफल्यम्'' इति सिद्धार्थकत्वं प्रश्नदोष इति विभावितमिति भावः । **अयावल्लक्ष्यभावित्वात्** लक्ष्यसमसमयवृत्तित्वाभावात् । **तत्सम्यग्व्यवहारेति** । समाधिस्थत्वं सार्वत्रिकव्यवहारोपयोगि न भवतीत्यर्थः । 'इति' इदं प्रयोजनमिति सम्बन्धः । **अत एव** सार्वत्रिक-व्यवहारोपयोगिलक्षणज्ञानस्य प्रश्नप्रयोजनस्य सत्त्वादेव । अयावल्लक्ष्यभावित्वादित्युक्तार्थज्ञापनार्थ-त्वादेवेति तु स्वामिनः ।

केशा अस्य सन्तीत्यत्र षष्ठ्यर्थं सम्बन्धं वक्तुमुक्तम् **अवयवभूता इति** । ''केशाद्वोऽन्यतर-स्याम्'' इति वप्रत्ययो मत्वर्थीय इति भाव इति केचित् । अपरे तु प्रकृतस्य केशशब्दस्य 'आद्गुणः' इत्येकादेशेन सिद्धस्य लाक्षणिकतया ''केशाद्वोऽन्यतरस्याम्'' इति सूत्रे ग्रहीतुमशक्यत्वान्न तेन वप्रत्ययः । ''लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'' इति परिभाषाविरोधात् । किन्तु सूत्रे ''अन्येभ्योऽपि दृश्यते'' इति यद् वार्तिकं तेनात्र वप्रत्यय इति व्याचक्षते । सृष्ट्यादिना वर्तयति जगत्सृष्टिसंहारौ प्रति नियमयति । **अत इति लभ्यत इति** । यतःशब्दश्रवणादिति शेषः । **अन्यः** दक्षादिः । ''ईश ऐश्वर्ये'' इति धातोस्सामर्थ्यमीशशब्दाभिधेयमिति भावेनोक्तं **समर्थ इति** । **केशयोः कर्मणोः** कशब्देशशब्दयोः कर्मवाचिनोः । **डोऽन्यत्रापि दृश्यत इति डप्रत्यय इति** । डप्रकरणे ''अन्यत्रापि दृश्यते'' इति वार्तिकादत्र डप्रत्यय इत्यर्थः । यद्यपीदं वार्तिकमुपपदान्तरेऽपि गमे-र्डप्रत्ययविधानार्थं कृतम् । ग्राम इत्याद्युदाहरणात् । तथा च नानेन वृतेर्डप्रत्ययः शक्यो विधा-तुम् । तथाऽप्यपिशब्दस्य ''अन्येष्वपि दृश्यते'' इत्यत्रेव सर्वोपाधिव्यभिचारार्थत्वाद् ''ऋतु वर्तन'' इत्यस्मादपि डप्रत्ययो वक्तव्य इति भावेनैवमुक्तम् ।

केचित्तु, ''गमेश्च'' इत्यधिकारस्थवार्तिकमेवेदं न भवति । किन्तु ''सप्तम्यां जनेर्डः'' इति प्रकरणस्थस्य ''अन्येष्वपि दृश्यते'' इति सूत्रस्यैवायमर्थतोऽनुवादः 'डोऽन्यत्रापि' इति । तत्र चापिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि डप्रत्ययो भवति । परितः ख्यातः परिख्य इत्युदाहृतं वृत्ताविति प्रकृते वृत्तेरपि डप्रत्यय इति व्याचक्षते । केशवशब्देन भगवत्सम्बोधने प्रयोजनमुक्तं भावप्रदीपिकायां ''स्थितप्रज्ञोत्तमब्रह्मरुद्रप्रवर्तको भगवान् जानात्येव प्रश्नपरिहाराय तल्लक्षणमिति ज्ञापयितुम्'' इति । तथा च प्राचीनटीका ''स्थितप्रज्ञमुख्यौ केशौ वर्तयति भगवा-निति तल्लक्षणं भवतैव वक्तव्यमित्यर्जुनाभिप्रेतं केशवशब्दार्थमाह'' इति । **आसेः** आस उपवेशन इति धातोः । आसीत किमित्यन्वयभ्रान्तिं वारयन् यथावद् व्याचष्टे ''किं प्रतीति'' इति भावप्रदी-पिकायाम् । **प्रतियोगेति** । प्रतेः कर्मप्रवचनीयत्वात् ''कर्मप्रवचनीययुक्ते द्वितीया'' इति द्वितीया । न पुनः ''कर्मणि द्वितीया'' इति सूत्रेणेत्यर्थः । यः स्वयं स्थितप्रज्ञः स्थितप्रज्ञोत्तमप्रवर्तकं श्रीविष्णुं

च जानाति स कथं तल्लक्षणादिकं न जानाति ? चेज्जानाति, प्रश्नो न युज्यते । अज्ञानमूलत्वात् तस्येति प्रश्नान्यथानुपपत्त्या प्राप्तमज्ञानमपाकर्तुं प्रवृत्तमुत्तरभाष्यमवतारयति **प्रश्नेति** । आदिशब्दार्थमाह **तत्प्रवृत्तीति** । ज्ञानिप्रवृत्तीत्यर्थः । लक्षणादिज्ञाने प्रश्नानुपपत्तिरित्यत आह **प्रश्नस्येति** । **अन्यथेति** । लोकानुग्रहगुर्वात्मख्यात्याद्यर्थत्वेनोपपत्तेरित्यर्थः । **कुतः** जानात्येवेत्येतत् । ननु कथं पूर्वराजान इति प्रयोगः ? यावता "राजाहस्सखिभ्यष्टच्" इति सूत्रेण टच्प्रत्ययो विहितः । महाराजाय नम इत्युदाहरणं चेत्यत आह **समासान्त इति** । "द्वित्रिभ्यां पाद्दन्मूर्धसु" इति निर्देशेन, "प्रतेरंश्वादयश्च" इत्यत्र अंश्वादिगणे राजशब्दस्य पाठेन च समासान्तविधेरनित्यत्वज्ञापनादाह **अनित्य इति** । तथैवेत्यनुवादः । जानन्त्येवेति व्याख्या । ज्ञानिलक्षणस्यात्र प्रश्नविषयत्वात् तस्य च अग्निहोत्रादिवद्धर्मरूपत्वाभावात् कथमस्य प्रकृते प्रमाणत्वमित्याशङ्क्याह **उपलक्षणमिति** । ज्ञानिलक्षणादेरिति योज्यम् । वार्ताशब्देन वृत्तान्तादिग्रहणे प्रकृतासङ्गतिरित्यतः अर्थान्तरमाह **वार्ताया इति** । स्वस्य गुह्यार्थवित्तय इति योजनायां जानन्तीत्यनेन व्याहतिः । तेन 'गुह्याः' इत्युक्त्यनानुगुण्यं चेत्यत आह **लोकस्येति** । पूर्वार्धगतचशब्दावृत्तिमभिप्रेत्येयमुक्तिः । **एतेषां** पूर्वराजानां देवऋषीणां चेत्यर्थः । ननु नामि परतो दीर्घत्वे अल्पबुद्धीनामिति स्यादित्यत आह **छन्दसीति** । दीर्घप्रकरणस्थमिदं सूत्रम् । नामि दीर्घो वा स्याच्छन्दसीति तदर्थः । व्यतिरेकमुखेनोपपादयतीत्युक्तं विवृणोति **गुह्यास्तेऽर्था इति** । अकृतप्रश्नस्याप्युपनिबन्धोऽस्त्वित्यत आह **न चेति** । केनचिदकृतस्यापि प्रश्नस्य स्वयमुत्प्रेक्षयोपनिबन्धे प्रतारकतादोषः पुराणकर्तुः स्यादिति भावः ।

नन्वर्जुनस्य ज्ञानित्वे "यज्ज्ञात्वा न पुनर्मोहम्" इति मोहः कथमुच्यते ? कथं च तस्य तत्र तत्र प्रश्नकरणम् ? इत्याशङ्का "मोहादिस्त्वभिभवादेः" इति भाष्ये परिहृता । अतो "न चार्जुनः" इत्यादिग्रन्थस्तेन गतार्थः । तत्रादिपदेन प्रश्नस्य ख्यात्याद्यर्थं करणसम्भवादित्यत आह **एतेनेति** । "वार्तायै गुह्यवित्तये" इति प्रमाणोदाहरणेनेत्यर्थः । 'मोहादिः' इति भाष्ये प्रथमादिपदेन प्रश्नो ग्राह्यः । द्वितीयादिपदेन तु न केवलं "जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय च" इति प्रमाणावेदितं विशेषज्ञानं स्थापनं च ग्रहीतव्यम् । किन्त्वेतत्स्मृतिबलात् ख्यात्याद्यपीति पूर्वोक्तस्य प्रपञ्चनाच्च गतार्थताशङ्केति भावः ।

*गीताक्षरार्थस्तु*— ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः पृच्छतीत्युच्यते **अर्जुन उवाचेति** । केशव केशयोः कर्मणोरुपपदयोरन्तर्णीतण्यर्थाद् वृतु वर्तन इत्यस्माड्डप्रत्यये कं ब्रह्माणम् ईशं रुद्रं च वर्तयतीति केशवः । तत्सम्बुद्धिः ब्रह्मरुद्रप्रवर्तकः । स्थिता प्रतिष्ठां प्राप्ता प्रज्ञा अपरोक्षज्ञानं यस्य स तथा । तस्य का भाषा ? भाष्यते ज्ञानीति व्यवह्रियतेऽनयेति भाषा लक्षणम् । ज्ञानीति येन

लक्षणेन पुरुषो व्यवहारकर्म भवति तल्लक्षणं किम् ? सास्नादिमत्त्वं लक्षणं दृष्ट्वा हि गौरिति व्यवह्रियते । ज्ञानिसामान्यलक्षणविषय एवायं प्रश्नो न तु लब्धसमाधिप्रज्ञलक्षणविषयः । किमर्थं तर्हि 'समाधिस्थस्य' इति लक्ष्यविशेषोक्तिरिति चेत् "समाधावचला बुद्धिः" इत्यनेनोक्तं ज्ञानिलक्षणमनेनानुवदतीति वदामः । न हीदमलक्षणम् । ज्ञानिमात्रनिष्ठधर्मत्वात् । किमर्थोऽनुवाद इति चेत् तज्ज्ञातं मयेति ज्ञापनार्थ इति ब्रूमः । एतज्ज्ञापनेऽपि किं प्रयोजनमिति चेत्, लक्षणान्तरं पृच्छामीति ज्ञापनम् । अन्यथा सिद्धप्रश्न एवायमित्युपेक्ष्यः प्रसज्येत । लक्षणान्तरप्रश्नस्य चेदं प्रयोजनम् अयावल्लक्ष्यभावित्वाज्ज्ञातमपि लक्षणं न सम्यग् व्यवहारोपयोगि । यावल्लक्ष्यभावि तु सार्वत्रिकव्यवहारोपयोगि ज्ञास्यामीति । अत एव प्रसिद्धलक्षणपदपरित्यागेनाप्रसिद्धभाषापदोपादानमिति । स्थितधीः अपरोक्षज्ञानी किं प्रभाषेत ? किंविषयकं भाषणं कुर्यात् ? किमासीत ? प्रतीति शेषः । किं प्रत्यासीत ? किमुद्दिश्य च व्रजेत ? किमुद्देश्यकप्रवृत्तिं कुर्यादिति ॥ ५४ ॥

**गीतातात्पर्यनिर्णयः**

**निर्वेदं नितरां लाभम् ।**

**"बुद्धिमोहो यदा न स्यादन्यथाज्ञानलक्षणः ।**
**श्रोतव्यश्रुतसाफल्यं तदा प्राप्नोति मानवः ।**
**श्रुतिमार्गं प्रपन्ना तु तदर्थज्ञाननिश्चला ।**
**समाधानेन तु पुनरापरोक्ष्याच्च निश्चला ।**
**विष्णौ प्राप्स्यति तद्योगं मुक्तो भूत्वा तदश्नुते ॥" इति च ।**

**श्रुतौ विशेषेण प्रतिपन्ना ॥**

***प्रका०*—** यदेत्यादि व्याचष्टे **निर्वेदमित्यादिना** । निश्चला विष्णौ बुद्धिर्यदित्यर्थः । प्राप्स्यसि तद्योगमित्यस्य व्याख्यानं **मुक्तो भूत्वा तदश्नुत इति** ॥

***न्या०दी०*—** कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीत्यत उच्यते यदेति ॥ तत्र निर्वेदपदेन वैराग्यमुच्यत इत्यन्यथाप्रतीतिनिरासायाह **निर्वेदमिति** ॥ एतच्छ्लोकद्वयं स्मृत्यैव व्याचष्टे **बुद्धीति** ॥ श्रोतव्यश्रुतिपदं सर्वकर्मोपलक्षकम् । समाधानेन श्रुत्यर्थज्ञाननिश्चलत्वेन अपरोक्षज्ञानं भवति । अनेन 'समाधावचला' इति समाधौ सत्यपरोक्षज्ञानं तेन विष्णावचलेति व्याख्यातं भवति । तद्योगं भगवद्योगम् । भगवद्योगस्य सर्वेषामपि विद्यमानत्वात् को विशेष

इत्युक्तं विवृणोति **मुक्त इति** ॥ तदश्नुते ब्रह्माप्नोतीत्यर्थः । अत्रापि यदा तदेति सम्बध्यते । नन्वत्र 'श्रुतिविप्रतिपन्ना' इति श्रुतिविरुद्धत्वमुच्यते । तत्कथं श्रुतिमार्गं प्रपन्नेति व्याख्येत्यत आह **श्रुताविति** ॥

*भा०दी०*— **श्रुतीति** । योगस्थ इति श्लोकेऽपीत्यर्थः । **अत्रापि यदा तदेति सम्बन्ध इति** । श्रुतिमार्गमिति स्मृतावपीत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**का भाषा ? कथं भाष्यते ? कैर्गुणैः ? समाधिस्थस्य विषमबुद्धिवर्जितस्य ॥ ५४ ॥**

*प्रका०*— "स्थितप्रज्ञस्य का भाषे"त्येतद्व्याचष्टे **का भाषेति** ॥

*न्या०दी०*— प्रकृतज्ञानिलक्षणादिप्रश्नः क्रियते **स्थितेति** ॥ तत्र "का भाषा" इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे **केति** ॥ ननु ज्ञानीति भाष्यत इति सिद्धत्वात्किं प्रश्नेनेत्यत आह **कैरिति** ॥ 'समाधिस्थस्य' इत्यस्य समाधिं कुर्वतो ज्ञानिनो लक्षणादि पृच्छतीत्यन्यथाप्रतीतिनिरासार्थमाह **समाधीति** ॥

**गीता**

**श्रीभगवानुवाच—**

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

*वि०वि०*— प्रारब्धकर्मणेषत्तिरोहितब्रह्मणो वासनया मत्तादेरिवाल्पाभिसन्धिप्रवृत्तयः सम्भवन्तीति 'या निशा' इत्यादिना दर्शयिष्यन् प्रथमतो लक्षणं भगवानुवाच **प्रजहातीति** । प्रायः सर्वान् कामान् प्रजहातीति । न तु सर्वात्मना । तदुक्तम्—

"सर्वकामनिवृत्तिस्तु ज्ञानिनो न कथञ्चन ।
अनिषिद्धकामितैवातो ह्यकामित्वमितीर्यते ॥"

इति । प्रायोऽपि सर्वकामहानस्यासम्भवमाशङ्क्याह **मनोगतानिति** । मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ तेषां हानं युक्तमिति भावः । आत्मनि विष्णावेव स्थितः सन् । आत्मना विष्णुना तत्प्रसादेन तुष्टः ।

विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः ।
दैवाद्भवति वै तुष्टिर्नान्यथा तु कथञ्चन ॥'

इति वचनात् यदेदृशो भवति तदाऽपरोक्षज्ञानीत्युच्यते ॥ ५५ ॥

*वा०ल०*— 'आत्मन्येव' इत्यत्र आत्मनि परमात्मनि ॥ ५५ ॥

*सा०सं०*— 'का भाषा' इति कृतलक्षणप्रश्नस्योत्तरमाह **प्रजहातीति**। उत्तरार्धे कृताक्षेपस्य तु समाधिं 'या निशा' इत्यग्रे वक्ष्यति । **यदा मनोगतान् सर्वान् कामान् प्रजहाति** परित्यजति । **कामान्** इत्युपलक्षणम् । कामक्रोधादीनित्यर्थः । यदा **चात्मन्येव** परमात्मन्येव व्यवस्थितः सन् तदेकचित्तः सन्निति यावत् । **आत्मना** परमात्मना तत्प्रसादेनेत्यर्थः । **तुष्टः** सन्तोषयुक्तः । तदा **स्थितप्रज्ञो**ऽपरोक्षज्ञानी उच्यत इत्यर्थः । अत्र **सर्वकामानि**त्यस्य विरुद्धकामानित्यर्थः । कामादेर्मनोगतत्वाव्यभिचारेऽपि मनोगतादित्युक्तिर्विरुद्धसर्वकामप्रहाणघटनाय ज्ञानस्य कामादेश्च कानसैकनिष्ठत्वात् 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' ति वक्ष्यमाणदिशाऽन्योन्यं विरुद्धत्वात्, मनसि भगवज्ज्ञाने जाते तद्विरुद्धाः कामादयो न स्थातुमर्हन्तीति युक्तिसूचनेन तद्घटनात् । प्रायः सर्वविरुद्धकामादित्यागवत्त्वे सति भगवदेकचित्ततया सन्तुष्टत्वं ज्ञानिलक्षणमित्युक्तं भवति । न च "योगे त्विमां शृणु" इति ज्ञानोपायं प्रतिज्ञाय ज्ञानिलक्षणोक्तिरसङ्गतेति शङ्क्यम् । प्रायो विरुद्धकामत्यागभगवदेकचित्ततत्प्रसादायत्तसन्तोषवत्त्वादीनां ज्ञानिलक्षणतयोक्तवक्ष्यमाणानामेव ज्ञानोपायशब्दितयोगस्वरूपत्वात् । परं तु— ज्ञानार्थिनैतानि यत्नसाध्यानि, ज्ञानिनि तु स्वभावसिद्धानीति विशेषः ॥ ५५ ॥

*अ०प्र०*— अत्र च यानि साधकस्य ज्ञानसाधनानि तान्येव स्वाभाविकानि सिद्धस्य लक्षणानि । अतः स्थितप्रज्ञस्य लक्षणानि कथयन्नेवान्तरङ्गानि ज्ञानसाधनानि आह यावदध्याय-परिसमाप्ति । तत्र प्रथमप्रश्नोत्तरमाह **प्रजहातीति** द्वाभ्याम् ।

हे पार्थ ![१], मनोगतान्[२], सर्वान्[३], कामान्[४], यदा[५], प्रजहाति[६], यदात्मना[७], आत्मनि[८], तुष्टश्च भवति[९], तदा तेन लक्षणेन मुनिः[१०], स्थितप्रज्ञ इति[११] उच्यते इत्यन्वयः ।

हे पार्थ !, मनोगतान् = मनसि स्थितान्[२], सर्वान्[३], कामान्[४], यदा[५], प्रजहाति = प्रकर्षेण जहाति त्यक्ष्यति[६], त्यागे हेतुः यदात्मना[७], आत्मनि स्वहृदयारविन्दे परमात्मनि[८], तुष्टश्च भवति[९], इत्यनेन आत्मारामः सन् यदा क्षुद्रविषयाभिलाषान् त्यक्ष्यति तदा तेन लक्षणेन मुनिः[१०], स्थितप्रज्ञ इति[११] उच्यते इत्यर्थः ॥ ५५ ॥

**भाष्यम्**

**गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यन् तल्लक्षणं प्रथमत आह प्रजहातीति । एवं परमानन्दतृप्तः किमर्थं प्रवृत्तिं करोति इति प्रश्नाभिप्रायः । प्रारब्धकर्मणेषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धयः प्रवृत्तयः सम्भवन्तीत्याशयवान् परिहरति । प्रायः सर्वान् कामान् प्रजहाति । शुकादीनामपीषद्दर्शनात् ।**

**'त्वत्पादभक्तिमिच्छन्ति ज्ञानिनस्तत्त्वदर्शिनः' इत्युक्तेस्तामिच्छन्ति । यदा त्विन्द्रादीनामाग्रहो दृश्यते तदाऽभिभूतं तेषां ज्ञानम् । तच्चोक्तम्—**

**'आधिकारिकपुंसां तु बृहत्कर्मत्वकारणात् ।**
**उद्भवाभिभवौ ज्ञाने ततोऽन्येभ्यो विलक्षणाः ॥' इति ।**

**अत एव वैलक्षण्यादनधिकारिणामाग्रहादि चेदस्ति न ते ज्ञानिन इत्यवगन्तव्यम् ।**

***प०टी०***— चोद्यद्वयपरिहारच्छेदेनोत्तरं प्रघट्टकमवतारयति **गमनादीति** । ननु 'या निशा' इत्यादिना दर्शयिष्यन्, एतल्लक्षणं तदुद्देश्य पृच्छेत् (?) किं कारणम् ? इत्यत आह **एवमिति** । ननु परमानन्दतृप्तस्येषदभिसन्धिपूर्विका प्रवृत्तिरपि कथम् ? इत्यत आह **प्रारब्धेति** । ननु भगवतैव सर्वकामप्रहाणस्य ज्ञानिलक्षणतयोक्तेः कथमीषदभिसन्धिरभिमता ? इत्यत आह **प्राय इति** । कुतः सङ्कोचः ? इत्यत आह **शुकादीनामिति** । ईषन्निषिद्धकामादनादिविधभक्त्या (?) कामदर्शनाच्च सर्वपदसङ्कोच इत्यर्थः । प्रायः सर्वकामप्रहाणलक्षणमिन्द्रादिष्वव्याप्त इत्यत आह **यदेति** । इन्द्रादीनां ज्ञानित्वेऽपि ज्ञानाभिभवकल्पनस्य निर्मूलत्वात्, अज्ञानिष्वपि ज्ञानं प्रकल्प्याभिभवः कल्प्यतामित्यत आह **तच्चोक्तमिति** ।

***न०टी०***—'का' इति लक्षणं पृष्टम्, 'किम्' इति तत्प्रवृत्त्युद्देश्यम् । तदुभयोत्तरत्वेनोत्तरं ग्रन्थसन्दर्भमवतारयति **गमनादीति** । पृच्छति लक्षणं तत्स्वरूपज्ञापनार्थं लोकस्य । तत्प्रवृत्त्युद्देश्यं किमिति ? इत्याकाङ्क्षायामाह **एवमिति** । ब्रह्मप्रत्यक्षदर्शिनेन परमानन्दमग्नत्वाद्यस्य बुद्धिर्भेरीताडनादावपि ततो नापगच्छति, तस्येतरविषयाभिसन्धानमीषदपि कुतः ? इत्यत आह **प्रारब्धेति** । ननु

सर्वकामान् प्रजहातीति वक्तुः कथमीषदभिसन्ध्याऽवशेषोऽभिप्रेतः ? इत्याशङ्क्य, प्रायिकोऽयं सर्वशब्दः, स्थितप्रज्ञमुख्यानां शुकादीनामपीषद्विषयाभिसन्धिदर्शनादिति भावेनाह **प्राय इति** । भक्तिमपि त इच्छन्ति, अतो प्रायिकमेव सर्वकामप्रमाणमिति भावेनाह **त्वदिति** । ननु यदि सर्वकामप्रहाणं ज्ञानिलक्षणम्, तर्हीन्द्रादयोऽपि न ज्ञानिनः । तेषामपि कदाचिदाग्रहदर्शनादित्याशङ्क्य ज्ञानिनामपि तेषां कदाचिज्ज्ञानाभिभवे कारणमस्तीत्येतत् सप्रमाणकमाह **यदेति** । अतोऽन्येषा-मेवैतल्लक्षणाभावेनाज्ञानितेत्याह **अत इति** ।

***प्र०दी०***— लक्षणप्रश्नस्यैवोत्तरं प्रतीयते । न तु 'स्थितधीः' इत्यादेरित्यतस्तदुत्तरस्थानं दर्शयन्ननन्तरप्रकरणार्थं दर्शयति— **गमनादीति** । अभिसन्धिः प्रयोजनोद्देशः । ईषदभिसन्धि-सूचनायातिशब्दः । प्रवृत्तिमात्रमिहाभिप्रेतम् । न भाषणादिकमेवेति ज्ञापनाय 'भाषणादि' इति नोक्तम् । व्यवहाराय लक्षणप्रश्नो घटते । प्रवृत्त्युद्देश्यप्रश्नस्तु व्यर्थ एव । न च शक्यः प्रतिवक्तुम् । अनेकेषां प्रवृत्त्युद्देश्यस्यैकरूपस्याभावादित्यभिप्रायेण भगवतोऽपेक्षितोऽसाविति किं न स्यात् । किं तदुत्तरस्थानप्रदर्शनेन । अन्यथाऽल्पमप्युद्देश्यं वक्तव्यमित्यत आह— **एवमिति** । एवं भेरीताडना-दावप्यचलेत्युक्तप्रकारेण परमानन्दतृप्तश्चेत् किमर्थं प्रवृत्तिं करोति । न कुर्यात् । करोति च । तस्मा-दुक्तमसदित्युक्ताक्षेप एवात्राभिप्रेतः । प्रश्नस्तु मुखत एव । अतो नोपेक्षामर्हतीति भावः । एतच्चार्जुनस्य प्रेक्षावत्त्वाद्गम्यते । एवं चेत् 'गमनादिप्रवृत्तिः' इत्युक्तः परिहारो न पूर्णः । प्रवृत्तिकारणानुक्तेरित्यत आह— **प्रारब्धेति** । ईषत् तिरोहितं ब्रह्म यस्यासौ तथोक्तः । परिहरति द्वितीयं प्रश्नं 'या निशा' इत्यादाविति शेषः ।

ननु सर्वकामप्रहाणिर्ज्ञानिलक्षणत्वेनोच्यते । तत्कथमल्पाभिसन्ध्यङ्गीकार इत्यत आह— **प्राय इति** । कुतस्सर्वशब्दसङ्कोच इत्यत आह— **शुकादीनामपीति** । विरुद्धकामस्येति शेषः । तच्च प्रवृत्तिलिङ्गेन आगमाच्च ज्ञातव्यम् । अनुकूलकामस्तु सर्वथाऽस्त्येव । अतोऽपि सङ्कोच इत्याह— **त्वत्पादेति** । तां भक्तिम् । उपलक्षणमेतत् । प्रायेण विरुद्धकामत्यागो ज्ञानिलक्षणं चेदिन्द्रादीनां ज्ञानित्वं न स्यात् । बहुतरविरुद्धकामदर्शनात् । तथाभूता अपि चेज्ज्ञानिनस्तर्हि देवदत्तादयोऽपि किं न स्युरित्यत आह— **यदा त्विति** । आग्रहो विरुद्धकामाभिनिवेशः । एतत्प्रमाणेन स्थापयति— **तच्चेति** । 'आधिकारिकाः' इति पुरुषविशेषसंज्ञा । 'प्रजापाश्च तथा देवाः' इत्यादिवचनात् । देव-दत्तादिप्रतिबन्दीं मोचयति— **अत एवेति** । एतदागमोक्तादेव । आदिपदेन विरुद्धक्रोधादिग्रहणम् । अनेन कामशब्दः क्रोधादीनामप्युपलक्षणार्थ इति सूचितं भवति ।

*भा०दी०*— **अनन्तरप्रकरणेति** । प्रजहातीत्याद्यनेककार्यात्मकोत्तरप्रकरणार्थमित्यर्थः । भाष्येऽनौचित्यमाशङ्क्य निराह **प्रवृत्तीति** । **इहेति** । स्थितधीः किं प्रभाषेतेत्यर्ध इत्यर्थः । शङ्कते **व्यवहारायेति** । यद्युत्तरार्धे गमनप्रश्नमात्रमभिमतं तर्हि पूर्वार्धोक्तप्रश्न एव समाधानार्ह इति बुद्ध्या भगवता प्रजहातीत्यादिना परिहार उच्यते । उत्तरार्धोक्तप्रश्नस्तूपेक्ष्यत्वान्न परिहृतो भगवतेति किं न स्यादित्यर्थः । तत्र हेतुः **प्रवृत्तीत्याद्यर्थ एवेति** । व्यवहारानुपयोगादिति भावः । **न चेति** । किं चेत्यर्थः । **अन्यथेति** । व्रजेत किमित्यस्य परिहर्तव्यत्वे इत्यर्थः । **उक्तमसदिति** । समाधावचला बुद्धिस्तदा योगमवाप्स्यसीति उक्तमसदित्यर्थः । **अत्रेति** । व्रजेत किमत्रेत्यर्थः । **एतच्चेति** । आक्षेपाभिप्रायवत्वमित्यर्थः । एतच्च प्रवृत्तिलिङ्गेनागमाच्चेति ज्ञातव्यमिति । संन्यासभिक्षाटनाद्युद्देशकप्रवृत्तिलिङ्गेन यं प्रव्रजन्तमित्याद्यागमाच्च ज्ञातव्यमित्यर्थः । भगवदेकचित्ततया परमानन्दमग्नस्योक्तरूपप्रवृत्तिकामस्य विरुद्धत्वादित्याहुः । **उपलक्षणमेतदिति** । परब्रह्मत्वमिच्छामि परब्रह्मन् जनार्दनेति श्रुतसायुज्यादिमोक्षकामस्य इच्छानतस्य युक्तेत्यादिना प्रागुक्तेश्वरप्रसादज्ञानादिकामस्य चेति योज्यम् । **तथा देवा इत्यादिवचनादिति** । पञ्चमस्कन्धषष्ठाध्यायतात्पर्ये 'प्रजायाश्च तथा देवा महाधिकारिणः स्मृता' इत्यादि ब्रह्माण्डवचनादित्यर्थः । **कामशब्द इति** । 'यदा कामान्' इत्यादिश्लोकस्थकामशब्द इत्यर्थः ॥

*भा०र०*— **अनन्तरप्रकरणार्थमिति** । प्रजहातीत्याद्यनेकश्लोकात्मकोत्तरप्रकरणार्थमित्यर्थः । नन्वभिसन्धिरभिप्रायः । स चेच्छारूपः । "अभिप्रायो हीच्छा" इति तर्कताण्डवोक्तेः । तथा च प्रवृत्तेरिच्छापूर्वकत्वमवर्जनीयमिति कथमभिसन्धिपूर्वकत्वनिषेध इत्यतोऽभिसन्धिशब्दस्य विवक्षितमर्थमाह **अभिसन्धिः प्रयोजनोद्देश इति** । अत्यभिसन्धिपूर्वकत्वमेव निषिध्यते । न तु सर्वथाऽभिसन्धिपूर्वकत्वमिति वा न व्याहतिरिति भावेनाह **ईषदिति** । ननु गीतापाठक्रमानुसारेण भाषणादिप्रवृत्तिरिति भाषणीयम् । न तु 'व्रजेत' इत्युक्तगमनादीत्यत आह **प्रवृत्तिमात्रमिति** । व्यावृत्तिव्यवहारयोर्लक्षणज्ञानप्रयोजनत्वादाह **व्यवहारायेति** । **प्रवृत्तीति** । "व्रजेत किम्" इति ज्ञानिप्रवृत्त्युद्देश्यप्रश्न इत्यर्थः । तज्ज्ञानेऽपि स्वस्य प्रयोजनाभावादिति भावः । वस्तुतस्तु प्रत्युत्तरमेव न युक्तं कर्तुमित्याह **न चेति** । **अनेकेषां** ज्ञानिनाम् । **उपेक्षितो**ऽसौ प्रष्टा । उत्तरार्धोक्तप्रश्नस्तु उपेक्ष्यत्वान्न परिहृतो भगवतेति किं न स्यादित्यर्थः । तत्र हेतुः **प्रवृत्त्युद्देश्यस्येति** । **अन्यथा** प्रवृत्त्युद्देश्यप्रश्नस्य व्यर्थत्वेनोपेक्षणीयत्वाभावे "ततश्च समाधावचला । ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि" इति भाष्यं सान्वयमेवंशब्दार्थं वक्तुमनुवदति **एवमितीति** ॥ 'किमर्थम्' इत्याक्षेपतात्पर्यं **न कुर्यादिति** । **उक्तं**

"समाधावचला बुद्धिः" इत्युक्तम्, परमानन्दतृप्तत्वं वा । तर्ह्याक्षेपाभिप्राय इत्येव भाषणीयमित्यत आह **प्रश्नस्त्विति** । प्रश्नो वाचनिकः । आक्षेपस्त्वाभिप्रायिक इत्यर्थः । **एतच्च उपेक्षानर्हत्वम्** । केचित्तु, "प्रश्नस्याक्षेपगर्भत्वं किमिति कल्प्यते ? प्रश्नमात्रमेवेदं किं न स्यादित्यत आह **एतच्चेति** । प्रश्नस्याक्षेपगर्भत्वम् । न हि प्रेक्षावानर्जुनो व्यर्थं प्रवृत्त्युद्देश्यप्रश्नं कुर्यात् । तथात्वे प्रेक्षावत्त्वहानिः स्यात् । अतस्तदन्यथानुपपत्त्या तत् कल्प्यत इति भाव इति व्याचक्षते । **एवं चेत्** प्रश्न आक्षेपगर्भश्चेत् । **पूर्णः** पर्याप्तः । साक्षात्कृतपरब्रह्मणो ज्ञानिनो ब्रह्म कथं तिरोहितं भवेदित्यतस्तत्र कारणोक्तिः **प्रारब्धेति** । स्पष्टत्वात् 'ईषत्तिरोहितब्रह्मणः' इत्यत्र सामानाधिकरण्यभ्रमं निरस्यन् विग्रहं दर्शयति **ईषदिति** । **द्वितीयं प्रश्नमिति** । भाषणादिप्रश्नानां प्रवृत्त्युद्देश्यप्रश्नत्वेनैकीकरणवचनमिति ज्ञेयम् ।

**प्रहाणिः** प्रकर्षेण त्यागः । ईषदित्यनन्तरं पूरणीयमाह **विरुद्धेति** । **तच्चेति** ॥ विरुद्धकामत्वं संन्यासभिक्षाटनाद्युद्देश्यकप्रवृत्तिलिङ्गेन, कृष्णेनोत्तराविषयेऽस्त्रं निवर्तयेत्युक्तेऽपि द्रौणेस्तत्रैवास्त्रनिपातनादिविपरीतप्रवृत्तिलिङ्गेन वा, "यं प्रव्रजन्तमनुपेतमपेतकृत्यम्" इति, "क्वचिद् विरुद्धकामोऽपि यथाऽयुध्यद्धरो हरिम्" इत्याद्यागमाच्च ज्ञातव्यमित्यर्थः । **उपलक्षणमिति** । "भक्तिमिच्छन्ति" इत्येतद् वचनम् । "परब्रह्मत्वमिच्छामि इत्यादिशास्त्रवेदितसायुज्यादिमोक्षकामस्य", "इच्छा च तस्यायुक्ता" इत्यादिभाष्योक्तेश्वरप्रसादज्ञानादिकामस्य चोपलक्षणया ग्रहणमित्यर्थः । **इन्द्रादीनां ज्ञानित्वं न स्यादिति** । न चेष्टापत्तिः । "न च तेषां शुद्धसत्त्वानाम्" इत्यादिनेन्द्रादीनां प्राग् ज्ञानित्वस्य साधितत्वादिति भावः । **एतत्** विरुद्धकामाभिनिवेशकाले ज्ञानं तेषामभिभूतमित्येतत् । **पुरुषविशेषेति** । महाधिकारिणोऽल्पाधिकारिणश्चेति पदस्थद्विविधपुरुषेत्यर्थः । **इत्यादिवचनादिति** । "प्रजापाश्च तथा देवा महाधीकारिणः स्मृताः । ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् । गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु । अल्पाधिकारिणः प्रोक्ता अनधीकारिणः परे" इति पञ्चमतात्पर्योदाहृतब्रह्माण्डवचनादित्यर्थः । महाधीकारिणः, "उपसर्गस्य घञ्य मनुष्ये बहुलम्" इत्यधेर्दीर्घः । देवाः प्रजापतयश्च महाधिकारिकाः शास्त्रोक्ताः । अल्पाधिकारिणः अल्पाधिकारिकाः प्रोक्ता इत्यर्थस्य विवक्षितत्वान्नोक्तार्थे प्रमाणाभावशङ्कावकाशः । तर्हि देवदत्तादयोऽपि विरुद्धकामा ज्ञानिनः किं न स्युरिति शङ्कितत्वादाह **देवदत्तेति** । अनधिकारिणाम् उक्ताधिकारिकव्यतिरिक्तदेवदत्तादीनामिति भाष्यार्थः । कामशब्दः "प्रजहाति यदा कामान्" इति गीतागतः । 'क्रोधादीनाम्' इत्यादिपदेन विरुद्धमत्सरादिग्रहणम् ।

**भाष्यम्**

न च अत्र समाधिं कुर्वतो लक्षणमुच्यते । 'यः सर्वत्रानभिस्नेहः' इति स्नेह-निषेधात् । न हि समाधिं कुर्वतः तस्य शुभाशुभप्राप्तिरस्ति । असम्प्रज्ञात-समाधेः । सम्प्रज्ञाते त्वविरोधः । तथाऽपि न तत्रैवेति नियमः ।

'कामादयो न जायन्ते ह्यपि विक्षिप्तचेतसाम् ।
ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयात् ॥ —इति स्मृतेः ।

मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ युक्तं हानं तेषामिति दर्शयति— **मनोगतानिति** । विरोधश्चोच्यते, 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति । न चैतददृष्ट्वाऽपलपनीयम् । पुरुषवैशेष्यात् । आत्मना = परमात्मना । परमात्मन्येव स्थितः सन् । आत्माख्ये तस्मिन् स्थितस्य तत्प्रसादादेव तुष्टिः भवति ।

'विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः ।
देवाद्भवति वै तुष्टिर्नान्यथा तु कदाचन ॥'

इत्युक्तं हि नारायणाष्टाक्षरकल्पे । अतो नात्मा जीवः ॥ ५५ ॥

***प०टी०***— नन्वेतल्लक्षणं समाधिस्थस्यैव किं न स्यात ? न । पश्चात् पदानुगुण्या-दव्याप्तिशङ्काभावाच्चेत्याह **न चेति** । समाधिस्थस्य स्नेहाभावो युक्त एवेत्यत आह **न हीति** । सम्प्रज्ञातसमाधिस्थस्य सुप्त्यादिप्राप्तावपि स्नेहाभावाविरोधात् तस्येदं लक्षणमित्यत आह **सम्प्रज्ञाते त्विति** । यद्यपीति संयोज्यम् । असम्प्रज्ञातसमाधिस्थानां ज्ञानिनां वर्तमानाच्च **तत्रैवेति नियम** इत्यर्थः । ज्ञानिनः सर्वकामाभावे कारणाकाङ्क्षापरिहाराय 'मनोगत'पदमवतार्य व्याचष्टे **मनोगता हीति** । कुतो ज्ञानकामनयोर्विरोधः ? इत्यत आह **विरोधश्चेति** । असम्भवीदं लक्षणमित्यत आह **न चेति** । सुषुप्तावेतल्लक्षणमतिव्याप्तमित्यत आह **आत्मनेति** । 'आत्म'शब्देन जीवः किं न स्यात् ? इत्यत आह **आत्माख्य इति** ॥ ५५ ॥

***न०टी०***— ननु समाधिं कुर्वतः एवैतल्लक्षणं किं न स्यात् ? तथा सति नाव्याप्तिशङ्का, 'समाधिस्थस्य' इति प्रश्नपदानुगुण्यं चेत्यत आह **न चेति** । ननूचित एव स्नेहनिषेधः, तस्य

क्वचिदपि स्नेहाभावात् इत्याशङ्क्य शुभाशुभं प्राप्यानभिस्नेह इत्युक्तेः, तदभावाच्चासम्प्रज्ञातसमाधिस्थस्य, अतो नेदं लक्षणं तस्येत्याह **न हीति**। ननु समाधिं कुर्वत्यपि सम्प्रज्ञाते 'शुभाशुभं प्राप्य' इत्येतद्विरोधाभावात् तस्मिन्नेव पुंसीदं लक्षणं किं न स्यात् ? इत्याशङ्क्य, उक्तप्रकारेण असमाधिस्थेऽपि सम्भवादुभयोरपीदं लक्षणमित्येतत् सप्रमाणकमाह **सम्प्रज्ञाते त्विति**। सम्यक् प्रज्ञातं सम्प्रज्ञातं देहादिविषयं यस्मिन् स सम्प्रज्ञातः। नपुंसके भावेऽप्युक्तप्रत्ययदर्शनात्। ज्ञाने सति कामनिवृत्तौ हेत्वाकाङ्क्षायां तदुक्तिपरत्वेनोत्तरं पदं व्याचष्टे **मनोगता हीति**। विषयकामभगवज्ज्ञानयोः कथं विरोधः ? इत्याकाङ्क्षायामाह **विरोधश्चेति**। एवंविधपुरुषादर्शनादसम्भावितमिदं लक्षणमिति नाशङ्कनीयमित्याह **न चेति**। 'आत्मनि' इत्यादौ स्वस्मिन्नेवेत्यपि प्रतीतिर्मा भूदिति यथावद्व्याचष्टे **आत्मनीति**। कुतोऽत्रात्मशब्दोक्तो विष्णुरेव, न जीवः ? इत्याकाङ्क्षायाम्, आत्मेत्याख्याया भगवतोऽन्यत्रासम्भवात्, विषयपरित्यागेन भगवद्ध्यायिनस्तस्मिन्नेव सन्तोषः, तत्प्रसादादेव भवतीति वचनबलाच्चेति भावेनाह **आत्माख्य इति**॥ ५५॥

*प्र०दी०*— ननु समाधिं कुर्वतो ज्ञानिनो लक्षणमेतदिति व्याक्रियताम्। तथा सति प्रश्नवाक्यस्थं 'समाधिस्थस्य' इति पदं समञ्जसं स्यात्। सर्वशब्दश्चासङ्कुचितार्थः स्यात्। इन्द्रादिविषयाक्षेपाप्रसक्तिश्चेत्यत आह— **न चेति**। समाधिं कुर्वतस्स्नेहनिषेधोऽनुगुण एवेत्यत आह— **न हीति**। नात्र स्नेहनिषेध-मात्रमुच्यते। किन्तु 'तत्तत्प्राप्य शुभाशुभं' इति शुभाशुभार्थप्राप्तिपूर्वकम्। न च तत्प्राप्तिस्समाधिं कुर्वतो ज्ञानिनोऽस्ति। कुत इत्यत उक्तम्— **असम्प्रज्ञातेति**। असम्प्रज्ञातः समाधिः यस्यासौ तथोक्तः। बाह्यार्थानुसन्धानं यत्र नास्ति सोऽसम्प्रज्ञातसमाधिः। इतरः सम्प्रज्ञातसमाधिरिति योगशास्त्रे प्रसिद्धः। तथा च लक्षणसम्भवि प्रसज्येत। सावकाशेभ्यो बहुभ्यो निरवकाशस्यैकस्यैव बलवत्त्वमिति भावः। एवं तर्हि सम्प्रज्ञातसमाधिस्थस्यैतल्लक्षणमस्तु। तत्रोक्तदोषाभावादित्यत आह— **सम्प्रज्ञाते त्विति**। यद्यपि सम्प्रज्ञातसमाधौ शुभाशुभप्रतीतिसम्भवेनासम्भवित्वं नाम लक्षणविरोधो नास्ति। तथापि कामादिहानं समाधिस्थ एव पुंसीति नियमो नास्ति। असमाधिस्थेऽपि ज्ञानिनि विद्यमानत्वात्। तथा चातिव्याप्तिः स्यादित्यर्थः। असमाधिस्थेऽपि ज्ञानिनि कामाद्यभावः कुत इत्यत आह— **कामादय इति**। तदर्थं 'सर्वथा' इति विशेषणप्रक्षेपेऽपि पुरुषविशेषेऽतिव्याप्तिपरिहारो दुर्घट एव। न च अस्मन्मतेऽप्यव्याप्तिदोषः। असम्प्रज्ञातसमाधिस्थव्यतिरिक्तविषयत्वात्। सम्भवतस्तु तद्विषयत्वादिति।

कामानां मनोगतत्वाव्यभिचाराद्व्यर्थं विशेषणमित्यतो नेदं विशेषणम्। किन्तु सर्वकामत्यागस्यासम्भवित्वमाशङ्क्य तदुपपादनाय युक्तिरियमुक्तेत्याह— **मनोगता हीति**। तत्रैव मनस्येव।

कामज्ञानयोर्विरोधः कुत इत्यत आह— **विरोधश्चेति**। रसो राग इति वक्ष्यति। ननु सर्वकामप्रहाण-मस्मदादिषु न दृष्टम्। तद्दृष्टान्तेन ज्ञानिष्वपि तदभावानुमानादसम्भवित्वं लक्षणस्येत्यत आह— **न चेति**। कुतः। उदाहृतप्रमाणविरोधात्। प्रमाणविरुद्धार्थानुमाने च पण्डितमूर्खादिवैचित्र्यापलाप-प्रसङ्गादित्याह— **पुरुषेति**। 'आत्मनि', 'आत्मना' इति पदद्वयेन जीव एवोच्यत इति कश्चित्। तृतीयान्तेन मन इत्यपरः। तदुभयमसदिति भावेनाह— **आत्मनेति**। स्थितस्सन्निति शेषोक्तिः। वाक्यार्थं वदन् स्वव्याख्यानोपपत्तौ परव्याख्यानानुपपत्तौ च युक्तिमाह— **आत्माख्य इति**। तस्मिन् स्थितस्य तदेकाग्रचित्तस्य। अत्र त्यक्तविषयस्यापि तुष्टिरुच्यते। सा च परमात्मपरिग्रहे सम्भवति। नान्यथेत्यर्थः। कुत इत्यत आह— **विषयांस्त्विति**। ततः किमित्यत आह— **अत इति**॥ ५५॥

***भा०दी०***— **नात्रेति**। लक्षणोक्तिप्रकरणे यः सर्वत्रेति तृतीयश्लोक इत्यर्थः। **शुभाशुभ-मितीति**। अनेनेति शेषः। प्रातिपूर्वकमित्यत्र स्नेहनिषेध इत्यनुषङ्गः। **असम्भवि प्रसज्येतेति**। समाधिकुर्वतो ज्ञानिनो लक्षणत्व इत्यापादकं योज्यम्।

ननु समाधिस्थपरत्वे प्रश्नवाक्यस्थमित्यादिना नानुगण्यं युक्तं इत्यत आह **सावकाशेभ्य इति**। प्रागुक्तदिशानुवादसङ्कोचविधानादिना सावकाशेभ्यः समाधिस्थपदसर्वशब्दे क्रियादिविषया-क्षेपेत्यर्थः। शुभाशुभप्राप्तिपूर्वकस्नेहनिषेधरूपनिरवकाशरूपस्यैकस्येत्यर्थः। **तदर्थमिति**। ज्ञानि-मात्रेनातिव्याप्त्यर्थम्। सर्वदा कामादयो न जायन्त इति सर्वदेति विशेषण इत्यर्थः। **पुरुषविशेष इति**। ब्रह्मादिपुरुषविशेष इत्यर्थः। तत्र कदापि विरुद्धकामानुदयादिति भावः। **अव्याप्तिदोष इति**। तत्तत्प्राप्येत्युक्तिलक्षणाख्यासम्प्रज्ञातसमाधिस्थपुरुषविशेषे व्याप्तिरित्यर्थः। **सम्भव इति**। प्रजहातीत्यादिनोक्तकामक्रोधादिराहित्यरूपस्येत्यर्थः। **उदाहृतेति**। कामादय इति प्रमाणेत्यर्थः।

***भा०र०***— व्याक्रियतामित्यत्रोपष्टम्भकमाह **तथा सतीति**। **समाधिस्थस्येतीति**। समाधौ तिष्ठतीति व्युत्पत्तौ समाधिं कुर्वतो लाभ इति भावः। उत्तरश्लोकाक्षरपर्यालोचनयाऽप्येवमित्याह **सर्वशब्द इति**। "कामान् सर्वान् पार्थ" इत्यत्रत्यसर्वशब्द इत्यर्थः। समाध्यवस्थायामेव सर्व-कामप्रहाणं सम्भवतीति भावः। सर्वकामप्रहाणस्य ज्ञानिलक्षणत्वे इन्द्रादावव्याप्तिः स्यात्। तेषां बहुतरविरुद्धकामदर्शनादितीन्द्रादिविषये योऽयमाक्षेपः कृतः सोऽप्यत्र नास्तीत्याह **इन्द्रादीति**। तेषां विरुद्धकामाभिनिवेशकाले समाध्यभावेनालक्ष्यत्वादेवाव्याप्तिशङ्कानवकाश इत्यर्थः। शुभाद्यर्थप्राप्त्य-भावे 'असम्प्रज्ञातसमाधेः' इत्येतद्धेतुसमर्पकं यथा स्यात् तथा व्याचष्टे **बाह्येति**। बाह्यार्थानुसन्धानं यत्रेति वदन् सम्प्रपूर्वाज्जानातेभवि निष्ठा। सं प्रकृष्टं ज्ञातं ज्ञानं यस्मिन् स तथेति व्युत्पत्तिमभि-

प्रैति । **लक्षणं** प्राप्तशुभाद्यर्थस्नेहशून्यत्वरूपम् । **असम्भवि** समाधिं कुर्वत्सु ज्ञानिषु शुभादिबाह्यार्थानुसन्धानासम्भवाल्लक्ष्यनिष्ठाभावप्रतियोगित्वरूपासम्भवदूषितं स्यादित्यर्थः ।

ननु समाधिं कुर्वतो ज्ञानिनो लक्षणमेतदित्यङ्गीकारे समाधिस्थपदसामञ्जस्यं, सर्वशब्दासङ्कोचः, इन्द्रादिविषयाक्षेपाप्रसक्तिश्चेति साधकानि बहूनीत्युक्तमित्यत आह **सावकाशेभ्य इति** । प्रागुक्तदिशाऽनुवादेन, सङ्कोचावश्यम्भावेन, अभिभूतज्ञानत्वेन च सावकाशेभ्यः समाधिस्थपदसामञ्जस्यादिभ्यः शुभप्राप्तिपूर्वकस्नेहनिषेधरूपस्य निरवकाशस्यैकस्यापि बलवत्त्वम् । यथा "शब्दादेव प्रमितः" इत्यधिकरणे "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" इत्यत्रेशानो वायुर्विष्णुर्वेति विशये वायुप्रापकाणां प्राणव्यवस्थापकत्वमध्यमत्वसदैवोपास्यत्वानां लिङ्गानां सत्त्वाद् वायुरिति प्राप्ते, विष्णुरेवायं वामनशब्दादेवेति सिद्धान्तितम् । तत्र लिङ्गानि सावकाशानि वामनशब्दस्त्वेकोऽपि निरवकाश इति बहूनां लिङ्गानां सावकाशानामेकेन वामनशब्देन बाध उक्तः तथाऽत्रापीति भावः । **एवं तर्हि** यद्युक्तरीत्याऽसम्प्रज्ञातसमाधिस्थलक्षणत्वेन व्याख्याने । **दोषः** उक्तदोषः असम्भवः । 'तथाऽपि' इति भाष्यं सङ्गमयितुमाह **यद्यपीति** । **विक्षिप्तचेतसाम्** असमाधिस्थानामपि । तथा चानेन विवक्षितार्थसिद्धिः । **तदर्थं** ज्ञानिमात्रेऽनतिव्याप्त्यर्थम् । **सर्वथेति विशेषणप्रक्षेप इति** । असमाधिस्थज्ञानिनां कदाचित् कथञ्चिद् विरुद्धकामः सम्भवत्येवेति तद्व्यावृत्तिरिति भावः । **पुरुषविशेषे** उत्पन्नापरोक्षज्ञाने ऋजुगणे । तत्र सम्प्रज्ञातासम्प्रज्ञातरूपोभयविधसमाध्यभावदशायामपि "शुद्धे भागवते धर्मे निरतो यद् वृकोदरः" इत्यादिशास्त्रावेदिताच्छिन्नधर्मताके विरुद्धकामनासम्भावनाया अप्यभावात् । न च तेषामुभयविधसमाध्यसिद्धौ मानाभावः । द्वितीयनवमे "कर्मविमोहिते इदं कार्यमित्यजानति" इति । षष्ठे "अज्ञानं तु चतुर्वारं द्विवारं भयमेव च । शोकोऽपि तावान्" इत्यादेरेव तत्र मानत्वादिति भावः । **अव्याप्तिदोष इति** । "तत्तत् प्राप्य शुभाशुभम्" इति शुभाशुभार्थप्राप्तिपूर्वकस्नेहनिषेधरूपलक्षणस्यासम्प्रज्ञातसमाधिस्थपुरुषविशेषेऽव्याप्तिदोष इत्यर्थः । बाह्यार्थानुसन्धानाभावेन शुभाशुभप्रतीतेस्तत्राभावादिति भावः । **व्यतिरिक्तविषयत्वात्** "तत्तत्प्राप्य शुभाशुभम्" इति लक्षणवाक्यस्येति शेषः । तर्हि किं नाम तत्र लक्षणं ज्ञातव्यम् ? इत्यत आह **सम्भवतस्त्विति** । "प्रजहाति यदा कामान्" इत्युक्तस्य प्रायो विरुद्धकामादिरहितत्वादेस्सर्वत्र सुसम्पादस्येत्यर्थः ।

**कामानां मनोगतत्वाव्यभिचारादिति** । "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति व्यभिचारभाव एव विशेषणत्वम् । न चात्र व्यभिचारोऽस्ति । अमनोगतकामाभावात् । इदं च परीत्या । स्वरीत्या तु स्वरूपभूतकामव्यावृत्त्यर्थं 'मनोगताः' इति विशेषणमिति । "कामा येऽस्य

हृदि स्थिताः'' इत्यन्तःकरणस्थानां कामानां मोक्षमेव हि । आह श्रुतिर्हृदीत्येव न चेद् व्यर्थं विशेषणम्'' इत्यनुव्याख्यानसुधयोः, ''कामा येऽस्य हृदि स्थिताः'' इत्यत्राप्यन्तःकरणस्थानामेव कामानां मोक्ष उक्तो न तु स्वरूपभूतानाम्'' इति तैत्तरीयभाष्ये च स्थितम् । **सर्वकामत्यागस्य** 'प्रजहाति' इत्युक्तसर्वकामत्यागस्य । कदाऽपि क्वाप्यदर्शनाद् यावल्लक्ष्यनिष्ठाभावप्रतियोगित्वरूप-सम्भवित्वमित्यर्थः । **तदुपपादनाय** लक्षणसम्भवोपपादनाय । व्यवहितकामपरत्वभ्रमनिरासायाह **तत्रैव मनस्येवेति** । **कामज्ञानयोरिति** । अनेन 'तद्विरुद्ध' इत्यत्र तच्छब्देन कामो ग्राह्य इत्युक्तं भवति । कामज्ञानयोर्विरोधे 'रसोऽप्यस्य' इत्यस्य प्रमाणत्वं स्फोरयितुं तत्रत्यरसशब्दार्थमाह **रसो राग इति** । कामज्ञानयोर्विरोधे कथमिदं प्रमाणम् ? तत्र रसज्ञानयोर्विरोधोक्तेरित्यत आह रसो राग इति वक्ष्यतीत्यपि गमयन्ति । तथा च दृष्ट्वा वर्तमानस्य रसशब्दितः कामो निवर्तत इत्युक्तौ ज्ञान-कामयोर्निर्वर्त्यनिवर्तकभावलक्षणो विरोधः शास्त्र उच्यत इति भाष्यार्थ उक्तो भवति । **तदभावानु-मानादिति** । न ज्ञानिनः सर्वकामप्रहाणवन्तः, पुरुषत्वादस्मदादिवदिति सर्वकामप्रहाणाभावानुमाना-दित्यर्थः । **उदाहृतेति** । ''कामादयो न जायन्ते'' इत्युदाहृतप्रमाणविरोधात् सर्वकामप्रहाणं नाप-लपनीयमित्यर्थः । **वैचित्र्येति** । प्रत्यक्षसिद्धपाण्डित्यशालिनं कञ्चन पक्षीकृत्य, नायं पाण्डित्यशाली पुरुषत्वात् सम्मतवदिति प्रयोगसम्भवाद् वैचित्र्यमपलपनीयं स्यादित्यर्थः । **जीव एवोच्यत इति** । **आत्मन्येव** प्रत्यगात्मस्वरूप एव । आत्मना स्वेनैवेति शब्दद्वयेन जीव उच्यत इति शङ्कर आहे-त्यर्थः । अपरः आत्मना मनसा, आत्मैकावलम्बनेनेति रामानुज इत्यर्थः । परमात्मन्येवेत्यतःपूर्वं आत्मनीत्यनुवादो भाष्ये योज्यः । परमात्मनि स्थितत्वं सर्वसाधारणमित्यतो व्याचष्टे **तदेकाग्र-चित्तस्येति** । पूर्वार्धे सर्वकामप्रहाणोक्तेराह **त्यक्तेति** । **सा च** तुष्टिः । **परमात्मपरिग्रहे** आत्म-शब्देन । **अन्यथा** जीवादिपरिग्रहे । **रामे स्थितिमतः** तदेकाग्रचित्तस्य । **ततो देवाद्** रामदेव-प्रसादात् । अतो भगवत्प्रसादमन्तरा तुष्टिर्गीतोक्ताऽपि जीवस्य सदाऽसत्त्वात्, लोकसिद्धतुष्टिकारण-विषयाणां त्यक्तत्वाच्च न शक्योपपादयितुम् । अतो नाऽत्मशब्देन जीवो मनो वा ग्राह्यमिति शेषभाष्यार्थः ।

***गीताक्षरार्थस्तु***— का भाषेति ज्ञानिलक्षणप्रश्नस्योत्तरमुच्यते **प्रजहातीति** । यदा मनोगतान् सर्वान् कामान् कामक्रोधादिदोषान् प्रजहाति प्रकर्षेण त्यजति । यदा चात्मन्येव परमात्मन्येव, स्थितः सन्निति शेषः, तदेकचित्तः सन् आत्मना परमात्मना तत्प्रसादेन तुष्टः सन्तोषसम्भृतो भवति तदा स्थितप्रज्ञः अपरोक्षज्ञान्युच्यते । सुप्ते मूर्च्छिते चाज्ञानिनि सर्वकामप्रहाणिर्लक्षणमतिव्याप्त-मित्यत उक्तम् आत्मन्येवेतीति केचिद् व्याख्याय आत्मानमपरोक्षीकृत्य तस्मिन्नेव स्थितत्वम्,

तत्प्रसादलब्धपरितोषश्च लक्षणमिति न सुप्तादावतिव्याप्तिरिति पर्यहरन् । कामादेर्मनोगतत्वाव्यभिचारान्नेदं विशेषणमिति चेत्, नेदं कामविशेषणम् । किन्तु सर्वकामत्यागस्यासम्भवित्वमाशङ्क्य तदुपपादनाय युक्तिरनेनोच्यते । ज्ञानस्य कामादश्च मनोनिष्ठत्वान्मनसि ज्ञाने जाते "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इत्यत्र रसशब्देन रागापरपर्यायकामस्याभिसंहिततया तद्विरुद्धस्य कामादेर्हानं युक्तमिति सूचनात् । प्रायस्सर्वविरुद्धकामादित्यागवत्त्वे सत्यपरोक्षीकृतभगवत्प्रसादायत्तसन्तोषणशालित्वं ज्ञानिनो लक्षणम् । यश्चैवंलक्षणकः स ज्ञानी व्यवह्रियत इत्युक्तं भवतीति ॥ ५५ ॥

**गीतातात्पर्यनिर्णयः**

**"सर्वकामनिवृत्तिस्तु जानतो न कथञ्चन ।**
**अनिषिद्धकामितैवातो ह्यकामित्वमितीर्यते ।**
**अपरोक्षदृशोऽपि स्याद्यदा नास्त्यपरोक्षदृक् ।**
**क्वचिद्विरुद्धकामोऽपि यथाऽयुध्यद्धरो हरिम् ।**
**अतोऽनभिभवो यावद् दृशस्तावन्निगद्यते ।**
**स्थितप्रज्ञस्तथाऽप्यस्य कादाचित्क्यपि या दृशिः ।**
**नियमेनैव मोक्षाय भवेद्योग्या भवेद्यदि ।**
**अयोग्या भक्तिजाता चेत्क्रमान्मुक्त्यै भवेत्तथा ॥" इति च ।**

**आत्मनि विष्णौ, आत्मना विष्णुना । तत्प्रसादादेव तुष्टः ॥ ५५ ॥**

***न्या०दी०***— ज्ञानिलक्षणमुच्यते **प्रजहातीति** ॥ तत्र ज्ञानिनः सर्वकामप्रहाणं नाम निषिद्धानिषिद्धसर्वकामप्रहाणमित्यन्यथाप्रतीतिनिरासाय तत्स्मृत्यैव व्याचष्टे **सर्वेति** ॥ कुतो न ज्ञानिनः सर्वकामनिवृत्तिः, यतः सर्वशब्दसङ्कोचः क्रियत इत्यत आह **अपरोक्षेति** ॥ ज्ञानिनः कदाचिन्निषिद्धकामनिवृत्तिरपि नास्ति । कुतः सर्वकामनिवृत्तिरित्यर्थः । तर्हि ज्ञानस्याभिभवकाले ज्ञानिलक्षणाभावाज्ज्ञानित्वाभावः प्रसज्यत इत्यतः सत्यमित्याह **अत इति** ॥ निषिद्धकामराहित्यस्य ज्ञानानभिभवकाल एव सत्त्वादित्यर्थः । ननु यदि कदाचिद् दृशिरभिभूयते तर्हि सा न मोक्षसाधनं स्यात् । कादाचित्कतया दौर्बल्यादित्यत आह **तथापीति** ॥ योग्या स्वबिम्बविषया । 'आत्मन्येवात्मना' इत्यात्मशब्दौ जीवमनःपरावित्यन्यथाप्रतीतिनिरासायाह

**आत्मनीति** ॥ कुतो न जीवादिपराविव्यत आह **तुष्ट इति** ॥ अत्रात्मस्थित्यादिना तुष्टयभिधाना-ज्जीवस्थित्यादिना तदसम्भवान्न तत्परावात्मशब्दाविति भावः ॥

*भा०दी०*— तुष्टपदस्य मूलेऽनुवादो व्यर्थ इत्यतस्तस्य कृत्यमाह **कुतो न जीवादिपरा-वित्यादिना** ॥

**गीता**

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

*वि०वि०*— एतदेव कामशब्दोपलक्षितदोषांतरत्यागकथनादिना स्पष्टयति **दुःखेष्वित्या-दिभिस्त्रिभिः** । कामादिराहित्यादिकं जिज्ञासुभिः साध्यं ज्ञानिनि तु तत्सिद्धम् । 'तद्वै जिज्ञासुभि साध्यं ज्ञानिनां यत्तु लक्षणम्' इत्युक्तेः । अतः स्वभावसिद्धकामादिराहित्याख्यलक्षणस्य जिज्ञासुषु नातिव्याप्तिः । शोभनाध्यासो रागः । 'रसो रागस्तथा रक्तिः शोभनाध्यास उच्यते' इत्यभि-धानात् । वीता रागादयो यस्येति तथोक्तः ॥ ५६ ॥

*सा०सं०*— एतदेव कामशब्दोपलक्षितदोषान्तरत्यागकथनादिना त्रिभिः स्पष्टयति **दुःखेषु** इत्यादिभिः । **दुःखेषु** प्राप्तेषु, अनुद्विग्नं क्षान्तं मनो यस्य स तथा । **सुखेषु** विषयविगतेच्छः । अशोभने शोभनाध्यासो रागः । रागभयक्रोधाः वीता अपगता यस्मात् स तथा तादृशः । **मुनिः स्थितधीरुच्यते** ॥ ५६ ॥

*अ०प्र०*— किञ्च, **दुःखेष्विति** ।

यः मुनिः[१], दुःखेष्वनुद्विग्नमनाः[२], सुखेषु विगतस्पृहः[३], वीतरागभय-क्रोधः[४], सः मुनिः स्थितधीः[५] उच्यते इत्यन्वयः ।

यः मननशीलो मुनिः[१], दुःखेषु प्राप्तेष्वपि अनुद्विग्नमनाः अनुद्विग्नं अक्षुब्धं अक्षुभितं मनो यस्य सः[२], तथा सुखेषु विगतस्पृहः = सुखेषु विगता स्पृहा यस्य सः[३], तत्र हेतुः, वीतरागभयक्रोधः = वीता अपगता रागभयक्रोधा यस्मात् स तथा तत्र रागः अशोभने शोभनत्वभ्रमो रागः[४], स मुनिः स्थितधीः स्थितप्रज्ञः[५] उच्यते इत्यर्थः ॥ ५६ ॥

भाष्यम्

**तदेव स्पष्टयति उत्तरैस्त्रिभिः श्लोकैः । एतान्येव ज्ञानोपायानि । तच्चोक्तम्– 'तद्वै जिज्ञासुभिः साध्यं ज्ञानिनां यत्तु लक्षणम् ।' इति । शोभनाध्यासो रागः । 'रसो रागस्तथा रक्तिः शोभनाध्यास उच्यते' इत्यभिधाने ॥ ५६ ॥**

***प०टी०***— पुनः श्लोकत्रयेऽपि लक्ष्यनिर्देशाल्लक्षणान्तरमुच्यत इति शङ्का मा भूदित्याह **तदेवेति** । आत्मतुष्ट्यकामत्वलक्षणं जिज्ञासावतिव्याप्तमित्यत आह **एतानीति** । उपायतया तत्र वर्तते, न तु ज्ञानिनीव स्वाभाविकतयेत्यर्थः । 'विगतस्पृह'पदात् 'वीतराग'पदस्यार्थभेदमाह **शोभनेति** ॥ ५६ ॥

***न०टी०***— 'दुःखेषु' इत्यादिभिः 'स्थितधीर्मुनिः' 'तस्य प्रज्ञा प्रतिष्ठिता' इति पुनर्लक्ष्यनिर्देशाल्लक्षणान्तरोक्तिरिति नाशङ्कनीयमित्याह **तदेवेति** । न केवलं 'प्रजहाति' इत्याद्युक्तिनिषिद्धसर्वकामप्रमाणादीनि ज्ञानिनामेव लक्षणत्वेनोच्यन्ते । किन्तु ज्ञानार्थिभिरप्यनुष्ठेयानीत्येतत् सप्रमाणकमाह **एतानीति** । दुःखेषु वर्तमानेषु तत्परिहर्तुं नोद्विग्नमनाः । सुखेषु वर्तमानेषु 'एवमेव स्यात्' इति न स्पृहयतीत्यकामत्वमेव स्पष्टितं भवति । 'विगतस्पृह'पदात् 'वीतराग'पदस्यार्थभेदं सप्रमाणकमाह **शोभनेति** । अशोभने शोभनत्वाध्यासरहितः । अतस्तत्रापि न कामः । वीतभयत्वात् तत्परिहर्तुं कामोऽपि न । वीतक्रोधादपि कामरहितः । 'कामः कथं पुनरस्य मनः श्रयेत' इति वचनात् । एवमुत्तरश्लोकाभ्यामपि 'सर्वान् कामान् प्रजहाति' इत्येतत् स्पष्टितं भवतीति ॥ ५६ ॥

***प्र०दी०***— ननु लक्षणस्यानेनैवोक्तत्वात् किं 'दुःखेषु' इत्यादिनेत्यत आह— **तदेवेति** । उक्तं लक्षणमेव । स्पष्टनं च कामशब्दोपलक्षितदोषान्तरत्यागकथनादिनेति ज्ञेयम् ।

ननु कामत्यागादीनि ज्ञानसाधनतयोच्यन्त 'अमानित्वं' इत्यादौ । ततो ज्ञानिलक्षणस्य जिज्ञासावतिव्याप्तिरित्यत आह— **एतान्येवेति** । उप समीपे आयः फललाभो येषां तान्युपायानि साधनानि । सत्यमेतत् । तथापि जिज्ञासौ प्रयत्नसाध्यानि, ज्ञानिनि तु स्वभावसिद्धानीति न दोष इति भावः । अत्र प्रमाणमाह— **तच्चेति** । समुच्चयवादी त्वाह — 'यानीह स्थितप्रज्ञलक्षणान्युच्यन्ते तान्येवापवर्गसाधनानि' इति । तद्वाऽनेन दूषयति । ''ज्ञानसाधनान्येव नापवर्गसाधनानि'' । यथोक्तं 'कामकारेण चैके' इति । आनन्दवृद्ध्यर्थता त्वङ्गीकृतैव । 'योगे त्विमां शृणु' इत्युक्त्वा कथं योगादन्यदुच्यत इत्यतो वेदमुदितमिति । विगतस्पृहपदेनैव 'वीतरागः' इत्येतद्गतार्थमित्यत आह—

**शोभनेति** । अशोभनेषु विषयेषु शोभनत्वभ्रान्तिः । रसो रागो रक्तिरित्येतैः काम उच्यते । तथा शोभनाध्यास उच्यत इत्यर्थः ॥ ५६ ॥

*भा०दी०*— **इत्यादाविति** । अमानित्वमदम्भित्वमिति त्रयोदशाध्याये नपुंसकत्व-निर्वाहायाह **उपसमीप इत्यादि** । **यथोक्तमिति** । कामात्यागेऽपि ज्ञानिनो मोक्षो नियत इत्येतद् ज्ञानपादे सूत्रकृतोक्तमित्यर्थः । कामकारेण च काम-चारेणापि ज्ञानिनो मोक्षकामाचाराः कामभक्षा इत्येके शाखिनः पठन्तीत्यर्थः । **अङ्गीकृतैवेति** । शमदमाद्युपेतः स्यात्तथापि त्विति सूत्रकृतैवोक्तिरिति भावः । **इदमिति** । एतान्येवेत्यादिकमुदितमित्यर्थः । रसवर्जमिति वक्ष्यमाणोपयोगायाह **इत्येतैः काम उच्यत इति** । अत्र तथेत्यनन्तरं अपीत्येतदनुषज्जते ॥ ५६ ॥

*भा०र०*— अनेनैव अवश्यवक्तव्यस्य लक्षणस्य "प्रजहाति यदा" इति श्लोकेनैवोक्तत्वा-दित्यर्थः । "दोषान्तरत्यागकथनादिना" इत्यत्र दोषान्तरं भयादि । आदिपदेन द्वेषप्रसञ्जकप्रदर्शनं, द्वेषाभावप्रदर्शनं च गृह्यते । **इत्यादौ** त्रयोदशाध्याये । ननूपायशब्दस्येणो घञि निष्पन्नत्वाद् घञन्तस्य च "घञजबन्ताः" इति पुल्लिङ्गत्वानुशासनात् कथं भाष्ये नपुंसकलिङ्गत्वमित्यत आह **उप समीप इति** । तत्र विशेष्याकाङ्क्षायां शङ्कितातिव्याप्तिपरिहाराय भावमाह **सत्यमिति** । **एतत्** कामत्यागादीनि ज्ञानसाधनतयोच्यन्त इत्येतत् । भाष्ये साध्यपदस्वारस्यमनुरुन्धान आह **प्रयत्न-साध्यानीति** । **स्वभावेति** । स्वाभाविककामादित्यागस्य ज्ञानिलक्षणत्वान्न जिज्ञासावतिव्याप्तिरिति भावः । **समुच्चयवादी** ज्ञानं विहितकरणनिषिद्धाकरणसमुच्चितमेव मोक्षहेतुरिति समुच्चयवादी । **तद्वाऽनेन** तन्मतं वा "एतान्येव ज्ञानोपायानि" इति भाष्येण । एवकारं व्यत्यस्य योजयंस्तद्व्याव-र्त्यमाह **ज्ञानेति** । स्थितप्रज्ञलक्षणान्यपवर्गसाधनानीत्यत्रापवर्गशब्देन मोक्षमात्रमुच्यते ? उत तत्र-त्यानन्दोत्कर्षोऽपीति विकल्प्य आद्य आह **यथोक्तमिति** । यथेष्टाचारेणापि ज्ञानिनो मोक्षं "काम-चाराः कामभक्षाः" इत्येके शाखिनः पठन्तीति सूत्रार्थः । अस्मिन् सूत्रे ज्ञानिनो विरुद्धकामादि-त्यागाभावेऽपि मोक्षनियमोक्तेः "प्रजहाति यदा कामान्" इत्याद्युक्तलक्षणान्यपवर्गसाधनमित्युक्त-मयुक्तमिति भावः । द्वितीय आह **आनन्देति** । "शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्ग-तया तेषामवश्यानुष्ठेयत्वात्" इत्यादौ सूत्रकृतैव आनन्दातिशयहेतुताया उक्तत्वादिति भावः । पूर्वयोजनापेक्षयाऽन्तरङ्गत्वात् प्रकारान्तरमाह **योगे त्विमामिति** । **इदं** 'एतान्येव' इत्यादिकं प्रमा-णम् । गमनिका तु पूर्ववदेवेति भावः । शुभार्थे प्रेम्णो गुणत्वात् तत्प्रहाणमयुक्तमित्यतोऽध्यासपदार्थं वक्तुं शेषमाह **अशोभनेष्विति** । शोभनत्वमात्यन्तिकसुखसाधनत्वम् । **इत्येतैः** शब्दैः । काम इति

शेषोक्तिः । तथाशब्दस्वारस्यायाह **तथेति** । **उच्यते** क्वचित् । अत्र चापौनरुक्त्याय शोभनाध्यास एव ग्राह्य इति भावः । एतेन यत्प्राग् वक्ष्यतीत्युक्तं तदपि ज्ञापितं भवति ॥ ५६ ॥

**गीता**

## यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
## नाभिनन्दन्ति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

***वि०वि०***— सर्वत्राभिस्नेहत्वाच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि ॥ ५७ ॥

***सा०सं०***— वीतरागभयक्रोधत्वं केन हेतुना भवतीत्यत आह **य इति** । अनभिस्नेह इति हेतुगर्भम् । यः **सर्वत्र** अनभिस्नेहत्वात् **तत् शुभाशुभं प्राप्य** अपि **नाभिनन्दति न द्वेष्टि** । **तस्य प्रज्ञा** अपरोक्षधीः **प्रतिष्ठिता** ॥ ५७ ॥

***अ०प्र०***— कथं भाषतेत्यस्योत्तरम्—

यः[१], सर्वत्र[२], अनभिस्नेहः सन्[३], तत्[४], शुभं[५], प्राप्य[६], नाभिनन्दति[७], तत्[८], अशुभं प्राप्य[९], न द्वेष्टि[१०], तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः[११] ।

यः सर्वत्रानभिस्नेहः = यः सर्वत्र पुत्रमित्रादिष्वपि विषये स्नेहशून्यः सन्[३], अत एवाबाधितानुवृत्त्या तत्[४], शुभं = अनुकूलं[५], प्राप्य[६], नाभिनन्दति = न प्रशंसति[७], तत्[८], अशुभं = प्रतिकूलं प्राप्य[९], न द्वेष्टि = न निन्दति च[१०], किन्तु केवलमुदासीन एव भाषते[१०], तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः[११] ॥ ५७ ॥

**गीता**

## यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
## इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

***वि०वि०***— संहरते नियच्छति । सर्वशः सर्वाणि इन्द्रियाणि सर्वेभ्यो वा इन्द्रियार्थेभ्यो विषयेभ्यः ॥ ५८ ॥

***सा०सं०***— किं चायं ज्ञानी **यदा इन्द्रियार्थेभ्यः** शब्दस्पर्शरूपरसगन्धेभ्यः । **सर्वशः इन्द्रियाणि** श्रोत्रादीनि । **कूर्मः** करचरणाद्यङ्गानि स्वभावेनोपसंहरति । तद्वत् अनायासेन उपसंहरते

**तस्य प्रज्ञा प्रतिष्ठिता** । ज्ञानिनो जिज्ञासोरिवेन्द्रियप्रत्याहरणं न यत्नसाध्यम्, किन्त्वनायासेनैव इति ज्ञापनाय कूर्मोऽङ्गानीव इति दृष्टान्तः ॥ ५८ ॥

*अ०प्र०*— किञ्च, **यदेति** ।

यदा[१], चायं योगी[२], इन्द्रियार्थेभ्यः[३], इन्द्रियाणि[४], यद्वत्कूर्म[५], सर्वशः[६], अङ्गानीव[७], संहरते[८], तस्य[९], प्रज्ञा[१०], प्रतिष्ठिता[११] इत्यन्वयः ।

यदा[१], चायं योगी[२], इन्द्रियार्थेभ्यः, शब्दादिभ्यः सकाशात्[३], इन्द्रियाणि = श्रोत्रादीनि[४], यथा कूर्मः[५], सर्वशः = समस्तानि[६], अंगानीव = करचरणा-दीनि तद्वत्[७], संहरते = अनायासेन प्रत्याहरति[८], तस्य प्रज्ञा प्रतिष्ठिता = ज्ञानीत्युच्यते इत्यर्थः ॥ ५८ ॥

**भाष्यम्**

**सर्वत्रानभिस्नेहत्वाच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि ॥ ५७ ॥ ५८ ॥**

*प०टी०*— 'वीतक्रोध'पदेन 'न द्वेष्टि' इत्यस्यागतार्थत्वमाह **सर्वत्रेति** ॥ ५७-५८ ॥

*न०टी०*—'वीतक्रोधः' इत्यनेन 'न द्वेष्टि' इत्यस्य पुनरुक्तिशङ्कां परिहरन्नुत्तरश्लोकं व्याचष्टे **सर्वत्रेति** । **शुभाशुभं** सुखदुःखसाधनम् । शुभस्नेहाभावादेवाशुभं प्राप्यापि न द्वेष्टि इत्यर्थः ॥ ५७-५८ ॥

*प्र०दी०*— वीतक्रोध इत्युक्तत्वान्न द्वेष्टीति पुनरुक्तिरित्यत आह— **सर्वत्रेति** । सकारणकं द्वेषवर्जनमत्रोच्यत इत्यर्थः ॥ ५७ ॥ ५८ ॥

*भा०र०*— **सकारणकमिति** । विषयेष्वभिस्नेहो हि तल्लाभविरोधिषु द्वेषकारणम् । तदभावाद् द्वेषोऽपि समूलस्त्यक्तव्य इत्यर्थः ।

*गीताश्लोकत्रयाक्षरार्थस्तु*— उक्तं ज्ञानिलक्षणमेव कामशब्दोपलक्षितदोषान्तरत्यागकथनादिना स्पष्टीक्रियते **दुःखेष्वित्यादित्रिश्लोक्या** । दुःखेषूपनतेष्वनुद्विग्नमनाः अक्षुभितमनस्कः सुखेषु विगत-स्पृहः विहीनाभिलाषः सुखसाधनेषु विषयेषु स्पृहारहित इति वा, सुखेषूपनतेषूत्साहहीन इति वाऽर्थः । वीताः अपगताः रागभयक्रोधा यस्मात् स तथा । अशोभनेषु विषयेषु शोभनत्वभ्रान्ती रागः । स मुनिः स्थितधीः अपरोक्षज्ञानीत्युच्यते । वीतरागभयक्रोधत्वं केन हेतुना भवतीत्यत उच्यते **यस्सर्वत्रेति** । पुत्रदारादिषु विषयेषु । हेत्वर्थगर्भं चेदं विशेषणम् । सर्वत्रानभिस्नेहत्वात्

शुभाशुभं प्राप्यापि नाभिनन्दति न द्वेष्टीति सकारणकं द्वेषादिवर्जनमत्रोच्यते । तस्य प्रज्ञा अपरोक्षज्ञानम् । किञ्च अयं ज्ञानी यदा इन्द्रियार्थेभ्यः शब्दादिभ्यः सर्वशः सर्वस्मिन् देशे काले सर्वाणि चेन्द्रियाणि श्रोत्रादीनि संहरते प्रत्याहरति । अनायासेन प्रत्याहरणे दृष्टान्तः **कूर्मोऽङ्गानीवेति** । ॥ ५७-५८ ॥

**गीता**

## विषया विनिवर्तन्ते निराहारस्य देहिनः ।
## रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥

***वि०वि०***— एतादृशं चेत् ज्ञानं तत् किं सर्वे न साधयन्तीत्यतो निराहारत्वेन इन्द्रियजयः, तेनैव ज्ञानम् इत्यतिदुःसम्पादत्वं ज्ञानस्य वक्तुमुपोद्घाततयैन्द्रियजयस्य तावन्महाप्रयत्नसाध्यत्वमाह **विषया इति** । निराहारस्य देहिनः निराहारत्वेनेति यावत् । **विषया इति** । विषयाः रूपादयः । तद्भोगसमर्थानीन्द्रियाणि अनेनोपलक्ष्यन्ते निवर्तते । रसवर्जं रसोरागस्तं वर्जयित्वा । विषयाभिलाशो मानसिको निराहारत्वेन न निवर्तते । किन्तु स रसः परं ब्रह्म दृष्ट्वा साक्षात्कृत्वैव स्थितस्य पुंसो विनिवर्तते ।

अथवा, निराहारत्वेन रसादीतरविषयाः तद्भोगशक्तयस्तदाकाङ्क्षाश्च विनिवर्तन्ते । रसं वर्जयित्वा मनसो रसविषयाकाङ्क्षा रसनेन्द्रियस्य तद्भोगभक्तिश्च न निवर्तते । तयोस्त्वपरोक्षज्ञानेन निवृत्तिरिति । तदुक्तम्—

"इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।
वर्जयित्वा च रसनामसौ रस्ये तु प्रवर्धते ॥" इति ॥ ५९ ॥

***वा०ल०***— 'रसवर्जम्' इत्यत्र रसः विषयेष्वाकाङ्क्षा, तस्याः वर्जो वर्जनम् । रसोऽपि परं परमात्मानं दृष्ट्वा निवर्तते ॥ ५९ ॥

***सा०सं०***— नन्वेवं कामप्रहाणादिलक्षणसाधनं चेत् ज्ञानम्, तर्हि सर्वोऽपि जनः कस्मान्न तत्साधयति । कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानशिराः बम्भ्रमीति इत्यतो निराहारत्वेन इन्द्रियजयः, तेनैव च ज्ञानमित्यादि दुःसम्पादत्वं ज्ञानस्याह **विषया** इत्यादिभिस्त्रिभिः । तत्र आद्येन इन्द्रियजय उच्यते । **देहिनो** निराहारस्य । हेतुगर्भमिदम् । निराहारत्वेन हेतुना **विषयाः** रूपादयः इन्द्रियाणां तद्भोगशक्तय उपलक्ष्यन्ते । ताः **निवर्तन्ते** । **रसवर्जं** रसो रागः मानसिकविषयाभि-

लाषवर्जम् । निराहारत्वेन विषयाभिलाषो न निवर्तते । रसोऽप्यस्य देहिनः **परं दृष्ट्वा निवर्तते ।** परमात्मदर्शनेनैव विषयाभिलाषोऽपयातीत्यर्थः ।

यद्वा, रसेतरे रूपगन्धस्पर्शशब्दाः निवर्तन्ते । अत्रापि विषयपदेन इन्द्रियाणां तद्भोगशक्त्यादयो लक्ष्यन्ते । चक्षुरादीन्द्रियाणां रूपादिविषयभोगशक्तयो मनसः तदाकाङ्क्षाश्च निवर्तन्ते इत्यर्थः । **रसवर्जं** रसशब्दः प्राग्वल्लाक्षणिकः । रसनेन्द्रियस्य रसभोगशक्तिवर्जं मानसिकरसाकाङ्क्षावर्जमिति रसविषयकमनोगताकाङ्क्षा रसनेन्द्रियगतरसभोगशक्तिश्च निराहारत्वेन हेतुना न निवर्तत इत्यर्थः । तद्वयं कदा निवर्तत इत्यत उक्तम् **रसोऽपीति** । **अस्य देहिनः रसः** मानसिको रसविषयको रागः, रसनेन्द्रियस्य तद्भोगशक्तिश्च **परं दृष्ट्वा निवर्तते** अचेतने चेतनवदुपचारात् रसः परं दृष्ट्वा न निवर्तत इत्युक्तमिति ज्ञेयम् ।

अयमर्थः— यदा बाह्येन्द्रियाणि विषयसन्निधानेऽपि न तैः सन्निकृष्यन्ते । सन्निकृष्टान्यपि मनस्तदाभिमुख्येन न हरन्ति । अपहृतेऽपि मनसि न विषयरागो जायते, तदा न आत्मनः क्षोभो भवति इत्येष इन्द्रियजयः । सोऽयं सङ्ग्रहेण द्वेधा भवति । बाह्येन्द्रियाणां शक्तिजयान्मनसो रागक्षयाच्च एतद्वयं च जिज्ञासोर्निराहारत्वेन, ज्ञानिनो ब्रह्मदर्शनेन भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति ॥ ५९ ॥

***अ०प्र०***— ननु इन्द्रियाणां विषयेष्वप्रवृत्तेरविशेषात् तत्राह **विषया इति** ।

निराहारस्य देहिनः[१], रसवर्जं[२], विषयाः[३], विनिवर्तन्ते[४], रसोऽपि[५], परं दृष्ट्वा[६], अस्य निवर्तते इत्यन्वयः ।

निराहारस्य = इन्द्रियैः विषयाणां आहरणं ग्रहणं आहारः इन्द्रियैर्विषय-ग्रहणमकुर्वतः निराहारत्वेनेत्यर्थः, देहिनः = देहाभिमानवतः जीवस्य विषयाः रूपादयः तद्भोगसमर्थानीन्द्रियाण्यनेनोपलक्ष्यते तानि[२], निवर्तन्ते = तदनुभवो निवर्तते यद्वा सविशेषन्यायाद्विषयभोगसामर्थ्यमपगच्छतीत्यर्थः[३], रसवर्जं = रसो रागः, विषयाभिलाषः मनसि निराहारत्वेऽपि न निवर्तते अभिलाषस्तु न निवर्तत इत्यर्थः[४], रसोऽपि अभिलाषोऽपि[५], परं = परमात्मानं दृष्ट्वा[७], अस्य = स्थितप्रज्ञस्य[८], निवर्तते स्वतो नश्यतीत्यर्थः । यद्वा निराहारस्य उपवास-परस्य विषयाः, प्रायशो निवर्तन्ते = नश्यन्ति । क्षुधासन्तप्तस्य उपवासपरस्य शब्दस्पर्शाद्यपेक्षाभावात्, परन्तु रसापेक्षा तु न निवर्तते यद्वा रसवर्जं रसादितरविषयाः कोर्थः रसेतरविषयभोगशक्तयः तदाकाङ्क्षाश्च निवर्तन्ते रसो न निवर्तते । कोऽर्थः, मनसो रसविषयाकाङ्क्षा रसनेन्द्रियस्य रसविषयकभोगशक्तिश्च

न निवर्तते तयोरस्त्वपरोक्षज्ञानतो निवृत्तिरिति । तथोक्तं— 'इन्द्रियाणि जयत्याशु निराहारान्मनीषिणः । वर्जयित्वा तु रसनामसौ रस्यैर्विवर्धते'ति, रसनारसविषये उक्तप्रकारद्वयेन वर्धत इति प्रमाणार्थः । इन्द्रियाणां विषयसन्निकर्षेण मनःप्रवृत्तौ मनसि रागेनात्मनः क्षोभो यः स इन्द्रियाणामविजयः, इन्द्रियसन्निकर्षाभावेन मनोप्रवृत्त्या रागाभावेन क्षोभाभावो यः सः इन्द्रियजयः। स द्वेधा बाह्येन्द्रियाणां शक्तिक्षयात्, मनसा रागक्षयाच्च, एतद्वयं च पुरुषभेदेनोक्तप्रकारद्वयेन निराहारत्वब्रह्मसाक्षात्काराभ्यां भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति भावः ॥ ५९ ॥

**भाष्यम्**

**न चैतल्लक्षणं ज्ञानमयत्नतो भवतीत्याहोत्तरैः श्लोकैः । निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति । इतरविषयाकाङ्क्षाभावो वा । रसाकाङ्क्षादिर्न निवर्तते । स त्वपरोक्षज्ञानादेव निवर्तत इत्याह— विषया इति ।**

**'इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।**
**वर्जयित्वा च रसनामसौ रस्ये तु वर्धते ॥'**

**इति वचनाद्भागवते । रसशब्दस्य रागवाचित्वाच्च ॥ ५९ ॥**

***प०टी०***— एवंभूतं चेत् ज्ञानम्, कुतस्तर्हि सर्वे न साधयन्ति ? इत्याशङ्कां परिहर्तुं श्लोकत्रयमवतारयति **न चेति** । तत्राद्यश्लोकं व्याचक्षाणोऽवतारयति **निराहारत्वेनेति** । **एव**कारेण 'रसवर्जम्' इति व्याख्यातः । रागो न निवर्तत इत्यर्थः । अर्थान्तरं चाह **इतरेति** । अर्थेन्द्रियजयः शक्त्यभावेन च तत्र सर्वेन्द्रियाणां शक्तिनाशेन जय इत्याद्योऽर्थः । रसनेतरेन्द्रियाणां द्वयमपि निवर्तते । रसनस्यैकमपि न निवर्तत इति द्वितीयम् । द्वितीये प्रमाणमाह **इन्द्रियाणीति** । प्रथमार्थं स्थापयति **रसेति** ॥ ५९ ॥

***न०टी०***—पुनः श्लोकत्रयान्ते लक्ष्यनिर्देशात्, लक्षणस्यैव पृष्टत्वात् तत्रापि लक्षणोक्तिशङ्का मन्दस्य स्यात् । तां व्यावर्तयितुं तत्र प्रतिपाद्यमाह **न चेति** । तत्राद्यश्लोकं व्याचक्षणोऽवतारयति **निराहारेति** । निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति इत्यनेन साष्टमांशस्य पूर्वार्धस्य एकोऽर्थः कथ्यते । **एव**कारेण रसवर्जमित्येतत् व्याख्यानात् । द्वौ हि विषयप्रवृत्तिहेतू रागो भोगशक्तिश्च । निराहारत्वं च तन्निवृत्तिहेतुः । एवं च निराहारस्य रसवर्जं विषया विनिवर्तन्त इत्युक्ते केषाञ्चिन्निराहारत्वेन भोगशक्त्यभावः एव न रागाभाव इत्यर्थः । तस्यैवान्योऽर्थः कथ्यते

**इतरेत्यादिना** । केषाञ्चित् निराहारत्वेन रसेतररूपादिविषयाकाङ्क्षा विनिवर्तते न भोगशक्तिमात्रम् । रसगुणाकाङ्क्षा तद्भोगशक्तिश्च न विनिवर्तत इत्यर्थः । तन्निवृत्तिः कदा ? इत्यत आह **स त्विति** । द्वितीयमर्थं स्थापयति **इन्द्रियाणीति** । **रसनामिन्द्रियम्** । **असौ रसना** जिह्वा । **रस्ये** रसनीये **वर्धते** अधिकाकाङ्क्षा भवतीत्यर्थः । रसरागशब्दयोः पर्यायत्वात् प्रथमोऽर्थोऽपि युक्त इत्याह **रसशब्दस्येति** ॥ ५९ ॥

*प्र०दी०*— ''विषया विनिवर्तन्त'' इत्यादिश्लोकत्रयान्तेऽपि ''तस्य प्रज्ञा प्रतिष्ठिता'' इत्युक्तत्वादिदमपि लक्षणविवरणमिति भ्रान्तिः स्यात् । तन्निराकरणार्थमाह— **न चेति** । एतल्लक्षणं यस्माद्भवति तदेतल्लक्षणम् । अयत्नतः अल्पयत्नतः । अनुदरा कन्येति यथा । यद्येवंलक्षणं ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत्साधयति । कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानशिरा इव बम्भ्रमीति । अतो नास्त्येवेदं ज्ञानिषु लक्षणमित्याशङ्कापरिहारार्थमिति शेषः । त्रिभिरित्यनुवर्तते । ज्ञानस्याल्पप्रयत्नासाध्यत्वमत्र न प्रतीयत इत्याशङ्क्योपोद्घातप्रक्रिययेन्द्रियजयस्य तावन्महाप्रयत्नसाध्यत्वमाद्येन श्लोकेनोच्यत इति भावेन तं व्याचष्टे— **निराहारत्वेनेति** । तेन 'रसवर्जं' इत्येतदन्तस्य वाक्यस्यार्थ उक्तः । एवशब्देन 'रसवर्जं' इत्येतद्व्याचष्टे । तथाहि । निराहारस्य देहिनः तेन निराहारत्वेनेति यावत् । विषया रूपादयः । तद्भोगसमर्थानीन्द्रियाण्यनेनोपलक्ष्यन्ते । तानि विनिवर्तन्ते । 'रसवर्जं' रसो रागः तं वर्जयित्वा । विषयाभिलाषः चैतसिको निराहारत्वेन न विनिवर्तत इति । अस्यैव अर्थान्तरमाह— **इतरेति** । आकाङ्क्षाशब्देन भोगशक्तयोऽपि लक्ष्यन्ते । 'रसवर्जं' इत्यस्यार्थो **रसाकाङ्क्षादिरिति** । ततश्चेयं योजना । निराहारत्वेन रसादितरे विषयाः तद्भोगशक्तयः तदाकाङ्क्षाश्चेति यावत् । विनिवर्तन्ते रसं वर्जयित्वा । मनसो रसविषयाकाङ्क्षा रसनेन्द्रियस्य तद्भोगशक्तिश्च न निवर्तत इति । रसोऽपीत्यस्यार्थमाह— **स त्विति** । आद्येऽर्थे स रसः सर्वविषयविषयको रागः । द्वितीये स रसस्तद्भोगशक्तितस्तदाकाङ्क्षा च । उक्तमर्थं श्लोकारूढं करोति— **इत्याहेति** । द्वितीयार्थे प्रमाणमाह— **इन्द्रियाणीति** । जयन्ति भोगशक्तिक्षयेण, रागक्षयेण च । असौ रसना तु । रस्ये विषये । प्रकारद्वयेन च वर्धते । आद्यमर्थमुपपादयति— **रसशब्दस्येति** । 'उक्तं युक्तं' इत्युभयत्र शेषः । रसशब्दस्य रागवाचित्वं तूक्ताभिधानादवगन्तव्यम् । अचेतने चेतनवदुपचारात् ''रसः परं दृष्ट्वा निवर्तते'' इति युक्तम् ।

अयमर्थसङ्ग्रहः । यदा बाह्येन्द्रियाणि विषयैस्सन्निकृष्यन्ते तदा तद्द्वारा मनस्तत्र प्रवर्तते । प्रवृत्ते च मनसि रागो भवति, तत आत्मनः क्षोभ इत्येष इन्द्रियाणामविजयः । यो हि यं व्याकुलं करोति स तेन विजित इत्युच्यते । यदा तु बाह्येन्द्रियाणि विषयसन्निधानेऽपि न तैस्सन्निकृष्यन्ते,

सन्निकृष्टान्यपि न मनस्तदाभिमुख्येनाहरन्ति; आहृतेऽपि मनसि न विषयरागो जायते तदा नात्मनः क्षोभो भवतीत्येष इन्द्रियजयः । सोऽयं सङ्ग्रहेण द्वेधा । बाह्येन्द्रियाणां शक्तिक्षयान्मनसो राग-क्षयाच्च । एतद्द्वयं च पुरुषभेदेनोक्तप्रकारद्वयेन निरा-हारत्वब्रह्मसाक्षात्काराभ्यां भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति ॥ ५९ ॥

*भा०दी०*— **एतदिति** । सर्वकामप्रहाणादिरूपं लक्षणमित्यर्थः । षष्ठी शेष इति सूत्रभाष्योक्त-माहानुदरा कन्येति यथेति सूक्ष्ममध्यमायामनुदरेति यथोच्यते तथेत्यर्थः । **एवं लक्षणमिति** । बहुव्रीहिः । कामप्रहाणादिलक्षणसाधनं ज्ञानं यदीत्यर्थः । **न तदिति** । ज्ञानमित्यर्थः । **बम्भ्रमीति** । पुनःपुनर्भ्रमतीत्यर्थः । भ्रम चलन इत्यस्य यङ्लूकिरूपा उपोद्घातप्रक्रिया चेति उपयुक्तं प्रागुक्त्वा पश्चात्प्रधानोक्तिरिति न्यायेनेत्यर्थः । इन्द्रियजयस्य महाप्रयत्नसाध्यत्वोक्तिश्च ज्ञानस्याल्पप्रयत्ना-साध्यत्वोक्तावुपयुक्तेति भावः । **इयं योजनेति** । गीतावाक्यस्येति योज्यम् । **तद्भोगशक्तय इति** । अत्र इन्द्रियाणामिति तदाकाङ्क्षाश्चेत्यत्र मनस इति योज्यम् । **द्वितीय** इत्यर्थ इत्यनुषज्यते । **प्रकारद्वयेनेति** । भोगशक्त्या रागेण चेति प्रकारद्वयेनेत्यर्थः । **द्वितीयार्थ इति** । रसनेन्द्रियविषयेतर-विषयविषयकरणस्तद्भोगशक्तिश्च निवर्तत इत्यर्थे प्रमाणमाहेत्यर्थः । **उभयत्रेति** । इति वचनादित्यत्र रागवाचित्वाच्चेत्यत्र चेत्यर्थः । **सोऽयमिति** । इन्द्रियजय इत्यर्थः । **पुरुषभेदेनेति** । जिज्ञासु-ज्ञानिरूप पुरुषभेदेनोक्तप्रकारद्वयेनेत्येतद्व्यनक्ति **निराहारेति** ॥ ५९ ॥

*भा०र०*— ननु 'प्रजहाति' इत्यादिना ज्ञानिन एव लक्षणमुक्तं न तु ज्ञानस्य । अतः 'एतल्लक्षणम्' इत्यत्र यस्य तदिति षष्ठ्यर्थगर्भबहुव्रीहिर्न सम्भवतीत्यत आह **एतदिति** । काम-प्रहाणादिरूपमित्यर्थः । "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इति वक्ष्यमाणरीत्या ज्ञानिलक्षणकाम-प्रहाणादेरपरोक्षज्ञानसाध्यत्वावगमादिति भावः । नन्वपरोक्षज्ञानस्य सर्वमतेऽपि यत्नजन्यत्वादप्रसक्त-मयत्नजन्यत्वं कथं निषिध्यते भाष्य इत्यत आह **अल्पयत्नत इति** । "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इत्युक्तेर्नञोऽत्राल्पार्थत्वमिति भावः । अत्र प्रयोगमपि प्रमाणयति **अनुदरा कन्येति यथेति** । "षष्ठी शेषे" इति सूत्रमहाभाष्ये "सतो-ऽप्यविवक्षा भवति । यथाऽनुदरा कन्या" इत्युक्तम् । तद् विवृतं कैयटे "सदप्युदरं महत्त्वाभाव-प्रतिपादनाय न विवक्ष्यते" इति । तथा च नञो महत्त्वाभावरूपाल्पत्वमर्थ इत्यल्पोदरेत्यर्थः सम्प-द्यते । "नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्चेति वैकल्पिकष्टाप्" इति । **एवंलक्षणं** एवंविधलक्षण-कारणम् । **कामादीति** । कस्मादित्यनुवर्तते । भ्रमतेर्यङ्लुगन्तस्य रूपं बम्भ्रमीतीति । पुनः पुनर्भ्रमतीत्यर्थः । ज्ञानसम्पादनेन कामाद्युपद्रवनिबर्हणसम्भवादिति भावः ॥ **त्रिभिरितीति** । 'उत्तरैः'

इत्यनन्तरमिति शेषः । **उपोद्घातप्रक्रिययेति** । "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते" इत्युक्तोपोद्घातसङ्गत्येत्यर्थः । इन्द्रियजयस्य महाप्रयत्नसाध्यत्वोक्तिर्ज्ञानस्याल्पप्रयत्नासाध्यत्वोक्त्युपयोगिनीति भावः । ननु 'रसवर्जमित्येतदन्तस्य' इति कथम् । भाष्ये तदर्थानुक्तेरित्यत आह **एवशब्देनेति** । तदुभयं भाष्यारूढत्वायोपपादयति **तथा हीति** । गीतापदमनुवदंस्तस्य भाष्यं तात्पर्यकथनमित्याह **निराहारस्येति** । अनेन विषयपदेन निराहारत्वेन विषयनिवृत्त्यननुभवादुपलक्षणत्वोक्तिः । तानि तद्भोगसमर्थानीन्द्रियाणीत्यस्य इन्द्रियाणां विषयभोगसामर्थ्यानि निवर्तन्त इत्यर्थः । "सविशेषणे हि विधिनिषेधौ विशेष्ये बाधाद् विशेषणमुपसङ्क्रामतः" इति न्यायादिति भावः । "तेन रक्तं रागात्" इत्यादौ रागशब्दस्यान्यार्थपरत्वादत्र विवक्षितमर्थमाह **विषयाभिलाषश्चैतसिक इति** । अस्यैव रसवर्जमित्येतदन्तस्यैव । 'इतर' इत्यत्र प्रतियोग्याह **रसादिति** । तद्भोगशक्तयः इन्द्रियाणाम् । **तदाकाङ्क्षाः** मनसः । इतीयं योजनेति पूर्वेण सम्बन्धः । **आद्येऽर्थे** रसशब्दस्य चैतसिकाभिलाषग्रहणपक्षे । **द्वितीये** रसनेन्द्रियग्राह्यगुणपरत्वे । **द्वितीयार्थे** रसनेन्द्रियविषयेतरविषयविषयकाकाङ्क्षा रागस्तद्भोगशक्तिश्च निवर्तत इत्यर्थे । 'इन्द्रियाणि' इत्यस्य चक्षुरादीनि मनश्चेत्यर्थो भाष्ये । **रस्ये विषये** रसनेन्द्रिययोग्यविषये । **प्रकारद्वयेन** भोगशक्त्यक्षयेण रागाक्षयेण चेति प्रकारद्वयेन चेत्यर्थः । **उभयत्र** इति वचनादित्यत्र, रागवाचित्वाच्चेत्युभयत्र हेतुद्वये साध्यमध्याहर्तव्यमित्यर्थः । **उक्ताभिधानात्** "रसो रागस्तथा रक्तिः" इत्युक्ताभिधानात् । ननु दर्शनं चेतनधर्मः । रसस्त्वचेतनः । तत् कथं "रसो दृष्ट्वा निवर्तते" इति प्रयोग इत्यत आह **अचेतन इति** । ननु ज्ञानस्याल्पप्रयत्नासाध्यत्वप्रतिपादनायोपोद्घातसङ्गत्येन्द्रियजयस्य महाप्रयत्नसाध्यत्वमत्र श्लोके प्रतिपाद्यत इत्यवतारितम् । न चेदमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वं "विषया विनिवर्तन्ते" इति गीतया 'निराहारत्वेन' इत्यादिभाष्येण वा स्फुटं प्रतिभासत इत्यतो भावमाह **अयमर्थसङ्ग्रह इति** । क्षोभकत्वमात्रेण कथमविजितत्वमित्यत उपपादयति **यो हीति** । **सोऽयम्** इन्द्रियजयः । इन्द्रियजयस्य "युक्त आसीत मत्परः" इत्यादिशास्त्रेषु नानाकारणकत्वावेदनादाह **सङ्ग्रहेणेति** । शक्तिक्षयात् विषयोपभोगसामर्थ्यकुण्ठनात् । ननु निराहारत्वेन पञ्चानामपि बाह्येन्द्रियाणां स्वस्वविषयभोगसामर्थ्यक्षयः, अपरोक्षज्ञानेन तु विषयपञ्चकविषयकमानसरागक्षय इत्येकः प्रकारः । निराहारत्वेन रसनेतरचतुरिन्द्रियगोचरतत्तद्विषयभोगशक्तेः, तदाकाङ्क्षायाश्च निवृत्तिः, अपरोक्षज्ञानेन तु रसभोगशक्तेस्तदाकाङ्क्षायाश्च निवृत्तिरित्यपरः । अनयोश्च परस्परविरुद्धत्वात् कथमेकत्र समावेश इत्यत उक्तम् **पुरुषभेदेनेति** । पुरुषाणां च विचित्रस्वभावत्वात् केषाञ्चिदाद्यः, केषाञ्चित्तु द्वितीयः प्रकार इति भावः । **उक्तप्रकारद्वयेन** "निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति, इतरविषयाकाङ्क्षाभावो वा" इत्युक्त-

प्रकारद्वयेनेत्यर्थः । उक्तप्रकारद्वयविवरणं निराहारत्वब्रह्मसाक्षात्काराभ्यामित्यपि गमयन्ति । इत्ययमर्थसङ्ग्रह इति सम्बन्धः ॥ ५९ ॥

**गीतातात्पर्यनिर्णयः**

**रसो रागः ॥ ५९ ॥**

***न्या०दी०***— एतादृशं चेज्ज्ञानं तत्किं सर्वे न साधयन्तीत्यतो निराहारत्वेनेन्द्रियजयस्तेनैव ज्ञानमित्यतिदुःसंपादत्वं ज्ञानस्योच्यते 'विषया' इति । तत्र रसशब्दस्यापूर्वमर्थमाह **रस इति** ॥

**गीता**

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥**

***वि०वि०***— ननु इन्द्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन । प्रत्याहारादिना साधारणप्रयत्नेन तत्सम्भवात् । तथा किं ब्रह्मापरोक्षज्ञानेन नित्यानित्यविवेकादिज्ञानेनापि तदुपपत्तेरित्यत आह **यततो हीति** । विपश्चितः परोक्षज्ञानिनः । यततः साधारणप्रयत्नवतोऽपि । पुरुषस्य शरीराभिमानिनः । प्रमथनशीलानि इन्द्रियाणि । प्रसभं बलात् । पुरुषस्य मनो हरन्ति । विषयसन्निकृष्टानि तदभिमुखं कृत्वा । तद्रागीकुर्वन्तीत्यर्थः ॥ ६० ॥

***सा०सं०***— नन्विन्द्रियजयार्थं किं निराहारत्वरूपमहाप्रयत्नेन, प्रत्याहारादिसाधारणयत्नेनापि तत्सम्भवात् । तथा किं ब्रह्मापरोक्षज्ञानेन, नित्यानित्यविवेकज्ञानेनापि रागनिवृत्त्युपपत्तेः इत्यत आह **यततो ह्यपीति** । **विपश्चितः** परोक्षज्ञानिनः **यततोऽपि** साधारणप्रयत्नवतोऽपि **पुरुषस्य** देहाभिमानिनः **इन्द्रियाणि मनः प्रसभं** बलात् **हरन्ति** स्वयं विषयसन्निकृष्टानि सन्ति तदभिमुखं कृत्वा तद्रागीकुर्वन्तीत्यर्थः । तावता आत्मनः कथम् इन्द्रियविजय इत्यत आह **प्रमाथीनीति** । प्रमथनशीलानि पुरुषस्य क्षोभणशीलानि न तेन तानि जितानि । यो हि यं व्याकुलं न करोति स तेन विजित इत्युच्यते । अतो महाप्रयत्नः प्रागुक्तदिशा कार्य इति ॥ ६० ॥

***अ०प्र०***— इन्द्रियसंयमं विना स्थितप्रज्ञता न सम्भवति अतः साधकावस्थायां तत्र महान् यत्नः कर्तव्यमित्याह **यततो ह्यपीति** द्वाभ्याम् ।

हे कौन्तेय ![१], प्रमाथीनि हि[२], इन्द्रियाणि[३], यततोऽपि[४], विपश्चितोऽपि[५], पुरुषस्य[६], मनः[७], प्रसभं[८], हरन्ति[९] इत्यन्वयः ।

हे कौन्तेय ![१], प्रमाथीनि = प्रमथनशीलानि क्षोभकानि[२], हि = यस्मादेव तस्मात्[२], इन्द्रियाणि[३], यततोऽपि = प्रत्याहारादिसाधारणप्रयत्नवतः, यद्वा मोक्षे प्रयतमानस्यापि[४], विपश्चितोऽपि = नित्यानित्यविवेकादिज्ञानवतोऽपि[५], पुरुषस्य = शरीराभिमानवतो जीवस्य[६], मनः[७], प्रसभं = बलात्[८], हरन्ति = विषयसन्निकृष्टानीन्द्रियाणि मनोविषयाभिमुखं कृत्वा विषयरागी कुर्वन्तीत्यर्थः ॥ ६० ॥

### भाष्यम्

**अपरोक्षज्ञानरहितज्ञानिनोऽपि साधारणयत्नवतोऽपि मनोहरन्तीन्द्रियाणि । पुरुषस्य शरीराभिमानिनः । को दोषस्ततः ? प्रमाथीनि प्रमथनशीलानि पुरुषस्य ॥ ६० ॥**

***प०टी०***— ननु किमपरोक्षज्ञानोपवासादिना ? परोक्षज्ञानेन प्रत्याहारादिना रसेन्द्रियजयसिद्धेरित्येतत्परिहर्तुं द्वितीयं श्लोकं व्याचष्टे **अपरोक्षेति** ॥ ६० ॥

***न०टी०***—ननु किं हर्यपरोक्षज्ञानेन ? किन्तु सर्वोत्तमत्वात् सर्वेन्द्रियसंसेव्यो हरिरिति परोक्षज्ञानादेवोक्तौ रसो निवर्तिष्यते । तथा किं निराहारत्वेन ? किन्तु प्रत्याहारादिसाधारणयत्नादेवेतरे विषया विनिवर्तिष्यन्त इत्याशङ्कोत्तरत्वेनोत्तरश्लोकं व्याचष्टे **अपरोक्षेति** । 'हि'शब्देन प्रसिद्धमेतदजामिळादाविति सूचितम् । नोदाहरणं भाष्ये । पुरे सक्तत्वात् पुरुषः शरीराभिमानी ॥ ६० ॥

***प्र०दी०***— ननु यत्नज्ञानाभ्यामिन्द्रियजयमुक्त्वा 'यततो ह्यपि' इति तद्विरुद्धं कथमुच्यत इति चेन्न । इन्द्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन । प्रत्याहारादिना साधारणप्रयत्नेन तत्सम्भवात् । तथा किमपरोक्षज्ञानेन । नित्यानित्यविवेकज्ञानेनापि तदुपपत्तेरित्याशङ्क्य तन्निषेधोऽत्र क्रियत इत्याशयवान् व्याचष्टे— **अपरोक्षेति** । ज्ञानस्य प्राधान्यसूचनाय 'विपश्चितोऽपि' इत्येतत्पश्चादुक्तमपि 'अपरोक्ष' इत्यादौ व्याख्यातम् । यततोऽपीत्यस्यार्थः— **साधारणेति** । हरन्ति विषयसन्निकृष्टानि तदभिमुखं कृत्वा तद्रागीकुर्वन्तीत्यर्थः । पुरुषस्येति व्यर्थम् । स्त्रीणामप्येवंभावादित्यत आह— **पुरुषस्येति** । एतच्चोक्तोपपादनार्थम् । 'प्रमाथीनि' इत्यस्य प्रयोजनं वक्तुमाह— **क इति** । एतावताऽऽत्मनस्तदविजयः कथमित्याशयः । मनोहृतवन्ति पुरुषस्य क्षोभणशीलानीति न तेन जितानीति भावः । 'पुरुषस्य' इत्यनेन उभयत्रास्यान्वयं दर्शयति ॥ ६० ॥

*भा०दी०*— **तदुपपत्तेरिति** । रागक्षयोपपत्तेरित्यर्थः । **उक्तोपपादनायेति** । मनो हरन्ती-त्याद्युक्तोपपादनाय शरीराभिमानिन इत्यर्थः । कं पुरुषस्येति पदमित्यर्थः । **उभयत्रेति** । पुरुषस्य मनो हरति पुरुषस्य प्रमाथीनि इत्युभयत्रेत्यर्थः ॥ ६० ॥

*भा०र०*— 'निराहारस्य' इति, 'दृष्ट्वा' इति चोक्तत्वादाह **यत्नज्ञानाभ्यामिति** । **तद्विरुद्धम्** इन्द्रियजयोक्तिविरुद्धम् । नेत्यनन्तरम् अत्र श्लोके महाप्रयत्नवतोऽपीन्द्रियाणि न जेतुं शक्यानी-त्यभिधानस्य क्रियमाणत्वात्, "तथाऽभिधाने ह्युक्तविरोधः । किं तर्हि क्रियत इति चेत्" इति शेषः । **प्रत्या दिनेति** । "इन्द्रियाणां विचरणं विषयेषु स्वभावतः । बलादाहरणं तेषां प्रत्याहारस्स उच्यते" इ प्रत्याहारः । आदिपदेन "अपरे नियताहाराः" इत्यादौ नियताहारत्वस्येन्द्रियजयहेतु-त्वाभिधानान्नियताहारत्वस्य सङ्ग्रहः । तेनेत्यर्थः । **तत्सम्भवात्** इन्द्रियजयसम्भवात् । **तदुपपत्तेः** रागक्षयोपपत्तेः ।

क्रमात् पश्चाद् व्याख्येयस्याप्यादौ व्याख्याने बीजमाह **ज्ञानस्येति** । अपरोक्षज्ञानस्येत्यर्थः । विपश्चितोऽपीत्यनुवादेनैवापिशब्दोऽत्राप्यन्वेतीति ज्ञायते । अत एव भाष्ये उभयत्रापिपदम् । असन्निहितविषयाणां, विषयसन्निधानेऽप्यसन्निकृष्टानाम् इन्द्रियाणां मनोहर्तृत्वमनुभवविरुद्धम् । हरणं च किं विवक्षितमित्यतः "मनो हरन्तीन्द्रियाणि" इति भाष्यं सोपस्करं व्याख्यति **हरन्तीत्यादि** । **एवम्भावात्** मनोहरणादिभावात् । एवमपि कथं वैयर्थ्यं परिहरणीयं तत्राह **एतच्चेति** । प्रत्या-हारादिसाधारणप्रयत्ने, नित्यानित्यविवेकज्ञाने च सत्यपि इन्द्रियजयो न भवतीत्युक्तार्थोपपादनाय शरीराभिमानिन इत्यर्थकं पुरुषपदं प्रयुक्तमित्यर्थः । पुरं शरीरं सरति गच्छत्यभिमनुत इति पुरुषः । निरुक्तत्वादुकारः । ततः षत्वम् । शरीराभिमानो हीन्द्रियाजयहेतुरिति तदावेदकं तत्पदं सार्थकमिति भावः । तत इत्यस्यार्थः **एतावतेति** । इन्द्रियाणां स्वद्वारा विषयसन्निकृष्टे मनसि रागोत्पादकत्व-मस्तीत्येतावता । **तदविजयः** इन्द्रयाविजयः । इन्द्रियाणि मनो हरन्तीत्यस्य मनो हृतवन्तीति । प्रथमनशब्दार्थः **क्षोभणेति** । व्याकुलीभावसम्पादनस्वभावानीत्यतो न तेन पुरुषेण विजितानीत्यर्थः । **उभयत्र** मन इत्यत्र, प्रमाथीनीत्यत्र च ॥ ६० ॥

**गीता**

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

*वि०वि०*— यदीन्द्रियाणि साधारणयत्नविवेकज्ञानाभ्यां न जीयन्ते तर्ह्यशक्यान्येव जेतुमित्यत आह **तानीति** । तानीन्द्रियाणि संयम्योक्तनिराहारत्वविवेकसेवादिबहुतरप्रयत्नेन । युक्तो मयि मनोयुक्तः । अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्पर आसीत । एवं महाप्रयत्नेनेन्द्रियनिग्रहे सति उक्तलक्षणं ज्ञानं सिद्ध्यतीत्याह **वशे हीति** ॥ ६१ ॥

*सा०सं०*— यदि साधारणयत्नविवेकज्ञानाभ्याम् इन्द्रियाणि न जीयन्ते, तर्ह्यशक्यान्येव तानि जेतुम् । निराहारत्वे देहावस्थित्यसम्भवात् । इन्द्रियजयस्य ब्रह्मदृष्टिसाध्यतयाऽभिमतत्वेन तस्य तद्धेतुत्वे विवक्षिते सति अन्योन्याश्रयप्रसङ्गादित्यत आह **तानीति** । **तानि** इन्द्रियाणि **सर्वाणि संयम्य** विषयेभ्य उपसंहृत्य, **मत्परः** अहमेव भगवान् कृष्ण एव परः सर्वोत्कृष्टो यस्य स मत्परः । भगवानेव सर्वोत्तम इति ज्ञात्वा । **युक्तः** । समाध्यर्थस्य युजे रूपम् । भगवति मनो युञ्जान इत्यर्थः । **आसीत** तिष्ठेत् ।

अयं भावः— यद्यपि इन्द्रियजये परोक्तप्रत्याहारादिसाधारणप्रयत्नो न साधनम् । नापि निराहारत्वादिकं प्रागुक्तमशक्यम् । तथाऽपि तत्प्रतिनिधिना महाप्रयत्नेन जेयानि । तत्र भगवतः सर्वोत्तमत्वज्ञानपूर्वं तस्मिन्नेव निरन्तरं मनोयोजनम् इन्द्रियजये मुख्यं साधनम् । निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति । तदर्थं सार्धश्लोकद्वयेन इन्द्रियजयरूपोपोद्घात उक्तः । अथ इदानीं महाप्रयत्नेन साधिते इन्द्रियजयस्य ज्ञानसिद्धिः फलमित्याह **वशे हीति । यस्य वशे इन्द्रियाणि** वर्तन्ते **तस्य प्रज्ञा प्रतिष्ठिता** इति । यत एवं महायाससाध्येन्द्रियजयफलं ज्ञानम्, अत एवायासभीरुर्जनो न तत्साधयतीति, न तु ज्ञानस्योक्तलक्षणाभावादिति श्लोकत्रयतात्पर्यार्थः । अत्रोक्तमिन्द्रियजयस्य ज्ञानरूपं फलं न साक्षादिति 'रागद्वेषवियुक्तैः' इत्यादौ व्यक्तीभविष्यतीति ज्ञेयम् । ॥ ६१ ॥

*अ०प्र०*— यस्मादेवं, तस्मात् **तानीति** ।

युक्तः = योगी[१], तानि[२], सर्वाणि[३], इन्द्रियाणि[४], संयम्य[५], मत्परः सन्[६], आसीत[७], हि = यस्मात्[८], यस्य[९], वशे[१०], इन्द्रियाणि[११], तस्य प्रज्ञा[१२], प्रतिष्ठिता[१३] इत्यन्वयः ।

एतेन कथमासीतेति प्रश्नस्य वशीकृतेन्द्रियः सन्नासीतेत्युत्तरमुक्तं भवति ।

युक्तो योगी तानि सर्वाणि इन्द्रियाणि संयम्य = आहृत्य[५], मत्परः = हरिरेव पर इति ज्ञानी सन् आसीत[७] । हि यस्मात्[८], यस्य[९], वशे = वशवर्तीनि[१०], इन्द्रियाणि[१०], तस्य = हरिः सर्वस्वामी तद्दासोऽहं तेन यथा नियुक्तोऽस्मि तथा करोमीति बुद्ध्या कृष्णैकाग्रचित्तो भूत्वा इन्द्रियजये

बहुतरप्रयत्नवतो जेतुं शक्यानीन्द्रियाणीति भावः । हरौ मनोयोजनं इन्द्रियजये परं साधनं निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति मन्तव्यम् । एवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वम् उपोद्घातत्वेन उक्त्वा उक्तप्रकारेण इन्द्रियजयतः उक्तलक्षणमपरोक्षज्ञानं सिद्ध्यति यस्य तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

भाष्यम्

**तर्ह्यशक्यान्येवेत्यत आह तानीति । बहुयत्नवतः शक्यानि । अतो यत्नं कुर्यादित्याशयः । युक्तो मयि मनो युक्तः । अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्परः । फलमाह वशे हीति ॥ ६१ ॥**

***प०टी०***— यदि श्रुतादिसम्पन्नस्य प्रत्याहारादिनाऽवश्यानीन्द्रियाणि तर्हि तज्जयोऽसम्भावित एवेत्याशङ्कां परिहर्तुं तृतीयश्लोकमवतार्य व्याचष्टे **तर्हीति** । 'सं'शब्दार्थो **बहिति** । तन्निग्रहेण किं फलम् ? इत्यपेक्षायामुत्तरार्धमवतारयति **फलमिति** ॥ ६१ ॥

***न०टी०***—ननु यदि श्रुतिसम्पन्नस्यापीन्द्रियाणि नियन्तुमशक्यानि प्रत्याहारादिना, तर्हि न केनापि शक्यानीत्याशङ्क्य, तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **तर्हीति** । 'सं'शब्दार्थमाह **बहिति** । **अतः** उक्तनिराहारत्वविविक्तसेवादिबहुयत्नं कुर्यादित्यर्थः । एवं यतमानस्योक्तलक्षणं ज्ञानं सिद्ध्यतीत्याह **फलमिति** । एतदपि गङ्गाद्वारादौ यतमानेऽजामिळादौ प्रसिद्धमिति 'हि'शब्दसूचितत्वात् नात्राप्युदाहरणं भाष्ये ॥ ६१ ॥

***प्र०दी०***— उपोद्घातस्य साध्ये वक्तव्ये 'तानि सर्वाणि' इति किमुच्यत इत्यतो अन्तरापतितां शङ्कां निवर्तयितुमेतदिति भावेनाह— **तर्हीति** । यदि साधारणयत्नविवेकज्ञानाभ्यां न जीयन्त इत्यर्थः । अशक्यान्येव जेतुमिति शेषः । निराहारस्य देहावस्थानासम्भवाद्ब्रह्मापरोक्षज्ञानस्य चेन्द्रियजयसाध्यतयाऽभिप्रेतत्वेनेतरेतराश्रयप्रसङ्गादिति भावः । तथा च तज्जयस्य ज्ञानसाधनत्वं यद्विवक्षितं तन्न सम्भवतीति शङ्काशेषः । इन्द्रियसंयमोऽशक्य एवेति शङ्कायां ''तानि सर्वाणि संयम्यासीत'' इति किमेतदुच्यत इत्यत आह— **बहुयत्नवत इति** । यत्नं बहुमिति शेषः । यद्यपि तज्जये न परोक्तं साधनमस्मदुक्तं च शक्यम् । तथापि तत्प्रतिनिधिना महता प्रयत्नेन जय्यानीत्यर्थः । एतदप्युपोद्घातत्वेनैवोक्तमिति ज्ञातव्यम् । 'युक्त' इति नैतद्युजिरो रूपम् । येन प्रतिसम्बन्ध्याकाङ्क्षायां तदनुक्तिर्दोषः स्यात् । किन्तु समाध्यर्थस्य युजेरिति भावेनाह— **युक्त इति** । 'मत्परः' इत्युत्तरत्र

श्रवणान्मयीत्युक्तम् । 'मत्परः' इत्यद्वैतज्ञानमन्यैर्व्याख्यातम् । तत्राक्षरानुसारीत्याशयवान् व्याचष्टे— **अहमेवेति** । भगवानेव सर्वस्मादुत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरं मनसो योजनमिन्द्रियजये परं साधनमिति भावः । निराहरत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति मन्तव्यम् । यदर्थमयमुपोद्घात उक्तस्तत्प्रदर्शनपरतयोत्तरार्धतात्पर्यमाह— **फलमिति** । यद्येवं ततः किमित्याकाङ्क्षायामिन्द्रियजयस्य ज्ञानं फलमाहेत्यर्थः । यत एवं ज्ञानं महायाससाध्येन्द्रियजयफलमत एवायासभीरुर्जनो न तत्साधयति । न तु ज्ञानस्योक्तलक्षणत्वाभावादिति श्लोकत्रयतात्पर्यार्थः ॥ ६१ ॥

*भा०दी०*— **उपोद्घातस्येति** । इन्द्रियजयस्य महाप्रयत्नसाध्यत्वरूपोपयुक्तप्रमेयस्य ज्ञानमल्पप्रयत्नासाध्यमित्येवंरूपे साध्ये वक्तव्य इत्यर्थः । **न परोक्तमिति** । प्रत्याहारादिसाधारणप्रयत्नरूपं अस्मदुक्तं चेति । निराहारत्वरूपं देहावस्थानायोगे नाशक्यम् । यद्यपीत्यनुषङ्गः । **तत्प्रतिनिधिनेति** । अस्मदुक्तप्रतिनिधिना तत्कार्यकारिणा सहाप्रयत्नेनेत्यर्थः । एतेनान्योन्याश्रयोऽपि प्रत्युक्तः । ज्ञानस्य इन्द्रियजयसाध्यत्वेऽपि तस्य महाप्रयत्नसाध्यत्वेन ज्ञानासाध्यत्वात् । **एतदपीति** । तानीति श्लोके । इन्द्रियजयस्य महाप्रयत्नसाध्यत्वं कथमपि ज्ञानस्याल्पप्रयत्नासाध्यत्वप्रमेयोपयोगित्वेनोक्तमित्यर्थः । **वस्तुगतीति** । निराहारेणापि इन्द्रियाणां भोगशक्तिक्षयः प्रमित इति भावेनैवोक्तं मुख्यसाधनं भगवति मनोयोग एवेत्यर्थः ॥ ६१ ॥

*भा०र०*— उपोद्घातस्य इन्द्रियजयस्य महाप्रयत्नसाध्यत्वरूपोपयुक्तप्रमेयस्य । साध्ये ज्ञानमल्पप्रयत्नासाध्यमित्येवंरूपे । तर्हीत्यस्य प्रतियोग्याह **यदीति** । **अशक्यान्येव** इन्द्रियाणि । ननु निराहारत्वस्य ब्रह्मापरोक्षज्ञानस्य च तज्जयहेतुत्वात् कथं जेतुमशक्यान्येवेत्युच्यत इत्यतः शङ्कितुर्भावमाह **निराहारस्येति** ॥ **देहेति** । यदधिष्ठानानीन्द्रियाणि जय्यानि स्युरित्याशयः । **इतरेतराश्रयेति** । "वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता" इतीन्द्रियजयस्य ब्रह्मापरोक्षज्ञानसाधनत्वं ब्रह्मापरोक्षज्ञानस्य चेन्द्रियजयहेतुत्वमिति परस्पराश्रयदोषापातादित्यर्थः । इन्द्रियाणामजय्यत्वोक्तेः फलं वक्तव्यम् । तच्च भाष्ये न दृश्यत इत्यतस्तद्दर्शयितुमाह **तथा चेति** । 'इन्द्रियसंयमः' इत्यादिना कृतचोद्यस्य परिहाराय भाष्यभावमाह **यद्यपीति** । **परोक्तं** प्रत्याहारादिसाधारणप्रयत्नरूपं साधनम् । सत्यपि तस्मिन् मनो हृतवन्ति पुरुषस्य क्षोभणशीलानीति न तेन विजितानीत्यन्वयव्यभिचारादिति भावः । अस्मदुक्तं निराहारत्वं ब्रह्मज्ञानं चाशक्यम् । देहावस्थानासम्भवादन्योन्याश्रयदोषाच्चेति भावः । **तत्प्रतिनिधिना** अस्मदुक्तसाधनप्रतिनिधिना तत्कार्यकारिणा । एतेनान्योन्याश्रयदोषः परिहृतः । ज्ञानस्येन्द्रियजयसाध्यत्वेऽपि इन्द्रियजयस्य महाप्रयत्नसाध्यत्वेन ज्ञानासाध्यत्वादिति स्वामिनः ।

नन्विन्द्रियजयस्यास्मदुक्तनिराहारत्वब्रह्मसाक्षात्काररूपसाधनप्रतिनिधिभूतमहाप्रयत्नसाध्यत्वोक्तिः असङ्गतेत्यत आह **एतदपीति** । इन्द्रियजयस्य महाप्रयत्नसाध्यत्वमपि ज्ञानस्याल्पयत्नासाध्यत्वे हेतुत्वेनैवोक्तमिति नासङ्गतिरिति भावः । **युजिर इति** ॥ युजिर् योग इत्यस्येत्यर्थः । **तदनुक्तिदोषः** अमुकेनेति प्रतिसम्बन्ध्यनुक्तिदोषः । **युजेरिति** । युज समाधावित्यस्येत्यर्थः । तथा च मनस्समाधिमानित्यस्य तात्पर्यं ''मयि मनो युक्तः'' इति भाष्यमिति भावः ।

**अद्वैतज्ञानमन्यैरिति** । यथाऽऽह शङ्करः ''मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परः । नान्योऽहम्, तस्मादिति बुद्धिमानासीत'' इति । अभेदबुद्धेरेतद्गीताक्षरैरनुत्पादादाह **अक्षरेति** । गीताभाष्योक्तास्मच्छब्दविवक्षितमर्थमाह **भगवानेवेति** । यस्येत्यत्र ज्ञातृज्ञेयभावसम्बन्धः षष्ठ्यर्थो विवक्षित इति भावेनोक्तम् **इति ज्ञात्वेति** ।

ननु भगवतस्सर्वोत्तमत्वज्ञानपूर्वं तत्र निरन्तरं मनोयोजनमेव चेन्द्रियजयहेतुस्तर्हि ''विषया विनिवर्तन्ते'' इति निराहारत्वस्येन्द्रियाणां विषयभोगसामर्थ्याभावरूपजयहेतुत्वोक्तिरयुक्ता स्यादित्यत आह **निराहारत्वादिकं त्विति** । महानुभावानां ज्ञानिनामपि निराहारत्वेनेन्द्रियाणां भोगशक्तिक्षयः प्रमित इत्यभिसन्धायैव निराहारत्वस्य तज्जयप्रयोजकत्वमुक्तम् । मुख्यं तु साधनं निरन्तरमनोयोग एवेत्यर्थः । निराहारत्वादिसाध्येन्द्रियजयस्यापरोक्षज्ञानसाधनत्वप्रदर्शनव्यवच्छेदायैवकारः । **एवं** सर्वोत्कृष्टत्वज्ञानपूर्वकं भगवति मनोयोजनस्येन्द्रियजयं प्रति मुख्यसाधनत्वम् । ''प्रज्ञा प्रतिष्ठिता'' इति श्रवणादाह **ज्ञानमिति** । ननु ''यद्येवंलक्षणं ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत् साधयति । कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानशिरा इव बभ्रमीति । अतो नास्त्येवेदं ज्ञानिषु लक्षणमित्याशङ्कापरिहारार्थं 'विषया विनिवर्तन्ते' इत्यादिश्लोकत्रयमुक्तम्'' इत्युक्तम् । तत् कथमनेन परिहार इत्यतः श्लोकत्रयतात्पर्यार्थमाह **यत एवमिति** ॥ ६१ ॥

***गीताक्षरार्थस्तु***— नन्वेवंविधलक्षणस्य साधनभूतं चेद् ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत् साधयति । कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानशिरा इव बम्भ्रमीति ? अतो नास्त्येवेदं ज्ञानिषु लक्षणमिति शङ्कापरिहारार्थं एतल्लक्षणं ज्ञानं नाल्पप्रयत्नसाध्यम् । किन्तु निराहारत्वेनेन्द्रियजयः । तेनैव ज्ञानमित्यादि दुस्सम्पादत्वं ज्ञानस्योच्यते 'विषयाः' इत्यादित्रिश्लोक्या । तत्राप्युपोद्घातप्रक्रियया इन्द्रियजयस्य तावन्महाप्रयत्नसाध्यत्वमाद्यश्लोकेनोच्यते । निराहारस्य देहिनः, तेन निराहारत्वेन यावत् । **विषयाः** रूपादयः । तद्भोगसमर्थानीन्द्रियाण्यनेनोपलक्ष्यन्ते । तानि निवर्तन्ते । **रसवर्जं** रसो रागः तं वर्जयित्वा । विषयाभिलाषश्चैतसिको निराहारत्वेन न निवर्तत इति । यद्वा, रसवर्जं मधुराम्ललवणरसादितरे विषयाः रूपगन्धस्पर्शशब्दाः, इन्द्रियाणां तद्भोगशक्तयः, तदाकाङ्क्षाश्चेति

यावत् । विनिवर्तन्ते रसं वर्जयित्वा । मनसो रसविषयाकाङ्क्षा रसनेन्द्रियस्य तद्भोगशक्तिश्च **न** निवर्तते । तद् द्वयं कदा निवर्तत इत्यत उक्तं **रसोऽपीति** । अस्य देहिनः रसः सर्वविषयविषयो रागः, मधुराम्लादिगुणो वा । तेन तद्ग्राहकेन्द्रियस्य तद्भोगशक्तिस्तदाकाङ्क्षा च लक्ष्यते । परं परमात्मानं दृष्ट्वा निवर्तते । अचेतने चेतनवदुपचारात् "रसः परं दृष्ट्वा निवर्तते" इति युक्तम् ।

अयमर्थसङ्ग्रहः । यदा बाह्येन्द्रियाणि विषयैस्सन्निकृष्यन्ते तदा तद्द्वारा मनस्तत्र प्रवर्तते । प्रवृत्ते च मनसि रागो भवति । तत आत्मनः क्षोभ इत्येष इन्द्रियाणामविजयः । यो हि यं व्याकुलं करोति स तेनाविजित इत्युच्यते । यदा तु बाह्येन्द्रियाणि विषयसन्निधानेऽपि न तैस्सन्निकृष्यन्ते, सन्निकृष्टान्यपि न मनस्तदाभिमुख्येनाहरन्ति, आहृतेऽपि मनसि न विषयरागो जायते, तदा नात्मनः क्षोभो भवतीत्येष इन्द्रियजयः । सोऽयं सङ्ग्रहेण द्वेधा । बाह्येन्द्रियाणां विषयभोगशक्तिक्षयान्मनसो रागक्षयाच्च । एतद् द्वयं च जिज्ञासुज्ञानिलक्षणपुरुषभेदेनोक्तप्रकारद्वयेन निराहारत्वब्रह्मसाक्षात्काराभ्यां भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति ।

नन्विन्द्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन ? प्रत्याहारेण परोक्षज्ञानादिरूपसाधारणप्रयत्नेन तत्सम्भवात् । तथा किं परब्रह्मापरोक्षज्ञानेन ? नित्यानित्यविवेकादिज्ञानेनापि तदुपपत्तेरित्यत उच्यते **यततो ह्यपीति** । विपश्चितः अपरोक्षज्ञानरहितज्ञानिनोऽपि यततः यतमानस्य साधारणप्रयत्नवतोऽपीन्द्रियाणि विषयसन्निकृष्टानि प्रसभं बलात् मनो हरन्ति विषयाभिमुखं कृत्वा तद्रागि कुर्वन्ति । एतदुपपादनाय "पुरुषस्य शरीराभिमानिनः" इति विशेषणम् । एतावता कथमात्मन इन्द्रियाविजय इत्यत उक्तं **प्रमाथीनीति** । मनो हृतवन्ति पुरुषस्य क्षोभणशीलानि, न तेन विजितानीति भावः । अत इन्द्रियजये महानेव प्रयत्नः कार्य इति । ननु यदि साधारणप्रयत्नविवेकज्ञानाभ्यामिन्द्रियाणि न जीयन्ते तर्हि तानि जेतुमशक्यान्येव स्युः । न च निराहारत्वादिना ब्रह्मापरोक्षज्ञानेन वा तज्जयः शक्यः कर्तुमिति वाच्यम् । निराहारस्य देहावस्थितेरेवायोगेन तेनेन्द्रियजयसम्पादनासम्भवात् । ब्रह्मापरोक्षज्ञानस्य चेन्द्रियजयसाध्यतयाऽभिप्रेतत्वेनेतरेतराश्रयप्रसङ्गात् ।

तथा च तज्जयस्य यज्ज्ञानसाधनत्वं विवक्षितं तन्न भवतीत्याशङ्क्य, यद्यपीन्द्रियजये न परोक्तं प्रत्याहारादिसाधनम् । नाप्यस्मदुक्तं निराहारत्वादिकम् । अशक्यत्वात् । तथाऽपि तत्प्रतिनिधिना महता प्रयत्नेन तानि जय्यानीत्युच्यते तानीति । सर्वाणि तानीन्द्रियाणि संयम्य विषयेभ्यः प्रत्याहृत्य युक्तः, समाध्यर्थस्य युजे रूपं, भगवति मनो युञ्जानः मत्परः भगवानेव सर्वस्मादुत्कृष्टो यस्य स आसीत तिष्ठेत् । भगवानेव सर्वस्मादुत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरमनोयोजनमिन्द्रियजये परं साधनमिति भावः । निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति मन्तव्यम् । यद्येवं ततः

किमित्याकाङ्क्षायाम् इन्द्रियजयस्य ज्ञानं फलमित्युच्यते **वशो हीति** । **प्रज्ञा** अपरोक्षज्ञानम् । यत एवं ज्ञानं महायाससाध्येन्द्रियजयफलम् अत एवाऽऽयासभीरुर्जनो न तत् साधयति । न तु ज्ञानस्योक्त-लक्षणत्वाभावादिति श्लोकत्रयतात्पर्यार्थ इति ॥ ५९-६१ ॥

**गीता**

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥**

***वि०वि०***— रागादिराहित्यं ज्ञानिलक्षणमुक्तम् । जिज्ञासुना च साध्यम् । रागादिकारण-फलज्ञाने च रागादित्यागो भवति । अतस्तदर्थं रागादिदोषकारणं फलमाह **ध्यायत इति द्वाभ्याम्** ॥ ६२ ॥

***वा०ल०***— 'सङ्गस्तेषु' इत्यत्र सङ्गः स्नेहः । कामात् क्रोधः, अलाभे क्रोधः ॥ ६२ ॥

***सा०सं०***— "मत्परो युक्त आसीत" इति हरिसर्वोत्तमज्ञानपूर्वं तस्मिन्नेव मनोयोजनमिन्द्रिय-जयस्य मुख्यं साधनम् । 'रागद्वेषवियुक्तैः' इति वक्ष्यमाणदिशा रागादिपरिहारोऽप्यपरं साधनम् । तत्र रागादेर्यत् कारणम्, यच्च फलम्, तदुभयज्ञाने सति तत्परित्यागो भवति । अतः तदुपोद्घातत्वेन तदुभयमाह '**ध्यायतः**' इति श्लोकद्वयेन । यद्यपि 'वीतरागभयक्रोधः' इति रागादिराहित्यं ज्ञानि-लक्षणत्वेनोक्तम् । तथाऽपि तस्य तत्सिद्धम्, जिज्ञासुना च साध्यम् । अतः तत्परिहाराय तत्कारण-फलयोरुक्तिर्न्याय्युक्तेति ज्ञेयम् । **विषयान्** रूपादीन् हितबुद्ध्या **ध्यायतः पुंसः तेषु** विषयेषु **सङ्ग** आसक्तिः **भवति** । आसक्त्या च तेषु **कामः सञ्जायते** अधिको भवति । कामाच्च केनचित् प्रतिहतात् **क्रोधो भवति** ॥ ६२ ॥

***अ०प्र०***— बाह्येन्द्रियसंयमाभावे दोषमुक्त्वा मनःसंयमाभावे दोषमाह **ध्यायत इति द्वाभ्याम्** ।

विषयान्[१], ध्यायतः[२], पुंसः[३], तेषु[४], सङ्गः[५], उपजायते[६], सङ्गात्[७], कामः[८], सञ्जायते[९], कामात्[१०], क्रोधः[११], अभिजायते इत्यन्वयः ।

विषयान् = गुणबुद्ध्या पूर्वानुभूतान् विषयान्, ध्यायतः[२], पुंसः = पुरुषस्य[३], तेषु = तत्सदृशेषु[४], सङ्गः = गुणसम्प्रीतिः स्नेहः आसक्तिः[५], उपजायते = भवति[६], सङ्गात् = आसक्त्या च[७], कामः = इच्छा तेष्वधिकः कामः[८], सञ्जायते = भवति[९], कामात् = केनचित्प्रतिहतात् कामात् क्रोधः[११], अभिजायते = भवति ॥ ६२ ॥

**गीता**

## क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।
## स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६३ ॥

***वि०वि०***— सम्मोहोऽकार्येच्छा 'सम्मोहोऽधर्मकामिता' इति वचनात् । अधर्मे धर्मबुद्धिर्वा । स्मृतिविभ्रमः ज्ञातस्यापि प्रतिषेधादिशास्त्रार्थस्य अन्यथास्मरणं बुद्धिनाशः । पूर्वं निर्णीतदोषज्ञानस्य सर्वात्मना नाशः । प्रणश्यति नरकाद्यनर्थं प्राप्नोति । तदुक्तम्—

'अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा ।
दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते ॥' इति ॥ ६३ ॥

***वा०ल०***— सम्मोहः अज्ञानम् । स्मृतिविभ्रमः श्रुतशास्त्रार्थस्मरणस्य नाशः । बुद्धिः शास्त्रोत्पन्नतत्त्वज्ञानम् । तस्य नाशः ॥ ६३ ॥

***सा०सं०***— किञ्च **क्रोधाद्भवति सम्मोहः** अकार्येच्छा, परवित्तापहरणाद्यधर्मे धर्मबुद्धिरित्यादि मिथ्याज्ञानं वा । **सम्मोहात्** उक्तद्विरूपात् **स्मृतिविभ्रमः** क्रमात् प्रतिषेधादिस्मृतिनाशः, परवित्तापहरणादेरधर्मत्वाद्यभिधायकश्रुत्याद्यर्थस्य पूर्वं स्वयं ज्ञातस्याप्यन्यथा स्मरणं वा । स्मृतिभ्रंशाद्बुद्धिनाशः येन पूर्वं निर्णीतदोषबुद्धेः सर्वात्मना नाशो भवति । तन्नाशात् तेन च अधर्मकरणाच्च **प्रणश्यति** नरकाद्यनर्थं प्राप्नोति । एतदुक्तं भवति— रागद्वेषयोः परम्परया नरकाद्यनर्थप्राप्तिः फलमिति ज्ञानेन तत्परिजिहीर्षायाम्, विषयध्यानं परम्परया तत्कारणमिति ज्ञानेन तदकरणात् रागद्वेषयोरनुत्पादः इति ॥ ६३ ॥

***अ०प्र०***— किञ्च, **क्रोधादिति** ।

क्रोधात्[1], संमोहः = कार्याकार्यविवेकाभावः[2], भवति[3], ततः संमोहात्[4], स्मृतिविभ्रमः = अधर्मे धर्मबुद्धिः शास्त्राचार्योपदिष्टार्थस्मृतेः विभ्रमः विचलनं भ्रंशः, भवति[5], स्मृतिभ्रंशात्[6], बुद्धिनाशः = बुद्धेश्चेतनायाः नाशः = भवति पूर्वनिर्णितज्ञानस्य सर्वथा नाशः[7], ततः = बुद्धिनाशात्[8], प्रणश्यति = मृततुल्यो भवति नरकाद्यनर्थमाप्नोतीत्यर्थः[9], रागद्वेषयोः परम्परया नरकाद्यनर्थप्राप्तिफलं कार्यमित्येवं ज्ञानेन रागादिपरिहारेच्छायां विषयध्यानं रागादेः परम्परया कारणमित्येवं ज्ञानेन विषयध्यानादि आकारेण रागादेः अनुत्पादो भवतीति ॥ ६३ ॥

**भाष्यम्**

**रागादिदोषकारणमाह परिहाराय श्लोकद्वयेन । सम्मोहोऽकार्येच्छा । तथाहि मोहशब्दार्थ उक्त उपगीतासु— 'मोहसंज्ञितम् । अधर्मलक्षणश्चैव नियतं पापकर्मसु ।' इति । तथा चान्यत्र 'सम्मोहोऽधर्मकामिता' इति । स्मृतिविभ्रमः प्रतिषेधादिस्मृतिनाशः । बुद्धिनाशः सर्वात्मना दोषबुद्धिनाशः । विनश्यति नरकाद्यनर्थं प्राप्नोति । तथा ह्युक्तम्—**

**'अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा ।**
**दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते ॥' इति ॥ ६२ ॥ ६३ ॥**

***प०टी०***— रागाद्यभावो ज्ञानकारणमित्युक्तम् । स च कथं स्यात् ? इत्याकाङ्क्षानिवृत्त्यर्थमुत्तरश्लोकद्वयमवतार्य व्याचष्टे **रागादीति** । ननु कामकारणसम्मोहस्य कथं क्रोधसाध्यत्वमित्यत आह **सम्मोह इति** । 'सम्मोह'शब्दस्यान्यथाज्ञाने रूढत्वात् कथमेतत् ? इत्यत आह **तथा हि** इति । पापकर्मसु कारणतयाऽभिमतम्, स्वयं वाऽधर्मसाधनं सम्मोहसञ्ज्ञितमित्यर्थः । विशेषवचनं चात्राह **तथा चेति** । श्रुतिविभ्रमेनैवैकार्थ्यादिदोषबुद्धिनाशस्याप्तेः **सर्वात्मनेति** । उक्तहेतुहेतुमद्भावे प्रमाणमाह **तथा हीति** ॥ ६२-६३ ॥

***न०टी०***—भगवतः सर्वोत्कृष्टत्वात् तत्रैव मनोयुक्तः, तज्ज्ञानं मुक्तिसाधनं लभत इत्युक्तम् । अधुना विषयमनःसंयोगपरिहाराय यदि विषयान् ध्यायेत् तर्हि तेषु स्नेहेन रागादिदोषाः स्युर्नरकाद्यनर्थहेतव इति व्याचष्ट उत्तरश्लोकद्वयमवतार्य **रागेत्यादिना** । ननु 'मुह वैचित्रे' इति धातोर्मिथ्याज्ञानाग्रहः सम्मोहः स्यात् । उक्तं हि 'मोहश्चैव विपर्ययः । तदाग्राहो महामोहः' । तत्कथमकार्येच्छा सम्मोहः ? इत्याशङ्क्य, अधर्मोऽपि मोहनामेत्येतावत् तावदाह **तथा हीति** । न केवलं मिथ्याज्ञानं मोहसञ्ज्ञकम्, किन्त्वधर्मोऽपीत्यर्थः । अधर्मेच्छाया अप्यधर्मत्वात् मोहशब्दार्थतोक्ता । इदानीमधर्मेच्छामपि सम्मोहशब्द एव वक्तीत्याह **तथा चेति** । एवंविधसम्मोहादिप्रणाशान्तानां हेतुमद्भावे प्रमाणमाह **तथा ह्युक्तमिति** ॥ ६२-६३ ॥

***प्र०दी०***— 'ध्यायत' इत्यादिना प्रकृतानुपयुक्तं किमेतदुच्यत इत्यत आह— **रागादीति** । रागादिदोषस्य कारणं रागादिदोषकारणम् । तथा रागादिदोषः कारणं यस्य तद्रागादिदोषकारणम् । परिहाराय रागादिदोषस्य । इदमुक्तं भवति । "मत्परो युक्त आसीत" इतीन्द्रियजयस्य परम-

साधनमुक्तम् । रागादिदोषपरिहारोऽप्यपरं साधनमिति वक्ष्यति । तत्र स एव कथं स्यादित्याकाङ्क्षाया-मुपोद्घातप्रक्रिययेदमुच्यत इति । सम्मोहो मूर्च्छाऽत्र न सङ्गच्छत इत्यतोऽन्यथा व्याचष्टे— **सम्मोह इति** । अकार्येच्छाऽधर्मेच्छा । कुत इत्यत आह— **तथा हीति** । संशब्दस्तु तस्यैव विशेषक इति भावः । अदृष्टरूपाधर्मविषयं तद्धेतुषु पापकर्मसु च नियतं कामनं मोहसंज्ञितमित्यर्थः । स्पष्टं चात्र प्रमाणमाह— **तथा चेति** । यत्किञ्चिद्विषयस्य स्मृतिविभ्रमस्य प्रकृतानुपयोगात्सम्यग्व्याचष्टे— **स्मृतीति** । विभ्रमोऽनवस्थानम् । नाश इति यावत् । चेतनस्य कथं बुद्धिनाश इत्यत आह— **बुद्धीति** । स्मृतिविभ्रम एवायमित्यतः सर्वात्मनेत्युक्तम् । नित्य आत्मेत्युक्तम् । तत्कथं विनश्यतीत्यत आह— **विनश्यतीति** । उक्तेऽर्थे प्रमाणमाह— **तथा हीति** । तदा दोषाद्दृष्टेः । एतदुक्तं भवति । रागद्वेषयोः परम्परया नरकाद्यनर्थप्राप्तिः कार्यमिति ज्ञानेन तत्परिजिहीर्षायां विषयध्यानं परम्परया तत्कारणमिति ज्ञानेन तदकरणात्तयोरनुत्पादो भवतीति ॥ ६२ ॥ ६३ ॥

***भा०दी०***— गीतायां द्वयोरप्युक्ते भाष्येऽप्यर्थद्वयमाह **रागादीति** । **वक्ष्यतीति** । रागद्वेषे-त्यादाविति भावः ॥ ६२ ॥ ६३ ॥

***भा०र०***— 'ध्यायते' इत्यादौ विषयध्यानादिरूपस्य रागादिदोषकारणस्य, रागादिदोषफलस्य सम्मोहादेश्चोक्तेस्तदनुरोधेन भाष्यं द्वेधा व्याचष्टे **रागादिदोषस्येत्यादि** । **यस्य** सम्मोहादेः । प्रकृता-नुपयुक्तं किमेतदुच्यत इति कृतचोद्यं कथमनेन परिहृतमित्यतो भाष्यभावमाह **इदमुक्तमिति** । **परमसाधनं** सर्वोत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरं मनसो योजनम् । **वक्ष्यति** 'रागद्वेषवियुक्तैः' इत्यादाविति शेषः । **स एव** रागादिदोषपरिहार एव । **उपोद्घातेति** । रागादिदोषपरिहारे कारण-फलपरिज्ञानस्य हेतुत्वात् तत्साध्यं वक्तुमादौ तत्साधनमाहेत्यर्थः । **न सङ्गच्छत इति** । ''क्रोधाद् भवति सम्मोहः'' इत्युक्तकार्यकारणभावस्याननुभवादिति भावः ।

ननु कर्तुमशक्यमकार्यं चन्द्रमण्डलाहरणादि । अनादि वा गगनाद्यकार्यम् । तदिच्छा च न क्रोधजन्या अननुभवादित्यत आह **अधर्मेति** । वेदप्रणिहितो हि कार्यस्तद्विरुद्धश्चाकार्यः । स चाधर्म एव । तथा च वक्ष्यति 'सम्मोहोऽधर्मकामिता' इति भावः । सम्मोहशब्दार्थे प्रमाणे वक्तव्ये मोह-शब्दार्थे तदुक्तिरसङ्गतेत्याशङ्क्याह **संशब्दस्त्विति** । **तस्यैव** यः प्रमापयितव्यो मोहस्तस्यैव । तथा च नासङ्गतिरिति भावः । अधर्मपापशब्दयोः पर्यायत्वेऽप्यत्र कार्यकारणे एव गृह्येते इति भावेन व्याचष्टे **अदृष्टेत्यादि** ॥ **सम्यगिति** । स्मृतेर्विषयप्रदर्शनेन, विभ्रमशब्दार्थकथनेनेत्यर्थः । 'नाशः' इति भाष्यघटनायाह **विभ्रमोऽनवस्थानमिति** । भ्रमु अनवस्थान इति धातोरिति भावः । **कथमिति** । चेतनस्य बुद्धिमत्पदार्थत्वेन तत्र भाविनाशवचनमयुक्तमिति भावः । **उक्तेऽर्थे** ''क्रोधाद् भवति

सम्मोहः'' इत्यादौ नरकाद्यनर्थं प्राप्नोतीत्यर्थे । यदेति श्रवणादध्याहारः **तदेति** । उपोद्घातप्रक्रियया इदमुच्यत इत्युक्तं विशदयति **एतदुक्तं भवतीति** । **कार्यं** फलम् । **तत्परिजिहीर्षायां** नरकाद्यनर्थ-प्राप्तिपरिहारेच्छायाम् ।

***गीताक्षरार्थस्तु***— ''मत्परो युक्त आसीत'' इति हरिसर्वोत्तमत्वज्ञानपूर्वकं तस्मिन्नेव मनोयोजनमिन्द्रियजयस्य परमं साधनमुक्तम् । रागादिपरिहारोऽप्यपरं साधनमिति 'रागद्वेषवियुक्तैः' इत्यत्र वक्ष्यते । तत्र रागादेर्यत्कारणं यच्च फलं तदुभयज्ञाने सत्येव तत्परित्यागो भवतीत्यतस्तदुपोद्घात-प्रक्रिययेदमुच्यत **ध्यायत इति श्लोकद्वयेन** । विषयान् शब्दादीन् शोभनत्वबुद्ध्या ध्यायतः पुंसः तेषु तत्सदृशेषु सङ्गः स्नेहः सङ्गाच्च कामः इच्छा सञ्जायते अधिका भवति । कामाच्च केनचित् प्रतिहतात् क्रोधोऽभिजायते । क्रोधाच्च सम्मोहः विशेषेणाधर्मेच्छा, सम्मोहात् स्मृतिविभ्रमः स्मृतेः परवित्तापहरणादेरधर्मत्वाभिधायकशास्त्रार्थस्मरणस्य विभ्रमः अनवस्थानम् । नाश इति यावत् । राग-द्वेषेत्यादिस्मृत्यादिस्मृतिभ्रंशाच्च बुद्धिनाशः सर्वात्मना दोषबुद्धिनाशः पूर्वं निर्णीतदोषबुद्धेः सर्वथा नाश इत्यर्थः । बुद्धिनाशात् प्रणश्यति नरकाद्यनर्थं प्राप्नोति । एतदुक्तं भवति । रागद्वेषयोः परम्परया नरकाद्यनर्थप्राप्तिः कार्यमिति ज्ञानेन तत्परिजिहीर्षायां विषयध्यानं परम्परया कारणमिति ज्ञानेन तदकरणात् तयोरनुत्पादो भवतीति ॥ ६२-६३ ॥

**गीतातात्पर्यनिर्णयः**

**सम्मोहात् मिथ्याज्ञानात् । ज्ञातमप्यन्यथा स्मर्यते । वाक्यार्थानामन्यथा-स्मरणान्निर्णीतं ज्ञानमपि नश्यति ॥ ६३ ॥**

***न्या०दी०***— वीतरागेत्यादिना रागादिराहित्यं ज्ञानिलक्षणमुक्तम् । जिज्ञासुना [illegible] न साध्यम् । कारणफलपरिज्ञाने च रागादित्यागो भवति । अतो रागादिपरिहाराय तत्कारणफले उच्येते 'ध्यायत' इति । तत्र संमोहस्मृतिविभ्रमपदाभ्यां विपरीतज्ञानमेवोच्यते । अतः कथं हेतुहेतुमद्भाव इत्यत आह **संमोहादिति** ॥ अत्र संमोहपदेन परवित्तापहरणाद्यधर्मे धर्मबुद्धि-रित्यादिमिथ्याज्ञानमुच्यते । स्मृतिविभ्रमपदेन च परवित्तापहरणादेरधर्मत्वाभिधायकश्रुत्याद्यर्थस्य पूर्वं स्वयं ज्ञातस्याप्यन्यथास्मरणमुच्यते । तयोश्च हेतुहेतुमद्भावः सम्भवतीति भावः । स्मृति-भ्रंशाद्बुद्धिनाश इति दुर्घटम् । चेतनस्य बुद्ध्यविनाभावित्वेन बुद्धेर्नाशायोगादित्यत उक्तं विवृण्वन्नाह **वाक्येति** ॥ निर्णीतं केवलवाक्यसापेक्षतां विनापि निश्चितम् । न तु ज्ञानमात्रमिति भावः ॥

*भा०दी०*— **कारणफलपरिज्ञाने चेति** । परम्परया नरकाद्यनर्थफलपरिज्ञाने च भीत्या तत्कारणरागादित्यागबुद्धिः भवति । तत्त्यागश्च परम्परया ध्यानादितत्कारणत्यागेन भवति । तत्त्यागश्च तज्ज्ञाने सति भवति । अतो रागादिकारणफले द्वाभ्यामाहेत्यर्थः । **निर्णीत**मित्यनुवादः **केवले**त्यादि व्याख्या ॥

**गीता**

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

*वि०वि०*— अस्त्वेवं रागद्वेषपरिहारास्ततः किमित्याकाङ्क्षायां तस्याव्यवहितफलमाह **रागद्वेषेति द्वाभ्याम्** । रागद्वेषवियुक्तैस्ताभ्यामप्रयुक्तैः स्वाधीनैरिन्द्रियगणैः केवलशरीरधारणार्थं विषयांश्चरन् अनुभवन् विधेयः आत्मा जितं मनो यस्य सः । इन्द्रियजयस्य फलमाह **प्रसादमधिगच्छतीति** । प्रसादो नाम प्रायो यत्नं विनाऽपि विषयेष्वप्रवृत्तिः ॥ ६४ ॥

*वा०ल०*— आत्मवश्यैः इन्द्रियैः विषयान् चरन् यावता प्राणधारणं तावदेव चरन् । विधेयः स्वाधीनः, 'विधेयो विनयग्राही' इत्यमरः, आत्मा अन्तःकरणं यस्य स तथोक्तः ॥ ६४ ॥

*सा०सं०*— अस्त्वेवमुक्तदिशा रागद्वेषपरिहारः । ततः किमित्यतस्तस्येन्द्रियजयाख्यं फलम् इन्द्रियजयाज्जायमानं फलं चाह **रागद्वेषेति** । यद्यपीन्द्रियजयस्य 'वशे हि' इत्यत्र ज्ञानं फलमित्युक्तम् । तथाऽपि तन्न साक्षात् । किन्तु मनःप्रसादद्वारेति अत्र श्लोकद्वयेनोच्यत इत्यदोषः । अयमर्थः **य** उक्तविधया त्यक्तरागद्वेषः स पुमान् **रागद्वेषवियुक्तैः** ताभ्यामप्रयुक्तैः **इन्द्रियैः** चक्षुरादिबाह्येन्द्रियैः । अत एव **आत्मवश्यैः** स्वाधीनैः रूपरसादीन् **विषयान्** केवलदेहधारणमात्रार्थं **चरन्** अनुभवन्नपि । **विधेयात्मा** विधेयः स्वाधीनः आत्मा मनो यस्य स तथा तादृशो भूत्वा **प्रसादं** मनसः स्वतोऽपि प्रायो विषयागतिलक्षणं प्रसादम् । **अधिगच्छति** प्राप्नोति । अत्र पादत्रयेण रागद्वेषपरिहारस्य इन्द्रियजयाख्यं फलमुक्तम् । रागद्वेषाप्रयुक्तत्वादेवेन्द्रियाणां विधेयात्मत्वहेतुनाऽऽत्मवश्यत्वस्येन्द्रियाणामुक्त्या तज्जयस्य प्रतीतेः, आत्मवश्यत्वस्य स्वात्मनः क्षोभानापादकत्वरूपत्वात् । विषयांश्चरन्नित्युक्तिस्तु— इन्द्रियजयकारणत्वं निराहारत्वस्य प्रागुक्तमयुक्तम्, अशक्यत्वादित्याशङ्क्य देहधारणमात्रोपयुक्तविषयानुभवो न दोषाय, इति वक्तुम् । इन्द्रियजयस्याव्यवहितफलोक्तिः **विधेयात्मा प्रसादमधिगच्छतीति** ॥ ६४ ॥

***अ०प्र०***— नन्विन्द्रियाणां विषयप्रवणस्वभावानां निरोद्धुमशक्यत्वाद् अयं दोषो दुःष्परिहर इति स्थितप्रज्ञत्वं कथं स्यादित्याशङ्क्याह **रागेति** द्वाभ्याम् । तत्र **रागेति** ।

विधेयात्मा[1], आत्मवश्यैः[2], रागद्वेषर्वियुक्तैः[3], इन्द्रियैः[4], विषयान्[5], चरन् सन्[6], प्रसादं[7], अधिगच्छतीत्यन्वयः ।

विधेयात्मा = विधेयो वशावर्तिनामजितः आत्मा मनो यस्य सः तथा जितमनस्कः, आत्मवश्यैः = आत्मनो मनसो वश्यैः स्वाधीनैः स्वात्माधीनै-र्मनोधीनैर्वा[2], रागद्वेष-वियुक्तैः = उक्तविधया त्यक्तरागादिः रागद्वेषाभ्यां अप्रयुक्तैः विगतदर्पैः[3], इन्द्रियैः = चक्षुरादिभिः इन्द्रियाणि दश श्रोत्रं त्वक्-दृक्-रसन-नासिकं-वाक्-करौ-चरणौ-मेढ्र-पायुर्दशममुच्यतेति भागवते[4], विषयान् = शरीरधारणार्थं विषयान्[5], चरंन् सन् = अनुभवन् सन्[6], यद्वा चरन् अपि उपभुञ्जानोऽपि[6], प्रसादं = नाम यत्नं विनापि प्रायो विषयेषु अप्रवृत्तिः शान्तिर्वा[7], अधिगच्छति = प्राप्नोति ॥ ६४ ॥

**भाष्यम्**

**इन्द्रियजयफलमाहोत्तराभ्यां श्लोकाभ्याम् । विषयाननुभवन्नपि । विधेय आत्मा मनो यस्य सः । जितात्मेत्यर्थः । प्रसादं मनःप्रसादम् ॥ ६४ ॥**

***न०टी०***— रागादिदोषपरिहारस्य किं फलम् ? इत्याकाङ्क्षोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **इन्द्रियजयफलमिति** । इन्द्रियजयाख्यं फलं इन्द्रियजयस्य फलमिति च । तत्र रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलं प्रथमश्लोकेनाह ॥ ६४ ॥

***प्र०दी०***— रागद्वेषेति श्लोकद्वयस्य तात्पर्यमाह— **इन्द्रियेति** । इन्द्रियजयश्च तत्फलं चेन्द्रियजयफलम् । इन्द्रियजयस्य फलं इन्द्रियजयफलम् । अस्त्वेवं रागद्वेषपरिहारः । ततः किमित्याकाङ्क्षायां रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमाह । इन्द्रियजयेन किं भवति । ("वशे हि यस्येन्द्रियाणि" इति) ज्ञानं भवतीत्युक्तमिति चेत्सत्यम् । तत्किं साक्षादिन्द्रियजयफलमुत व्यवहित-मित्याकाङ्क्षायामिन्द्रियजयस्य फलं ज्ञानं यथा स्यात्तथाऽऽहेत्यर्थः । रागद्वेषपरिहारवद्विषयचरण-स्यापीन्द्रियजयसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह— **विषयानिति** । निराहारत्वमिन्द्रियजये कारणम् । तच्चाशक्यम् । अतः कथमिन्द्रियजय इत्याशङ्क्य देहधारणमात्रोपयुक्तविषयानुभवो न दोषाय इति तदभ्युपगममात्रमनेन क्रियत इति भावः । इन्द्रियजयवाचकं पदमत्र न श्रूयत इत्यतस्तद्व्याचष्टे –

**विधेय इति**। स विधेयात्मेति शेषः। किमनेनापीत्यत आह— **जितेति**। अनेन पादत्रयेण रागद्वेष-परिहारस्येन्द्रियजयाख्यं फलमुक्तम्। यद्यप्यनुवादोऽयं प्रतीयते। तथाप्यप्राप्तत्वादन्यथावाक्यवृत्तिः। तथा हि। य उक्तविधया त्यक्तरागद्वेषः। स रागद्वेषवियुक्तैस्ताभ्यामप्रयुक्तैः केवलं शरीरधारणार्थं विषयान् चरति। स विधेयात्मा भवति। तत एव बाह्येन्द्रियाण्यपि तस्य वश्यानि भवन्तीति। अत एव क्रमेण वाक्यद्वयस्य पृथक् तात्पर्यं नोक्तम्। द्वितीयाकाङ्क्षोत्तरत्वेनेन्द्रियजयस्य ज्ञानं व्यवहित-फलमिति दर्शयितुं साक्षात्फलमुक्तं— **विधेयात्मा प्रसादमधिगच्छतीति**। तत्र प्रसादो नाम आत्म-धर्म इति प्रतीयते। तन्निवृत्त्यर्थमाह— **प्रसादमिति**। 'प्रसन्नचेतसः' इति वक्ष्यमाणत्वादिति भावः ॥ ६४ ॥

*भा०दी०*— यदेत्यस्य प्रतिसम्बन्ध्युत्तयर्थोक्तिस्तदा दोषदृष्टेरिति गीतायां पूर्वोत्तरभागोक्ता-नुरोधेन भाष्यस्यापि द्वेधा अर्थमाह **इन्द्रियजयश्च तदिति**। कर्मधारय तत्पुरुषयोस्तन्त्रेणायं निर्देशो भाष्य इति भावः। इन्द्रियजयस्य फलोक्ताववसरसङ्गतिमाह **अस्त्वेवमिति**। उत्तरार्धे इन्द्रियजयस्य फलोक्तेरप्याकाङ्क्षालक्षणसङ्गतिमाह **इन्द्रियजयेन किमिति**। फलमित्यनुषङ्गः। किं फलं भवतीति पृष्टे वशे हि यस्येन्द्रियाणि तस्य प्रज्ञेति प्रागुक्तज्ञानरूपफलमाशङ्क्य तदङ्गीकारेण स्वप्रश्नाभिप्रायं विविच्य आह **वशेत्यादिना इतीत्यन्तेन**। **यथेति**। येन प्रकारेण मनः प्रसादद्वारा भवति तथाहेत्यर्थः। तथा चेन्द्रियजयेन ज्ञानोदयप्रकारोक्तिपरत्वादस्य वशे हीत्यनेन न गतार्थतेति भावः। **अनुवादोऽय-मिति**। विधेयात्मेत्यन्तो ग्रन्थ इत्यर्थः। **अप्राप्तत्वादिति**। यथा 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चे'त्यादौ यच्छब्दाद्यनुवादलिङ्गसत्त्वेऽपि अप्राप्तत्वादपूर्वकर्मविधिबोधकत्वं तथात्र विधेया-त्मत्वादेः पूर्ववाक्यैर्मानान्तरेण प्राप्तत्वाभावादन्यथा विधिपरत्वे न वाक्यवृत्तिर्वाक्यस्य बोधकते-त्यर्थः। तं प्रकारं व्यनक्ति **तथा हीत्यादिना**। **उक्तविधेति**। एतदुक्तं भवतीत्यादिनोक्तविधये-त्यर्थः। **अत एवेति**। हेतुहेतुमद्भावापन्नत्वादेव विधेयात्मपदतात्पर्योक्त्यैवेन्द्रियैरात्मवश्यैरित्यस्योक्त तात्पर्यकत्वादेवेत्यर्थः। **द्वितीयाकाङ्क्षेति**। किं साक्षादिन्द्रियजयफलमित्यादिनोक्ता द्वितीयेत्यर्थः। ॥ ६४ ॥

*भा०र०*— 'रागद्वेष' इत्यादित्रिपाद्या रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमुच्यते। 'प्रसाद-मधिगच्छति' इत्यादिना चेन्द्रियजयस्य फलम्। अतस्तदुभयानुरोधेन भाष्यं द्वेधा व्याचष्टे **इन्द्रियजयश्च तत्फलमित्यादिना**। **परिहारवत्** परिहारस्येव। 'तत्र तस्येव' इति षष्ठ्यन्तादिवार्थे वतिः। **विषयचरणस्य** विषयानुभवस्यापि। कथमनेन भाष्येणोक्तान्यथाप्रतीतिनिरास इत्यत-स्तद्भावमाह **निराहारत्वमिति**। **अशक्यं** निराहारस्य देहावस्थानासम्भवादिति भावः। **तदभ्युप-**

**गममात्रमिति** । न तु यथेष्टं विषयोपभोग इत्यर्थः । **अत्र** यच्छ्लोकद्वयं 'इन्द्रियजयफलमाह' इत्यवतारितं तत्र ।

ननु 'जितात्मेत्यर्थः' इति कस्येदं व्याख्यानम् ? विधेय आत्मा मनो यस्येत्युक्तविग्रहवाक्यस्येति चेन्न । विधेयात्मेति समासपदप्रदर्शनप्रसङ्गे जितात्मेत्युक्त्ययोगात्, अर्थपदास्वारस्याच्चेत्याशङ्क्य, नेदं कस्यचिद् गीतापदस्य व्याख्यानम् । किन्तु 'रागद्वेषवियुक्तैः' इत्यादित्रिपादीतात्पर्यकथनरूपम् । भाष्ये 'सः' इत्यनन्तरं विधेयात्मेति समासपदं चाध्याहार्यम् । तथा चेन्द्रियजयवाचकं पदमत्र नेति चोद्यं परिहृतं भवतीत्यभिप्रायेणाह **विधेयात्मेति शेष इति** । **अनेनापि** विधेयात्मत्वेनापि । **अनुवादोऽयमिति** । चरन्निति शतुः श्रवणात्, विधेयात्मा भवेदित्यश्रवणात्, 'प्रसादमधिगच्छति' इत्यत्र तिङः श्रवणाच्चेति भावः । **अप्राप्तत्वादिति** । **यथा** "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इत्यादौ यच्छब्दाद्यनुवादलिङ्गसद्भावेऽप्यप्राप्तत्वादपूर्वकर्मविधिपरत्वमभ्युपगतं मीमांसकैः तथाऽत्रापि शरीरधारणमात्रानुकूलविषयानुभवस्य विधेयात्मत्वस्य च पूर्ववाक्यैर्मानान्तरेण वाऽप्राप्तत्वात् । **अन्यथा** विधेयार्थबोधकत्वेन । **वाक्यवृत्तिः** वाक्यस्य बोधकता वाक्यव्याख्यानमिति यावत् । कर्तव्येति शेषः । तामेवाह **तथा हीति** । **उक्तविधया** "रागद्वेषयोः परम्परया नरकाद्यनर्थप्राप्तिः कार्यमित्यत्र" इति शेषः । ननु रागद्वेषयोर्मनोधर्मत्वेन तद्वियुक्तत्वस्य सर्वपुरुषबाह्येन्द्रियसाधारणत्वात् किं जिज्ञासोरेव विशिष्यैवम्भाव उच्यत इत्यत आह **ताभ्यामप्रयुक्तैरिति** । रागद्वेषाभ्यामप्रवर्तितैः । रागद्वेषकलुषितमनोनधिष्ठितैरित्यर्थः । अप्रयुक्तैरिति वदन् "अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः", "काम एष क्रोध एषः" इत्यादिप्रश्नप्रतिवचनादीनि रागद्वेषयोः प्रवर्तकत्वे प्रमाणमित्यभिप्रैति । 'आत्मवश्यैः' इत्यनुवादलब्धमाह **तत एवेति** । विधेयात्मत्वादेव । 'आत्मवश्यैः' इत्यत्र आत्मशब्दो जिज्ञासुपर इत्याह **तस्येति** । इतिशब्दस्य 'तथा हि' इति पूर्वेण सम्बन्धः । **अत एवेति** । हेतुहेतुमद्भावापन्नत्वादेव विधेयात्मपदतात्पर्योक्त्या 'आत्मवश्यैरिन्द्रियैः' इत्यस्याप्युक्ततात्पर्यकत्वादेवेत्यर्थः ।

यद्वा, ननु यदि 'रागद्वेषः' इत्यादेः 'प्रसादमधिगच्छति' इत्येतस्य चोक्तविधया पृथग्वाक्यत्वं तर्हि भाष्ये "रागादित्यागस्येन्द्रियजयाख्यं फलमाह" इति, "इन्द्रियजयस्य फलमाह" इति च क्रमेण वाक्यद्वयस्य तात्पर्यं पृथग्वाच्यम् । 'इन्द्रियजयफलमाह' इत्येकोक्त्या वाक्यद्वयतात्पर्यकथने को हेतुरित्यत आह **अत एवेति** । तात्पर्यवशादन्यथा वाक्यवृत्तावप्यन्वयमुखेन वाक्यद्वयस्याप्येकवाक्यतया प्रतीयमानत्वादेवेत्यर्थः । 'प्रसादम्' इति भाष्यं सङ्गमयितुं गीतामवतारयति **द्वितीयाकाङ्क्षेति** । ज्ञानं किं साक्षादिन्द्रियजयफलमुत व्यवहितमिति द्वितीयाकाङ्क्षेत्यर्थः । 'प्रसादमधि-

गच्छति' इत्येवोपादातव्येऽपि यत् 'विधेयात्मा' इत्याह तदाख्यातोपात्तकर्तुः स्फोरणाय । इन्द्रिय-जयवाचकपदप्रदर्शनाय वा । तस्य हि साक्षात्फलप्रतिपादनाय तुरीयः पादः । अभ्यर्हिततया तदुपस्थित्यवश्यम्भावादाह **आत्मधर्म इति** । मनोधर्मत्वे भाष्याभिप्रेतयुक्तिमाह **प्रसन्नेति** ॥ ६४ ॥

**गीता**

## प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
## प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति ॥ ६५ ॥

***वि०वि०***— प्रसादे सति किं स्यादित्यत आह **प्रसाद इति** । मनःप्रसादस्य सर्वदुःखहानिर्न साक्षात् फलम्, किन्तु ज्ञानद्वारेणैवेत्याह **प्रसन्नेति** । प्रसन्नचेतसो हि बुद्धिः शीघ्रं **पर्यवतिष्ठति** । ब्रह्मापरोक्षेण सम्यक् स्थितिं करोति ॥ ६५ ॥

***वा०ल०***— प्रसादे भगवत्प्रसादे ॥ ६५ ॥

***सा०सं०***— प्रसादे सति किं स्यादित्यत आह **प्रसाद इति** । प्रागुक्तरूपमनःप्रसादे सति अस्य **प्रसन्नचेतसः** पुंसः **आशु** शीघ्रम् । **बुद्धिः** ब्रह्मापरोक्षज्ञानं **पर्यवतिष्ठति** सम्यग्भवति । ततश्च, अस्यापरोक्षज्ञानिनः **सर्वदुःखानां हानिरुपजायते** । **हि** प्रसिद्धमेतत्, 'तरति शोकमात्मवित्' (छा.उ. ७-१-१३) इत्यादौ इति । अत्र प्रसादे सति बुद्धिः पर्यवतिष्ठतीत्येतावत्येव वक्तव्ये सर्वदुःखानां हानिरिति ज्ञानफलस्याप्युक्तिः, 'बुद्धियुक्तो जहातीह' इत्यत्र सुकृतदुष्कृतहानस्य ज्ञानफलत्वोक्ति-रयुक्ता । सुखदुःखप्राप्तिपरिहारयोरन्यतरत्वाभावेनापुमर्थत्वात्, इत्याशङ्कानिरासाय प्रसङ्गात् प्राप्तेति ज्ञेयम् ॥ ६५ ॥

***अ०प्र०***— प्रसादे सति किं स्यादित्यत आह **प्रसादे इति** ।

अस्य[१], प्रसादे सति[२], सर्वदुःखानां[३], हानिः[४], उपजायते[५], हि = यस्मात्[६], प्रसन्नचेतसः[७], बुद्धिः[८], आशु[९], पर्यवतिष्ठति[१०] इत्यन्वयः ।

अस्य = पुंसः[१], प्रसादे सति = ज्ञानद्वारा[२], सर्वदुःखानां हानिः = नाशः[४], उपजायते = भवति[५], हि = यस्मात्[६], ततश्च प्रसन्नचेतसः पुंसः[७], बुद्धिः[८], आशु = शीघ्रं[९], पर्यवतिष्ठति = ब्रह्मापरोक्ष्येण सम्यक् स्थितिं करोति प्रतिष्ठिता भवति वा इत्यर्थः ॥ सोपस्करानि वाक्यानि भवन्तीत्यतो न हि मनःप्रसादं विना मुक्तिश्चित्तैकाग्र्यता भवतीति वाक्यशेषः ॥ ६५ ॥

**भाष्यम्**

**कथं प्रसादमात्रेण सर्वदुःखहानिः ? प्रसन्नचेतसो हि बुद्धिः पर्यवतिष्ठति । ब्रह्मापरोक्ष्येण सम्यक् स्थितिं करोति । प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः ॥ ६५ ॥**

*प०टी०*— नन्वेवं रागादिजये किं फलम् ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकद्वयमवतार्य व्याचष्टे **इन्द्रियेति** । रागादिजयादिन्द्रियजयाख्यं फलमाद्यश्लोके । इन्द्रियजयस्य फलं द्वितीय इति ज्ञेयम् । **'तु'शब्दोऽपीति** । कथं मनःप्रसादमात्रादपरोक्षज्ञानम् ? इत्यत आह **प्रसाद इति** ॥ ६४-६५ ॥

*न०टी०*— इन्द्रियजयस्य फलं सर्वदुःखहानिं द्वितीयेन । तुशब्दोक्तं विशेषं दर्शयितुमपिशब्दमाधाय व्याचष्टे । 'निराहारस्य देहिनः' 'इन्द्रियाणि जयन्त्याशु निराहाराः' इत्यनयोः समानार्थत्वात् निवृत्तविषयो हि जितेन्द्रियः । अयं तु रागद्वेषवियुक्तत्वात् **विषयाननुभवन्नपि** 'जितमनाः' इति शेषः । **अतः प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः** इत्येतद्रागतो विषयागतिरिति व्याख्येयम् । **स्वतः** इति प्रयत्नं विनेत्यर्थः ॥ ६५ ॥

*प्र०दी०*— प्रसादे सति किं स्यादित्यत उक्तं— **प्रसाद इति** । तदाक्षिपति— **कथमिति** । 'तरति शोकमात्मवित्' इत्यादि विरोधादिति भावः । किं च प्रसादे सति ज्ञानं भवतीति वा व्यवधानान्तरं वा वक्तव्यम् । तन्नोक्तम् । सर्वदुःखहानिस्त्ववक्तव्यैवोक्तेति चाक्षेपशेषः । एतत्परिहारत्वेनोत्तरार्धं व्याख्याति— **प्रसन्नेति** । एतेन प्रसादस्य फलद्वयमुच्यत इत्यपि प्रतीतिर्निरस्ता भवति । प्रसादे सति ब्रह्मापरोक्षज्ञानं भवति । तच्च व्यवधानेनेति भविष्यति । ततो भवन्ती सर्वदुःखहानिः प्रसादफलतयोक्तेति न वक्तव्यानुक्तिः । नाप्यवक्तव्योक्तिः । 'बुद्धियुक्तः' इति श्लोके सुकृतदुष्कृतहानं ज्ञानफलमुक्तम् । तदयुक्तम् । अपुरुषार्थत्वादित्याशङ्कां परिहर्तुं प्रसङ्गादिदमुक्तमिति । ननु यस्य अनायासेनाभिलषितविषयोपनतिस्तस्य मनोऽव्याकुलं प्रसन्नमित्युच्यते । ततः कथं प्रसादस्येन्द्रियजयफलत्वं ज्ञानफलकत्वं चोच्यत इत्यत आह— **प्रसादो नामेति** । 'अत्र विवक्षिता' इति शेषः । स्वतोऽपि प्रयत्नं विनाऽपि । विषयागतिर्विषयान् प्रत्यप्रवृत्तिः ॥ ६५ ॥

*भा०दी०*— उत्तरश्लोकं स्वयमवतारयति **प्रसादे सतीत्यादिना** । **तदिति** । प्रसाद इत्यादि पूर्वार्धोक्तमाक्षिपतीत्यर्थः । तत्रापरोक्षज्ञानं चित्तनिरोधादि व्यवधानेन नास्ति बुद्धिरित्युत्तरश्लोके भविष्यतीत्यर्थः । ततः अपरोक्षज्ञानादित्यर्थः । **नाप्यवक्तव्यस्योक्तिरिति** । वक्तव्यज्ञानस्योक्तिरिति

भावः । व्यवधानेन भवतोऽप्यनिष्टनिवृत्तिरूपफलस्य वक्तव्यत्वादिति भावः । कुतस्तस्य वक्तव्यतेत्यत आह **बुद्धीत्यादिना** । **ज्ञानसाधनत्वं चेति** । व्यवधानेनेति भावः ॥ ६५ ॥

***भा०र०***— उत्तरभाष्यं सङ्गमयितुं गीतामवतारयति **प्रसादे सतीति** । **तत्** मनःप्रसादेन सर्वदुःखहानम् । 'तरति शोकमात्मवित्' इत्यादावात्मज्ञानिनः शोकशब्दितसर्वदुःखप्रहाणिः श्रूयते । मनःप्रसादमात्रेण सर्वदुःखहान्युक्तौ तद्विरोधः स्यादित्यर्थः । **एतेनेति** । "कथं मनःप्रसादमात्रेण सर्वदुःखहानिः" इत्याक्षेपपूर्वक "प्रसन्नचेतसो हि" इत्यादिभाष्येणेत्यर्थः । न केवलमुक्ताक्षेपनिरास इत्यपेरर्थः । **तच्चेति** । अपरोक्षज्ञानं व्यवधानेन चित्तनिरोधादिव्यवधानेनेत्येतत् "नास्ति बुद्धिरयुक्तस्य" इत्युत्तरश्लोके भविष्यतीत्यर्थः । **ततः** अपरोक्षज्ञानात् । **वक्तव्यानुक्तिः** अवश्यवक्तव्यज्ञानानुक्तिः । सर्वदुःखहानिरवक्तव्येत्युक्तम् । तदपि नेत्याह **नापीति** । व्यवधानेन भवतोऽप्यनिष्टनिवृत्तिरूपफलस्य वक्तव्यत्वादिति भावः । तत् कथमत्र सङ्गतमित्यत आह **बुद्धियुक्त इति** । **अपुरुषार्थत्वात्** सुखावाप्तिदुःखहान्योरेव पुरुषार्थत्वादिति भावः । **अभिलषितविषयोपनतिः** इष्टविषयलाभः । **ततः कथमिति** । अव्याकुलत्वापरपर्यायमनःप्रसादस्येन्द्रियजयफलत्वं नोपपद्यते । अनायासेनाभिलषितविषयोपनतिफलत्वात् । इन्द्रियाणामभिलषितविषयेभ्यः प्रत्याहरणं हि जयः । तथा तस्य ज्ञानसाधनत्वं चायुक्तम् । विषयोपभोगजन्याव्याकुलत्वस्य विषयविरागसाध्यज्ञानसाधनत्वविरोधादिति भावः । विषयाणामागतिरिति प्रतीतौ पुनरुक्तचोद्यापरिहार एवेत्यतो व्याचष्टे **विषयान् प्रत्यप्रवृत्तिरिति** । विवक्षितप्रसादस्येन्द्रियजयफलत्वं ज्ञानसाधनत्वं च न विरुद्धमिति भावः ।

***गीताक्षरार्थस्तु***— अस्त्वेवं रागद्वेषपरिहारः, ततः किमित्यपेक्षायां रागद्वेषपरिहारस्येन्द्रियजयाख्यम्, इन्द्रियजयाच्च किं स्यादित्याकाङ्क्षायां ततो जायमानं फलमुच्यते **रागद्वेषेति द्वाभ्याम्** । य उक्तविधया त्यक्तरागद्वेषः सः रागद्वेषवियुक्तैः ताभ्यामप्रयुक्तैः आत्मवश्यैः स्वाधीनैः इन्द्रियैः केवलं शरीरधारणार्थं विषयान् ईश्वरनुन्नाननुभवन्नपि विधेयात्मा स्वाधीन आत्मा मनो यस्य स तथा स भवति । तत एव बाह्येन्द्रियाण्यपि तस्य वश्यानि भवन्ति । अनेन पादत्रयेण रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमुक्तम् । इन्द्रियजयेनापि किं स्यादिति द्वितीयाकाङ्क्षोत्तरत्वेनेन्द्रियजयस्य ज्ञानं व्यवहितफलमिति दर्शयितुं साक्षात् फलमुच्यते **विधेयात्मा प्रसादमधिगच्छतीति** । तत्र प्रसादो नाम प्रयत्नेन विनाऽपि मनसः प्रायो विषयान् प्रत्यप्रवृत्तिरत्र विवक्षिता । तामधिगच्छति प्राप्नोति । प्रसादे सति किं स्यादित्यत उच्यते **प्रसाद इति** । मनसः प्रसादे सति अस्य प्रसन्नचेतसः पुरुषस्य आशु बुद्धिः ब्रह्मापरोक्षज्ञानं पर्यवतिष्ठति सम्यग् भवति । ततश्चास्यापरोक्षज्ञानिनः सर्वदुःखानां

हानिरुपजायते समीपे निष्पद्यते । हि प्रसिद्धमेतत् ''तरति शोकमात्मवित्'' इत्यादाविति । 'बुद्धियुक्तः' इति श्लोके सुकृतदुष्कृतहानं ज्ञानफलमुक्तम् । तदयुक्तम् । अपुरुषार्थत्वादिति शङ्कां परिहर्तुं प्रसङ्गादिदमुदितमिति ॥ ६४-६५ ॥

**गीता**

## नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
## न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥

***वि०वि०***— श्रवणमननाभ्यामुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन । यदर्थमिन्द्रियजयोऽपेक्षित इत्याशङ्क्य प्रसादाभावे दोषमाह **नास्तीति** । न हि प्रसादं विना युक्तिः चित्तनिरोधः । अयुक्तस्य च बुद्धिः स्मयक् ज्ञानं नास्ति । ध्यानेनैव ज्ञानोत्पादात् कथं नास्ति बुद्धिरसयुक्तस्येत्यत आह **न चेति** । **भावना** ध्यानम् । न चाभावयतः शान्तिः भगवन्निष्ठा भवति । 'शामो मन्निष्ठता बुद्धेः' इति वचनात् । तथाऽभावयतो ज्ञानवर्जितस्य शान्तिर्मुक्तिर्नास्ति । 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानात् । अशान्तस्य अमुक्तस्य कुतः सौख्यमिति ॥ ६६ ॥

***वा०ल०***— 'नास्ति बुद्धिरयुक्तस्य' इत्यत्र अयुक्तस्य कर्मकौशलरहितस्य । बुद्धिः निश्चितज्ञानम् । भावना निदिध्यासनम् । शान्तिः बुद्धेर्भगवदेकनिष्ठता, अपरोक्षज्ञानमिति यावत् ॥ ६६ ॥

***सा०सं०***— श्रवणमननाभ्यामुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन इत्यतः प्रसादाभावे दोषमाह **नास्तीत्यादि** श्लोकद्वयेन । विपक्षे दोषोक्तिपरत्वात् मनःप्रसादाभावे युंक्ति-शब्दितचित्तनिरोधो न भवतीत्येतत्प्रकरणप्राप्तमादौ योज्यम् । 'नास्ति बुद्धिः' इत्येतदग्रे योज्यम् । **अयुक्तस्य** चित्तनिरोधहीनस्य **भावना** ध्यानं न भवति । **अभावयतश्च** अध्यायिनश्च **बुद्धिः** अपरोक्षज्ञानं **न** भवति । न चाबुद्धेरिति शेषः । अपरोक्षज्ञानहीनस्य च **शान्तिः** मुक्तिः । **न** अस्ति । **अशान्तस्य** अमुक्तस्य **च सुखं कुतः** न कुतोऽपीत्यर्थः । अबुद्धेः शान्तिर्नेत्येतावत्येव वाच्ये, 'अशान्तस्य कुतः सुखम्' इत्युक्तिः – न केवलमपरोक्षिणो मुक्तौ सर्वदुःखप्रहाणमात्रम्, किन्तु संसारिभिरलभ्यं परमं सुखं चेति ज्ञापयितुं प्रसङ्गात् प्राप्ता – इति ज्ञेयम् ।

यद्वा, शान्तिर्भगवदेकनिष्ठबुद्धिता । **सुखं** मोक्षः ॥ ६६ ॥

***अ०प्र०***— इन्द्रियनिग्रहस्य स्थितप्रज्ञतासाधनस्य व्यतिरेकमुखेन उपपादयति **नास्तीति** ।

अयुक्तस्य[१], बुद्धिः[२], नास्ति[३], अयुक्तस्य[४], भावनापि[५], नास्ति[६], अभावयतः तस्य[७], शान्तिरपि नास्ति[८], अशान्तस्य[९], सुखं[१०], कुतः[११] इत्यन्वयः ।

अयुक्तस्य अवशीकृतेन्द्रियस्य बुद्धिः ज्ञानापरोक्षं[२], नास्ति = शास्त्रा-चार्योपदेशाभ्यामपि अपरोक्षार्थं प्रज्ञैव नोत्पद्यते[३], तथा अयुक्तस्य = चित्तै-काग्र्यतारहितस्य[४], भावना = ध्यानं[५], नास्ति[६], ध्यानेन आत्मनि प्रतिष्ठा भवति सा च भावना अयुक्तस्य यतो नास्ति, अभावयतः ध्यानमकुर्वतः तस्य[७], शान्तिर्मोक्षं[८], चित्तोपरतिः[८], नास्ति[८], अशांतस्य अमुक्तस्य अज्ञा-निनः[९], सुखं = मोक्षं[१०], कुतः[११] नास्तीति भावः ॥ ६६ ॥

**भाष्यम्**

**प्रसादाभावे दोषमाहोत्तराभ्यां श्लोकाभ्याम् । न हि प्रसादाभावे युक्तिश्चित्तनिरोधः । अयुक्तस्य च बुद्धिः सम्यग्ज्ञानं नास्ति । तदेवोपपादयति न चायुक्तस्येति । शान्तिः मुक्तिः । 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानात् ॥ ६६ ॥**

***प०टी०***— ननु मार्गान्तरेण मोक्षसिद्धेः किमनेन दुरापाद्यप्रसादेन ? इत्याशङ्कोत्तरतयोत्तर-श्लोकद्वयमवतार्य व्याचष्टे **प्रसादेति** । नन्वत्र युक्त्यभावे दोष उच्यते, न प्रसादाभाव इत्यत आह **न हीति** । अयुक्तस्य बुद्धिर्भावना च नास्तीति भ्रान्तिर्मा भूदित्याह **तदेवेति** । अयुक्तस्य ध्यानाभावान्नापरोक्षज्ञानमित्यर्थः । 'न चाभावयतः शान्तिः' इत्यत्रापि न चाभावयतो ज्ञानं, ज्ञानिनः शान्तिरिति ज्ञेयम् । नन्वपरोक्षज्ञानस्य शान्तिसाधनस्य कथं तत्साधनता ? इत्यत आह **शान्तिरिति** ॥ ६६ ॥

***न०टी०***— 'प्रसन्नचेतसो ह्याशु बुद्धिः' इत्युक्तत्वात् नास्ति बुद्धिरप्रसन्नचेतस इति वक्तव्ये अयुक्तस्य बुद्धिर्नेत्युक्तेः प्रसादसाध्ययुक्तिर्नामाङ्गीकार्येति भावेन उत्तरश्लोकमवतार्य व्याचष्टे **प्रसादा-भाव इति** ॥ ६६ ॥

***प्र०दी०***— वक्तव्यस्योक्तत्वात् 'नास्ति बुद्धिः' इत्यादिकं किमर्थमित्यत आह— **प्रसादेति** । श्रवणमननाभ्यामुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन । यदर्थमिन्द्रियजयोऽपेक्षित इत्याशङ्क्येति शेषः । नन्वत्र प्रसादाभाव इदं स्यादिति नोच्यते । अतः कथमेतदुक्तमित्यतः प्रकरणप्राप्तमध्याहरति— **न हीति** । ननु प्रसादरहिता अनुमिमत इत्यत आह— **चित्तेति** ।

एकाग्रते-त्यर्थः । एवमध्याहारे सति 'नास्ति बुद्धिः' इत्येतत्सम्बध्यत इति भावेनाह— **अयुक्तस्य चेति** । ज्ञानमात्रं प्रकृतानुपयुक्तमयुक्तं चेत्यत आह— **सम्यगिति** । ब्रह्मापरोक्षज्ञानमित्यर्थः । एतावता प्रसादाभावे दोष उक्तः । तत्किमर्थं 'न चायुक्तस्य' इत्येतदित्यत आह— **तदेवेति** । ध्यानेनैव ज्ञानोत्पादात्कथं नास्ति बुद्धिरयुक्तस्येत्याशङ्क्येति शेषः । भावना ध्यानम् । अत एव न चाभावयतो ज्ञानम् । न चाज्ञानिनः शान्तिरिति योज्यम् । ननु शान्तिः प्रसादः । तस्य ज्ञानसाधनत्वेनोक्तत्वात्कथं ज्ञानोत्तरत्वमुच्यत इत्यत आह— **शान्तिरिति** । एतच्च न केवलं मुक्तौ सर्वदुःखहानिः । किन्तु संसारिभिरलभ्यं परमसुखं चेति ज्ञापयितुं प्रसङ्गादुक्तम् । एतदेवावेक्ष्य भाष्यकृता 'ब्रह्मादिपदात्' इत्याद्युक्तम् ॥ ६६ ॥

*भा०दी०*— **उपकृतेनेति** । तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धफलमिति सूत्रोक्तदिशा अज्ञानसंशयविपर्ययलक्षणप्रतिबन्धनिरासरूपोपकारवत्तया कृतेनेत्यर्थः । युक्तिरनुमेति मत्वा शङ्कते **नन्विति** । **प्रकृतेति** । ब्रह्मापरोक्षज्ञानस्य स्थितप्रज्ञस्येत्यादिना प्रकृतत्वादिति भावः । **अयुक्तेति** । तस्य चित्तनिरोधनादपेक्षणादिह च तदुक्तेरिति भावः । **अत एवेति** । भावनासाध्यापरोक्ष्यज्ञान-साध्यतया मोक्षस्य साक्षाद्भावनासाध्यत्वाभावादेवेत्यर्थः । **एतदेवेति** । संसारदशायामलभ्यपरमसुखं मुक्तावस्तीत्येतदेवापेक्ष्य ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्षसिद्ध इति सिद्धमित्युक्तमित्यर्थः । ॥ ६६ ॥

*भा०र०*— **वक्तव्यस्योक्तत्वात्** रागद्वेषपरिहारस्येन्द्रियजयः फलं, तस्य च ज्ञानं व्यवहित-फलमित्यादिरूपस्य वक्तव्यस्योक्तत्वात् । **श्रवणमननाभ्यामुपकृतेन ध्यानेनैवेति** । "तन्निधरिणार्थ-नियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्" इत्यधिकरणे ध्यानमेवापरोक्षज्ञानकारणम् । "ततस्तु तं पश्यते निष्फलं ध्यायमानः" इति श्रुतेः । "ध्यानं च यावदीक्षेत" इति स्मृतेश्च । श्रवणमज्ञान-निवृत्तिद्वारा तदङ्गम् । मननं तु संशयविपर्ययरूपप्रतिबन्धनिरसनद्वारा । "श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनम्" इति वचनाच्छ्रवणमननोपकृतध्यानस्यैव अपरोक्षज्ञानसाधनत्वमिति व्यवस्थापनादिति भावः । **इदम्** अनिष्टम् । **एतत्** प्रसादाभावे दोषमाहे-त्येतत् । **प्रकरणप्राप्तम्** इन्द्रियजयप्रकरणप्राप्तम् । युक्तिशब्दस्यानुमानार्थत्वं मत्वा शङ्कते **नन्विति** ।

ननु चित्तनिरोधो नाम चित्तस्य विषयान् प्रत्यप्रवृत्तिः । स एव चात्र प्रसादो विवक्षित इति कथं हेतुहेतुमद्भाव इत्यत आह **एकाग्रतेति** । **प्रकृतेति** । "तस्य प्रज्ञा प्रतिष्ठिता", "प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति" इत्यादावपरोक्षज्ञानस्यैव प्रस्तुतत्वादनुपयुक्तम् । चित्तैकाग्र्याभावेऽपि

पामरस्य घटादिज्ञानसद्भावादयुक्तं चेत्यर्थः । सम्यक्त्वस्य याथार्थ्यरूपत्वे पुनरुक्तचोद्यापरिहार एवेत्यतो व्याचष्टे **ब्रह्मापरोक्षज्ञानमिति** । **एतावता** ''नास्ति बुद्धिरयुक्तस्य'' इत्येतावता ग्रन्थेन । **दोषः** अपरोक्षज्ञानाभावरूपः । **तदिति** । यतो दोषोद्भावनोपयुक्तमेव वक्तव्यं तत इत्यर्थः । **ध्यानेनैव** न तु प्रसादेन । श्रवणमननाभ्यामुपकृतेनेत्यपि द्रष्टव्यम् । ध्यानेनैवेत्युक्तशङ्कायाः कथमनेन परिहारः ? किञ्च भावना हि प्रयत्नः । ''भावनैव प्रयत्नात्मा'' इत्यभियुक्तोक्तेः । स च चित्तैकाग्रताभावेऽपि भवतीति कथमुच्यते ''न चायुक्तस्य भावना'' इति, इत्यत आह **भावना ध्यानमिति** । ननु न भावना ध्यानमिति युक्तं व्याख्यानम् । ''न चाभावयतः शान्तिः'' इति व्यतिरेकमुखेन भावनायाः शान्तिशब्दितमोक्षहेतुत्वावेदनात् । न हि ध्यानेनैव मोक्ष इत्यभ्युपगम इत्याशङ्क्य भावनामोक्षयोर्मध्ये अपरोक्षज्ञानपदमज्ञानिनि इति पदं च संयोज्यमिति भावेनाह **अत एवेति** । भावनासाध्यपरोक्षज्ञानजन्यतया मोक्षस्य साक्षाद् भावनासाध्यत्वाभावादेवेत्यर्थः । **उक्तत्वात्** ''प्रसन्नचेतसो ह्याशु बुद्धिः'' इत्यत्र । ननु ज्ञानिलक्षणस्यासम्भवपरिहाराय ज्ञानस्य महाप्रयत्नसम्पादनीयेन्द्रियजयसाध्यत्वप्रतिपादनावसरे ज्ञानफलकथनमसङ्गतमित्यत आह **एतच्चेति** । ''न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्'' इत्येतदित्यर्थः । अनेन ''न चाभावयतः शान्तिः'' इत्यत्र व्यतिरेकमुखेन ''प्रसादे सर्वदुःखानां हानिः'' इति प्रागुक्तसर्वदुःखहानिरूपमुक्तिमनूद्य ''अशान्तस्य कुतः सुखम्'' इति व्यतिरेकमुखेनैव मुक्तौ परमसुखं चास्तीति गीतायामुच्यते । तच्च सुकृतदुष्कृतहानं न ज्ञानफलम् । सुखप्राप्तिदुःखपरिहाररूपत्वाभावाभावादिति कृतचोद्यपरिहारायेति विभावितं भवति । ननु मोक्षस्य परमसुखरूपत्वमपि भाष्यकृता ''ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धम्'' इति प्रागेवोक्तत्वान्नेह वक्तव्यमित्यत आह **एतदेवेति** । ''न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्'' इति गीतावचनमेव भावि हृदि निधाय भाष्यकृता तथोक्तमिति न दोष इति भावः । ॥ ६६ ॥

***गीताक्षरार्थस्तु***— श्रवणमननाद्युपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन ? यदर्थमिन्द्रियनिग्रहोऽपेक्षित इत्याशङ्क्य प्रसादाभावे दोष उच्यते **नास्तीति** । प्रसादाभावे युक्तिशब्दितचित्तनिरोधरूपचित्तैकाग्रता नास्तीति प्रकरणप्राप्तमध्याहर्तव्यम् । ध्यानेनैव ज्ञानोत्पादात् कथं ''नास्ति बुद्धिरयुक्तस्य'' इत्याशङ्क्य तदुपपाद्यते **न चायुक्तस्येति** । अयुक्तस्य चित्तनिरोधरहितस्य भावना ध्यानं नास्ति न भवति । अभावयतः अध्यायतश्च बुद्धिः ब्रह्मापरोक्षज्ञानं नास्ति । न चाबुद्धेः अपरोक्षज्ञानहीनस्येति शेषः । शान्तिः मुक्तिः नास्ति । अशान्तस्य अमुक्तस्य कुतः सुखम् ? न कुतोऽपि । अबुद्धेः शान्तिर्नास्तीत्येतावत्येव वक्तव्येऽपि यत् ''अशान्तस्य कुतः सुखम्''

इत्युच्यते तत् न केवलं मुक्तौ सर्वदुःखहानिः, किन्तु संसारिभिरप्यलभ्यं परमसुखं चेति ज्ञापयितुं प्रसङ्गादिति ज्ञातव्यम् ॥ ६६ ॥

**गीतातात्पर्यनिर्णयः**

**शान्तिः भगवन्निष्ठा । "शमो मन्निष्ठता" इति हि भागवते ॥ ६६ ॥**

***न्या०दी०*— इन्द्रियजये जाते मनसः स्वतोऽपि प्रायो विषयागतिलक्षणेन प्रसादेन मोक्षलाभादसावापाद्य इत्युक्तम् । तदनापादने दोषश्चोच्यते नास्तीति । तत्र भावनायाः शान्तिसाध्यत्वात् "न चाभावयतः शान्तिः" इति कथमुच्यत इत्यतो न शान्तिपदेनात्र चित्तनिरोध उच्यते । अपि तु भगवन्निष्ठबुद्धित्वम् । तच्च भावनासाध्यं भवतीति भावेन शान्तिशब्दार्थं सप्रमाणकमाह शान्तिरिति ॥**

**गीता**

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

*वि०वि०*— कथमयुक्तस्य भावना न भवतीत्यत आह **इन्द्रियाणामिति** । चरतामिन्द्रियाणामनु पश्चात् ईश्वरेण विधीयते क्रियते यन्मनः, तदस्य प्रज्ञां प्रज्ञानं वायुरम्भसि नावमिव हरति । उत्पत्स्यमानं ज्ञानं निवारयति, उत्पन्नमप्यभिभवतीत्यर्थः । अत्रानुः पृष्ठभावित्वार्थो न लक्षणाद्यर्थ इति कर्मप्रवचनीयो न भवति ॥ ६७ ॥

*वा०ल०*— 'यन्मनोऽनुविधीयते' इत्यत्र अनु अनुसारि विधीयते क्रियते इति यत्, तत् अस्य प्रज्ञां हरति ॥ ६७ ॥

*सा०सं०*— अयुक्तस्य भावना नेत्ययुक्तम् । कृतश्रवणमननस्य पुंसो ध्यानोपपत्तेरित्यत आह **इन्द्रियाणामिति** । चक्षुरादीन्द्रियाणां स्वैरं विषयेषु **चरतां** गच्छताम् **अनु** पृष्ठभावितया **मनो** विषयान् प्रति **विधीयते** ईश्वरेण क्रियते **यत् तत्** मनस इन्द्रियाणां पृष्ठभावितया ईश्वरेण करणम्, **अस्य** पुंसः **प्रज्ञां** परोक्षनिश्चयं **हरति** । उत्पत्स्यदपरोक्षज्ञानं निवारयति । उत्पन्नमपि ज्ञानं चित्तनिरोधहीनस्य न ध्यानोपयोगि सत्, अपरोक्षज्ञानाय प्रभवतीत्यर्थः । कथम् **अम्भसि वायुर्नावमिव** प्लवमिवेति ॥ ६७ ॥

***अ०प्र०***— नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह **इन्द्रियाणामिति** ।

चरतां[१], इन्द्रियाणां[२], हि यस्मात्[३], यत्[४], मनः[५], अनु[६], विधीयते[७], तत्[८], अस्य[९], प्रज्ञां[१०], यथा वायुः[११], अंभसि[१२], नावं हरति तथा[१३], हरति[१४] इत्यन्वयः ।

चरतां = स्वैरं विषयेषु चरतां[१], इन्द्रियाणां = अवशीकृतानां मध्ये[२], हि = यस्मात्[३], यत् एकमेव इन्द्रियं[४], मनः = अस्य पुरुषस्य मनः[५], अनुपृष्ठतः[६], विधीयते = अवशीकृतं सत् इन्द्रियेण सह गच्छति[७], तत् तदेवेन्द्रियं[८], अस्य मनसः पुरुषस्य वा[९], प्रज्ञां परोक्षनिश्चयज्ञानं हरति विषयविक्षिप्तं करोति उत्पन्नादपि निवारयति उत्पन्नस्य तस्याभिभवं करोति बहूनि प्रज्ञां हरन्तीति किमु वक्तव्यं[१०], यथा वायुः[११], अंभसि = समुद्रे[१२], नावं = कर्णधाररहितां नावं हरति तथा[१३], हरतीति दृष्टान्तः[१४], चित्तविरोधरहितश्रवणमननेऽपि ध्यानोप-योगिनौ तत्त्वनिश्चयवेदार्थनियमौ कुरुत इति भावः । तस्मात्सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानी जायत इति निगमयति । नो चेत् यथा प्रमत्तस्य कर्णधारस्य नावं वायुः समुद्रे सर्वतः परिभ्रमति तद्वत् अजितेन्द्रियः संसार-चक्रे परिभ्रमति इति भावः ॥ ६७ ॥

**भाष्यम्**

**कथमयुक्तस्य भावना न भवति ? आह इन्द्रियाणामिति । अनु विधीयते क्रियते नन्वीश्वरेणेन्द्रियाणामनु । 'बुद्धिर्ज्ञानम्' इत्यादि वक्ष्यमाणत्वात् । प्रज्ञां प्रज्ञानम् । उत्पत्स्यदपि निवारयतीत्यर्थः । उत्पन्नस्याप्यभिभवो भवति ॥ ६७ ॥**

***प०टी०***— ननु चित्तनिरोधं विनाऽपि घटादिभावनादर्शनात् कथं नायुक्तस्य भावना ? इत्याशङ्क्य, उत्तरश्लोकमवतारयति **कथमिति** । 'विधीयते' इत्यस्य कर्तृसापेक्षत्वात् तन्निर्देशपूर्वं श्लोकं व्याचष्टे **अनुविधीयत** इति । कुतो न जीवः कर्ता इत्यत आह **बुद्धिरिति** । 'प्रज्ञा'-शब्दविवक्षितार्थमाह **प्रज्ञामिति** । चित्तनिग्रहाभावे ज्ञानमेव नास्ति, कुतो भावना ? इत्यर्थः । ज्ञानानुत्पत्तौ कस्य हरणम् ? इत्यत आह **उत्पत्स्यदिति** । तर्हीत्युत्पन्नपरोक्षज्ञानानां नापेक्षित-श्चित्तनिरोध इत्यत आह **उत्पन्नस्येति** ॥ ६७ ॥

***न०टी०***— कथमयुक्तस्य बुद्धिर्नास्ति ? इत्याशङ्कायाम्, अयुक्तस्य भावनाभावात्, तदभावे बुद्ध्यभावादिति भावेनाह **तदेवेति** ॥ ६७ ॥

***प्र०दी०***— एकेनैव श्लोकेन प्रमेयस्य मुद्रितत्वात् 'श्लोकाभ्यां' इति किमर्थमुक्तं इत्यत आह— **कथमिति** । कृतश्रवणमननस्य ध्यानोपपत्तेरिति भावः । न भवतीत्याशङ्क्येति शेषः । अनुविधानं

सदृशभवनम् । तदत्रासङ्गतम् । कर्ता चात्र जीव इति प्रतीयत इत्यत आह— **अनुविधीयत इति** । विपूर्वो दधातिः करोतीत्यर्थे वर्तते । कर्ता चात्रेश्वर एवेत्यर्थः । अत्रानुः पृष्ठभावित्वार्थो न लक्षणाद्यर्थ इति कर्मप्रवचनीयो न भवति । नन्विति सम्प्रतिपत्तिरुक्ता । सा कुत इत्यत आह— **बुद्धिरिति** । ग्रहणशक्तिः प्रज्ञा । तद्ग्रहणमत्रायुक्तमित्यत आह— **प्रज्ञामिति** । परोक्षनिश्चयम् । यस्य प्रज्ञानं नोत्पन्नं तस्य युक्त्यभावः किं करिष्यति । विद्यमानस्य हि हरणमित्यत आह— **उत्पत्स्यदिति** । तर्ह्युत्पन्नपरोक्षज्ञानस्य युक्त्यभावोऽकिञ्चित्कर इत्यत आह— **उत्पन्नस्यापीति** । चित्तनिरोध-रहितश्रवणमनने अपि न ध्यानोपयोगिनी तत्त्वनिश्चयवेदार्थनियमौ कुरुत इति भावः ॥ ६७ ॥

***भा०दी०***— ननु "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव" इति सूत्रेण "अनुर्लक्षण" इति सूत्रेण वा लक्षणाद्यर्थस्यानुशब्दस्य "कर्मप्रवचनसंज्ञायां कर्मप्रवचनीययुक्ते द्वितीया" इति सूत्रेण जपमनुप्रावर्षहित्यादाविवेन्द्रिया-ण्यनुविधीयत इति द्वितीयया भाव्यमित्यत आह **अत्राहुरिति** ।

नन्वित्यस्य शङ्कालिङ्गत्वधीनिरासायेश्वरेणेन्द्रियाणि दुष्टाभावितया मनः क्रियते । **नन्विति** । अविप्रतिपत्तिकत्वे इत्यर्थः । प्रसिद्धिवाच्योऽत्र ननु शब्द इति भावः । **बुद्धिरितीति** । बुद्धिर्ज्ञान-मसम्मोह इत्याद्युक्ता मत्त एव भवन्तीति भगवतैव दशमेऽध्याये बुध्यादेः सर्वस्य स्वाधीनोक्तेरिति भावः । **युक्त्यभाव इति** । चित्तनिरोधाभावः । तन्निर्धारणार्थनियम इति सूत्रपदयोरेकदार्थकथनेन अनुवादोऽयम् । **तत्त्वनिश्चयवेदार्थनियमाविति** । अयमस्य वाक्यस्यार्थ इति तत्त्वनिश्चयः । अयमेवास्यार्थो नान्य इति निश्चयोऽर्थनियमः । तावुभौ श्रवणमननफलत्वेन ध्यानोपयोगित्वेन सूत्रोक्तौ श्रवणमनने कुरुत इत्यर्थः ॥ ६७ ॥

***भा०र०***— **मुद्रितत्वात्** सङ्गृहीतत्वात् । परिपूर्णत्वादित्यर्थः । "न भवति" इति भाष्यमनूद्य अनन्तरं शेषमाह **न भवतीति** । **अत्र** मनसोऽनुविधानक्रियायाम् । अस्येति जीवस्यैव परामर्शादिति भावः । ननु इन्द्रियाणामन्विति कथम् ? यावता "लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः" इत्यनुशब्दस्य कर्मप्रवचनीयसञ्ज्ञायां "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीयाविभक्तिरनुशिष्टेति चेत्, नासौ लक्षणेत्थम्भूताख्यानाद्यर्थकः । येन कर्मप्रवचनीयतया द्वितीया स्यात् । किन्तु पृष्ठ-भावित्वार्थ इति षष्ठ्युपपत्तिरिति भावेनाह **अत्रानुरिति** । **सम्प्रतिपत्तिरिति** । ईश्वरेणेन्द्रियाणां पृष्ठभावि मनः क्रियते नन्विति सम्प्रतिपत्तिरित्यर्थः । इन्द्रियाणां विषयैः सन्निकर्षे मनोऽपि तत्पृष्ठगामि यथा स्यात् तथेश्वर एव करोतीति भावः । 'बुद्धिर्ज्ञानमसम्मोहः' इत्याद्युक्त्वा "भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" इति भगवतैव बुद्ध्यादेस्तद्धर्मस्य च दशमे स्वाधीनस्य विभावयिष्यमाणत्वादिति भाष्यार्थः स्फुटत्वान्नोक्तः । **अयुक्तमिति** । यदा बाह्येन्द्रियाणि स्वस्वविषयैस्सन्निकृष्टानि, मनश्च

***अ०प्र०***— नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह **इन्द्रियाणामिति** ।

चरतां[१], इन्द्रियाणां[२], हि यस्मात्[३], यत्[४], मनः[५], अनु[६], विधीयते[७], तत्[८], अस्य[९], प्रज्ञां[१०], यथा वायुः[११], अंभसि[१२], नावं हरति तथा[१३], हरति[१४] इत्यन्वयः ।

चरतां = स्वैरं विषयेषु चरतां[१], इन्द्रियाणां = अवशीकृतानां मध्ये[२], हि = यस्मात्[३], यत् एकमेव इन्द्रियं[४], मनः = अस्य पुरुषस्य मनः[५], अनुपृष्ठतः[६], विधीयते = अवशीकृतं सत् इन्द्रियेण सह गच्छति[७], तत् तदेवेन्द्रियं[८], अस्य मनसः पुरुषस्य वा[९], प्रज्ञां परोक्षनिश्चयज्ञानं हरति विषयविक्षिप्तं करोति उत्पन्नादपि निवारयति उत्पन्नस्य तस्याभिभवं करोति बहूनि प्रज्ञां हरन्तीति किमु वक्तव्यं[१०], यथा वायुः[११], अंभसि = समुद्रे[१२], नावं = कर्णधाररहितां नावं हरति तथा[१३], हरतीति दृष्टान्तः[१४], चित्तविरोधरहितश्रवणमननेऽपि ध्यानोप-योगिनौ तत्त्वनिश्चयवेदार्थनियमौ कुरुत इति भावः । तस्मात्सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानी जायत इति निगमयति । नो चेत् यथा प्रमत्तस्य कर्णधारस्य नावं वायुः समुद्रे सर्वतः परिभ्रमति तद्वत् अजितेन्द्रियः संसार-चक्रे परिभ्रमति इति भावः ॥ ६७ ॥

**भाष्यम्**

**कथमयुक्तस्य भावना न भवति ? आह इन्द्रियाणामिति । अनु विधीयते क्रियते नन्वीश्वरेणेन्द्रियाणामनु । 'बुद्धिर्ज्ञानम्' इत्यादि वक्ष्यमाणत्वात् । प्रज्ञां प्रज्ञानम् । उत्पत्स्यदपि निवारयतीत्यर्थः । उत्पन्नस्याप्यभिभवो भवति ॥ ६७ ॥**

***प०टी०***— ननु चित्तनिरोधं विनाऽपि घटादिभावनादर्शनात् कथं नायुक्तस्य भावना ? इत्याशङ्क्य, उत्तरश्लोकमवतारयति **कथमिति** । 'विधीयते' इत्यस्य कर्तृसापेक्षत्वात् तन्निर्देशपूर्वं श्लोकं व्याचष्टे **अनुविधीयत** इति । कुतो न जीवः कर्ता इत्यत आह **बुद्धिरिति** । 'प्रज्ञा'-शब्दविवक्षितार्थमाह **प्रज्ञामिति** । चित्तनिग्रहाभावे ज्ञानमेव नास्ति, कुतो भावना ? इत्यर्थः । ज्ञानानुत्पत्तौ कस्य हरणम् ? इत्यत आह **उत्पत्स्यदिति** । तर्हीत्युत्पन्नपरोक्षज्ञानानां नापेक्षित-श्चित्तनिरोध इत्यत आह **उत्पन्नस्येति** ॥ ६७ ॥

***न०टी०***—कथमयुक्तस्य बुद्धिर्नास्ति ? इत्याशङ्कायाम्, अयुक्तस्य भावनाभावात्, तदभावे बुद्ध्यभावादिति भावेनाह **तदेवेति** ॥ ६७ ॥

***प्र०दी०***— एकेनैव श्लोकेन प्रमेयस्य मुद्रितत्वात् 'श्लोकाभ्यां' इति किमर्थमुक्तं इत्यत आह— **कथमिति** । कृतश्रवणमननस्य ध्यानोपपत्तेरिति भावः । न भवतीत्याशङ्क्येति शेषः । अनुविधानं

सदृशभवनम्। तदत्रासङ्गतम्। कर्ता चात्र जीव इति प्रतीयत इत्यत आह— **अनुविधीयत इति**। विपूर्वो दधातिः करोतीत्यर्थे वर्तते। कर्ता चात्रेश्वर एवेत्यर्थः। अत्रानुः पृष्ठभावित्वार्थो न लक्षणाद्यर्थ इति कर्मप्रवचनीयो न भवति। नन्विति सम्प्रतिपत्तिरुक्ता। सा कुत इत्यत आह— **बुद्धिरिति**। ग्रहणशक्तिः प्रज्ञा। तद्ग्रहणमत्रायुक्तमित्यत आह— **प्रज्ञामिति**। परोक्षनिश्चयम्। यस्य प्रज्ञानं नोत्पन्नं तस्य युक्त्यभावः किं करिष्यति। विद्यमानस्य हि हरणमित्यत आह— **उत्पत्त्यदिति**। तर्ह्युत्पन्नपरोक्षज्ञानस्य युक्त्यभावोऽकिञ्चित्कर इत्यत आह— **उत्पन्नस्यापीति**। चित्तनिरोध-रहितश्रवणमनने अपि न ध्यानोपयोगिनी तत्त्वनिश्चयवेदार्थनियमौ कुरुत इति भावः॥ ६७॥

***भा०दी०***— ननु "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव" इति सूत्रेण "अनुर्लक्षण" इति सूत्रेण वा लक्षणाद्यर्थस्यानुशब्दस्य "कर्मप्रवचनसंज्ञायां कर्मप्रवचनीययुक्ते द्वितीया" इति सूत्रेण जपमनुप्रावर्षहित्यादाविवेन्द्रिया-ण्यनुविधीयत इति द्वितीयया भाव्यमित्यत आह **अत्राहुरिति**।

नन्वित्यस्य शङ्कालिङ्गत्वधीनिरासायेश्वरेणेन्द्रियाणि दुष्टाभावितया मनः क्रियते। **नन्विति**। अविप्रतिपत्तिकत्वे इत्यर्थः। प्रसिद्धिवाच्योऽत्र ननु शब्द इति भावः। **बुद्धिरितीति**। बुद्धिर्ज्ञान-मसम्मोह इत्याद्युक्ता मत्त एव भवन्तीति भगवतैव दशमेऽध्याये बुध्यादेः सर्वस्य स्वाधीनोक्तेरिति भावः। **युक्त्यभाव इति**। चित्तनिरोधाभावः। तन्निर्धारणार्थनियम इति सूत्रपदयोरेकदार्थकथनेन अनुवादोऽयम्। **तत्त्वनिश्चयवेदार्थनियमाविति**। अयमस्य वाक्यस्यार्थ इति तत्त्वनिश्चयः। अयमेवास्यार्थो नान्य इति निश्चयोऽर्थनियमः। तावुभौ श्रवणमननफलत्वेन ध्यानोपयोगित्वेन सूत्रोक्तौ श्रवणमनने कुरुत इत्यर्थः॥ ६७॥

***भा०र०***— **मुद्रितत्वात्** सङ्गृहीतत्वात्। परिपूर्णत्वादित्यर्थः। "न भवति" इति भाष्यमनूद्य अनन्तरं शेषमाह **न भवतीति**। **अत्र** मनसोऽनुविधानक्रियायाम्। अस्येति जीवस्यैव परामर्शादिति भावः। ननु इन्द्रियाणामन्विति कथम्? यावता "लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः" इत्यनुशब्दस्य कर्मप्रवचनीयसञ्ज्ञायां "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीयाविभक्तिरनुशिष्टेति चेत्, नासौ लक्षणेत्थम्भूताख्यानाद्यर्थकः। येन कर्मप्रवचनीयतया द्वितीया स्यात्। किन्तु पृष्ठ-भावित्वार्थ इति षष्ठ्युपपत्तिरिति भावेनाह **अत्रानुरिति**। **सम्प्रतिपत्तिरिति**। ईश्वरेणेन्द्रियाणां पृष्ठभावि मनः क्रियते नन्विति सम्प्रतिपत्तिरित्यर्थः। इन्द्रियाणां विषयैः सन्निकर्षे मनोऽपि तत्पृष्ठगामि यथा स्यात् तथेश्वर एव करोतीति भावः। 'बुद्धिर्ज्ञानमसम्मोहः' इत्याद्युक्त्वा "भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" इति भगवतैव बुद्ध्यादेस्तद्धर्मस्य च दशमे स्वाधीनस्य विभावयिष्यमाणत्वादिति भाष्यार्थः स्फुटत्वान्नोक्तः। **अयुक्तमिति**। यदा बाह्येन्द्रियाणि स्वस्वविषयैस्सन्निकृष्टानि, मनश्च

तद्द्वारा तत्र प्रवर्तते तदा मनसो विषयग्रहणशक्तिरेवानुभूयत इति तद्धरणकथनमयुक्तमित्यर्थः । ननु प्रज्ञाशब्दस्यापरोक्षज्ञानार्थत्वे हरणवचनमयुक्तम् । "नेक्षा क्व च न बाध्यते" इत्युक्तेरित्यत आह **परोक्षनिश्चयमिति** । **उत्पत्स्यत्** उत्पत्स्यमानम् । कृतश्रवणमननस्य ध्यानोपपत्तेरित्याशङ्कायाः परिहाराय भाष्यभावमाह **चित्तनिरोधेति** । **तत्त्वनिश्चयवेदार्थनियमाविति** । अयमस्य वाक्यस्यार्थ इति निश्चयमुत्पादयच्छ्रवणं ध्यानाङ्गम् । अयमेवास्य वाक्यस्यार्थो नान्य इति वेदार्थनिर्धारणरूप-नियममुपजनयन्मननमपि ध्यानोपकारीति स्थितिः । यस्य तु न चित्तनिरोधः तस्य कृते अपि श्रवणमनने ध्यानानुकूले न भवतः । ज्ञानात् पूर्वं कृते ज्ञानमेव ध्यानद्वारा नोत्पादयेताम् । उत्पन्न-स्यापि ज्ञानस्याभिभवमापादयेतामित्यर्थः ॥ ६७ ॥

*गीताक्षरार्थस्तु*— यदुक्तमयुक्तस्य भावना न भवतीति तदयुक्तम् । कृतश्रवणमननस्य ध्यानोपपत्तेरित्यत उक्तम् **इन्द्रियाणामिति** । स्वैरं विषयान् प्रति चरतां गच्छतां इन्द्रियाणाम् । अनुरत्र पृष्ठभावित्वार्थो न लक्षणाद्यर्थ इति कर्मप्रवचनीयो भवतीति न द्वितीया । **विधीयते** विपूर्वो दधातिः करोत्यर्थे । इन्द्रियाणां पृष्ठभावितयेश्वरेण क्रियत इति यत् तदिन्द्रियानुसारितया मनसः करणमीश्वरकर्तृकम् । यन्मनोऽनु विधीयते तन्मन इति वा । अस्य पुंसः प्रज्ञाम् अपरोक्षनिश्चयं हरति उत्पत्स्यमानां निवारयति । उत्पन्नामप्यभिभवति । चित्तनिरोधरहितस्य श्रवणमनेन अपि न ध्यानोपयोगिनी तत्त्वनिश्चयवेदार्थनियमौ न कुरुत इति भावः ॥ ६७ ॥

**गीता**

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

***वि०वि०***— यत एवं निगृहीतेन्द्रियस्यैव प्रसादः, प्रसादवत एव युक्तिः, युक्तिमत एव श्रवणमननाभ्यां तत्त्वज्ञानम्, तत्त्वज्ञानवत एवापरोक्षज्ञानसाधनं उपायम्, नान्यथा । तस्मात् सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानीति निगमयति **यस्मादिति** ॥ ६८ ॥

***सा०सं०***— 'प्रजहाति' इत्यादिनोक्तज्ञानिलक्षणस्यासम्भवनिरासाय ज्ञानस्य महाप्रयत्न-साध्येन्द्रियनिग्रहसाध्यत्वं 'विषया विनिवर्तन्ते' इत्यादिना यदुक्तं तदुपसंहरति **तस्मादिति** । यस्मादेवं निगृहीतेन्द्रियस्यैव उक्तरूपः प्रसादः, प्रसादवत एव चित्तनिरोधरूपा युक्तिः, युक्तिमत एव श्रवण-मनने, ताभ्यां तत्त्वनिश्चयः, तत्त्वनिश्चयवत एवापरोक्षसाधनं ध्यानम् । **तस्मात्** हे **महाबाहो सर्वश**

**इन्द्रियाणि** सर्वाण्यपीन्द्रियाणि **इन्द्रियार्थेभ्यः** रूपादिसर्वेन्द्रियविषयेभ्यः **यस्य निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता**। प्रसादयुक्तिश्रवणमननतत्त्वनिश्चयध्यानप्रणाड्याऽपरोक्षधीः **प्रतिष्ठिता** प्रकर्षेण जायत इति ॥ ६८ ॥

***अ०प्र०***— इन्द्रियसंयमस्य स्थितप्रज्ञत्वे साधनत्वं लक्षणं चोक्तं उपसंहरति **तस्मादिति**।

यस्मात् इन्द्रियाणि प्रज्ञां हरन्ति तस्मात्[१], हे महाबाहो[२], यस्य[३], सर्वशः[४], इन्द्रियाणि[५], इन्द्रियार्थेभ्यः[६], निगृहीतानि[७], तस्य[८], प्रज्ञा[९], प्रतिष्ठिता भवति[१०] इत्यन्वयः।

तस्मात् = यत एवं निगृहीतेन्द्रियस्यैव प्रसादः प्रसादवत एव युक्तिः युक्तिमत एव श्रवणमननाभ्यां तत्त्वज्ञानं तत्त्वज्ञानवत एव अपरोक्षज्ञान-साधनम्। नान्यथा तस्मात् कारणात् हे महाबाहो ! = वैरिनिग्रहसमर्थस्य तवात्रापि सामर्थ्यं भवेदिति सूचयितुं हे महाबाहो इति सम्बोधनं[२], यस्य = पुरुषस्य[३], सर्वशः = सर्वाणि[४], इन्द्रियाणि = चक्षुरादीनि[५], इन्द्रियार्थेभ्यः = रूपादिभ्यः[६], निगृहीतानि नितरां गृहीतानि वशीकृतानीत्यर्थः[७], तस्य = पुरुषस्य[८], प्रज्ञा = मोक्षसाधनीभूता बुद्धिः, प्रतिष्ठिता = स्थिरा भवतीत्यर्थः ॥ ६८ ॥

**भाष्यम्**

**तस्मात् सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानीति निगमयति तस्मादिति। ॥ ६८ ॥**

***प०टी०***— उत्तरश्लोकमवान्तरोपसंहारतयाऽवतारयति **तस्मादिति** ॥ ६८ ॥

***न०टी०***— **सर्वात्मनेति**। निराहारत्वविषयध्यानाभावादिनेत्यर्थः ॥ ६८ ॥

***प्र०दी०***— अत्र परमं प्रमेयं ज्ञानिलक्षणं प्रकृतम्। तस्यासम्भवपरिहाराय ज्ञानस्य महाप्रयत्न-साध्येन्द्रियनिग्रहसाध्यत्वं च। तत्र कस्यायमुपसंहार इति न ज्ञायते। अत आह— **तस्मादिति**। ज्ञानी जायत इति शेषः। यत एवं निगृहीतेन्द्रियस्यैव प्रसादः, प्रसादवत एव युक्तिर्युक्तिमत एव श्रवणमननाभ्यां तत्त्वज्ञानं, तत्त्वज्ञानवत एवापरोक्षज्ञानसाधनं ध्यानं नान्यथा तस्मादित्यर्थः ॥ ६८ ॥

***भा०दी०***— **अत्रेति**। स्थितप्रज्ञस्येत्यारभ्य प्रजहातीत्यारभ्य वा या निशेत्यन्तप्रकरण इत्यर्थः। परमप्रमेयं ज्ञानम्। **तस्येति**। सर्वकामप्रहरणादिरूपलक्षणस्येत्यर्थः। **साध्यत्वं चेत्यत्र** प्रकृतमित्यनुषज्जते। विषया विनिवर्तन्ते इत्यादिनेति भावः। **प्रसादो** मनःप्रसादः। **युक्तिः** चित्तनिरोधः। **तत्त्वज्ञानम्** अयमेवास्यार्थ इति तत्त्वनिश्चयः ॥ ६८ ॥

*भा०र०*— **अत्र** "प्रजहाति" इत्यारभ्य "तदस्य हरति प्रज्ञाम्" इति ज्ञानिलक्षणकथन-प्रकरणे । **असम्भवेति** । यदि ज्ञानं सर्वकामप्रहाणजनकं तर्हि सर्वोऽपि जनः कस्मान्न तत् साधयतीत्युक्तासम्भवेत्यर्थः । "निगृहीतेन्द्रिय एव ज्ञानी" इति भाष्ये व्याप्तिरेव प्रतीयते । शङ्खः पाण्डुर एवेति यथा । न त्विन्द्रियनिग्रहज्ञानयोर्जन्यजनकभाव इत्यत आह **ज्ञानी जायत इति शेष इति** । **प्रसादः** मनःप्रसादः । **युक्तिः** चित्तनिरोधः । **तत्त्वज्ञानं** परोक्षनिश्चयरूपम् ॥ ६८ ॥

*गीताक्षरार्थस्तु*— एवं 'प्रजहाति' इत्यादिनोक्तज्ञानिलक्षणस्यासम्भवपरिहाराय ज्ञानस्य महा-प्रयत्नसाध्येन्द्रियनिग्रहसाध्यत्वं "विषया विनिवर्तन्ते" इत्यादिना यदुक्तं तदुपसंह्रियते **तस्मादिति** । यत एवं निगृहीतेन्द्रियस्यैव प्रसादः, प्रसादवत एव चित्तनिरोधशब्दितयुक्तिः, युक्तिमत एव श्रवण-मनने, ताभ्यां तत्त्वज्ञानम्, तत्त्वज्ञानवत एवापरोक्षज्ञानसाधनं ध्यानं नान्यथा, तस्माद् यस्य सर्वशः सर्वाणि इन्द्रियाणि इन्द्रियार्थेभ्यः रूपादिविषयेभ्यः निगृहीतानि तस्य प्रज्ञा ब्रह्मापरोक्षधीः प्रतिष्ठिता सुस्थिरा जायत इति ॥ ६८ ॥

**गीता**

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

*वि०वि०*— चतुःश्लोक्या विक्षिप्योक्तं लक्षणं पिण्डीकृत्याह **या निशेति** । या सर्वभूतानां निशा परमेश्वरस्वरूपज्ञानलक्षणा यस्यां सुप्ता जीवा न किञ्चिज्जानन्ति । तस्यामिन्द्रियसंयमयुक्तो ज्ञानी जागर्ति, सम्यगापरोक्ष्येण परमात्मानं पश्यतीत्यर्थः । यस्यां विषयलक्षणायां भूतानि जाग्रति, सा मुनेः मननशीलस्य पश्यतो मननजन्यज्ञानवतो निशा । निशायामिव सुप्तो मुनिः विषयान् न जानातीत्यर्थः । अनेन 'किं प्रभाषेत' इत्यादेरपि परिहार उक्तो भवति । एतच्च प्रायः परमात्मेतर-दर्शनं देवताव्यतिरिक्तज्ञानिविषयम् । तदुक्तम्—

'देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यन्न दृश्यते ।
निशायामिव सुव्यक्तं यथाऽन्यैर्ब्रह्म नेयते ॥

आश्चर्यवस्तुदृग्यद्वद्व्यक्तमन्यन्न पश्यति ।
एकाग्र्याद्वा सुखोद्रेकाद्देवाः सूर्यवदेव च ॥

प्रायशः सर्ववेत्तारः तत्रापि ह्युत्तरोत्तरम् ॥' इति ॥ ६९ ॥

***वा०ल०***— 'या निशा सर्वभूतानाम्' इत्यत्र सर्वभूतानां परलोकविचारणं निशा, रात्राविवान्धकारसदृशी । तस्यां रात्रौ संयमी जागर्ति । तस्य तत्रान्धकारो नास्तीत्यर्थः । सदा परलोकविचारमेव करोतीति भावः । यस्यां स्वकुटुम्बभरणादिक्रियायां भूतानि जाग्रति जागरणं प्राप्तास्तिष्ठन्ति, सा कुटुम्बभरणादिक्रिया निशा निशाप्राया मुनेः । तत्र दृष्टिर्न पततीति भावः ॥ ६९ ॥

***सा०सं०***— 'स्थितप्रज्ञस्य का भाषा' इति पृष्ठं ज्ञानिलक्षणं 'प्रजहाति' इत्यादिश्लोकचतुष्टयेनोक्त्वा, तस्यासम्भवं च 'विषया' इत्यादिश्लोकनवकेनोक्त्वा 'तस्मादित्यनेन' तदुपसंहृत्य, इदानीं 'स्थितधीः किं प्रभाषेत' इत्युत्तरार्धे भाषणादिप्रवृत्तिं परमानन्दतृप्तः किमर्थं करोतीति कृतज्ञानिप्रवृत्त्याद्याक्षेपस्योत्तरमाह **या निशेति** ।

यद्वा, 'प्रजहाति' इत्यादिश्लोकचतुष्टये विक्षिप्तोक्तं ज्ञानिलक्षणं पिण्डीकृत्याऽऽह **या निशेति । या भूतानां** प्राणिनां निशेव **निशा** परमेश्वरस्वरूपलक्षणा, यत् परमेश्वरस्वरूपं प्राणिनां निशास्थानीयमिति यावत् । निशायां सुप्तानीव न किञ्चिद्भगवत्स्वरूपं जानन्तीति भावः । **तस्यां** भगवत्स्वरूपलक्षणायां प्राणिनिशायां **संयमी** इन्द्रियसंयमयुक्तो ज्ञानी **जागर्ति** । भगवत्स्वरूपं सम्यगापरोक्ष्येण पश्यति । **यस्यां** विषयलक्षणायां **भूतानि जाग्रति** रूपादिविषयेष्वासक्त्याऽनुभववन्तो वर्तन्ते प्राणिनः **सा निशा मुनेः** मननवतः । अत एव पश्यतोऽपरोक्षिणः सा निशेव निशा । न किञ्चिज्जानातीत्यर्थः । तथात्वे भाषणभिक्षाटनादिप्रवृत्त्यनुपपत्तिरिति चेत् । प्रारब्धकर्मणा ईषत्तिरोहितब्रह्मस्वरूपस्य वासनया प्रायोऽल्पाभिसन्धिपूर्वकं प्रवृत्तीनां मत्तस्येवोपपत्तेरिति भावः ।

एतेन नित्यं भगवदेकचित्ततया तदितरत्राभिसन्धिहीनत्वं ज्ञानिलक्षणमित्युक्तं भवति । एतच्च देवेतरज्ञानिलक्षणं बोध्यम् । अन्यथा सर्वप्रकाराणां देवानामपि ज्ञानित्वात्, तेषां भगवदितरत्राभिसन्ध्यभावे लोकयात्रोच्छेदापत्तेः । 'शब्दक्रमादर्थक्रमस्य बलवत्त्वात्' । **मुनेः पश्यत** इति व्यत्यासेन मुनेर्मननवतः पश्यत इति पौर्वापर्येण योजना । ततश्च तयोर्हेतुहेतुमद्भावलाभः । स च मननादेः प्राक् दर्शनसाधनत्वस्य स्पष्टमनुक्तेरिह प्रसङ्गादुक्त इति ॥ ६९ ॥

***अ०प्र०***— ननु च न कश्चिदपि प्रसुप्त इव दर्शनादिव्यापारशून्यः सर्वात्मना निगृहीतेन्द्रियो लोके दृश्यते, अतो असम्भावितमिदं लक्षणमित्याशयेनाह **या निशेति** ।

सर्वभूतानां[१], या निशा[२], तस्यां[३], संयमी[४], जागर्ति[५], यस्यां[६], भूतानि जाग्रति[८], पश्यतः सन्[९], मुनेः[१०], सा[११] निशेत्यन्वयः ।

सर्वभूतानां = अज्ञानध्वान्तवृत्तमतीनां[१], या निशा = निशेव निशा अज्ञानकारणत्वसाम्यात्परमेश्वरलक्षणा, परमात्मनिष्ठा वा यद्विषये भूतानि सुप्तानीव न किञ्चिज्जानन्तीत्यर्थः[२],

तस्यां = व्यवहाराभावात् तस्यात्म-निष्ठायां[३], संयमी = संयमयुक्तो निगृहीतेन्द्रियो ज्ञानी[४], जागर्ति = प्रतिबुध्यते सम्यगपरोक्ष्ये परमात्मानं पश्यतीत्यर्थः[५], यस्यां तु विषयनिष्ठायां विषयभोग-लक्षणायां निशायां[६], भूतानि[७], जागर्ति = प्रतिबुध्यते[८], पश्यतः = आत्मतत्त्वं पश्यतः सन् सम्यगपरोक्ष्येण परमात्मानं पश्यन् सन्[९], मुनेः = मनन-शीलस्य[१०], सा निशा = सा तु ज्ञानिनो निशा तस्यां दर्शनादिव्यापारमस्य नास्तीत्यर्थः । सुप्तासुप्तयोः न जानाति ज्ञानीत्यर्थः । एतदेवमुक्तं भवति दिवा धानामुलूकादीनां रात्रावेव दर्शनं न तु दिवसे एवं ब्रह्मज्ञस्य उन्मीलिताक्षस्यापि ब्रह्मण्येव दृष्टिः न तु विषयेषु, अतो नासम्भावितलक्षणमिति । यद्वा, इदानीं तु पश्यतेति दर्शनसाधनत्वेन मननमिहोक्तम्, ज्ञानिनोऽज्ञवत् विषयदर्शनाभावेऽपि मत्तादिवद्गमनादिप्रवृत्तिरिति द्वितीयप्रश्नोत्तर-मर्थाल्लभ्यते ॥ ६९ ॥

**भाष्यम्**

**उक्तलक्षणं पिण्डीकृत्याह या निशेति । या सर्वभूतानां निशा परमेश्वर-स्वरूपलक्षणा, यस्यां सुप्तानीव न किञ्चिज्जानन्ति, तस्यामिन्द्रियसंयमयुक्तो ज्ञानी जागर्ति । सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः । यस्यां विषय-लक्षणायां भूतानि जाग्रति तस्यां निशायामिव सुप्तः प्रायो न जानाति । मत्तादिवद् गमनादिप्रवृत्तिः । तदुक्तं 'देहं तु तं न चरमं', 'देहोऽपि दैववशगः' इति श्लोकाभ्याम् । मननयुक्तो मुनिः 'पश्यतः' इत्यस्य साधनमाह ॥ ६९ ॥**

*प०टी०*— निगृहीतेन्द्रियतामात्रस्य सुषुप्तावतिव्याप्तिरित्याशङ्कां परिहर्तुमुत्तरश्लोकमवतार्य व्याचष्टे **उक्तमिति** । नन्वेवं ज्ञानिनो बाह्याद्यननुसन्धाने कथं गमनादि ? इत्यत आह **मत्तादि-वदिति** । न तु 'मुनि'शब्दादृषिरित्याह **मननेति** । कथं मननयुक्तपरोक्षज्ञानिन्येतल्लक्षणम् ? इत्यत आह **पश्यत इति** ॥ ६९ ॥

*न०टी०*—प्रकीर्णत्वेनोक्तं स्थितप्रज्ञलक्षणं झटिति बुद्ध्यारोहाय सङ्क्षिप्याहेत्यर्थः । मनन-युक्तत्वं भगवद्दर्शनसाधनमाहेत्यर्थः ॥ ६९ ॥

*प्र०दी०*— ज्ञानिनः सर्वकर्मपरित्यागप्रतिपादनार्थो 'या निशा' इत्ययं श्लोक इति कश्चित् । तन्न । तत्प्रतिपादकाक्षराश्रवणात् । प्रमाणविरोधाच्चेत्याशयेन तत्प्रतिपाद्यमाह— **उक्तमिति** । चतुःश्लोक्या विक्षिप्योक्तम् । नन्वत्रोक्तं किमपि न प्रतीयत इत्यत आह— **येति** । परमेश्वरस्वरूपस्य

निशासाम्यमुपपादयति **यस्यामिति** । विषयत्वमधिकरणत्वं चाविवक्षित्वा कारकत्वमात्रविवक्षया साम्यमिदमुक्तम् । संयमी त्यस्याक्षरार्थः— **इन्द्रियेति** । प्रकरणलभ्योऽर्थः— **ज्ञानीति** । उत्तरार्धार्थमाह— **यस्यामिति** । अत्रापि पूर्ववत्साम्यम् । यदि न किञ्चित्पश्यति कथं तर्हि तस्य गमनादिप्रवृत्तिरित्यत आह— **मत्तादिवदिति** । कुत एतदित्यत आह— **तदुक्तमिति** । मुनेरित्युक्तत्वाच्चतुर्थाश्रमिण एव ज्ञानमिति व्याख्यानमसदिति भावेनाह— **मननेति** । याज्ञवल्क्यादीनामयतीनामपि ज्ञानश्रवणादिति भावः । मननस्य प्राङ्निवृत्तत्वात् 'पश्यतो मुनेः' इति कथमित्यत आह— **पश्यत इति** । दर्शनसाधनत्वेन मननमिहोक्तम् । न तु तत्समकालीनतयेत्यर्थः । एतच्च प्राङ्मननादेः स्पष्टं दर्शनसाधनत्वानुक्तेः प्रसङ्गादिहोक्तम् ।

ननु "स्थितधीः किं प्रभाषेत" इत्यादेरुत्तरमयं श्लोक इति प्रागुक्तम् । तत्कथमिदानीं लक्षणपरतया व्याख्यातः । अन्यपरादपि तल्लाभ इत्याशयेनेति ब्रूमः । अन्यथा 'किं प्रभाषेत' इत्यादेरुत्तरमाहेत्यत्रैवावक्ष्यत् । किं तत्र स्थानप्रदर्शनादिनेति ॥ ६९ ॥

*भा०दी०*— **प्रमाणविरोधाच्चेति** । कुर्वन्नेवेह कर्माणीत्यादि प्रमाणेनेत्यर्थः । **चतुःश्लोक्येति** । प्रजहातीत्यादि विषया इत्यन्त चतुश्लोक्येत्यर्थः । द्विगोरिति णीप् । **पूर्ववत्साम्यमिति** । कारकत्वमात्रेण न त्वधिकरणकारकत्वेनेत्यर्थः । **तदुक्तमितीति** । इदं तृतीयस्कन्धे एकोनत्रिंशेऽध्याये 'देहं तु तन्न चरमं स्थितमुत्थितं वा सिद्धोऽपि पश्यति यतोऽध्यगमत्स्वरूपम् । देवादुपेतमथ दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्ध' इति, 'देहोऽपि दैववशगः खलु कर्म यावत्सारम्भकं प्रति समीक्ष्यत एव साधुः । तं च प्रपञ्चमधिरूढसमाधियोगः स्थानं पुनर्न लभते प्रतिबुद्धवत्स' इति श्लोकाभ्यामित्यर्थः । **याज्ञवल्क्येति** । प्रसिद्धमेतद्वाजसनेये । **इति प्रागुक्तमिति** । गमनाभिप्रवृत्तिर्नात्यभिसन्धिपूर्विकेति भाष्ये प्राधान्येन व्रजेत किमित्यस्य मुखतः कीर्तनेऽप्यादिपदेनोत्तरार्धोक्तभाषणादेरपि ग्रहणादेवमुक्तं लक्षणेति का भाषेति । भाषापदोक्तलक्षणेत्यर्थः । **अन्यपरादपीति** । लक्षणोक्तिपरादपि किं प्रभाषेतेत्यादेरुत्तरलाभ इत्यर्थः । **अन्यथेति** । उत्तरार्धप्रश्नोत्तरमात्रपरत्व इत्यर्थः । **किं तत्रेति** । प्रजहातीति श्लोकावतारिकायामित्यर्थः । आदिनेत्यादिपदेन प्रारब्धाकर्मणेत्यादिश्लोकतात्पर्योक्तग्रहः ॥ ६९ ॥

*भा०र०*— **कश्चिदिति** । तथा च आह शङ्करः "यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रतीत्युच्यन्ते सा निशा । अविद्यारूपत्वात् । परमार्थतत्त्वं पश्यतो मुनेरतः कर्माण्यविद्यावस्थायामेव चोद्यन्ते न विद्यावस्थायाम्" इति, "यस्य पुनर्निशेवाऽविद्यामात्रमिदं सर्वं भेदजातमिति बुद्धिः तस्याऽऽत्मज्ञस्य सर्वकर्मसंन्यास एवात्रोच्यते" इति, "तस्मान्नाऽऽत्मविदः कर्म-

ण्यधिकार इति स्थितम्'' इति च । **अक्षरेति** । भूतानि विषयलम्पटानि, ज्ञानी तु परमात्मानमापरोक्ष्येण पश्यन्न तथाविध इति श्रवणेन ज्ञानिनः कर्माभावाश्रवणादित्यर्थः । **प्रमाणेति** । ''पश्यन्नपीममात्मानं कुर्यात् कर्मविचारयन्'' इत्यादिश्रुतिस्मृतिविरोधाच्चेत्यर्थः । 'प्रजहाति' इत्याद्यया 'विनिवर्तन्ते' इत्यतः प्राक्तन्या **चतुःश्लोक्या** । 'द्विगोः' इति ङीप् ।

ननु परमेश्वरस्वरूपस्याज्ञानविषयत्वेऽपि न तदधिकरणत्वम् । निशायास्त्वज्ञानाधिकरणत्वेऽपि न तद्विषयत्वम् । अतः कथं तयोः साम्यमुच्यत इत्यत आह **विषयत्वमधिकरणत्वं चेति** । **कारकत्वमात्रेति** । विषयरूपकर्मकारके अधिकरणे चानुस्यूतं यत् कारकत्वं तन्मात्रेत्यर्थः । **अक्षरार्थ इति** । रूढ्या संन्यासिवाचित्वस्य प्रसिद्धत्वेऽपि नासावत्र ग्राह्य इति भावः । जागर्तीति जागरणमात्रं प्रतीयत इत्यतस्तत्तात्पर्यमभाषत आचार्यः सम्यगित्यादीति स्फुटत्वादव्याख्याय 'यस्याम्' इति भाष्यमवतारयति **उत्तरेति** । **अत्रापि** उत्तरार्धेऽपि । विषयेषु ज्ञानाभावरूपज्ञानिनिष्ठाज्ञानविषयत्वं निशायां तदधिकरणत्वं चाविवक्षित्वा कारकत्वमात्रविवक्षया विषयाणां निशायाश्च साम्यमुक्तं वेदितव्यमित्यर्थः । **पश्यतीति** । 'पश्यतः' इति गीतानुसाराद् भाष्ये जानातीत्येतत् पश्यतीति व्याख्येयमिति भावेनैवमुक्तम् । **एतत्** ज्ञानिनो मत्तादिवदेव प्रवृत्तिः न तु रागादिनेत्येतत् कस्मात् प्रमाणादवगन्तव्यमित्यर्थः ।

भाष्ये **श्लोकाभ्याम्** ''देहं तु तं न चरमं स्थितमुज्झितं वा सिद्धोऽभिपश्यति यतोऽध्यगमत् स्वरूपम् । दैवादुपेतमुत दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ देहोऽपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रतिसमीक्षत एव सासुः । तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः'' इति तृतीयस्कन्धैकोनविंशाध्यायगतश्लोकाभ्याम् । यतो येन देहेन ज्ञानी सिद्धोऽभूत् प्राप्तसमाधिफलोऽभूत् । येन च स्वरूपं ''परः स्वो हरिरुद्दाम'' इति वचनात् स्वः परमात्मा तस्य रूपम् । स्वं जीवं रूपयतीति स्वरूपशब्देन जीवबिम्बरूपं वा ग्राह्यम् । अध्यगमत् आपरोक्ष्येण ज्ञातवान् । तं चरमं देहं नाभिपश्यति मदीयोऽयमिति नाभिमन्यते । किन्तु भगवदीयोऽयमिति पश्यतीति तुशब्दः । अनभिमानसमर्थनायोक्तं यावत् प्रारब्धमवस्थितं तदभावे पतितमिति । यदि नाभिमन्यते कथं तर्हि गमनादिप्रवृत्तिरित्यतस्तत्रोदाहरणं 'दैवादुपेतम्' इत्यादि । मदिरापानोत्पन्नमदान्धः पुमान् उपेतम् अन्वितम् अपेतम् उत्सृष्टं परिकृतं परिष्कृतं कटितटे वेष्टितं वासो यथा न जानातीत्यनेन वाससः कटौ संवेष्टनादिप्रवृत्तिः पारवश्यादेवेति विभावितं भवति । अभिमन्यमान इवानभिमन्यमानेऽपि देहे सति कथं मुक्तिरित्यत उक्तं **देहोऽपीति** । यावत् स्वारम्भकं कर्म तावदेव

देहोऽपि प्रतिसमीक्षते तिष्ठति । सासुः सेन्द्रियश्च भवति । अचेतनस्य कर्मणो देहस्थापन इन्द्रियवत्तापादने च कथं हेतुत्वमित्यत उक्तं **दैववशग इति** । कर्मोपधानीकृत्य दैवमेव सर्वं करोतीत्यर्थः । अधिरूढसमाधियोगः प्राप्तसमाधिफलः सप्रपञ्चं इन्द्रियादिप्रपञ्चसहितं तं देहं पुनर्न भजते पूर्वं यथा तथा तद्रक्षणादौ न प्रयतते । तर्हि कथं गमनादिप्रवृत्तिः ? दैववशगो देहः समीहतेऽपि पारवश्यादेव मत्तस्येव समीक्षणाभ्यवहारादिप्रवृत्तिमांश्च भवतीति श्लोकद्वयार्थः । अत्र च पूर्वश्लोकोत्तरार्धे मत्तादिवद् गमनादिप्रवृत्तिः पारवश्यादेवेति स्फुटं प्रतीयते । द्वितीयेऽपि दैववशग एव देहस्सासुः प्राणादिप्रवृत्तिमान् समीक्षतेऽपीतिक्षणाभ्यवहारादिप्रवृत्तिमानिति चोच्यत इति प्रकृतार्थसिद्धिः ।

**चतुर्थाश्रमिण एवेति** । तथा च शङ्करः "स्थितप्रज्ञस्य यतेरेव । न त्वसंन्यासिनो ज्ञानमोक्षप्राप्तिः" इति । कुतोऽसत् परव्याख्यानमित्यतः रूढमपि शब्दं योगेन व्याकुर्वतो भाष्यकारस्य भावं वर्णयन् हेतुमाह **याज्ञवल्क्यादीनामिति** । एतच्च वाजसनेये प्रसिद्धम् । **प्राक्** अपरोक्षज्ञानोत्पत्तेः । **इति कथमिति** । सामानाधिकरण्येन प्रतीयमानं दर्शनमननयोः पौर्वापर्यं समानकालीनत्वं वा न युक्तमित्यर्थः । दर्शनसाधनत्वेनेति वदन् 'पश्यतः' इत्यस्य पश्यत इति पदोक्तदर्शनस्य मननयुक्तार्थकमुनिपदेनोक्तं मननं साधनत्वेन गीतायामाहेति भाष्ययोजनामभिप्रैति ।

निष्कृष्य ज्ञानिलक्षणोक्तिप्रस्तावे मननस्य दर्शनसाधनत्वोक्तिरसङ्गतेत्यत आह **एतच्चेति** । **मननादेरिति** । अनेन गीतायां 'मुनेः' इत्यत्र 'ध्यायतः' इत्यपि संयोज्यम् । यद्वा, "मौनं तूपासनासिद्धिः" इति बृहदारण्यकभाष्योक्तेर्मुनिशब्देन ध्यानवानुच्यते । मुनेः ध्यायत इत्यर्थः । एवं च मुनिपदेनैव मननध्याने ग्राह्ये इति सूचितं भवति । "नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना । न चाभावयतः" इति पूर्वश्लोक एव ध्यानस्य ज्ञानसाधनत्वमुक्तमिति नात्र तद् वक्तव्यमित्यत उक्तं **स्पष्टमिति** । "न चाभावयतो ज्ञानं न चाज्ञानिनः शान्तिः" इति संयोज्य व्याख्यानेन ज्ञानध्यानयोः साध्यसाधनभावप्रतीतावपि गीतायां शान्ताविव ज्ञानेऽपि भावनाशब्दितध्यानस्य न स्फुटं साधनत्वमुक्तम् अत्रोच्यत इत्यर्थः । **प्रागुक्तं** "गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यन्" इति भाष्ये । कथं व्याख्यात इत्यस्योत्तरमाह **अन्यपरादपीति** । लक्षणतात्पर्यकादपीत्यर्थः । **तल्लाभः** "किं प्रभाषेत" इत्यादिप्रश्नोत्तरलाभः । **अन्यथा** उक्ताशयाभावे । **अत्रैव** एतच्छ्लोकव्याख्यानप्रस्ताव एव । **तत्र** "प्रजहाति यदा" इति श्लोकव्याख्यानावसरे । आदिपदेन "प्रारब्धकर्मणेषत्तिरोहित" इत्यादिनोक्ततात्पर्योक्तिग्रहः ॥ ६९ ॥

***गीताक्षरार्थस्तु***— "प्रजहाति यदा कामान्" इत्यादिचतुःश्लोक्या विक्षिप्योक्तं ज्ञानिलक्षणं बुद्ध्यारोहाय पिण्डीकृत्योच्यते **या निशेति** । या सर्वभूतानां निशेव निशा परमेश्वरस्वरूपलक्षणा, यस्यां सुप्तानीव न किञ्चिज्जानन्ति, विषयत्वमधिकरणत्वं चाविवक्षित्वा कारकत्वमात्रेण निशा-भगवत्स्वरूपयोः साम्यमात्रमभिसंहितम्, तस्यां संयमी इन्द्रियसंयुक्तो ज्ञानी जागर्ति सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः । यस्यां विषयलक्षणायां भूतानि जाग्रति सा मुनेः मननवतः अत एव पश्यतः सम्यगापरोक्ष्येण जानतः निशेव निशा । भगवत्स्वरूपातिरिक्तं न किञ्चिज्जानातीति यावत् । अत्रापि पूर्ववत् साम्यम् । दर्शनसाधनत्वेन मननमिहोक्तम् । न तु तत्समकालीनतया । एतच्च प्राङ्मननादेर्दर्शनसाधनत्वानुक्तेः प्रसङ्गादिहोक्तम् ।

ननु "स्थितधीः किं प्रभाषेत" इत्यादेरुत्तरमयं श्लोक इति "गमनादिप्रवृत्तिर्नात्यभिसन्धि-पूर्विका । मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यँल्लक्षणं प्रथमत आह प्रजहातीति" इत्युक्तं भाष्ये । तत् कथमिदानीं लक्षणपरतया व्याख्यायत इति शङ्का "अन्यपरादपि तल्लाभा-शयेनेति ब्रूमः" इति टीकायां परिहृता । तव नित्यं भगवदेकचित्ततया तदितरत्र प्रायः कामप्रहाणि-र्ज्ञानिलक्षणमित्युक्तं भवति । यद्येवं भगवदितरन्न किञ्चित् पश्यति कथं तर्हि तस्य गमनभाषणादि-प्रवृत्तिरिति चेन्न । प्रारब्धकर्मणेषत्तिरोहितब्रह्मस्वरूपस्य वासनया प्रायोऽल्पाभिसन्धिपूर्विकायाः प्रवृत्तेर्ज्ञानिनोऽपि मत्तस्येवोपपत्तेरिति ज्ञानिप्रवृत्त्याक्षेपस्य "किं प्रभाषेत" इत्यादिना कृतस्यार्थात् परिहार उक्तो भवतीति भावो बोद्धव्यः । अयं च श्लोकः सर्वप्रकाणां देवानामपि ज्ञानित्वाज्ज्ञानिनां परमात्मेतरादर्शने लोकयात्रोच्छेदः स्यादित्याशङ्क्य देवेतरज्ञानिविषयतयोत्तरप्रस्थाने व्याख्यातः । यदाहुः "देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यन्न दृश्यते । निशायामिव सुव्यक्तं यथाऽन्यैर्ब्रह्म नेयते" इत्यादि ॥ ६९ ॥

**गीतातात्पर्यनिर्णयः**

**"देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यन्न दृश्यते ।**
**निशायामिव सुव्यक्तं यथाऽन्यैर्ब्रह्म नेयते ।**
**आश्चर्यवस्तुदृग् यद्वद् व्यक्तमन्यन्न पश्यति ।**
**ऐकाग्र्याद्वा सुखोद्रेकाद् देवाः सूर्यवदेव च ।**
**प्रायशः सर्ववेत्तारस्तत्रापि ह्युत्तरोत्तरम् ॥"**

**—इति ब्रह्मतर्के ॥ ६९ ॥**

*प्रका०*— प्रजहातीत्यादि व्याचष्टे **देवेभ्य इति** । **यथाऽन्यैरिति** । अज्ञानिभिरित्यर्थः ॥

*न्या०दी०*— पिण्डीकृत्योक्तलक्षणमुच्यते **या निशेति** । तत्र सर्वप्रेरकाणां देवानामपि ज्ञानित्वात् ज्ञानिनां परमात्मेतरादर्शने लोकयात्रोच्छेदः स्यादित्यतः तद्वाक्यं देवेतरज्ञानिविषयतया स्मृत्यैव व्याचष्टे **देवेभ्य इति** ॥ 'यथाऽन्यैः' इत्यनेन पूर्वार्धतात्पर्यमुक्तं भवति । यथाज्ञैर्ब्रह्म न ज्ञायत इत्यर्थः । **सूर्यवदिति** ॥ सूर्यो यथा स्वतेजसा सर्वं प्रकाशयति एवं स्वज्ञानेन सर्वं विषयीकुर्वन्तीत्यर्थः ॥

*भा०दी०*— **उक्तलक्षणमिति** । प्रजहातीति श्लोकचतुष्टये विक्षिप्योक्तं लक्षणं पिण्डीकृत्योच्यत इत्यर्थः ॥

**गीता**

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ॥ ७० ॥**

*वि०वि०*— बाह्यानुसन्धानरहितस्य युज्येतापि कथञ्चित् मत्तादिवत् गमनादिकम्, विषयानुभवस्तु दृश्यमानः कथं स्यात्, तस्य नियतसाधनसाध्यस्यानुसन्धानेन विना अनुदयात्, इत्याशङ्क्य विषयानुभवप्रकारमाह **आपूर्यमाणमिति** । यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति नोत्सेकं प्राप्नोति, न च प्रयत्नं करोति न चाभावे शुष्यति । न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्त-वृद्धिशोषौ बहुतरौ प्राप्नोति प्रयत्नं वा करोति । स मुक्तिं प्राप्नोतीत्यर्थः । उक्तं च—

'भुञ्जानोऽपि हि यः कामान् मर्यादां न तरेत्क्वचित् ।
समुद्रवद्धर्ममयीं नासौ कामी स उच्यते ॥

केति कुत्सितवाची स्यात् कुत्सितं मानमेव च ।
कामो मोक्षविरोधी स्यान्न सर्वेच्छाविरोधिनी ॥' इति ॥ ७० ॥

*बा०ल०*— 'तद्वत् कामा यं प्रविशन्ति' इत्यत्र तद्वत् समुद्रं प्रविश्य तत्रैव निलीननद्युदकवत्, कामाः यं पुरुषं प्रविशन्ति बहिर्विषयेष्वचरन्तः सन्तः मनस्येव निलीना भवन्तीत्यर्थः ॥७०-७१॥

***सा०सं०***— ननु ज्ञानिनो बाह्यानुसन्धानहीनस्य मत्तस्येव युज्येतापि कथञ्चिद्गमनादिकम् । विषयानुभवस्तु दृश्यमानः कथं स्यात् । तस्य नियतसाधनसाध्यस्यानुसन्धानेन विनाऽनुदयादित्यतो ज्ञानिना क्रियमाणविषयानुभवप्रकारमाह **आपूर्यमाणमिति** । नानानदीजलैरापूर्यमाणमपि, **अचलप्रतिष्ठं** सरित्प्रवेशाद्वृद्धिविशेषहीनतया स्वभावत एव स्थितम् । सरितामप्रवेशनिमित्तशोषहीनं च, सरित्प्रवेशार्थं यत्नहीनं चेत्यपि ध्येयम् । **समुद्रमापो यद्वद्यथा प्रविशन्ति तद्वत्** तथा **यं** ज्ञानिनं विषयैरापूर्यमाणत्वे वा, अनापूर्यमाणत्वे वा उत्सेकानुत्सेकहीनं **कामाः** विषयाः **प्रविशन्ति** स ज्ञानी **शान्तिं** मोक्षम् **आप्नोति** । **न** तु **कामकामी** कुत्सितविषयेच्छावान् शान्तिमाप्नोतीत्यर्थः । यद्वा, विषयभोक्ताऽकामी कथमुच्यत इत्यत उक्तं **न त्विति** । एवं विषयाननुभवन् स ज्ञानी न कामकामी ॥ ७० ॥

***अ०प्र०***— ननु विषयेषु दृष्ट्यभावे कथमसौ तान् भुंक्त इत्यपेक्षायामाह **आपूर्यमाणमिति**।

आपः[१], आपूर्यमाणं[२], अचलप्रतिष्ठम्[३], समुद्रम्[४], यद्वत्प्रविशन्ति[५], तद्वत्[६], सर्वे[७], कामाः[८], यं[९], प्रविशन्ति[१०], सः[११], शान्तिं[१२], आप्नोति[१३], न कामकामीत्यन्वयः ।

आपः = अन्यदापः[१], आपूर्यमाणमपि = नानानदीभिः आसमन्तात्पूर्यमाणोऽपि[२], अचलप्रतिष्ठं = अनतिक्रान्तमर्यादम्[३], नोत्सेकं प्राप्नोति, न च प्रयत्नं वा करोति, न चाभावे शुष्यति, एतादृशं[३], समुद्रं = प्रति[४], यद्वत् = यथा प्रविशन्ति[५], तद्वत् = तथा[६], सर्वे कामाः = सर्वे विषयाः[८], यं = मुनिं अन्तर्दृष्टिं भोगैरविक्रियमाणमेव प्रारब्धकर्मभिः आक्षिप्ताः सन्तः[९], प्रविशन्ति[१०], सः = एव प्रारब्धवशात् भोगं कुर्वाणोऽपि ज्ञानी[११], शान्तिं = कैवल्यं मुक्तिम्[१२], प्राप्नोति[१३], न कामकामी = भोगकामनाशीलः न प्राप्नोतीत्यर्थः ॥ ७० ॥

**भाष्यम्**

**तेन विषयानुभवप्रकारमाह आपूर्यमाणमिति । यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति, नोत्सेकं प्राप्नोति, न च प्रयत्नं करोति न चाभावे शुष्यति, न हि समुद्रः सरित् प्रवेशाप्रवेशनिमित्तवृद्धिशोषौ बहुतरौ प्राप्नोति प्रयत्नं वा करोति, स मुक्तिं प्राप्नोतीत्यर्थः ॥ ७० ॥**

***प०टी०***— ननु मत्तादिसदृशस्य 'भूयात्, मा भूत्' इत्यपेक्षाभावात् कथं विषयानुभवः ? इत्याशङ्क्य परिहर्तुमुत्तरश्लोकद्वयमवतार्य व्याचष्टे **तेनेति** । 'अचलप्रतिष्ठः' इत्यनूद्य **नोत्सेकम्** इत्यादि व्याख्यानम् ॥ ७० ॥

*न०टी०*—सुप्तवच्चेत्, कथं तेन विषया अनुभूयन्ते ? इत्यत्राह **तेनेति** ॥ ७० ॥

*प्र०दी०*— पृष्टस्य समस्तस्योत्तरमुक्तम् । तत्किमापूर्यमाणमित्यनेनेत्यत आह— **तेनेति** । क्रियमाणेत्युपस्कर्तव्यम् । नित्यसापेक्षत्वादसामर्थ्याभावः । बाह्यानुसन्धानरहितस्य युज्येतापि कथञ्चिद्गमनादिकम् । विषयानुभवस्तु दृश्यमानः कथं स्यात् । तस्य नियतसाधनसाध्यस्यानुसन्धानेन विनाऽनुदयादित्याशङ्कापरिहारार्थमिति शेषः । "तद्वत्कामा यं प्रविशन्ति" इति सङ्क्षेपेणोक्तम् । तद्विवृणोति— **य इति** । कामशब्दस्यार्थः— **विषयैरिति** । अन्यथा 'विहाय कामान्' इत्युत्तर-विरोधात् । 'अचलप्रतिष्ठं' इत्यस्यैव व्याख्यानं **नोत्सेकमित्यादि** । कुत एषोऽर्थ इत्यतः समुद्र-दृष्टान्तोपादानसामर्थ्यादिति भावेन आह— **न हीति** । 'स शान्तिमाप्नोति' इत्यस्यार्थमाह— **स इति** । ज्ञानिप्रशंसार्थमेतत् । एतद्दृष्ट्वा केचित् "ज्ञानिन एव मुक्तिरित्यनेनाह" इत्याहुः । तदसत् । गतार्थत्वात् ॥ ७० ॥

*भा०दी०*— ननु क्रियमाणेत्युपस्कृतपदस्यानुभवविशेषणतया समासो न युक्तः । साकाङ्क्ष-मसमर्थमिति तेनेति पदसाकाङ्क्षतया सामर्थ्याभावादित्यत आह **नित्येति** । देवदत्तस्य गुरुकुल-मित्यादाविति भावः । **कथञ्चिदिति** । मत्तादेरिवेति भावः । **अन्यथेति** । कामपदस्येच्छार्थकत्वे सत्येतद्विवरणपरोत्तरश्लोके विषयार्थककामपदेन विरोधादित्यर्थः । तत्रापीच्छार्थनिस्पृहपदेन पुनरुक्तेः त्रिपाद्यैव विषयानुभवप्रकारस्योक्तत्वात् व्यर्थोऽयं चतुर्थपाद इत्यत आह **ज्ञानिप्रशंसार्थमिति** । **गतार्थत्वादिति** । न चाभावयतो ज्ञानं न च अज्ञानिनः शान्तिरिति योजनया तत्रैवासिद्धत्वादिति भावः ॥ ७० ॥

*भा०र०*— ननु "तस्य विषयानुभव" इति वक्तव्यम् । यावता "कर्तृकर्मणोः कृतिः" इति कृदन्तपदयोगे षष्ठी विहिता । विषयानुभवेति च कृदन्तम् । अतः तेनेति तृतीयानुपपत्तिः । तेन ज्ञानिनो विषयानुभवप्रकारम्" इत्यनन्वितं चेत्यत आह **क्रियमाणेतीति** । क्रियमाणेत्यत्र शानचः लादेशत्वेन तद्योगे "न लोकाव्यय" इति षष्ठीप्रतिषेधात् तृतीयैव युक्ता । न षष्ठीति भावः । एतेन अनन्वितमिति चोद्यं च निरस्तम् । ननु क्रियमाणपदस्य 'तेन' इत्यनेन पदेन सापेक्षत्वात् सापेक्षस्य च 'सापेक्षमसमर्थम्' इत्यसमर्थत्वात् समर्थस्यैव "समर्थः पदविधिः" इति परिभाषासूत्रे पदान्तरेण समास इति वैयाकरणैरभिधानाद् विषयानुभवपदेन कथं समास इत्यत आह **नित्यसापेक्षत्वादिति** । "देवदत्तस्य गुरुकुलम्" इत्यादाविवात्रापि समास उपपद्यत इति भावः । तथा च समर्थसूत्रे हरदत्तः "कथं तर्हि देवदत्तस्य गुरुकुलमिति सापेक्षस्य वृत्तिः ?" इत्याक्षिप्य "नात्र गुरुणा देवदत्तस्य

सम्बन्धः । किं तर्हि ? समुदायेन गुरुकुलेन । गुरुद्वारकश्च कुलेन सम्बन्ध इति गुरुणाऽपि योगो भवति । उक्तं च "समुदायेन सम्बन्धो येषां गुरुकुलादिना । संस्पृष्टावयवास्तेऽपि युज्यन्ते तद्वता सह" इति । अथवा, परिपूर्णस्वार्थस्यान्येन सहैकार्थीभावः सामर्थ्यम् । स्वार्थपरिपूर्तिश्च सम्बन्धिशब्दस्य प्रतियोगिनेति तदपेक्षस्यापि वृत्तिः । उक्तं च "सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । स्वार्थवत् सा व्यपेक्षाऽस्य वृत्तावपि न हीयते ॥ इति" द्वेधा समाधानमभ्यधत्त ॥

क्रियमाणमित्युपस्कारे नैवं समाधानसम्पादनायास इति तु मन्दम् । न हि विषयानुभवप्रकारः पुरुषेण क्रियते । किन्त्वनुभव एवेति क्रियमाणेत्युपस्कार एव युक्तः । **युज्येतापीति** । उत्स्वप्रवचनादेर्दर्शनादिति भावः । **नियतेति** । **नियतं साधनम्** इन्द्रियार्थसन्निकर्षादि । **अन्यथा** "तद्वत् कामाः" इत्यत्र कामशब्दस्य काम्यन्त इति व्युत्पत्त्या विषयार्थत्वमनङ्गीकृत्य रूढ्येच्छावाचित्वे । **उत्तरेति** । एतद्विवरणपरोत्तरश्लोके विषयार्थककामपदेन विरोधादत्रापि तदर्थत्वमेवाभ्युपेयम् । तत्रापीच्छार्थत्वे निःस्पृहपदेन पुनरुक्तेरिति भावः । उक्तिविरोधादिति पाठेऽप्ययमेवार्थः । **अचलप्रतिष्ठमित्यस्यैवेति** । एतद्विवरणाभावे अचला प्रतिष्ठा यस्य सोऽचलप्रतिष्ठ इति प्रतिष्ठाशब्दितायाः स्थितेरचलत्वं किंरूपं विवक्षितमिति न ज्ञायत इति शङ्का न परिहृता स्यात् । तत्परिहाराय उत्सेकशोषाभावरूपमचलत्वमत्र विवक्षितमिदमिति दर्शयितुं "नोत्सेकं प्राप्नोति, न च प्रयत्नं करोति", उत्सेकायेति शेषः, "न चाभावे शुष्यति" इति च अचलप्रतिष्ठत्वं व्याख्यातवानित्यर्थः ।

**एषोऽर्थः** विषयैरापूर्यमाणोऽपीत्यादिनोक्तोऽर्थः । न हि समुद्रः सरित्प्रवेशनिमित्तां वृद्धिं न प्राप्नोतीत्युक्ते "अस्ति चेषत् समुद्रेऽपि द्वारि" इति वृद्धेः प्राग् भाष्य एवोक्तत्वात् तद्विरोध इत्यत उक्तं भाष्ये **बहुतराविति** । ईषद्वृद्धिः प्रागभ्युपगतेति न तद्विरोध इति भाष्यार्थः स्फुटत्वान्नोक्तः । प्रयत्नम् उत्सेकाय करोति समुद्रः । "स मुक्तिम्" इति भाष्यस्य यो विषयैरापूर्यमाणोऽपीत्यन्वयः । त्रिपाद्यैव विषयानुभवप्रकारस्योक्तत्वात् "स शान्तिमाप्नोति" इति वचनं व्यर्थमित्यत आह **ज्ञानीति** । "यं कामाः प्रविशन्ति स शान्तिमाप्नोति । न पुनः कुत्सितविषयासक्तः" इति वाक्येन ज्ञानिनो हि प्रशंसाऽवगम्यते । "प्रसादे सर्वदुःखानां हानिरस्य" इति प्रागेव ज्ञानिनो मुक्तेरुक्तत्वेन पुनस्तदुक्तेर्नातीव प्रयोजनम् । अतो ज्ञानिस्तवनमित्येव वक्तव्यमिति भावः । **एतद्दृष्ट्वेति** । प्रयोजनशून्यं "स शान्तिम्" इति वाक्यं दृष्ट्वेत्यर्थः । **ज्ञानिन एवेति** । तथा च शङ्करः "विदुषस्त्यक्तेषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः" इति । **गतार्थत्वादिति** । "न चाभावयतः" इत्यत्र "न चाभावयतो ज्ञानं न चाज्ञानिनः शान्तिः" इति विवक्षितत्वात् तेन गतार्थत्वादित्यर्थः । ॥ ७० ॥

*गीताक्षरार्थस्तु*— ज्ञानिनो बाह्यार्थानुसन्धानहीनस्य मत्तस्येव युज्येतापि कथञ्चिद् गमनादिकम् । विषयानुभवस्तु दृश्यमानः कथं स्यात् । तस्य नियतसाधनसाध्यस्यानुसन्धानेन विनाऽनुदयादित्याशङ्क्य ज्ञानिना क्रियमाणविषयानुभवप्रकारकथनपूर्वकं ज्ञानी प्रशस्यते **आपूर्यमाणमिति** । नानानदीजलैरापूर्यमाणम्, अचला सरित्प्रवेशाद् वृद्धिविशेषहीना प्रतिष्ठा स्थितिः यस्य तं तथा सरितामप्रवेशनिमित्तशोषहीनं च अत एव सरित्प्रवेशार्थं यत्नहीनं च समुद्रम् आपः यद्वत् यथा प्रविशन्ति तद्वत् तथा यं ज्ञानिनं विषयैरापूर्यमाणमपि उत्सेकानुत्सेकहीनं काम्यन्त इति कामा विषयाः प्रविशन्ति, यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति नोत्सेकं प्राप्नोति न चाभावे शुष्यति न च प्रयत्नं करोति, कुत एषोऽर्थो लभ्यत इति चेत् समुद्रदृष्टान्तोपादानसामर्थ्यादिति ब्रूमः । न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्तौ वृद्धिशोषौ बहुतरौ प्राप्नोति प्रयत्नं वा करोति, स शान्तिं मुक्तिमाप्नोति । न तु कामान् कामयितुं शीलमस्येति कामकामी कुत्सितविषयेच्छाशीलः शान्तिमाप्नोतीति । विषयभोक्ता कामी कथं शान्तिमाप्नुयादित्यत उक्तं **नेति** । एवं विषयाननुभवन्नपि स ज्ञानी न कामकामी स्यादिति वेति स्वामिनः॥ ७० ॥

**गीतातात्पर्यनिर्णयः**

**"भुञ्जानोऽपि हि यः कामान् मर्यादां न तरेत् क्वचित् ।**
**समुद्रवद्धर्ममर्यी नासौ कामी स मुच्यते ।**
**केति कुत्सितवाची स्यात् कुत्सितं मानमेव तु ।**
**कामो मोक्षविरोधी स्यान्न सर्वेच्छाविरोधिनी ॥" इति च ।**

*न्या०दी०*— एवं ज्ञानी सर्वत्रोदासीनश्चेत् कथं विषयभोगस्तस्य इत्यत उच्यते **आपूर्यमाणमिति** । तत्स्मृत्यैव व्याचष्टे भुञ्जान इति ॥ धर्ममर्यी धर्माख्याम् । विषयभोक्ता न कामी कथमुच्यत इत्यत उक्तस्य "न कामकामी" इत्यस्यार्थो **नासाविति** । ननु कामाभावे विषयभोगासम्भवात् कथं ज्ञानिनः कामाभावो मोक्षसिद्ध्यर्थमुच्यत इत्यतोऽत्र कामपदेन निषिद्धेच्छैवाभिप्रेता । तस्या एव मोक्षविरोधित्वात् । नेच्छामात्रं तस्य मोक्षाविरोधित्वादित्याह **केति** ॥ कुत्सितेयमिति मानं यद्विषये सैवेच्छा काम इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**न च सर्वेच्छाभावे जीवनं भवति ।**

**"शान्तिर्मोक्षो यतो ह्यत्र विष्णुनिष्ठा भवेद् ध्रुवा" इति च ॥ ७० ॥**

*प्रका०*— आपूर्यमाणमित्यस्यार्थमाह **भुञ्जान इति** ॥

*न्या०दी०*— इतश्च "न कामकामी" इत्यत्र नेच्छामात्रनिषेध इत्याह **न चेति** ॥ ननु शान्तिशब्दस्य भगवन्निष्ठावाचित्वात् कथं स मुच्यत इति व्याख्येत्यतो भगवन्निष्ठासम्बन्धादेव मोक्षोऽपि शान्तिशब्दाभिधेय इति स्मृत्यैवाह **शान्तिरिति** ॥

**गीता**

**विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ७१ ॥**

*वि०वि०*— एतदेव प्रपञ्चयति **विहायेति** । यो निस्पृहो निषिद्धस्पृहारहितः कामान् विषयान् निस्पृहतया विहाय चरति भक्षति । भक्षयामीत्याद्यहङ्कारममकारवर्जितश्च—

'अस्वरूपे स्वरूपत्वमितिरेव ह्यहङ्कृतिः ।
त्याज्या सर्वत्र ममता ज्ञात्वा सर्वं हरेर्वशम् ॥'

इति वचनात् । स हि पुमान् यतः स एव मुक्तिमधिगच्छति ॥ ७१ ॥

*सा०सं०*— एतच्छ्लोकोक्तं प्रपञ्चयति **विहायेति** । **यो निःस्पृहो** निषिद्धस्पृहाहीनः, **निर्ममः** स्वामित्वाभिमानहीनः **निरहङ्कारः** भक्षयामीति कर्तृत्वाभिमानहीनः **चरति** भक्षयति भक्षयामीति कर्तृत्वाद्यभिमानत्यागेन विषयाननुभवतीत्यर्थः । **स** एव पुमान्, अन्यः पशुरिति वा स पुमान् शान्तिमधिगच्छतीति वा ज्ञानिन इयं स्तुतिः ॥ ७१ ॥

*अ०प्र०*— यस्मादेवं, तस्मात् **विहायेति** ।

यः[१], पुमान्[२], सर्वान् कामान्[३], विहाय[४], निस्पृहः[५], अत एव निरहङ्कारः[६], निर्ममः सन्[७], चरति[८], सः शान्तिं[१०], अधिगच्छति[११] इत्यन्वयः ।

यः पुमान् = पुरुषः[१, २], सर्वान् कामान् = सर्वविषयान्[३], विहाय = प्राप्तान् विहाय काम्यान् विहायेति विशिष्टनिषेधस्य विशेषणनिषेधे तात्पर्यात् निस्पृहतयेति यावत्[४], निस्पृहः = अप्राप्तेषु निस्पृहः[५], अत एव निरहङ्कारः[६], अतः निर्ममः सन् = तद्भोगसाधनेषु निर्ममः सन्[७], चरति = अन्तर्दृष्टिर्भूत्वा चरति भक्षयति, कर्तृत्वान्निर्माणोऽहङ्कारः अस्वरूपे रूपत्वमतिरेव हि अहंकृतिः तदुभयशून्यः प्रारब्धवशेन भोगान् भुङ्क्ते यत्र क्वापि गच्छतीति वा[८], सः शान्तिं[१०], अधिगच्छति ॥ ७१ ॥

### भाष्यम्

**एतदेव प्रपञ्चयति विहायेति । कामान् = विषयान् । निःस्पृहतया विहाय यः चरति भक्षयति । भक्षयामीत्याद्यहङ्कारममकारवर्जितश्च । स हि पुमान् । स एव च मुक्तिमधिगच्छतीत्यर्थः ॥ ७१ ॥**

*प०टी०*— 'स्पृहा'पदात् 'अकाम'पदस्यार्थभेदमाह **कामानिति** । विषयत्यागे कथं भोगः ? इत्यत आह **निस्पृहतयेति** ॥ ७१ ॥

*न०टी०*—अकामः सर्वथा चेत्, कथं भक्षति ? इत्याद्याशङ्क्य, परिहारत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **एतदेवेति** ॥ ७१ ॥

*प्र०दी०*— 'विहाय' इत्यनेनायमेवार्थ उच्यते । अतः पुनरुक्तिरित्यत आह— **एतदेवेति** । यद्यत्र कामा इच्छाविशेषास्तर्हि 'निःस्पृहः' इति पुनरुक्तिः । यदि काम्यन्त इति विषयास्तदा चरतिर्यदि भक्षणार्थः तदा व्याघातः । अथ गत्यर्थस्तदा व्यर्थ इत्यतो व्याचष्टे— **कामानिति** । 'निर्ममो निरहङ्कारः' इत्येतदसम्भवपरिहाराय व्याचष्टे— **भक्षयामीति** । कर्तृत्वाभिमान एवाहङ्कारः । स्वामित्वाभिमान एव ममता । न त्वहं प्रत्ययादिमात्रमिति भावः । स हि पुमानन्यः पशुरित्यर्थः । कुत इत्यत आह— **स एवेति** । स हि पुमानित्यनेनान्वयसमाप्तिं वदता ज्ञानिन एव मुक्तिरित्येषोऽर्थो नात्र प्रतिपाद्यत इति दर्शितम् । स्त्रीव्यावृत्त्यभावश्च ॥ ७१ ॥

*भा०दी०*— **व्याघात इति** । विहाय कामानित्युक्त्वा विषयान् भक्षयतीत्युक्तेर्व्याहतिरित्यर्थः । **व्यर्थ इति** । अतिशयालाभादिति भावः । **असम्भवेति** । ज्ञानिनोऽप्यहमिति समदेह इति बुद्धेः सत्त्वादिति भावः । **इति दर्शितमिति** । अन्यथा गतार्थतापत्तेरिति स पुमानित्यनूद्य मुक्तिविधौ तु स्त्रीणां मुक्त्यभावः उक्तः स्यात् । स पुमान् अन्यः पशुरित्युक्तौ स्तुत्यर्थत्वप्रतीत्या स्त्रीव्यावृत्त्यभावश्च दर्शित इत्यर्थः ॥ ७१ ॥

*भा०र०*— **अयमेवार्थ इति** । यद्यपि "निर्ममो निरहङ्कारः" इत्यनुक्तमप्युच्यते । तथाऽपि "यदा ते मोहकलिलम्" इति तस्यापि प्रागभिधानादुक्त एवोच्यत इति पुनरुक्तिरित्यर्थः । **एतदेव** 'आपूर्यमाणमचलप्रतिष्ठम्' इति श्लोकोक्तमेव । **इति पुनरुक्तिरिति** । स्पृहाशब्देनेच्छाविशेषस्यैव ग्राह्यत्वात् कामत्यागो निःस्पृहत्वमित्यैकार्थ्यादिति भावः । **विषया इति** । कामा इति वर्तते । तथा च सुधा "कामकर्मत्वाद्धि विषयाः कामाः । कर्मणि घञो विधानात्" इति । चरगति-भक्षणयोरिति धातोः, 'विषयानिन्द्रियैश्चरन्' इति प्रयोगाच्चाह **यदि भक्षणार्थ इति** । **व्याघात**

**इति** । विषयत्यागभक्षणयोर्विरुद्धत्वात् "विहाय कामान् यश्चरति" इत्युक्तिर्विप्रतिषिद्धेत्यर्थः । **व्यर्थ इति** । अतिशयालाभादिति भावः । **असम्भवेति** । ज्ञानिनोऽपि देहादौ ममायमिति बुद्धेरहमित्यात्मप्रतीतेश्च सत्त्वान्निर्ममता निरहङ्कारता चासम्भवदुक्तिकेत्यर्थः । भाष्यभावोक्त्या कृतचोद्यं परिहरति **कर्तृत्वेति** । ज्ञानलाभेन तु निरस्ता एव पशवो पर इत्यत्रोक्तं हृदि कृत्वाऽऽह **अन्यःपशुरिति** । कुतः ? स एव पुमानन्यः पशुरिति कस्मादवगम्यत इत्यर्थः । **इत्येषोऽर्थ इति** । तथा च शङ्करः "सः ब्रह्मवित् शान्तिं संसारोपरमलक्षणां प्राप्नोति" इति । **नात्र प्रतिपाद्यत इति** । "स शान्तिमाप्नोति" इति पूर्वश्लोकेन गतार्थत्वात् । न हि "स शान्तिमधिगच्छति" इत्यत्र पूर्वोक्तादधिकं किमप्यभिधीयत इति भावः । **स्त्रीव्यावृत्त्यभावश्चेति** । विहाय कामान् यः संन्यासी पुमांश्चरतीति शङ्करीत्याऽन्वये पुमानित्यस्यानुवादत्वात् स्त्रीणां शान्तिर्न प्रतिपादिता स्यात् । तच्च मैत्रेय्यादिस्त्रीणां मुक्तिश्रावकशास्त्रविप्रतिषिद्धम् । "स्त्रियो वैश्यास्तथा शूद्राः" इति स्ववचनविरुद्धं च । "स पुमानन्यः पशुः" इत्युक्तौ तु स्तुत्यर्थत्वप्रतीत्या स्त्रीव्यावृत्त्यभावः प्रदर्शितो भवतीति स्त्रीणामपि शान्तिरनुमता स्यात् । कुतोऽसावेव पुमानिति चोद्यपरिहाराय "स शान्तिमधिगच्छति" इति वाक्यं प्राप्तव्यनिर्वाणकत्वादिति हेतुसमर्पकं भवतीत्यतो न पुनरुक्तिरित्यास्माकीनमेव व्याख्यानं युक्तमिति भावः ॥ ७१ ॥

***गीताक्षरार्थस्तु***— पूर्वश्लोकोक्तं प्रपञ्च्यते **विहायेति** । यः कामान् विषयान् निःस्पृहः निषिद्धस्पृहाहीनः निस्पृहया चरति भक्षयत्यनुभवति निर्ममः स्वामित्वाभिमानरहितः निरहङ्कारः भक्षयामीति कर्तृत्वाभिमानहीनः सन् स एव पुमान् । अन्यः पशुः । कुतः ? यतः स शान्तिमधिगच्छतीति ॥ ७१ ॥

**गीतातात्पर्यनिर्णयः**

**निषिद्धस्पृहाभावमात्रेण सर्वविषयान् विहाय ।**

***प्रका०***— विहायेत्यस्यार्थमाह **निषिद्ध इति** ॥

***न्या०दी०***— पूर्वश्लोकोक्तं प्रपञ्च्यते **विहायेति** ॥ तत्र कामपदेन यदीच्छा गृह्यते तर्हि निःस्पृह इति पुनरुक्तिः । यदि विषयास्तर्हि विषयत्यागे किं भक्षयति ? निःस्पृहत्वं च कथं युज्यते ? सर्वकामनिवृत्तिरिति वचनविरोधात् । जीवनाद्यभावप्रसङ्गाच्चेत्यत आह **निषिद्धेति** ॥ सर्वकामपदेन विषयाणां ग्रहणान्न पुनरुक्तिदोषः । नापि चरणासम्भवः । अत्र निःस्पृह इत्यनेन विषयाणां स्वरूपतो हानमन्तरेण स्पृहाभावमात्रेण हानस्याभिप्रेतत्वात् । नापि स्मृतिवचनादिविरोधः । निःस्पृह इति निषिद्धविषयस्पृहाभावस्य विवक्षितत्वादिति भावः ।

*भा०दी०*— **इति वचनविरोधादिति** । सर्वकामनिवृत्तिस्तु ज्ञानिनो न कथञ्चनेति प्रागुक्त-वचनविरोधादित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"अस्वरूपे स्वरूपत्वमतिरेव ह्यहङ्कृतिः ।**
**त्याज्या सर्वत्र ममता ज्ञात्वा सर्वं हरेर्वशे ॥" इति च ॥ ७१ ॥**

*न्या०दी०*— ननु ज्ञानिनामप्यहं ममेति प्रत्ययप्रयोगदर्शनात् कथं तस्योच्यते निरहङ्कार-त्वादित्यतो नाहमित्यादिज्ञानादिमात्रमहङ्कारादीति भावेन स्मृत्यैवाहङ्कारादिशब्दार्थमाह **अस्वरूप इति** ॥ **ममता** मदधीनमिति भावना ॥

**गीता**

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे*
*श्रीकृष्णार्जुनसंवादे साङ्ख्ययोगो नाम*
*द्वितीयोऽध्यायः ॥*

*वि०वि०*— एवमुक्तलक्षणमुपसंहरति **एषेति** । ब्राह्मी ब्रह्मविषया स्थितिः लक्षणं एषा उक्तप्रकारा । एतां स्थितिं प्राप्य न मुह्यति । ज्ञानवान् मुच्यत इति यावत् । सा च मुक्तिः किं तद्देहपातानन्तरमेव उत अन्यथेत्यपेक्षायामाह **स्थित्त्वेति** । निर्वाणमशरीरम् ।

'अभावाज्जडदेहस्य विष्णुर्निर्वाणमुच्यते ।
भिन्नदेहाभावतो वा स सहस्रशिरा अपि ॥'

इति वचनात् । अन्तकालेऽप्यस्यां स्थितौ स्थित्वैव ब्रह्म गच्छति, अन्यथा जन्मान्तरं प्राप्नोति । ज्ञानिनामप्यन्तकाले अन्यमनसां प्रारब्धकर्मभावात् जन्मान्तरम् । प्रारब्धकर्मनाशकाले नियमेन भगवत्स्मृतिर्भवति ततो मोक्षश्च । तदुक्तम्—

'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा ।
विष्णुमाया तदा तेषां मनो बाह्यं करोति हि ॥

बहुजन्मविपाकेन भक्तियोगेन ये हरिम् ।
भजन्ति तत्स्मृतिं त्वन्ते देवो याति न चान्यथा ॥' इति ॥ ७२ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां द्वितीयोऽध्यायः ॥ २ ॥*

***वा०ल०***— 'एषा ब्राह्मी स्थितिः पार्थ' इत्यत्र ब्राह्मी परब्रह्मसम्बन्धिनी । निर्वाणं मोक्षप्रदं ब्रह्म ऋच्छति । ब्रह्मणः कृपय निर्वाणं मोक्षमिति वा ॥ ७२ ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे द्वितीयोऽध्यायः ॥*

***सा०सं०***— 'प्रजहाति' इत्यादिनोक्तं ज्ञानिलक्षणप्रकरणं समापयति- **एषेति । एषा** 'प्रजहाति' इत्यादिनोपक्रान्ता 'या निशा' इत्यत्र निष्कृष्योक्ता **ब्राह्मी** ब्रह्मविषया **स्थितिः** । सर्वकामप्रहाणनित्यभगवदनुस्मृत्यादिरूपब्रह्मज्ञानिलक्षणरूपा स्थितिरिरिति यावत् । **एनामुक्त**रूपां स्थितिम् । **प्राप्य न मुह्यति** । भववेदनानुभववान् न भवति । **अन्तकालेऽपि** देहत्यागकालेऽपि **अस्यां** भगवदनुस्मृत्यादिरूपस्थित्यां **स्थित्वा निर्वाणं** प्राकृतशरीरहीनं **ब्रह्म ऋच्छति** प्राप्नोति । प्रारब्धकर्माभावे यद्देहे ज्ञानोदयः तद्देहत्यागकाले भगवदनुस्मृत्या तद्देहपातानन्तरमेव मुक्तिः । प्रारब्धसत्वे तु देहान्तरं प्राप्येति भावः । तथा च सूत्रम्— 'ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ' (४-१-१९) इति । ब्रह्मपदेन विरिञ्चोपादानव्यावृत्त्यर्थं **निर्वाणमिति** विशेषणम् । परब्रह्मप्राप्तेरेव मोक्षत्वादिति भावः ॥ ७२ ॥

*॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते द्वितीयोऽध्यायः ॥*

***अ०प्र०***— हे पार्थ ![१], एषा[२], ब्राह्मी[३], स्थितिः[४], एनां[५], प्राप्य[६], न विमुह्यति[७], अन्तकालेऽपि[८], अस्यां[९], स्थित्वा[१०], ब्रह्मनिर्वाणं[११], मृच्छति[१२] इत्यन्वयः ।

हे पार्थ ! परमेश्वराराधनेन शुद्धान्तःकरणः पुमान्[१], एषा = एवं प्रकारा ब्रह्मविषयज्ञानवतो लक्षणमेवमुक्तमित्यर्थः[२], ब्राह्मी= ब्रह्मविषया ब्रह्मनिष्ठा वा[३], स्थितिः = लक्षणं[४], एनां = एतां[५], प्राप्य[६], न विमुह्यति = पुनः संसारमोहं न प्राप्नोति[७], अन्तकालेऽपि = मृत्युसमयेऽपि[८], अस्यां क्षणमात्रमपि[९], स्थित्वा[१०], ब्रह्मनिर्वाणं = ब्रह्मालयं वैकुण्ठं यद्वा ब्रह्म[११], मृच्छति = प्राप्नोति[१२], बाल्यमारभ्य स्थित्वा प्राप्नोतीति किं पुनर्वक्तव्यम् ॥ ७२ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां साङ्ख्ययोगो नाम द्वितीयोऽध्यायः ॥*

भाष्यम्

उपसंहरति **एषेति** । ब्राह्मी स्थितिः ब्रह्मविषया स्थितिः लक्षणम् । अन्तकालेऽप्यस्यां स्थित्वैव ब्रह्म गच्छति । अन्यथा जन्मान्तरं प्राप्नोति 'यं यं वाऽपि' इति वक्ष्यमाणत्वात् । ज्ञानिनामपि सति प्रारब्धकर्माणि शरीरान्तरं युक्तम् । 'भोगेन त्वितरे' इति ह्युक्तम् । सन्ति हि बहुशरीरफलानि कर्माणि कानिचित् । 'सप्तजन्मनि विप्रः स्यात्' इत्यादेः । दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः । तथा ह्युक्तम्—

'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रौद्रं पदं ततः ।
साङ्कर्षणं ततो मुक्तिमगाद् विष्णुप्रसादतः ॥' —इति गारुडे ।

'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यते' —इति नारदीये ।

निश्चितफलं च ज्ञानम् । 'तस्य तावदेव चिरम्', 'यदु च नार्चिषमेवाभिसम्भवति' इत्यादिश्रुतिभ्यः ।

*प०टी०*— अन्त्यश्लोकमवतार्य व्याचष्टे **उपसंहरतीति** । 'ज्ञानिलक्षणम्' इति शेषः । परोक्षज्ञानिनां कारणाभावाद्देहान्तरं न युक्तमित्यत आह **ज्ञानिनामिति** । ज्ञानोदयजन्मन्येव प्रारब्धभोगसम्भवात् किं देहान्तरेण ? इत्यत आह **सन्ति चेति** । बहुशरीरफलकर्मसद्भावेऽप्यन्तशरीरे ज्ञानोदयः किं न स्यात् ? इत्यत आह **दृष्टेश्चेति** । ज्ञानिनोऽपि कर्मभोगे पुनस्तत्कालीनकर्मभोगान्न कदाचन मुक्तिरित्यत आह **निश्चितेति** । प्रारब्धमात्रस्य भोग्यत्वान्न मोक्षाभाव इत्यर्थः ॥

*न०टी०*—ब्रह्मणि स्थितिरिति शङ्काव्यावर्त्यमाह **ब्रह्मविषयेति** । नन्वपरोक्षज्ञानिनां कथं शरीरान्तरम् ? इत्यत आह **ज्ञानिनामिति** । ननु सत्यपि प्रारब्धकर्मणि ज्ञानोदयानन्तरं तदपि तद्देह एव भुक्त्वा मुक्तिः किं न स्यात् ? इत्यत आह **सन्ति हीति** । ननु सन्तु बहुशरीरफलकर्माणि । तथाऽपि ज्ञानोदयोऽन्त्यदेह एव किं न स्यात् ? इत्यत आह **दृष्टेश्चेति** । ननु यद्यपरोक्षज्ञान्यपि प्रारब्धकर्म भुङ्क्ते, तर्हि तत्काले पुनः कर्मकरणात्, सञ्चितानन्तकर्मसद्भावात्, तद्भोगोऽपीत्येवममुक्तिरेव प्रायः स्यादित्यत आह **निश्चितफलं चेति** । 'तावदेव चिरम्' इति प्रारब्धभोगातिरिक्तविलम्बकारणाभावावगतेर्भवत्येव मुक्तिर्ज्ञानिन इत्यर्थः ।

*प्र०दी०*— ज्ञानी स्तूयत 'एषा' इत्यनेनेत्यसत् । प्रथमवाक्ये तद्दर्शनादिति भावेनाह— **उपसंहरतीति** । प्रकरणं समापयतीत्यर्थः । ब्रह्मधर्मभूतेति प्रतीतिनिरासायाह— **ब्राह्मीति** । स्थितिर्नोक्ता । तत्कथमेवमुच्यत इत्यत आह— **लक्षणमिति** । ब्रह्मविषयज्ञानवतो लक्षणमुक्तमित्यर्थः । 'किं प्रभाषेत' इत्यादिप्रश्नपरिहारस्यार्थादुक्तत्वादनुपसंहारः ।

''अन्तकाले चरमे वयस्यपि यः परिव्रज्यास्यां स्थितौ तिष्ठति सोऽपि ब्रह्माप्नोति । किमु ब्रह्मचर्यादेव प्रव्रज्य'' इति व्याख्यानमसत् । अप्रकृतत्वादित्याशयवान् व्याचष्टे— **अन्तकालेऽपीति** । ज्ञानिनो ब्रह्मप्राप्तिरुक्ता । सा किं तद्देहपातानन्तरमेवोतान्यथेत्यपेक्षायामिदमुच्यते । कुतोऽस्यार्थस्य भगवदभिप्रेतत्वमित्यत आह— **यं यमिति** ।

ननु ज्ञानमेव मोक्षसाधनम् । कारणपौष्कल्ये च कार्यं भवत्येव । अतः कथं ज्ञानिनः शरीरान्तरप्राप्तिरित्यत आह— **ज्ञानिनामपीति** । प्रारब्धकर्म सामग्र्याः प्रतिबन्धकम् । तदेवान्तकाले ब्रह्मानुसन्धानं प्रतिबध्नातीति भावः । ननु ज्ञानादेव सर्वं कर्म क्षीणमित्यत आह— **भोगेनेति** । अस्तु प्रारब्धकर्मणां भोगादेव क्षयः । स च ज्ञानं यच्छरीरे जातं तत्रैवाभूत् । अतः कथं शरीरान्तरारम्भ इत्यत आह— **सन्ति हीति** । तानि कथमेकेनैव शरीरेण भुज्येरन्निति शेषः । सप्तजन्मनीति द्विगुः । इतश्चैतदेवमित्याह— **दृष्टेश्चेति** । बह्वित्यनेकोपलक्षणम् । कथं ज्ञानिनां बहुशरीरप्राप्तिर्दृश्यत इत्यत आह— **तथा हीति** । ननु ज्ञानिनोऽपि यदि शरीरान्तरप्राप्तिस्तर्हि गर्भवासादिदुःखैर्विलुप्तशक्तिकं ज्ञानं न मोक्षाय पर्याप्तं स्यादित्यत आह— **निश्चितेति** । तस्य ज्ञानिनः । तावदेव चिरम् । तावानेव विलम्बः । यावन्न विमोक्ष्ये विमोक्ष्यते । प्रारब्धेन कर्मणा । अथावसिते कर्मणि । ब्रह्म सम्पत्स्यत इत्यर्थः । अवसित-कर्मणि ज्ञानिनि विषये पुत्रादयो यदि शव्यं कर्म कुर्वन्ति यदु च न यदि वा न कुर्वन्ति । सर्वथार्चिषमभिसम्भवति प्राप्नोत्येवेत्यर्थः । तदिदमुक्तं— **नैनां प्राप्य विमुह्यतीति** ।

*भा०दी०*— हेतूक्तिपूर्वकत्वादेरभावादाह **प्रकरणं समापयतीत्यर्थ इति** । प्रजाहातीत्यादि प्रकरणमित्यर्थः । **अर्थादिति** । या निशेति श्लोकेऽन्यपरादपि तल्लाभ इत्युक्तेरिति भावः । **सामग्र्याः** मोक्षसामग्र्याः प्रारब्धकर्मप्रतिबन्धकमित्यर्थः । **भोगेनेतीति** । इतरे प्रारब्धपुण्यपापे भोगेन क्षपयित्वा विनश्याथ पश्चात्सम्पत्स्यते ब्रह्मेति सूत्रार्थः । सप्त च तानि जन्मानीति विग्रहे सप्त जन्मस्विति स्यादित्यत आह **इति द्विगुरिति** । सङ्ख्यापूर्वो द्विगुरिति 'द्विगुरेकवचनमि'ति सूत्रेणैकवचनमिति भावः । विलुप्तशक्तिकं ज्ञानमिति शेषः । **इतश्चेति** । दर्शनरूपहेतोश्च ज्ञानिनः शरीरान्तरव्याप्ति-

रित्येतदेव प्रारब्धकर्माभावे सतीत्यर्थः । **तदिदमुक्तमिति** । ज्ञानस्य चिरकालीनत्वेऽपि ज्ञानी मुक्तिमाप्नोत्येवेतदुक्तं द्वितीयपादेनेत्यर्थः । "उपमर्दं च" इति ज्ञानपादीयसूत्रादिति भावः ।

*भा०र०*— सैषा ज्ञाननिष्ठा स्तूयत इति शङ्करभाष्यमर्थतोऽनुवदति **ज्ञानीति** । **प्रथमवाक्ये तद्दर्शनादिति** । 'आपूर्यमाणम्' इत्यत्र "स शान्तिमाप्नोति" इति ज्ञानिस्तवनस्य दर्शनादित्यर्थः । "स शान्तिमाप्नोति" इति वचनं न ज्ञानिनो मुक्तिप्रतिपादनार्थम् । "न चाभावयतः" इति ज्ञानिनो मुक्तेरुक्तत्वात् । किन्तु "यं कामाः प्रविशन्ति स शान्तिमाप्नोति" इति ज्ञानी प्रशस्यत इत्येव वक्तव्यमिति तत्रैव स्तुतिः प्राप्तेति भावः । अध्यायार्थोपसंहारप्रतीतिव्युदासायाह **प्रकरणमिति** । प्रजहातीत्यादिप्रकरणमित्यर्थः । **ब्रह्मधर्मभूतेतीति** । ब्रह्मण इयं ब्राह्मीत्यत्र षष्ठ्यर्थसम्बन्धो धर्म-धर्मिभाव इति प्रतीतिनिरासायेत्यर्थः ।

**एवमुच्यते** ब्राह्मी स्थितिरेषेत्येवमुच्यते । स्थितिर्नोक्तेत्युक्तदोषं परिहर्तुमाह **लक्षणमुक्तमिति** । लक्षणप्रश्नपरिहारोपसंहारेऽपि भाषणादिप्रश्नपरिहारस्यानुपसंहृतत्वान्न्यूनतेति शङ्कां परिहर्तुमाह **किं प्रभाषेतेत्यादि** । **अर्थादिति** । "अन्यपरादपि तल्लाभः" इत्युक्तप्रकारेणोक्तत्वात् तदुपसंहाराभावो न दोष इत्यर्थः । "स्थित्वाऽस्यां स्थितौ ब्राह्म्यां यथोक्तायामन्तकालेऽन्तेऽपि वयसि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति । किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छति" इति शङ्करभाष्यं सार्थं सङ्क्षिप्यानुवदति **अन्तकाले चरमे वयस्यपीत्यादिना** । **अप्रकृतत्वादिति** । प्रव्रज्येति संयोज्य व्याख्यानं तदा युक्तं यदि संन्यास इतःपूर्वं प्रकृतः स्यात् । न चैवम् । तस्मान्नेदं व्याख्यानमित्यर्थः ।

**उक्ता** "न चाभावयतः शान्तिः" इत्यादौ । **इदं** "स्थित्वाऽस्यामन्तकालेऽपि" इति प्रमेयम् । **अन्यथा** ब्राह्म्यां स्थिताववियमानश्चेत् । अन्तकालेऽपि ब्रह्म चेन्नानुसन्दध्यादिति यावत् । न ब्रह्म गच्छतीति भाषणीयेऽपि "जन्मान्तरं प्राप्नोति" इति वचनं न ब्रह्म चेद् गच्छेत् किं कुर्यादिति शङ्कापनोदाय वस्तुस्थितिकथनं भाष्य इति स्फुटत्वान्न व्याख्यातम् । "विद्यैव तु निर्धारणात्" इत्यादौ तथा स्थितेराह **ज्ञानमेवेति** । **सामग्र्याः** मोक्षे पुष्कलकारणस्य ज्ञानस्य । "भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते" इति सूत्रस्यायमर्थः । तुः ज्ञानिनः प्रारब्धभोगे "उपमर्दं च" इत्युक्त-विशेषसूचकः । अथशब्दो नियमार्थः । इतरे प्रस्तुतानारब्धादन्ये प्रारब्धपुण्यपापे भोगेन क्षपयित्वा, अथ प्रारब्धपुण्यपापक्षपणादन्वेव, न तु ज्ञानोत्पत्त्यनन्तरमिव विलम्बेन ब्रह्म सम्पत्स्यते । एवं ब्रह्मविद् तम आप्नोतीति । स च क्षयः अभूदित्यन्वयः । जन्मान्तरप्राप्तिपदार्थानुवादः **शरीरान्तरा-रम्भ इति** ।

सप्त च तानि जन्मानीति विगृह्य "विशेषणं विशेष्येण" इति समासे सप्तजन्मस्विति स्यात् इत्यत आह **सप्तेति** । तथा च 'द्विगुरेकवचनम्' इत्येकवचनं युक्तम् । "ऋन्नेभ्यो ङीप्" इति ङीप् कस्मान्न भवतीति चेन्न । अदन्तत्वाभावेनास्त्रीत्वात् । "अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते" इत्युक्तेः । अत एव 'द्विगोः' इति ङीबपि प्रत्यूढः । "अनो नलोपश्च वा द्विगुः स्त्रियाम्" इत्यपि न भवति । अन्प्रत्ययान्तत्वाभावात् । मत्प्रत्ययान्त एवायं जन्मशब्द इति केषाञ्चिद् व्याख्यानमसङ्गुलम् । पञ्चकर्म पञ्चकर्मीत्युदाहरणानुपपत्तेः । नलोपश्च वेति नलोपस्य वैकल्पिकत्वव्याख्यानं तु "नलोपस्तु नित्यमेव क्रियते" इति कैयटविरोधादनादरणीयम् । अत्र "अनो नलोपश्च" इति तु छान्दसत्वान्नाश्रितमिति भावेन टीकायां सप्तजन्मनीत्यनुवाद इति द्रष्टव्यम् ।

**इतश्च** दर्शनरूपहेतोश्च । **एतत्** ज्ञानिनः शरीरान्तरप्राप्तिरित्येतत् । **एवं** प्रारब्धसद्भावे सतीत्याहेत्यर्थः । ज्ञानिनामपि बहुशरीरप्राप्तेर्दृष्टिश्चेत्यभिधाय तत्र प्रमाणीकृते 'स्थित' इत्यत्र रौद्रं पदं, साङ्कर्षणं शेषपदमिति, "महादेव परे जन्मन्" इति वचने च ज्ञानिनो जन्मद्वयोक्तेरविसंवादाय भाष्यगतबहुशब्दभावमाह **बह्वितीति** । गारुडवचने 'ऊर्ध्वः' इत्यूर्ध्वापरनामको रुद्रपदयोग्यो जीव उग्रतपा गृह्यते । रौद्रपदप्राप्तेः पूर्वमुग्रतपा इत्येव तस्य प्रसिद्धं नाम । "शुश्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः" इत्यनुव्याख्यानात् । बृहद्भाष्ये पैङ्गिश्रुतौ "शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव वा" इति रौद्रावतारत्वेनोक्त ऊर्ध्वोऽन्य एवेति न तद्विरोधः । प्राप्स्यमानरुद्रपद उग्रतपाः अत्र तूर्ध्वनामोक्त इति । "ऊर्ध्वः उन्नतः उत्तमः" इत्यर्थ इत्यप्याहुः । **परे जन्मन्** परस्मिन् जन्मनि । शेषपदप्राप्त्यनन्तरमिति यावदिति भाष्यार्थः । लुप्तशक्तिकं ज्ञानम् । ज्ञानस्य फलं ब्रह्मप्राप्तिलक्षणम् । कुतो निश्चितमित्यत उक्तं भाष्ये **तस्येत्यादि** । प्रकृतोपयोगाय "यावन्न विमोक्ष्ये अथ सम्पत्स्यते" इति श्रुतिशेषं व्याचष्टे **तस्य ज्ञानिन इत्यादि** । मुचेः कर्मणि लृटि स्यप्रत्यये लृटस्तादेशे टेरेत्वे "लोपस्त आत्मनेपदेषु" इति तकारस्य लोपे "अतो गुणे" इति पररूपत्वे छन्दसि विमोक्ष्य इति रूपम् । तदनूद्य प्रतिपदं दर्शयति **न विमोक्ष्ये न विमोक्ष्यत इति** । **प्रारब्धेन** प्रारब्धप्रतिबन्धात् ।

यथा ज्ञानानन्तरमपि न मोक्षनियमः तथा कर्मक्षयानन्तरमपीति शङ्का मा भूदिति भावेन श्रुतावथशब्द इति भावेन तदर्थमाह **अवसित इति** । **अवसिते** भोगेन । **कर्मणि** प्रारब्धे । "यदु च न" इति वाक्यात् "अथ यदुचैवास्मिन् शव्यं कर्म कुर्वन्ति" इति पूर्ववाक्यम् । तद् व्याचष्टे **अवसितकर्मणीति** । सप्तम्यर्थो **विषय इति** । शव्यं कर्म शवस्य कर्तव्यं संस्कारादि । भवतेरकर्मकत्वादर्चिषमर्चिर्लोकमिति कथं कर्मोक्तिरित्यत आह **प्राप्नोत्येवेति** । भू प्राप्तावित्युक्तेः प्राप्त्यर्थस्य भवते रूपम् । छन्दस्त्वान्नात्मनेपदम् । तथा चानुभवतीतिवत् सकर्मकत्वं युक्तमिति

भावः । उद्गीतत्वपरिहाराय गीतारूढतामाह **तदिदमिति** । ज्ञानस्य चिरकालीनत्वेन ज्ञानी मुक्तिमाप्नोत्येवेत्येतद्, गीतायाम् एनां ब्राह्मीं स्थितिं ब्रह्मविषयकज्ञानं प्राप्य प्रकर्षेणाप्त्वा न विमुह्यति अप्रतिबद्धब्रह्मानुसन्धानयुक्तो गर्भवासदुःखादिना मोहं न प्राप्नोतीत्युक्तमित्यर्थः ।

भाष्यम्

न च कायव्यूहापेक्षा । 'तद्यथेषीकातूलम्', 'तद्यथा पुष्करपलाशे', 'ज्ञानाग्निस्सर्वकर्माणि' इत्यादिवचनेभ्यः । प्रारब्धे त्वविरोधः । प्रमाणाभावाच्च । न च तच्छास्त्रं प्रमाणम्—

'अक्षपादकणादानां साङ्ख्ययोगजटाभृताम् ।
मतमालम्ब्य ये वेदं दूषयन्त्यल्पचेतसः ॥'

इति निन्दनात् । यत्र तु स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव । न सत्यत्वम् । न हि तेषामपीतरग्रन्थविरुद्धार्थे प्रामाण्यम् । तथा ह्युक्तम्—

'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥'

'अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।
प्रकाशं कुरु चाऽत्मानमप्रकाशं च मां कुरु ॥ —इति वाराहे ।

'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः ।
चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः ॥

दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु ।
चक्रुर्वेदैश्च ब्राह्माणि वैष्णवान् विष्णुवेदतः ॥

पञ्चरात्रं भारतं च मूलरामायणं तथा ।
तथा पुराणं भागवतं विष्णुवेद इतीरितः ।
अतः शैवपुराणानि योज्यान्यन्याविरोधतः । —इति नारदीये ।

अतो ज्ञानिनां भवत्येव मुक्तिः ।

*प०टी०*— सर्वमपि कर्म कायव्यूहेन भुज्यत इति परिहारः किं न स्यात् ? इत्यत आह **न चेति**। 'भोगार्थम्' इति शेषः। किमप्रारब्धभोगार्थं प्रारब्धभोगार्थं वा कायव्यूहापेक्षा ? आद्यं दूषयति **तद्यथेति**। द्वितीयं दूषयति **प्रारब्धे त्विति**। कायव्यूहमन्तरेणापि प्रारब्धे भुक्ते न विरोध इत्यर्थः। प्रारब्धमपि कायव्यूहेन भुज्यतामित्यत आह **प्रमाणेति**। काणादादिशास्त्रं प्रमाणमित्यत आह **न चेति**। निन्दनवत् स्तुतिरपि शैवादिपुराणेष्वस्तीत्यत आह **यत्रेति**। **सत्यत्वम्** उक्तस्य। ननु पुराणत्वाविशेषात् कुतो निन्दावचनेन स्तुतिवचनबाधः ? इत्यत आह **न हीति**। तद्विरोधादेषामप्रामाण्यं किं न स्यात् ? इत्यत आह **तथा हीति**। शैवपुराणानामतथ्यत्वमूलत्वाद्दौर्बल्यमिति। एषां निर्दोषमूलत्वात् प्राबल्यमिति भावः। निश्चितफलं च इत्याद्युक्तमुपसंहरति **अत इति**।

*न०टी०*—उत्तरपूर्वाघयोस्तु ज्ञानप्रभावादेवाश्लेषविनाशोक्तेर्न तद्भोगार्थं काणादाद्युक्तकायव्यूहापेक्षेत्याह **न चेति**। पुण्यमनिष्टं नश्यत्येवेष्टं तूत्तरकालीनं मुक्तावनुप्रविशन्ति पूर्वकालीनं ज्ञानमित्यनवद्यम्। प्रारब्धे तु कर्मणि कतिभिश्चिद्देहैः क्रमेण भुज्यमानेऽपि तदन्ते मुक्तिर्न विरुध्यते परिमितत्वादिति भावेनाह **प्रारब्धे त्विति**। ननु सञ्चितेऽपि कर्मणि बहुभिः कायैः युगपद्भुज्यमाने, न मुक्तिविरोध इत्यत आह **प्रमाणेति**। ननु तपःप्रभावलब्धज्ञानकृतं तच्छास्त्रं प्रमाणं किं न स्यात् ? इत्यत आह **न चेति**। यत्र क्वचित् श्रूयते पाशुपतादिशास्त्रं शिवपुराणेषु तेषामपि शिवभक्तस्तुतौ तात्पर्यम्। न तु शिवशास्त्रोक्तसत्यत्वे। शिवपुराणानामितरपुराणविरुद्धार्थे प्रामाण्यासम्भवादित्याह **यत्र त्विति**। ननु पुराणत्वाविशेषात् शिवपुराणानामितरपुराणविरुद्धार्थे कथं न प्रामाण्यम् इत्याशङ्क्य, मोहनार्थं प्रणीतशिवागममूलत्वादित्याह **तथा हीति**। स्रष्टृत्वबद्धत्वोपासकत्वादीनि **तथ्यानि** शर्वादिः अस्रष्टृत्वाबद्धत्वानुपासकत्वादीनि **अतथ्यानि**। स्रष्टृत्वमोचकत्वोपास्यत्वादीनि **वितथ्यानीति**। एवं सर्वोपास्यत्वादीनि **तथ्यानि** विष्णोः। अनुपास्यत्वादीन्यतथ्यानि। उपासकत्वादीनि **वितथ्यानि**। दधीच्याद्या शैवान्युपपुराणानि चक्रुः। निश्चितफलं च इत्याद्युक्तमुपसंहरति **अत इति**। यत इत्युक्तप्रकारेण कर्मक्षयसम्भवः।

*प्र०दी०*— पाशुपतवैशेषिकादयस्त्वाहुः— अनियतकालविपाकान्यपि कर्माणि ज्ञानी योगसामर्थ्यात् समाहृत्यानेकशरीरफलान्यपि कायव्यूहनिर्माणेन क्षपयित्वाऽपवृज्यते। तत्कुतोऽस्य देहान्तरमिति। तत्राह— **न चेति**। ज्ञानिनः कर्मक्षयार्थमिति शेषः। तथाहि। अप्रारब्धकर्मक्षयार्थं वा सा स्यात्। प्रारब्धक्षयार्थं वा। नाऽद्यः। तेषां ज्ञानेनैव क्षीणत्वादिति भावेन आह— **तद्यथेति**। द्वितीये तु यः कश्चिज्ज्ञानी तथा करोति, सर्वो वा। आद्ये सम्प्रतिपत्तिमुत्तरमाह— **प्रारब्धे तु**

**इति**। द्वितीयासम्भवे हेतुमाह— **प्रमाणेति**। चशब्दात्प्रागुदाहृतप्रमाणविरोधाच्च। पाशुपतादिशास्त्रेषु तथोक्तत्वात्कथं प्रमाणाभाव इत्यत आह— **न चेति**। तच्छिष्या अपि तच्छब्देनोच्यन्त इति बहुवचनम्।

''उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः।
उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः॥''

इत्यादौ तत्स्तुतिरपि दृश्यत इत्यत आह— **यत्र त्विति**। वैष्णवशास्त्रोक्तप्रकारेण शिवभक्तानाम्। लक्षणयेति शेषः। सत्यत्वं तदुक्तार्थस्येति शेषः। उक्तनिन्दाविरोधादिति भावः। तर्हि शैवपुराणानि कायव्यूहनिर्माणनियमादौ प्रमाणानीत्यत आह— **न हीति**। तेषामिति बुद्धिस्थशैवपुराणपरामर्शः। इतरग्रन्था उदाहृतगारुडादयः।

शैवपुराणानां गारुडादिवैष्णवग्रन्थानां च को विशेषो येन बाध्यबाधकभाव इत्याशङ्क्य, दुर्जनव्यामोहनार्थप्रणीतपाशुपतादिमूलानि शैवपुराणानि, सम्यग्ज्ञानार्थप्रणीतपञ्चरात्राद्यनुसारिणो गारुडादिग्रन्था इत्याशयवान् पाशुपतादिशास्त्राणां मोहनार्थत्वे तावत्प्रमाणमाह— **तथा हीति**। कारयेति स्वार्थे णिच्। अतथ्यानि सर्वथाऽप्यविद्यमानानि। वितथ्यानि व्यधिकरणानि च तेषु दर्शयस्व। प्रकाशं प्रसिद्धम्। इदानीं तन्मूलत्वं शैवपुराणानामितरेषां पञ्चरात्रादिमूलत्वमित्यत्र प्रमाणमाह— **कुत्सितानीति**। तच्छास्त्रसमयेन तच्छास्त्रसिद्धान्तमनुसृत्य। वेदैरिति वेदानामापातप्रतीतिमनुसृत्य। भागवतं भगवद्विषयम्। उक्तमुपसंहरति— **अत इति**। ज्ञानिनां मुक्तिर्भवत्येव। न तु तद्देहपातानन्तरमिति नियम इत्युपसंहारार्थः।

*भा०दी०*— **प्रागुदाहृतेति**। स्थितप्रज्ञोऽपीत्यादि प्रमाणेनेत्यर्थः। द्विवचनेन भाव्यमित्यत आह **तच्छिष्या अपीति**। **वैष्णवशास्त्रेति**। हरिदासत्वादिरूपेण शिवे भक्तिमतामित्यर्थः। वचनवृत्त्या स्तुतेरप्रतीतेराह **लक्षणयेति**। शिवो हि महानुभावोऽतस्तद्ब्रह्मा अपि श्लाघ्य इत्येव स्तुतिपरत्वमित्यर्थः। **सर्वथाप्यविद्यमानानीति**। लिङ्गमूलान्वेषणादीनि। **व्यधिकरणानीति**। विष्णवादौ विद्यमाने स्वातन्त्र्यादीनि रुद्रनिष्ठानीति दर्शयस्वेत्यर्थः। कर्मणि घञन्तमुपेत्याह **प्रकाशं प्रसिद्धमिति**। भागवतमित्येतत्पुराणविशेषणमिति भावेनाह **भगवद्विषयमिति**।

*भा०र०*— **अनियतकालविपाकानि** एतस्मिन्नेव काल एतस्य कर्मणः फलौन्मुख्यमिति नियमशून्यानि। **कायव्यूहनिर्माणेन** योगसामर्थ्यादिति वर्तते। **अपवृज्यते** अपवर्गं प्राप्नोति। **अस्य** ज्ञानोत्पत्तिजन्मन्येव सर्वकर्मक्षपणसमर्थस्य। **सा** कायव्यूहापेक्षा। **तेषाम्** अप्रारब्धकर्मणाम्।

"अग्नौ प्रोतं प्रदूयत एवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते", "आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते", "भस्मसात् कुरुते तथा" इति भाष्ये श्रुतिद्वये स्मृतौ च शेषः ।

'इषीकातूलम्' इत्यत्र "इष्टकेषीकामालानां चिततूलभारिषु" इति ह्रस्वत्वं छान्दसत्वान्न कृतम् । प्रदूयते विनश्यतीत्यर्थः । अनेन पूर्वाघनाशश्रवणेऽप्युत्तरेषामघानां भावान्मोक्षायोग इति शङ्कापरिहाराय भाष्ये द्वितीयश्रुत्युदाहरणं कृतम् । उत्तरेषामप्यघानां ज्ञानेनैवाश्लेषवचनेन मोक्ष-विघाताभावस्य सिद्धत्वान्न तैरपि तदयोगशङ्केति हृदयम् । **द्वितीये** प्रारब्धकर्मक्षयार्थमिति पक्षे । **तथा करोति** कायव्यूहनिर्माणेन कर्माणि क्षपयति । **आद्ये** प्रारब्धकर्मविषये । **तत्रापि** यः कोऽपि ज्ञानीति पक्षे । कायव्यूहनिर्माणेनापि प्रारब्धे भुक्ते न विरोधः । ज्ञानिवर्गे कस्यचित् तथाविधस्यापि सम्भ-वादिति भावः । **द्वितीयासम्भव इति** । सर्वोऽपि ज्ञानी कायव्यूहेन प्रारब्धफलं भुक्तमिति द्वितीयपक्षो न सम्भवतीत्यत्रेत्यर्थः ।

**विरोधाच्च** इति समुच्चिनोतीति शेषः । अक्षपादकणादयोः शास्त्रप्रवर्तकयोर्द्वित्वात् कथं बहु-वचनमित्यत आह **तच्छिष्या अपीति** । **उच्यन्त इति** । लक्षणया प्रतिपाद्यन्त इत्यर्थः । **बहुवचनम्** उपपन्नम् । **ज्ञानं** ज्ञायतेऽनेनेति शास्त्रम् । **अव्यग्रं** सावधानम् । अतस्तत्समीचीनमिति पाशुपत-शास्त्रस्तुतिर्दृश्यत इत्यर्थः । अनेन भाष्ये 'स्तुतिः' इत्यनन्तरं दृश्यत इति शेष इति ज्ञायते । ननु शिवभक्तानां स्तुतिरित्ययुक्तम् । शैवपाषण्डानां "ब्रह्मणस्सुत उमापतिः" इत्युक्तेरनुचितत्वादित्यत आह **वैष्णवेति** । "लक्ष्मीविरिञ्चवाणीशगिरिजेन्द्रा गिराम्पतिः । सूर्यादयश्च क्रमशो भगवत्प्रीति-गोचराः । तेषु भक्तिः क्रमेणैव कार्या नित्यं मुमुक्षुभिः" इति वैष्णवशास्त्रोक्तप्रकारेण लक्ष्मीविरिञ्च-वाणीभ्योऽवमत्वेन गिरिजेन्द्रादिभ्य उत्तमत्वेन भगवद्भक्तत्वं विज्ञाय तत्र भक्तिसम्पन्नानां या स्तुतिः तत्तात्पर्यत्वमेव 'उमापतिः' इति वचनस्य । न पुनः शास्त्रप्राशस्त्यतात्पर्यकत्वमित्यर्थः । भागवत-त्वेन शिवे भक्तिमाचरन्तो भाष्ये शिवभक्तशब्देन ग्राह्याः । ते च "ब्रह्मणस्सुत उमापतिः", "त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय" इति भगवदाज्ञयाऽयोग्यजनव्यामोहनाय पाशुपतं शास्त्रं कृतवानिति शिवं स्तुवन्त्यनेन वचनेन । न पुनः पाशुपतशास्त्रं स्तुवन्तीति भाष्यतात्पर्यमिति भावः ।

श्लोके स्तुतिबोधकपदं न श्रूयत इत्यत आह **लक्षणयेति** । "गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः" इति वाक्यस्य लक्षणया कान्तावियोग इवास्यापि शिवस्तुतौ तात्पर्य-मित्यर्थः । केचित्तु, शिवभक्तानामिति कर्मणि षष्ठी । शिवो हि ब्रह्मपुत्र उमापतिर्महानुभावः । अतस्तत्र भागवतत्वबुद्ध्या भक्तिमन्तोऽपि महान्त इति लक्षणया शिवभक्ताः स्तूयन्ते । न तु

पाशुपतशास्त्रमिति भाष्यभाव इति तात्पर्यमित्याहुः । **उक्तनिन्देति** । पाशुपतादिशास्त्रोक्तस्य सत्यत्वे 'अक्षपादकणादानाम्' इति वचने अल्पचेतसो दुष्टबुद्धय इति स्वीकर्तॄणां निन्दावचनविरोधः स्यादित्यर्थः । ज्ञानिवर्गे कस्यचित् तथाविधस्य सम्भवेन सम्प्रतिपत्तेरुत्तरस्योक्तत्वादाह **कायव्यूह-निर्माणनियमेति** । सर्वेषां ज्ञानिनां कायव्यूहेनैव फलभोग इति नियमे, कर्मक्षपणे चेत्यर्थः । पूर्व शैवपुराणानां स्वशब्देनानुपात्तत्वादत्र तच्छब्देन कथं परामर्श इत्यत आह **बुद्धिस्थेति** । 'गारुडादयः' इत्यत्र आदिशब्देन नारदीयवचनं तत्र भाष्ये चशब्दसमुच्चितप्रमाणान्तराणि च गृह्यन्ते । "शैवान् पाशुपतांश्चक्रे" इति वचनादाह **पाशुपतादिमूलानीति** । "ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते", "ये चानुयायिनस्त्वेषां सर्वे ते च सदागमाः" इत्यादिप्रमाणानि हृदि निधाय आह **सम्यग्ज्ञानार्थे-त्यादि** । "एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति" इति पूर्ववाक्यपर्यालोचनायां, "प्रकाशं कुरु चाऽत्मानम्" इत्युत्तरवाक्यपर्यालोचनायां च रुद्रस्य मोहशास्त्रकर्तृत्वं प्रतीयते । अतः कथमत्र णिच्प्रयोग इत्यत आह **कारयेति स्वार्थे णिजिति** । 'बहुलमेतन्निदर्शनम्' इति तस्य स्वार्थेऽपि विधानात् कुर्वित्यर्थ इति भावः । क्वाप्यविद्यमानं लिङ्गमूलान्वेषणादिकमतथ्यमिति तत्त्वप्रदीपोक्तमाह **अतथ्यानि सर्वथाऽप्यविद्यमानानीति** । **व्यधिकरणानि** विष्ण्वादौ विद्यमानानि रुद्रादिनिष्ठतयो-च्यमानानि स्वातन्त्र्यादीनि । **तेषु** रुद्रादिषु । कर्मणि घञन्तत्वमर्शआद्यजन्तत्वं वाऽभ्युपेत्याऽह **प्रकाशं प्रसिद्धमिति** ।

तत्त्वप्रकाशिकायां तु "त्वं च सृज । दधीच्यादिभिः कारय च । आत्मानं मां च प्रति प्रकाशं प्रसिद्धिम् आत्मनः प्रसिद्धिं ममाप्रसिद्धिं च कुरु" इत्यर्थ उक्तः । **तन्मूलत्वं** मोहशास्त्रपाशुपतादि-मूलत्वम् । **इतरेषां** गारुडादिग्रन्थानाम् । समयशब्देन शास्त्रप्रतीतिं व्युदसितुं विवक्षितं समयशब्दार्थं वदन् तस्य पुराणकरणं प्रति कारणत्वं द्योतयन् "शैवदर्शनमालम्ब्य क्वचिच्छैवी कथोदिता" इत्या-चार्योक्तिं हृदि कृत्वाऽऽह **तच्छास्त्रसिद्धान्तमनुसृत्येति** । तथा च शास्त्रसिद्धान्तस्य प्रतिपाद्यतया पुराणकरणं प्रति हेतुत्वात् 'हेतौ' इति तृतीयेति भावः । अप्रतीतार्थानां वेदानां करणत्वायोगादाह **वेदानामिति** । वेदार्थप्रतीतिमूलत्वेऽप्रामाण्यमसङ्गतमित्यत उक्तम् **आपातेति** । तथा चात्र वेद-शब्दस्य आपातप्रतीततदर्थलक्षकत्वात् तत्प्रतीतेश्च हेतुत्वमिति तत्र तृतीयेति भावः ।

ननु भागवतशब्देन प्रसिद्धभागवतग्रहणे पुराणमिति व्यर्थम् । भागवतस्य पुराणत्वाव्यभि-चारित्वात् । पुराणं भागवतं चेति विवक्षायां भागवतमिति व्यर्थम् । पुराणशब्देनैव तस्यापि ग्रहण-सम्भवात् । शैवादिपुराणस्यापि पुराणपदेन ग्रहणेन तस्य विष्णुवेदत्वानुपपत्तेश्चेत्यतो नेह भागवतपदं योगरूढम् । येनोक्तशङ्का । किन्तु केवलयोगशक्तिमदिति भावेन आह **भागवतं भगवद्विषयमिति** ।

"न वा एकेनाक्षरेण छन्दांसि वियन्ति" इत्यतोऽत्र "तथा पुराणं भागवतम्" इति प्रयोगो युक्तः। भागवतमितीरितो ग्रन्थो विष्णुवेद इति भाष्ये सम्बन्धः।

ननु ज्ञानिनां तद्देहपातानन्तरमेव मुक्तिरिति नियमो नास्तीत्युपक्रान्तम्। ज्ञानिनां मुक्तिर्भवत्येवेत्युपसंहियत इत्युपक्रमोपसंहारयोर्भिन्नार्थत्वप्रसङ्ग इत्यतः ऐक्यार्थाय भाष्यभावमाह **ज्ञानिनामिति**।

**भाष्यम्**

**भीष्मादीनां तु तत्क्षणे युक्त्यभावः। 'स्मरन् त्यजति इति' वर्तमानापदेशो हि कृतः। तच्चोक्तम्—**

**'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा।**
**विष्णुमाया तदा तेषां मनो बाह्यं करोति हि॥'**

**—इति गारुडे।**

**न च अन्येषां तदा स्मृतिर्भवति—**

**'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम्।**
**भजन्ति तत्स्मृतिं त्वन्ते देवो याति न चान्यथा॥'**

**—इत्युक्तेर्ब्रह्मवैवर्ते।**

***प०टी०***— युगविमुक्तदेहानां भीष्मादीनां मोक्षाभावात् कथमुच्यते स्थित्वाऽस्यामिति ? तत्राह **भीष्मादीनामिति**। तत्र क्षणे युक्तिरत्र नोक्तेत्यत आह **स्मरन्निति**। अस्यापि स एवार्थ इत्यर्थः। कुतो भीष्मादीनां तत्र क्षणे युक्त्यभावो ज्ञायते ? इत्यत आह **तच्चेति**। नन्वज्ञानिनामपि मृतिक्षणे हरिस्मरणदर्शनात् कथं भीष्मादीनां तदभावः ? इत्यत आह **न चेति**।

***न०टी०***—ननु योगेनैव तनुत्यागिनामपि भीष्मादीनां किमिति तदैव मुक्तिर्नाभूत् ? इत्याशङ्क्य, तनुत्यागकाले योगाभावादित्याह **भीष्मादीनामिति**। ननु 'स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति' इति ब्रह्मगतेः पूर्वकालीनत्वं योगस्य प्रतीयते। कायान्निर्गतिश्च ब्रह्मगत्यन्तर्गता। अतः कायान्निर्गतेः प्रागस्यां स्थित्वेति प्रतीतेः किं तत्कालयोगेन ? इत्यत आह **स्मरन्निति**। 'स्मरंस्त्यजति' इति वर्तमानोपदेशकरणात्, कायत्यागकालेऽप्यस्यां स्थित्वा ब्रह्म गच्छतीत्येवार्थः।

तेषां तत्क्षणे युक्त्यभावे किं मानम् । इत्यत आह **तच्चेति** । प्रारब्धकर्मयुक्तानामित्यर्थः । नन्वन्येषामपि मृतिकाले हरिस्मृतिदर्शनात् कथं भीष्मादीनां सा नास्ति ? इत्यत आह **न चेति** ।

*प्र०दी०*— ननु भीष्मादयो ज्ञानिनोऽन्तकाले ब्राह्म्यां स्थितौ स्थिताश्च न मुक्ताः । तत्कथमेतदुक्तमित्यत आह— **भीष्मादीनां त्विति** । साक्षाद्देहत्यागक्षणे । युक्त्या परमेश्वरे मनोयोगेन भाव्यमित्येव कुत इत्यत आह— **स्मरन्निति** । 'यं यं वाऽपि' इत्यत्र । भीष्मादीनां तस्मिन् क्षणे युक्त्यभाव इत्येतत्कुत इत्यत आह— **तच्चेति** । ननु तत्क्षणे युक्त्या मुक्तिश्चेदज्ञानिनामपि तत्सम्भवेन मुक्तिप्रसक्तिरित्यत आह— **न चेति** । भक्तिज्ञानेनेति द्वन्द्वैकवद्भावः । भक्तिसहितं ज्ञानं भक्तिज्ञानमिति वा ।

*भा०दी०*— कृत इत्यस्य कुत्रेत्याकाङ्क्षायामाह **यं यं वापीत्यत्रेति** । 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवेति कौन्तेय सदा तद्भावभावितेे'त्यत्रेत्यर्थः ।

*भा०र०*— **ब्राह्म्यां स्थितौ स्थिताश्चेति** । "इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि" इत्यादिस्तुतिकरणेन तदवगम इति भावः । **एतत्** "स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म गच्छति" इत्येतत् । "तस्मिन् क्षणे युक्त्यभावः" इति भाष्यार्थं वदन्नेवोत्तरभाष्यं सङ्गमयति **साक्षादित्यादि** ।

भाष्ये शेषं पूरयति **यं यं वाऽपीत्यत्रेति** । स्मरन्नित्यस्य वर्तमानकालार्थकलडादेशशत्रन्तत्वेन तदर्थस्मरणस्य, त्यजतीत्यस्य वर्तमानार्थकलडन्तत्वेन तदुक्तत्यागस्य चैककालत्वस्फोरणाय खल्वेककालार्थप्रत्ययान्तशब्दप्रयोगो गीतायां कृत इति भाष्यार्थः । **युक्त्यभावः** परमेश्वरे मनःप्रणिधानाभावः । मनसो भगवदविषयत्वोक्तये हेत्वर्थगर्भं विशेषणं **कर्मयुक्तानां** प्रारब्धकर्मवतामिति । स्वतन्त्रसाधनोक्तिः **विष्णुमायेति** । 'अन्येषाम्' इति भाष्यार्थः **अज्ञानामिति** । भक्तिज्ञानेनेत्यत्र भक्तिश्च ज्ञानं चेति विग्रहे समासो द्विवचनान्त एव स्यादित्यत आह **द्वन्द्वैकवद्भाव इति** । नायमितरेतरयोगद्वन्द्वः । येन द्विवचनापत्तिः । किन्तु समाहारद्वन्द्वः । समाहारस्य चैकत्वादेकवचनं युक्तम् । यद्वा, "सर्वो द्वन्द्वो विभाषयैकवद् भवति" इत्येकवद्भावे तत्कार्यमेकवचनमुचितमिति भावः । **तत्स्मृतिं** तस्य भजतः स्मृतिं **देवो** भगवान् याति स्मृतिविषयो भवतीति भाष्यार्थः ।

**भाष्यम्**

**निर्वाणं = अशरीरम् । 'कायो बाणं शरीरं च' इत्यभिधानात् । 'एतद्बाणमवष्टभ्य' इति प्रयोगाच्च । निर्वाणशब्दप्रतिपादनं 'अनिन्द्रियाः' इत्यादिवत् ।**

**कथमन्यथा सर्वपुराणादिप्रसिद्धाऽऽकृतिर्भगवत उपपद्येत ? न च अन्यद्भगवत उत्तमं ब्रह्म—**

**'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' —इति भागवते ।**

**'भगवन्तं परं ब्रह्म', 'परं ब्रह्म जनार्दनः ।' 'परमं यो महद्ब्रह्म ।' 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः', 'योऽसावतीन्द्रियग्राह्यः', 'नास्ति नारायणसमं न भूतं न भविष्यति ।', 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' । इत्यादिभ्यः । न च तस्य ब्रह्मणोऽशरीरत्वादेतत्कल्प्यम् । तस्यापि शरीरश्रवणात् 'आनन्दरूपं', 'सुवर्णज्योतीः', 'दहरोऽस्मिन्नन्तराकाश' इत्यादिषु । यदि रूपं न स्यादानन्दमित्येव स्यात् । न त्वानन्दरूपमिति । कथं च सुवर्णरूपत्वं स्यादरूपस्य ? कथं च दहरत्वम् ? दहरस्थश्च 'केचित् स्वदेह' इत्यादौ रूपवानुच्यते । 'सहस्रशीर्षा पुरुषः', 'रुक्मवर्णं कर्तारं', 'आदित्यवर्णं तमसः परस्तात्', 'सर्वतः पाणिपादं तत्' 'विश्वतश्चक्षुरुत' इत्यादिवचनात्, विश्वरूपाध्यायादेश्च रूपवानवसीयते ।**

***प०टी०***— ज्ञानिप्राप्यं चेद्ब्रह्म कार्यमेव स्यात् व्याप्तस्य नित्यप्राप्तत्वादित्यत आह **निर्वाणमिति** । तर्हि तस्याशरीरस्य नित्यप्राप्तत्वात् कथं प्राप्यत्वोक्तिः ? इत्यत आह **निर्वाणेति** । सर्वात्मना शरीराभावः किं न स्यात् ? इत्यत आह **कथमिति** । अस्तु भगवत एवाकृतिर्न तु तदुत्तमब्रह्मण इत्यत आह **न चेति** । किं शरीराद्भगवतोऽशरीरत्वाद्ब्रह्मण आधिक्यमुच्यते ? किं वा गुणाधिक्यतः ? आद्यं दूषयति **न चेति** । कथमेतच्छ्रुतिषु रूपं प्रतीयते ? इत्यत आह **यदीति** । **कथं दहरत्वं** व्याप्तस्वरूपविवक्षां विना ? इत्यर्थः । दहरत्वं दहरस्थत्वम् अशरीरस्यैव किं न स्याद्व्योमवत् ? इत्यत आह **दहरस्थश्चेति** ।

***न०टी०***—ननु कार्यदेहोपेतस्यापरब्रह्मण एव गम्यत्वोपपत्तेः तदेव ज्ञान्यृच्छतीत्यत आह **निर्वाणमिति** ॥ न चाशरीरस्याकाशवन्नित्यव्याप्तस्य परब्रह्मणो न ज्ञानिगम्यतेत्यत आह **निर्वाणशब्देति** । जडदेहाभावात् भिन्नदेहाभावाद्वा निर्वाणं ब्रह्म वासुदेवाख्यम् । यथा नारदैकनादिभिः (?) दृष्टदेहा अपि मुक्ताः 'अनिन्द्रिया अनाहारा अनिष्पन्दाः' इत्युच्यन्ते । स्वरूपभूतापरिमितज्ञानानन्दादिगुणसान्द्रसूक्ष्मतरकरचरणाद्यात्मकदेहाभावोऽपीति (?) चेत्, तत्प्रतिपादकसर्ववेदपुराणादिविरोध इत्याह **कथमन्यथेति** ।

*प्र०दी०*— ब्रह्मनिर्वाणं ब्रह्मस्वरूपानन्दमिति व्याख्यानं सर्वप्रमाणविरुद्धमित्याशयवा-न्निर्वाणमिति भिन्नं पदं व्याचष्टे— **निर्वाणमिति** । कथमेतदित्यत आह— **कार्य इति** । कार्यब्रह्मव्यावृत्त्यर्थमेतत् । अनेन ब्रह्मणो निराकारत्वं प्राप्तम् । तत्प्रतिषेधार्थमाह— **निर्वाणेति** । प्रतिपादनं व्याख्यानम् । इत्यादिवदित्यादेरिव । प्राकृतादिविग्रहराहित्यार्थत्वेनेत्यर्थः ।

किमनेन व्याख्यानेन । निराकारमेव ब्रह्म किं न भवेदित्यत आह— **कथमिति** । भगवतो विष्णोः साकारत्वेऽपि ब्रह्मणो निराकारत्वमेव । न च भगवानेव ब्रह्म । तस्य तदुत्तमत्वेन ततोऽन्यत्वात् । अतो न पुराणादिविरोध इत्यत आह— **न चेति** । महद्ब्रह्मेत्यन्तानि वाक्यानि भगवतो ब्रह्मत्वप्रतिपादकानि । यस्मादित्यादीनि तस्यैव सर्वोत्तमत्वेन तदुत्तमाभावप्रतिपादकानि । इन्द्रिय-ग्राह्यमतिक्रान्तः तदुत्तमः । सर्वमेव योगीन्द्रियग्राह्यम् ।

उत्तमाधमभावेन ब्रह्मेश्वरयोर्भेदो माभूत् । ब्रह्माशरीरम् । ईश्वरस्तु सविग्रह इत्यतो भेदोऽस्तु । अभेदस्यापि सत्त्वाद्ब्रह्मशब्दोपपत्तिरित्यत आह— **न चेति** । तस्य पराभिमतस्य । एतत् भगवतोऽन्यत्वम् । कुत इत्यत आह— **तस्यापीति** । 'दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं' इत्यन्तं वाक्यमिह विवक्षितम् । इत्यादिषु ब्रह्मविद्यात्वेन सम्मतेष्विति शेषः । कथमत्र शरीर-श्रवणमित्यत आह— **यदीति** । रूपं विग्रहः । 'विज्ञानमानन्दं ब्रह्म' इत्यानन्दशब्दस्य नपुंसकत्व-दर्शनात् तथोपादानम् । ज्योतिःशब्दो भास्वररूपस्य वाचकः । अत उक्तं— **सुवर्णरूपत्वमिति** । दहरत्वं दहरस्थत्वम् । अविग्रहस्येति वर्तते । दहरस्थत्वं कथमविग्रहस्यानुपपन्नमित्यत आह— **दहरस्थश्चेति** । एवमुपपत्तिसापेक्षाणि वाक्यान्युदाहृत्य स्पष्टान्यप्युदाहरति— **सहस्रेति** । अवसीयते परमात्मा ।

*भा०दी०*— भिन्नपदत्वे निर्वाणमिति विशेषणं व्यर्थमित्यत आह **कार्यब्रह्मेति** । विरिञ्चि-व्यावृत्त्यर्थमित्यर्थः । तस्यापि कार्यं बादरिरिति सूत्रोक्तदिशा तु एनान्ब्रह्मगमयतीत्यादौ नपुंसक-ब्रह्मशब्दवाच्यत्वदृष्टेरिति भावः । **इत्यादेरिवेति** । अनिन्द्रिया अनाहारा अनिष्यन्दा इति प्रागुदाहृत-वाक्योक्तानिन्द्रियाणीत्यादेरिवेत्यर्थः । योऽसावतीन्द्रियग्राह्य इत्यस्यार्थमाह **इन्द्रियग्राह्यमिति** । अस्मदादीन्द्रियाग्राह्यत्वाभावत्वमात्रेण कथं सर्वोत्तमत्वलाभ इत्यत आह **सर्वमेवेति** । भाष्ये आकाशस्यैव दहरत्वप्रतीत्या ब्रह्मणो दहरस्थत्वप्रतीत्यार्थमाह **इत्यन्तमिति** । भाष्ये आनन्दमित्येवे-त्यत्र पुल्लिङ्गेन भाव्यमिति चोद्यं निरस्यति **विज्ञानमानन्दमिति** । **दहरस्थत्वेतीति** । भाष्ये केचित् 'स्वदेहान्तरहृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमि'ति भागवते श्रवणादिरूपवानुच्यत इत्युक्तमिति भावः ।

*भा०र०*— "ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिम्" इति शङ्करभाष्यमर्थतोऽनुवदति **ब्रह्मस्वरूपानन्दमिति** । **सर्वप्रमाणेति** । "न ते महित्वमन्वश्नुवन्ति", "विष्णुमाहात्म्यलेशस्य", "नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः", "तस्मान्न मुक्तो न च सा क्वचिद् विष्णुवैभवम् । आप्नुवन्ति", "लक्षणं परमानन्दो विष्णोरेव" इत्यादिबहुप्रमाणेत्यर्थः । ब्रह्म गच्छतीत्येतावतैव पूर्तौ निर्वाणमिति व्यर्थमित्यत आह **कार्येति** । कार्यं ब्रह्म चतुर्मुखः । न च नपुंसकलिङ्गब्रह्मशब्दवाच्यत्वाभावादेव चतुर्मुखव्यावृत्तिः सेत्स्यतीति वाच्यम् । कोशप्रसिद्ध्या तदभावेऽपि श्रुतिप्रसिद्ध्या तद्वाच्यत्वशङ्कनात् । अत एव "कार्यं बादरिरस्य गत्युपपत्तेः" इति सूत्रे "स एनान् ब्रह्म गमयति" इति नपुंसकलिङ्गब्रह्मशब्दघटितश्रुतिरुदाहृता । अस्ति च चतुर्मुखेऽपि नपुंसकब्रह्मशब्दवाच्यत्वम् । "तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते" इत्यादौ । अत एव तत्र भाष्यम् "एतद् ब्रह्म चतुर्मुखः" इतीति भावः । "अहमेतद् बाणमवष्टभ्य" इति षट्प्रश्नोपनिषदि मुख्यप्राणवाक्यम् । **अनेन** अशरीरत्ववाचिनिर्बाणपदेन । **इत्यादेरिति** । "अनिन्द्रिया अनाहारा अनिष्पन्दा सुगन्धिनः", 'अप्रहर्षमनानन्दम्' इत्यादौ यथा लौकिकवैलक्षण्येनाभावशब्द इति व्याख्यानं तथा प्राकृतभौतिकदिव्यमङ्गलाकारसद्भावेऽपि 'निर्वाणम्' इति शरीराभाववाचिशब्दप्रयोग इति व्याख्यानं कर्तव्यमित्यर्थः । अनेन कथं प्रथमान्ताद् वतिरित्यादिचोद्यानवकाशः । व्याख्यानप्रकारप्रदर्शनम् **प्राकृतादीति** । **पुराणादीति** । "पातालमेतस्य हि पादमूलम्", "सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दशीर्षकः । सज्ज्ञानानन्दबाहुश्च सज्ज्ञानानन्दपादवान्", "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्", "सर्वतः पाणिपादं तत्", "आनन्दरूपममृतं यद् विभाति" इत्यादिपुराणश्रुतिप्रसिद्धेरिति भाष्यार्थः । **तस्य** ब्रह्मणः । **तदुत्तमत्वेन** ऐश्वर्यादिगुणवत्त्वेन भगवच्छब्दवाच्यमायावच्छिन्नविष्णुशब्दितपरमेश्वरोत्तमत्वेन । **न पुराणादिविरोध इति** । तेषाम् ईश्वराकृतिप्रतिपादनतत्परतया सावकाशत्वादिति भावः । भगवतो ब्रह्मत्वप्रतिपादनं, तस्यैव भगवतः सर्वोत्तमतया तदुत्तमाभाव इति भाष्यविवक्षितेऽर्थद्वये वाक्यानि विभागेन प्रमाणयितव्यानीत्याह **महद् ब्रह्मेत्यन्तानीत्यादि** । 'योऽसावतीन्द्रियग्राह्यः' इत्यत्र अतीन्द्रियैश्चक्षुरादिभिर्ग्राह्य इत्यर्थाङ्गीकारो न युक्तः । भगवतोऽप्यतीन्द्रियत्वेन तस्य "नेन्द्रियाणि नानुमानम्" इतीन्द्रियगोचरत्वाभावावेदनात् । अत एवातिशयित इन्द्रियग्राह्यश्चेत्यपि न युक्तमित्यत आह **इन्द्रियग्राह्यमिति** । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इतीन्द्रियग्राह्यमतिक्रान्त इति विगृह्य समासो विधेय इत्यर्थः । इन्द्रियग्राह्यार्थातिक्रमणमिन्द्रियधर्मादिसाधारणमिति न प्रकृतोपयोग इत्यत आह **तदुत्तम इति** । एवमपीन्द्रियग्राह्यवस्तूत्तमत्वं प्राप्तम् । न पुनः प्रतिपिपादयिषितसर्वोत्तमत्वमित्यत आह **सर्वमिति** । अनेनेन्द्रिय-

धर्मादिसर्ववस्तूत्तमताऽभिहिता भवतीति भावः । उत्तमाधमभावेन ब्रह्मण उत्तमत्वेन भगवतोऽधमत्वेन च शङ्कितो यो ब्रह्मेश्वरयोर्भेदः । स मा भूदित्यर्थः । **इत्यतः** इति हेतोः । **भेदोऽस्तु इति** । तथा च न पुराणादिविरोध इति हृदयम् । ननु ब्रह्मभगवतोर्भेदे "भगवन्तं परं ब्रह्म" इत्यादौ कथं ब्रह्मशब्दप्रयोग इत्यत आह **अभेदस्यापीति** । पारमार्थिकाभेदाभिप्रायेणेत्यर्थः । भाष्योक्तभागमात्रस्य ब्रह्मशरीराप्रतिपादकत्वात् 'दहरस्थश्च' इति भाविभाष्यमनुरुन्धान आह **इत्यन्तमिति** । अत्रोच्यमानं सशरीरत्वमीश्वरस्यास्तु, न ब्रह्मण इत्यतः 'इत्यादिषु' इत्यनूद्य तत्र शेषमाह **इत्यादिष्विति** । **सम्मतेष्विति** ॥ "दहर उत्तरेभ्यः" इत्यादौ तथा स्थितेरिति भावः । **विग्रहः** शरीरम् । नन्वानन्दमित्येव स्यदिति कथम् ? यावता आङ्पूर्वात्, "टु नदि समृद्धौ" इत्यतो भावे घञ्प्रत्यये 'घञजबन्ताः' इति लिङ्गानुशासने पुलिङ्गं विहितमित्यत आह **विज्ञानमिति** । 'षष्ठीयुक्तः' इत्यत्र "छन्दसि वा" इति योगविभागाश्रयणेन सुप्तिङुपग्रहलिङ्गादीनां व्यत्ययस्य महाभाष्ये स्थितेरिति भावः । श्रुतौ सुवर्णज्योतिष्ट्वस्यैवोक्तेः कथं सुवर्णरूपत्वमिति भाषणमित्यतस्तद् घटयन्नाह **ज्योतिःशब्द इति** । **अत इति** । सुवर्णस्य ज्योतिर्भास्वररूपमिव ज्योतिर्यस्येति विग्रहे अन्यपदार्थस्य विग्रहस्य लाभादित्यर्थः । "दहरोऽस्मिन्नन्तराकाशः" इत्यत्र "तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इति वाक्यशेषात् "दहरस्थश्च" इति भाषणाच्च आह **दहरत्वं दहरस्थत्वमिति** । अरूपस्येति भाष्यपदमनुवर्तत इति वक्तव्येऽविग्रहस्येति वचनं रूपशब्दस्य विग्रहार्थत्वाभिप्रायेणेति ज्ञातव्यम् । "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् । चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति" इत्यादौ भागवते दहराकाशस्थो विग्रहवानुच्यत इति भाष्यार्थः स्फुटः ।

**भाष्यम्**

**अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानन्दश्रीशक्त्यादिमांश्च भगवान् 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', 'यः सर्वज्ञः', 'आनन्दं ब्रह्मणः', 'एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति', 'अनादिमध्यान्तमनन्तवीर्यम्', 'सहस्रलक्षामितकान्तिकान्तम्', 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे', 'विज्ञानशक्तिरहमासमनन्तशक्तेः', 'तुर्यं तत् सर्वदृक् सदा', 'आत्मानमन्यं च स वेद विद्वान्', 'अन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः', 'ऐश्वर्यस्य समग्रस्य', 'अतीवपरिपूर्णं ते सुखं ज्ञानं च सौभगम् । यच्चात्ययुक्तं स्मर्तुं वा शक्तः कर्तुमतः परः ॥ इत्यादिभ्यः ।**

*प०टी०*— परविद्यासूचितब्रह्मणः सदेहत्वं साधयति । द्वितीयं दूषयति **अतिपरिपूर्णेति** । **आदिपदेन** वैराग्यादयो गुणाः । भगवतोऽन्यदुत्तममिति व्याहतिरित्यर्थः । प्रवृत्तिनिमित्तशून्येऽपि भगवच्छब्दो हरावुपचारेण किं न स्यात् ? इत्यत आह **पराऽस्येत्यादिना** । **आनन्दं ब्रह्मणः** इत्यादावानन्दस्य परिपूर्णता न प्रतीयत इत्यत आह **एतस्येति** । श्रीरप्यनन्तेत्यत आह **आनन्देति** । आदिपदोक्तानन्तगुणत्वे प्रमाणमाह **मयीति** । पराऽस्य इति शक्तेरुत्तमत्वमेवोक्तम् । अनन्तत्वं चाह **विज्ञानशक्तिरिति** । सर्वज्ञत्वं न केवलं मूलरूपस्येत्याह **तुर्यमिति** । ईश्वरज्ञानं सविषयमपि नात्मविषयमिति केचित् । तान् प्रत्याह **आत्मानमिति** । एतद्भगवत्त्वमन्यस्यापि किं न स्यात् ? इत्यत आह **अन्यतम इति** । भगवच्छब्दस्यायमर्थः कुतः ? इत्यत आह **ऐश्वर्यस्येति** । एतद्वचनेऽप्यानन्दशक्त्याद्यनन्तगुणोपलक्षणं सर्वोपसंहाररूपं प्रमाणमाह **अतीवेति** । तस्मान्न भगवतोऽन्यत् परं ब्रह्मेति सिद्धम् ।

*प्र०दी०*— प्राक् भगवतोऽन्यस्योत्तमत्वं वाक्यविरुद्धमित्युक्तम् । इदानीं व्याहतं च तदिति भावेनाह— **अतीति** । अत्यादिशब्दैः निरतिशयत्वं द्योत्यते । ऐश्वर्ये वशित्वम् । श्रीः कान्तिः । परमेश्वरे भगवच्छब्दस्यौपचारिकत्वपरिहारायैषां गुणानां सद्भावे प्रमाणान्याह— **पराऽस्येति** । 'आनन्दं ब्रह्मणः' इत्यत्र 'यतो वाचः' इति पूर्ववाक्यमप्यभिप्रेतम् । अमितशब्दात् परं चन्द्रशब्दोऽध्याहार्यः । द्रष्टृपुरुषयोग्यताभेदात् त्रिधोक्तिः । ऐश्वर्याद्यनन्तगुणत्वे 'मयि' इति प्रमाणम् । सङ्ख्यापरिमाणाभ्यां गुणानामानन्त्यमनेनोच्यते । शक्तेः परत्वं प्रागुक्तम् । तदस्पष्टमित्यतः **विज्ञानेति** ज्ञानस्यापरोक्षरूपताप्रतिपादनाय । **तुर्यमिति** । ईश्वरो नात्मानं वेत्ति, कर्तृकर्मभावविरोधादित्येतन्निरासाय । **आत्मानमिति** । ईश्वरे भगवच्छब्दस्यौपचारिकत्वासम्भवं प्रदर्शयितुं तदन्यस्य तच्छब्दार्थतानिरासाय । **अन्यतम इति** । अन्य एवान्यतमः । भगवच्छब्दस्यायमर्थ इत्यत्र ऐश्वर्यस्येति प्रमाणम् । अत्र षण्णामित्युपलक्षणम् । षाड्गुण्ये सर्वगुणान्तर्भावो वा । तद्वान् भगवानिति सिद्धमेव । भगवत्त्वात् स एव सर्वोत्तम इति । समग्रार्थेऽतीवेति । यदन्येन करिष्यामीति स्मर्तुं बुद्धिस्थीकर्तुं वाऽयुक्तम् । तच्च त्वं कर्तुं शक्तः ।

*भा०दी०*— **पूर्ववाक्यमपीति** । तेन वाङ्मनसगोचरत्वोक्त्या निरतिशयत्वसिद्धिरिति भावः । अनन्तगुणे गुणतोऽनन्ते इत्यन्वयमुपेत्योभयोरर्थभेदमाह **सङ्ख्यापरिमाणाभ्यामिति** । **तदस्पष्टमिति** । परशब्दस्यान्यत्वाद्यर्थपरत्वस्यापि सम्भवादिति भावः । अन्यतमो न चेदन्यस्तु स्यादिति चोद्यनिरासायाह **अन्य एवान्यतम इति** स्वार्थकोऽयं तमबिति भावः । **सिद्धमेवेति** । अतो भगशब्दार्थ एवोक्तः स्मृतौ मतुबर्थोऽपीति न प्रकृतासङ्गतिरिति भावः । अन्यतम इत्यादि वचन-

द्वयतात्पर्यमाह **भगवत्त्वात्स एव सर्वोत्तम इति** । **समग्रार्थ इति** । अतिपरिपूर्णेति वाक्योक्ते सर्वस्मिन्नर्थ इत्यर्थः ।

***भा०र०***— प्राक् "न चान्यद् भगवत उत्तमं ब्रह्म" इत्यत्र । वाक्यविरुद्धं "ब्रह्मेति परमात्मा" इत्याद्युदाहृतवाक्यविरुद्धम् । **तत्** भगवतोऽन्यस्योत्तमत्वम् । निरतिशयैश्वर्यादिशाली हि भगवच्छब्दार्थः । स एव च सर्वोत्तमः । भगवच्छब्दवाच्यत्वमङ्गीकृत्योत्तमत्वानङ्गीकारे व्याहतिः स्यादिति भावः । नन्वत्यादिशब्देष्वन्यतमेनैव विवक्षितार्थलाभसम्भवादतिपरीत्युपसर्गद्वयं, तमप्प्रत्ययश्च व्यर्थ इत्याशङ्क्य शब्दाधिक्यादर्थाधिक्यमत्राभिसंहितमित्याह **अत्यादिशब्दैरिति** ।

ननु "अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः प्राकाम्यमीशत्वं वशित्वं च" इत्यष्टावैश्वर्याणि प्रसिद्धानि । तत्र तावदणिमादिचतुष्टयमत्रैश्वर्यशब्देन न विवक्षितम् । तस्य संयोगादिवत् सामान्यगुणस्य ज्ञानादिवदात्मविशेषगुणत्वाभावेन तत्समकक्ष्यतया ग्रहणायोगात् । नापि प्राप्तिः । अन्येन्द्रियैर्दर्शनादिरूपायास्तस्या ज्ञानग्रहणेनैव लाभात् । नापि प्राकाम्यम् । यथेष्टानन्दसम्प्राप्तिरूपस्य वा सर्वविदादिज्ञानरूपस्य वा तस्य निरतिशयानन्दज्ञानोक्त्यैव सिद्धेः । नापीशत्वम् । शक्त्युद्रेकरूपस्य तस्य निरतिशयशक्तिग्रहणेनैव गृहीतत्वादित्यत आह **ऐश्वर्यं वशित्वमिति** । "असङ्ग एव च वशित्वम्" इत्येकादशतात्पर्यरीत्या "वशित्वं चाप्यलोलता" इति प्रमाणोक्तमनासक्तिरूपमत्र वशित्वं ग्राह्यम् । स्वातन्त्र्यापरपर्यायं वशित्वमेवात्रैश्वर्यशब्देन विवक्षितमित्यर्थ इत्यप्याहुः ।

गुणवर्णनप्रस्तावे लक्ष्मीग्रहणमसङ्गतमित्यतः 'सहस्रलक्षामितकान्तिकान्तः' इति वक्ष्यमाणप्रमाणानुसारेण श्रीशब्दार्थमाह **श्रीः कान्तिरिति** । "श्रीरिन्दिरायां शोभायां स्यात् सम्पत्तिलवङ्गयोः" इत्यभिधानेन शोभाशब्दिता कान्तिरत्र ग्राह्येति भावः । ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रियेति भाष्यार्थः । "आनन्दं ब्रह्मणः" इति वाक्ये ब्रह्मण आनन्दं विद्वानभयं मोक्षमाप्नोतीत्युच्यते न पुनर्निरतिशयत्वमानन्दस्येति न प्रकृतोपयोग इत्यत आह **आनन्दं ब्रह्मण इत्यत्रेति** । तेनावाङ्मनसगोचरत्वोक्त्या निरतिशयत्वसिद्धिरिति भावः । "स्मरेत यामिनीनाथसहस्रामितकान्तिमत्", "स्वनन्तचन्द्राधिककान्तिकान्ते", "चन्द्रौघकान्तिम्", "ध्यायेद् रवीन्दुकरमिन्दुसहस्रलक्षकान्तिम्" इत्यादौ कान्तिवर्णनप्रस्तावे चन्द्रस्यैवोपमानत्वदर्शनादत्रापि स एव प्रतिसम्बन्धितया ग्रहणमर्हतीति भावेन आह **अमितशब्दात् परश्चन्द्रशब्द इति** । "श्यामं रवीन्द्वमितदीधितिकान्तियुक्तम्" इत्यादौ सूर्यग्रहणेऽपि रविशब्दार्थस्य दीधितिशब्दार्थान्वयित्वमेव । इन्दुशब्दार्थस्य कान्तिशब्दार्थान्वय इति सूर्यः किमिति नोपात्त इति न चोद्यावकाशः । अमितशब्दार्थे

सहस्रादेरन्तर्भावाद् व्यर्थं सहस्रादिग्रहणम् । सहस्रचन्द्रकान्तेर्लक्षचन्द्रकान्तित्वस्य लक्षचन्द्रकान्ते-रमितचन्द्रकान्तित्वस्य दुर्निरूपत्वं चेत्यत आह **द्रष्टृपुरुषेति** । केचित् सहस्रचन्द्रकान्तित्वदर्शिनः, अन्ये लक्षचन्द्रकान्तित्वदर्शिनः, अपरेऽमितचन्द्रकान्तित्वदर्शनयोग्या इति भगवदपरोक्षिपुरुष-योग्यताभेदादित्यर्थः ।

ज्ञानादौ विशिष्य प्रमाणोक्तिवदैश्वर्ये तदनुक्तेस्तल्लाभायाह **ऐश्वर्याद्यनन्तेति** । 'अनन्तगुणे', 'गुणतोऽनन्ते' इति पुनरुक्तिरित्याशङ्क्य तयोरर्थभेदमाह **सङ्ख्यापरिमाणाभ्यामिति** । परिमाण-मियत्ता । अनन्ता असङ्ख्याता गुणा यस्यासावनन्तगुण इति सङ्ख्यया गुणानामन्तवत्त्वाभावः, 'गुणतोऽनन्ते' इति गुणानां प्रत्येकमनवधिकत्वमियत्ताशून्यत्वमभिप्रेयते । तथा च षष्ठस्कन्धतात्पर्ये "प्रत्येकशो गुणानां तु निस्सीमत्वमुदीर्यते । तदानन्त्यं तु गुणतः ते चानन्ता हि सङ्ख्यया । अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च" इति । 'मयि' इति षष्ठस्कन्धस्थं भगवद्वाक्यम् । मयि मम नाभौ । अनन्ते गुणत इति गुणानां प्रत्येकमानन्त्यमुच्यते । यदासीत् पद्मं ततः "स्वयम्भूः समभूदजः" इति तत्त्वोद्योतटीकारीत्या व्याख्येयम् । **प्राक्** "पराऽस्य शक्तिः" इत्यत्र । **अस्पष्ट-मिति** । परशब्दस्यानेकार्थत्वेन तेन शक्तेरानन्त्यालाभादिति भावः । **विज्ञानेति** । "नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः" इति तृतीयस्कन्धे ब्रह्मवाक्यं शक्त्यानन्त्ये प्रमाणमिति वर्तते । **ज्ञानस्य** "यः सर्वज्ञः" इत्युक्तसर्वविषयकज्ञानस्य । **तुर्यमितीति** । प्रमाणमिति अनुवर्तते । 'आत्मानम्' इति वाक्योदाहरणस्य सार्थक्याय शङ्कां दर्शयति **ईश्वर इति** । सर्वज्ञ इति, सर्वविदिति च यत् सर्वदर्शनमभिप्रेतं तत्र सर्वमध्यपातिनं स्वात्मानमीश्वरो वेत्ति न वा ? नेति पक्षे सर्वापरोक्षदृत्त्वं न स्यात् । आद्य एकस्यां क्रियायामेकस्य कर्तृत्वं कर्मत्वं च विप्रतिषेधादयुक्त-मित्यर्थः ।

ननु "सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः" इति भागवतवाक्येनेश्वरे गुणवत्त्वाप्रतिपादनात् तदुदाहरणमप्रयोजनमित्यत आह **ईश्वर इति** । **तच्छब्दार्थतेति** । सिंहादि-शब्दस्यैकत्र मुख्यार्थस्यैवान्यत्रौपचारिकत्वदर्शनेन मुकुन्दादन्यस्य भगवच्छब्दमुख्यार्थस्याप्रामा-णिकत्वान्न मुकुन्दे भगवच्छब्दस्यौपचारिकत्वमिति भावः । नन्वन्यतमनिषेधेऽन्यसद्भावः स्यात् । तथा च कथमनेनेश्वरान्यस्य भगवच्छब्दार्थत्वाभावः ? कथं च 'मुकुन्दात्' इति पञ्चमी ? अन्य-तमशब्दयोगे तद्विधायकशास्त्राभावादित्यत आह **अन्य एवेति** । नायमन्यतमशब्दोऽव्युत्पन्नप्राति-पदिकः । किन्तु स्वार्थिकतमप्प्रत्ययान्तोऽन्यार्थः । तथा च ईश्वरान्यस्य भगवच्छब्दार्थत्वाभाव-सिद्धिः । "अन्यारादितरर्ते" इति सूत्रेणान्यशब्दार्थकैतद्योगेऽपि पञ्चमीति भावः । न च वाच्यं तमपः

स्वार्थिकत्वमप्रामाणिकमिति । ''छान्दसत्त्वाच्छ्रेष्ठतमायेति स्वार्थिकस्तमब् द्रष्टव्यः'' इति हरदत्त-वचनस्य प्रमाणत्वात्, ज्ञापकसिद्धत्वाच्च । तथा हि । ''द्विवचनविभज्योपपदे तरबीयसुनौ'' ''अति-शायने तमबिष्ठनौ'' इत्यातिशायनिकप्रकरण एव ''तादी घः'' इति वा ''पितौ घः'' इति वा क्रियतां लाघवादित्याशङ्क्य प्रकरणोत्कर्षेणेह सञ्ज्ञाकरणमन्योऽपि तरबस्तीति ज्ञापनार्थम् । स चानिर्दि-ष्टार्थत्वात् स्वार्थे भवति । तेन ''अल्पाच्तरम्'', ''लोपश्च बलवत्तरः'' इत्यादि सिद्ध्यतीति समा-धानमुक्तं हरदत्तेन । तेन समानन्यायत्वात् तमबपि स्वार्थिकोऽस्तीति ज्ञायते । शब्दकौस्तुभकारेण तु सामान्यापेक्षं ज्ञापकमाश्रित्य ईयसुनोऽपि स्वार्थिकत्वमभ्युपगम्य ''अहो महीयस्तव साहसि-क्यम्'' इत्यादयः प्रयोगाः समर्थनीया इत्युक्तम् । तेनापि तमपः स्वार्थिकत्वं सिद्ध्यतीति । **अयमर्थ इत्यत्र** भाषितपूर्णतमज्ञानैश्वर्यादिकमभिधेयमित्यत्र ।

ननु कथमेतत् ? आनन्दशक्त्यादेरनभिधानादित्यत आह **अत्रेति** । लक्षणां विना पक्षान्तरमाह **षाड्गुण्य इति** । षड्गुणा एव षाड्गुण्यम् । अन्तर्भावप्रकारस्तु ''यादृशानन्दकामः स्यात्'' इति शास्त्रोक्तेर्यद्यद्विषयभोगेन यो य आनन्दः प्राप्तव्यः तत्तद्विषयभोगं विनाऽपि तत्तदानन्दकामनायां तत्तदानन्दावाप्तिः प्राकाम्यमित्युक्तलक्षणे ''यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति गीयते'' इत्युक्तलक्षणे वा प्राकाम्ये उक्ताष्टैश्वर्यमध्यपातिन्यानन्दोऽन्तर्भवति । ''पूर्णशक्तेः कोटिगुणशक्त्युद्रेकस्तथेशिता'' इत्युक्तलक्षणे शक्त्युद्रेकरूपैश्वर्यभेदे ईशितृत्वे शक्तिरन्तर्भवति । प्राकाश्यापरनामकज्ञानविज्ञान-शब्दितसार्वज्ञ्ये दूरश्रवणदर्शनं, त्रिकालज्ञत्वं, परचित्ताद्यभिज्ञत्वं चान्तर्भवति । एवं वीर्यादिशब्दिते आरब्धान्तगमनादावाज्ञाप्रतिहतगत्यादेरन्तर्भाव इत्येकादशतात्पर्योक्तरीत्या द्रष्टव्यः ।

ननु भगशब्दार्थ एवानेनोक्तो न तु भगवच्छब्दस्यायमर्थ इति प्रकृतोऽर्थ इत्यसङ्गतिरित्यत आह **तद्वानिति** । भगवतोऽन्यस्योत्तमत्वं मानविरुद्धं व्याहतं चेत्युक्तमुपपाद्योपसंहर्तव्यम् । तच्च न भाष्ये दृश्यत इत्यत आह **भगवत्त्वात् स एव सर्वोत्तम इति** । अनेन 'अन्यतमः' इत्यादिवचनद्वय-तात्पर्यमुक्तं भवति । **समग्रार्थे** 'अतिपरिपूर्णतम' इत्यादिवाक्योक्तसमग्रार्थे । ''भगवत्त्वात् स एव सर्वोत्तमः'' इति समग्रार्थ इत्येकमेव वाक्यम् । वाशब्दं घटयितुं संयोजयति **बुद्धिस्थीकर्तुं वेति** । बुद्धिमागमयितुमित्यर्थः । आवृत्त्या कर्तुं शक्तः अत एव परः सर्वोत्तम इति भाष्यार्थः । यद्वा, अन्येन कर्तुमत्ययुक्तमशक्यं स्मर्तुं वाऽत्ययुक्तमित्यत्र स्मरणशब्देन मानसप्रत्यक्षजा स्मृतिर्नात्र ग्राह्या । पूर्वमननुभूतत्वेन संस्कारायोगात् । किन्तु सङ्कल्प इति भावेन आह **यदन्येनेति** । तस्यैव विवरणं **बुद्धिस्थीकर्तुमिति** ।

भाष्यम्

'तानि सर्वाण्यन्योन्यरूपाणि', 'विज्ञानमानन्दं ब्रह्म', 'आनन्दो ब्रह्मेति व्यजानात्', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यस्य ज्ञानमयं तपः', 'समा भग प्रविश स्वाहा',

'न तस्य प्राकृता मूर्तिः मांसमेदोऽस्थिसम्भवा ।
न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः ॥
सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः ॥'

—इति पैङ्गिखिलेषु ।

'देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम् ॥

—इत्यादि ब्रह्मवैवर्ते ।

तदेव लीलया चासौ परिच्छिन्नादिरूपेण दर्शयति मायया—

'न च गर्भेऽवसद्देव्या न चापि वसुदेवतः ।
न चापि राघवाज्जातो न चापि जमदग्नितः ।
नित्यानन्दोऽव्ययोऽप्येवं क्रीडते मोघदर्शनः ॥'

—इति पाद्मे ।

'न वै स आत्माऽत्मवतामधीश्वरो ।
भुङ्क्ते हि दुःखं भगवान् वासुदेवः ॥'

'सर्गादिरीशिताऽजः परमसुखनिधिर्बोधरूपोऽप्यबोधम् ।
लोकानां दर्शयन् यो मुनिसुतहृतात्मप्रियार्थे जगाम ॥'

'स ब्रह्मवन्द्यचरणो नरवत्प्रलापी (जनमोहनाय)
स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार ।'

'पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयम् ।
रुद्रवाक्यमृतं कर्तुमजितो जितवत् स्थितः ॥

योऽजितो विजितो भक्त्या गाङ्गेयं न जघान ह ।
न चाम्बां ग्राहयामास करुणः कोऽपरस्ततः ॥'

—इत्यादिभ्यश्च स्कान्दे ।

न तत्र संसारधर्मा निरूप्याः । यत्र च परावरभेदोऽवगम्यते तत्राज्ञबुद्धिमपेक्ष्यावरत्वं, विश्वरूपमपेक्ष्यान्यत्र । तच्चोक्तम्—

'परिपूर्णानि रूपाणि समान्यखिलरूपतः ।
तथाऽप्यपेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि हि ।
परावरं वदन्त्येव ह्यभक्तानां विमोहने ॥' —इति गारुडे ।

न च अत्र किञ्चिदुपचरितादि वाच्यम् । अचिन्त्यशक्तेः । पदार्थवैचित्र्याच्चेत्युक्तम् ।

'कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा ।
न चाणुमात्रं भिन्नानि तथाऽप्यस्मान् विमोहसि ॥'

—इत्यादेश्च नारदीये ।

तस्मात् सर्वदा सर्वरूपेष्वपरिगणितानन्तगुणगणं नित्यनिरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्मापरोक्षज्ञान्यृच्छतीति सिद्धम् ॥ ७२ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये द्वितीयोऽध्यायः ॥ २ ॥*

***प०टी०***— मा भूदन्यद्ब्रह्मैव, गुणविषये यदवशिष्यते तदेव ब्रह्मेत्यत आह **तानि चेति** । तदेव प्रमाणैः साधयति **विज्ञानमिति** । तस्य देहित्वेऽन्तवत्त्वादीत्यत आह **न तस्येति** । कथं तर्हि रामकृष्णादिरूपे हरौ परिच्छेदपराजयादिसंसारधर्माः ? इत्यत आह **तदेवेति** । **तदेव** शरीरम् । **मुनिसुतो** रावणः । 'यदा हरिर्जितः स्यात् तदैव वध्यसे' इति रुद्रवाक्यम् । तदेव लोकावतारं ब्रह्म

यच्छता ब्रह्मणाऽनुदितमेव । अतो न विरोधः । तदेव लीलया इत्युक्तमुपसंहरति **न तत्रेति** । ननु विश्वरूपमपेक्ष्य कृष्णादिरूपस्यावरत्वमुच्यते पुराणादौ । अतः कथं तस्यापरिच्छेदादि ? इत्यत आह **यत्रेति** । तत्र प्रमाणमाह **तच्चेति** । ननु कृष्णादिरूपस्य परिच्छेदादि प्रत्यक्षसिद्धम् । अत एर तद्वाक्यमुपचरितार्थम्, अन्यतार्थं वेत्यत आह **न चेति** । प्रत्यक्षस्य का गतिः ? इत्यत आह **कृष्णेति** । 'एषा ब्राह्मी' इति श्लोकार्थमुपसंहरति **तस्मादिति** ॥ ७२ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित श्रीमद्भगवद्गीताभाष्यभावदीपिकायां द्वितीयोऽध्यायः ॥*

***न०टी०***— ननु भवतु सर्वपुराणादिप्रसिद्धाकृतयः (?) स्युरेवेत्यत आह **न तस्येत्यादि** । अप्राकृतविग्रहत्वात् न तत्प्रयुक्ता दोषा भगवतः । न चैतद्ध्यानयोगादिपरितुष्टेश्वरप्रसादात् किन्तु ईश्वरत्वात्, अतः सत्यम् । 'सच्छब्द उत्तमं ब्रूयादानन्दाभिभवं वदेत् । येति ज्ञानं समुद्दिष्टम्' इत्युक्तेः सान्द्रपूर्णानन्दानुभवात्मक एव तद्देहः । एतदेव विवृणोति **सद्देह इति** । अत्र सच्छब्दोक्त-साधुभावापरपर्यायसर्वोत्तमत्वे सर्वे गुणाः अन्तर्भूताः । सर्वदोषराहित्यं च एवंविधदेहत्वात् । परमोऽक्षरः तद्देहतद्गुणादेः न किञ्चित् क्षरणमित्यर्थः । नित्यनिर्दोषः सन्नित्युच्यते । निर्दोषत्वात् सर्वगुणत्वाच्च सर्वगुणपूर्णो नारायण इत्यर्थः । कथं तर्हि कृष्णरामादिरूपे भगवति देशकालपरिच्छेदः क्वचिद्गर्भवासाज्ञानादिसंसारधर्मा इत्यत आह **तदेवेति** । **मायया** स्वेच्छया परमाच्छादिकया च । न च नटानामिव स्वरूपगूहनादौ तस्य क्लेश इत्याह **लीलयेति** । स्वयम् **अमोघदर्शनः** । **मोघदर्शनः** इति वा । अयोग्यानां मोघं दर्शयतीति । तथैव ह्युत्तरत्र 'बोधरूपोऽप्यबोधं लोकानां दर्शयन्' इति । रावणाहृतसीताकृतौ प्रविष्ट इन्द्रोऽपि भगवत्प्रिय एव । पूर्णत्वाद्योऽचिन्त्यवीर्यो भगवान् भार्गवरामः, यतश्च स्वयमेव दाशरथी रामः, स कथं दाशरथिना पराभूतः, किन्त्वजित एव जितवत् स्थितः । **रुद्रवाक्यमृतं कर्तुम्** । यदा हरिर्जितः तदैव तद्बहिर्गतः सन् वध्यसेऽन्यथा रुद्रवाक्यं मृषा भवतीति ब्रह्मवाक्यमतुलं प्रति । अतोऽन्यदाऽपि तं निरस्सारयितुं भगवान् समर्थो जितवत् भूत्वैव तं निरस्सारयामासेत्यविरोधः । अचिन्त्यवीर्यत्वादेव स भगवान् भीष्मेणापि शक्त्या न जितः । किन्तु तद्भक्त्यैव । अतो भगवदवतारेषु न कश्चित्संसारधर्मः । ननु विश्वरूपापेक्षयाऽवरत्वात् कृष्णादिरूपस्य, तत्र सत्यपि संसारधर्मे को विरोध इत्यत आह **यत्र चेति** । स्कान्दात् **अन्यत्र यत्र** ग्रन्थान्तरे भगवद्रूपेष्वेव **परावरादिभेदोऽवगम्यते,** तत्र यदि **विश्वरूपमपेक्ष्यावरत्वं** कृष्णादिरूपस्य तदज्ञबुद्धिमपेक्ष्यैवेत्यर्थः । तत्र प्रमाणमाह **तच्चेति** । ननु द्विभुजचतुर्भुजदाशरथिवासुदेवादिरूपस्य

देशकालादिभिः परिपूर्त्यभिधानमौपचारिकं किं न स्यात् ? इत्यत आह **न चात्रेति** ।तर्हि कथं तेषु परिच्छेदादिदर्शनम् ? इत्याशङ्क्य, तदयोग्यानां मोहनार्थमिति भावेनाह **कृष्णरामादीति** । अध्यायार्थमुपसंहरति **तस्मादिति** ॥

*॥ इति श्रीमद्भगवद्गीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां द्वितीयोऽध्यायः ॥*

***प्र०दी०***— मतुपा ज्ञानादीनां भगवतो भेदः प्रतीतः । षण्णामित्यादिना परस्परं च । तथा 'आकृतिर्भगवतः' इत्युक्त्याऽकृतेश्च । तन्निरासार्थमाह— **तानीति** । तत्र प्रमाणान्याह— **विज्ञान-मिति** । तप आलोचनक्रिया । ज्ञानमयं ज्ञाना-त्मकमिति धर्माणां परस्परभेदोक्तिः । प्राकृतेति ङीबभावः छान्दसः । अणञ्भ्यामन्यो वा प्रत्ययः । मांसमेदोऽस्थिभिः सम्भवो यस्याः सा तथोक्ताः । एतच्च न योगित्वात् । किन्त्वीश्वरत्वात् । अत एव विभुः । निर्दोषगुणात्मकविग्रहा-दच्युतः । 'ज्ञानज्ञानः' इत्यादेरतिशयितज्ञानादिरित्यर्थः । तेन निर्दोषत्वादिना ।

भगवद्रूपस्यैवं भावे कथं परिच्छिन्नत्वम् । गर्भवासादिसंसारिधर्माश्च तत्र दृश्यन्त इत्यत आह— **तदेवेति** । किमर्थमित्यत उक्तं— **लीलयेति** । मायया व्यामोहकशक्त्या । अत्र प्रमाण-माह— **न चेति** । देव्या देवक्याः । एवं गर्भवासादिप्रदर्शनेन । मोघं दर्शनं यस्मिन् विषये स तथा । आत्मवतां भागवतानाम् । आत्मा निरुपाधिकप्रिय इति यावत् । मुनिसुतो रावणः । ब्रह्मवाक्यवद्रुद्रवाक्यमप्यतुलं प्रत्यस्तीत्यतो रुद्रवाक्यमित्युक्तम् । करुणः करुणावान् । (अर्श आदित्वादच्) 'तदेव' इत्याद्युक्तमुपसंहरति— **न तत्रेति** । अत इत्युपस्कर्तव्यम् ।

यद्येवं तर्हि विश्वरूपं परं, तदपेक्षया कृष्णादिरूपाण्यवराणीति कथं ग्रन्थेषूच्यत इत्यत आह— **यत्र चेति** । यत्र ग्रन्थे । तत्र विश्वरूपमपेक्ष्यान्यत्र कृष्णादाववरत्वमज्ञबुद्धिमपेक्ष्योक्तं ज्ञातव्य-मित्यर्थः । कुत एतदित्यत आह— **तच्चेति** । अखिलरूपतोऽखिलधर्मैः । विमोहनं कर्तुम् । नन्वयमुपचारो वा स्तुतिर्वा किं न स्यादित्यत आह— **न चेति** । असम्भवे ह्येषा कल्पना । अचिन्त्यशक्त्यैकस्यैवानेकपरिमाणत्वादिकं सम्भवति । अन्यत्रादर्शनेन त्वपलापेऽतिप्रसङ्ग इत्यर्थः । अत्रैव प्रमाणमाह— **कृष्णेति** । विमोहसि विमोहयसि । श्लोकार्थमुपसंहरति— **तस्मादिति** ।

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वितीयोऽध्यायः ॥ २ ॥*

*भा०दी०*— **आकृतिर्भगवत इत्युक्तेः** इत्यत्र भागवदाकृतेर्भेदप्रतीते इत्यनुषज्यते । ननु प्रकृतेरियमित्यर्थे तस्येदमिति सूत्रेणाणप्रत्यये टिड्ढाण इत्यादिना (ङीप्) ङीन्प्रत्यये प्राकृतीति भाव्यमित्यत आह **ङीबभाव इति** । सर्वे विधयच्छन्दसि विकल्पन्ते इत्युक्तेरिति भावः । अणञ्भ्यानन्यो वेति तद्धिता इति सूत्रेणाणप्रत्यये अजाद्यतस्याविति टाप्रत्यय इति भावः । सत्यरूप इति हेतुगर्भमिति भावेनार्थमाह **निर्दोषेत्यादि** । **यस्मिन्विषय इति** । गर्भवासादिविषय इत्यर्थः । आत्मेत्यस्य स्वात्मात्यर्थकत्वे अधीश्वर इत्यनेन पौनरुक्त्यापत्तेरर्थान्तरमाह **निरुपाधिक-प्रिय इति** । ममात्मा भद्रसेन इत्यादावात्मपदस्य तादृशार्थदर्शनादिति भावः । **मुनिसुतो रावण इति** । विश्रवसः पुत्रत्वात्तस्यैति भावः । 'पुराऽतुलो नाम महासुरोऽभवद्वरात्स तु ब्रह्मण आप लोकतामि'ति भारततात्पर्यविरोधायाह **ब्रह्मवाक्यवदिति** । **अर्श आदित्वादिति** । अर्श आदिभ्यो अजिति सूत्रे मत्वर्थे अच्प्रत्ययोक्तेरर्शआदे-राकृतिगणत्वेन तन्मध्ये अस्यपि ग्राह्यत्वादिति भावः । रूपाणीत्यनेनापौनरुक्त्या मन्पदं धर्मपरमित्युपेत्य अर्थमाह **अखिलरूपतोऽखिलधर्मैरिति** । **श्लोकार्थमिति** । एषा ब्राह्मी स्थितिरिति श्लोकार्थमित्यर्थः ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*राघवेन्द्रयतिकृतायां भावदीपे*
*द्वितीयोऽध्यायः ॥*

*भा०र०*— **भेद इति** । 'तदस्यास्त्यस्मिन्' इति मतुपो विधानादिति भावः । युक्तिसमुच्चये तथाशब्दः । **इत्युक्तेरिति** । ''कथमन्यथा सर्वपुराणादिप्रसिद्धाऽऽकृतिर्भगवत उपपद्यते'' इति भाष्य-कारोक्तेराकृतेर्भगवतो भेदः प्रतीयत इत्यनुवर्त्य व्याख्येयम् । **तानि** सुखज्ञानादीनि । **अन्योन्य-स्वरूपाणि** धर्मिभगवत्स्वरूपत्वं, सुखस्य ज्ञानस्वरूपत्वं, ज्ञानस्य सुखस्वरूपत्वमित्येवंरूपेणेति भाष्यार्थः स्फुटः । ननु ''तपः कृच्छ्रादिकर्म च'' इति कोशात् कृच्छ्रचान्द्रायणाद्यनुष्ठानरूपकाय-क्लेशस्य कथं ज्ञानात्मकत्वमुच्यत इत्यत आह **तप इति** । आलोचनमिति वक्तव्येऽपि यत् 'क्रिया' इत्याह तत्तु ''स तपस्तप्त्वा । इदꣳसर्वमसृजत'' इति श्रुतौ कथं तपस ईश्वरीयस्य सदातनस्य कादाचित्कत्वमुच्यत इति शङ्कां सर्जनादिक्रियावदेतस्यापि क्रियात्वाद् व्यक्तयव्यक्तिशालितया व्यक्त्यपेक्षया कादाचित्कत्वोक्तिरिति व्युदसितुम् । तस्माद् यस्य तपो ज्ञानस्वरूपं न त्वालोचना-त्मकमिति कर्मनिर्णयटीकाविरोधस्तु प्राक् परिहृतोऽस्माभिः । **धर्माणां** क्रियाज्ञानादीनाम् । ''समा भग'' इत्यत्रैश्वर्यादिवाचिभगशब्देन भगवतः सम्बोधनादैश्वर्यादिगुणैर्भगवतोऽभेदः स्फुट इति भाष्यार्थः ।

ननु "तस्य विकारः" इत्यण्प्रत्ययान्तोऽयं प्राकृतशब्दः । अण्प्रत्ययान्तश्च "टिड्ढाणञ्" इत्यादिशास्त्रविहितं ङीपमुत्पादयेदिति प्राकृतीति वक्तव्यम् । तत् कथमाबन्तत्वमिति तत्राऽह **ङीबभाव इति** । भाषायां नित्योऽप्ययं ङीप् छन्दसि विकल्प्यते । "सर्वे विधयश्छन्दसि विकल्प्यन्ते" इति वैयाकरणोक्तेरिति भावः । छान्दसत्वव्याख्यानाननुशयादाह **अणञ्भ्यामन्य इति** । 'तद्धिताः' इति बहुवचनज्ञापितो णप्रत्यय उत्पाद्यः । स्त्रीत्वे च 'अजाद्यतष्टाप्' इति टापि प्राकृतेति रूपमिति भावः । यद्यपि प्रकृतिशब्दादञ्प्रत्ययो नोत्पादयितुं शक्यः । यावता क्तिन्प्रत्ययान्तस्य तस्य नित्स्वरेणाऽऽद्युदात्ततया 'अनुदात्तादेश्च' इत्यञ्प्रत्ययविधायकं शास्त्रं न प्राप्नोति । तथाऽपि पलाशादित्वेन वा रजतादित्वेन वा 'ओरञ्' इत्यनुवर्तमाने "पलाशादिभ्यो वा" इति सूत्रेण "प्राणिरजतादिभ्योऽञ्" इति सूत्रेण वाऽञः प्राप्तिः सम्भवतीति शङ्कां निवर्तयितुमञो ग्रहणम् । अत एव काशिकायां "पलाशादीनामनुदात्तादित्वात् प्राप्ते पलाशादिभ्योऽन्येषामप्राप्ते विभाषेयम्" इत्युक्तमित्याहुः ।

वस्तुतस्तु पलाशादिगणे रजतादिगणे वा प्रकृतिशब्दस्य पाठाभावादञ्प्रत्ययो न प्राप्नोति । तथाऽपि अणञ्प्रत्यययोरुत्पादितयोर्हि ङीप् प्रसज्यते । येनोत्पादितेन ङीप् न वर्तते प्रवर्तते चाऽऽदिवृद्धिस्स प्रत्यय उत्पाद्यः । स च 'तद्धिताः' इति णप्रत्यय एव । नान्यः । येन ङीप् स्यादिति ।

मांसमेदोऽस्थीनि सम्भवन्ति यस्या इति व्युत्पत्तिभ्रमं वारयितुमाह **मांसेति** । समानाधिकरणानां बहुव्रीहिरिति तु छन्दस्त्वान्न भवति । सम्यग् भवो यस्या इति वा सम्भवा । उत्पन्नेत्यर्थः । **एतच्च** अप्राकृतविग्रहयोगित्वम् । न योगित्वात् योगप्रभावलब्धातिशयत्वादित्यत्रेव नञ 'ईश्वरत्वात्' इत्यनेनाऽप्यन्वयभ्रमं वारयितुमाह **किन्त्वीश्वरत्वादिति** । योगित्वादप्राकृतविग्रहत्वमिति न भवति । किन्तु स्वाभाविकैश्वर्यबलादित्यर्थः । "न योगित्वात् किन्त्वीश्वरत्वात्" इति प्राग् व्याख्यातमपीदं वचनमनुजिघृक्षयाऽविस्मरणाय पुनरिह व्याख्यातम् । **अत एव** ईश्वरत्वादेव । ननु सत्यमबाध्यस्वरूपं रूपं विग्रहो यस्येति विग्रहे यद् विग्रहस्य गुणात्मकत्वं वक्तव्यं न तदनेन प्रमाणेन लभ्यते । बहुव्रीहिणा विग्रहतद्वतोर्भेदः, विग्रहवत्त्वाद् देवदत्तवद् विनाशश्च प्रतीयते । अतो नेदं प्रकृतार्थे प्रमाणमित्याशङ्क्य सत्यरूप इति हेत्वर्थगर्भविशेषणमिति भावेन आह **निर्दोषेति** । सदिति निर्दोषत्वं, तीत्यानन्दः, या प्रापण इत्यतो यमित्यनेन ज्ञानं चोच्यते । तेन सर्वगुणोपलक्षणम् । रूपमिति तन्त्रम् । निर्दोषगुणात्मकविग्रहस्वरूपत्वं लभ्यते । "आनन्दं तीति वै वदेत्" इत्यादि-

वचनात् देवदत्तादेरेतादृशविग्रहाभावाच्युतिसम्भवेऽपि न भगवति तच्छङ्का । गुणात्मकविग्रहस्वरूपत्वावेदकत्वात् प्रकृतार्थे प्रमाणत्वं चेति भावः । 'सत्यरूपाच्युतः' इति क्वचिद् भाष्यपाठः ।

**अतिशयितज्ञानादिरिति** । जानन्तीति ज्ञानाः जानन्तः । नन्द्यादित्वात् कर्तरि ल्युः । "कृत्यल्युटो बहुलम्" इति तत्र ल्युड् वा । ततः परस्याश्च पञ्चम्याः "पञ्चमी भयेन" इत्यत्र पञ्चमीति योगविभागाङ्गीकारादुत्तरज्ञानशब्देनैवं निष्पन्नेन समासः । तेन 'ज्ञानज्ञानः' इत्यतिशयितज्ञानशालिता फलिता । आदिशब्देनातिशयितसुखता गृह्यते । अर्शआद्यजन्तं ज्ञानपदद्वयम् । तत्र ज्ञानेषु ज्ञान इति निर्धारणसप्तम्या 'सप्तमी' इति योगविभागात् समासः । तेन ज्ञानसुखातिशययोगित्वं पर्यवस्यतीत्यप्याहुः । यत्तु दुर्घटवृत्तौ "भीतभीत इव शीतमयूखः" इति भारविप्रयोगनिर्वाहः "आधिक्ये द्वे भवत इति वार्तिकेनात्र द्वित्वम् । भीमत्वाधिक्यं द्वित्वेनोच्यते" इति वदता शरणदेवेन यथा कृतः तथाऽत्राप्याधिक्ये 'ज्ञानज्ञानः' इति द्विर्वचनम् । तदर्थोक्तिरतिशयितज्ञानादिरितीति व्याख्यानम् । तत्तु वार्तिकस्यैवाभावाद् दुर्घटवृत्तिकारादिभिरुक्तमतिरभसादिति मनोरमायां दूषितत्वादनादरणीयम् । अत एव तत्र "भीतेभ्यो भीत इति व्याख्यानादतिभीत इति फलितम्" इति भारविप्रयोगः प्रकारान्तरेण निर्व्यूढः । सन् निर्दोषो देहो यस्य तथोक्तः । सुखगन्धः सुखकरगन्धः । ज्ञानभाः न तु तैजसप्रकाश इति भाष्यशेषार्थः । यद्वा, सन् देहो विष्णुः सुखगन्धो विष्णुः ज्ञानभाः विष्णुः सन् पराक्रमो विष्णुः ज्ञानज्ञानः विष्णुः सुखसुखो विष्णुरिति योजनीयम् । तेन देहस्य गन्धगुणस्य च भगवदात्मकत्वं भासो ज्ञानात्मकत्वं पराक्रमस्य तद्रूपत्वं ज्ञानज्ञानः सुखसुख इत्यतिशयितसुखरूपत्वं च सिद्ध्यतीत्याहुः ।

भाष्यपदमनूद्यार्थमाह **तेन निर्दोषत्वादिनेति** । "नायं प्रकृतिनिर्मितः" इति प्रकृतिकृतदोषराहित्यम्, आदिशब्देन 'परिपूर्णश्च' इत्युक्तगुणपूर्णत्वं च लभ्यत इति भावः । सदानन्ददेहत्वस्य नारायणपदेनालाभान्न तच्छब्देन तत्परामर्शः कृतः । तत्राऽनन्दस्य सत्त्वं सान्तत्वसातिशयत्वादिराहित्यम् । निर्दोषत्वं गुणपूर्णत्वं च नारायणपदार्थ इति "नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम्" इत्यादौ स्फुटमावेदितम् । **एवम्भावे** निर्दोषत्वे परिपूर्णत्वे च । **परिच्छिन्नत्वं** देशतः कालतश्च । तदानीन्तनपुरुषप्रत्यक्षेण तथाऽवगाहनादिति भावः । उपसंहारभाष्ये 'संसारिधर्माः' इति श्रवणादाह **गर्भवासादिसंसारिधर्माश्चेति** । प्रत्यासत्त्या देहशब्देनोपस्थितस्यापि रूपस्य "तस्यापि शरीरश्रवणात्" इत्युपक्रमे शरीरशब्देनोपादानात् 'तदेव' इति भाष्ये नपुंसकलिङ्गप्रयोगः । तथा च भावप्रदीपिका "तदेव शरीरम्" इति । आदिशब्देन गर्भवासादिधर्मपरिग्रहः । तथा प्रदर्शने कारणमुक्तं भाष्ये **माययेति** । तदैन्द्रजालिकाद्यर्थप्रतीतिनिरासाय व्याचष्टे **व्यामोहकशक्त्येति** । अत्र लीलयैव

स्वशक्त्याऽज्ञजनव्यामोहनाय स्वशरीरमन्यथा दर्शयतीत्यत्र पूर्वमदितित्वाद् वसुदेवशब्दसन्निधानाच्च देवक्या एव देवीशब्देन ग्रहणं युक्तमिति भावेन आह **देवक्या इति**। **वसुदेवतः** "आद्यादिभ्य उपसङ्ख्यानम्" इत्यसर्वनाम्नोऽपि वसुदेवशब्दात् तसिः । जात इत्याकृष्यते । **राघवाद्** दशरथात् । 'एवम्' इति भाष्यपदमनूद्य तदर्थमाह **एवं गर्भवासादिप्रदर्शिनेति**।

ननु मोघं दर्शनं यस्यासौ मोघदर्शन ईश इति व्याख्यानं बहुमानविरोधान्मोघदर्शनस्य क्रीडायामनुपयोगाच्चायुक्तम् । न चामोघं दर्शनं यस्य स इति व्याख्येयम् । अवश्यवक्तव्यस्य गर्भवासादिदर्शनभ्रान्तित्वस्यालाभेनानुपयुक्तत्वादित्यत आह **मोघं दर्शनं यस्मिन्निति** । गर्भवासादेरसत्यतया तद्विषयकं दर्शनं लोकस्य मोघं वितथं भ्रान्तिरूपं यस्मिन् विषये भगवति स भगवान् मोघदर्शन इत्युच्यत इत्यर्थः । येन भगवता लोकस्य भ्रान्तिदर्शनमुत्पद्यते स इति यावत् ।

नन्वात्मवतां मनस्विनामधीश्वर इति युक्तम् । सर्वाधीश्वरस्य भगवत आत्मवन्मात्राधीश्वरत्वोक्तेर्विशेषहेत्वभावेनायोगात् । अत एव आत्मवतां देहिनामधीश्वर स्वामीत्यप्ययुक्तम् । मुक्ताधीश्वरत्वाभावप्रसङ्गाच्च । आत्मपदेन पुनरुक्त्यापत्तेश्चेत्यत आह **आत्मवतामिति** । अत्र आत्मशब्दो भगवद्वाची । तेन तद्वतां भागवतानामिति लभ्यते । आत्मेत्यत्र आत्मशब्देन स्वात्मवाचिना गौण्या वृत्त्या निरुपाधिकप्रिय इति गम्यते । एकान्तभागवतान् प्रति च भगवानेव निरुपाधिकप्रियः । यदाहुः "यन्तेष्टो नो रमापतिः" इतीति भावेनैवमुक्तम् । "ममाऽत्मा भद्रसेनः" इत्यादौ आत्मशब्दस्य निरुपाधिकप्रियार्थत्वदर्शनादत्रापि तदर्थत्वमित्यप्याहुः ।

मुनिसुतमात्रस्य रामभार्यानपहर्तृत्वाद् विवक्षितमर्थमाह **मुनिसुतो रावण इति** । विश्रवसो मुनेरात्मजो हि रावणः । तदपहृता च छलजानकी । तत्प्रियोद्देशेन जगामेति श्लोकार्थः । 'मुनिसुतहृत' इत्यत्र छान्दस एकवर्णलोपः । "पुराऽतुलो नाम महासुरोऽभवत् वरात् स तु ब्रह्मण आप लोकताम् । पुनश्च तं प्राह जगद्गुरुर्यदा हरिर्जितः स्याद्धि तदैव वध्यसे" इति महाभारततात्पर्यनिर्णयविरोधो "रुद्रवाक्यमृतं कर्तुम्" इति वचनस्य । तत्रातुलं प्रति ब्रह्मवाक्यमस्तीत्यभिधानादित्यत आह **ब्रह्मवाक्यवदिति** । ब्रह्मणो वाक्यमिव रुद्रस्यापि वाक्यमतुलनामकदैत्यं प्रत्यस्तीत्येतत् प्रमाणबलादेवावगन्तव्यमिति न तद्वाक्यविरोध इति भावः । "यदा हरिर्जितः स्याद्धि तदैव वध्यसे" इति रुद्रवाक्यमेव ब्रह्मणाऽनूदितमित्यतो न विरोध इति तु भावप्रदीपिका । ननु तथाऽपि "रुद्रवाक्यमृतं कर्तुम्" इत्ययुक्तम् । "अयोग्येषु तु रुद्रादिवाक्यं तौ कुरुतो मृषा" इति वचनविरोधादिति चेन्न । तस्य वचनस्य केवलं रुद्रवाक्यं मृषा कुरुत इत्येवंपरत्वात् । प्रकृतं च वरदानरूपं वाक्यं ब्रह्मवाक्यसहितमित्येतद्विषयत्वादिति । यः परशुरामोऽचिन्त्यपराक्रमः । कुतः ? पूर्तेः पूर्णत्वात् ।

यश्च दाशरथिः स स्वयं परशुराम एव । अजितोऽपि परशुरामो जित इवावर्तत । किमर्थम् ? रुद्रवाक्यमृतं कर्तुमिति । यः पूर्तेरचिन्त्यवीर्यो यश्च दाशरथी रामो भक्तवाक्यं सत्यं कर्तुमजितोऽपि जित इवाऽसीत् । यश्चाजितोऽपि भक्त्या विजितः गाङ्गेयं भीष्मं न जघान अम्बां न ग्राहयामास च ततो परः कः करुणः ? इति वा भाष्यवचनं योजनीयम् ।

तत्र करुणपदस्य ''करुणो रसवृक्षयोः'' इति कोशप्रसिद्धार्थग्रहणे प्रकृतासङ्गतिरित्यत आह **करुण इति** । अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्यय इति शेषः । स्वकृतगमनिकायाः भाष्याविसंवादाय आह **अत इतीति** । एवं परिच्छिन्नत्वादिदर्शनं मृषेत्यङ्गीकारः । यत्रेत्यनुवादः । ग्रन्थ इति व्याख्या । 'तत्र' इत्यादिभाष्ये व्यवहितत्वात् पदानामन्वयं दर्शयति **तत्रेत्यादि** । अखिलरूपतः सकलैरवतारैरिति व्याख्याने रूपाणीति व्यर्थं स्यादित्यत आह **अखिलैर्धर्मैरिति** । तृतीयान्तात् तसिः । गुणक्रियाजातिपूर्वैर्धर्मैरित्यर्थः । भाष्यपदमनूद्य तत्र शेषमाह **विमोहनं कर्तुमिति** ॥ उपचार-शब्दापेक्षया 'अयम्' इति पुल्लिङ्गम् । परिपूर्णानि रूपाणीति वचनमित्यर्थः । कृष्णादिरूपेषु परि-च्छेदस्य प्रत्यक्षसिद्धत्वादिति भावः । **एषा कल्पना** उपचारः स्तुतिर्वेति कल्पना । 'पदार्थवैचि-त्र्याच्च' इति भाष्यभावमाह **अन्यत्रेति** । अतिप्रसङ्गः भूतचतुष्टयस्य पृथिवीत्वादृष्टेः पृथिव्या अपि पृथिवीत्वं न स्यादित्यादिरूपातिप्रसङ्गः । **इत्युक्तं** धर्मवैचित्र्यात् पदार्थानामिति प्रागुक्तमिति भाष्यार्थः । **अत्रैव** एकस्यैवानेकपरिमाणादौ । 'विमोहसि' इत्युक्त्या परिच्छेदादिप्रत्यक्षं मोह इत्युक्तं भवति । ननु ''मुह वैचित्त्य'' इति धातोः श्यन्विकरणत्वेन कथं विमोहसीति रूपम् । व्यत्ययेन शब्विकरणत्वाङ्गीकारस्त्वगतिका गतिः । तस्याकर्मत्वेन 'अस्मान्' इति कर्मोक्त्यनुपपत्तिश्चेत्याशङ्क्य णिजर्थान्तर्भावमभिसन्धाय व्याचष्टे **विमोहयसीति** । **श्लोकार्थम्** 'एषा ब्राह्मी' इति श्लोकार्थम् । इदं चाध्यायार्थोपसंहारभ्रमं व्युदसितुमुक्तम् ।

***गीताक्षरार्थस्तु***— 'प्रजहाति' इत्यादिप्रकरणार्थो ज्ञानिलक्षणमुपसंह्रियते **एषेति** । एषा 'प्रजहाति' इत्यादौ प्रक्रान्ता ''या निशा'' इत्यादौ पिण्डीकृत्योक्त्या ब्राह्मी ब्रह्मविषया स्थितिः सर्वकामप्रहाणनित्यभगवदनुस्मृत्यादिरूपं ब्रह्मविषयकज्ञानवतो लक्षणम् । उक्तस्थितेः फलमुच्यते **नैनामिति** । एनाम् उक्तरूपां स्थितिं प्राप्य न मुह्यति भववेदनानुभववान्न भवति । ब्रह्मापरोक्षज्ञानी मुच्यत इति पूर्वार्धे निर्गलितम् । सा च ज्ञानिनो ब्रह्मप्राप्तिरूपा मुक्तिः किं तद्देहपातानन्तरमेवोता-न्यथेत्यपेक्षायामुक्तं **स्थित्वाऽस्यामन्तकालेऽपीति** । देहावसानसमयेऽपि भगवदनुग्रहयोगादस्यां भगवदनुस्मृत्यादिरूपायां स्थित्वा तत्कालेऽप्यनन्यमानसश्चेद् ब्रह्म ऋच्छति प्राप्नोति । प्रारब्धकर्मा-

भावे यद् देहे ज्ञानोदयस्तद्देहावसान एव । तत्सद्भावे तु देहान्तरं प्राप्य तत्र प्रारब्धभोगानन्तरमेव ब्रह्म प्रतिपद्यते । तथा च सूत्रम् ''भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते'' इति । कार्यब्रह्मव्यावृत्तये विशिष्यते **निर्वाणं प्राकृतशरीररहितमिति** । अप्राकृतदिव्यमङ्गलविग्रहपरब्रह्मप्राप्तेरेवाखिलक्लेशनिवृत्ति-विशिष्टपरमानन्दावाप्तिरूपमोक्षत्वादिति ॥ ७२ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित श्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोशसमाख्यायां श्रीमत्सूरीन्द्रपूज्यपादशिष्यसुमतीन्द्रयतिविरचितायां द्वितीयाध्यायः समाप्तः ॥*

**गीतातात्पर्यनिर्णयः**

**ब्राह्मी ब्रह्मविषया । ज्ञानिनामप्यन्तकालेऽन्यमनसां प्रारब्धकर्मभावाज्जन्मा-न्तरम् । प्रारब्धकर्मनाशकाले नियमेन भगवत्स्मृतिर्भवति । ततो मोक्षश्च ।**

*प्रका०*— एषेत्यस्यार्थमाह **ब्राह्मीति** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां द्वितीयोऽध्यायः ॥*

*न्या०दी०*— उक्तलक्षणमुपसंह्रियते **एषेति** । तत्र ब्राह्मीति ब्रह्मधर्मभूतेति प्रतीतिनिरासायाह **ब्राह्मीति** ॥ ननु ''क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'' इत्यादेर्ज्ञानमात्रेण सर्वकर्मणां क्षयात् ज्ञानानन्तरमेव मोक्षसद्भावेन 'स्थित्वाऽस्याम्' इत्यन्तकाले भगवत्स्मृत्यादिविधानं ब्रह्मप्राप्त्यर्थं किमिति क्रियत इत्यत आह **ज्ञानिनामिति** ॥ ज्ञानिनामपि यद्यन्तकाले भगवत्स्मरणादि नास्ति तर्हि जन्मान्तरमेव भवति । न ब्रह्मप्राप्तिः अतः तदर्थं अन्तकाले तत्स्मरणादिविधानं युक्तमेव । न च ज्ञानिनः क्षीणकर्मत्वाज्जन्मान्तरायोगः । ज्ञानमात्रेणाप्रारब्धकर्मनाशेऽपि येषामन्तकालेऽपि न भगव-त्स्मरणं तेषां प्रारब्धकर्मभावादिति भावः । यदि मोक्षार्थं साक्षादन्तकाल एव भगवत्स्मृत्याद्यपेक्षितं तर्हि तस्य दुःसम्पादत्वेन कस्यापि मोक्षो न स्यात् । अतः साक्षादन्तकालस्मरणं नात्र भगवतो-ऽभिप्रेतमित्यत आह प्रारब्धेति ॥ न मोक्षार्थं अन्तकालस्मरणापेक्षायां कस्यापि मोक्षप्रसङ्गः । प्रारब्धकर्मण एव अन्तकालस्मरणप्रतिबन्धकत्वेन तन्नाशेऽन्तकाले स्मरणनियमात् । तद्भावे च मोक्षनियमादिति भावः ।

*भा०दी०*— **उक्तेति** । प्रजहातीत्यादिना उक्तज्ञानिलक्षणमित्यर्थः ॥ **दुःसम्पादनत्वेनेति** । कष्टसाध्यत्वेनेत्यर्थः । ईषद्दुसुषुकृच्छ्राऽकृच्छ्रार्थेषु खलिति खलन्तः ॥ **तद्भावे चेति** । स्मरणाभावे चेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

"यं यं वाऽपि स्मरन् भावम्" इति हि वक्ष्यति । बाणं शरीरम् ।

*न्या०दी०*— नन्वन्तकालस्मरणादेव मोक्षो नान्यथेति भगवदभिमतमिति निश्चयो यदि भवेत् तदैवमर्थकल्पना भवेत् । स एव कुत इत्यत आह **यं यमिति** ॥ "शान्ति-र्मोक्षोऽथ निर्वाणम्" इत्यादेर्निर्वाणशब्दस्य मोक्षेऽपि प्रसिद्धेः ब्रह्म निर्वाणमिति कथं समानाधिकरणम् । न च ब्रह्म निर्वाणं चेति योजना । ब्रह्मप्राप्त्यतिरिक्तमोक्षनिरूपणादित्यत आह **बाणमिति** ॥ बाणशब्दस्य शरीरवाचित्वान्निर्वाणपदेन कार्यब्रह्मव्यावृत्त्यर्थं ब्रह्मणो-ऽशरीरत्वमेवोच्यते । न मोक्ष इति भावः ।

*भा०दी०*— **कार्यब्रह्मेति** । विरिञ्चव्यावृत्त्यर्थमित्यर्थः । तस्यापि "स एनान् ब्रह्म गमयति" इत्यादौ "कार्यं बादरिः" इति सूत्रोक्तदिशा नपुंसकब्रह्मशब्दवाच्यत्वात् परब्रह्मप्राप्तेरेव मोक्षस्वरूप-त्वादिति भावः ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते द्वितीयोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

"अभावाज्जडदेहस्य विष्णुर्निर्वाण उच्यते ।
भिन्नदेहाभावतो वा स सहस्रशिरा अपि ॥" इति च ॥ ७२ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये द्वितीयोऽध्यायः ॥*

*न्या०दी०*— ननु कथमशरीरत्वं ब्रह्मणः । सहस्रशीर्षेत्यादिविरोधादित्याशङ्कायां स्मृत्यैव परिहरति **अभावादिति** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां द्वितीयोऽध्यायः समाप्तः ॥*

ॐ श्रीकृष्णार्पणमस्तु ॥



कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्याऽऽत्मना वाऽनुसृतः स्वभावम् ।
करोमि यद्यत् सकलं परस्मै
नारायणाय इति समर्पयामि ॥

